आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ५३

# सत्याषाढविरचितं श्रौतसूत्रं

गोपीनाथभट्टविरचितज्योत्स्नाव्याख्यासमेतम् ।

तत्र

सप्तमाष्टमप्रश्नद्वयात्मकः प्रथमो भागः ।

एतत्पुस्तकं

वे० शा० सं० रा० रा० काशीनाथशास्त्री आगाशे

इत्येतैः संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८३०

खिस्ताब्दाः १९०८



मूल्यमाणकाष्टकसहितं रूप्यकत्रयम् ( ३।८ )

## आदर्शपुस्तकोल्लेखपत्रिका ।

अथास्य ज्योत्स्नाख्यव्याख्यासहितस्य सत्याषाढविरचितहिरण्यके श्रौतसूत्रस्य पुस्तकानि यैः परहितैकपरतया संस्करणार्थं प्रदत्तानि ते नामादीनि पुस्तकानां संज्ञाश्च कृतज्ञतया प्रकाश्यन्ते—

(क.) इति संज्ञितम्—इन्दूरपत्तनस्थानां रा० रा० किबेसाहेब इत्येतेषा अस्य लेखनकालः शकाब्दाः १७१३

(ख.) इति संज्ञितम्—सप्तमाष्टमप्रश्नात्मकमानन्दाश्रमस्थम् । अस्य लेख कालः शकाब्दाः १७५४

(ग.) इति संज्ञितम्—सप्तमाष्टमनवमप्रश्नात्मकं वैराजक्षेत्रनिवासिनां वे रा० रा० अण्णंभट्ट अभ्यंकर इत्येतेषाम् । अ लेखनकालः शकाब्दाः १७११

(ङ.) इति संज्ञितम्—मूलम् । पुण्यपत्तनस्थानां रा० रा० भाऊसाहे नगरकर इत्येतेषाम् ।

(च.) इति संज्ञितम्—सप्तमाष्टमनवमदशमप्रश्नात्मकम् । वे० रा० रा अण्णंभट्ट अभ्यंकर इत्येतेषाम् । अस्य लेखनकाल शकाब्दाः १७३८

(छ.) इति संज्ञितम्—दशमप्रश्नात्मकं वैराजक्षेत्रनिवासिनां वे० रा० रा अण्णंभट्ट अभ्यंकर इत्येतेषाम् ।

(ज.) इति संज्ञितम्—मूलम् । पुण्यपत्तनस्थानां रा० रा० गंगाधर कृष्ण आपटे इत्येतेषाम् । प्रश्नाः १–५ । ७–१८

(झ.) इति संज्ञितम्—मूलम् । पुण्यपत्तननिवासिनां कै० रा० रा० नील कण्ठशास्त्री साठे इत्येतेषाम् ।

(ञ.) इति संज्ञितम्—मूलम् । पुण्यपत्तनस्थानां रा० रा० तात्यासाहेब खाजगीवाले इत्येतेषाम् ।

(ढ.) इति संज्ञितम्—मूलम् । पुण्यपत्तनस्थानां वे० रा० रा० रामभट्ट आखवे इत्येतेषाम् । अस्य लेखनकालः शकाब्दाः १८२५

समाप्तेयमादर्शपुस्तकोल्लेखपत्रिका ।

ॐ तत्सद्ब्रह्मणे नमः ।

# सत्याषाढविरचितं श्रौतसूत्रं ।

## गोपीनाथभट्टकृतज्योत्स्नाव्याख्यासमेतम् ।




अथ सप्तमप्रश्नप्रारम्भः ।

तत्र प्रथमः पटलः ।

वात्सल्यात्पितरौ कपोलयुगलं स्वस्याऽऽगतौ चुम्बितुं
दृष्ट्वाऽऽकुञ्चितमास्यपद्ममलं सेषत्स्मितं सत्वरम् ।
अन्योन्यं शिवयोस्ततः सुवदने युक्ते ह्यभूतां तयो-
रित्थं येन विनोदितौ स भगवान्बालो गजास्योऽवतु ॥ १ ॥
विद्यामहागणपतिं देवं व्याडीश्वरं तथा ।
योगेश्वरीं च वाग्देवीं लक्ष्मीनारायणौ रविम् ॥ २ ॥
सत्याषाढं मुनिश्रेष्ठं जातरूपशिरोरुहम् ।
गुरूंश्च मातापितरौ नत्वेदानीं यथामति ॥ ३ ॥
ओकोपाह्वेन कुतुकाद्गोपीनाथेन धीमता ।
सत्याषाढेन रचितं सूत्रं व्याख्यायते मया ॥ ४ ॥
सूत्राब्धिं मया तर्तुमारब्धं मन्दशक्तिना ।
तत्रावलम्बो मम तु पारं गन्तुं गुरुस्मृतिः ॥ ५ ॥

### सर्वकामोऽग्निष्टोमः ।

काम्यन्ते ते कामा इष्टानि सर्वे कामा येन साध्याः स सर्वकामोऽग्निष्टोमः । ते च कामाः स्वर्गप्रजापशुहिरण्यादयः । एवं क्रियान्तरसाध्या अन्येऽपि लोकन्यासात्सूक्ष्मव्यवहितविप्रकृष्टज्ञानं भुवनज्ञानं सूर्ये संयमादित्यादिपातञ्जलसूत्रबोधितयोगधारणासाधनकभुवनज्ञानमपि सर्वशब्देन ग्राह्यम् । प्रगीत्यधिकरणीभूतकर्त्राख्यावाची स्तोमशब्दः । स चात्र लक्षणया तत्संबद्धयज्ञायज्ञियाख्यस्तोत्रविशेषकरणकस्तुतिपरो ज्ञेयः । अग्नेः स्तोमः स्तुतिर्यस्मिन्सोऽग्निष्टोमः । योगरूढं पदम् । अग्निस्तुतिसंपादकेन यज्ञायज्ञियनामकेन स्तोत्रेण संस्था समाप्तिर्यस्य सोऽग्निष्टोम इति निष्कृष्टोऽग्नि-

ष्टोमशब्दार्थः। अग्निष्टोमस्य सर्वकामत्वे श्रूयते शाखान्तरम्—"एकस्मै वा अन्ये यज्ञाः कामायाऽऽह्रियन्ते सर्वेभ्योऽग्निष्टोमः" इति। आह्रियन्ते क्रियन्त इत्यर्थः। काम्य एव फलवत्ता जैमिनीयैः साधिता। न चास्मच्छाखायामग्निष्टोमस्य फलं श्रूयते। नच तस्मिन्नसति कथमित्याकाङ्क्षाप्रकरणमुदेति। तथा च तेन वसन्ते वसन्ते यजेत तस्य नानुपक्रान्तयोर्दर्शपूर्णमासयोराहार इत्यादिकं न व्याख्यातुं युक्तमिति फलमेव बुद्ध्वा पुरुषः प्रवर्तत इति तदादौ वक्तुं युक्तम्। ननु सर्वकामोऽग्निष्टोम इति वाक्यस्य फलसाधनीभूताग्निष्टोमविधायकत्वात्फलस्य यजमाननिष्ठत्वादेतद्वाक्यं याजमानसूत्र एव पठितव्यमिति चेन्न। साध्यसाधनाकाङ्क्षानिवृत्तौ सत्यामेवेतिकर्तव्यताकाङ्क्षोदयेन तदर्थं साध्यसाधनाकाङ्क्षानिवर्तकस्याऽऽध्वर्यवादिप्रयोगरूपेतिकर्तव्यताविधानात्पूर्वमेव सर्वकामोऽग्निष्टोम इति वाक्यपाठस्य युक्तत्वात्। नन्वेकस्मै वा अन्ये यज्ञाः कामायाऽऽह्रियन्ते सर्वेभ्यो ज्योतिष्टोम इत्यपि श्रूयते। ततश्च त्रिवृत्पञ्चदशः सप्तदश एकविंशः। एतानि वाव तानि ज्योतींषि। य एतस्य स्तोमा इत्यनया श्रुत्या स्तोमचतुष्टयवत्सु कर्मसु शक्त्यवगमाद्व्यापकं धर्मं परित्यज्य किमर्थं व्याप्यधर्मनिर्देशः कृत इति चेन्न। उक्थ्येन पशुकामो यजेत, षोडशिना वीर्यकामो यजेत, अतिरात्रेण प्रजाकामो यजेतेत्यादिभिः श्रुतिभिरुक्थ्यादिषु स्तोमचतुष्टयवत्सु अग्निष्टोमगुणविकारेषु कर्मसु नियतफलश्रवणात्सर्वकामताया बाधितत्वेन ज्योतिष्टोमशब्देनाग्निष्टोमस्यैव ग्रहणात्। नच ज्योतिष्टोमेन स्वर्गकामो यजेतेति श्रुतावप्यग्निष्टोमस्य ग्रहणं ज्योतिष्टोमशब्देनास्त्विति वाच्यम्। एकस्मै वा अन्ये यज्ञा इति सर्वकामत्वप्रतिपादकश्रुतिविरोधापत्त्या तथा वक्तुमशक्यत्वात्। उक्थ्यादिपरत्वमपि वक्तुमशक्यम्। तेष्वपि स्वतन्त्रफलश्रवणात्। मच ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यस्याः श्रुतेः क्वावकाश इति शङ्क्यम्। अत्यग्निष्टोमादिष्ववकाशसंभवात्। विश्वजिति तु फलस्याश्रवणात्फलमन्तरेण विधिश्रुतेरनुपपत्तेरवश्यं फले कल्पयितव्ये सर्वाभिलषितत्वेन स्वर्ग एव कल्पितो जैमिनिना स स्वर्गः स्यात्सर्वान्प्रत्याविशिष्टत्वादिति सूत्रेण। सूत्रार्थस्तु यदेकं फलं स स्वर्गः स्यात्सर्वान्सर्वपुरुषान्प्रति अविशिष्टत्वादिति।

यन्न दुःखेन संभिन्नं नच ग्रस्तमनन्तरम्।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्॥

इति वचनप्रतिपादितनिरतिशयसुखविशेषात्मस्वर्गस्याभिमतत्वेन विशिष्टतुल्यत्वादित्यर्थः। स्वर्गसुखं दुःखाननुषक्तमिति कृत्वा सर्वाभिमतं पश्वादिसुखं दुःखानुषक्तमल्पं चेति केचिदेव प्रार्थयन्ते। स्वर्गसुखं तु बहवः प्रार्थयन्त इति पूर्वसूत्रार्थः। प्रत्ययाच्चेति द्वितीयं सूत्रम्। तस्यार्थः—प्रतीयते निरतिशयसुखत्वेनाभिलष्यते सर्वैरिति प्रत्ययस्तस्माच्च हेतोरित्यर्थः। तथा चायं निर्गलितोऽर्थः—दुःखाननुषक्तस्वाधिकरणक्षणध्वंसान-

धिकरणनिरतिशयसुखात्मस्वर्गस्य १सर्वपुरुषाभिमतत्वेन सर्वाभिलषितत्वेन च स एव फलत्वेन परिकल्प्यत इति । प्रत्यवायपरिहारस्तु सर्वाभिलषितोऽपि प्रत्यवायापेक्षया कियताऽपि विलम्बेन हृदयमागच्छति । स्वर्गः कस्यचित्पुरुषस्याभिमतः कस्यचिन्ना-भिमत इत्ययं विशेषोऽत्र नास्ति किंतु सर्वपुरुषाभिमत एवेत्यतो भवत्यविशिष्ट इति सूत्रेण । सूत्रार्थस्तु—यदेकं फलं स स्वर्गः स्यात्सर्वान्सर्वपुरुषान्प्रत्यविशिष्टत्वादिति ।

यन्न दुःखेन संभिन्नं नच ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ॥

इति वचनप्रतिपादितसुखविशेषमयस्वर्गस्य भूयोभिलषितत्वात्सर्वाभिमतत्वात्सुकरत्वाच्च स्वर्ग एव फलत्वेन कल्प्यते । प्रत्यवायपरिहारस्य सर्वाभिलषितत्वेऽपि दुष्करत्वेन तस्य फलत्वं न कल्प्यत इति । प्रत्ययात्प्रतीयते निरतिशयसुखत्वेन सर्वैर्ज्ञायत इति प्रत्ययस्तस्माच्च हेतोः स्वर्ग एव फलत्वेन कल्प्यत इति प्रत्ययाच्चेति द्वितीयसूत्रार्थः । अतः स फलं न भवति । एतद्दुःखनिवृत्तिरपि फलं न भवति दुष्करत्वात् । ततस्तु सुकरज्ञानं सुखमेव परं फलं, तच्चानतिशयत्वेन स्वर्गरूपमिति द्रष्टव्यम् । अयं न्यायश्चतुर्थाध्याये तृतीयपादे वर्तते । निश्रेयसफलकत्वं तु अग्निष्टोमोक्थ्यादिसाधारणं कर्मभिर्निश्रेयसमित्यनेनाऽऽचार्येण प्रदर्शितम् । नियतकर्ममात्रविषयं वैतत् । तच्च ज्ञानद्वारा साक्षाद्वेत्यन्यदेतत् । य एवं विद्वानग्निष्टोमेन यजते प्राजाताः प्रजा जनयति परिप्रजाता गृह्णातीत्यर्थवादेन फलकल्पनाऽपि साक्षाच्छ्रूयमाणे श्रौते फले सति न युक्ता । रात्रिसत्रे स्वतन्त्रे कर्मणि तु प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्तीत्यत्र विध्युद्देशे फलाश्रवणात्फलमन्तरेण विधिश्रुतेरनुपपत्तेरवश्यं फले कल्पयितव्य आर्थवादिकं प्रतिष्ठाख्यं फलमुक्तम् । विश्वजिदधिकरणन्यायेनानुपस्थितस्वर्गकल्पने तस्य प्रकृतसंबन्धकल्पने गौरवादर्थवादोपस्थितस्यैव प्रकृतफलत्वकल्पने लाघवात् । एतदुक्तं जैमिनिना—क्रतौ फलार्थवादमङ्गवत्कार्ष्णाजिनिः । फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात् । अङ्गेषु श्रुतिः परार्थत्वादिति । क्रतौ रात्रिसत्रे प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्तीति फलश्रुतिः । यस्य पर्णमयी जुहूर्भवति न पापᳪ श्लोकᳪ शृणो-तीति पर्णतादावङ्ग इव फलार्थवादं कार्ष्णाजिनिराचार्यो मन्यत इति प्रथमसूत्रार्थः । आत्रेय आचार्यस्तु प्रतितिष्ठन्ति ह वै, य एता रात्रीरुपयन्तीति श्रुतौ प्रतिष्ठाया निर्देशात्प्रतिष्ठैव फलम् । अश्रुतौ, अर्थवादेऽपि फलाश्रवणे सति हि अनुमानं कल्प्यं स्वर्गादिरूपं फलं स्यात् । प्रकृते तु प्रतिष्ठारूपफलश्रवणमेवास्ति । अतो नात्र स्वर्गः फलत्वेन कल्प्यत इति मन्यते । रात्रिशब्देन ज्योतिर्गौरायुरित्यादिवाक्योत्पा-

---

१ ख. ग. फलश्र° ।

दितानि सौत्यानि कर्माण्युच्यन्ते । तद्रूपः कर्मसमुदायः सत्रमिति द्वितीयसूत्रार्थः । अङ्गेषु श्रुतिः फलश्रुतिः परार्थत्वादङ्गानां प्रधानार्थत्वादङ्गेषु अङ्गविषयिणी या श्रुतिः फलश्रुतिरर्थवाद एवेति कार्ष्णाजिन्यात्रेययोरुभयोरपि मते तुल्यमेवेति तृतीयसूत्रार्थः । इदमधिकरणं चतुर्थाध्याये तृतीयपादे वर्तते । साक्षाच्छ्रूयमाणश्रौतफलाभावादेव रात्रि-सत्र आर्थवादिकफलकल्पनम् । अङ्गेषु फलश्रवणं कमिधातुश्रवणं विनाऽर्थवाद एव । तथाच सूत्रम्—समस्ते क्रतावर्थं श्रूयमाणं यजमानः कामयते तथा नित्येषु यज्ञाङ्गेषु यानि तु कामयतिः श्रावयति यथाऽऽधारस्योर्ध्वतायां मीचैस्तायां चार्थवादा इतरे तथाऽन्येषु यज्ञाङ्गेषु पुरीषवतीं करोति प्रजयैवैनं पशुभिः पुरीषवन्तं करोति यद्यूपं मिनोति सुवर्गस्य लोकस्य प्रज्ञात्या इषे त्वोर्जे त्वेति शाखामाच्छिनत्तीषमेवोर्जं यजमाने दधातीति । जैमिनिरपि चतुर्थाध्याये तृतीय-पादे द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यादुत्पत्तेश्चातत्प्रधानत्वादिति । अत्र द्रव्ये फलश्रुतिर्यस्य पर्णमयी जुहूर्भवति न पापꣳ श्लोकꣳ शृणोतीत्येवमाद्या । संस्कारे फलश्रुतिर्यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्त इत्येवमाद्या । कर्मणि फलश्रुतिर्य-त्प्रयाजानूयाजा इज्यन्ते वर्मैव तद्यज्ञाय क्रियते वर्मयजमानायेत्येवमाद्या । अत्र कर्म-पदं त्वर्थकर्मपरं द्रष्टव्यम् । संस्कारकर्मणः पृथक्संकीर्तनात् । एवं च कमिधातुर्येषु श्रूयते तान्येवेच्छाविषयाणि कामयितव्यानि नान्यानीति । द्रव्ये संस्कारेऽर्थकर्मणि च फलश्रुतिरर्थवादः स्यात्तेषां परार्थत्वात्क्रत्वर्थत्वादिति पूर्वसूत्रार्थः । उत्पत्तेः, यस्य पर्ण मयी जुहूर्भवतीत्यादितत्तद्वाक्यबोधितपर्णमयत्वादित्याद्युत्पत्तेः । अतत्प्रधानत्वात्तच्छ-ब्देन पुरुष उच्यते । स एव प्रधानं यत्र सा तत्प्रधाना न तत्प्रधानाऽतत्प्रधना तस्या भावस्तत्त्वं तस्मात्पुरुषप्रधानत्वाभावादित्यर्थः । तेनार्थात्क्रतुप्रधानत्वं सिद्धं भवति । तत्प्रधानत्वं तदर्थत्वं तस्याभावादिति निर्गलितोऽर्थ इति द्वितीयसूत्रार्थः । अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासेति सूत्रे प्रथमोपात्तक्रत्वर्थपदसूचिता क्रतुप्रयुक्तिः पादद्वयेन विचारिता, इदानीं चरमोपात्तपुरुषार्थपदसूचिता प्रयुक्तिर्विचार्यत इति पादा-न्तरत्वमानन्तर्यं च बोध्यमिति ससोमके कर्मणि त्रिभिर्नामभिराचार्यो व्यवहरति सर्व-कामोऽग्निष्टोमः, यस्य भ्रातृव्यः सोमेन यजेत ज्योतिष्टोमे प्रागग्नीषोमीयादिति । ज्योतिष्टोमे प्रागग्नीषोमीयादित्यत्र ज्योतिष्टोमशब्दः साधारण एव विरोधाभावात् । नन्वेवं वाजपेये त्रिवृत्पञ्चदशः सप्तदश एकविꣳशः । एतानि वाव तानि ज्योतीꣳषि । य एतस्य स्तोमा इतिश्रुतिसिद्धस्तोमचतुष्टयसाध्यत्वाभावेन ज्योतिष्टोमत्वाभावात्कथं याजुर्वैदिकमन्त्राणामिवाऽऽग्वैदिकसामवेदीयमन्त्राणामपि प्रागग्नीषोमीयादुपांशुत्वनियम-प्राप्तिः संभवतीति चेन्न । प्रकृतिष्वेतेन वचनेनोपांशुत्वनियमे सिद्धे वाजपेये प्रकृतिवद्वि-

---

१ ख. ग. °जेनेति ज्यो° ।

कृतिः कर्तव्येतिन्यायेनैव तत्प्राप्तिसंभवात् । नचैवमग्निष्टोमशब्द एवात्र प्रयोक्तव्यः । उक्थ्यादिषु तु वाजपेय इवोपांशुत्वनियमः प्राप्नोत्येवेति वाच्यम् । उक्थ्यादीनां चतुर्णामपि तत्तत्क्रतुविशेषे प्रकृतित्वमस्तीति ज्ञापनाज्ज्योतिष्टोमशब्दोपादानाज्ज्योतिष्टोमशब्देनाप्यागूरणकर्तव्यताप्रतिपादनार्थत्वात् । अग्निष्टोमवदुक्थ्यादीनां नित्यत्वमपि भवतीतिज्ञापनार्थत्वाच्च । ज्योतिष्टोमशब्दः स्तोमचतुष्टयवत्कर्मपर इत्युक्तमेव । अग्निष्टोमशब्दः संस्थाविशेषपरः । सोमशब्दोऽत्र लताविशेषपरो नतु चन्द्रादिपरः । तस्य प्रकृतेऽनुपयोगात् । अन्यथा द्रव्याकाङ्क्षानिवृत्तिर्न स्यात् । सोमशब्दवाच्यद्रव्यविशेषस्य मत्वर्थलक्षणया यागविशेषणत्वम् । तथाचायमर्थो भवति सोमवता यागेनेष्टं भावयेदिति । एतेनोद्भिदादिवद्यागनामधेयत्वं निरस्तं ज्ञेयम् । तत्र श्यामलाऽम्ला च निष्पत्रा क्षीरिणी त्वचि मांसला श्लेष्मला वमनी वल्ली सोमाख्या छागभोजनमिति आयुर्वेदतः सोमस्वरूपमवगन्तव्यम् । स च मुख्यः पर्वतजः सोमस्येव मौजवतस्य भक्ष इति लिङ्गात् । मूजवता मूजवतो हीति बौधायनेनाध्वर्युसोमविक्रायिणोः प्रश्नप्रतिवचनयोरेव तथोक्तत्वाच्च । अभाव इतरः । मूजवच्छब्दः पर्वतवाची । सोमाभावे पूतीकानभिषुणुयादित्यादिः प्रतिनिधिर्ग्राह्यः । प्रतिनिधावपि मुख्यशब्द एव प्रवर्तते । प्राकृतास्त्वेव मन्त्राणां शब्दाः प्रतिनिधिष्वपीत्याश्वलायनोक्तेः । आम्नानादशब्दत्वमभावेतरस्य स्यात् । तादर्थ्याद्वा तदाख्यं स्यात्संस्कारैरविशिष्टत्वात् । उक्तं च तत्त्वमस्येति प्रतिनिधौ चाविकारमाश्रित्यैव मन्त्रः प्रयोक्तव्य इति प्रथमसूत्रार्थः । आम्नानात्सोमाभावे पूतीकानभिषुणुयादितिप्रतिनिधेराम्नानात् । इतरस्य प्रतिनिधेरितरस्य मुख्यस्येति यावत् । प्रतिनिधौ गृहीतेऽपि अभावाच्च । अशब्दत्वं प्रतिनिधौ न विद्यते शब्दो मुख्यद्रव्यवाचकः शब्दो यत्र सोमशब्दः प्रतिनिधिस्तस्य भावस्तत्त्वं तत्स्यात्प्रतिनिधिभूतद्रव्ये मुख्यद्रव्यशब्दप्रवृत्तिर्न भवतीति द्वितीयसूत्रार्थः । इदं पूर्वसूत्रार्थोपरि पूर्वपक्षसूत्रम् । स एव मुख्यस्य योऽर्थः स एवार्थः प्रयोजनं यस्य स तदर्थः प्रतिनिधिस्तस्य भावस्तत्त्वं तस्मात् । प्रतिनिधेस्तादर्थ्यात्प्रतिनिधिरूपं द्रव्यं तदाख्यं सैवाऽऽख्या यस्य तत्तदाख्यं तन्नामकमेव स्यात् । संस्कारैरविशिष्टत्वात्संस्कारैस्तुल्यत्वाद्ये संस्कारा मुख्यद्रव्यस्य त एवास्येत्येवं च तुल्यसंस्कारत्वम् । प्रतिनिधिना कृतेऽपि मुख्येनैव कृतं भवतीति रहस्यम् । वाशब्दः पूर्वपक्षव्यावर्तकः । इति तृतीयसूत्रार्थः । उक्तं षष्ठाध्याये तृतीयपादे तत्त्वं संस्कारैरविशिष्टत्वम् । अस्य प्रतिनिधेर्द्रव्यस्य प्रतिनिधौ चाविकारादिति जैमिन्युक्तेश्च नवमाध्याये तृतीयपादे ।

**युगपत्कामयेत ।**

पूर्वसूत्रेऽग्निष्टोमस्य सर्वकामतोक्ता तत्रैकस्मिन्नेव प्रयोगे सर्वे कामाः कामयितव्या आहोस्वित्प्रयोगभेदेनेति विचारे, उच्यते—एकस्मिन्प्रयोगे सहैव सर्वान्कामान्स्वर्ग-

१ ख. ग. °शब्दे° ।

प्रजापशुहिरण्यादीनीप्सितान्कामयेत । यथा पशुकामोऽनेकान्पशूनेकस्मिन्प्रयोगे कामयत एवं सर्वान्कामान्कामयेत । यथा वैकस्मादाम्रारोपणात्फलं छाया गन्ध इत्यनूत्पद्यन्ते तथैकेन प्रयोगेणानेकानि फलान्यप्युत्पद्यन्त एवेति सूत्रार्थः ।

## आहारपृथक्त्वे वा ।

वाशब्दः पूर्वपक्षं व्यावर्तयति । नैतदस्ति युगपत्कामयेतेति किं तर्हि आहारपृथक्त्व एव । आहारः प्रयोगः । एकैकस्मिन्प्रयोग एकैकं कामं कामयेतेति । कुतः, फलानि प्रधानभूतानि तदर्थानि कर्माणि प्रधानसंनिधौ गुणः शिष्यमाणः प्रतिप्रधानं विभज्यते हि । पशुदृष्टान्ते हि एकजात्या क्रोडीकृतानां बहूनामपि पशूनामेकफलत्वमेव । नचात्र तथा किंतु तत्तत्फलस्य तत्तत्स्वरूपेणैव फलत्वं न तु फलत्वेन क्रोडीकारः । नहि सर्वस्य सर्वं काम्यमानत्वेन काम्यम् । तथाचेदमिदमिति बुद्ध्या यद्ग्राह्यं तन्नैकया क्रोडीकर्तुं शक्यत इति प्रतिप्रधानमङ्गावृत्तिर्युक्तैव । यच्चैकस्य कर्मणोऽनेकफलता दृष्टेति तदप्यनैकान्तिकमेव । प्रकृते सर्वेषां फलानां स्वतन्त्रत्वेनाऽऽनुषङ्गिकफलस्य दृष्टान्तत्वेनोपादानासंभवात् । चतुर्थाध्याये तृतीयपादे तत्र सर्वेऽविशेषात् । योगसिद्धिर्वोत्पत्त्यसंयोगादिति सूत्राभ्यां जैमिनिनाऽपि एवमेव सिद्धान्तितम् । सूत्रार्थस्तु तत्र सर्वकामे कर्मणि अविशेषात्कामत्वाविशेषात्सर्वे कामा अपि युगपत्स्युरिति पूर्वसूत्रार्थः । उत्तरसूत्रार्थस्तु यस्य यस्मिन्कामेऽभिलाषस्तस्य तादृशस्यार्थस्य कामस्यैव योगेन प्रयोगेणानुष्ठानेन सिद्धिर्न तु सर्वेषामर्थानां युगपत् । सर्वोत्पत्तावयोगित्वात्सर्वत्वस्योद्देश्यप्रतीतिपर्यवसानार्थत्वाभावात् । सर्वशब्दस्येह मुख्यत्वेऽपि नोद्देश्यसमर्पकत्वं सापेक्षत्वात्किंतु निरपेक्षत्वात्कामशब्दस्यैव । ततश्च ग्रहत्ववत्सर्वत्वस्योद्देश्यप्रतीतिपर्यवसानार्थत्वाभावादुद्देश्यविशेषणत्वमेवेति ग्रहैकत्ववदविवक्षितत्वान्न साहित्येन फलत्वं किंतु एकैकस्यैव फलत्वम् । फलस्य प्रधानत्वात्कर्मणो गुणत्वात्प्रतिप्रधानं गुणावृत्तिर्युक्तैवेति भावः ।

## तेन वसन्ते वसन्ते यजेत ।

तेनाग्निष्टोमेन । तच्छब्दस्य सर्वनाम्न उत्सर्गतः संनिहितपरामर्शित्वात्काम्यस्य नियतकालत्वाबाधाच्च तच्छब्देन संनिहितस्याग्निष्टोमस्य विशेष्यस्यैव परामर्शो न तु सर्वकामविशेषणस्यापि परामर्शः । नहि कामनाया वसन्त एव जननमिति नियमः । तेनार्थान्नित्ये पर्यवस्यति । वसन्तग्रहणं वसन्तमात्रमेव ग्राह्यमिति । यदि संवत्सरे संवत्सर इत्युच्यते तदा यस्यां तिथौ प्रथमः प्रयोगस्तस्यामेव तिथावभ्यासः कर्तव्यः स्यात्तथा मा भूत् । वसन्ते यस्यां कस्यांचिदनिषिद्धायां तिथौ यजेतेति । नित्यत्वेऽप्येतस्य दर्शपूर्णमासादिवत्फलोपबन्धः प्रत्येतव्यः । नित्यत्वं चैतस्यर्णसंस्तवात् । तथा हि श्रूयते जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः

प्रजया पितृभ्य इति । सोमान्तान्यज्ञाननुक्रम्य नैयमिकं ह्येतद्दणसंस्तुतमिति वसिष्ठवचनं सोमपीथिविच्छेदे प्रायश्चित्तश्रवणम् ।

अनधीत्य द्विजो वेदाननुत्पाद्य च वै प्रजाः ।
अनिष्ट्वा शक्तितो यज्ञैर्मोक्षमिच्छन्व्रजत्यधः ॥

इति प्रकरणे प्रत्यवायश्रवणं चापि नित्यत्वे साधकम् । अत्र यद्यपि यज्ञैरित्यविशेषेणोक्तं तथाऽप्यग्निष्टोमसंस्थो ज्योतिष्टोमः सोम एव । स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः स एष यज्ञानां संपन्नतम इति पञ्चसंस्थावश्यकताबोधकबह्वृचब्राह्मणवाक्ये सोमस्यैव संपन्नतमपदेन मुख्ययज्ञत्वोक्तेः । एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वाऽथान्येन यजेतेत्यत्र ज्योतिष्टोमस्य य एतेनेत्यग्निष्टोमः प्रकरणाल्लिङ्गाच्चेति पञ्चमाध्याये तृतीयपादगतसूत्रोक्तन्यायेन प्रथमयज्ञत्वाज्ज्योतिष्टोमोऽग्निष्टोमसंस्थः सोमो नित्यः सर्वकामोपबन्धात्काम्यश्च । सूत्रार्थस्तु एतेनेत्यग्निष्टोमसंस्था निर्दिश्यते । तत्संस्थायुक्तस्यैव प्रकरणत्वादिति प्रथमसूत्रार्थः । लिङ्गादपि अग्निष्टोमसंस्थस्यैव निर्देशः प्रथमो यज्ञ इति लिङ्गम् । इति द्वितीयसूत्रार्थः । ज्योतिष्टोमोऽग्निष्टोमसंस्थो नित्यः सर्वकामोपबन्धात्काम्यश्च । तदेतत्षष्ठाध्याये द्वितीयपादे तदेतद्ब्राह्मणस्य सोमविद्याप्रजमृणवाक्येन संयोगादिति सूत्रेण काम्यत्वं पूर्वपक्षीकृत्य तत्रैवर्णसंस्तवान्नित्यत्वमेवेति साधितं मीमांसकैः । सूत्रार्थस्तु सोमश्च विद्या च प्रजा च, एतेषां समाहारः सोमविद्याप्रजम् । एतत्सोमविद्याप्रजं जायमानो वै ब्राह्मण इत्यृणवाक्येन संयोगात्खलु सोमविद्याप्रजं ब्राह्मणस्यैवाऽऽवश्यकमिति मन्यसे नैतद्युक्तं विधिवाक्येष्वविशेषश्रवणादिति। तथा च ब्राह्मणग्रहणस्य क्षत्रियवैश्योपलक्षणार्थता सिद्धा भवतीति । प्रकारान्तरमाकरे द्रष्टव्यम् । संस्थाचतुष्टयं तु काम्यमेव । पशुकाम उक्थ्यं गृह्णीयात, षोडशिना वीर्यकामः स्तुवीत, अतिरात्रेण प्रजाकामं याजयेत्, पशुकामोऽप्तोर्यामेण याजयेदिति प्रकृतज्योतिष्टोमाग्निष्टोमाश्रितसंस्थाचतुष्टयस्य फलोपबन्धो यतः । प्रकृताग्निहोत्रहोमाश्रितस्येव दध्नः । संस्थाचतुष्टयस्य केवलकाम्यत्वेऽपि ज्ञापकबलान्नित्यत्वमपि । तच्च प्रागेवोक्तम् । अत्र मीमांसका अग्निष्टोमसंस्थ एव प्रथमः प्रयोज्यः । य एतेनानिष्ट्वेति श्रुतेः । अतिरात्रस्य प्रथमयज्ञत्वपक्षेऽपि नाग्निष्टोमं विना क्रत्वन्तरारम्भः । सोमपूर्वाधाने त्वग्निष्टोम एव सर्वेषां पूर्वो नातिरात्र इति प्राहुः । उक्थ्यः षोडश्यतिरात्रोऽप्तोर्यामश्चेत्यग्निष्टोमस्य गुणविकारा भवन्तीति वक्ष्यमाणसूत्रादग्निष्टोमवदुक्थ्यादिषु चतुर्ष्वपि अग्निष्टोमवदुक्थ्यादयोऽपि प्रकृतय एवेत्याचार्यमतमेतदिति ज्ञायते । तेन ज्योतिरुक्थ्यादीन्विना

१ ख. ग. 'माश्रि' ।

विकृतिभूता उक्थ्यादयो न भवन्ति। प्रथमयज्ञत्वं तु मुख्याग्निष्टोमस्यैव। वचनादतिरात्रस्यापि। न तूक्थ्यादीनामग्निष्टोमातिरात्रपूर्वभावित्वमिति। उत्तरभावित्वं त्वग्निष्टोमत एव नातिरात्रादिति ज्ञेयम्। अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमयज्ञसंस्था इति गौतमेन संस्कारमध्ये गणनात्, अष्टाचत्वारिंशत्संस्कारैः संस्कृतो ब्रह्मणः सायुज्यमाप्नोतीति वचनात्, अकरणे प्रत्यवायश्रवणाच्च सप्तापि सोमयज्ञसंस्था नित्या इति केचित्प्राहुः। अस्मिन्सूत्रे योगविभागः कार्यः। तेन वसन्त इत्येकं सूत्रम्। यजेतेत्युत्तरस्मादपकृष्यतेऽत्र। तेन नित्येनाग्निष्टोमेन वसन्ते यजेतेति तदर्थः। वसन्ते यजेतेति भिन्नं सूत्रम्। अस्मिन्सूत्रे पूर्वतनं कृत्स्नं सूत्रमाकृष्यते। तेन नित्येनाग्निष्टोमेन वसन्ते वसन्ते यजेतेत्यर्थो भवति। पूर्वसूत्रेण नित्यस्य सकृत्प्रयोगो वसन्ते कर्तव्यत्वेन विधीयते। उत्तरसूत्रेणाभ्यासो विधीयते। अभ्यासस्यावधेरभावाद्यावज्जीवत्वमर्थात्। अभ्यासस्यानित्यत्वे लिङ्गमप्यस्ति अपुनर्भक्षोऽस्य सोमपीथो भवतीति। अथवा तेनेत्यनेन नित्योऽग्निष्टोमः प्राप्यते। तत्र च साभ्यासो वसन्तः कालो विधीयते। अन्यत्र तु कृत्स्नोदगयनात्मकः। तदुक्तं छन्दोगैः—उदगयन आपूर्यमाणपक्षे पुण्याहे यज्ञकालोऽनादेश इति। अयमेवानिर्दिष्टकालानामपि कालः। सोमपूर्वाधाने सोमेन यक्ष्यमाण आदधानो नर्तुं न नक्षत्रं सूर्क्षेदित्येकेषामित्येतत्सूत्रविहिते बहुधा विप्रतिपत्तयः। तत्र केचिदाहुः—प्रकरणादाधानकालस्यैव बाधः, सोमस्य वसन्तकालता तु नैव बाध्यत इति। अन्ये तु सोमस्यापि य ऋतुस्तमपि न सूर्क्षेत्। तथा चोभयकालबाध इत्याहुः। परे तु उदगयन आपूर्यमाणपक्षे पुण्याहे यज्ञकालोऽनादेश इति च्छन्दोगसूत्रोक्तोदगयनाबाधेन सोमाभिसंबिन्धिकालान्तरविधानं सोमपूर्वाधाने। सोमे तूदगयनमपेक्ष्यत एवेत्याहुः। अपरे तु यदैवैनं यज्ञ उपनमेदिति सर्वकालानादर उक्त इति भारद्वाजसूत्रात्सर्वकालबाध उभयत्रेति प्राहुः। सोमेन यक्ष्यमाणोऽग्नीनाधास्ये यानि कर्माणि कर्तुं शक्ष्यामि यैश्चास्म्यधिकृत इति सोमपूर्वाधानं संकल्प्य पवमानेष्ट्यन्ते कृते प्रतिबन्धेन सोमारम्भो यदि न जायते तदा सोमारम्भपर्यन्तमारम्भधर्मरहिता गुप्त्यर्थं तूष्णीं होमाः कार्याः। इष्ट्यारम्भोऽपि न भवति। सोमोत्तरमग्निमपौर्णमासेऽन्वारम्भणीयां कृत्वा पौर्णमासेष्ट्यादि कुर्यात्।

तस्य नानुपक्रान्तयोर्दर्शपूर्णमासयोराहारः।

तस्याग्निष्टोमस्यानुपक्रान्तयोरनारब्धयोः सतोराहारः प्रयोगो नेत्यर्थः। तथा च भरद्वाजः—न दर्शपूर्णमासाभ्यामनिष्ट्वा सोमेन यजेतेति। वैखानसबाधूलावपि—दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति। ब्राह्मणे—यो दर्शपूर्णमासाविष्ट्वा सोमेन यजते रथस्पष्ट एवावसाने वरे देवानामवस्यतीति सोमस्य दर्शपूर्णमासोत्तरभावित्वमेव प्रस्तुतम्। शाखान्तरे ज्योतिष्टोमप्रकरण एव दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेति या श्रुतिः

सा दर्शोत्तरकालतामात्रविधायिका नत्वङ्गाङ्गिभावबोधिकेति द्रष्टव्यम् । तथा च जैमिनिश्चतुर्थाध्याये तृतीयपादे उत्पत्तिकालविषये कालः स्याद्वाक्यस्य तत्प्रधानत्वादिति सूत्रेणामुमर्थमाह । एतत्सूत्रार्थस्तु कर्मान्तरोत्पत्तिकालविधिसंदेहे कालः स्यात्, दर्शपूर्णमासाभ्यामितिवाक्यस्य कालप्राधान्यादिति सोमेन यक्ष्यमाण आदधानो नतु न नक्षत्रं सूर्क्षेदित्येकेषामित्यनेन दर्शपूर्णमासारम्भात्प्रागभिधानादेतेन प्रतिषेधाच्च विकल्पः । आश्वलायनोऽपि विकल्पमेवाऽऽह दर्शपूर्णमासाभ्यामिष्ट्वेष्टिपशुचातुर्मास्यैरथ सोमेनोर्ध्वं दर्शपूर्णमासाभ्यां यथोपपन्नस्यैके प्रागपि सोमेनैक इति । जैमिनिरपि विकल्पमुक्तवान्वचनादिष्टिपूर्वत्वं सोमश्चैकेषामग्न्याधेयस्यर्तुनक्षत्रातिक्रमवचनात्तदन्तेनानर्थकं हि स्यादिति सूत्राभ्याम् । सूत्रार्थस्तु दर्शपूर्णमासाविष्ट्वा सोमेन यजेतेतिवचनात्सोमस्येष्टिपूर्वत्वमेव स्यादिति पूर्वसूत्रार्थः । उत्तरसूत्रार्थस्तु सोमोऽप्येकेषामाचार्याणां मते सोमेन यक्ष्यमाणोऽग्नीनादधानो नर्तुं पृच्छेन्न नक्षत्रमिति [ऋतु]नक्षत्रा[तिक्रम]वचनात्पक्ष इष्टिपूर्वभावी सोमोऽपि तदन्त[न] भावप्रधानो निर्देशः । तेन तदन्तत्वेनेत्यर्थः । तदन्तत्वेनेष्ट्यन्तत्वेनेष्ट्युत्तरभावित्वेन । इदं वचनमनर्थकं यतो भवेदतो नेष्ट्यन्तत्वमिति नियमः । तस्य नानुपक्रान्तयोरित्यनेन प्रकृतिं विना विकृतिर्न कर्तव्येति प्रदर्शितं भवति । यो ज्येष्ठयज्ञोऽग्निष्टोमः स दर्शपूर्णमासारम्भं विना न भवति किमु वक्तव्यमिष्टिपशवो न भवन्तीति । यस्यैन्द्राग्नाश्विनौ पशू न स्तस्तस्याऽऽधानत्रयं विकल्पते । यस्य तु तौ स्तस्तस्य न सोमपूर्वत्वमसंभवादिति केचित् । मध्ये प्रायश्चित्तपशुभ्यां व्यवधानेन दर्शपूर्णमासारम्भं विना तयोरसंभवेन सोमपूर्वत्वस्यासंभवादित्येतन्मताशयः । अन्ये तु एतयोः सोमारम्भानुगुणत्वादव्यवधायकत्वमेवेति वदन्ति । पवमानेष्ट्यव्यवहितोत्तरमेव चतुर्दश्यां पश्वोस्तन्त्रेणोत्तरवेदिकरणान्तं कृत्वा पर्वणि पशू तन्त्रेण कृत्वा यजनीयेऽहनि सोमारम्भं कुर्यात् । अथवा पवमानेष्ट्यव्यवहितोत्तरं चतुर्दश्यामेव तन्त्रेण पशू कृत्वा पर्वणि सोमारम्भं कुर्यात् । अथवा चतुर्दश्यामैन्द्राग्नपशोरुत्तरवेदिकरणान्तं कृत्वा पर्वण्यैन्द्राग्नेनेष्ट्वाऽनन्तरपर्वण उपवसथेऽहन्याश्विनपशोरुत्तरवेदिकरणान्तं कृत्वा पर्वण्याश्विनेनेष्ट्वा तृतीये पर्वणि सोमारम्भं कुर्यात् । सोमारम्भात्प्रागगुप्त्यर्थं तूष्णीमग्निहोत्रहोमाः कार्या इति प्रयोगक्रमत्रयमव्यवधायकत्ववादिमते सोमपूर्वाधानेऽग्नीषोमीयेण सवनीयेन वा सहोपालम्भत्वमपि पक्षे । अस्मिन्नर्थे ज्ञापकमग्रे वक्ष्यते । नाकृतायां प्रकृतौ विकृतिः कार्येत्ययं नियमस्तु यथा पवमानेष्टिपूर्वभावित्वविषये न भवति तथा प्रायश्चित्तपशुपूर्वभावित्वविषयेऽपि नेति ज्ञेयम् । न च सोमपूर्वाधानं विच्छिन्नसोमपीथस्य न भवति । दर्शपूर्णमासारम्भं विना प्रायश्चित्तपश्वारम्भासंभवात् । नाकृतायां प्रकृतौ विकृतिरिति नियमस्य जागरूकत्वादिति वाच्यम् । प्रायश्चित्तपश्वोः सोमानुगुणत्वेन सोमवत्तदारम्भेऽपि बाधकाभावात् । सत्यां सोमपीथेच्छायां तन्निरोद्धुरभावाच्च । एतेन प्रायश्चित्तपश्वोः सांनाय्यविकृतित्वात्सांनाय्यारम्भं

विना तयोरारम्भासंभवेन प्रायश्चित्तपश्वनुष्ठानं विना सोमासंभवेनान्योन्याश्रयपरिहा॰रार्थं कापेयपक्षमाश्रित्य पूर्वं सांनाय्यमनन्तरं प्रायश्चित्तपशु इति केषांचिदुक्तिः परास्ता । सर्वथाऽपि तावत्सिद्धं विच्छिन्नसोमपीथस्यानालब्धव्रात्यपशोर्न सोम इति । विच्छिन्नसोमपीथपदार्थ उक्तो ब्राह्मणे—ऐन्द्राग्नं पुनरुत्सृष्टमालभेत य आतृतीयात्पुरुषात्सोमं न पिबेद्विच्छिन्नो वा एतस्य सोमपीथ इति। तत्र च त्रयः प्राञ्चस्त्रयः प्रत्यञ्च इत्यादौ प्राक्त्वेनोक्ता दीक्षावेदननामसुब्रह्मण्यादौ नामभिः संकीर्त्यमाना पित्रादि॰त्रिपुरुषी तस्यां चरमः प्रपितामहस्तृतीयोऽभिप्रेतो नत्वात्मनस्तृतीयः पितामहः । कुतः, सोमपानोद्यतस्याऽऽत्मनस्तद्विच्छेदाभावात् । एतत्ते तत ये च त्वामन्विति तिसृषु ऋक्षु निदधाति तस्मादातृतीयात्पुरुषान्नाम न गृह्णन्तीत्यादौ व्यक्तार्थत्वाच्च । तथाऽत्र विध्यर्थत्वमप्यत एव निदर्शनादवगन्तव्यम् । तदयमर्थो भवति यस्य पित्रादयस्त्रयः पुरुषाः सोमं न पीतवन्तः स सोमपीतार्थी—ऐन्द्राग्नं पशुमालभेतेति । केचित्तु द्विपुरुषविच्छित्ता॰वप्ययमिष्यते । यथाऽऽह कात्यायनः—वसन्तेऽग्निष्टोम ऐन्द्राग्नं पुनरुत्सृष्टमालभ्य द्विपुरुषाः सोमपीथिन इति प्राहुः । अन्ये तु पितुः पितामहस्य चोभयोर्वा सोमपीथाभाव ऐन्द्राग्न आलब्धव्यः सोऽयं व्रात्यपशुः पित्रादीनां त्रयाणामानन्तर्येण सोमपीथाभाव ऐन्द्राग्नेनेष्ट्वाऽऽश्विनं धूम्रललाममालभेतेत्याहुः । अत्रैकस्य सोमपानाभावे य ऐन्द्राग्न उक्तः स न युक्तः । यस्य परौ द्वावसोमौ स्यातां स ऐन्द्राग्नेनेष्ट्वा सोमेन यजेतेत्यगस्त्यसूत्रे द्वयोरसोमपीथत्व एव तस्योक्तेः ।

> यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् ।
> स वै दुर्ब्राह्मणो नाम ब्रह्मवादिषु गर्हितः ॥

इति स्मृतौ यागाध्ययनयोरुभयोरेव विच्छेदे दौर्ब्राह्मण्यं मन्यमानाः सोममात्रविच्छेद आश्विनं नेच्छन्ति केचित् । अस्मिन्वचने चकाराभ्यां व्यक्तसमुच्चयावगमादुभयवि॰च्छेद एव भवत्याश्विनो नान्यतरमात्रविच्छेद इत्यन्ये । तदुभयमप्यसत् । आश्विनं धूम्रललाममालभेत यो दुर्ब्राह्मणः सोमं पिपासेदिति प्रकृत्याश्विभ्यां पूर्वमसोमपाभ्यां पश्चात्प्राप्तसोमपानाभ्यां दुर्ब्राह्मणस्य सादृश्यमपेक्ष्याश्विनावेव देवतां कर्तुं सोमपी॰थस्य प्रदानमुपनतिं च ब्रुवन्वाक्यशेषः सोमपीथविच्छेद एवाऽऽश्विनं दर्शयति नाध्ययनमात्रविच्छेदेन चोभयविच्छेदे । तस्मादसत्यप्यध्ययनविच्छेदे सोमपीथमात्र॰विच्छेद आश्विनः कार्यः । यत्तु स्मृतिवचनं तदन्यतरविच्छेदेऽप्युपपद्यते । अत्र प्रत्येकं वाक्यपरिसमाप्तिराश्रीयते श्रुत्यनुरोधाय तर्हि सत्यामपि वेद्यां वेदविच्छेद आश्विनप्र॰सङ्गः । न । तस्य तु दुर्ब्राह्मणत्वं स्मर्यते परं तु नाऽऽश्विनाधिकारः । किंच वेदविच्छित्तौ वेदिविच्छित्तिरवश्यंभाविनी । अथापि नावश्यं भाविनी श्रद्दधानस्य साधुवृत्तस्योत्पत्ति॰शुद्धस्य तस्य सूत्रकारैरधिकारोक्तेः । नहि वैदुष्ये सत्येव ब्राह्मण्यं सुसंपादं भवतीति ।

सर्वथाऽपि न दुर्ब्राह्मणमात्रस्याऽऽश्विनोऽभिधीयते । तथाच सोमपीथविच्छेद एवाऽऽश्विनः । वेदविच्छेदे स्मार्तं प्रायश्चित्तं कर्तव्यं प्रथमयज्ञे प्रवर्ग्यश्चेति । यत्तु बौधायनवचनम्—औपासनं वा धारयमाणो भवतीति तद्दौर्ब्राह्मण्यनिवृत्तिपरं नत्वाश्विननिषेधपरं, न तस्य प्रवर्ग्यनियमः स्मार्तप्रायश्चित्तं च नेति द्रष्टव्यम् । वेदिशब्देन महावेदिः । तया सोमयागो लक्ष्यते । विच्छिद्येते इति द्विवचनं वेदवेद्यभिप्रायेण । विच्छिद्येतेति पाठ ऋजुरेव । वेदिशब्दो दीर्घेकारान्तः । यस्य वेदश्च वेदिश्चेति पाठः सरल एव । ऐन्द्राग्नः पशुः पुनरुत्सृष्ट ऐन्द्राग्नं पुनरुत्सृष्टमालभेतेति श्रुतेः । वाहोत्सृष्टः पुनर्वहन्पुनरुत्सृष्टः । लिङ्गं चात्र भवति पुनरुत्सृष्ट इव ह्येतस्य सोमपीथ इति । स च च्छागः । तथा च भारद्वाजः—छागः पुनरुत्सृष्ट इति । पुनरुत्सृष्टोऽनड्वानिति सूत्रान्तरे । गोपशुः पुनरुत्सृष्टोऽग्नीषोमीयो भवतीति शाखान्तरे । अस्यां श्रुतौ पुनरुत्सृष्टशब्दार्थस्य गोशब्दे विशेषणाद्गो व्यतिरिक्ते छागेऽपि पुनरुत्सृष्टभाक्त्वमस्तीति गम्यते । छागे वहनकर्तृत्वं हिमाचले प्रसिद्धम् । लौगाक्षिस्तु ऐन्द्राग्नमनुसृष्टमालभेतेत्याह । एतल्लक्षणमप्याह स एव यमयोर्यः परो जातः सोऽनुसृष्ट इति । अत्रापि च्छाग एव । कलौ गोयागस्य निषेधाच्छाग एव ग्राह्यः । तत्र सोमात्पूर्वभाविनोः पर्वणोरुपादानपृथक्त्वात्क्रमेणैतौ कर्तव्यौ । तत्र प्रथमपर्वण्यैन्द्राग्नः पशुः, तदनन्तरपर्वण्याश्विनः, असंभवे सोमात्पूर्वभाविन्येकस्मिन्नेव पर्वणि समानतन्त्रावेतौ कर्तव्यौ । अत्रापि पाठक्रमात्पूर्व ऐन्द्राग्नोऽनन्तर आश्विनः । पशुपशुप्रकृतित्वादैन्द्राग्नविकारौ । पक्षेऽग्नीषोमीयविकारत्वमपि । अत्र ज्ञापकमग्रे वक्ष्यते । समानतन्त्रत्वे द्विवचनान्त ऊहः । तन्त्रानन्तःपातित्वात्षड्ढोतृपशिष्टी विद्येते एव । एवं दक्षिणाऽपि । समानतन्त्रत्वेऽप्येक एव षड्ढोता, एकैव पशिष्टिर्दक्षिणा च । ऐन्द्राग्नेन पशुना यक्ष्ये विच्छिन्नसोमपीथसंधानार्थमिति संकल्पवाक्यं, नैमित्तिकत्वान्नास्ति कामना, पुनरुत्सृष्टस्य च्छागस्य वपायाः पुनरुत्सृष्टस्य च्छागस्य हविष इति प्रैषयोर्विकार इति केचित् । छागशब्देनैवाऽऽश्विन इत्यपि केचित् । वस्तुतश्छागशब्देनैवोभयत्रापि विशिष्टेन वा । विशिष्टोल्लेखपक्षे धूम्रललामस्य च्छागस्य हविष इति प्रैषावाश्विनेऽपि । आश्विनस्य भिन्नतन्त्रत्व आश्विनेन पशुना यक्ष्ये दौर्ब्राह्मण्यपरिहारार्थमिति संकल्पवाक्यम् । समानतन्त्रत्वे विच्छिन्नसोमपीथसंधानार्थेनैन्द्राग्नेन पशुना दौर्ब्राह्मण्यपरिहारार्थेनाऽऽश्विनेन पशुना च तन्त्रेण यक्ष्य इति संकल्पवाक्यम् । गणवद्ग्रहः । एक एव यूपः । स्वरुरशनाहृदयशूला भिन्नाः । अग्नीषोमीयेण सवनीयेन वा समानतन्त्रत्वेऽग्नीषोमीयसवनीयानूबन्ध्यानां स्वरुहृदयशूलौ समानावेव । ऐन्द्राग्नाश्विनयोस्तु स्वरुहृदयशूलौ भिन्नावेव । यूपः सर्वेषामपि समान एव । यत्रिषु यूपेष्वालभेत बहिर्धाऽस्मादिन्द्रियं वीर्यं दध्यात् । भ्रातृव्यमस्मै जनयेत्, इति श्रुत्या प्रतिपशु यूप इत्यमुं पक्षं निन्दित्वा, एकयूप आल-

मते, एकधैवास्मिन्निन्द्रियं वीर्यं दधाति नास्मै भ्रातृव्यं जनयतीति सौत्रामण्यामेकयूपस्यैव सिद्धान्तितत्वात्। पशुरशनाकुम्भीप्लक्षशाखावपाश्रपण्यो भिन्ना एव। मीमांसकमते सजातीयपशुबहुत्वेऽपि कुम्भ्यादि तदेवेति द्रष्टव्यम्।

## स प्रथमः सोमानाम्।

सोमानां मध्ये सोऽग्निष्टोमः सोमः प्रकृतित्वात्प्रथमो भवतीति शेषः। सर्वेभ्यः सोमेभ्यः पूर्वमग्निष्टोमाख्यः सोमः कर्तव्यो न त्रिवृदादयस्तद्गुणविकारा नचान्य उक्थ्यादय एकाहा द्विरात्रादयोऽहीनाश्चेत्यर्थः। तथाचाग्निष्टोमं प्रस्तुत्य ब्राह्मणम्—तस्मादाहुर्ज्येष्ठयज्ञ इति प्रजापतिर्वाव ज्येष्ठः स ह्येतेनाग्रेऽयजतेति। प्रजापतेर्ज्येष्ठत्वं प्रथमोत्पन्नत्वात्। तेनैव सर्वेभ्यः सोमेभ्यः पूर्वमग्निष्टोमस्यानुष्ठितत्वाज्ज्येष्ठत्वम्। प्रजापतिर्यथा सर्वोत्पादकत्वाज्ज्येष्ठस्तथाऽग्निष्टोमोऽपि सर्वेभ्यः सोमेभ्यो धर्माणां समर्पणाज्ज्येष्ठः। प्रजापतेः सर्वोत्पादकत्वं हिरण्यगर्भः समवर्तताग्र इत्यादिषु मन्त्रेषु प्रतिपादितम्। हिरण्यगर्भः प्रजापतिरेव। प्रजापतिर्वै हिरण्यगर्भ इति श्रुतेः। एवं चाग्निष्टोमे ज्येष्ठत्वं नाम प्रकृतित्वमेव। छन्दोगब्राह्मणमप्यग्निष्टोमस्य प्रथमत्वमाह एष वाव प्रथमो यज्ञो यज्ञानां य एतेनानिष्ट्वाऽन्येन यजते कर्त्रपत्यमेव जायते वा प्रमीयत इति। अस्ति चाग्निष्टोम एव सर्वधर्माम्नानम्। अतोऽग्निष्टोम एव प्रकृतिः। अत एव प्रथमो भवति। उक्थ्यः षोडश्यतिरात्रोऽप्तोर्यामश्चेत्यग्निष्टोमस्य गुणविकारा भवन्तीति वक्ष्यमाणसूत्रात्स्पष्टमग्निष्टोमस्य प्रकृतित्वं द्रष्टव्यम्। भरद्वाजोऽपि सुस्पष्टमाह नाग्निष्टोमेनानिष्ट्वेतरैः क्रतुभिरितीति। यजेतेति शेषः। नन्विदं सूत्रं व्यर्थं नाकृतायां प्रकृतौ विकृतिर्भवतीति शाखान्तरप्रसिद्धन्यायेनैव सिद्धेरिति चेन्न। स्वशाखा एतादृशन्यायसिद्ध्यर्थमेवैतत्सूत्रप्रणयनात्।

## अतिरात्रमेके प्रथमं यज्ञमधीयते।

अतिरात्रस्य प्रकृतित्वाभावेऽपि प्रकृतिभूताग्निष्टोमादपि पूर्वभावित्वमतिरात्रस्य वचनादेक आचार्या वदन्तीत्यर्थः। तच्च वचनं शाखान्तरादुन्नेयम्। अत्रातिरात्रो ज्योतिरतिरात्रो ग्राह्यः। तेन ज्योतिष ऋद्धिकाम इति वक्ष्यमाणे योनिभेदेन जैमिनिनोक्तोऽतिरात्रः प्रथमो न भवति। अत्रेदं सिद्धमतिरात्रस्य सोमात्पूर्वभावित्वमुत्तरभावित्वं वा। अतिरात्रव्यतिरिक्तानां क्रतूनां त्वर्थादग्निष्टोमोत्तरभावित्वमेवेति। सोमानामतिरात्रो वा प्रथमो यज्ञ इत्येतावतैव विकल्पे सिद्ध एके, एकेषामित्येवं क्वचित्क्वचिद्वचनं मङ्गलार्थं कृतं द्रष्टव्यम्। तच्च विशेषणैकशब्दस्मारितविशेष्यभूताचार्यस्मरणरूपं ग्रन्थस्य निर्विघ्नपरिसमाप्तये ग्रन्थमध्ये तस्य निबन्धनं तु शिष्यशिक्षार्थम्। प्रकृते फलं तु कर्मण्यपि मध्ये मध्ये मङ्गलकरणम्। आचरन्ति च शिष्टा ग्रन्थादौ

ग्रन्थमध्ये ग्रन्थान्ते च मङ्गलं विघ्नशङ्कया । ग्रन्थादौ मङ्गलं यज्ञं व्याख्यास्याम इति यज्ञशब्दोपादानेन कृतम् । यज्ञो हि विष्णुरेव भवति यज्ञो वै विष्णुरिति श्रुतेः । कर्मण्यपि मङ्गलकरणं बौधायनेनोक्तं यज्ञाधिदैवतं विष्णुं ध्यायतीत्यनेन । मङ्गलस्य समाप्तिसाधनत्वं तु मङ्गलं समाप्तिफलकं समाप्त्यन्याफलकत्वे सति सफलत्वादिति तार्किकोद्घोषितपरिशेषानुमानात् । तत्र विघ्नध्वंस एव मङ्गलस्य फलमिति नवीनास्तार्किकाः । विघ्नध्वंसपूर्वकसमाप्तिः फलमिति प्राचीनास्तार्किका इत्यास्तामप्रस्तुतम् । वाशब्दप्रदर्शितविकल्पस्थले तुल्यविकल्पमात्रप्रदर्शनमेव नतु मङ्गलार्थत्वमपीति द्रष्टव्यम् । नन्वेक इत्येकेषामिति वा यत्र पठ्यते तत्र तत्पक्षस्य हेयत्वप्रदर्शनार्थत्वमेवास्त्विति चेन्न । तत्पक्षानुक्त्यैव निर्वाहे तत्पक्षप्रदर्शनस्य निरर्थकत्वापत्तेः केषुचित्स्थलेषु मङ्गलार्थकत्वप्रदर्शनपूर्वकविकल्पदर्शनं केषुचित्केवलविकल्पप्रदर्शनमेवेत्यत्र नियामकं स्वतन्त्रेच्छस्य मुनेर्नियोगपर्यनुयोगानर्हत्वादिति न्याय एव नान्यदिति ज्ञेयम् ।

**अमावास्यायां यजनीयेऽहनि दीक्षते**
**पौर्णमास्यां यजनीयेऽहनि सुत्यमहः ।**

अमावास्यायां पौर्णमास्यामित्युभयत्रापि समीपसप्तमी । अमावास्यासमीपवर्ति यद्यजनीयमहस्तस्मिन्दीक्षते । पौर्णमासीसमीपवर्ति यद्यजनीयमहस्तस्मिन्नहनि सुत्यं सुत्यावदहः । भवतीति शेषः । अर्शआदित्वान्मत्वर्थीयाच्प्रत्ययः । सुत्यमित्यत्र सुत्याशब्देन सोमकण्डनवत्कर्मोच्यते तद्वदित्यर्थः । यद्यप्यमावास्याशब्दः सूर्याचन्द्रमसोः परमसंनिकर्षनिमित्तः पौर्णमासीशब्दश्च परमविप्रकर्षनिमित्तोऽतः संनिकर्षो विप्रकर्षश्च संधिमध्यमक्षणमात्रं तच्च पञ्चदशीप्रतिपदोः समानमेवेति तयोर्द्वयोरप्यमावास्यापौर्णमासीशब्दाभ्यां ग्रहणं सिद्धं तथाऽप्यत्रामावास्यासमीपवर्तियजनीयेऽहनि दीक्षायां पौर्णमासीसमीपवर्तियजनीयेऽहन्येव सुत्या न तु पर्वण्यपीतिप्रदर्शनार्थम् । यजनीयदीक्षासुत्याविषय एव पौर्णमासीसमीपवर्तियजनीयेऽहनि दीक्षा, अमावास्यासमीपवर्तियजनीयेऽहनि सुत्येत्येतादृशवैपरीत्यव्यावृत्त्यर्थं च । ननु संनिकर्षनिमित्तप्रयुक्तं पौर्णमासीत्वं विप्रकर्षनिमित्तप्रयुक्तममावास्यात्वं पञ्चदशीवत्प्रतिपद्यपि समानमेवेति प्रतिपदोऽपि पौर्णमास्यमावास्याशब्दाभ्यां यथायथं ग्रहणमिति उक्तं तत्कथमिति चेत् । उच्यते—पौर्णमास्यां पौर्णमास्या यजतेऽमावास्यायाममावास्ययेति वाक्याभ्यां विहितो यागः संधौ यजेतेतिश्रुत्या पर्वप्रतिपत्संधौ प्राप्तः । तत्र च यागाधिकरणीभूतपर्वप्रतिपत्संधिरूपस्य कालस्य दुर्लक्ष्यत्वेन तस्यायोग्यत्वेन संधिममितो यजेतेति श्रुतिः संधिपार्श्वद्वयगतं कंचित्स्थूलं कालं लक्षयति । तस्याप्ययोग्यत्वात्पक्षान्ता उपवस्तव्याः पक्षादयोऽभियष्टव्या इति गोभिलेन पञ्चदशीवत्प्रतिपदोऽपि यागाधिकरणत्वेन स्वीकारात्तत्रापि पर्वत्वमवश्यं स्वीकार्यम् । अन्यथा पौर्णमास्यां पौर्णमास्या यजतेऽमावास्यायाममावास्ययेति वाक्याभ्यां पौर्णमास्यमावास्ययोर्याग उक्तः स प्रतिपदि विरुध्येत । अतोऽनु-

पयस्या चन्द्रपूरणनिमित्तोपलक्षितत्वेन चन्द्रक्षयनिमित्तोपलक्षितत्वेन च तत्तत्प्रतिपद्यपि पौर्णमासीत्वममावास्यात्वमवश्यमङ्गीकार्यमेव । तथा चन्द्रपूरणनिमित्तोपलक्षिता तत्प्रतिपदपि पौर्णमासी चन्द्रक्षयनिमित्तोपलक्षिता तत्प्रतिपदपि अमावास्येति तत्र यष्टव्यमित्यर्थादुक्तं भवति । यः परमो विप्रकर्षः सूर्याचन्द्रमसोः सा पौर्णमासी यः परमः संनिकर्षः साऽमावास्येति गोभिलवाक्ये क्षणमात्रमेव परमविप्रकर्षसंनिकर्षशब्दवाच्यम् । उभयत्रापि पर्वप्रतिपदोः स स एव संधानं तदुभयोरपि तिथ्योः सममेवेति तिथिद्वयात्मकः कालः स एव क्षणः । चन्द्रस्य पूरणनिमित्तत्वेन क्षयनिमित्तत्वेन चोपलक्षितस्तत्तदुत्तरक्षणश्च तावान्कालः संधिशब्दवाच्यः । स च तिथिद्वयसंबद्ध इति पञ्चदशीप्रतिपदोरुभयोरप्यमावास्यापौर्णमासीशब्दाभ्यां ग्रहणं युक्तमेवेति सुस्थम् ।

अमावास्यायां पौर्णमास्यां वा ।

मण्डूकप्लुत्या दीक्षत इत्येवानुवर्तनीयम् । तेनामावास्यायां दीक्षते पौर्णमास्यां वा दीक्षत इत्यर्थो भवति । सुत्या तु सोमेनेष्ट्या पशुबन्धेन वाऽमावास्यायां पौर्णमास्यां वा यजेतेति सामान्यसूत्रादमावास्यायां पौर्णमास्यां वा भवति । अस्मिन्सूत्रे मुख्यत्वेन सुत्याया एव यागशब्देन ग्रहणम् । एवं चात्रापि षोडशापवर्गताऽपरपक्षे यागश्च सिध्यति । ननु यं कामयेत वसीयान्स्यादिति तं पूर्वपक्षे याजयेत्, वसीयानेव भवतीति पूर्वपक्षयागस्य प्रस्तुतत्वात्, यं कामयेत पापीयान्स्यादिति तमपरपक्षे याजयेत्पापीयानेव भवतीत्यपरपक्षयागस्य निन्दितत्वात्कथमेतदिति चेन्न । आमावास्येन वा पौर्णमासेन वा हविषेष्ट्वा दीक्षेतेति प्रत्यक्षश्रुत्या सोमे पूर्वपक्षयागनियमश्रुतेर्बाधितत्वात्। अस्यां श्रुतौ क्त्वाप्रत्ययश्रवणात्प्रकृतियागसमाप्तिसोमारम्भाव्यवधानमपि लभ्यते । वाशब्दद्वयश्रवणं द्वयोस्तुल्यबलत्वख्यापनार्थम् । न चोदगयन आपूर्यमाणपक्षे पुण्याहे यज्ञकालोऽनादेश इति च्छन्दोगसूत्रविरोधः । अस्मिन्नेव सूत्रेऽनादेश इति श्रवणादादेशव्यतिरिक्तस्थल एवैतस्य कालस्य प्रवृत्तेः । प्रकृत आदेशस्यैव सत्त्वेन सूत्रविरोधाभावात्पुण्याहपदसाहचर्यात्पाकयज्ञपरताऽपि च्छन्दोगसूत्रस्य गम्यते । यं कामयेत वसीयान्स्यादिति पूर्वपक्षयागप्रस्ताविका श्रुतिरप्यनादेश एव सावकाशा । वक्ष्यति च गृह्ये पाकयज्ञेष्वापूर्यमाणपक्ष इति पर्वणोः खण्डत्वे संधिमदहोरात्रयोर्दीक्षासुत्ये भवतः । एतदनुरोधेन दीक्षावृद्धिह्रासौ ।

कर्मण आरम्भापवर्गप्रधानत्वादेकादिदीक्षापक्षे मुख्यकाल उभयोरसंभवेनान्यतरचोदितकाले कर्तव्यमित्यभिप्रायेणाऽऽह—

यदि त्वेका दीक्षा द्वे तिस्रश्चतस्रोऽपरिमिता वा तत्रापर्वणि सुत्यमहर्दीक्षा वा ।

दीक्षाशब्दस्य वचनविपरिणामेन द्वे तिस्र इत्यादिष्वन्वयः । अपरिमितशब्द उक्तप्रमाणाधिकप्रमाणवाची । अपरिमितं प्रमाणाद्भूय इति कात्यायनोक्तेः । तत्रापरि-

मितत्वावधिर्मासः संवत्सरो वा सामर्थ्यानुसारेण । अथवा यावत्पर्यन्तं कृशता तावत् । तथा चाऽऽपस्तम्बः—द्वादशाध्यर्धमवरं दीक्षितो भवति मास४ संवत्सरं यदा वै कृशः स्यादि- त्यपरमिति । अत्राऽऽश्वलायनो व्यवस्थामाह—दीक्षणादिरात्रिसंख्यानेन दीक्षा अप- रिमिता एकाहप्रभृत्या संवत्सरात्संवत्सरं त्वेव सत्रे द्वादशाहतापश्चितेषु यथा सुत्यो- पसदः कर्माचारस्त्वेकाहानामेका तिस्रो वा दीक्षास्तिस्र उपसदः सुत्यमहरुत्तमं दीक्षान्ते राजक्रयस्तदहः प्रायणीयेष्टिरिति । द्वादशाहस्तु लिङ्गात्स्यादिति सूत्राभ्यां द्वादशाहतापश्चितेषु सत्रेषु यथा सुत्योपसदस्तथा दीक्षा अपि उपसत्संख्याया अप्यन्यत्राविहितत्वादत्रैव विधिः कल्प्यते यत्संख्याः सुत्या उपसदश्च तत्संख्या एवेति । एतदुक्तं भवति—द्वादशाहतापश्चितेषु यत्संख्याः सुत्यास्तत्संख्या एवोपसदश्च दीक्षाश्च भवन्तीति । आचर्यतेऽस्मिन्नित्याचारः कालः कर्मण आचारः कर्माचार एकाहानां प्रयोगकालो वक्ष्यत इत्यर्थः । एकाहशब्देन विकृत्येकाहा उच्यन्ते बहुवचनसंबन्धात् । प्रकृतौ दीक्षाणां विहितत्वाच्चतुःशब्दो विशेषविध्यर्थोऽन्यत्स्पष्टम् । एते कल्पाः प्रकृ- तावेव विकल्पन्ते सर्वेषां प्रकरणाम्नानाविशेषात् । यथोक्तं षष्ठाध्याये पञ्चमे पादे जैमिनिना दीक्षापरिमाणे याथाकाम्यमविशेषात् । सर्वेषां पक्षाणामविशेषात्, विशेषा- भावात् । द्वादशाहस्तु लिङ्गात्स्यादिति सूत्राभ्याम् । द्वादशाहं दीक्षितो भूतिं वन्वी- तेति लिङ्गाद्द्वादशदीक्षापक्षोऽपीति द्वितीयसूत्रार्थः । भूतिवननं तु द्वादशपक्षे भविष्यति । यद्वा दीक्षितो भूतिं वन्वीतेत्येतावद्विधीयते । द्वादशग्रहणं तु प्रदर्शनार्थमिति वार्तिक- काररीतिमनुसृत्येदं व्याख्यानम् । यदि त्वेकाद्यन्यतमदीक्षापक्षस्तदा गौणमुख्यन्याये- नापर्वणि सुत्यमहर्दीक्षा वा भवतीत्यर्थः । तत्र पर्वणि सुत्येत्ययमेव पक्षः प्रबलः । सोमेनेष्ट्येतिपरिभाषासूत्रात्[1] । कथमेकावरेषु दीक्षाकल्पेषु तत्रापर्वणि दीक्षा सुत्या वा स्यादपर्वणि वा दीक्षां पर्वण्येव सुत्यां संपादयेदिति भारद्वाजसूत्रात् । अङ्गगुणविरोधे च तादर्थ्यादिति द्वादशाध्याये द्वितीयपादे जैमिन्युक्तेश्च । अङ्गानि दीक्षणीयादीनि तेषां गुणः प्रथमदिनादिकर्तव्यतारूपः । तत्र संकल्पादियूपच्छेदनान्तं प्रथमदिने कर्तव्यम् । प्रवर्ग्यसत्त्वे प्रवर्ग्यसंभरणमपि । प्रायणीया सोमक्रय आतिथ्या प्रवर्ग्य उपस- त्प्रवर्ग्य उपसच्चेत्येतानि द्वितीयदिने कर्तव्यानि । प्रवर्ग्य उपसत्, वेदिकरणं प्रवर्ग्य उपसच्चेत्येतानि तृतीयदिने कर्तव्यानि । प्रवर्ग्य उपसत्प्रवर्ग्य उपसत्प्रवर्ग्योद्वासनमग्नि- प्रणयनं शाखाहरणं काष्ठवेदिबर्हिःप्रोक्षणं वेदिस्तरणं हविर्धानप्रणयनमुपरवकरणमाग्नी- ध्रीयमानमौदुम्बर्युच्छ्रयणं सदःकरणं धिष्णियनिवपनमन्वाधानादिकं साग्नीषोमप्रणयन- वसतीवर्याहरणं पशुतन्त्रं वसतीवरीपरिहरणादिकं चेत्येतानि चतुर्थदिने कर्तव्यानि । प्रधानो जघन्यः सोमयागः ससवनीयादिः पञ्चमदिने कर्तव्यस्तत्र य इष्ट्येति वाक्येन विहितपर्वकालविरोधे प्रधानस्यैव धर्मानुग्रहः । अङ्गानां प्रधानसाद्गुण्यार्थत्वेन तद्विरो-

१ क. °नेष्ट्वेति ।

धेऽङ्गस्याङ्गुण्यस्याकिंचित्करत्वात् । लोके प्रथमं बहुभिरवरुद्धे स्थले पश्चादागतस्यैक-स्यापि राज्ञस्तद्ग्रहणदर्शनाच्च । अतस्तत्र सोमयागस्यैव पाठतोऽनुष्ठानतश्च जघन्य-स्यापि प्रधानतया पर्वकालकत्वम् । दीक्षणीयादेस्तु पाठतोऽनुष्ठानतश्च प्रथमोपस्थित-त्वेऽपि एकादिदीक्षापक्षे न पर्वानुग्रहः । द्वादशदीक्षापक्षे त्वविरोधाद्दीक्षणीयायामपि सः । अङ्गगुणेन सह विरोधोऽङ्गगुणविरोधः । तस्मिन्नङ्गगुणविरोधे । अङ्गगुणविरोध इत्यत्र प्रधानगुणस्येति शेषः । तथा च गुणेन सह प्रधानगुणस्य विरोधे सतीत्यर्थो भवति । तच्छब्दस्य सर्वनामत्वेन प्रधानपरामर्शित्वम् । तथाच तादर्थ्यात्प्रधानार्थत्वा-दित्यर्थो भवति । अङ्गानामिति शेषः । अङ्गानां प्रधानार्थत्वात्प्रधानानुग्रह एव न्याय्य इति सूत्रार्थः । दीक्षाया एकत्वादिकं शतपथ आम्नातम्—एकरात्रं दीक्षितो राजानं क्रीणाति त्र्यहे द्व्यहे चतुरहेऽपरिमिते वेति । इदं च याजमानसू-त्रेऽप्यनूदितमाचार्येण । अमावास्यायां यजनीये वा दीक्षायां चतुर्थ्यादिषु पञ्च-म्यादिषु वा यथोपनतं सुत्या । पौर्णमास्यां यजनीये वा सुत्यायां तदनुरोधे-नैकादिदीक्षाकल्पनम् । असंभवे शुक्लपक्षान्तर्गते देवनक्षत्र एव वा । यान्येव देवनक्षत्राणि । तेषु कुर्वीत यत्कारी स्यात् । पुण्याह एव कुरुत इति श्रुतेः । आमावास्येन वा हविषेष्ट्वा नक्षत्रे वेति सोमे बौधायनवचनाच्च । यत्कर्म कर्तुं शीलं यस्य स यत्कारी । देवनक्षत्राणि श्रुतौ प्रदर्शितानि—कृत्तिकाः प्रथमं विशाखे उत्तमं तानि देवनक्षत्राणीति । ज्योतिःशास्त्रे सोमदेवते नक्षत्र आरम्भोऽतिप्रशस्त इत्युक्तम् । सोमारम्भो वसन्तेऽतिप्रशस्तः । सोमदेवत इति सोमदेवतं मृगशिरः केवलं शुक्लपक्ष एव वा । उक्तं च कौषीतकिभिः—अमावास्यायां पौर्णमास्यां वा सुत्यमहर्दीक्षा वा शुक्लपक्ष एव वेति । केवले शुक्लपक्ष एव वोभयमित्यर्थः । शाङ्खायनः-शुक्लपक्षे दीक्षा पुण्ये नक्षत्रे समापनं चेति । सूत्रकृताऽपि सोमेनेष्ट्वा पशुबन्धेन वाऽमावास्यायां पौर्णमास्यां वा यजेतेति विपरीताभिधानेन ज्ञापितमस्ति अमावास्यापौर्णमासीमध्यगत-कालस्य केवलस्यापि कृत्स्नयागाङ्गत्वमस्तीति । एतेनापरपक्षस्य नास्तीत्यर्थात्सिध्यति । पौर्णमास्यां दीक्षायां चतुर्थ्यादिषु सुत्या तद्यजनीयायां दीक्षायां पञ्चम्यादिषु सुत्येत्यपि द्रष्टव्यम् । श्रूयते हैरण्यकेशीयानामस्मिन्नर्थे श्रुतिः—आमावास्येन वा हविषेष्ट्वा पौर्णमासेन वा तस्मिन्नेव हविषि तस्मिन्बर्हिषि दीक्षेतैषो एका दीक्षेति । अमावास्या-काले कर्तव्यं हविरामावास्यं पौर्णमास्यां कर्तव्य हविः पौर्णमासं, हविःशब्दोऽत्र यज्ञमुपलक्षयति । वाशब्दौ समुच्चयार्थौ । अमावास्यासंबन्धिना पूर्णमासीसंबन्धिना वा यज्ञेनेष्ट्वा दीक्षेत तस्मिन्हविष्येवेत्येवमन्वयः । तस्मिन्बर्हिषीत्यत्राप्येवेत्यस्यान्वयः । अत्रापि हविःशब्दो यज्ञोपलक्षकः । एवं बर्हिःशब्दोऽपि । तस्मिन्नामावास्याख्ये हविषि यज्ञे तस्मिन्पौर्णमासाख्ये बर्हिषि यज्ञेऽनुष्ठिते सति पश्चादेव दीक्षेतेत्यर्थः । तस्मिन्नेव हविषि तस्मिन्बर्हिषि दीक्षेतेत्यमुक्तस्यैव प्रपञ्चः । एषा उ इति पदच्छेदः ।

उकारोऽपिशब्दार्थकः । एषाऽप्येका दीक्षा । एवमुक्ते सत्यप्यन्याऽपि काचिद्दीक्षाऽस्तीति सूचितं भवति । अत एव सूत्रकार इष्टिपूर्वत्वं सोमपूर्वत्वं चेत्युभौ पक्षावुदाजहार । लाट्यायनद्राह्यायणावाहतुः—प्रथमायां पूर्वपक्षस्य दीक्षेतैषो एका दीक्षा दृष्ट्वा वा नक्षत्रयोगमिति । नक्षत्रयोगमित्यस्यायमर्थः—चैत्र्यादिपौर्णमासीषु चित्रादिनक्षत्रयोगं दृष्ट्वा दीक्षेतेति । अमावास्यायां सुत्यायां तु शाखान्तराद्द्वादशैव दीक्षा नियताः । पूर्वपक्षयागविधायिका श्रुतिस्तु आदेशव्यतिरिक्तस्थल एवेति दर्शितमेव प्राक् । अमावास्यायां दीक्षा पौर्णमास्यां सुत्येत्यस्मिन्कल्पे दर्शपूर्णमासेष्टी अतिपन्ने तदर्थं क्रतुसमाप्त्यनन्तरं पथिकृद्वैश्वानर्यौ कार्यौ । यदि द्वितीयादिप्रयोगोऽनयोः । एकस्या अतिपातने पाथिकृती वैश्वानरी वा । पौर्णमास्यां दीक्षाऽमावास्यायामावर्तनप्राक्कालिकसंधिमत्यां सुत्या यदा तदा पौर्णमासदर्शातिपातने दोषो नेति केचित् । यदाऽऽवर्तनोत्तरकालिकसंधिमत्याममावास्यायां दीक्षाऽऽवर्तनप्राक्कालिकसंधिमत्यां पौर्णमास्यां सुत्या तदा तु पूर्णमासस्य चैकापूर्वजनकत्वनिर्वाहान्यथानुपपत्त्या लोपप्रायश्चित्तं कर्तव्यमेवेत्यवश्यमङ्गीकर्तव्यमेव । यदा तु प्रथमः पूर्णमासस्य लोपोऽनन्तरं दर्शस्य तत्र प्रायश्चित्तं नैवेति द्रष्टव्यं सुधीभिः । जुहोतेर्ग्रहणं यजतेरुपलक्षणम् । आधानानन्तरं प्रथमसंवत्सरे वसन्ते सोमारम्भः कर्तव्य इति याज्ञिकप्रसिद्धम् । तत्र वसन्तश्चान्द्रसौरभेदेन द्विविधः । चैत्रवैशाखात्मकमासद्वयात्मा चान्द्रः । मध्ये मलमासेऽपि

षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः ।

इति स्मृतेर्मासद्वयात्मक एको मासस्तेन मासद्वयात्मकत्वं न विरुध्यते । मासद्वयात्मकत्वं वसन्तर्तोर्मधुश्च माधवश्च वासन्तिकावृतू इत्यनया श्रुत्या । सौरो वसन्तस्तु मीनमेषात्मको मेषवृषात्मको वा । मीनमेषयोर्मेषवृषयोर्वा वसन्त इतिबौधायनोक्तेः । अनयोर्विनियोगः स्मृतौ—

श्रौतस्मार्तक्रियाः सर्वाः कुर्याच्चान्द्रमसर्तुषु ।
तदभावे तु सौरर्तुष्विति ज्योतिर्विदां मतम् ॥ इति ।

एतादृशद्विविधवसन्तान्तर्गतपर्वसु मध्ये यत्पर्व मलमासास्तादिदूषितं न भवति तत्रैव सोमस्य कर्तव्यत्वात्तदर्थं निर्णयः क्रियते ।

तत्र कालादर्शे स्मृतिः—

अनित्यमनिमित्तं च दानं च महदादिकम् ।
अग्न्याधानाध्वरापूर्वतीर्थयात्रामरेक्षणम् ॥
देवारामतडागादिप्रतिष्ठा मौञ्जिबन्धनम् ।
आश्रमस्वीकृतिः काम्यवृषोत्सर्गश्च निष्क्रमः ॥

राज्याभिषेकः प्रथमश्चूडाकर्म व्रतानि च ।
अन्नप्राशनमारम्भो गृहाणां च प्रवेशनम् ॥
स्नानं विवाहो नामातिपन्नं देवमहोत्सवः ।
व्रतारम्भं समाप्तिं च काम्यस्यैव च पाप्मनः ॥
प्रायश्चित्तं तु सर्वस्य मलमासे विवर्जयेत् ॥ इति ।

अध्वरो यज्ञः । काठकगृह्ये—

रविसंक्रमहीने यो वर्ज्यावर्ज्यविधिः स्मृतः ।
स एव तु द्विसंक्रान्ते मलमासेऽप्युदीरितः ॥ इति ।
बृहस्पतिः—बाले वा यदि वा वृद्धे शुक्रे चास्तं गते रवौ ।
मलमास इवैतानि वर्जयेद्देवदर्शनम् ॥ इति ।
लल्लः—नीचस्थे वक्रसंस्थेऽप्यतिचरणगते बालवृद्धास्तगे वा
संन्यासो देवयात्रा व्रतनियमविधिः कर्णवेधस्तु दीक्षा ।
मौञ्जीबन्धोऽङ्गनानां परिणयनविधिर्वास्तुदेवप्रतिष्ठा
वर्ज्याः सद्भिः प्रयत्नात्त्रिदशपतिगुरौ सिंहराशिस्थिते च ॥ इति ।

दीक्षा यागदीक्षा मन्त्रदीक्षा च । क्षयमासादिनिषेधास्तत्प्रतिप्रसवाश्च मत्कृतस्मार्तसंस्काररत्नमालातोऽवगन्तव्याः । यद्यपि काम्यारम्भं समाप्तिं च मलमासे च वर्जयेदिति काम्यारम्भसमाप्तिनिषेधेन नित्यनैमित्तिकारम्भसमाप्त्योरनिषेधस्तथाऽपि मलेऽनन्यगतिं कुर्यान्नित्यां नैमित्तिकीं क्रियामिति वचनात्संभवे निषेधोऽनयोरप्यस्त्येव । प्रथमे प्रयोगे गत्यन्तराभाव आरम्भः कर्तव्य एव । यद्यनतिक्रान्तः कालो भवति ।

यानि तु—उपरागोऽधिमासश्च यदि प्रथमपर्वणि ।

तथा मलिम्लुचे पौषे नान्वारम्भणमिष्यते ॥
गुरुभार्गवयोर्मौढ्ये चन्द्रसूर्यग्रहे तथा ।

इत्यादीनि वचनानि तान्यालस्यादिनाऽतिक्रान्तशुद्धकालप्रारम्भविषयाणि ।

नामकर्म च दर्शेष्टिं यथाकालं समाचरेत् ।
अतिपाते सति तयोः प्रशस्ते मासि पुण्यभे ॥

इत्यपरार्के गर्गोक्तिरिति धर्मशास्त्रनिबन्धकाराः । कालप्राप्तस्य न दोष इति भावः । एवं चाष्टदोषग्रस्तो विकल्पः परिहृतो भवति सति संभवे । दर्शेष्टिग्रहणं नित्यनैमित्तिकश्रौतकर्मोपलक्षणम् । आरम्भणीयाग्रहणं कर्मारम्भोपलक्षणम् । पूर्वत्र दीक्षानिषेधः काम्यदीक्षापरः कालान्तरसंभवे दीक्षानिषेधपरो वा । इदानीमाचारस्तु शिष्टानामननु-

१ क. ख. °नां प्रतिगमन° ।

छागमेव । यदि तु वसन्तेऽग्निममेव पर्वविशिष्टं तच्च व्यतीपातादिदोषग्रस्तं तत्र श्रौतस्य प्राबल्यात्कर्मारम्भः कर्तव्य एवेति यद्यपि प्राप्तं तथाऽपि ज्योतिःशास्त्रस्य निरवकाशत्वाद्वेदाङ्गत्वेन समबलत्वाच्च तदुक्ता दोषा अप्यङ्गीकार्या एवेत्यस्त्व- प्रस्तुतविचारः । यदि त्वेकादिदीक्षास्तत्रापर्वणि मुख्यमहर्दीक्षा वेत्येतावत्येव वक्तव्ये चतुर्णां पृथगुपादानमारम्भे यः पक्षः कर्तव्यो भवति तस्य संकल्पेऽवधारणं कर्तव्यं पञ्च- षट्सप्ताष्टनवदशैकादशान्यतमसंख्यात्मकापरिमितदीक्षापक्षे पञ्चषट्सप्ताष्टनवदशैकाद- शान्यतमाविभक्तिकसंख्याशब्दमुच्चार्यापरिमितदीक्षापक्षमाश्रित्येत्येवमुच्चार्यमित्येवंरूपेण संकल्पेऽवधारणम् , एकद्वित्रिचतुरन्यतमसंख्यात्मकदीक्षापक्ष एकद्वित्रिचतुरन्यतमम- विभक्तिकं संख्याशब्दमुच्चार्य दीक्षापक्षमाश्रित्येत्येवमुच्चार्यमित्येवंरूपेणैव संकल्पेऽव- धारणमित्येतादृशप्रयोजनभेदं प्रदर्शयितुम् । युगपत्कामयेताऽऽहारपृथक्त्वे वेति प्रथ- मसूत्रप्रयुक्तो विचार इत्यनन्तरं निरूपणम् । कालस्य सर्वापेक्षया मुख्याङ्गत्वात्तदनन्तरं विधिः । प्रसङ्गसंगत्या तदनन्तरं प्रकृतिविकृतिपौर्वापर्यनियामको दर्शपूर्णमासारम्भा- त्प्राक्कर्तव्यतानिषेधः । तदनन्तरं प्रसङ्गसंगत्याऽग्निष्टोमस्य सर्वसोमप्रकृतित्वप्रदर्शनम् । प्रसङ्गसंगत्याऽतिरात्रस्याग्निष्टोमपूर्वभावित्वप्रदर्शनम् । आकाङ्क्षितत्वात्तदनन्तरं दीक्षाणां यागार्थानां संख्यादिप्रदर्शनं चात्रैव कृतमिति द्रष्टव्यम् । अमावास्यायां यजनीयेऽ- हनीत्यादिदीक्षा वेत्यन्तं सर्वक्रतुसाधारणम् । विशेषतस्तु तत्र तत्र सूत्रकार एव वक्ष्यति । यत्र कर्तृनिर्देशो नास्ति तत्र यजुर्वेदेनाध्वर्युरिति परिभाषयाऽध्वर्युरेव कर्तेति सार्वत्रिकम् ।

महन्मेऽवोचो यशो मेऽवोचो भर्गो मेऽवोचो भुक्तिं
मेऽवोचः स्तोमं मेऽवोचः सर्वं मेऽवोचस्तन्माऽवतु
तन्मा विशतु तेन भुक्षिषीयेति वृतो वृतो जपति ।

यज्ञोपवीतं कृत्वाऽप आचम्य प्राङुदङ्वा तिष्ठञ्जपत्यासीनो वेति भरद्वाजः । यजमानेन वृतो वृत ऋत्विगिमं मन्त्रं जपतीत्यर्थः । वृतो वृत इति वीप्सा यजुर्वेदेनाध्वर्युरिति परिभाषयाऽध्वर्योरेव स्यात्तन्मा भूत् । किं तु सर्वेषामपि यथा स्यादित्येतदर्थम् । वृतो यजमानेन प्रार्थनया स्वकर्तव्याग्निष्टोम आर्त्विज्य- प्रवृत्तिमान्कृत इत्यर्थः । तथा चाऽऽर्त्विज्यप्रवृत्तावेवायं मन्त्रजप इति लभ्यते । अमुमर्थमाहतुर्लाट्यायनद्राह्यायणौ—सोमप्रवाकमकरिष्यन्नमः सोमाय राज्ञ इत्युक्त्वा प्रत्याचक्षीत महन्मेऽवोच इति करिष्यन्प्रतिमन्त्रयेतेति । एतेनायाजयिष्यतोऽपि जपो भूर्भुवः सुवरायुर्मे प्रावोचो वर्चो मे प्रावोचो यशो मे प्रावोचः श्रियं मे प्रावोच आयु- ष्मानहं वर्चस्वी यशस्वी श्रीमानपचितिमान्भूयासं भूर्भुवः सुवः सर्वं भूयासमित्युक्त्वा प्रति वाऽऽचष्टे प्रति वा जानीत इति भारद्वाजोक्तो निवार्यते । प्रत्याख्यानं निराकर-

णम् । प्रतिज्ञानमार्त्विज्यं करिष्यामीति निश्चयः । सत्रे वरणाभावाज्जपस्याप्यभाव इत्यप्येतेन सिद्धं भवति । जप उच्चारणमात्रम् । व्याकरणरीत्या स्वराणां विज्ञातत्वे जपत्वाच्चातुःस्वर्यम् । अविज्ञातत्व ऐकश्रुत्यम् । एवं सर्वत्र सौत्रमन्त्रजपे द्रष्टव्यम् । जपव्यतिरिक्तकर्मसु सौत्रेषु वैदिकेषु च मन्त्रेषु तु यज्ञकर्मण्यजपन्यूङ्खसामस्विति पाणिनिस्मरणादैकश्रुत्यमेव । तानो वा प्रावचनो वेति कात्यायनप्रातिशाख्यसूत्रात्पक्षे चातुःस्वर्यमपि । तान ऐकश्रुत्यम् । तत्स्वरूपमाहाऽऽश्वलायनः—उदात्तानुदात्तस्वरितानां परः संनिकर्ष ऐकश्रुत्यमिति । प्रवचनो वेदपाठस्तत आगतः प्रावचनः । यथा वेदे पठितः स्वरस्तथेत्यर्थः । आचार्यस्य तूभयमपि अभिमतमिति विशेषानुक्त्या ज्ञायते । वैदिकमन्त्राणां जपे तु चातुःस्वर्यमेव । अभिमन्त्रणानुमन्त्रणाभिमर्शनोपस्थानानामपि नागृहीतविशेषणा बुद्धिरिति न्यायेन जपपरत्वाज्जपवत्तेषामपि स्वरः । उपांशुत्वं याजुर्वैदिकत्वाद्यजुर्वेदेनोपांश्विति परिभाषासिद्धम् । सर्वैर्हवाश्शृ ज्योतिष्टोमे प्रागग्नीषोमीयादिति सूत्रादित आरभ्याग्नीषोमीयस्य पशोस्तन्त्रं प्रक्रमयतीत्येतस्मात्प्राग्य ऋग्वेदसामवेदमन्त्रास्तेऽपि उपांश्वेव प्रयोक्तव्याः । तत ऊर्ध्वं यथोक्तस्वर एवेति द्रष्टव्यम् । श्रौते सौत्रमन्त्रवैदिकमन्त्राणामृष्यादिस्मरणे विकल्पः । तत्रर्षयः काण्डानुक्रमणिकातो द्रष्टव्याः । छन्दः पिङ्गलादिशास्त्रात्पादबद्धर्ङ्मन्त्राणाम् । देवतास्तु मन्त्रलिङ्गात् । इदानीं शिष्टैरस्वीकारादृष्यादिकं नात्र प्रदर्श्यते । प्रयोगकाले मन्त्राणां पाठः सर्वत्र मध्यमया वृत्त्यैव नतु द्रुतया विलम्बितया च वृत्त्या । तथा च स्मृत्यन्तरम्—

अभ्यासार्थे द्रुतां वृत्तिं प्रयोगार्थे तु मध्यमाम् ।
शिष्याणामुपदेशार्थे कुर्याद्वृत्तिं विलम्बिताम् ॥ इति ।

**देवो देवमेतु सोमः सोममेत्वृतस्य**
**पथा विहाय दौष्कृत्यमित्यभिप्रव्रजति ।**

दीक्षणीयार्थविहारं गन्तुं गृहाद्बहिर्निर्गच्छति देवो देव इ(मि)तिमन्त्रेण ।

**पद्वा नामासि स्रुतिः सोमसरणी**
**सोमं गमेयमिति पन्थानमातिष्ठते ।**

दीक्षणीयार्थविहारगामिनं(णं) पन्थानं प्रपद्यते पद्वेति मन्त्रेण ।

**पितरो भूरिति त्रिः पितॄनभिमन्त्रयते ।**

स्वान्पितॄनभिमन्त्रयते । दिव्यान्वा । मन्त्रप्रतिपाद्यं पदार्थं ध्यायंस्तत्पदार्थाभिमुखस्तमीक्षंस्तं* संस्तुवन्मन्त्रं पठेदित्येतदभिमन्त्रणम् । अत्र मन्त्रप्रतिपाद्याः पितरस्तेषाम-

* ईक्षन्निति प्रामादिकम् ।

१ क. 'दम' ।



प्रत्यक्षत्वादभिशब्दार्थ आभिमुख्यं न भवति किंत्वभिध्यानमेव। तथाचाभिशब्दोऽनिर्त्युपसर्गस्यार्थे। तथाचाभिमन्त्रयत इत्यस्यानुमन्त्रणमेवार्थ इति। अथवा–एषा वै पितृणां दिगिति श्रुत्या दक्षिणदिशः पितृसंबन्धित्वदर्शनात्पितृणामप्रत्यक्षत्वेऽपि तत्संबन्धिदिशः प्रत्यक्षत्वात्तदाभिमुख्येन पित्राभिमुख्यमेव। दिक्शब्देन देश एवात्र ग्राह्यः। अन्यथा तद्दोषतादवस्थ्यापत्तेः। एतेन दूरत्वसमीपत्वकृतपरत्वापरत्वलिङ्गकानुमानगम्याया दिशः कथं प्रत्यक्षत्वमिति शङ्का परास्ता। अत्र दक्षिणाभिमुखता, एषा वै पितृणां दिगिति दर्शनात्। आपस्तम्बेनापि दक्षिणावृतः पितृनुपतिष्ठत इति दक्षिणावृत्तशब्देनोक्ता। भरद्वाजस्तु पितृन्दक्षिणामुख उपतिष्ठत इति स्पष्टमेव दक्षिणामुखतामाह। अत्र प्राचीनावीते विकल्पः। अनियमोऽन्यत्रेति परिभाषासूत्रात्। यत्र यत्र प्राचीनावीतित्वविधानं तत्रैव तन्नान्यत्रेत्यवश्यं वक्तव्यम्। अन्यथा तस्य वैयर्थ्यापत्तेः। तथा च प्रकृते विधानाभावादर्थादनियमोऽन्यत्रेति परिभाषाया एव प्रवृत्तिः। यत्रैकस्मिन्द्रव्ये चेष्टापृथक्त्वेनार्थो निष्पद्यते सकृदेव तत्र मन्त्रं ब्रूयादिति परिभाषया सकृन्मन्त्रेण द्विस्तूष्णीमिति न भवति किं तु मन्त्रावृत्तिरेवात्र। अभिमन्त्रणस्योच्चारणप्रधानत्वात्। स्वपितृपक्षे जीवत्पितृकस्याभिमन्त्रणे विकल्पः। तथा च लाट्यायनद्राह्यायणौ––यजुरन्तरयेऽन्वाहारं धानंजय्य उपेक्षणं शाण्डिल्य इति। अस्यार्थः–– यजुषामन्तरयो यजुरन्तरयस्तस्मिन्यजुरन्तरये। अन्तरय उत्सर्गः। जीवत्पितृकस्यैतन्मन्त्रोत्सर्गे विचार उत्सर्गः कर्तव्यो वा न कर्तव्य इति। तत्र धानंजय्योऽन्वाहारं मन्यते। अन्वाहारोऽनुत्सर्ग इति। उपेक्षणं वर्जनमिति शाण्डिल्यो मन्यत इति। यजमानस्य पितृनग्निष्वात्तादीन्पितृन्वाऽवमादीन्पितृन्वोद्दिश्य जपः कर्तव्य एवेति धानंजय्याशयः। स्वानेव पितृनुद्दिश्य जपः स्वपितृजीवने लोप एवेति शाण्डिल्याशयः। तथाचैवं सिद्धं भवति–स्वपितृपक्षे स्वपितुर्जीवने लोपः। यजमानपितृपक्षे यजमानपितृजीवने लोपः। दिव्यपक्षेऽग्निष्वात्तादीनामुपस्थानं जीवत्पितृकेणापि कार्यमेव। त्रयो ह नु वै पितरोऽवमा और्वा काव्या इति च्छन्दोगश्रुत्युक्तानामवमादीनां वेति। एकवचनादध्वर्योरेव देवो देवमित्यादि न सर्वेषामृत्विजाम्। अथवा वृतो वृत इत्यनुवर्तनीयम्। एवं च समन्त्रकमभिप्रव्रजनं पन्था(थ्य)धिष्ठानमभिमन्त्रणं च सर्वेषामपि भवति। अस्मिन्पक्षे संभारयजुर्होमेऽपि सर्वकर्तृकतां व्यावर्तयितुमेवाग्रिमसूत्रे दीक्षिष्यमाणवचनम्। अत्र कूश्माण्डहोमः कर्मादिष्वेतैर्जुहुयादिति श्रुतेः। स च श्रुत्युक्तरीत्या बौधायनोक्तरीत्या वा। श्रुत्युक्तरीत्या क्रियमाणे वैश्वानरायेत्यनुवाकेन सर्वेणैवोपस्थानं नत्वन्त्यया समिदाधानमेवं वरदानमपि न। बौधायनोक्तरीत्या क्रियमाणेऽन्त्यया समिदाधानं वरदानं च भवति। त्विष्योऽभ्यावर्तिन्यश्चास्मिन्कूश्माण्डहोमे बौधायनोक्तरीत्या क्रियमाणेऽपि न भवन्ति। उद्धरणपक्षे कूश्माण्डहोमार्थमुद्धृतमाहवनीयं परित्यज्याऽऽयतनं

गोमयेनोपलिप्य पुनस्तं विहृत्य प्रवर्ग्यसंभरणं कुर्यात्। अत्र प्रवर्ग्यसंभरणे यजमानस्य दीक्षितत्वाभावाद्धोमो भवत्येव।

दीक्षिष्यमाणस्याग्निर्यजुर्भिरिति द्वादश संभारयजूꣳषि जुहोति।

द्वादशभिः संभारयजुर्भिः संभारयजुःसंज्ञकैर्मन्त्रैर्जुहोतीत्यर्थः। अथवा द्वादशसंभारयजुर्नामकान्होमाञ्जुहोतीत्यर्थः। प्रथमान्ता अग्न्यादयस्तृतीयान्ता यजुरादयश्च देवताः। उत्तमस्य मह्यं श्रद्धाया इति। अथवाऽहंकाराख्यदेवताविशेषस्य वाचकमहमित्यव्ययात्मकं पदम्। अस्मिन्पक्षेऽहं श्रद्धाया इदमित्येवोद्देशत्यागवाक्यम्। यजुर्भिः सहितायाग्नय इदं०। स्तोमैः सहिताय सवित्र इदं० इत्येवमेव त्यागवाक्यानि युक्तानि। उत्तमं तु श्रद्धया[1] सहिताय मह्यमिदं० श्रद्धया सहितायाहमिदमिति वेति ज्ञेयम्। दीक्षिष्यमाणवचनमेतस्य होमस्य दीक्षार्थत्वमेव न वरणार्थत्वमिति बोधयितुम्। वरणप्रयुक्तत्वाभावादेव सर्वर्त्विक्कर्तृकताऽव्यावृत्तिरित्यांशिकं प्रयोजनं प्रागुक्तमेव। अन्यच्च प्रयोजनं यः प्रधानस्य कालः सोऽङ्गानां स देशः स कर्ता सोऽग्निरिति परिभाषया दीक्षाया अपराह्णे क्रियायामेतस्याप्यपराह्ण एव कर्तव्यतेति। तत्रायं प्रकारः—प्रातरेव संकल्पादिकूश्माण्डहोमान्ते कर्मणि जाते सत्यपराह्णप्रतीक्षार्थं विरम्यापराह्ण एव द्वादशसंभारयजुर्होमादीति। कूश्माण्डहोमोत्तरं प्रवर्ग्यस्यैवाऽऽदौ संभरणमिति कल्पे प्रातरेव तदन्ते कर्मणि जाते विरम्यापराह्णे द्वादशसंभारयजुर्होमादीति। अत्रापराह्णो द्वेधाविभक्तदिवसस्य द्वितीयो भागस्त्रेधाविभक्तदिवसस्य तृतीयो भागो वा ननु पञ्चधाविभागोऽत्रेत्यत्र मूलं याजमानसूत्रे प्रदर्शयिष्यते। द्वादशवचनमितरमन्त्रनिवृत्त्यर्थमितरहोमनिवृत्त्यर्थं वा। अग्निर्यजुर्भिरितिवचनं संभारयजूꣳषि वाचयति जुहोति चैतैर्मन्त्रैः संभारयजूꣳषि व्याख्याय निर्मन्थ्यस्याऽऽवृता निर्मन्थ्येन प्रचरतीत्येतेषु संभारयजूंषि कानीत्याकाङ्क्षां निराकर्तुम्। उपस्थितत्वादादित एव द्वादश। अग्निर्यजुर्भिरित्यादीनां सापेक्षत्वात्प्रकाशनाशक्तेस्त इमं यज्ञमवन्त्वित्यनेन नैरपेक्ष्यदर्शनात्। सर्वेषु वाक्येषु तदन्वयो मा भूदित्येतदर्थमेषोऽनुवाक आम्नात इत्याम्नातग्रहणमापस्तम्बेन कृतमिति द्रष्टव्यम्। संभारयजुर्होमार्थं पुनर्विहरणम्। होमान्ते परित्यागः। यत्र मन्त्रगणेन कर्म चोदयेत्प्रतिमन्त्रं तत्र जुहुयादिति परिभाषया प्रतिमन्त्रं होमः। जुहोतिचोदितत्वादेतेषु स्वाहाकारः। आहवनीये जुह्वा हूयन्त इति परिभाषयाऽऽहवनीयोऽधिकरणं जुहूः साधनं च। परिस्तरणं तु यत्र क्व चाग्नौ परिस्तीर्य होतव्यमिति भारद्वाजीयपरिभाषासूत्रात्। परिमृज्य परिषिञ्चति यथा पुरस्तादित्यग्निकार्यसूत्रोक्तज्ञापकात्परिमार्जनपरिषेकौ। दर्विहोमान्व्याख्यास्यामो जुहोतीति चोद्यमाने दर्विहोमो यत्र

---

[1] ख. श्रद्धया।

च स्वाहाकारस्ता॰स्तूष्णीकेनाऽऽज्येन सकृद्गृहीतेनाग्रेणाऽऽहवनीयं परीत्य दक्षिणत- स्तिष्ठञ्जुह्वाऽऽहवनीयेऽध्वर्युः स्वाहाकारेण जुहोति द्विप्रभृत्याहुतिगणेषु प्रत्याहुति गृहीत्वा प्रत्याहुति समिधोऽभ्याधाय विग्राहं जुहोति यत्र मन्त्रगणेन कर्म चोदये- त्प्रतिमन्त्रं तत्र जुहुयादिति परिभाषासूत्राद्दर्विहोमधर्मः सर्वत्र ।

सप्तहोतारं मनसाऽनुद्रुत्य सग्रह१
हुत्वा दीक्षणीयामिष्टिं निर्वपति ।

सप्तहोतृहोमे यजमानेनाध्वर्योरन्वारम्भः कर्तव्य इति बौधायनेनोक्तम्—सप्तहोतारं मनसाऽनुद्रुत्याऽऽहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहेतीति सूत्रेण । वाचस्पति- र्देवता मन्त्रलिङ्गात् । अत्र केचित्–ब्रह्म वै चतुर्होतार इत्यर्थवादाद्ब्रह्मण इत्यप्युच्चार्यम् । तथाच वाचस्पतये ब्रह्मण इदमिति त्यागवाक्यमिति वदन्ति । पूर्वसूत्राद्दीक्षिष्यमाण- पदमत्राप्यनुवर्तते । अस्ति चोभयत्र श्रुतिः—दीक्षिष्यमाणः सप्तहोतारं मनसाऽनुद्रु- त्याऽऽहवनीये जुहुयादिति, आग्नावैष्णवमेकादशकपालं निर्वपति दीक्षिष्यमाण इति । दीक्षिष्यमाण इति लृट्प्रत्ययेन क्रियार्थायां क्रियायामुपपदे विहितेन दीक्षाकर्तृसंस्कारा- र्थत्वं बोध्यते । यमनियमपरिग्रहानुकूलयोग्यतारूपा दीक्षा तत्कर्तृसंस्कारार्था दीक्ष- णीया । वक्ष्यमाणानां कृष्णाजिनमेखलादण्डादीनां तु अक्रियारूपत्वाद्दीक्षाभिव्यञ्जक- त्वमात्रं नतु दीक्षणीयेष्टिवद्दीक्षार्थत्वम् । अत इष्ट्यनन्तरमेव दीक्षितो न जुहोति न ददा- तीत्यादयो दीक्षितधर्माः ।

पञ्चमाध्याये तृतीयपाद उक्तमेतज्जैमिनिना–परेणाऽऽवेदनाद्दीक्षितः स्यात्सर्वैर्दीक्षा- भिसंबन्धात् । इष्ट्यन्ते वा तदर्था ह्यविशेषार्थसंबन्धात् । समाख्यानं च तद्वदिति सूत्रात् । सर्वैरिष्टिदण्डादिभिर्दीक्षाभिसंबन्धात्, आवेदनात्परेण दीक्षितमावेदयतीति विहितात्प- रेणाऽऽवेदनानन्तरमिति यावत् । दीक्षितः स्याद्भवेदिति । एनया द्वितीयेत्यत्र पञ्च- म्यपि दृश्यत इति वचनं कल्पयित्वा परेणाऽऽवेदनादिति प्रयोगः समर्थनीय इति तन्त्ररत्ने । तथाच दीक्षितधर्माणामत्रैव प्रवृत्तिरिति पूर्वसूत्रार्थः । द्वितीयसूत्रार्थस्तु इष्ट्यन्ते वा वाशब्दः पूर्वपक्षव्यावर्तकः । इष्ट्यन्त एव दीक्षाधर्माणां प्रवृत्तिः । हि यस्मा- त्कारणादविशेषार्थसंबन्धात्तदर्था अत इष्टेरेव मुख्यत्वात्तदन्ते तत्समाप्त्यव्यवहितोत्तरमे- व दीक्षाधर्मप्रवृत्तिरिति । न विद्यते विशेषो विशेषवाक्यापेक्षा यत्र निरपेक्षेति यावत् । एतादृशोऽर्थो दीक्षणीयेष्टिः । दीक्षणीयेष्टिरितीष्टिसमाख्यानमपीष्ट्युत्तरं दीक्षितधर्माणां प्रवृत्तिरिति पूर्वसूत्रसाधकवत्तद्वदुपयुक्तं भवतीत्यस्यार्थः । इति तृतीयसूत्रार्थः । नन्वेवं वाग्य- मनोत्तरं दीक्षितधर्माणामुपादानं सूत्रकृदुक्तं निर्हेतुकं स्यादिति चेत्सत्यम् । कृष्णाजिनमेखलादण्डादिदानप्रभृतिकर्मणोऽपि दीक्षारूपत्वाभावेऽपि दीक्षार्थत्वं परम- स्त्येवेति । तथाचैतस्यापि कर्मणोऽपराङ्ग एव क्रियेतिज्ञापनरूपहेतुलाभेन निर्हेतुकत्वा-

पत्यभावात्। प्राग्वंशप्रपादनोत्तरं दीक्षणीयेष्टिक्रियायामपि तदनन्तरमेव। दीक्षणीयेष्टेर्दीक्षाकर्तृसंस्कारार्थत्वात्प्रतिप्रयोगमावृत्तिः सिद्धा भवति। दीक्षणीयाया देवतापरिग्रहार्थत्वमपि, देवता एवोभयतः परिगृह्य यजमानोऽवरुन्ध इति श्रुतेः। तेन सर्वतोमुखे प्रतिविहारं सा भवति। न दीक्षणीयाङ्गं सप्तहोता किंतु दीक्षाङ्गम्। तेन दीक्षणीयोत्कर्षे सप्तहोतुर्नोत्कर्ष आहवनीयभेदश्च सप्तहोतृदीक्षणीययोरित्येतद्द्वयं सिद्धं भवति। क्त्वाप्रत्ययेन तु पूर्वकालतामात्रम्। ततश्च सप्तहोत्रर्थमाहवनीयं गार्हपत्यात्प्रणीय सप्तहोतारं हुत्वा सोमार्थमाहवनीयं प्रणीय दीक्षणीया कार्या। प्रतिबन्धकृतदीक्षणीयोत्कर्षवशेन सप्तहोतृहोमदीक्षणीयेष्ट्योर्मध्ये होमप्राप्तौ होमः कर्तव्य एव। सप्तहोतारं मनसाऽनुद्रुत्य सग्रहꣳ हुत्वा दीक्षणीयामिष्टिं निर्वपतीति क्त्वाप्रत्ययबोधितसप्तहोतृहोमाव्यहितानन्तर्यं तु शिष्टाकोपन्यायेन बाध्यते। स च न्याय इत्थम्—आचान्तेन कर्तव्यमित्यादिस्मृतिविहिताचमनादेर्वेदं कृत्वा वेदिं करोतीत्यादिविहितश्रौतक्रमेण बाध इति प्राप्ते क्रमस्य पदार्थधर्मत्वात्तदपेक्षयाऽऽचमनादेः पदार्थत्वेन प्राबल्यम्। प्रमाणबलाबलापेक्षया प्रमेयबलाबलमेव पूर्वोपस्थितत्वाद्बलवत्। प्रमाणविरोधस्य प्रमेयविरोधमूलत्वेन पूर्वोपस्थितताद्विरोधेन प्रमेयबलस्य पूर्वमेवाऽऽलोचनादिति तेनैव निर्णय इति नाऽऽचमनादेर्बाधः किंतु क्रमस्यैवेति। प्रकृतेऽपि कालप्राप्तं नित्यं निरवकाशं कृत्वा सावकाशं ततः कर्तव्यमिति सामान्यस्मृतिविहितहोमकर्तव्यतया सप्तहोतृहोमानन्तर्यं बाधितं द्रष्टव्यम्। एवं चाग्निहोत्रहोमो मध्ये कर्तव्य एवेति। अमुमर्थमाह प्रथमाध्याये तृतीयपादे जैमिनिः—शिष्टाकोपेऽविरुद्धमिति चेत्। न शास्त्रपरिमाणत्वात्। अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्, इति त्रिभिः सूत्रैः। तत्राऽऽद्यं सूत्रं सिद्धान्तोपक्रमाशङ्कार्थं, द्वितीयसूत्रं तन्निरासार्थं, तृतीयं सिद्धान्तसूत्रम्। शिष्टस्य श्रौतक्रमादेरकोपेऽबाधे सति आचमनादिस्मरणमविरुद्धमिति प्रथमसूत्रार्थः। चेदित्यनेन सिद्धान्तोपक्रम आशङ्क्यते। द्वितीयसूत्रे नेत्यनेन तन्निरासः क्रियते। अविरुद्धं न किंतु विरुद्धमेव। तत्र हेतुमाह—शास्त्रपरिमाणत्वादिति। प्रत्यक्षशास्त्रेणाऽऽचमनादिप्राप्तेः पूर्वमेव पदार्थानां क्रमकालपरिमाणैः परिमितत्वादिति शास्त्रपरिमितत्वादित्यस्यार्थः। कारणस्य बाधकारणस्याग्रहणेऽनुपलम्भे सति प्रयुक्तानि शिष्टैः प्रयुक्तानि आचमनादीनि प्रतीयेरन्प्रमाणत्वेन प्रतीयेरन्निति तृतीयसूत्रार्थः। अपि वेत्यनेन पूर्वपक्षव्यावृत्तिः क्रियते। औपासनहोमोऽप्येवं मध्ये कर्तव्य एव। कूश्माण्डहोमाद्यर्थमाहवनीयस्य पृथक्पृथक्प्रणयनमुद्धरणपक्षे द्रष्टव्यम्। अर्थायार्थायाऽऽहवनीयं प्रणयतीति सूत्रात्। अजस्रपक्षे त्वाहवनीयस्य नित्यधार्यत्वान्न प्रणयनम्। उद्धरणपक्षेऽपि दक्षिणाग्नेर्नित्यं धारणमेव। नित्यं गार्हपत्यदक्षिणाग्नी धार्येते

इति सूत्रात् । वाचस्पते हृद्विध इति ग्रहसंज्ञको मन्त्रः । तेन सह यथा भवति तथा महाहविर्होतेति सप्तहोतृसंज्ञकं मन्त्रं मनसाऽनुद्रुत्योभयोर्मध्येऽनुच्छ्वसन्पठित्वा जुहोति-चोदितत्वात्स्वाहाकारमुक्त्वा दर्विहोमधर्मेण जुहोति । सूत्रे सग्रहमिति विशेषणं ग्रहस्यापि मनसा पाठार्थं नतु होमे ग्रहप्रापणार्थम् । तस्य तु तेषां ये होमार्थे श्रूयन्ते सग्रहाः सस्वाहाकारास्ते प्रयुज्येरन्नितिवक्ष्यमाणसूत्रेणैव सिद्धिः । मनसेति परिभाषा-प्राप्तोपांशुत्वव्यावृत्त्यर्थम् । दीक्षतेऽनयेति दीक्षणीया तामिष्टिं निर्वपति करोतीत्यर्थः । निर्वपतीत्यस्य निर्वापार्थकत्वं वक्तुमशक्यम् । इष्टिशब्दस्य क्रियाविशेषपरत्वेन निर्वा-पासंभवात् । इष्टिग्रहणमन्वाधानमन्त्रे दैक्षणीयमैष्टं९ हविरिदमेषां मयीत्यैष्टशब्दप्रयोग-ज्ञापनार्थम् । अन्यथा दैक्षणीयं९ हविरिदमेषां मयीत्येतावदेव स्यात् । अत इष्टिग्रहणम् । दीक्षणीयामिष्टिं निर्वपतीति सामान्यप्रतिज्ञेयमेतस्या इष्टेरिदं नामेति प्रदर्शयितुम् । तेनेदं सिद्धं भवति नामवतीनामिष्टीनामन्वाधानमन्त्रे नाम्नाऽपि निर्देशो नतु केवलमिष्टि-शब्देन निर्देश इति । तेन दैक्षणीयमित्यप्युच्चार्यम् । प्रायणीयाप्रभृतिष्ववभृथान्तेष्वि-ष्टिपशुबन्धेषु व्रतोपायनं जागरणं पत्नीसंनहनमारण्याशनं च न विद्यत इति सूत्रेण प्रायणीयाप्रभृतिषु व्रतोपायनादिनिषेधेन सप्तहोतृहोमानन्तरं दीक्षणीयेष्टिक्रियायां सोमा-ङ्गत्वासिद्धत्वेन व्रतोपायनं परिस्तरणोत्तरं जागरणाभावसंपादकनिद्रास्थानिकक्षणिकनेत्र-निमीलनाकरणं पत्नीसंनहनं सत्यां क्षुधि आरण्याशनं च भवत्येव ।

दीक्षणीयायां द्रव्यदेवताकाङ्क्षायामाह—

आग्नावैष्णवमेकादशकपालमाग्नावैष्णवं वा घृतेचरुम् ।

अत्र हविर्जानीयादिति शेषः । अथवा तृतीयार्थे द्वितीया । आग्नावैष्णवेनैकादश-कपालेनाऽऽग्नावैष्णवेन शृतावस्थानिक्षिप्तघृतेन चरुणा वा दीक्षणीयामिष्टिं निर्वपती-त्यन्वयः । तथाचायमर्थः—एकादशकपालकरणकं चरुकरणकं वा यागं कुर्यादिति । आग्नावैष्णवमिति देवतार्थकाण्प्रत्ययेन देवता प्राप्यते । एकादशकपालशब्देन द्रव्यं प्राप्यते । एकादशसु कपालेषु संस्कृतः पुरोडाश एकादशकपालः । घृतेचरुमित्यनेनै-कादशकपालस्थाने द्रव्यान्तरं विधीयते । घृतेचरुमित्यस्य शृतावस्थायां घृते निक्षिप्ते सति यः सिद्धश्चरुः स घृतेचरुरित्यर्थः । नतु घृते शृतश्चरुरिति । केवलघृतस्य चरुश्र-पणानुकूलपाकसाधनत्वाभावात् । शृते नेदीयसि घृतमिति बौधायनोऽप्याह । चरोः पाके नेदीयसि निकटे सति घृतं प्रक्षिपतीत्यर्थः । एकेनैवाऽऽग्नावैष्णवग्रहणेन सिद्धे पुनर्ग्रहणं नियमार्थम्—आग्नावैष्णव एव घृतेचरुर्नाऽऽदित्य आपस्तम्बोक्तो घृतेचरुर्भव-तीति । एतेन ज्ञायते पुरोडाशो ब्रह्मवर्चसकामस्य घृतेचरुः प्रजाकामस्य पशुकामस्य वेत्यापस्तम्बोक्तं पुरोडाशचर्वोः काम्यत्वमप्युपसंहार्यमिति । चरुस्वरूपं सारसंग्रहे—

अनिर्गतोष्मा सुस्विन्नो ह्यदग्धोऽकठिनश्चरुः ।
न चातिशिथिलः पाच्यो नच वीतरसो भवेत् ॥ इति ।

अनवस्राविताान्तरूष्मपक्वो वैशद्यानपेक्ष ओदनश्चरुरिति तृतीयाध्याये मीमांसका अपीत्थं चरुस्वरूपमाहुः । चरोरवदानं मेक्षणेन । मेक्षणेन चरूणामिति सूत्रात् । स्विष्टकृद्यागोत्तरं तस्य मेक्षणस्य प्रहरणम् । प्रायणीयायां विधानवचनेनान्यत्र तत्सि- द्धेर्दर्शितप्रायस्त्वात् । बौधायनेन स्पष्टतयोक्तेश्च । अत्र प्रयाजाज्यभागस्विष्टकृदनूया- जसूक्तवाकशंयुवाकपत्नीसंयाजानां प्राकृतः स्वरः । प्रधानस्वरे विशेषः शाखान्तरे या- वत्या वाचा कामयीत तावत्या दीक्षणीयायामनुब्रूयादिति । अनेन दीक्षणीयायां यावद्दृ- च्छमुच्चैस्त्वं भवति। एवं मन्द्रं प्रायणीयायां मन्द्रतरमातिथ्यायामिति प्रायणीयातिथ्यावि- षयकस्वरविशेषविषयेऽपि द्रष्टव्यम् । तत्राऽऽपस्तम्बेन प्रधानस्वरविषयेऽनेके पक्षा उक्ताः-यत्प्रागग्नीषोमीयात्तेनोपा᳘शु चरन्त्यथैकेषां यावत्यस्य वाग्भवति तावत्या दीक्षणीयायामन्वाह ततो नीचैस्तरां प्रायणीयायां नीचैस्तरामातिथ्यायामुपा᳘शूपसत्सूच्चै- रग्नीषोमीये मन्द्रेण वा दीक्षणीयायां मन्द्रतरेण प्रायणीयायां मन्द्रतरेणाऽऽतिथ्यायामुपां- शूपसत्सूच्चैरग्नीषोमीय उपांशु वा दीक्षणीयायामुपांशुतरं प्रायणीयायामुपांशुतर- मातिथ्यायामुपांशूपसत्सूच्चैरग्नीषोमीय इति । चरन्तीतिवचनात्तत्र यावत्प्रधानमुपांशिवति न्यायादिष्टिप्रधानानामेवोपांशुत्वम् । अङ्गानां प्रयाजादीनां तु यथाप्रकृतीति तद्व्याख्या- तारः । जैमिनिस्तु नवमाध्याये प्रथमे पादे देशसंबद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिर्देशा- त्तस्य च तत्र भावादिति सूत्रेण प्रयाजादीनामङ्गानामेवोपांशुत्वमाह । प्राग्भागरूपदेश- संबद्धमुपांशुत्वं तद्भागवर्तिपदार्थानां धर्मः स्यात् । श्रुतिनिर्देशात्, यत्किंचिच्छब्दरू- पश्रुतिसंयोगात् । अयमर्थः-प्राचीनशब्दः साकाङ्क्षत्वादवश्यं निराकाङ्क्षी कर्तव्यः । तत्र यज्ञशब्देन श्रुतेन निराकाङ्क्षीकरणं न संभवति त्सराशब्दसंबन्धित्वात्तस्य ततश्चाश्रुतोऽन्यो यज्ञशब्दः कल्पनीयः । तस्माच्छ्रुतेनाग्नीषोमीयशब्देन निराकाङ्क्षी क्रियते । ततश्चाग्नीषोमीयस्यानवयवित्वेन प्राचीनशब्दस्यावयवलक्षणभागपरत्वासंभवा- द्भागवर्तिपदार्थपरत्वावश्यंभावात्तद्धर्म उपांशुत्वं तदपूर्वप्रयुक्तं तस्यापूर्वस्य तत्रैव तेषु भागसंबन्धिपदार्थेषु भावादिति । अत्र बहुविस्तर आकरे द्रष्टव्यः । अस्मिन्सूत्र उपात्ता श्रुतिस्तु-त्सरा वा एषा यज्ञस्य तस्माद्यत्किंचित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्तीति । योपांश्वनुष्ठितिः सैषा त्सरा । त्सरा छद्मगतिः । आश्वलायनस्तूपांशुत्व- विधायके प्रकरणे सौमिकीषु इष्टिषु प्रधानविषये सौमिक्य इतिवचनेनोपांशुत्वमेवो- क्तवान् । शाङ्खायनोऽपि दीक्षणीयादीष्टिषूपांशुहविरिति प्रत्येकमुपांशुत्वं स्पष्टमेवोक्त- वान् । तत्रोपसंहाराङ्गीकारपक्षे यो हौत्रशास्त्रानुगुणः पक्षः सोऽङ्गीकर्तव्य इति । उपसंहारानङ्गीकारपक्षे तु प्राकृतो मध्यमस्वर एव । उपसदि उपांशुत्वं तूपा᳘शूपसदा चरामेति स्वशाखाविहितत्वान्नियतमेवेति द्रष्टव्यमिति ।

---

१ ख. °यवत्वे° ।

सप्तदश सामिधेन्यः ।

स्पष्टोऽर्थः । याजुषहौत्रसत्त्वे याजुषरीत्या सप्तदश सामिधेन्यः । आश्वलायनहौत्र-सत्त्व आश्वलायनोक्तरीत्या । तत्राग्निर्मुखं प्रथमो देवतानामग्निश्च विष्णो तप उत्तमं मह इत्याश्वलायनीये याज्यानुवाक्ये । अग्निरग्ने प्रथमो देवतानामग्निश्च विष्णो तप उत्तमं मह इति याजुष्यौ याज्यानुवाक्ये ।

न यजमान भागमवद्यति सर्वेषु सौमिकेष्विष्टिपशुबन्धेषु ।

प्रायणीयायाः कृत्स्नत्वपक्षेऽपि यजमानभागावदाननिषेधं वारयितुमेव न यजमान-भागमवद्यति । यदि शंयुवन्तेति प्रायणीयायां वचनमेतस्मादेव ज्ञायते सर्वेषु सौमिके-ष्विष्टिपशुबन्धेष्विति पूर्वत्राप्यन्वेतीति । तेनाखण्डेषु प्रायणीयाव्यतिरिक्तेष्विष्टिपशुब-न्धेषु यजमानभागावदाननिषेधः सिद्धो भवति । प्रणीताप्रणयनं भवत्येव । संयवनरूप-दृष्टकार्यसद्भावात्, अवभृथवन्निषेधाभावात्, यजुरुत्पूताभिः संयौतीतिवचनाभावाच्च ।

नान्वाहार्यं ददाति ।

सर्वेषु सौमिकेष्विष्टिपशुबन्धष्वित्यत्राप्यन्वेति । दानकर्ता यजमान एव । द्रव्यप्र-कल्पनं यजमानस्य दक्षिणादानं ब्रह्मचर्यं जपाश्चेति याजमानसूत्रात् । ददातीति यज-मानमित्याश्वलायनसूत्रात् । दानवाचनान्वारम्भवरवरणव्रतप्रमाणेषु यजमानं प्रतीयादिति कात्यायनसूत्राच्च । इष्टयश्च पशुबन्धाश्चेष्टिपशुबन्धाः सौमिक्यश्च सौमिकाश्च सौमिकाः सर्वाश्च सर्वे च सर्वे । पुमान्स्त्रियेत्यनेन सूत्रेणैकशेष इष्टिपशुबन्धेष्विति पुंलिङ्गान्तविशे-ष्यानुरोधात्सिद्ध एव । सर्वाः सौमिक्य इष्टयः सर्वे सौमिकाः पशुबन्धास्तेष्वन्वाहार्यं न ददातीत्यर्थः । प्रधानदक्षिणयैव प्रसङ्गसिद्धेरिति भावः । द्वादशाध्याये प्रथमे पादे भृतत्वाच्च परिक्रय इति जैमिनिनाऽप्ययं न्यायोऽनेन सूत्रेणोक्तः । अन्यविधानादारण्य-भोजनं न स्यादुभयं हि वृत्त्यर्थमिति सूत्रान्नेति मण्डूकप्लुत्याऽनुवर्तते । सौमिक्यैव दक्षिणया कर्तॄणां भृतत्वादानतत्वान्न पृथक्परिक्रयोऽन्वाहार्यदक्षिणेति सूत्रार्थः । पशु-बन्धेष्वन्वाहार्यस्य सर्वथैवाभावेनार्थात्तद्दानाभावे सिद्धे निषेधो ज्ञापयति अत्यन्ताना-द्यस्य पशुबन्धेष्वपि केवलमन्वाहार्य एव दक्षिणा तेनैव पशुबन्धोक्तदक्षिणादानफल-सिद्धिरिति । अन्वाहार्यग्रहणं पशुबन्धदक्षिणोपलक्षणम् । तेन तस्या अपि निषेधः । बहुवचनेनैव सोमतन्त्रान्तर्गतकृत्स्नेष्टिपशुबन्धलाभे सर्वग्रहणं सोमतन्त्रबहिर्भूतावैन्द्राग्ना-श्विनौ प्रायश्चित्तपशू अप्यन्तरा भवतस्तयोरपि दक्षिणा न भवतीतिज्ञापनार्थम् । उक्तं चाग्नीषोमीयस्य सवनीयस्य वोपालम्भ्यत्वमनयोर्बौधायनेन । एवं पाथिकृत्यादीनामपि सोमतन्त्रान्तःपातित्वे सति दक्षिणा नैव । यस्याऽऽश्विने शस्यमाने सूर्यो नाऽऽविर्भवति सौर्यं बहुरूपमालभेतेत्यस्य पशोस्तत्तन्त्रमुपजीव्यैव कर्तव्यतायामपि दक्षिणा न । अस्मि-

न्यक्ष आकाङ्क्षितत्वादत्रैव प्रसङ्गात्प्रयोगः प्रदर्श्यते। तत्र स्वधितिस्वरुमैत्रावरुणदण्ड-हृदयशूलयूपास्त एव स्फ्यादीनि च। उपादानलाघवात्प्लक्षशाखाकुम्भीसमवत्तधान्यस्ता एव प्रक्षाल्य प्रयोक्तव्याः। पशुरशनाया वपाश्रपण्योश्च मेदोऽर्थसिद्धः। षड्ढोतृपश्विष्टी न स्तस्तत्रान्तःपातित्वात्। न यूपच्छेदनं न वेदिकरणं नोत्तरवेदिचात्वालकरणम्। नाग्निप्रणयनान्वाधाने नेध्माबर्हिराहरणं न वेदकरणं न परिस्तरणं न पाणिप्रक्षालनम्। उलपराजीस्तरणे विकल्पः। न ब्रह्मयजमानयोः सदने। समवत्तधानी पशुरशना वपा-श्रपण्यौ कुम्भी प्लक्षशाखा इत्येतेषामेवाऽऽसादनम्। न ब्रह्मवरणं नोपवेशनम्। पवि-त्रकरणादिपात्रसंमर्शनकाले संविशन्तामिति समवत्तधानीपशुरशनादीनि पात्राण्यासा-दितान्येवाभिमृशति। दक्षाय वानस्पत्याऽसीत्यादिपशुबन्धोक्तप्रयोगक्रमेण पात्रप्रोक्ष-णान्तम्। उत्तरपरिग्रहादि स्वर्वेवगूहनान्तं लुप्यते। ततः प्रायश्चित्तहोमः पशूपाकरण-मुपाकरणाङ्ग(ङ्गा)पञ्चाऽऽहुतयश्च भवन्ति। बहुरूपोऽयं पशुः। न मन्थनम्। रशनादा-नादिअधस्तात्प्रोक्षणान्तं भवति। सामिधेन्यादि स्रुच्याघारान्तं निवर्तते। पृषदाज्यासत्त्वे पूर्ववदुत्पादनीयमत्र होत्रा प्रधानदेवतावाहनमात्रं तत्रैव तिष्ठता कर्तव्यम्। नान्येषामू-र्ध्वमावाहनादुत्पन्नानामित्याश्वलायनोक्तावाहननिषेधस्तु नियताङ्गदेवतावाहननिषेधपरो नाऽऽगन्तुकान्तःपातिदेवतावाहननिषेधपर इति ज्ञेयम्। वनस्पतेस्त्वावाहितत्वान्नाऽऽवा-हनम्। न ध्रुवासमञ्जनादि न प्रयाजाः। आज्यस्थाल्याः स्रुवेणाऽऽज्यं जुह्वां गृहीत्वा तेन स्वरुस्वधिती अङ्क्त्वा ताभ्यां पशुसमञ्जनं कृत्वा शमितरेषा तेऽग्निरित्यक्तां धारा-मादिशञ्छमित्रे स्वधितिं प्रदाय यथास्थानं स्वरुमवगूह्येत्यादि वपाया आसन्नाभिमन्त्रणा-न्तम्। पृषदाज्यस्य मध्य उत्पादने तदवेक्षणमुभयोः। नोत्तमः प्रयाजः। सारस्वतप्रा-जापत्यपशुवपानामनभिघारितानामेव सव्या वा एतर्हि वपा यह्यनभिघृता इति श्रुतेः। अनभिघारिताभिर्वपाभिः प्रचरन्तीति वाजपेयसूत्राच्च यथा याग उपयोगस्तन्न्यायेनात्राप्य-नभिघारिताया एव याग उपयोग इति द्रष्टव्यम्। नाऽऽज्यभागौ। यजमानेन व्याख्याते पञ्चहोतारि वपायागो निरूढवत्। सूर्याय च्छागस्य वपाया मेदसोऽनुब्रूहीति पुरोनुवाक्याप्रैषे विशेषः। आग्नेयपशुप्रकृतिकत्वे याज्याप्रैषो न। अग्नीषोमीयप्रकृतिकत्वे सूर्याय च्छागस्य वपाया मेदसः प्रेष्येति याज्याप्रैषोऽस्त्येव। सूर्यस्याहं देवयज्ययेन्द्रियावी भूयासमित्यनुम-न्त्रणम्। जेमानमिति महेन्द्रयाजिनः। चात्वाले मार्जनं वरदानं च, दक्षिणा नेत्युक्तमेव प्राक्। पशुपुरोडाशपात्रासादनादि आसादनान्तम्। आग्नेयविकारपक्षे यज्ञोऽसि अयं यज्ञः पञ्चहोता। अग्नीषोमीयविकारपक्षे प्रजापतिरसि अयं यज्ञः, विहव्यं चतुर्होता। ततो जुह्वामुपस्तीर्येत्यादि कपालविमोचनान्तम्। सूर्याय पुरोडाशस्येति प्रैषे विशेषः। प्रैषनिर्णयः प्राग्वत्। ततो जुह्वां पञ्चगृहीतं गृहीत्वा पृषदाज्यस्रुवं चाऽऽदाय शृत१

१ ख. वसाया।

हवीः३ शमितरित्यादि हविःशेषोद्वासनान्तम् । सूर्याय च्छागस्य हविष इति प्रैषे विशेषः । प्रैषनिर्णयः प्राग्वत् । स्विष्टकृद्यागसत्त्वाद्वनस्पतियागसत्त्वम् । वनस्पतेः स्विष्टकृद्विकारत्वेन तत्सजातीयधर्मत्वेन संनियोगशिष्टत्वात् । एतत्सर्वं पाशुकं कर्माऽऽश्विनशस्त्रसंबन्धिचमसहोमभक्षणान्ते पिष्टलेपहोमादि आश्विनकपालविमोचनान्तं कृत्वा कर्तव्यम् । ततोऽग्नीदौपयजानङ्गारानाहरेत्यादि समानतन्त्रेण । अप्तोर्यामे तु ततश्चत्वारि संधिस्तोत्रशस्त्राणि । ततोऽग्नीदौपयजानित्यादीति विशेषः । सूर्यो देवीमुषसमित्याद्याः षडृचो याज्यापुरोनुवाक्याः । अवशिष्टे विकल्पार्थे । वनस्पतिप्रैषेऽघितेत्यनन्तरं यत्राग्नेराज्यस्य हविषः प्रिया धामानि यत्र सोमस्याऽऽज्यस्य हविषः प्रिया धामानि यत्र सूर्यस्य च्छागस्य हविषः प्रिया धामानि यत्र वनस्पतेः प्रिया पाथा१ंसीत्यादि । स्विष्टकृत्प्रैषे होता यक्षदग्नि१ं स्विष्टकृतमयाडग्निरग्नेराज्यस्य हविषः प्रिया धामान्ययाट् सोमस्याऽऽज्यस्य हविषः प्रिया धामान्ययाट्सूर्यस्य च्छागस्य हविषः प्रिया धामान्ययाड्वनस्पतेः प्रिया पाथा१ंसीत्यादि । यदि सवनीयपशावाज्यभागौ न कृतौ तदैतत्पशुसंबन्धिनोरपि वनस्पतिप्रैषस्विष्टकृत्प्रैषयोराज्यभागोत्कीर्तनं न कर्तव्यम् । इति प्रसङ्गादेतत्तन्त्रोपजीविसौर्यपशुप्रयोग उक्तः । अथ प्रकृतमुच्यते—प्रकरणादेव सोमसंबन्धित्वे सिद्धे सौमिकेष्विविवचनं वायव्यपश्वादिव्यावृत्त्यर्थं यानि यानि सोमाङ्गैः सिद्धार्थानि तान्यपि न भवन्तीतिज्ञापनार्थं च । तेन ब्रह्मवरणं संस्थाप्यास्वपीष्टिषु यज्ञविमोको ब्राह्मणतर्पणं चेत्येतानि न भवन्ति । एते पदार्था अवभृथोत्तरमपि वर्ज्या इत्यन्वाहार्यनिषेधसाहचर्यादवगम्यते । अतोपायनादीनामपि सोमाङ्गैः सिद्धार्थत्वेऽपि तेषामवभृथात्प्रागेव सिद्धार्थत्वं नोत्तरत्रेत्येवं भेदाद्विधिभेदो द्रष्टव्यः । केचिद्यजमानार्थमासनकल्पनमपि न कर्तव्यं कृष्णाजिनस्याऽऽसनार्थत्वादिति वदन्ति । तत्तु न न्याय्यम् । अहे दैधिषव्येतिनिरसनदर्शनात् । इष्टिपशुबन्धेष्वितिवचनं सौमिकेष्वितिपुंलिङ्गानुरोधेन पशुबन्धानामेव ग्रहणं नेष्टीनामिति स्यात्तद्व्यावृत्त्यर्थम् । अन्वाहार्येण सोमं पिपासेत्, न त्वेवासोमयाजी स्यादिति शाखान्तरश्रुतेराढ्यस्यायमन्वाहार्यनिषेधो नानाढ्यस्य । तस्य सर्वासु सौमिकीष्विष्टिषु सर्वेषु सौमिकेषु पशुबन्धेष्वन्वाहार्यस्यैव दानम् । दक्षिणाकाल आग्नीध्रात्रेयाभ्यां हिरण्यदानम् । मन्थादीतरेभ्यः । एतावतैव सोमसिद्धिः । तदिदं सर्वमवश्यकर्तव्यत्वप्रतिपादनपरम् । अत्यन्तानाढ्यस्य दक्षिणालाघवे दोषाभावप्रतिपादनपरेयं शाखान्तरश्रुतिः । आढ्यस्य तु अल्पदक्षिणादाने फलाभावो दोषश्च ।

तथा च स्मृतिः—

अग्निष्टोमादिकैर्यज्ञैर्यो यजत्यल्पदक्षिणैः ।
स नाऽऽप्नोति सति द्रव्ये फलं दोषं च गच्छति ॥ इति ।

मनुरपि—

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।
न सांपरायिकं तस्य दुर्मतेर्विद्यते फलम् ॥ इति ।

स्मृत्यन्तरेऽपि—

प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।
स नाऽऽप्नोति फलं तस्य दोषं चैवाधिगच्छति ॥ इति ।

यो हि अल्पदक्षिणयज्ञ आर्त्विज्यनिषेधः स समर्थकर्तृकाल्पदक्षिणयज्ञविषयो द्रष्टव्यः । यद्यपीदं सूत्रं यजमानसूत्र एव पठितुं युक्तं तथाऽपि अभिघारणान्तर्वेद्यासादनसंप्रैषद्वाराऽध्वर्युसंबन्धादत्र पाठ इति द्रष्टव्यम् । ददातीत्यत्रान्तर्भाविता णिज्वा द्रष्टव्यः । 47474

ध्रुवायाः शेषं करोति ।

ध्रुवाशब्देन तद्गतमाज्यं लक्षणया गृह्यते मञ्चाः क्रोशन्तीत्यत्र मञ्चशब्दस्य तत्स्थपुरुषलक्षकत्वमिव । तात्पर्यानुपपत्तिरत्र लक्षणाबीजम् । ध्रुवागतस्याऽऽज्यस्य शेषं करोति स्थापयतीत्यर्थः । ध्रुवाया इत्यनन्तरमाज्यस्येति शेषो वा । ध्रुवासंबन्धिन आज्यस्य शेषं करोतीति तदर्थः । सप्तम्यर्थे षष्ठी वा । शेषं करोतीतिवचनात्स्विष्टकृदभिघारणद्वये ध्रुवाया नाऽऽप्यायनं ध्रुवाज्यस्य शेषत्वसंपादनाय । तत्र तत्राऽऽप्यायनं हि पूरणार्थम् । पूरितस्य शेषत्वं न संभवति । अत आप्यायननिषेध एवैतस्य विधेः पर्यवसानम् । स्विष्टकृदभिघारणद्वयस्यैवान्तिमत्वात्तत्रैव ध्रुवाप्यायनाभावः । आज्यस्थाल्याज्यशेषमपि स्थापयति प्रयोजनसद्भावात् । ध्रुवाशेषादाकूत्यै प्रयुजेऽग्नये स्वाहेति स्रुवेण चतस्रो दीक्षाहुतीर्जुहोत्यापो देवीरिति स्रुचा पञ्चमीमित्युत्तरत्र शेषविनियोगबलादेव शेषकरणे सिद्ध इदं वचनं शेषनाशे शेषत्वसिद्ध्यर्थं ध्रौवैराद्यैरन्तिमैर्वा त्रिभिर्मन्त्रैर्ध्रुवायां गृहीत्वाऽनेनैव होमः कर्तव्य इत्यर्थविशेषं द्योतयितुम् । भ्रान्त्या कदाचित्स्विष्टकृदभिघारणद्वय आप्यायनं कृतं चेत्तदाऽपि तेनैवैतौ होमौ जुहुयात् । उभयत्रापि सर्वप्रायश्चित्तहोमोऽनाज्ञातजपादि च ।

पत्नीसंयाजान्ता दीक्षणीया संतिष्ठते भक्षयित्वाऽऽज्येडां विरमन्ति ।

पत्नीसंयाजैरन्तः समाप्तिर्यस्याः सा पत्नीसंयाजान्ता । पत्नीसंयाजान्ता दीक्षणीया भवतीत्येतावतैव कर्मसंस्थायां सिद्धायामपि संतिष्ठत इति पुनः संस्थाबोधकवचनं पत्नीसंयाजान्तैरप्रतिपत्तिकर्मभिः संस्थायामपि प्रतिपत्तिकर्मभिरपि संस्थापनीयेत्येतद-

१ ख. °त्वा तेनै° ।

र्थम् । तेन समन्त्रमेव प्रतिपत्तिकर्माणि । वेदप्रतिपत्तिरपि समन्त्रैव । योक्त्रमोचनव्रतवि-सर्गावपि समन्त्रमेव भवतः । अवभृथोत्तरमाविनीषूदयनीयादीष्टिषु सर्वाण्युत्तरासु क्रियन्त इत्यनेन संनहनव्रतोपायनयोः कर्तव्यतायां बोधितायां दीक्षणीयायामेतयोरार्थिकी सिद्धिरवगता भवति । अन्यथा दीक्षणीयायां कृतयोर्योक्त्रसंनहनव्रतोपायनयोरुदय-नीयायां विमोचनविसर्गयोः करणे सर्वाण्युत्तरासु क्रियन्त इति सूत्रत उदयनीयेष्टौ व्रतोपायनविधानमसंगतं स्यात् । प्रकरणादेव दीक्षणीयालाभे पुनर्वचनमत्रैव प्रतिपत्ति-कर्माण्यावश्यकानि न खण्डायां प्रायणीयायामपीत्येतदर्थम् । नन्वेवं तस्मादेता एत-दन्ता इष्टयः संतिष्ठन्त इति श्रुतिविरोध इति चेन्न । अप्रतिपत्तिकर्मभिरेतदन्तैरेवेष्टयः संस्थिता भवन्तीत्येतादृशकल्पनया विरोधाभावात् । भक्षयित्वाऽऽज्येडां विरमन्तीत्ये-तावतैव सिद्धे पत्नीसंयाजान्ता दीक्षणीया संतिष्ठत इतिवचनं पत्नीसंयाजान्तत्वप्रतिपा-दकविधिवाक्यस्याऽऽज्येडाभक्षणान्तत्वमेवार्थ इति दर्शयितुम् । तेन यत्र यत्र पत्नी-संयाजान्तत्वं श्रूयते पत्नीसंयाजान्तोऽग्नीषोमीयः संतिष्ठते पत्नीसंयाजान्तमहः संतिष्ठत इत्यादौ तत्र तत्राऽऽज्येडाभक्षणान्तत्वं सिद्धं भवति । भक्षयित्वाऽऽ-ज्येडामित्यत्राऽऽज्यग्रहणं यत्र निरुपपदेडाग्रहणं तत्र प्रधानहविःसंबन्धीडाया एव संप्रत्यय इतिप्रदर्शनार्थम् । यथाऽऽतिथ्यायामिडान्ताऽऽतिथ्येत्यत्र विरमन्ती-त्यत्राप्रतिपत्तिकर्मभ्य इति शेषः । एतावता पत्नीसंयाजान्तत्वमस्त्येवेति । पत्नी-संयाजान्ता दीक्षणीयेत्येतावत एव वाक्यस्य भक्षयित्वेत्यारभ्य विरमन्तीत्यन्तेनार्थः प्रदर्श्यते । भक्षयित्वेत्यत्रान्तर्भावितो णिच् । तेनाऽऽज्येडाभक्षणस्योभयकर्तृकत्वेन बहुकर्तृकत्वाभावेऽपि प्रयोजकत्वमादाय विरमन्तीतिबहुवचनबोधितबहुकर्तृकक्रियासा-मानाधिकरण्यं समानकर्तृकत्वं चोपपन्नं भवति । तथाचायमर्थो भवति—होतारमाग्नीध्रं चाऽऽज्येडाभक्षणं कारयित्वा विरमन्त्यप्रतिपत्तिकर्मभ्योऽध्वर्युब्रह्मयजमानाः । याजु-षहौत्रसत्त्व आज्येडाभक्षणोत्तरं वेदिप्रतिपत्तिमात्रमवशिष्टं तद्भवत्येव । आग्नीध्रस्य स्वग्रे कर्मैव नास्ति । पूर्वत्र दीक्षणीयाकरणपक्षे योक्त्रविमोचनं कर्तव्यमेव । यजुःशाखिनि यजमाने याजुषहौत्रस्य सत्त्वेऽपि मार्जनं न भवति नेदमादिषु मार्जनमर्वागुदयनीयाया इत्याश्वलायनोक्तस्य मार्जननिषेधस्य वैशेषिकशास्त्रत्वेनात्रापि प्रवृत्तेः ।

## धारयत्याहवनीयम् ।

यः प्रधानस्य कालः सोऽङ्गानां[१] स देशः स कर्ता सोऽग्निरिति परिभाषया क्रतु-समाप्तिपर्यन्तं धारणं न पुनः पुनः प्रणयनम् । प्रधानदेवतामात्रपरिग्रहार्थया दीक्षणी-यया परिगृहीतस्य देवतारूपाग्नेस्त्यागायोगादिति भावः । प्रधानदेवतामात्रपरिग्रहार्थत्वं दीक्षणीयाया इत्यत्र साधकमग्रे वक्ष्यते । दीक्षणीयायां विशेषमाह बौधायनो द्वैधे—

१ ख. ग. °नाम° ।

अत्रो ह स्माऽऽह शाठीकिः कामं पूर्वाह्णे वाऽपराह्णे वा शालामध्यवस्येत्प्रागस्तमयाद्दीक्षणीयां संतिष्ठापयिषेदिति। यजमानोऽपराह्णे दीक्षत इति विधिं संपादयितुमध्वर्युमस्तमयात्प्रागेव दीक्षणीयेष्टिं संतिष्ठापयिषेत्। संतिष्ठापयितुं समापयितुमीच्छेदित्यर्थः। अस्तमयात्प्रागेव दीक्षणीयां समापयितुमध्वर्युं प्रयोजयेत्। अध्वर्युशैघ्र्याधीनत्वात्समाप्तेरिति भावः। संतिष्ठापयेदिति पाठ ऋजुरेव। दीक्षितो न कांचनाऽऽहुतिं जुहोत्यन्यत्र क्रतुसंयुक्ताभ्य इत्यनेन श्वःप्रभृति प्रातर्होममारभ्य सर्वेषां होमानां निषिद्धत्वाल्लोपे सायंप्रातर्होमयोरेकफलकत्वेन प्रथमदिनसंबन्धिसायंहोमस्यापि लोपार्थमस्तमयात्प्राग्दीक्षणीयासमाप्तिरावश्यकीति भावः। यदा कदाचिद्दीक्षणीयेष्टेरस्तमयात्प्रागसमाप्तिस्तदा मध्य एव सायमग्निहोत्रमपकृष्य प्रातरग्निहोत्रं च समासप्रकारेण हुत्वा कृतान्तादीष्टिं समाप्य विरम्य परेद्युः सर्वप्रायश्चित्तं हुत्वाऽपराह्णे दीक्षत इति विधिबलात्परेद्युरेव वपनादि। प्राकृतीष्टेस्तु तदानीं कालाभावाल्लोप एव। अस्मिन्विषय एकापूर्वजनकत्वनिर्वाहाय क्रतुसमाप्त्यनन्तरं लोपप्रायश्चित्तं कर्तव्यमेव। अथवा सर्वप्रायश्चित्तं हुत्वा तदैव दीक्षा सर्वप्रायश्चित्तहोमो दीक्षानन्तरं वा। यदि[1] तु दीक्षणीयेष्ट्यारम्भात्प्रागेव सूर्योऽस्तमेति तदा परेद्युरेव दीक्षणीयेष्ट्यादि। प्रातरग्निहोत्रहोमस्तु स्वकाले भवत्येव। कालसत्त्वे प्राकृतीष्टिरपि नो चेल्लोपप्रायश्चित्तमेव तदैव वा दीक्षणीयेष्ट्यादि। अस्मिन्पक्षे प्रातर्होमापकर्षः[2] प्राकृतेष्टिप्रकारश्च पूर्ववत्। यदि त्वारब्धाया दीक्षायाः प्रतिबन्धवशेनासमाप्तिस्तदा सर्वप्रायश्चित्तं हुत्वा शिष्टं कर्म तदैव समापनीयम्। द्वादशसंभारयजुर्होमात्प्राग्यदि सूर्योऽस्तमेति तदा तु परेद्युरेव संभारयजुर्होमादि न तु तदैवेति द्रष्टव्यम्।

प्राचीनवꣳशं विमितं विमिन्वन्ति।

पुरस्तादुन्नतम्। विमितमिति भूतार्थे क्तप्रत्ययः। मिन्वन्तीत्यस्योपसर्गबलादुपरिष्टादाच्छादयन्तीत्यर्थः। तेन दीक्षणीयायाः प्रागेव विमानम्। अत्रोपरिष्टादाच्छादनादि। एतेन दीक्षणीयोत्तरं प्राग्वंशविमानं कथं भवति देशस्य व्यापृतत्वादिति शङ्का परिहृता भवति। प्राचीनवꣳशं करोति देवमनुष्या दिशो व्यभजन्त प्राचीं देवा दक्षिणा पितरः प्रतीचीं मनुष्या उदीचीꣳ रुद्रा इति श्रुतौ दिग्विभागस्त्वर्थवाद एव। तथा च तृतीयाध्याये चतुर्थपादे जैमिनिः—दिग्विभागश्च तद्वत्संबन्धस्यार्थहेतुत्वादिति। दिग्विभागः प्रतीच्या दिशो मनुष्यकर्तृको विभागोऽपि निवीतवदर्थवादार्थः। प्रायेण पूर्वाह्णे व्याप्रियमाणानां मनुष्याणामादित्यं पृष्ठतः कर्तुं प्रतीचीसंबन्धस्यार्थतः प्राप्तत्वेन तत्र विध्ययोगादिति सूत्रार्थः। निवीताधिकरणवदेव सर्वमत्र। तथा च तेनैव गतार्थत्वेऽपि निवीतं मनुष्याणामित्यत्र प्रत्यक्षविध्यश्रवणादर्थवादत एव विधिः कल्पनीयः।

---

१ क. यदि। २ ख. ग. 'कर्षप्रा°।

तथा च तत्र निर्णीतस्तुनेरेवाऽऽज्यस्येनाप्रतीतेरर्थवादेन निर्णीतविधिकल्पनं दूरापास्त-मिति स्वतन्त्रविधित्वासंभवादस्तु तत्रोपस्थानस्तावकत्वम् । प्रकृते तु पूर्वं मनुष्याः प्रतीचीं व्यभजन्तेत्युक्त्या पूर्वपुरुषाचरितत्वेन प्रतीचो विभागस्य प्राशस्त्यावगतेस्तेन प्रतीचीदिग्विभागः कार्य इति विधिः सुकल्प्य इतिविशेषशङ्कावारणार्थमिदमधिकर-णम् । प्राचीनवंशं करोतीति विधौ श्रूयमाणो देवमनुष्या दिशो व्यभजन्त प्राचीं देवा दक्षिणा पितरः प्रतीचीं मनुष्या उदीचीं रुद्रा इति योऽर्थवादः सोऽस्याधिकरणस्य विषयः । अत्र देवपदं पितृुपलक्षकम् । रुद्राणां देवत्वेऽपि गोबलीवर्दन्यायेन पृथग्ग्रह-णम् । तथा च प्राचीं देवा दक्षिणेत्यत्र देवशब्दो रुद्रातिरिक्तपरो ग्राह्य इति ज्ञेयम् । प्राचीनः प्रागग्रो वंशो यस्य विमितप्रदेशस्यैतदेव दीक्षितविमितमित्याख्यायते । एतदेव प्राचीनत्वं पृष्ठवंशस्यैव । प्रागायतं पृष्ठवंशं कुर्यादिति वाजसनेयिश्रुतेः । प्राचीनशब्दः पुरोवाची नचोर्ध्ववाची देवमनुष्या दिशो व्यभजन्तेति लिङ्गात् । तस्मिन्नुदीचीन-वंशा शालेत्याग्न्याधेयिकशां शालायामुदीचीनत्वस्य प्रत्याम्नानाच्च । स च पृष्ठवंश-स्तावान्ग्राह्यो यावता पृष्ठवंशेनाऽऽग्न्याधेयिको विहारः सपत्न्यायतनः ससंचरः संप-स्येत । विमितस्य प्राचीनवंशमिति विशेषणाद्वंशोऽपि प्रागग्रो विमानोत्तरमेव दातव्य इति गम्यते । तद्धारकत्वाद्यावदुपयुक्ताः सर्वे स्तम्भा अपि । पुरस्तादुन्नतं पुरोभागे किंचिदुच्चम् । एतदप्यग्न्यायतननिर्माणात्पूर्वमेव कर्तव्यम् । प्राचीनवंशं पुरस्तादुन्नतम्, एतादृशविशेषणविशिष्टं विमितं प्रदेशमाच्छादयन्तीत्येतादृशार्थकरणाद्वंशस्तम्भदान-स्योन्नतत्वस्य च पूर्वकर्तव्यता, इष्टयुत्तरमाच्छादनपरिश्रयणद्वारकरणादि अग्रे विधा-नात् । पुरोभाग औन्नत्यविधानात्पश्चादर्थान्नीचता । स्पष्टमेवदुक्तमापस्तम्बेन—प्राचीनवंशं करोति पुरस्तादुन्नतं पश्चान्निनतमिति । बौधायनः—जुष्टे देवयजने शाला कारिता भवतीति । एतस्य प्रमाणविशेषानभिधानादर्थलक्षणावायामविस्तारौ । अर्थात्परिमाण-मिति कात्यायनोक्तेः । बौधायनस्तु शुल्बसूत्रे प्राग्वंशः षोडशप्रक्रमायामो द्वादशव्यास-स्तस्य मध्ये द्वादशिको विहार इत्याह । प्रयोगसूत्रे च प्राचीनवंशां दिक्षवतीकाशां दक्षिणतो वर्षीयसी तस्यै चतस्रो द्वारः कुर्वन्ति प्राचीं दक्षिणां प्रतीचीमुदीचीं दक्षि-णतो व्रतश्रपणागारं कुर्वन्ति पश्चात्पत्नीशालामिति । आयतनानि पञ्चविधपिशिलान्य-तमप्रमाणानि समक्षेत्राणि, संभवानुसारेण । सभ्यावसथ्यपक्षे तयोरप्याहवनीयायतनव-देवाऽऽयतने आहवनीयात्पुरतः क्रमेण प्राक्संस्थे प्राग्वंश एव । औपासनाग्नेरायतनं तु प्राग्वंशसमीप एव संचाररहिते परिश्रिते प्रदेशे । प्रक्रमप्रमाणं यजमानस्याध्वर्योर्वा । यजमानस्याध्वर्योर्वैष हि चेष्टानां कर्ता भवतीति शुल्बसूत्रात् । प्रक्रमो द्विपदस्त्रिपदो वा शुल्बसूत्रात् । पद्यते गम्यत इति व्युत्पत्त्यैकपदोऽपि । पदस्यानेकविधत्वमुक्तं

१ क. °पिशीला° ।

शुल्बसूत्रे पदे युगेऽरत्नाविषति शम्यायां च मानार्थेषु याथाकामी शब्दार्थस्य विशयित्वादिति । विशयित्वात्, अनेकविधत्वादित्यर्थः । पदं पञ्चदशाङ्गुलमिति बौधायनः । दशाङ्गुलं क्षुद्रपदमित्यपि सः । दशाङ्गुलं पदमिति कात्यायनः । एतानि प्रमाणानि सार्वत्रिकाणि । प्राची सर्वत्र लोकत एव ग्राह्या । तत्र बौधायनः—कृत्तिकाः खल्विमां प्राचीं न जहन्ति(ति) तासां दर्शनेनानुमापयेदित्येकं, श्रोणादर्शनेनानुमापयेदित्येकं, चित्रास्वात्योरन्तरालेनानुमापयेदित्यपरमिति । एतानि लक्षणानि देशविशेषेषु व्यवतिष्ठन्ते । सर्वदेशसाधारणं लक्षणं कात्यायन आह—समे शङ्कुं निखाय शङ्कुसंमितया रज्ज्वा मण्डलं परिलिख्य यत्र रेखयोः शङ्क्वग्रच्छाया पतति सा प्राचीति । अग्रे स्रक्तिष्वतीरोककरणविधानाद्विमितस्य चतुरश्रता गम्यते । पिण्डपेष्टौ दिक्षु स्रक्तय इति विधानाद्दैवे कर्मणि चतुरश्रेषु विदिक्ष्वेव स्रक्तयः । आपस्तम्बः स्पष्टमेवामुमर्थमाह—अवान्तरदिक्षु स्रक्तय इति ।

परिश्रयन्तः स्रक्तिष्वतीरोकान्कुर्वन्ति ।

प्राग्वंशं विमितमुपरिष्टादाच्छादितं परिश्रयन्तः परितः कटादिभिराच्छादयन्तः परिकर्मिणः स्रक्तिषु कोणेषु अतीरोकान्कुर्वन्ति । आरोकशब्दोऽन्तरालवाची गवाक्षाणीति यावत् । आरोकेष्वारण्यान्धारयन्तीत्यश्वमेधे श्रुतेः । दीर्घो लकारस्य रेफश्च च्छान्दसः । कोणेषु गवाक्षाणि कुर्वन्तीत्यर्थः । परिश्रयन्त इति शतृनिर्देशात्परिश्रयणसमकालमेवातीरोककरणम् ।

उत्तरपूर्वमवान्तरदेशं प्रति पञ्चमम् ।

उत्तरपूर्वावान्तरप्रदेशाभिमुखं पञ्चममित्यर्थः । अयमर्थः प्रतिशब्दाल्लभ्यते । उत्तरपूर्वं प्रति पञ्चममित्येतावत्युच्यमान उत्तरपूर्वशब्देन गवाक्षस्यैव ग्रहणं स्यात् । तथाच तत्समीपेऽवान्तरदेश एव पञ्चमं गवाक्षं स्यात्तन्मा भूत्किंत्ववान्तरदेशव्यतिरिक्तसमीपवर्तिनि पूर्वभाग उत्तरभागे वा यथा स्यादित्येतदर्थमवान्तरदेशवचनम् । दिक्स्थाश्चत्वारो भागा विदिक्स्थाश्चत्वारस्तत्र पूर्वभाग उत्तरभागे वा पञ्चमं गवाक्षमिति द्रष्टव्यम् । उत्तरपूर्वग्रहणमितरावान्तरदेशव्यावृत्त्यर्थम् ।

दिक्षु द्वाराणि ।

कुर्वन्तीति शेषः । श्रुतौ दिक्ष्वतीकाशान्करोतीत्यतीकाशशब्दो द्वारवाच्येव । तानि अरत्निमात्राणि । पृष्ठ्यासूत्रपाश्चात्योदक्सूत्रसंपाताद्दक्षिणतः प्रादेशमिते देशे द्वारस्तम्भः । एवमुत्तरतो द्वारस्तम्भः । एवं प्रत्यग्द्वारं संपन्नं भवति । पृष्ठ्यासूत्रपौरस्त्योदक्सूत्रसंपाताद्दक्षिणत उत्तरतश्च पूर्ववदेकैकं स्तम्भं दद्यात् । एवं प्राग्द्वारं संपन्नं भवति । उदक्सूत्रदक्षिणप्रान्तसूत्रसंपातात्प्राच्यां प्रतीच्यां च पूर्ववदेकैकं स्तम्भं दद्यात् । एवं दक्षिणद्वारं संपन्नं भवति । उदक्सूत्रोत्तरप्रान्तसूत्रसंपातात्प्राच्यां प्रतीच्यां च पूर्ववद्द्वार-

स्तम्भौ । एवमुत्तरद्वारं संपन्नं भवति । अरत्निप्रमाणं शुल्बसूत्रे—चतुर्विंशत्यङ्गुलयोऽरत्निस्तदर्धं प्रादेश इति क्लृप्तिरिति । सार्वत्रिकी चैषा क्लृप्तिरिति ज्ञेयम् ।

**एकद्वाराः काम्याः कल्पाः ।**

एकमेव द्वारं येषु कल्पेषु प्रकारेषु त एकद्वाराः कल्पाः काम्या भवन्तीति शेषः । न तु प्राकृतानामेव द्वाराणामर्थवादो यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनातीत्यादिवत् । यः कामयेतेतिविशेषविधानात् । तेन तेन निष्क्रान्तः सर्वं करोति यद्द्वारान्तरेण कर्तव्यं तच्च दक्षिणया द्वारोपनिर्हृत्येत्यादौ यदि प्रतीच्यामेव द्वारं तदा न प्रतीच्या द्वारा निष्क्रामतीति शास्त्रान्तरप्रोक्तः प्रतिषेधः । तथा पूर्वया द्वारा प्राग्वंशं प्रविश्येत्यादिनियमो न भवति । तथा गवादीनां बन्धनार्थं शङ्कूनां च न द्वार्यादिनियमः । होतुः समीक्षणेऽभिध्यानमात्रं, शालामुखीयात्प्राक्सांकाशिनं सर्वदा कर्तव्यमेव । द्वारान्तरेण निष्क्रम्यापि उत्तरपूर्वदेश एवोच्छिष्टखरकरणम् । नन्विदं सूत्रं व्यर्थं प्राग्द्वारः स्वर्गकामस्येत्यादिनैव सिद्धेरिति चेत्सत्यम् । स्वर्गकामनोद्देशेन प्राग्द्वारकरणेऽपीतरेषां नित्यत्वेनानिवृत्तिः स्यात्सा मा भूदितिकृतु एकस्य काम्यत्वे सर्वेषां नित्यत्वेऽपि निवृत्तिर्यथा स्यादित्येतादृशार्थज्ञापनार्थत्वेन वैयर्थ्याभावात् ।

कामानाह[1]—

**प्राग्द्वारः स्वर्गकामस्य दक्षिणाद्वारं पितृलोककामस्य प्रत्यग्द्वारं मनुष्यलोककामस्योदग्द्वारं प्रजाकामस्योत्तरतःपुरस्ताद्यः कामयेतोभयोर्लोकयोर्ऋध्नुयामिति ।**

उत्तरत इति तस्प्रत्ययसंहितपाठेन यद्यपि द्वारद्वयं प्रतीयते तथाऽपि एकद्वाराः काम्याः कल्पा इत्युपक्रमादुत्तरपूर्वया द्वारोपनिर्हृत्येति दर्शनाच्चैकमेव द्वारमवान्तरदेश उत्तरपूर्वरूपे तस्प्रत्ययसहितः पाठोऽपपाठ एव । अन्यत्स्पष्टम् ।

दिक्षु द्वाराणीति सर्वद्वारकल्पस्य काम्यत्वमप्याह—

**सर्वतोद्वारं यः कामयेत सर्वासु दिक्ष्वृध्नुयामिति ।**

स्पष्टम् । ननूत्तरपूर्वया द्वारोपनिर्हृत्येति सिद्धवदनुवादात्तदपि नित्यमिति चेन्न । कामश्रुतिविरोधात्पाक्षिकेणाप्युपलक्षणसिद्धेश्च ।

**प्रतिमायाश्च कुर्वन्ति दिक्षु प्रधानरूपाणि ।**

प्रतिमाशब्दः सादृश्यवाची । प्राग्वंशरूपा या शाला तत्प्रतिमा तत्सदृशी तत्समन्तप्रदेशे सदोहविर्धानमण्डपार्थं स्थलमवशोध्य यावदभीष्टप्रदेशं बाह्यतोऽन्या शाला तस्या अपि प्रान्तेषु दिक्षु द्वाराणि कुर्वन्तीत्यर्थः । सादृश्यमत्र निबिडच्छायत्वोच्चत्वाभ्याम् ।

---

[1] ख. ग. कामनामाह ।

अर्थात्परितःश्रयणम् । द्वारेषु विशेषमाह—प्रघाणरूपाणीति । बाह्यशालाया द्वाराणि प्रघाणरूपाणि कुर्वन्तीत्यर्थः । दिक्ष्विति वचनं विदिग्व्यावृत्त्यर्थम् । प्रहण्यते पादाभ्यां गमन आगमने च स प्रघाणः । हननं ताडनम् । अत्र हननशब्देन हननयोग्यता लक्ष्यते । योगरूढं पदम् । अगारैकदेशे प्रघणः प्रघाणश्चेति निपातनात्साधुः । अलिन्दरूपद्वारावयववाच्ययं शब्दः । प्राग्वंशस्य सदोहविर्धानयोश्च समानम् सांकाशिनमित्ययं विधिर्बाह्यशालायाः पूर्वापरद्वारयोर्न भवति । अविधानादावश्यकाशुचिपुरुषादिदृष्ट्यसंपादनानुकूलत्वाच्च । बाह्यशालाद्वाराणि सर्वाणि कपाटवन्त्यपि कार्याणि श्वादीनामप्रवेशाय । द्वारवर्जं सर्वतः परिश्रयणम् ।

**उत्तरेण प्राग्वंशं परिश्रिते यजमानस्य केशश्मश्रूणि वापयते ।**

उत्तरेणेत्येनबन्तम् । प्राग्वंशाद्बहिरुत्तरतः समीप एवेत्यर्थः । उत्तरणेति वचनं प्रागादिदिग्व्यावृत्त्यर्थम् । दूरदेशव्यावृत्त्यर्थमेनपो वचनम् । प्राग्वंशवचनादग्न्यायतनस्य बाह्यशालाया गार्हपत्यार्थोदीचीनवंशायाः शालायाश्च व्यावृत्तिः । तेनात्रैकैव शाला भवति नतु शालाद्वयमिति । प्राग्वंशशब्दः शालाविशेषवाची । तथाच कोशः— प्राग्वंशः प्राग्घविर्गेहादिति । यो हविर्गेहाद्धविरर्थद्रव्यस्थापनार्थाद्गेहात्प्राक्पुरतो मण्डपः स प्राग्वंश इत्यर्थः। एतेनैव ज्ञायते यज्ञोपयुक्तहविरादिसंभारजातं प्राग्वंशस्य पश्चात्स्थापयितव्यमिति । अस्ति चायमर्थः स्पष्टः शास्त्रान्तरे—पश्चात्पत्नीशाला तस्या एव समीपे संभारान्निदधातीति । अत्र यजमानः प्राङ्मुख एव । उदङ्मुखत्वे विहारस्य पृष्ठतः कृतिः स्यात् । सा चात्यन्तमनुचिता । एतदभिप्रेत्यैव प्राङ्मुखतामत्राऽऽह बौधायनः— अथ प्राङ्मुखस्य दक्षिणं गोदानमद्भिरुनत्त्याप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चस इतीति । उत्तरेण प्राग्वंशं परिश्रिते यजमानस्य श्मश्रूण्यग्रे वापयतेऽथोपपक्षावथ केशानित्येतावतैव सिद्धे पृथक्सामान्यप्रतिज्ञानमन्यत्रापि यत्र केशश्मश्रूणि वापयत इति श्रूयते तत्राप्ययमेव क्रमो नतु केशश्मश्रु वपत इतिवाक्यानुसारेण क्रम इति । प्राग्वंशमित्यत्रैनपा द्वितीयेति द्वितीया पष्ठ्यर्थे । परिश्रिते कटादिभिर्वेपनार्थं प्रवेशार्थं पूर्वतो द्वारं कुर्यात् । उत्तरेण प्राग्वंशमित्यरण्ये दीक्षापक्षे । अस्मिन्पक्ष एव प्राग्वंशस्य संभवात् । गृहे दीक्षापक्षे तु प्राग्वंशासंभवे दीक्षणीयार्थविहारादुत्तरत एतद्भवति । प्राग्वंशसंभवे तु तदुत्तरत एव । अथवा गृहे दीक्षापक्षेऽपि प्राग्वंश आवश्यकः । उत्तरेण प्राग्वंशमिति वचनात्तं प्राग्वंशं प्रपाद्येति वक्ष्यमाणसूत्राच्च । प्रायणीयाद्यर्थं प्राग्वंशो भिन्न एव । यजमानग्रहणं पत्नीव्युदासार्थम् । स्पष्टमाहाऽऽपस्तम्बः—एवं पत्नीकेशवर्जमिति । वसिष्ठस्मृतिरपि—

केशानां नास्ति नारीणां वपनं व्रतयज्ञयोः ।<br>
गोवधादिषु सर्वेषु च्छेदयेदङ्गुलद्वयम् ॥ इति ।

ऋत्विग्व्युदासस्तु सुतराम् । ऋत्विजां प्राधान्याभावात् । जैमिनिरपि तृतीयाध्याये सप्तमे पादे फलसंयोगात्तु स्वामियुक्तं प्रधानस्येत्येतेन सूत्रेणाऽऽह । सूत्रार्थस्तु स्वामियुक्तं वपनपयोव्रतादिकं प्रधानस्य धर्मः । कुतः, फलसंयोगात्फलभाक्त्वरूपभोक्तृत्वसंयोगात्, योग्यताजननद्वारा प्रधानफलोत्पत्त्यर्थत्वादिति वेति । श्मश्रूणि च केशाश्च केशश्मश्रूणि । केशशब्दस्याद्न्तत्वात्, यच्छ्मश्रुणस्तत्पुरुषाणा१ रूपमिति श्रुतेः श्मश्रुणः पुरुषशोभाधायकत्वेनाभ्यर्हितत्वाद्वा पूर्वनिपातः। उत्तरत्र कर्म(क्रम)विधानात्क्रमविधायकं नैतत्। केशश्मश्रुग्रहणं लोमोपलक्षणम्। न चेदुपपक्षयोः क्रमनियमायोगात्। वापयत इत्यत्र स्वार्थे णिच्। तेनाध्वर्युरेव वपेत्, नतु तेन वापयेदिति । कृते नापितकृत्य इति यजमानसूत्रमस्मिन्नर्थे लिङ्गम् । लोकविद्विष्टत्वाच्छिक्षाया अभावाच्च मन्त्रेण किंचिद्वपनं कृत्वा नापितेनावशिष्टं कृत्स्नं वपनं कारयेत्। एतेन रथकारवन्मन्त्रपाठकल्पनाऽपि निरस्ता ।

श्मश्रूण्यग्रे वापयतेऽथोपपक्षावथ केशान् ।

अत्र पुनर्वापयत इति वचनं दैवं वपनमपि पक्षेऽत्र भवतीतिज्ञापनार्थम् । उक्तं चैतत्स्पष्टमापस्तम्बेन–उत्तरेण बहिः प्राग्वंशं परिश्रिते यजमानः केशश्मश्रूणि वापयत उपपक्षावग्रेऽथ श्मश्रूण्यथ केशानपि वा श्मश्रूण्युपपक्षावथ केशानिति । प्रयोजकत्वार्थक एवात्र णिच्, नतु स्वार्थ इत्येतादृशनियमज्ञापनार्थं वा। गोदानोन्दनं तु अध्वर्युकर्तृकमेव। युक्तं चैतदध्वर्युकर्तृकत्वं समन्त्रककर्मत्वात्, णिजभावाच्च। नखनिकृन्तनमप्यध्वर्युकर्तृकमेव। णिजभावात्कृते नापितकृत्य इति पूर्वोक्तलिङ्गाच्च। वपनमन्त्राणां वपनकरणत्वादेव मध्ये मन्त्रपाठो न दोषायेत्येवमेव कल्प्यं शिष्टसमाचारानुरोधात् । लिङ्गमप्यत्रास्ति केशेषूप्यमानेषु जपतीति । मुखगताः केशाः श्मश्रूणि । उपपक्षो बाहुमूलम् । नापितोपोपपक्षौ मे निकृत्तनखां प्रब्रूतादिति बौधायनोक्तप्रैष उपपक्षशब्दस्यात्रैव रूढिदर्शनात् । कपोलभाग इति केचित् । शिरोगताः केशाः केशा एव संज्ञान्तराभावात् । अग्रग्रहणं नियमार्थम् । अग्र आदावेव श्मश्रूणि वापयत इत्यर्थः । तेन मध्यश्मश्रुवपनस्याऽऽक्षुरवपनस्य व्यावृत्तिः । यद्यपि मध्यश्मश्रुवपनत्वाद्दैवस्यापि निवृत्तिः सिद्धा तथाऽपि अनन्तरोक्तज्ञापकबलात्तस्य न निवृत्तिः । अथोपपक्षावथ केशानित्युभयत्राथशब्दो ब्राह्मणानुकरणार्थः । अथवाऽथोपपक्षावित्यत्राथशब्द उभयाधिकारप्रदर्शनार्थः । तेन पत्न्या अप्युपपक्षवापनं सिद्धं भवति । उक्तं च बौधायनेन–नापितोपोपपक्षामित्यादिना प्रैषेण । अथ केशानित्यत्राथशब्द उभयाधिकारव्यावृत्त्यर्थः। तेन केशवापनं यजमानस्यैव न पत्न्याः। एवं पत्नी केशवर्जमित्यापस्तम्बोऽपि ।

---

१ क. ँन के ।

अथ वपनविधिमाह—

आप उन्दन्तु जीवस इति दक्षिणं गोदानमुनत्ति ।

गवि पृथिव्यां दीयते स्वापार्थं यत्तद्गोदानं श्रोत्रसमीपवर्तिप्रदेशः । तच्च दक्षिणं तदुनत्ति क्लेदयति आर्द्रीं करोतीति यावत् । उष्णोदकमिश्रणं कृताकृतम् । लक्षणया गोदानाख्यप्रदेशस्थाः केशा गृह्यन्ते । यद्यपि केशोन्दनविधेरपेक्षा तथाऽपि केशमूलानां गोदानप्रदेशसंबद्धत्वात्तदुन्दनं विना मूलोन्दनासंभवाद्गोदानोन्दनविधिरिति द्रष्टव्यम् । गोशब्दस्य पृथिवीवाचित्वं निघण्टौ गौर्ग्मेति पृथिवीनामसु पाठात् ।

ओषधे त्रायस्वैनमित्यूर्ध्वाग्रामोषधिमन्तर्दधाति ।

ऊर्ध्वाग्रामोषधिमूर्ध्वाग्रं दर्भं गोदानाख्यप्रदेशस्योपरि स्थापयति । ओषधिशब्दस्य दर्भे प्रवृत्तिर्या जाता ओषधयो देवेभ्यस्त्रियुगं पुरेति बर्हिरभिमन्त्रणमन्त्रे दृष्टाऽस्ति । दर्भमन्तर्धायेत्येवाऽऽपस्तम्बः । दर्भपुञ्जीलं वौषधिशब्देन ग्राह्यम् । तथा च कर्मान्ते बौधायनः 'सदर्भपुञ्जीलमुद्वृह्येति कतरत्तु खल्विदं दर्भपुञ्जीलं भवतीति यदेवैतद्गोदानयोर्निदधाति' इति ।

स्वधिते मैनꣳ हिꣳसीरिति क्षुरेणाभिनिदधाति ।

स्वधितिशब्दस्य पशुविशसनशस्त्रपरत्वं नात्राभिप्रेतं प्रकृतेऽनुपयोगादित्यभिप्रेत्याऽऽह क्षुरेणेति । क्षुरेणेति तृतीया द्वितीयार्थे । तेन क्षुरमित्येवं प्रयोगो भवति । अभिनिधानं दर्भस्योपरि स्थापनम् ।

देवश्रूरेतानि प्रवप इति प्रवपति ॥ १ ॥

दक्षिणं गोदानमिति शेषः । दक्षिणगोदानस्थान्केशानिति तदर्थः । मञ्चाः क्रोशन्तीतिवल्लक्षणा । सदर्भाणां केशानां वपनमेतानीति लिङ्गात् । सामान्ये नपुंसकमिति नपुंसकलिङ्गता । दक्षिणं गोदानमारभ्य प्रदक्षिणं सर्वान्केशान्वपतीत्यर्थसिद्धम् । एतदभिप्रायेणैवोत्तरगोदानावचनम् । उन्दनादिसंस्कारा दक्षिणगोदानप्रदेश एव कार्या इति दर्शयितुं दक्षिणगोदानवचनं नत्वितरकेशवपननिवृत्तिरनेन क्रियते । अत एव पूर्वत्र सामान्यतः केशवपनप्रतिज्ञानं कृतं श्मश्रूण्यग्रे वापयतेऽथोपपक्षावथ केशानिति । श्रुतावपि श्रुतं मृता वा एषा त्वगमेध्या यत्केशश्मश्रु मृतामेव त्वचममेध्यामपहत्य यज्ञियो भूत्वा मेधमुपैतीति । तूर्ष्णी वोत्तरं गोदानं पारिशेष्यात् । शिखायास्तु नैव वपनम् । सत्रेषु तु वचनाद्वपनं शिखाया इति धर्मसूत्रात् ।

सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥ इतिस्मृतेश्च ।

---

१ क. °मू । य° ।

भ्रुवौ प्रकोष्ठे उपस्थं च वर्जयित्वा लोम्नां वपनम् ।

उपपक्षश्मश्रुकेशान्वापयीत क्रमात्सदा ।
शिखाप्रकोष्ठभ्रूपस्थान्वर्जयित्वा द्विजोत्तमः ॥ इति स्मृतौ निषेधात् ।

उपस्थग्रहणं गुदोपलक्षणम् । इदं वपनं जीवत्पितृकस्यापि भवति ।

गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरौ मृते ।
आधाने सोमपाने च वपनं सप्तसु स्मृतम् ॥ इति निगमोक्तेः ।
विना तीर्थं विना यज्ञं मातापित्रोर्मृतिं विना ।
यो वापयति लोमानि स पुत्रः पितृघातकः ॥ इति प्रचेतोवचनाच्च ।

तत्रापि पितरि कृतदीक्ष एव पुत्रस्याधिकारः । अन्यथा कृते परिवेत्तृत्वादिदोषापत्तेः । विस्तरस्तु मत्कृतस्मार्तसंस्काररत्नमालायामवगन्तव्यः । पौर्णमास्यां दीक्षायां कृतवपनश्चेद्वपनं न भवति अर्थलोपात् । तथा सोमाधाने चेति केचित् । केशश्मश्रुवृद्ध्यभावेऽपि वपनं राजक्रयवत्संस्कार इति तदानीं मन्त्रजपः, छिन्ने लून इति भारद्वाजवचनादित्यन्ये । अस्मिन्पक्षे दक्षिणोत्तरभागभेदेन वपनम् । अवचनादेवं ज्ञायत एवमुत्तरं गोदानमित्यापस्तम्बोक्तं नाभिमतमिति । तथाच बौधायनः—एतयैवाऽऽवृतोत्तरं गोदानमद्भिरुनत्ति यजुषा वा तूष्णीं वेति ।

अभ्यन्तरं नखानि निकृन्तते हस्त्यान्यग्रेऽथ
पद्यानि सव्यस्याग्रे कनिष्ठिकातोऽथ दक्षिणस्य ।

यथाऽङ्गुल्यग्रेभ्योऽभ्यन्तरं भवति तथा नखानि निकृन्तते छिनत्ति अध्वर्युरेव । शेक्षाया अभावाद्गर्हितत्वाच्च नापितः । निकृन्तत इत्यत्र नीत्युपसर्गो नितरां छेदनार्थः । अध्वर्योरपि वपनकर्तृत्वात्स्नानं तूष्णीमेव शुद्ध्यर्थम् । हस्त्यानि हस्तसंबन्धीनि अग्र आदौ नेकृन्तते छिनत्ति । अथानन्तरं पद्यानि पादसंबन्धीनि । पादार्घाभ्यां चेति यत्प्रत्ययः । ाद्यत्यतदर्थे इति पादशब्दस्य पदादेशः । हस्त्यान्यग्र इत्येतावतैवार्थादनन्तरं पद्यनेकृन्तने सिद्धेऽथ पद्यानीति वचनं कालाव्यवधानार्थम् । सव्यस्य वामस्य हस्तस्याग्रे ाथमं कनिष्ठिकात आरभ्येति शेषः । अथानन्तरं दक्षिणस्य हस्तस्य । सव्यस्याग्रे कनिष्ठिकात इत्यनेनैव दक्षिणस्य हस्तस्यानन्तरं नखनिकृन्तने सिद्ध इदं वचनं दक्षिास्य हस्तस्याप्यभ्यन्तरमेव कनिष्ठिकात आरभ्यैव नखनिकृन्तनं नत्वेतद्व्यतिरिक्तलोकप्रसिद्धप्रकारेणेत्येतदर्थम् । एवं सव्यस्य पादस्याग्रेऽनन्तरं दक्षिणस्य कनिष्ठिकात आरभ्यैव । पूर्वत्र हस्त्यान्यग्रेऽथ पद्यानीत्युभयोपक्रमात् । सव्यस्याग्रे कनिष्ठिकातोऽथ दक्षिणस्येत्यत्र सव्यदक्षिणशब्दाभ्यां सव्यहस्तपादयोर्दक्षिणहस्तपादयोर्यथाक्रमं ग्रहणम् । सव्यस्य दक्षिणस्येति सामान्यतो निर्देशाद्धस्तनखनिकृन्तनवत्पादनखनेकृन्तनेऽप्ययमेव प्रकारः । अभ्यन्तरं नखानि निकृन्तते सव्यानि हस्त्यान्यग्रे कनि-

ष्ठिकातोऽथ दक्षिणान्येवं पद्मानीत्येकान्तयेनैव सिद्धौ भेदेन सूत्रकरणं सव्यस्याग्रे कनिष्ठिकातोऽथ दक्षिणस्येत्यस्य क्रमस्यानित्यतां ज्ञापयति। नखनिकृन्तनं पत्न्या अपि यजमानपदाश्रवणात्। आपस्तम्बेनैवं पत्नीकेशवर्जमित्यनेन नखनिकृन्तनकर्तव्यताया बोधनात्, बौधायनेन स्पष्टतयाऽभिधानाच्च।

स यदाऽक्ताक्षो भवत्यथैनमेकविंशत्या दर्भपुञ्जीलैस्त्रेधा विभक्तैस्त्रिः सप्तभिः सप्तभिः पावयति चित्पतिस्त्वा पुनात्वित्येतैर्मन्त्रैरूर्ध्वं नाभेरुन्मार्ष्टि सकृद*वाङवमार्ष्ट्यच्छिद्रेण पवित्रेणेति सर्वत्रानुषजति।

स यदाऽक्ताक्षो भवत्यथेत्यन्तं सूत्रमञ्जनपावनयोः कालाव्यवधानार्थं नतु प्रयोगक्रमज्ञानार्थं वृत्रस्य कनीनिकाऽसीत्यारभ्य न पुनर्निषेचयतीत्यन्तेन याजमानप्रकरणस्थेन सूत्रेण विधास्यमानादञ्जनादनन्तरं तस्य ते पवित्रपत इत्यारभ्य पवमानः सुवर्जन इति चैतमनुवाकमित्यन्तेन सूत्रेण पाठ्यमानस्य जपं विधास्यमानेनाऽऽचार्येण याजमानप्रकरणस्थेन सूत्रेणैव तस्य ज्ञापयिष्यमाणत्वात्। सोऽभ्यक्तः। इदं च तच्छब्दोपादानं पावनविषय एनमित्येतच्छब्दोपादानं चाभ्यञ्जनाञ्जनपावनानां संयुक्तत्वरूपापनार्थम्। तेन संयुक्तानि त्वेकापवर्गाणीति परिभाषयैतत्त्रितयं यजमानस्य कृत्वाऽनन्तरं पत्न्या नतु एकैकमेकैकस्येति। तेनास्मत्सूत्रादपीदमपि ज्ञातं भवति पत्न्या अप्येतत्त्रितयमस्तीति। यदा यस्मिन्काले उक्ते अक्षिणी येनैतादृशो भवति अथ तस्मिन्कालेऽनन्तरमेवैनमक्ताक्षमेकविंशत्यैकविंशतिसंख्याकैर्दर्भपुञ्जीलैस्त्रेधा विभक्तैस्त्रेधाविभागवद्भिः सप्तभिः सप्तभिस्त्रिः पावयतीत्यर्थः। विंशत्याद्याः सदैकत्व इति कोशादेकविंशत्येत्यत्रैकवचनम्। ननु त्रेधा विभक्तैरित्येतावदेवास्तु किमर्थं सप्तभिरिति चेन्न। त्रेधा विभक्तैरित्यनेन विभागमात्रे प्रापिते कृतविभागैः पृथग्भूतैरमिलितैः सर्वैरपि त्रिवारं पावनमित्येतादृशार्थनिवारणार्थत्वात्समं स्यादश्रुतत्वादिति न्यायज्ञापनार्थत्वाद्वा। दर्भपुञ्जीलं दर्भकाण्डं सप्त दर्भा इति केचित्। बह्वृचब्राह्मणे तु पिञ्जूलैरित्युक्तम्। पिञ्जूलं विशाखो दर्भ इति केचित्। पिञ्जूलपुञ्जीलशब्दौ पर्यायावित्यन्ये। स यदाऽक्ताक्षो भवत्यथैनमित्यत्र पुंस्त्वमुद्देश्यगतत्वादविवक्षितं ज्ञेयं ब्राह्मणोऽग्नीनादधीतेतिवत्। नच क्षौमे वसानौ जायापती अग्नीनादधीयातामिति श्रुतौ सहाधिकारश्रवणाद्ब्राह्मण इत्यत्र पुंस्त्वस्याविवक्षितत्वं प्रकृते सहाधिकारबोधकश्रुतेरभावात्कथं पुंस्त्वस्याविवक्षितत्वमिति शङ्क्यम्। पूतौ जायापती दीक्षेते इत्यत्रापि सहाधिकारश्रुतिश्रवणात्पुंस्त्वाविवक्षाया अनपायात्। चित्पतिस्त्वा पुनात्वित्येतैर्मन्त्रैरित्यत्रैतैरिति वचनं चित्पतिस्त्वा

* अवाग्वमार्ष्टीति टीकानुसारी पाठः।

पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वित्येतेषामन्यतमेन सकृन्मन्त्रेण द्विस्तूष्णीमिति स्यादितरयोर्विकल्पार्थत्वं स्यात्तन्मा भूत्किंतु सर्वेषां पावनकरणत्वं यथा स्यादित्येतदर्थम् । एकैकां क्रियां प्रति एकैकस्य मन्त्रस्य करणता समं स्यादश्रुतत्वादितिन्यायसिद्धेति ज्ञापयितुं मन्त्रैरिति वचनम् । तेन सर्वैराद्यं पावनं तूष्णीमितरे इति निरस्तं भवति । पूर्वं यत्रिः पावयतीत्युक्तं तस्यायं विशेषविधिर्द्विरूर्ध्वमित्यादिकः । नाभेरुर्ध्वं द्विरुन्मार्ष्टि । उच्छब्दादूर्ध्वमेव मार्ष्टि । सकृदेकवारम् । अत एवाविच्छिद्यैव पावनम् । अन्यथा सकृत्त्वं भज्येत । अवाक्, अवाधोऽञ्चति गच्छति समाप्ता भवतीत्यवाक् । नाभेरित्यनुवर्तते । नाभिमारभ्य पादपर्यन्तं मार्ष्टीत्यर्थः । अवाङित्यपपाठः । वस्त्रान्तार्हितानां पावने वचनाभावेऽपि वस्त्रशिथिलीकरणस्यापि विगर्हितत्वाद्वस्त्रान्तार्हितानामेव पावनं कुर्वन्ति शिष्टाः । नग्नत्वापत्तेर्विगानापत्तेश्चेदानीम् । अच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति सर्वत्र मन्त्रेष्वनुषजति । अच्छिद्रेण पवित्रेणेत्यनुषजतीत्येतावतैवेतरयोर्मन्त्रयोरर्थादनुषङ्गसिद्धौ सर्वत्रेति वचनं चित्पतिर्मा पुनातु वाक्पतिर्मा पुनातु देवो मा सविता पुनात्विति त्रिषु याजमानमन्त्रेष्वप्यनुषङ्गलाभार्थम् । आध्वर्यवमन्त्रान्त्यमन्त्रे तु श्रुतौ पठित एवास्ति । अतो नात्रानुषङ्गः । एतद्दर्भपुञ्जीलनिरसने विशेषमाह द्वैधे बौधायनः—अथैनान्यद्भिः प्रोक्ष्योदञ्चयवक्खिदेदिति । अथैनान्यद्भिरभ्युक्ष्योदञ्च्युत्खिदेदिति शालीकिमतम् । उत्तानेन हस्तेन कर्तव्यं सेचनं प्रोक्षणम् । मुष्टीकृतेन हस्तेन कर्तव्यं सेचनमभ्युक्षणमित्यनयोर्भेदः । खेदनं निरसनम् । अवेत्युपसर्गादधः कर्तव्यम् । उदित्युपसर्गादूर्ध्वमिति निरसने भेदो द्रष्टव्यः ।

तं प्राग्वंशं प्रपाद्यात्र दीक्षणीयामेके समामनन्ति ।

बहिर्गतस्य यजमानस्य प्राग्वंशप्रवेशं विना दीक्षणीयाया असिद्धेरर्थतः सिद्ध इदं वचनमध्वर्योः प्रयोजककर्तृत्वार्थम् । तेनोपवेशनान्तं यजमानस्य हस्तं धृत्वा तेन कारणीयम् । समन्त्रका क्रिया तु यजमानस्यैव । इदं च प्रयोजककर्तृत्वं बौधायनेनाप्युक्तं सविशेषम्—अथैन॰ सव्ये पाणावभिपाद्य शालामानयत्या वो देवास ईमहे सत्यधर्माणो अध्वरे यद्वो देवास आगुरे यज्ञियासो हवामह इतीति । द्वैधे—अथैन॰ सव्ये पाणावभिपाद्येति दक्षिण इति पूर्वः कल्पो बौधायनस्योत्तरतः शालीकेरिति । अथैन॰ सव्ये पाणावभिपाद्येत्ययं विशेषोऽत्र तं प्राग्वंशं प्रपाद्य दीक्षणीयामेके समामनन्त्यत्रेत्यन्वयः । अत्रास्मिन्काले पूर्वत्र दीक्षणीया योक्ता साऽत्र कर्तव्या न पूर्वत्रेत्यर्थः । अत्रेतिवचनाभावे प्राग्वंशप्रपादनोत्तरं वैकल्पिकी द्वितीया दीक्षणीयेत्यर्थः स्यात्तस्य निवृत्त्यर्थमत्रेतिवचनमावश्यकम् । अत्रेष्टिशब्दप्रयोगाभावादिष्ट॰ हविरिदमेषां मयीत्य-

---

१ क. 'त्र सर्वेम' । २ ङ. ज. ढ. ञ. 'यानिष्टिमे' ।

न्वाधानमत्रै न प्रयोज्यम् । प्रपाद्येति ल्यप्प्रत्ययप्रयोगः प्रपादनदीक्षणीयेष्ट्योरव्यवधानार्थः । तेनाऽऽहवनीयाभिमन्त्रणं दीक्षणीयेष्ट्युत्तरमेव भवति न तु तत्पूर्वमिति सिद्धं भवति । अत्र प्रपादनमुपवेशनमेव । गृहे दीक्षापक्षे प्राग्वंशासंभवे दीक्षणीयार्थविहारं प्रपादयति । अत्र दीक्षणीयापक्षे व्रतोपायनपत्नीसंनहनादीन्यत्रापि न भवन्ति सिद्धार्थत्वात् । अत्र प्राग्वंशप्रपादनविधानात्पावनान्तं प्राग्वंशाद्बहिरेवेति अर्थत एव सिद्धम् ।

ध्रुवाशेषादाकूत्यै प्रयुजेऽग्नये स्वाहेति
स्रुवेण चतस्रो दीक्षाहुतीर्जुहोति ।

प्रतिग्रहणं मन्त्रेण ध्रुवाप्यायनं प्राकृतम् । ऐष्टिकव्यतिरिक्ते समन्त्रमाप्यायनं नेति केचित् । यमनियमपरिग्रहानुकूलयोग्यतारूपा दीक्षा तदर्था आहुतयो दीक्षाहुतयस्ता दीक्षाहुतीर्औवाद्दीक्षाहुतीर्यजमानसंस्कारार्थाः । तेन सत्रे प्रतियजमानमेता भवन्ति । यज्ञस्योद्यत्या इति श्रुतेर्यज्ञस्योद्यमनार्थाश्च । अतः सर्वतोमुखे प्रतिविहारमेता भवन्ति । एवमस्थियज्ञे यजमानाभावेऽपि च । एकैकेन मन्त्रेणैकैकाऽऽहुतिः । अग्नये स्वाहेत्यन्ता मन्त्राः । एतेषु पठित एव स्वाहाकारः । तेनैव प्रदानं नान्यः स्वाहाकारः प्रयोज्यः । देवतापदाव्यवहितोत्तरस्वाहाकारस्यैव दानार्थत्वस्य निर्णीतत्वेन प्रकृते तथाभूतस्वाहाकारस्य सत्त्वेन तेनैव दानसिद्धेः । एकस्वाहाकारसत्त्वे द्वितीयस्वाहाकारप्रयोगो मान्त्रिकाणामेव न वैदिकानाम् । वैदिकेषु कर्मसु वेदोक्तस्यैव प्रबलत्वात् ।

आपो देवीरिति स्रुचा पञ्चमीम् ।

जुहोतीत्यनुवर्तते । स्रुग्ग्रहणं स्रुवनिवृत्त्यर्थम् । जुहूमिन्नलौकिकस्रुक्प्राप्त्यर्थं वा । पञ्चमीमितिवचनमेतस्या अपि दीक्षाहुतित्वसाधनार्थम् । तेन ध्रुवाशेषादेव होमः सर्वतोमुखे प्रतिविहारमनुष्ठानं च सिध्यति । बृघातु स्वाहेत्यन्तो मन्त्रः ।

विश्वे देवस्य नेतुरिति षष्ठीं द्वादशगृहीतेन स्रुचं पूरयित्वा
बिलावकाशां वा कृत्वोत्तमस्रुवेऽभिपूरयत्युपोत्तमे वा ।

द्वादशगृहीतेन स्रुचं पूरयित्वा विश्वे देवस्य नेतुरिति षष्ठीमित्यन्वयः । जुहोतीत्यनुवर्तते । अत्रापि पठित एव स्वाहाकारस्तेनैव प्रदानं नान्यः स्वाहाकारः प्रयोज्यः । अत्र दशकृत्व आप्यायनम् । अन्तिमे ध्रौवसमाप्तिः । षष्ठीवचनप्रयोजनं पञ्चमीवत् । पुष्यसे स्वाहेत्यन्तो मन्त्रः । बिलेऽवकाशो यस्याः सा, एतादृशीं स्रुचं कृत्वा तया वा जुहुयात् । अनेन न्यूनया जुहोतीति पक्षः प्रदर्शितो भवति । द्वादशगृहीतेन ध्रौवाज्येनाभिपूरणं यदि न जायते तदा बिलावकाशां वा कृत्वेति पक्षः । पूर्णत्वपक्षनिर्वाहार्थमुपायमाह—उत्तमस्रुव इत्यादि । उत्तमस्रुवेऽन्तिमस्रुवे गृहीते सति अभिपूरयत्याज्य-

१ ख ग. ङ. °वेणाभि° ।

स्थास्याज्येन स्थाल्याः स्रुवेण वा। उपोत्तमेऽन्तिमपूर्ववर्तिनि स्रुवे गृहीते सति एक-स्रुवग्रहणपर्याप्तमवकाशमवशेष्याभिपूर्यावशिष्टस्रुवपरिमितमाज्यं गृह्णीयादित्यर्थः। इष्टि-शेषद्रव्यत्वात्समिदाधानपरिक्रमणे न स्त इति केचित्। एतस्या एवौद्ग्रहणसंज्ञा। तथाच श्रुतिः—प्रजापतिर्यज्ञमसृजत सोऽस्मात्सृष्टः पराङैत्स प्र यजुरव्लीनात्प्र साम तमृगुदयच्छद्यदुदयच्छत्तदौद्ग्रहणस्यौद्ग्रहणत्वमिति। अस्या अयमर्थः—पलायमानं यज्ञपुरुषं ग्रहीतुं प्रजापतिना प्रेरितानां त्रिविधमन्त्राभिमानिपुरुषाणां मध्ये यजुरभिमानिनं पुरुषं सामाभिमानिनं पुरुषं च स यज्ञः प्रकर्षेणाव्लीनादावृणोत्। ऋगभिमानी पुरुषस्तं यज्ञमुदगृह्णात्। यद्यस्मादुदयच्छत्तत्तस्मादेतदौद्ग्रहणसंज्ञकं भवति एतदेवौद्ग्रहणस्यौ-द्ग्रहणत्वमिति।

**कृष्णाजिनस्य दक्षिणं पूर्वपादमन्तर्मा॑ꣳसं परिषीव्यति।**

कृष्णो मृगस्तस्याजिनं चर्म कृष्णाजिनम्। कृष्णग्रहणं व्याघ्रादिनिवृत्त्यर्थं तेन व्याघ्राजिने परिषीवणं न भवति। व्याघ्राजिनस्य प्राप्तिरभिचारकर्मणीत्यत्र ज्ञापकमग्रे वक्ष्यते। सूत्रान्तरे दृष्टं चास्ति। दक्षिणं पूर्वपादमित्यनेनात्र साङ्गमजिनं गम्यते। अन्तर्मांसमन्तर्विशसनम्। परिषीव्यति सूच्या दर्भेणेन वा सूत्रेण।

**द्वे वा विषूची मा॑ꣳससꣳहिते करोति।**

द्वे कृष्णाजिने विषूची विपर्यस्तशिरःपुच्छे मांससंहते मांसप्रदेशे संहते परस्परं सूच्या दर्भेणेन वा सूत्रेण परिषूते करोत्यवियोगायेत्यर्थः।

**इन्द्रशाकर गायत्रीं प्रपद्ये तां ते युनज्मीन्द्रशाकर त्रिष्टुभं प्रपद्ये तां ते युनज्मीन्द्रशाकर जगतीं प्रपद्ये तां ते युनज्मीन्द्रशाकरानुष्टुभं प्रपद्ये तां ते युन-ज्मीन्द्रशाकर पङ्क्तिं प्रपद्ये तां ते युनज्मीत्यन्तर्वेदि कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमाऽऽस्तृणाति।**

अन्तर्वेदि कृष्णाजिनमास्तृणातीत्यत्र पुनः कृष्णाजिनग्रहणाद्यत्राभिचारादौ वैया-घ्रादिभिर्दीक्षा यदा वा कृष्णाजिनप्रतिनिधिस्तस्य नान्तर्वेदिस्तरणं किंतु यजमानायतन एवेति द्रष्टव्यम्। अन्तर्वेदि वेदेर्मध्ये, उत्तरलोमोपरिष्टाल्लोम। अनेन लोमसत्त्वस्याऽऽ-वश्यकत्वं गम्यते। पञ्चैते मन्त्रा विभागमन्त्रवद्विकल्पार्था इत्येके। इन्द्रशाकरशब्दा-भिधेयस्य कृष्णाजिनस्य गायत्र्यादिच्छन्दोविशेषयोगसंकीर्तनात्प्रानार्थत्वात्समुच्चय ... रे। कृत्स्नपाठादिदमेव युक्तम्।

---

१ क. ख. ग. °सꣳहते।

**तदारूढे यजमाने पत्न्याः शिरसि जालं प्रतिमुञ्चति ।**

तस्मिन्नारूढे तदारूढे तस्मिन्कृष्णाजिन आरूढे कृतारोहणे यजमाने सतीत्यर्थः। प्रतिमुञ्चति प्रक्षिपति।.आऽहं दीक्षामिति जपस्याऽऽरोहणाङ्गताया वक्ष्यमाणत्वेनैतज्जपानन्तरमेव जालप्रतिमोचनादि । यजमानग्रहणं पत्नीव्यावृत्त्यर्थम् । अनेन कृष्णाजिनं यजमानस्यैव न पत्न्या इति सिद्धं भवति । आरोहणमपि तस्यैव । पत्नीग्रहणं यजमानव्यावृत्त्यर्थम् । तेन जालप्रतिमोचनं पत्नीशिरस्येव न यजमानशिरसीति सिध्यति । जालं पट्टसूत्रैर्विरलैर्निर्मितम् । भाषया जाली, इत्युच्यते । जीवतो मेषस्योर्णाभिरिति सूत्रान्तरे । अभावे दर्भमयमित्यपि शास्त्रान्तरे । तच्च वैदलैर्वलये बद्धम् । यथाऽऽह बौधायनः—विदलं कुम्बं भवति जालं कुरीरमिति ।

**तामहतेन क्षौमेण वाससोर्ध्ववास्येन दीक्षयति ।**

तां पत्नीम् ।

ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् ।
अहतं तद्विजानीयात्सर्वकर्मसु पावनम् ॥

इति लक्षणलक्षितेनाहतेन । बौधायनेन प्रक्षालितान्यक्लिष्टानि सदशान्यनुपयुक्तान्यहतानि वासांसीति धर्मसूत्रे श्वेतत्वस्याहतलक्षणेऽनुपादानान्नाऽऽवश्यकता । तेन रक्तपीतादिकमपि वस्त्रमहतं भवति । नीलस्य स्मृतौ सर्वथा निषेधान्नैव तस्य कुत्रापि ग्रहणम् । क्लिष्टानि पुराणानि तद्भिन्नानि अक्लिष्टानि नूतनानीत्यर्थः । क्षौमेण क्षुमाऽतसी तत्त्वचा निर्मितेन वाससा । अर्थात्प्रावरणपर्याप्तेन । अनेन कार्पासादि व्यावर्त्यते । सर्वथैतदलाभे तदपि । ऊर्ध्ववास्यं प्राचीनाभिर्दशाभिर्वसनीयमूर्ध्वाभिर्दशाभिर्वसनीयमिति यावत् । तथाचाऽऽपस्तम्बः—प्राचीनमात्रा वाससा पत्नीं दीक्षयत्यूर्ध्ववास्यं ब्रुवत इति । अत्र मात्राशब्दो दशारूपावयववाची । प्राचीनमात्रा प्राचीनमात्रेणेत्यर्थः । अथवोर्ध्ववास्यमुत्तरीयम् । एतच्च पत्न्यायतन एव कृतत्वात् । दीक्षापदार्थविषये केचिद्यावदुक्तं पत्न्या दीक्षितव्यञ्जनानीत्यापस्तम्बसूत्रानुरोधेन तामहतेन क्षौमेण वाससोर्ध्ववास्येन दीक्षयतीति सूत्रादेतस्मादन्येषां दीक्षासंबन्धिपदार्थानां पत्न्यां निवृत्तिं कल्पयन्ति तदन्याय्यम् । तस्यैष एव संचर आ सुत्याया इति याजमानसूत्रे तच्छब्देन दीक्षासंबन्धिपदार्थानां पत्न्यामपि प्रवृत्तेर्ज्ञापयिष्यमाणत्वात्, न्यायविरोधात्, बौधायनेन स्पष्टोक्तेश्च । जालमुभयतःपाशं पत्न्याः शिरस्यामुच्येति मानवसूत्रे ।

**शरमुञ्जानां मेखला त्रिवृद्वेणी कार्या ।**

शरा मुञ्जा एवेति शरमुञ्जाः । या मुञ्जैर्मेखला कृता सा शरैरेव कृता भवति । शरमुञ्जानामित्यत्र शरग्रहणं शरभावना मुञ्जेषु कर्तव्येति । अथवा शरा इव मुञ्जाः शरमुञ्जा इति समासः । ऊर्वै मुञ्जा इतिश्रुत्यन्तरानुरोधेन शरमयी मेखला भवतीति

श्रुतावूर्जमेवावरुन्ध इत्यूर्ग्वृद्धिफलबलाच्छरशब्देन मुञ्जा एव ग्राह्या इति भावः । शराश्च मुञ्जाश्चैतेषां समाहारः शरमुञ्जाः । दधिपयआदित्वाच्छान्दसत्वाद्वैकवद्भावाभाव इति केचित् । शरमुञ्जयोर्विकल्पः । मौञ्ज्या मेखलाया अन्यत्र दर्शनाच्छराभाव एषा भवतीत्यर्थः । समुच्चयो वा । अत्रापि शरमयत्वस्याबाधादित्यन्ये । विकल्पपक्षे शरमयी मेखला भवतीति विकारार्थे मयट् । समुच्चयपक्षे प्राचुर्यार्थे मयट् । एतत्पक्षद्वयमप्ययुक्तं शरमयं बर्हिः शृणात्येवैनमिति शरमयत्वस्य शत्रुविशरणफलकत्वेनाऽऽभिचारिककर्मण्येव प्रवृत्त्या तद्व्यतिरिक्तकर्मणि शत्रुविशरणफलकस्य शरमयत्वस्य प्रवृत्तेरनुचितत्वात् । तस्माच्छरशब्देन मुञ्जा एव ग्राह्या नतु शराख्यतृणानीति ज्ञेयम् । त्रिवृच्च वेणी च त्रिवृद्वेणी त्रिवृत्त्रिगुणा वेणी वेण्याकारा । एतादृशी मौञ्जी मेखला कार्येत्यर्थः । त्रिवृत्, वेणी यस्याः सेति बहुव्रीहिर्वा । इयं विस्तीर्णा च कार्या । पृथ्वी भवतीति श्रुतेः । अथवा त्रिवृद्वेणीका, आर्या, इति पदच्छेदः । त्रिवृद्वेणीकेति स्वार्थे कप्रत्ययः । आर्यशब्दः श्रेष्ठवाची । श्रेष्ठ्यमत्र विस्तीर्णत्वरूपम् । तथाच पृथ्वी भवतीति सूत्रादेव श्रुत्यर्थः सिद्धो भवति । आर्येत्यनन्तरं भवतीति शेषः । एवं च रज्जुसदृशी मेखलेति अवगतं भवति । योक्त्रं तु जटासदृशम् ।

**ऊर्गसीति तया यजमानं नाभिदेशे त्रिः प्रदक्षिणं परिव्ययति द्विरित्येके पूषा ते ग्रन्थिं ग्रथ्नात्वित्युत्तरतो नाभेर्निष्टर्क्यं ग्रन्थिं कृत्वा स ते मा स्थादिति दक्षिणतो नाभेः परिकर्षति यं द्विष्यात्तं ध्यायेत् ।**

ननूर्गसीति त्रिवृद्वेण्या शरमुञ्जानां मेखलया यजमानं नाभिदेशे त्रिः प्रदक्षिणं परिव्ययतीत्येतावतैव सिद्धे शरमुञ्जानां मेखला त्रिवृद्वेणी कार्येति भिन्नं सूत्रं कृत्वोत्तरत्र तच्छब्देन परामर्शो व्यर्थ इति चेन्न । तच्छब्दस्य मेखलायाः पूर्वमेवोपकल्पनं कर्तव्यमित्येतादृशार्थज्ञापनार्थत्वेन वैयर्थ्याभावात् । तया, उपकल्पितया । यजमानग्रहणं पत्नीव्यावृत्त्यर्थम् । नाभिदेशे नाभिमध्ये । नाभावित्युच्यमाने सप्तम्याः सामीप्यार्थकत्वशङ्का स्यात्सा मा भूत्किंतु तस्या अधिकरणार्थकत्वमादाय नाभिमध्य एव यथा स्यादित्येतदर्थं देशपदप्रयोगो वाससाऽन्तरितत्वेऽपि नाभिमनुलक्षीकृत्य यो देशस्तस्मिन्परिव्ययणमित्यपि बोधयति । एतेनोर्ध्वं वै पुरुषस्य नाभ्यै मेध्यमवाचीनममेध्यं यन्मध्यतः संनह्यति मेध्यं चैवास्यामेध्यं च व्यावर्तयतीति श्रुतिर्व्याख्याता भवति । नाभ्यै नाभ्याः । पुरुषस्येति स्त्र्युपलक्षणम् । तेन योक्त्रेणापि नाभ्या मध्य एव संनहनम् । परिभाषया सकृन्मन्त्रेण द्विस्तूष्णीम् । अत्र प्रदक्षिणशब्दः प्रादक्षिण्यवाची न भवति तस्य प्रदक्षिणं यज्ञे कर्माणि करोतीति परिभाषयैव सिद्धेः किंत्वानुकूल्यवाची ।

चन्द्रसेने महीपाले राज्ञि राज्यं प्रशासति ।
ववौ प्रदक्षिणो वायुः प्रजा आसन्प्रदक्षिणाः ॥
आसन्सदाऽपि सामन्ता यस्य सर्वे प्रदक्षिणाः ।

इत्यत्र प्रदक्षिणशब्दस्याऽऽनुकूल्यार्थकत्वदर्शनात् । तेन दृढं शिथिलं वा यजमानानुकूल्येन परिव्ययणमिति सिद्धं भवति । मा मा हिꣳसीरित्यन्तः प्रथमो मन्त्रः । निष्टर्क्यं शिखाबन्धनवत् । दक्षिणतो नाभेः परिकर्षति उत्तरप्रदेशादानीय नाभेर्दक्षिणतो ग्रन्थिं निदधाति यथा नान्यदेशं गच्छतीत्यर्थः । मेखलया परिव्ययणे क्रियमाणे यजमानो यं पुरुषं द्विष्यात्तं ध्यायेत् । यजमानद्वेष्यं ध्यायेदिति स्पष्टोऽर्थः । ध्यानेन द्वेष्यस्यानिष्टं भवति । परिकर्षणसमये वा द्वेष्यस्य ध्यानम् । द्वेष्यः शत्रुः पाप्मा च । ग्रन्थिकरणपरिकर्षणे दर्शपूर्णमासवदित्येतावतैव सिद्धे उभयोः क्रिययोः पुनर्विधानं व्यर्थं सञ्ज्ञापयति शाखान्तरेऽत्रापि मन्त्रयोस्तयोः क्रिययोश्च पाठ एवा-स्तीति । फलं तु ज्ञानावश्यकतासिद्धिः । ज्ञानाभावे यजुर्भ्रेषप्रायश्चित्तं भुवः स्वाहेति दक्षिणाग्नौ ।

सं त्वा नह्यामीति पत्नीꣳ संनह्यति यथा दर्शपूर्णमासयोः ।

आशासानेति मन्त्रं बाधित्वा सं त्वा नह्यामीति तस्य स्थाने मन्त्रोऽयं विधीयते । वाजमस्मे इत्यन्तो मन्त्रः । पत्नीग्रहणं यजमानव्यावृत्त्यर्थम् । अध्वर्युकर्तृकमेव संन-हनम् । त्वेति लिङ्गात् । संनह्यति बध्नाति । यथा दर्शपूर्णमासयोरित्यनेन संनहनकर-णत्वेन योक्त्रस्योर्ध्वज्ञुरासीना तिष्ठन्ती वेत्यस्य पूषा त इति ग्रन्थिकरणस्य स ते मा स्थादिति परिकर्षणस्य च प्राप्तिः । सोमार्थं योक्त्रमावभृथाद्धार्यम् । तस्य प्रसङ्गोऽग्रे वक्ष्यते ।

इन्द्रस्य योनिरसीति त्रिवलिं पञ्चवलिं वा कृष्ण-विषाणां यजमानाय प्रयच्छत्याबध्नाति वा ।

तिस्रो वलयो यस्याः सा त्रिवलिः । पञ्च वलयो यस्याः सा पञ्चवलिः । वलयः कृष्णवृषाणागता उच्चप्रदेशाः । कृष्णविषाणा कृष्णमृगशृङ्गम् । सकलैवैषा स्यादित्यौ-पमन्यव इति द्वैधसूत्रात्कृत्स्नैव मुख्या । तदभावे छिन्ना । पञ्चवलितोऽधिकवलिकाया लाभे पञ्चवलितोऽधिकां वलिं छित्त्वैव ग्राह्या । तस्या एव ग्राह्यत्वोक्तेः । तत्राप्यग्रभाग एव ग्राह्यः । तस्यैव कण्डूयपनयनसाधनत्वात् । यजमानग्रहणं पत्नीव्यावृत्त्यर्थम् । प्रयच्छति बध्नाति वा । दानपक्षे हस्ते दानम् । आङ्ग्रहणं बन्धने विशेषं द्योतयति । तं चाऽऽह कात्यायनः—वसनस्य दशायां बध्नीतेति । बौधायनः—वसनस्यान्ति-मायां दशायां बद्ध्वा तयाऽन्तर्वेदि लोष्टमुद्धन्तीति । कृष्णविषाणायां विशेषमाहाऽऽ-पस्तम्बः—त्रिवलिः पञ्चवलिर्वा दक्षिणावृद्भवति सव्यावृदित्येक इति । भरद्वाजोऽपि–

अथास्मै त्रिवलिं पञ्चवलिं वा कृष्णविषाणां प्रदक्षिणावर्तां प्रयच्छतीति । शाण्या रज्ज्वा परितृण्णेति बौधायनः । मा मा हिꣳसीरित्यन्तो मन्त्रः । कृष्ये त्वा सुसस्याया इति याजमानसूत्रे दीक्षामन्त्रसंदर्भपठितोत्तरमन्त्रादिदर्शनबलात् । इदं च कृष्णविषाणा-प्रदानं यजमानस्य शिरसो वेष्टनोत्तरमेव । याजमानसूत्रे प्रत्तया कृष्णविषाणयेत्युक्त्या कृष्णविषाणाप्रदानकृष्णविषाणाकरणकलोष्टोद्धननादिरूपकर्मणोः कार्यकारणभावापन्न-योरव्यवधानस्य सूत्रकृता दर्शयिष्यमाणत्वात् । पत्न्यै कण्डूयनार्थं शङ्कुर्देयः । बौधायनेनोक्तत्वात् । तत्र शङ्कुस्वरूपं कात्यायन आह—पृथुमुखो यज्ञियवृक्ष-शङ्कुरिति ।

पत्न्याः शिरसि जालं यथा मुष्टु कल्पयति ॥ १ ॥

पत्न्याः शिरसि यज्जालं प्रतिमुक्तं तदत्र यथा मुष्टु यथा दृढं भवति तथा कल्प-यति । यथा पत्न्याः शिरसो न पतति तथा गुल्फयति दार्ढ्येन तस्याः शिरसि चिबु-केन सह योजयतीत्यर्थः । एतेन पूर्वत्र प्रतिमोचनमात्रं कर्तव्यमिति सिद्धं भवति ।

औदुम्बरो दीक्षितदण्डो यो वा कश्चन वृक्षः फलग्रहिस्तस्य ।

औदुम्बर उदुम्बरवृक्षजो दीक्षितस्य दण्डः । यो वा कश्चन वृक्षः फलग्रहिः । यज्ञिय इत्यापस्तम्बोक्तेर्यज्ञियवृक्षलाभे स एव मुख्यः । तदलाभे यज्ञियव्यतिरिक्तोऽपि । आचार्येण सामान्यतो यो वा कश्चनेत्युक्तेः । फलं गृह्णाति न वन्ध्यो बालो वा । अथवा य उदुम्बरादिवत्फलमेव गृह्णाति न पुष्पमपीत्यर्थः । तस्य फलग्रहेर्वृक्षस्य ।

तत्प्रमाणमाह—

मुष्टिमात्रो मुखेन संमितश्चुबुकदघ्नो वा ।

दीक्षितदण्ड इत्यनुषज्यते । मुष्टिमात्रो मुष्टिप्रमाणः । प्रमाणे द्वयसज्दघ्नञ्मात्रच इत्यनेन मात्रच्प्रत्ययः । अनेन दीक्षितदण्डस्य परिणाह उच्यते । मुखेन संमित ऊर्ध्वोष्ठपर्यन्तं मुखं तेन संमितस्तत्प्रमाणः । मुखदघ्न इति परित्यज्य मुखेन संमित इत्येतादृशं वचनं श्रुत्यनुकरणाय । चुबुकं हनुस्तत्प्रमाणश्चुबुकदघ्नः । प्रमाणे द्वयसज्द-घ्नञिति दघ्नच्प्रत्ययः । एकपदार्थविषयकतिर्यगूर्ध्वप्रमाणयोर्युगपदुपस्थितौ तिर्यक्प्रमाणे मात्रच्, ऊर्ध्वप्रमाणे दघ्नजित्याचार्यस्य प्रायशः शैली ।

ऊर्ध्वसूरसि वानस्पत्यः सुयुन्नो युन्नं यजमा-
नाय धेहीति तं यजमानाय प्रदाय संभारय-
जूꣳषि वाचयति जुहोति चैतैर्मन्त्रैः ।

तं दण्डम् । तच्छब्दः पूर्वमेवोपकल्पनं दण्डस्य सूचयति । यजमानग्रहणं पत्नी-व्यावृत्त्यर्थम् । न च मन्त्रगतं यजमानपदं पत्नीव्यावर्तकं भवितुमर्हति । तत्र समन्त्र-कल्पपक्षेऽपि यजमानायै धेहीत्यूहेन यजमानपदलोपेन वा पत्न्या अपि दण्डदानप्रवृत्ति-

संभवात् । अतस्तद्व्यावर्तनाय यजमानग्रहणमावश्यकमेव । न च याजमानसूत्रे पठितस्य दण्डप्रतिग्रहस्य यजमानकर्तृकत्वावगतौ दण्डप्रदानस्यापि यजमानसंप्रदानकत्वावगतेः किमर्थं यजमानग्रहणमिति वाच्यम् । तत्र विहितानां दीक्षासंस्काराणां यजमानसंबन्धिनां स्नानादीनां ज्ञापकबलेन पत्न्यां प्राप्तिर्यथा तथा दण्डप्रतिग्रहस्यापि ज्ञापकबलात्प्राप्तौ तन्निवृत्त्यर्थं यजमानग्रहणस्याऽऽवश्यकत्वात्, ज्ञापकस्य सजातीयापेक्षत्वात् । अस्ति च दण्डप्रतिग्रहस्य संस्कारत्वेन सजातीयत्वम् । न च दण्डस्यैकत्वश्रवणादेव यजमानस्यैव दण्डप्रतिग्रहणं भविष्यति दानं चापि यजमानायैव न तु पत्न्या इति वाच्यम् । एकवचनस्य जात्यभिप्रायपरत्वकल्पनेन दण्डद्वयस्य प्राप्तौ पत्न्या अपि दण्डप्रदानसंभावनायां यजमानग्रहणस्य तन्निवृत्त्यर्थमत्यन्तावश्यकत्वात् । प्रदायेति ल्यप्, दण्डप्रदानसंभारयजुर्वाचनाव्यवधानार्थः । न च दण्डप्रदानसंभारयजुर्वाचनयोर्मध्ये यजमानकर्तृकप्रतिग्रहेण व्यवधानात्कथमेतदिति वाच्यम् । दण्डप्रदानप्रतिग्रहयोः समकालत्वेन व्यवधानस्यैवासंभवात् । समकालत्वोपपादनं तु सूत्रस्था देवो वनस्पतिरूर्ध्वो मा पाह्यो हच इति दण्डं प्रतिगृह्णातीति याजमानसूत्रे करिष्यामः । एवं च दण्डप्रदानसंभारयजुर्वाचनयोरव्यवहितानन्तर्यं सूपपादं भवति । तेन संभारयजुर्होमोत्तरमेव केशिनीदीक्षादि वाग्यमनान्तं भवति । संभारयजूंषि पूर्वमेव प्रदर्शितानि तानि वाचयति । उत्तरत्रानुवृत्त्यर्थं च । तेन संभारयजुर्वाचनस्य पत्न्यां निवृत्तिः सिध्यति । दानवाचनान्वारम्भवरवरणव्रतप्रमाणेषु यजमानं प्रतीयादिति कात्यायनोक्तपरिभाषासूत्रमप्यत्र प्रमाणम् । ननु जुहोति चेत्येतावदेव वक्तव्यं प्रतिमन्त्रं होमस्तु यत्र मन्त्रगणेन कर्म चोदयेत्प्रतिमन्त्रं तत्र जुहुयादिति परिभाषयैव सिध्यति किमर्थमेतैर्मन्त्रैरिति वचनमिति चेत्सत्यम् । तस्य पूर्वं पूर्वमनुद्रुत्योत्तरेणोत्तरेण संभारयजुषा जुहोति व्याहृतिभिश्चेतिवासिष्ठमतनिरासार्थत्वात् । एतैरिति व्याहृतिनिरासार्थम् । मन्त्रैरिति वचनं नियमार्थं केवलमन्त्रैरेव होमो नतूद्द्रवणविशिष्टमन्त्रैरिति । जुहोति चेत्ययं चकारो वाचनसमुच्चयार्थः । जुहोतिचोदितत्वादेतेषु स्वाहाकारः । अत्राऽऽज्यमाज्यस्थालीगतमेव । तदभावे गृह्योक्तप्रकारेणाऽऽज्यं संस्कृत्य तेन होमः । अत्र पूर्ववद्द्वादशेतिवचनाभावाद्वाचनहोमयोः सर्वेषां संभारयजुषां विनियोगः । अत्र पृथिवीदीक्षा तयाऽग्निर्दीक्षया दीक्षित इत्यारभ्य तास्त्वा दीक्षमाणमनु दीक्षन्तामित्यन्त आच्छिद्रिको मन्त्रो दीक्षालिङ्गकत्वाद्युष्मच्छब्दलिङ्गकत्वाच्चाध्वर्युणा प्रयोक्तव्यः केशिनीदीक्षाजपात्पूर्वमेव । यथारूपमितर इत्यनेन सूत्रकृताऽपि विधियोग उक्तोऽस्ति परं तु स्पष्टतयाऽनुक्तत्वात्कृताकृतः ।

---

१ ख. ग. °रस्य स° ।

तं वाग्यतमदीक्षिष्टायं ब्राह्मणोऽसावामुष्यायणोऽमुष्य पुत्रोऽमुष्य पौत्रोऽमुष्य नप्ताऽमुष्याः पुत्रोऽमुष्याः पौत्रोऽमुष्या नप्तेति त्रिरुपांश्वावेदयति त्रिरुच्चैः।

तं वाग्यतमित्यनेन केशिनीदीक्षाजपादि वाग्यमनान्तं संभारयजुर्होमानन्तरं कर्तव्य-मिति गम्यते। वाग्यतमित्येतावतैव क्रमे लब्धे तच्छब्देन परामर्शो नियमार्थः। तथाच वाग्यमनं तस्यैव नतु पत्न्या अपीति वाग्यमनाभावादेवाऽऽवेदनाभावः। पत्न्यावेदनं सूत्रान्तरेष्वपि नैव दृश्यते। केशिनीदीक्षाजपमुष्टिकरणाङ्गुल्युत्सर्गा अपि पत्न्या न भवन्ति। वाग्यमनस्य केशिनीदीक्षाजपादीनां च परस्परसंबन्धेनैकस्य निवृत्तावपरनि-वृत्तेरर्थसिद्धत्वात्। परस्परसंबन्धित्वं तु ताभिर्यथासुखं चरति वाचं च यच्छतीतिवक्ष्य-माणयाजमानसूत्रस्थचकाराल्लिङ्गात्। वाग्यतमित्यस्याऽऽवेदयतीत्यत्रान्वयः। आवेदनं कथनम्। त्रिरुपांश्वावेदयतीत्यत्र देवेभ्य इति शेषः। त्रिरुच्चैरित्यत्राऽऽवेदयतीत्यनुष-ज्यते। अत्र देवेभ्यो मनुष्येभ्यश्चेति शेषः। तथाच श्रुतिः—अदीक्षिष्टायं ब्राह्मण इति त्रिरुपांश्वाह देवेभ्य एवैनं प्राह त्रिरुच्चैरुभयेभ्य एवैनं देवमनुष्येभ्यः प्राहेति। देवमनुष्येभ्य इत्यत्र देवाश्च मनुष्याश्चेति द्वंद्व उभयेभ्य इत्युक्तेः। उपांशुलक्षणं प्रातिशाख्ये—करणवदशब्दममनःप्रयोग उपांश्विति। द्विपितुरार्षेयन्यायेन वंशद्वयकी-र्तनम्। तथा मात्रादिसपत्नीनामित्येके।

असाविति नाम गृह्णात्यामुष्यायण इति पितुर्नामधेयेन।

असाविति प्रथमान्तं व्यावहारिकं नाम यजमानस्य गृह्णाति यथाऽमुक इति तच्च शर्मान्तम्। शर्मान्तं ब्राह्मणस्येति बौधायनोक्तेः शर्मान्तं ब्राह्मणस्य येन व्यवह्रियत इतिवासिष्ठसूत्राच्च। येन व्यवह्रियत इति नाक्षत्रादिनाम्नां शर्मान्तताया व्यावृत्त्यर्थम्। तच्चात्र व्यावहारिकं गुप्तं न भवति किंतु प्रसिद्धव्यवहारार्थं यत्कृतं तज्ज्ञेयम्। एवं पित्रादीनामपि नामानि शर्मान्तानि। स्त्रीणां तु दान्तानि। दान्तं नाम स्त्रीणामिति स्मृतेः। स्मृत्यन्तरे तु देवीशब्दान्तं नाम स्त्रीणामित्युक्तम्। अनयोर्विकल्पः। केचित्तु समुच्चयमाहुः। एतच्च सार्वत्रिकं ज्ञेयम्। यत्र यत्रासौशब्दस्तत्र प्रथमान्तस्य व्याव-हारिकनाम्नो ग्रहणमिति। आमुष्यायण इति पितुर्यद्गोत्रप्रयुक्तं नामधेयं तत्परम्। तेन नामधेयेनाऽऽवेदयति तं दीक्षितं वाग्यतं प्रथमान्तेन व्यावहारिकेण नाम्ना गोत्रप्रयुक्तेन तादृशेन नाम्ना चाऽऽवेदयतीत्यर्थः। यथाऽदीक्षिष्टायं ब्राह्मणो गोपीनाथशर्मा वासिष्ठो गणेशशर्मणः पुत्रः केशवशर्मणः पौत्रः कृष्णशर्मणो नप्ता यमुनादायाः पुत्रो लक्ष्मी-दायाः पौत्रो रुक्मिणीदाया नप्तेति। देवीशब्दान्तत्वपक्षे यमुनादेव्याः पुत्रो लक्ष्मी-

१ ख. ग. °काराल्लिङ्गा°।

देव्याः पौत्रो रुक्मिणीदेव्या नप्तेत्येवं प्रयोगः। पितुर्यद्गोत्रप्रयुक्तं नामधेयं तेन नामधेयेन नाम्नेत्यर्थः। भागरूपनामभ्यो धेय इति स्वार्थे धेयप्रत्ययः। असाविति नाम गृह्णाति आमुष्यायणं इति गोत्रमिति मानवसूत्रे। यत्र यत्राऽऽमुष्यायणशब्दस्तत्र तद्गोत्रनाम ग्राह्यमित्येतत्सार्वत्रिकं ज्ञेयम्। पित्रादीनां नामाज्ञाने देवतानामभिरन्यैर्वैः कैश्चिद्व्यवहारः। एवं मात्रादीनां नामाज्ञानेऽपि नामाज्ञाने देवतानां नामभिः परिकीर्तयेदिति श्राद्धादिषु स्मृतिदर्शनात्। अन्यैर्देवतानामभिरित्यर्थः। गोत्राज्ञाने काश्यपगोत्रम्।

गोत्रस्य त्वपरिज्ञाने काश्यपं गोत्रमुच्यते। इति स्मृतेः।

सर्वाः काश्यप्यः प्रजा इति श्रुतेश्च।

**यः कश्चिद्दीक्षते ब्राह्मण इत्येवाऽऽवेदयेत्।**

यः कश्चिद्राजन्यो वैश्यो वा दीक्षते दीक्षां गृह्णाति तं ब्राह्मण इत्येवाऽऽवेदयति—अदीक्षिष्टायं ब्राह्मण इत्यत्र ब्राह्मणशब्द ऊहो न कार्य इत्यर्थः। यथावर्णमावेदयेदिति। बौधायनमतनिरसनार्थ एवकारः। अत्र हेतुमाहाऽऽपस्तम्बः—ब्रह्मणो वा एष जायते यो दीक्षते तस्माद्राजन्यवैश्यावपि ब्राह्मण इत्येवाऽऽवेदयतीति। यतो ब्रह्मणो वेदाद्वै, एवैष दीक्षितः पुनर्जायते, एष क इत्याशङ्कायां यो दीक्षत इति,

यथाऽऽह मनुः—मातुरग्रे विजननं द्वितीयं मौञ्जिबन्धने।

तृतीयं यज्ञदीक्षायामिति।

तस्माद्राजन्यवैश्यावपि ब्राह्मण इत्येवाऽऽवेदयति नतूह इति। कात्यायनोऽपि—ब्राह्मण इत्येव वैश्यराजन्ययोरपि श्रुतेरिति। अत्र यद्यपि ब्राह्मणशब्देनैवाऽऽवेदनं तथाऽपि शर्मान्तता नैव किंतु वर्मान्तत्वगुप्तान्तत्वे एव क्षत्रियवैश्ययोर्यथाक्रमम्। शर्मान्तताविषये जातिवाचिब्राह्मणशब्दस्यैव ग्रहणात्। एतदन्तमपराह्ण एव भवति। अपराह्णे दीक्षित इति वक्ष्यमाणसूत्रात्। कृष्णाजिनदीक्षामात्रमन्तर्वेदि मेखलाप्रदानादिकमन्तर्वेद्यन्यत्र वेति केचित्। कृष्णाजिनदीक्षाद्यावेदनान्तमन्तर्वेद्येवेत्यन्ये। आस्तरणमात्रस्यान्तर्वेदिविधानात्तावदेवान्तर्वेदिनियतमिति पूर्वमताशयः। अपराह्णे दीक्षत इति कृष्णाजिनदीक्षाद्यावेदनान्तस्य समानकालत्वदर्शनाद्देशान्तराविधानाच्च देशोऽपि समान एवेत्युत्तरमताशयः। ज्ञापकसिद्धा दीक्षार्थाः पत्नीसंस्काराः समन्त्राः। अस्मिन्पक्षे पुतेमीत्यूहः। तूष्णीं वा। तूष्णीकं सर्वमिति बौधायनः। प्रवर्ग्यसंभरणं पूर्वत्राकृतं चेदत्र कुर्यात्। यजमानस्य दीक्षितत्वान्न होमः किंतु जप एव।

---

१ ख. ग. °णमिति। २ ख. ग. °ष्णीकमि°।

देवाञ्जनमगन्यज्ञस्ततो मा यज्ञस्याऽऽशीरागच्छतु गन्धर्वा-
ञ्जनमगन्यज्ञस्ततो मा यज्ञस्याऽऽशीरागच्छतु पितॄञ्जन-
मगन्यज्ञस्ततो मा यज्ञस्याऽऽशीरागच्छत्वप ओषधीर्वनस्प-
तीञ्जनमगन्यज्ञस्ततो मा यज्ञस्याऽऽशीरागच्छतु पञ्चजना-
ञ्जनमगन्यज्ञस्ततो मा यज्ञस्याऽऽशीरागच्छतु वर्धतां भूतिर्दध्ना
घृतेन मुञ्चतु यज्ञो यज्ञपतिमꣳहसो भूपतये स्वाहेत्यभिमन्त्रयते
यद्यन्यत्र कृष्णाजिनादासीत नित्यवृत्तावत ऊर्ध्वम् ।

पञ्चैते मन्त्रा एतेषामन्यतमेनाभिमन्त्रणम् । अवशिष्टा विकल्पार्थाः । समुच्चयो वा कृष्णाजिनास्तरणमन्त्रवत् । विकल्पपक्षे वर्धतां भूतिरित्यादि सर्वेष्वनुषञ्जनीयम् । समुच्चयपक्षे न । अप ओषधीर्वनस्पतीनित्येक एव मन्त्रः, ननु सानुषङ्गास्त्रयो मन्त्राः । अन्यथा देवाञ्जनमगन्यज्ञ इत्येकत्रैव पाठेन गन्धर्वानित्यादिष्वनुषङ्गः सिध्यत्येव पुनर्गन्धर्वान्पितॄन्पञ्चजनानित्येतेषु पाठो व्यर्थः स्यात् । अतो देवानित्येतन्मन्त्रव्यतिरिक्तेषु गन्धर्वान्पितॄन्पञ्चजनानित्येतेषु पाठोऽबादिषु त्रिषु प्रत्येकमनुषङ्गव्यावृत्त्यर्थ एवेति द्रष्टव्यम् । अध्वर्युकर्तृकमिदं यजमानाभिमन्त्रणम् । न च मन्त्रलिङ्गविरोधाद्यजमानकर्तृकमेव स्वसंस्कारार्थमात्मार्थप्रैषवदिति वाच्यम् । मन्त्रलिङ्गविरोधस्यैवाभावात् । तथाहि देवान्देवान्प्रति अगन्यज्ञस्ततस्तेभ्य इति ततः । जनशब्देन यजमान एव गृह्यते । देवसकाशाद्यजमानं प्रति आगच्छतु । आगतस्य यज्ञस्याऽऽशीः, आ ईषदपि यजमानादन्यत्र मा गच्छत्वित्यर्थः । निष्फलो यज्ञो मा भवत्विति तात्पर्यार्थः । अथवा देवान्प्रति अगन्यज्ञस्ततो मां स आगच्छतु मत्प्रवर्तितो यज्ञो मां प्रति देवेभ्य आगच्छतु । यज्ञसंबन्धिन्याशीर्जनं यजमानं प्रत्यागच्छतु इत्यर्थः । एवमितरेषामपि । देवादिभ्यः सकाशान्मां प्रत्यागतेन यज्ञेन मे भूतिरैश्वर्यं वर्धतां स च यज्ञो दध्ना घृतेन च वर्धतां दध्ना घृतेन च प्रवर्धितो यज्ञो यज्ञपतिं यजमानमंहसः पापान्मुञ्चतु । भूपतये भूपतिनामकाय देवाय स्वाहा सुष्ठु एतत्सर्वं कथयामीत्यर्थः । स्वाहेत्येतत्सु आहेति वा स्वा वागाहेति वा स्वं प्राहेति वा स्वाहुतं हविर्जुहोतीति वेति निरुक्तकृता स्वाहाशब्दस्य चत्वारोऽर्थाः कृताः । निपातानामनेकार्थत्वादित्येतदाशयः । तत्र प्रथमार्थानुसारेण सुष्ठु एतत्सर्वं कथयामीत्यर्थो वर्णितः । एतेन यजमानाभिमन्त्रणस्याध्वर्युकर्तृकता मन्त्रलिङ्गविरोधात्कथमिति शङ्का निरस्ता । अभिमन्त्रयते यजमानमित्येव शेषो मन्त्रलिङ्गान्नतु कृष्णाजिनमिति । यद्यन्यत्र कृष्णाजिनादासीत तदा देवाञ्जनमगन्नित्यभिमन्त्रयत इत्यन्वयः । यदीत्यनेनाभिमन्त्रणस्य नैमित्तिकत्वं प्रदर्शितं भवति । कृष्णाजिनादन्यत्राऽऽसीत कृष्णाजिनं परित्यज्याऽऽसीत । आसनं शयनोपलक्षणम् । नान्यत्र कृष्णाजिनादास्ते शेते वेति सूत्रात् । अत्र मानवसूत्रे विशेषः—क्षौमतः

कृष्णाजिनस्य शय्याऽऽसनमाच्छादनं च प्रतिषिद्धमिति । लोमतो लोमवति प्रदेश इत्यर्थः । नित्यवृत्तिर्याजमानसूत्रे स्पष्टी भविष्यति दीक्षणीयाप्रभृतीयं वृत्तिरित्यादिना । अत ऊर्ध्वमितिवचनमावेदनोत्तरमेव कृष्णाजिनव्यवच्छेदनिमित्तकमभिमन्त्रणं न पूर्वमिति गमयति । पूर्वत्र व्यवच्छेदेऽनाज्ञातत्रयजप एवेति । नित्यवृत्ताविति वचनं समासायामप्यवान्तरदीक्षायामेतदाऽवभृथादनुवर्तत एवेत्येतदर्थम् ।

अग्नीञ्ज्योतिष्मतः कुरुत दीक्षित वाचं यच्छ पत्नि वाचं यच्छेति पुरोदयमधिवृक्षसूर्ये च व्रतप्रदः संप्रेष्यति ।

उत्तरेणाऽऽहवनीयं तिष्ठन्संप्रैषमाहाग्नीञ्ज्योतिष्मतः कुरुत दीक्षित वाचं यच्छ पत्नि वाचं यच्छेति बौधायनः । अग्नीनिति बहुवचनात्सर्वानग्नीन् । सभ्यावसथ्यसत्त्वे तावपि । औपासनस्य न श्रौतसंबन्धाभावात् । एतेन गार्हपत्यदक्षिणाग्न्योरेव व्रतश्रपणरूपप्रयोजनसत्त्वात्प्रज्वलनमिति शङ्का परास्ता । ज्योतिष्मतः प्रज्वलितान्कुर्वित्यर्थः । दीक्षा संजाता यस्य स दीक्षितः । दीक्षाशब्दार्थः प्रागेवोक्तः । दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेष्विति धातुसूत्रादपि नियमविशेषपर एव दीक्षाशब्दः । उदयात्पुरेति पुरोदयम् । पुराशब्दः पुरोर्थक उदयात्पूर्वमित्यर्थः । वृक्षानधिकृत्य वर्तते सूर्योऽधिवृक्षसूर्यः । सूर्यशब्देन लक्षणया तद्रश्मय उच्यन्ते । प्रैषे कुरुतेति बहुवचनं पारिकर्म्यृत्विजामन्यतमप्राप्त्यर्थम् । व्रतप्रद इति सामान्योक्त्याऽध्वर्यूणां मध्ये यः कश्चन व्रतप्रदाता । यो व्रतप्रदः स एव संप्रैषकर्ता । पुरोदयमधिवृक्षसूर्ये चेतिक्रमश्रवणात्प्रथमदिने न प्रैषः । याजमानसूत्रेऽपि वक्ष्यति—तदहर्दीक्षितो रात्रिं जागर्ति न व्रतं भवति नक्षत्रं दृष्ट्वा तूष्णीमेव वाचं विसृजते यत्रैनं व्रतप्रदः संप्रेष्यति तस्मिन्काले वाचं यच्छतीति । अस्मिन्सूत्रे व्रताभावस्योक्तत्वेन प्रैषाभावोऽपि सिद्ध एव । अग्नीञ्ज्योतिष्मतः कुरुतेति आहवनीयविषये ज्योतिष्मत्करणस्यादृष्टार्थत्वेनेतरयोरप्यग्न्योर्ज्योतिष्मत्करणस्याप्यदृष्टार्थतैव । व्रतश्रपणरूपप्रयोजनसिद्धिः प्रसङ्गतः । तथा च ज्योतिष्मत्करणविषयकप्रैषो भवत्येवेति यद्यपि प्राप्तं तथाऽपि पुरोदयमधिवृक्षसूर्ये चेतिक्रमश्रवणादग्नीञ्ज्योतिष्मतः कुरुतेत्येतावन्मात्रप्रैषोऽपि न भवतीति हृदयम् ।

उदितेऽस्तमिते च व्रतं दोहयति वत्सस्यैकं स्तनमवशेष्य ।

अवशेष्य दोहयतीत्यन्वयः । व्रतमित्येकवचनं द्विवचनार्थकम् । न चैकस्या एव गोर्दोहेन निष्पन्नं पय उभयोर्व्रतमेकवचनादिति वाच्यम् । या यजमानस्य व्रतधुक्ताऽऽशिरे दुहत या पत्न्यास्तां दधिग्रहायेत्यत्र प्रैषे पत्नीव्रतार्थं पृथग्गोर्विहितत्वादेतत्कल्पनाया असंभवात् । यजमानस्य पत्न्याश्चेति शेषः । वत्सस्य तत्तद्गोर्वत्सस्य तस्यास्तस्या गोरेकमेकं स्तनमवशेष्येत्यर्थः । वत्सस्येति चतुर्थ्यर्थे षष्ठी वत्सार्थमित्यर्थः । उदित उदयं प्राप्तेऽस्तमितेऽस्तमदर्शनं प्राप्ते सूर्ये सति व्रतं दोहयतीत्यर्थः । दोग्धेति

शेषः । दोहयतीति णिजन्तम् । अग्निहोत्रमेव न दुह्याच्छूद्र इत्यग्निहोत्रसंबन्धिदोहने शूद्रनिषेधादन्यत्रानियमः । स च शूद्रो गोप एव । एतद्वृत्तित्वात्स्मृतौ सच्छूद्रौ गोपनापिताविति तस्य समीचीनत्वोक्तेश्च । विप्रो दोहनकर्ता चेदधिकम् ।

**गार्हपत्ये दीक्षितस्य व्रतꣳ श्रपयति पत्न्या दक्षिणाग्नौ ।**

व्रतयतीति व्रतम् । व्रतार्थं पय इत्यर्थः । पयो ब्राह्मणस्य व्रतमित्यत्रापि व्रतशब्दस्यायमेवार्थः । अत्र विशेषमाह बौधायनः—अग्निहोत्रविधिं चेष्टित्वा तप्त्वोद्गुद्वास्य शीतीकृत्याऽऽतच्य वाऽनातच्य वोत्तरे शालाखण्डे शिक्य आसजतीति । दक्षिणे शालाखण्डे शिक्यआसजतीति पत्न्या व्रते विशेषः । अन्यत्समानम् । चेष्टित्वेतिपदस्वारस्याच्चेष्टामात्रं कर्तव्यं नतु समन्त्रकाश्चेष्टा इति सूचयति । अग्निहोत्रस्कन्दनस्य यत्प्रायश्चित्तं तद्व्रदेवैतस्य स्कन्दनेऽपि । तथा चाऽऽपस्तम्बः—याऽग्निहोत्रस्य स्कन्नस्य प्रायश्चित्तिः सा व्रतस्येति । अत्राग्निहोत्रप्रायश्चित्तातिदेशात्तदीयाः श्रपणधर्मा अपि आपस्तम्बेन सूचिता भवन्ति । प्रायश्चित्तं तु समन्त्रकमेव यथाविहितस्यैव विनष्टसंधानकरणे सामर्थ्यात् ।

व्रतप्रदाने विशेषमाह—

**अपरेणाऽऽहवनीयं व्रतमत्याहृत्य दीक्षिताय प्रयच्छति ।**

व्रतप्रद इति शेषः । अपरेणेत्येनबन्तम् । एनपा द्वितीयेति द्वितीया । अतिरत्याक्रमणार्थः । तेनैव यथेतं प्रत्येति । पत्न्या दक्षिणाग्निसमीप एवोपविष्टत्वान्नापरेणाऽऽहवनीयमत्याहृत्य तस्यै प्रदानं किं तु तत्रैव प्रदानम् । एतस्यार्थत एव सिद्धत्वान्न तत्प्रयुक्तविधानं कृतम् । इदं सूत्रं स्वायतन उपविष्टायैव दीक्षिताय व्रतं प्रदेयं न व्रतसमीप आगतायेत्येतदर्थं, कात्यायनेन स्वासने ये देवा इति व्रतयतीति स्पष्टमेवोक्तम् । आहवनीयग्रहणं दक्षिणाग्निव्यावृत्त्यर्थम् । अपरशब्दोऽग्रभागव्यावृत्त्यर्थः । एनबदूरत्वार्थः । अग्निहोत्रवत्तूष्णीमुन्नीयेत्यापस्तम्बः । चतुरवत्तिपञ्चावत्तिव्यवस्थया चतुः पञ्च वोन्नयनानि । अन्तिमे यावन्मात्रम् ।

**भद्रादभि श्रेयः प्रेहीति दीक्षितं प्रयातमनुमन्त्रयते ।**

प्रयातं देवयजनं प्रति पत्न्याऽरणीभ्यां पात्रैश्च सह प्रयाणधर्मेण प्राप्तमनुमन्त्रयते । परिभाषयाऽध्वर्युर्मन्त्रप्रतिपाद्यं पदार्थं ध्यायंस्तं पदार्थमनुलक्षीकुर्वंस्तं संस्तुवन्मन्त्रं पठेदित्येतदनुमन्त्रणम् । अभिमन्त्रणेऽनुमन्त्रणत आभिमुख्येक्षणे अधिके अन्यत्समानम् । प्रयान्तमिति पाठे प्रयाणसमय एवानुमन्त्रणम् । उद्देश्यगतत्वात्पुंस्त्वमविवक्षितं ब्राह्मणोऽग्नीनादधीतेतिवत् । तेन पत्न्या अप्यनुमन्त्रणम् । एकत्वमप्यविवक्षितं ग्रहं संमार्ष्टीतिवत् । तेन सत्रे सर्वेषां दीक्षितानामप्यनुमन्त्रणमध्वर्युणा कर्तव्यम् । आत्मनश्चेति द्रष्टव्यम् ।

दीक्षितस्य यूपं छिनत्ति यथा निरूढपशुबन्धे ।

अर्थादेव दीक्षितस्य सिद्धौ दीक्षितस्येतिवचनं दीक्षाणां बहुत्वे यस्मिन्कस्मिंश्चिद्दी-क्षादिवसे यूपच्छेदनं कर्तव्यं न प्रथमदिन एवेत्येतदर्थम् । एतदर्थमेव शाखान्तरे बहु-वचनं श्रूयते—दीक्षासु यूपं छिनत्तीति । सर्वपशूनामेष कल्प इत्यनेनैव सिद्धे यथा निरूढपशुबन्ध इति वचनं त्र्यरत्निर्वा चतुररत्निर्वा पालाशो निरूढपशुबन्धस्य यूपोऽ-तोऽन्ये सौम्यस्याध्वरस्येत्यनेन सौम्याध्वरसंबन्धिमानं प्राप्तं तद्दीक्षासु यूपच्छेदने निवारयितुं सर्वेषु कल्पेषु विकल्पं बोधयितुं वा । तथा चाऽऽपस्तम्बेन त्र्यरत्निश्चतुर-रत्निर्वा पालाशो निरूढपशुबन्धस्यातोऽन्ये सौम्यस्याध्वरस्येति वाजसनेयकमिति वाज-सनेयकग्रहणं विकल्पार्थं कृतम् ।

न यूपाहुतिं जुहोति होमार्थामृचं जपित्वाऽभिप्रव्रजति ।

यूपप्रकरणादेव सिद्धे यूपनिमित्तकाहुतित्वे यूपवचनं(नेन) यूपच्छेदनमात्राङ्गमेवेय-माहुतिर्भवति न केवलयूपनिमित्तकाहुतिस्तेन खलेवाल्यादौ छेदनाभावादियं यूपाहुतिर्न भवतीति साधितं भवति । यूपाहुतेः क्रतुसंयुक्तत्वेऽपि निषेधोऽनेन क्रियते । न यूपा-हुतिं जुहोतीत्येतस्यानुपपत्तौ होमजपयोः समुच्चयः स्यात्स मा भूदित्येतदर्थमिदं वचन-मावश्यकम् । नहि दीक्षितस्याग्नौ जुह्वति वैष्णवीमृचमनूच्याच्छैतीति शाखान्तरीयोऽयं होमाभावपक्षः । अच्छैति यूपं प्रागपमभिमुखं गच्छतीति श्रुतिगतस्याच्छैतीत्यस्यार्थः । होमार्थामृचमित्यादेरनुक्तौ जपाभावोऽपि स्यादविधानात्स मा भूदित्येतदर्थं जपित्वाऽभि-प्रव्रजतीतिवचनम् । होमार्थामितिवचनं स्थानापत्तिलाभार्थम् । तेनाऽऽहवनीयसमीप एव जपित्वाऽभिप्रव्रजतीति सिध्यति । ऋचमितिवचनमृक्त्वज्ञानावश्यकत्वार्थम् । तेन ज्ञानाभावे भ्रेषप्रायश्चित्तं कृत्वैवाग्रिमं कर्म कार्यम् । तच्चाध्वर्युसंबन्धित्वाद्यजुर्भ्रेषनिमि-त्तकमेव ।

अपि वाऽऽज्यमरणी चाऽऽदाय यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं हुत्वा यूपं छिनत्ति ।

शाखान्तरीयमेतत्प्रकारान्तरं होमसत्त्वेनाऽऽज्यस्यार्थादादाने सिद्धेऽत्र वचनमरणी-सहभावार्थम् । तेनाध्वर्युणैवारणी आज्यं च गृहीत्वा यूपसमीपे गन्तव्यमिति । आदान-वचनं परिकर्मिकर्तृकतां व्यावर्तयितुम् । तेनान्यत्राऽऽदानवचनाभावे परिकर्मिकर्तृकताऽ-प्यस्ति पक्ष इति ज्ञातं भवति । अरणीवचनं यत्किंचिदरणीलक्षणरहितकाष्ठव्यावृत्त्य-र्थम् । यूपस्यान्तिके यूपस्य समीपे संस्पृष्टत्वरूपं परमं सामीप्यमत्रान्तिकपदार्थो न भवति दाहप्रसङ्गात्किं तु यावता सामीप्येन यूपदेशमहं प्राप्तोऽस्मीति व्यवहारस्ता-वदेव सामीप्यमन्तिकपदेन विवक्षितम् । तस्य चैकत्वे यूपैकादशिन्यां तन्त्रमेव भेदे तु

भेद इति द्रष्टव्यम् । यूपस्येतिशब्दप्रवृत्तिर्भाविनीं संज्ञामादाय यदाहवनीये जुह्वतीत्याहवनीयशब्दप्रवृत्तिवत् । चकारोऽनुक्तस्रुवादिसमुच्चयार्थः । यूपस्येतिवचनमाहवनीयप्राग्वंशदेवयजनव्यावृत्त्यर्थम् । अन्तिक इतिवचनं दूरदेशव्यावृत्त्यर्थम् । अग्निं मथित्वेतिवचनं यूपस्यान्तिकेऽरण्योरेव कदाचिद्धोमः स्यात्स्थाण्वाहुतिवत्स मा भूदित्येतदर्थम् । अरणी आदाय मथित्वेत्येतावत्युच्यमानेऽप्यर्थादग्निलाभेऽग्निग्रहणमिदं मन्थनं निर्धर्मकमपूर्वमिति द्योतयितुम् । तेनारण्योर्लौकिकत्वं तूष्णीमेव मन्थनमिति च सिध्यति । अग्न्यर्थमायतनं कृत्वोद्धत्यावोक्ष्याग्निं निधाय होमः । मथित्वेति क्त्वाप्रत्ययेन यूपाहुतावव्यवहितोत्तरत्वमेवोच्यत इत्युक्तावपि प्रोक्षणीसंस्कारस्रुवसंमार्गाज्यसंस्कारैर्मध्ये कृतैरप्यव्यवहितोत्तरत्वं बाधितं न भवति तदङ्गत्वेन तदनुगुणत्वात्, येन नाव्यवधानं तेन व्यवहितेऽप्यव्यवहितत्वस्याबाधात् । यूपाहुतिं हुत्वेतिवचनमेतद्वचनाभावे न यूपाहुतिं जुहोतीति पूर्वसूत्रान्निषेधः प्राप्नुयात्तत्प्राप्तौ सत्यां मन्थनस्यादृष्टार्थत्वं च स्यात्तन्मा भूदित्येतदर्थम् । यूपच्छेदनमात्राङ्गभूताऽऽहुतिर्यूपाहुतिः । यूपग्रहणं विस्पष्टार्थम् । जुहोतीति परित्यज्य हुत्वेत्येवं वचनं यूपं छिनत्तीत्यस्य सप्रयोजनस्याऽऽकाङ्क्षाया उत्थापनार्थम् । यूपं छिनत्ति स्वरुचषालकरणान्तेन प्रकारेणेत्यर्थः । यूपं छिनत्तीतिवचनं प्रायश्चित्तपशुसहभावेऽप्येक एव यूप इति प्रदर्शयितुम् । एकयूप आलभत इति श्रुतिरपि अत्र साधिका । पाक्षिक एकादशयूपपक्षस्तु वाचनिक एकादशिन्याम् ।

क्रीते वा राजन्याहवनीये यूपाहुतिꣳ हुत्वा यूपं छिनत्ति ।

दण्डप्रदानानन्तरमिति केचित् । स्वजा असीत्यन्त इत्यन्ये । उदु त्यं जातवेदसमिति कृत इति परे । अग्निꣳ राजानमितिप्रैषानन्तरमित्यपरे । वस्तुतः क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीति क्रयाव्यवहितोत्तरं दण्डप्रदानं विहितं क्रीते वा राजनीति क्रयाव्यवहितोत्तरं यूपाहुत्यादि विहितं तत्रोभयोः कर्तृभेदात्समकालत्वसंभवेन यजमानेन दण्डप्रदाने क्रियमाणे तत्समय एव यूपाहुतिरध्वर्युणा होतव्येत्येव युक्तम् । यथा दण्डप्रदानयूपाहुतिक्रिययोः समाप्तिः समकाले भविष्यति तथा यतितव्यं द्रव्यत्यागानुरोधेन त्यागस्तु क्रयप्रदेशोपविष्टेनैव कर्तव्यः । आहवनीयग्रहणमपि वाऽऽज्यमरणी वाऽऽदाय यूपस्यान्तिकेऽग्निं मथित्वेत्येतत्प्रकारव्यावृत्त्यर्थम् । यूपाहुतिं हुत्वेतिवचनं न यूपाहुतिं जुहोति होमार्थामृचं जपित्वाऽभिप्रव्रजतीत्येतस्य कल्पस्य व्यावृत्त्यर्थम् । नन्विदमाहवनीयस्याधिकरणत्वविधानबलादेव सेत्स्यति यूपाहुतिं हुत्वेत्याकाङ्क्षापूरणमात्रार्थोऽनुवाद इति चेन्न । क्रीते वा राजन्याहवनीय इत्येतावत्युच्यमाने सप्तम्याः सामीप्यार्थकत्वमादायाऽऽहवनीयसमीपे जपं कृत्वाऽभिप्रव्रजतीति आहवनीयं यूपसमीपं नीत्वा तत्समीप एव च्छिनत्तीत्येतादृशमर्थद्वयं संभाव्येत तन्मा भूदित्येतादृशार्थव्यावृ-

त्तिरूपेऽनुवादप्रयोजने संभवति आकाङ्क्षापूरणमात्रार्थकत्वकल्पनाया अगतिकाया अन्याय्यत्वात् ।

अग्नीषोमीयसवनीययोरनूबन्ध्यायाश्च ॥ ३ ॥
समानो यूपः स्वरुराहवनीयो हृदयशूलश्च ।

अग्नीषोमौ देवता यस्य पशोः सोऽग्नीषोमीयः । सवने सुत्यायां भवः पशुः सवनीयः । प्रातःसवने वपायागः, माध्यंदिने सवने छिद्रापिधायिपुरोडाशयागः, तृतीयसवनेऽङ्गयाग इति भवति सवनीयत्वम् । एतानि प्रधानहवींषि । वपा पुरोडाशोऽङ्गानि हवींषीत्याश्वलायनः । अग्नीषोमीयश्च सवनीयश्चेति द्वंद्वः । अनूबन्ध्याऽनूबन्ध्याख्यः पशुः । अनु प्रधानानन्तरं बध्यत इत्यनूबन्ध्या तत्संज्ञकस्य पशोश्च यूपादीनि समानानि अभिन्नानि भवन्तीत्यर्थः । वशाऽनूबन्ध्या सो इति श्रुतावावन्तताया एव दर्शनात्सूत्रकृताऽपि तथैव निर्देशः कृतः । अग्नीषोमीयसवनीययोरेव समासेन निर्देशोऽनूबन्ध्यातोऽनयोर्द्व्यक्तं वैलक्षण्यमस्तीति । तेनानूबन्ध्यायां गोपशुनियमवदनयोर्गोनियमो न भवति किंतु च्छागोऽपि पक्षेऽनयोरिति । एतेषां पशूनां यूपादयश्चत्वारः साधारणा भवन्ति । सोमप्रकरणे विधानात्त्रयाणामर्थित्वादग्नीषोमीयसवनीयानूबन्ध्याख्यकर्मकालेऽनुस्पष्टयाऽमुष्येत्यवधारणाभावाच्च । एकादशाध्याये तृतीयपाद उक्तं जैमिनिना यूपश्चाकर्मकालत्वादितिसूत्रेण । सूत्रार्थस्तु दीक्षादिवसानां दीक्षासु यूपं छिनत्तीत्यनेन यूपच्छेदनाधिकरणत्वेन विहितानां ज्योतिष्टोमापूर्वप्रयुक्तानां साधारण्यात्सर्वपशुसाधारण्यं यूपस्येति । यूपश्चेत्यनन्तरं तन्त्रमिति शेषः । कर्मणः पाशुककर्मणः काल एव कालो यस्य तस्य भावस्तत्त्वम् । न कर्मकालत्वमकर्मकालत्वं कर्मकालत्वाभावस्तस्मादित्यर्थः । दीक्षादिवसात्मके काले हि पाशुककर्मकालसंबद्धत्वाभाव एवास्ति तस्य ज्योतिष्टोमकर्मकालसंबद्धत्वात्, दीक्षायाश्च साधारण्यात्तद्दिवसकर्तव्यस्य यूपस्य सर्वपशुसाधारण्यं युक्तम् । दीक्षाकालत्वं हि न दैक्षापूर्वप्रयुक्तं तदुपस्थापकानुष्ठानसादेश्याभावात् । अपि तु प्रकरणाज्ज्योतिष्टोमापूर्वप्रयुक्तं सत्तस्मिन्साक्षान्निवेशायोगात्तदङ्गभूतपशुद्वारा तदीययूपे निविशते । तदङ्गभूतत्वं च सर्वेषामविशिष्टमिति सर्वार्थत्वसिद्धिः । वस्तुतो दैक्ष एवोपदेशेऽपि सवनीयादावपि पाक्षिकाग्नीषोमीयातिदेशेन तत्प्राप्तिसंभवात्कालतन्त्रत्वादेव यूपतन्त्रत्वम् । एतेनैकस्मिन्नपि काले यूपत्रयापत्तिः परिहृता भवति । यूपतन्त्रत्वात्तत्संस्काराणां जोषणतक्षणादीनामपि तन्त्रत्वम् । नच दीक्षासु यूपं छिनत्तीत्यनेन च्छेदनमात्रस्यैवापकर्षविधानाज्जोषणतक्षणादीनामग्नीषोमीयकाल एव करणेनानुष्ठानसादेश्यात्तन्मात्रार्थत्वप्रतीतेर्गृह्यमाणविशेषत्वेन तदपवर्गेऽपवर्गादावृत्तिरिति वाच्यम् । यूपच्छेदनोद्देशे विशिष्टोद्देशापत्तेः । छेदनमात्रोद्देशेऽतिप्रसङ्गाद्यूपोद्देशेनैव कालविधिः । छिनत्तिस्तु तदुत्पादकसंस्कारमात्रोपलक्षणम् । तदुत्पादकाश्च संस्कारा यूपाहुत्याञ्जक-

च्छेदनाद्यष्टाश्रिकरणान्ता एवाग्नेरिवाऽऽधानादयो न तु प्रोक्षणाञ्जनादयोऽपि । ते तु संमार्गादिवदुत्पन्ने यूपे संस्काराधायकाः । तदेवं व्यवस्थायामपि ये तावदुत्पादकास्तेषां कर्मकालभिन्नकालत्वेनागृह्यमाणविशेषत्वादेव तन्त्रत्वं यूपवत् । ये तु प्रोक्षणादय उत्पन्नयूपसंस्कारकास्तेषामपकर्षकवचनाभावेन कर्मकाल एवानुष्ठेयत्वेन गृह्यमाणविशेषत्वेऽपि आतिथ्याबर्हिःप्रोक्षणन्यायेन यूपव्यक्तेरेकत्वात्तत्र कृतानां प्रोक्षणादीनां प्रसङ्गेनोपकारकत्वोपपत्तेस्तेषामपि नाऽऽवृत्तिः । केचित्तु तक्षणादिसंस्कारसंग्रहार्थं यूपं कर्तुं खदिरं छिनत्तीति पदद्वयाध्याहारं स्वी कुर्वन्ति । तन्न । तदपेक्षया लक्षणाया लघुत्वात् । एकादशाध्याये तृतीयपादे तस्य न्यायस्य मूलभूतसूत्रेऽपि जैमिनेः संस्कारास्त्वावर्तेरन्नर्थकालत्वात् । संस्कारास्तक्षणादयो यूपसंस्काराः । तुशब्दो यूपश्चाकर्मकालत्वादितिपूर्वाधिकरणतोऽत्र वैपरीत्यद्योतनाय । यूपस्यार्थः प्रयोजनं प्रधानीभूतं पशुबन्धनरूपं तत्कालत्वादावर्तेरन्नित्यर्थः । अयं पूर्वसूत्रार्थः । तत्कालः संस्कारकालः पशुबन्धनरूपप्रयोजनीभूतप्रधानकालस्तु यूपसंबद्धकर्मत्वात्तस्य यूपसंबद्धकर्मणः क्रतुधर्मविधानात्, दीक्षासु यूपं छिनत्तीतिदीक्षादिवसरूपाधिकरणकक्रतुप्रयुक्तो धर्मः । अनेन पशुबन्धनकालिकसंस्कारकरणं व्यावर्त्यते । सर्वार्थानां साधारणानां तक्षणादिसंस्काराणां, वाशब्दोऽवधारणे वचनादन्यकालत्वमे(?)तत्कालस्तु यूपकर्मत्वात्तस्य क्रतुधर्मविधानात्सर्वार्थानां वा[3] वचनादन्यकालत्वं सकृन्मानं च दर्शयतीति चेति द्वितीयसूत्रार्थः (?) । दीक्षासु यूपं मिनोतीतिश्रुतिर्दीक्षादिवसकाले सकृदेव मानं संस्काराणामपि दीक्षादिवसकालत्वं दर्शयतीति तृतीयसूत्रार्थः (?) । तत्कालस्तु यूपकर्मत्वात्तस्य क्रतुधर्मविधानात्सर्वार्थानां वा वचनादन्यकालत्वम् । सकृन्मानं च दर्शयति । अर्थः प्रयोजनं पशुबन्धनरूपं यूपस्य पशुबन्धनरूपकालत्वे संस्काराणामावृत्तिर्भवेत्, तदेव नास्ति तस्य दीक्षाकालत्वादिति सूत्रार्थः(?) । यूपच्छेदनकाल एव व्यामोहनिवृत्त्यर्थं नाशापहारनिवृत्त्यर्थं च स्वरोरुपादानं कर्तव्यमित्यगृह्यमाणविशेषत्वात्तन्त्रं स्वरुः । अत एव संस्थिते सोमे प्र प्रस्तरं हरति जुहोति स्वरुमित्यन्ते प्रतिपत्तिविधानमपि संगच्छते । सोमे प्र प्रस्तरं हरतीति श्रुतौ प्रस्तरं प्रहरतीत्यन्वयः । श्रुतित्वादुपसर्गक्रिययोर्मध्ये पदान्तरं न विरुध्यते । न चायमनूबन्ध्याङ्गभूतस्य कालविधिः । न्यायेन स्वरुतन्त्रत्वावगतौ संकोचे प्रमाणाभावात् । अत एव यत्र न्यायेनैव भेदावगतिर्यथा प्रस्तरे तत्र संकोच इष्ट एव । इदं जैमिनिनाऽपि एकादशाध्याये तृतीयपादे स्वरुस्तन्त्रापवर्गः स्यादस्वकालत्वादित्यनेन सूत्रेणोक्तम् । अस्वकालत्वात् , न विद्यते स्वस्मै कालो यस्य सोऽस्वकालस्तस्य भावस्तत्त्वं तस्माद्यूपवद्दीक्षादिनात्मकः कालः स्वार्थे विहितो नास्ति । अतोऽस्वकालत्वं

---

१ ख. म. °स्काला: सं° । २ ख. ग. °काला: प° । ३ स. ग. च ।

स्वरोः । अस्माद्धेतोः पाशुककर्ममध्य एवार्थतः स्वरोरनुनिष्पादनमार्थिकस्तन्त्रेणैवापवर्ग-स्तन्त्रहेतुक एवापवर्गस्तस्य स्वरोरपवर्गो लौकिकत्वं स्यात् । तेन सवनीयाद्यर्थे भिन्नो भिन्नस्वरुरिति पूर्वपक्षः । सिद्धान्तस्तु अस्वकालत्वहेतुसिद्धावेव तन्त्रापवर्गता वक्तव्या सैव न संभवति । स्वरोर्यूपानुनिष्पन्नत्वेन यूपोत्पत्तिसमनन्तरमेव तस्योत्पादने सिद्धे यूपवद्दीक्षादिनात्मककालस्य स्वार्थत्वमपि भवति । अतस्तन्त्रापवर्गताऽपि न । एवं च यूपवदकर्मकालत्वात्स्वरुरपि तन्त्रमिति जैमिनिसूत्रार्थः । आहवनीय औत्तरवेदिकः । तस्यैव यागाधिकरणत्वात् । अत एव मध्ये वचनम् । औत्तरवेदिकप्रणयनं प्रतिपशु प्राप्तं तन्निषेधार्थमाहवनीयग्रहणम् । औत्तरवेदिकाग्नेरधिकरणीभूताया उत्तरवेदेर्ज्योति-ष्टोमापूर्वप्रयुक्तत्वेन सर्वार्थत्वसिद्धौ तदाधेयस्यौत्तरवेदिकस्यापि सर्वार्थत्वस्य निर्विवा-दात् । हृदयशूलस्यैकत्वविधानाद्धृदयशूलस्याप्यकर्मकालत्वं बोध्यते । तेन यूपवृक्षजन्य एव हृदयशूलः । स च यूपाहरणसमय एव संपादनीय इति सिद्धं भवति । यूपैकाद-शिनीपक्षे प्रथमोपस्थितत्वादग्निष्ठस्यैवाग्नीषोमीयानूबन्ध्यार्थत्वम् । यद्यपि यत्रिषु यूपे-ष्वालभेत बहिर्धाऽस्मादिन्द्रियं वीर्यं दध्यात्, भ्रातृव्यमस्मै जनयेदित्यनेन प्रतिपशु यूपो निषिद्धस्तथाऽपि वचनबलात्पश्वेकादशिन्यां भविष्यतीति ज्ञेयम् ।

अपवृत्ते दीक्षापरिमाणे ।

अवधारितैकद्विऽयाद्यन्यतमदीक्षापरिमाणेऽपवृत्ते समाप्ते सति । एतेनोत्तरवेदिदेश इत्यादेः प्रायणीयादिवसेऽनुष्ठानं बोध्यते ।

उत्तरवेदिदेश उपरवाणां वा लोहितमानडुहं
चर्म प्राचीनग्रीवमुत्तरलोमाऽऽस्तीर्य तस्य
दक्षिणे पक्षे राजानं न्युप्योत्तरत उदकुम्भं
निधाय सर्वतः परिश्रित्योदीचीं द्वारं कृत्वा
सोमविक्रयिणं मपादयति कौत्सꣳ शूद्रं वा ।

उत्तरवेदिदेशोपरवदेशौ मानेन ज्ञातव्यौ । उपरवाणामित्यत्र समासैकदेशस्य देश-शब्दस्यान्वयः । अङ्गीकृतश्च पाणिनिनाऽप्येकदेशान्वयोऽनुस्वारस्य ययि परसवर्ण इतिसूत्रस्थसमासैकदेशसवर्णशब्दस्योदस्थास्तम्भोः पूर्वस्येत्येतत्सूत्रगतपूर्वशब्दे । लोहितं रक्तवर्णं लोहिताभावे त्वलोहितमपि । एतदुक्तं द्वैधे रोहिते चर्मणीति सूत्रं बौधायनस्याप्यरोहितं स्यादिति शालीकिरिति । अनः शकटं तद्वाही बलीवर्दस्तस्येदमा-नडुहं चर्म त्वक् । प्राचीनग्रीवं प्राग्दिक्स्थग्रीवमुत्तरलोमोपरिष्टाल्लोम । तैलेन चर्मणां शुद्धिरिति विहितां शुद्धिं कृत्वोपयोक्तव्यम् । विहितचर्मणो ह्यलाभे कृष्णाजिनं सर्वेषां प्रतिनिधित्वेन ग्राह्यम् ।

कृष्णाजिनं प्रतिनिधिरलाभे चर्मणां भवेत् ।
तदलाभे तु मेध्यस्य चर्मान्यस्य पशोर्भवेत् ॥

इति प्रतिनिधिप्रकरणे संग्रहोक्तेः ।

गृहप्रवेशेऽनडुहश्चर्माऽऽस्तरणमिष्यते ।
तस्याभावे तु तार्णस्य तल्पस्याऽऽस्तरणं भवेत् ॥

इत्याश्वलायनस्मृतौ तार्णतल्पस्याऽऽनडुहचर्मप्रतिनिधित्वेन ग्रहणात्सर्वथा चर्मालाभे तार्णस्तल्पो ग्राह्यः । कृष्णाजिनाभावे तु कृष्णवर्णरहितमृगाजिनं प्रतिनिधिः । तस्याप्यभावे रौरवादीन्यजिनानि । अनन्तरोक्तरीत्या तार्णस्तल्पो वा । आश्वलायनस्मृतावनडुद्ग्रहणस्य चर्ममात्रोपलक्षणार्थत्वादिति द्रष्टव्यम् । तस्याऽऽस्तृतस्य चर्मणो दक्षिणे पक्षे दक्षिणे भागे चर्मण उत्तरो भागो राज्ञो विवेचनायावशेषितो भवतीत्यार्थिकम् । उत्तरत इत्यत्र तस्येत्यनुवर्तते । चर्मण उत्तरे भाग उदकुम्भनिधानमिति शङ्कामपाकर्तुमेवोत्तर इति पूर्वसजातीयशब्दं परित्यज्योत्तरत इति शब्दान्तरग्रहणं कृतम् । उदकेन पूर्णः कुम्भ उदकुम्भः । उदकस्योदः संज्ञायामित्युदकशब्दस्योदादेशः । सर्वतः सर्वासु दिक्षु परिश्रित्य कटादिभिः परित आच्छाद्य । उदीचीमुत्तरादिगभिमुखाम् । द्वाःशब्दो रेफान्तस्तस्य द्वितीयैकवचनम् । अयं च शब्दः स्त्रियाम् । देवीर्द्वाराविति लिङ्गात् । द्वारविधानात्तद्वर्जं परिश्रयणम् । सोमविक्रयिणं सोमविक्रेतारं प्रपादयति परिश्रितं प्रवेशयति सोमविवेचनार्थम् । स च ब्राह्मणः कौत्सः कुत्सगोत्रः कुत्सितकर्मा वा । अत्राऽऽपस्तम्बः कौत्साद्राजानं क्रीणीयादन्यस्माद्वा ब्राह्मणादित्युक्त्वाऽऽहाप्यब्राह्मणादिति । शूद्रः सच्छूद्रो गोपो नापितो वा । सच्छूद्रौ गोपनापिताविति स्मृतेः । शाखान्तरे शमितृसोमविक्रयिणौ कुलालावित्याम्नानात्कुलालोऽपि पक्षे । निषादरथकारवद्यावदर्थमध्ययनमेतेषाम् । अयं च शूद्रो विप्राभावे द्रष्टव्यः । एतस्मादेव सूत्रादन्य एवेति गम्यते । यस्य कस्यचिदृत्विज एव सोमविक्रयित्वे क्रयजन्यदोषविशिष्टस्य स्वकर्मण्यनधिकारादन्य एव युक्त इति भावः । तृतीयाध्याये सप्तमे पादे विक्रयी त्वन्यः कर्मणोऽचोदितत्वादिति जैमिनिरप्येवमाह । सूत्रार्थस्तु विक्रयी सोमविक्रयी तु अन्य ऋत्विग्भ्योऽन्यः । कुतः कर्मणो विक्रयकर्मणोऽचोदितत्वादविहितत्वादक्रत्वर्थत्वान्निन्दितत्वादिति यावत् । प्रवृत्तिस्तु द्रव्यलोभवशेन द्रष्टव्या । वरणाभावाद्यथा शमित्रुपगातार ऋत्विज एव तथा विक्रयी न भवतीतिवैलक्षण्यद्योतनाय तुशब्द इति । कात्यायनोऽप्येवम् । सोमविक्रयी, उपपातकी । सोमः क्रेतव्य इत्यविधानात्

आममांससुरासोमलाक्षालवणसार्पिषाम् ।
विक्रये सर्वपण्यानां द्विजश्चान्द्रायणं चरेत् ॥

इत्युपपातकप्रकरणे शातातपेन चान्द्रायणस्योक्तत्वाच्च सोमविक्रये दोषः । यत्तु चतुर्विंशतिमते—

सुराया विक्रयं कृत्वा चरेत्सौम्यचतुष्टयम् ।
लाक्षालवणमांसानां चरेच्चान्द्रायणत्रयम् ॥
मध्वाज्यतैलसोमानां चरेच्चान्द्रायणद्वयम् । इति,

यच्च विष्णुवचनम्—रक्तवस्त्रमधुरसोर्णाविक्रयी त्रिरात्रमुपवसेत् । प्राणिसोमविक्रयी तप्तकृच्छ्रं कुर्यात्तं च भूयश्चोपनयेदिति, यच्च शङ्खलिखितवचनम्—न विक्रीणीयादविक्रेयाणि तिलतैलदधिक्षौद्रलवणलाक्षामद्यमांसकृतान्नस्त्रीपुरुषहस्त्यश्वगन्धरसक्षौमकृष्णाजिनसोमोदकनीलीविक्रयात्सद्यः पतति ब्राह्मण इत्युपक्रम्य संवत्सरं तप्तकृच्छ्रमाचरेदिति, यच्च पैठीनसिवचनम्—आरामतडागोदपानपुष्करिणीसुकृतसोमविक्रये त्रिषवणस्नाय्यधःशायी चतुर्थकालाहारो दशसहस्रं गायत्रीं जपन्संवत्सरेण पूतो भवतीति तद्भूयोभ्यासशक्ताशक्तपरत्वेन व्यवस्थापनीयम् । सुकृतं पुण्यं, कृतान्नं पक्वान्नम् । सोमविक्रयिणः स्पर्शे प्रायश्चित्तमुक्तं पराशरेण—

चैत्यवृक्षश्चितिर्यूपश्चण्डालः सोमविक्रयी ।
एतांस्तु ब्राह्मणः स्पृष्ट्वा सवासा जलमाविशेत् । इति ।

जलमाविशेत्स्नानं कुर्यादित्यर्थः । निषिद्धेऽपि कर्मणि प्रवृत्तिस्तु लोभवशात् । सोमविक्रयीत्यत्र कर्मणीनि विक्रियः इति सूत्रेण कर्मणि विपूर्वात्क्रीणातेरिनिः । कुत्सितग्रहणं कर्तव्यमिति वार्तिकात्स च कुत्सितेऽर्थे भवति ।

**सोमविक्रयिन्सोमꣳ शोधयेति संप्रेष्यति शुन्ध सोममापन्नं निरस्येति वा शुन्ध सोममापन्नं निरस्त इति वा ।**

निरस्त इति सप्तम्यन्तम् । हे सोमविक्रयकर्तः सोमं समीचीनकाण्डात्मकं राशीभूतात्सोमात्तृणादिभ्यश्च शोधय विवेचय चर्मण उत्तरभागे पृथक्कुर्वित्यर्थः । शुन्ध सोममापन्नं निरस्येति शुन्ध सोममापन्नं निरस्त इत्येतौ पूर्वेण सह विकल्पितौ शाखान्तरीयौ । आपन्नं सोमे पतितं तृणादिकं निरस्य दूरीकृत्य सर्वं सोमं शुन्ध समीचीनकाण्डभूतं विवेचयेत्यर्थः । निरस्ते तृणादिके बहिर्निरस्ते सति य आपन्नो लब्धः सोमस्तं शुन्ध पुनस्तमपि समीचीनकाण्डभूतं विवेचय पृथक्कुर्वित्यर्थः । वाशब्दद्वयमेकशाखागतावेतौ प्रैषौ नतु भिन्नशाखागताविति बोधयितुम् ।

शोधनप्रकारमाह—

यदन्यदꣳशुभ्यस्तदपोद्धराति ।

अंशुभ्यो यत्किंचिदन्यत्तृणादिकं तदपोद्धरति बहिर्निष्काशयतीत्यर्थः । उत्तरप्रै-षानुगुण्येनेदानीं व्याख्यायते—अंशुभ्यः समीचीनांशुभ्योऽन्यदसमीचीनकाण्डजातं तृणादिकं च तदपोद्धरति बहिर्निष्काशयतीत्यर्थः । यथा घटमानयेत्युक्ते कार्यक्षम एव घट आनीयते तथेति ।

नाध्वर्युः सोमं विचिनुयान्नास्य पुरुषो
न यजमानो न यजमानस्यामात्या
न विचीयमानस्योपद्रष्टारो भवन्ति ।

अध्वरं युनक्तीत्यध्वर्युः, अध्वरं नयतीति वाऽध्वर्युः, अध्वरं कामयत इति वाऽध्वर्युः । तथाच निरुक्तम्—अध्वर्युरध्वरयुरध्वरं युनक्त्यध्वरस्य नेताऽध्वरं कामयत इति वेति । क्षोधुकोऽध्वर्युः स्यादितिदोषश्रवणान्नाध्वर्युः सोमविवेचनं कुर्यात् । अस्याध्वर्योः पुरुषोऽपि विवेचनं न कुर्यात् । तत्पुरुषाणामप्यध्वर्युत्वात्क्षोधुकोऽध्वर्युः स्यादिति श्रुतो दोषस्तेषामप्यस्तीति भावः । नन्वेवं नाध्वर्यवः सोमं विचिनुयुरित्येवमेव वक्तव्यं तथाचैतावतैवाध्वर्युपुरुषाणामपि निषेधे सिद्धे पृथक्सूत्रकरणं व्यर्थमिति चेत्सत्यम् । नास्य पुरुष इत्ययं निषेधः शाखान्तरीयः स्वतन्त्र एव नतु स्वशाखागतस्याध्वर्युपदगतैकवचनस्य जात्यभिप्रायकत्वं कल्पयित्वा सर्वाध्वर्युपरत्वं, सर्वत्रातिप्रसक्तत्वेन वक्तुमशक्यत्वादित्येतादृशार्थज्ञापनार्थत्वेन वैयर्थ्याभावात् । तेन नासंस्थिते सोमेऽध्वर्युः प्रत्यङ्सदोऽतीयादित्यादावध्वर्योरेव निषेधो न तत्पुरुषाणामिति सिद्धं भवति । क्षोधुको यजमान इति दोषश्रवणाद्यजमानोऽपि विवेचनं न कुर्यात् । शाखान्तरीयमन्येषामपि विवेचननिषेधमाह—न यजमानस्यामात्या इति । अमात्याः पुत्रपौत्रादयः । विचीयमानस्य पुरुषस्योप समीप उक्ता अनुक्ताश्च द्रष्टारोऽपि न भवन्ति किमु वक्तव्यं विवेचनं न कर्तव्यमिति । एतेनाध्वर्युतत्पुरुषव्यतिरिक्तानामृत्विजामपि विवेचननिषेधो यजमानामात्यव्यतिरिक्तानामन्येषां च । नन्वेवं न विचीयमानस्योपद्रष्टारो भवन्ति किं वक्तव्यं विवेचनं न कर्तव्यमिति कैमुतिकन्यायेनैवाध्वर्य्वादीनामपि विवेचननिषेधसिद्धौ नाध्वर्युः सोमं विचिनुयादित्यादिनाऽध्वर्य्वादीनां पृथङ्निषेधो व्यर्थ इति चेन्न । तस्य दोषाधिक्यप्रदर्शनार्थत्वेन वैयर्थ्याभावात् । अध्वर्योर्यथा दोषस्तथैव तदीयपुरुषस्यापीति दर्शयितुं नास्य पुरुष इति । यथा यजमानस्य दोषस्तथा तदीयामात्यानामिति दर्शयितुं न यजमानस्यामात्या इति । सोमविक्रयिकर्तृकविवेचनसमये निषेधादेव विवेचननिषेधस्यापि सिद्धौ पृथग्विवेचननिषेधो दोषाधिक्यार्थः । दोषाधिक्याच्छ्रौतस्मार्तप्रायश्चित्तयोः समुच्चयः । द्रष्टृत्वे श्रौतमेव दोषाधिक्याभावात् । तत्र श्रौतं प्रायश्चित्तं सर्वप्रायश्चित्तमेव विशेषानुक्तेः । अनाज्ञातत्रयजपो वैष्णव्यृग्व्याहृतिजपश्च । स्मार्तमपि साधारणमेव ।

तत्र—हिरण्यदानं गोदानं भूमिदानं तथैव च ।
नाशयत्याशु पापानि महापातकजान्यपि ॥ इति संवर्तोक्तम् ॥
वाङ्मनःकायजान्दोषान्प्राणायामो विनाशयेत् ।
वेदमातृजपो वाऽपि प्रणवस्य जपोऽपि वा ॥ इत्याङ्गिरसोक्तम् ॥
लघुदोषे त्वनादिष्टे प्राजापत्यं समाचरेत् ।

इति चतुर्विंशतिमतोक्तं वा दोषतारतम्येन प्रायश्चित्तं द्रष्टव्यम् । विचीयमाने सोमे तस्य समीपे द्रष्टारोऽपि न भवन्तीत्यर्थः । उपेति ग्रहणाद्दूरतो दर्शने दोषो नैवेति । सोमविक्रयिणो यदि अलाभस्तदोपायमाह कर्मान्ते बौधायनः—अथ यदि न सोमविक्रयी स्यादग्रेण यूपावटकालं पलाशशाखां निहत्य समुपनह्य राजानं पलाशशाखायां समासज्ज्योपासीताथ यदि कश्चित्प्रसवयुक्तं व्याहरेत्क्षिप्रमिति वा त्वरध्वमिति वा कुरुतेति वेति तद्राजानमाददीत न संवादा आवर्तेरन्स सोमविक्रयी स्यादिति ।

प्रायणीयाप्रभृतिष्ववभृथान्तेष्विष्टिपशुबन्धेषु व्रतोपायनं जागरणं पत्नीसंनहनमारण्याशनं च न विद्यते ।

सोमाङ्गैरेव सिद्धार्थत्वादिति भावः । अन्तशब्दोऽवध्यर्थे । अवभृथान्ताश्चावभृथान्ताश्चावभृथान्तास्तेष्वित्येकशेषः । अवभृथावधिकासु इष्टिषु अवभृथावधिकेषु पशुषु चेत्यर्थः । यद्यपि पशुबन्धद्वयमेव तथाऽपि प्रायश्चित्तपशुद्वयमादाय बहुवचनम् । प्रायणीयाप्रभृतीष्वित्यनेन दीक्षणीयाव्यावृत्तिः । अवभृथान्तेष्वित्यनेनोदयनीयादिव्यावृत्तिः । सर्वेषु सौमिकेष्विष्टिपशुबन्धेष्विति सूत्रे यथादर्शितं प्रयोजनमिष्टिपशुबन्धग्रहणस्य तद्वदत्रापि द्रष्टव्यम् । अवभृथान्तेष्वित्यनेनैवायं हेतुर्लभ्यते । व्रतोपायनादीनां सिद्धार्थत्वं नियमेन प्रायणीयाप्रभृतिष्ववभृथान्तेष्वेवास्तीति हेतोस्तत्प्रभृतित्वं तदन्तत्वं चोक्तम् । प्रायणीयाप्रभृतिष्वित्यनेन दीक्षणीयाव्यावृत्तिः । ननु तदहर्दीक्षितो रात्रिं जागर्तीति याजमानसूत्रे दीक्षाकाले जागरणस्य विधास्यमानत्वादन्यस्य च सद्यस्कालतया प्राप्तेरेवाभावात्किमत्र निषिध्यत इति चेत्सत्यम् । आनर्थक्यप्रतिहतस्य निषेधस्य विपरीतं बलाबलमिति न्यायेन लक्षणया च जागरणशब्देन जागरणाभावसंपादकनिद्रास्थानिकक्षणिकनेत्रनिमीलनाकरणमभिधीयते तस्य निषेधोऽत्र क्रियते । एवं च परिस्तरणोत्तरकालं नेत्रनिमीलनरूपपदार्थोऽस्तीति गमयति । नेत्रनिमीलनाकरणरूपजागरणेनैव सिद्धेरिति भावः । सवनीयोपवसथीभूतायां रात्रौ यज्जागरणं तन्मुख्यम् । इष्ट्याद्यन्तःपातित्वेन तदभावस्तु क्षणिक एव स्वीकार्योऽन्यस्यासंभवात् । स च पदार्थः परिस्तरणोत्तरमेव परिस्तरणोत्तरकालस्यैव तदधिकरणत्वेन प्रकृतित उपस्थितत्वात् । अथवाऽयमर्थः—यज्ञसाधनरक्षणद्वारा जागरणस्याप्रमादार्थस्य नानेन निषेधः क्रियते

अन्यकालिकेष्टिष्वङ्गभूतपदार्थरक्षणासंभवात् । नहि काऽपि सोमाङ्गभूतेष्टिर्दीक्षा रात्रा-वस्ति । दीक्षणीयायाः सद्यस्कालाया दिन एव सत्त्वात् । प्रायणीयादौ त भिन्नकालता स्पष्टैव । किंतु अथ दीक्षित एतां रात्रिं जागर्ति तथा स्वप्नेन व्यावर्त्यत इत्यर्थवादानुसा-रात्स्वप्नव्यावृत्तिफलकजागरणस्यादृष्टार्थत्वप्रतीतेस्तस्य निषेधोऽत्र क्रियते । इतदृष्टस्य ज्योतिष्टोमपरमापूर्वोत्पत्त्यवधिस्थायित्वात्प्रसङ्गतस्तत्सिद्धेरिति भाव इति । व्रतोपायनस्य प्रसङ्गसिद्धिं द्वादशाध्याये प्रथमे पादे जैमिनिरपि तथा व्रतमुपेतत्वादित्यनेन सूत्रेणाङ्गी-कृतवान् । सूत्रार्थस्तु धारणार्थत्वात्सोमेऽन्यन्वाधानं न विद्यत इति पूर्वसूत्रे यथाऽन्यन्वा-धानं प्रसङ्गसिद्धत्वान्न विद्यते तथा व्रतं व्रतस्वीकारोऽपि न विद्यते । उपेतत्वात् । सोमार्थ-व्रतोपेतत्वात् । तस्य चासमाप्त्यविसृष्टत्वात्प्रसङ्गसिद्धिरिति । जागरणस्य प्रसङ्गसि-द्धिस्तु जैमिनिमते नास्ति । तथा च द्वादशाध्याये प्रथमे पादे तत्सूत्रं तद्युक्तं च काल-भेदादिति । सूत्रार्थस्तु तद्युक्तं दीक्षायुक्तं दीक्षाकालयुक्तं जागरणमपि कालभेदान्न प्रसज्येतेति । सौमिकेन जागरणेनैष्टिकजागरणजन्यादृष्टसिद्धौ प्रमाणाभाव इति भावः । पत्नीसंनहनमपि न दीक्षार्थेन संनहनेनैव सिद्धत्वात् । द्वादशाध्याये प्रथमे पादे जैमि-निरपि संनहनं च प्रवृत्तत्वादिति । सूत्रार्थस्तु संनहनं च न कर्तव्यं सोमे तस्य प्रवृत्त-त्वादिति । संनद्धैव कर्माणि कार्याणीत्येवमर्थं संनहनं नादृष्टार्थं तथा सोमार्थसंनहने-नैव संनद्धत्वसिद्धेरदृष्टार्थत्वाभावाच्च न पृथक्संनहनमिति भावः । आरण्याशनस्यापि पयोव्रतेन प्रसङ्गसिद्धिर्जैमिनिनाऽपि स्वीकृता—अन्यविधानादारण्यभोजनं न स्यादुभयं हि वृत्त्यर्थमिति । अन्यस्य पयोव्रतस्य विशेषस्य विधानात्प्राकृतस्याऽऽरण्यभोजनस्य निवृत्तिः । कुतः, हि यस्मादुभयं पयोव्रतमारण्याशनं चेत्येतदुभयं वृत्त्यर्थं तृप्त्यर्थं, तथाच व्रतजन्यतृप्त्यैवाऽऽरण्याशनजन्यतृप्तिसिद्धेर्न तदर्थमारण्याशनमिति । न च पयोव्रतारण्याशनयोर्विजातीयतृप्तिरूपकार्यभेदात्कथं प्रसङ्गसिद्धिरिति वाच्यम् । आनु-षङ्गिकत्वेन तृप्तेर्गुणीभूतायाः प्राणधारणस्यैव क्रतूपयोगितया मुख्यत्वेन प्रसङ्गसिद्धेः संभवादिति भावः । सद्यस्कालत्वेनैवाऽऽरण्याशनाभावे सिद्धेऽयं निषेधो ज्ञापयति सद्यस्कालास्वपीष्टिषु स्वतन्त्रास्वपि स्वस्थान आरण्याशनमस्तीति । शुक्रादीक्षायै तपसो विमोचनीरितिमन्त्रलिङ्गादवभृथस्य दीक्षाविमोचनार्थत्वात्तावत्पर्यन्तं व्रतोपायनादीनां निषेधः । अवभृथोत्तरं त्वेतानि भवन्त्येव । तत्र तेषां विमुक्तत्वात् । पत्नीसंनहनमपि भवत्येव योक्त्रस्य त्यक्तत्वात् । याजमानसूत्रे त्यागं वदिष्यति योक्त्रस्य । एतेन दीक्षणीयाप्रभृति योक्त्रमावभृथाद्धार्यमिति सिद्धं भवति । आह च बौधायनः— संनद्धा पत्नी यज्ञपुच्छमन्वास्त इति ।

सर्वाण्युत्तरासु क्रियन्ते ।

सर्वाण्येतानि उत्तरासु क्रियन्ते कर्तव्यानीत्यर्थः । उत्तरा च, उत्तरश्च, उत्तरा चेत्येक-

१ ख. ग. °ष्टार्थतया सो° ।

शेषः। परवल्लिङ्गमित्यनेन स्त्रीलिङ्गान्ततैव। तल्लक्षणविशेषत्वाभावात्। प्रायणीयाप्रभृतिष्वित्यनेन यथा दीक्षणीयाया निषेधविषये व्यावृत्तिस्तद्वत्करणविषयेऽपि व्यावृत्तिरित्यर्थं बोधयितुमिदं सूत्रम्। अत एवेतरासु क्रियन्त इति परित्यज्योत्तरासु क्रियन्त इत्युत्तरशब्दग्रहणं कृतम्। एवं चोभयत्रापि दीक्षणीयायाः परित्यागाद्विकल्पः सिध्यति। स च व्यवस्थितः पूर्वत्र दीक्षणीयायामसिद्धार्थत्वात्सर्वाणि एतानि भवन्ति उत्तरत्र दीक्षणीयायां सिद्धार्थत्वान्नैतानीति द्रष्टव्यम्। ब्रह्मवरणमपि सोमार्थवरणेनैव सिद्धत्वान्न भवतीत्युक्तमेव प्राक्। न चैवं प्राकृतहोतृवरणस्यापि समन्त्रकहोतृवरणेन सोमार्थेन सिद्धिरस्त्विति वाच्यम्। अदृष्टार्थस्य प्राकृतवरणस्य दृष्टार्थेन सौमिकेन वरणेन प्रसङ्गसिद्धेरभावात्। प्रवृत्तेषु हि केषुचित्पदार्थेषु पश्चादग्निर्देवो होता देवान्यक्षद्विद्वाँश्चिकित्वदित्यादिना प्रकृतौ होतृवरणमाम्नातमतस्तस्य प्रवृत्तत्वेन दृष्टार्थत्वानुपपत्तेरदृष्टार्थत्वम्। सौमिकस्य तु अप्रवृत्ताभ्यर्थनरूपत्वाद्दृष्टार्थत्वमेवेति। तथा च द्वादशाध्याये प्रथमपादे जैमिनिः—प्रवृत्तवरणत्वात्प्रतितन्त्रं वरणं होतुः क्रियेतेति। सूत्रार्थस्तु प्रवृत्तस्य कर्मणि प्रवृत्तस्य होतुर्वरणत्वात्प्रवृत्तहोतृसंबन्धिवरणत्वात्प्रवृत्तं होतृसंबन्धि अग्निर्देवो होतेत्येतद्वरणम्। एतेनाऽऽनतिरूपदृष्टार्थत्वं व्यावर्त्यते। तथाचेदं वरणमदृष्टार्थमित्युक्तं भवति। एवं च दृष्टार्थवरणेनादृष्टार्थवरणप्रसङ्गसिद्धेरभावात्। दीक्षणीयादि कर्मेष्टिकं पाशुकं च तन्त्रशब्देनोच्यते। तत्र सर्वत्र होतुर्वरणं क्रियेत कर्तव्यमेवेति।

**सवनीये पशौ सवनीयेषु च पुरोडाशेषु नाग्न्यन्वाधानं विद्यते ॥ ४ ॥**

दीक्षणीयया प्रधानार्थयाऽऽरादुपकारिण्या यजमानसंस्कारिण्या चार्थवादबलेन याज्यालिङ्गेन च सोमदेवतापरिग्रहोऽपि कार्य इति सूचयितुमेव निषेधः। दीक्षणीयया सोमदेवतापरिग्रहासिद्धौ तु तत्कालपातिसवनीयपशुसवनीयपशुपुरोडाशदेवतानामपरिग्रहासिद्धौ सूचीसूत्रन्यायेन तत्पृष्ठलग्नायां निषेधस्यासंगत्यापत्तेः। तस्मादेतन्निषेधबलाद्दीक्षणीयया सोमदेवतापरिग्रहः क्रियत इत्येवाङ्गीकर्तव्यम्। अन्वाधानं द्विविधम्। प्रत्यक्षाग्निग्रहणं प्रथममङ्गम्। तच्च विहव्याभिः साध्यम्। देवतारूपाग्निग्रहणं द्वितीयम्। एवं हीष्टं सूत्रकारस्य देवतारूपाग्नेः परिग्रहणेन देवतापरिग्रहो भवति नतु प्रत्यक्षाग्निधारणेन विहव्यान्वाधानेनेत्यत्रेदमेव लिङ्गम्। आग्नावैष्णवमेकादशकपालं निर्वपेदित्युपक्रम्याऽऽहाग्निरवमो देवतानां विष्णुः परमो यदाग्नावैष्णवमेकादशकपालं निर्वपति देवता एवोभयतः परिगृह्य यजमानोऽवरुन्ध इति देवताया अग्नेर्विष्णोश्च परिग्रहेण प्रधानदेवतापरिग्रह एवोक्तः। प्रधानं सुत्या तदर्था दीक्षा। उक्तं च तृतीया·

ध्याये सप्तमपादे जैमिनिना दीक्षादक्षिणं तु वचनात्प्रधानस्येति सूत्रेणेति । न च दीक्षा सोमस्येति श्रुतेर्दीक्षायाः प्रधानमात्रार्थत्वेऽपि तज्जनकीभूतदीक्षणीयाया आर्थत्वादिकदेवतापदस्य प्रधानदेवतामात्रपरत्वे प्रमाणाभावेनाङ्गप्रधानसाधारणदेवतापरिग्रहार्थत्वमस्त्विति वाच्यम् । दीक्षा सोमस्येति श्रुत्या दीक्षायाः प्रधानमात्रार्थत्वे सिद्धे तज्जनकीभूताया दीक्षणीयाया अपि प्रधानमात्रपरत्वस्यार्थतः सिद्धिमि(द्धावि)व प्रधानदेवतामात्रपरत्वसिद्धावेतस्या एव श्रुतेः प्रमाणत्वेनाङ्गदेवतापरिग्रहस्यासिद्धत्वेन तदर्थं तत्तदिष्टिपशुषु अन्यन्वाधानविधानस्यात्यन्तं युक्तत्वात् । जैमिनिसूत्रार्थस्तु दीक्षा च दक्षिणा चानयोः समाहारो दीक्षादक्षिणम् । गवाश्वप्रभृतीनि चेत्यनेन समाहारद्वंद्वः । दीक्षा च दक्षिणा च दीक्षा सोमस्य दक्षिणा सोमस्येतिवचनात्प्रधानस्य स्यातामिति । अग्नीषोमीयविकारेऽतिदेशानतिदेशरूपमेतत्प्रयोजनम् । विस्तरस्त्वाकरे द्रष्टव्यः । याज्यानुवाक्ये अपि प्रधानदेवतापरिग्रहमेव वदतः । तत्राग्निश्च विष्णो तप इति याज्यायां विश्वैर्देवैर्यज्ञियैः संविदानौ दीक्षामस्मै यजमानाय धत्तमिति पठ्यते । तत्र विश्वदेवशब्दस्य

आदित्यविश्ववसवस्तुषिताभास्वरानिलाः ।
महाराजिकसाध्याश्च रुद्राश्च गणदेवताः ॥

इतिकोशाद्गणविशेषरूढत्वावगतौ तत्र वसूनां प्रातःसवनदेवताभूतानां रुद्राणां माध्यंदिनसवनदेवताभूतानामादित्यानां विश्वेषां देवानां च तृतीयसवनभूतानां चैव प्रकृते गणदेवतात्वेन तेषामेव प्रकृते प्रधानदेवतात्वमवगम्यते । एतादृशदेवतापरिग्रहमेव याज्या वदति । दीक्षापालशब्देन सर्वाः सोमेज्यदेवता इन्द्रादयोऽपि गृह्यन्ते । स्वानुकूलस्य भृत्यस्य यथा स्वाम्येव पालकस्तथा सुत्यादेवतानामेव मुख्यत्वेन स्वामित्वात्स्वानुकूलदीक्षापालकत्वम् । विश्वैर्देवैर्युक्तावस्मै यजमानाय दीक्षां धत्तमिति । दीक्षा च प्रधानार्था । अतो देवताः प्रधानार्था एव दीक्षासंपाद(दि)काः । तथाऽग्निरग्रे प्रथमो देवतानामितिपुरोनुवाक्यागतदेवताशब्दोऽपि प्रधानदेवतापर एव याज्यानुरोधात् । एतेनावमपदं यथा निकृष्टार्थकं तथा प्राथम्यार्थकमपि । तथा परमपदापरपर्यायमुत्तमपदमुत्कृष्टार्थकं सचरमार्थकमपि । तथाचाग्निरग्रे प्रथमो देवतानां संयातानामुत्तमो विष्णुरासीदिति सर्वदेवताप्रथमचरमभूतयोरग्नाविष्णोर्ग्रहणे प्रत्याहारन्यायेन मध्यमस्थानां प्रधानदेवतानामिवाङ्गदेवतानामपि ग्रहणमितीयमपि शङ्का निरस्ता भवति । तथाच प्रधानार्थया दीक्षणीययाऽग्निविष्णुयागद्वारेण प्रधानदेवतापरिग्रह एव युक्तो नतु साङ्गप्रधानार्थानां परिग्रहः । यतो वदिष्यति प्रायणीयादिषु पुनर्देवतापरिग्रहार्थमन्वाधाने चोदकप्राप्तेऽपि अन्यन्वाधानं यत्परैः प्रतिषिद्धं तदेव पुनर्विहितम् । ननु अत्राप्यग्निः सर्वा देवता इति देवतारूपाग्नेरारम्भेण साङ्गप्रधानार्थेन साङ्गप्रधानदेवतापरिग्रहसिद्धौ कथमन्यन्वाधानं विहितमिति चेत्, सत्यम् । देवतारूपाग्नेरारम्भेण देवतारम्भमात्रस्यैव सिद्धेर्नैत्वन्वाधानस्य तस्य शब्दान्तरत्वेन कर्मान्तरत्वात् । अत

एताङ्गभूतेषु पशुष्वन्वारम्भणीयां प्रतिषेधति सवनीयमात्रे चान्वाधानप्रतिषेधात्प्रायणी-यादिष्वग्नीषोमीयानूबन्ध्ययोश्चानुजानाति। अत एव निरूढेऽपि धारयत्याहवनीयमित्य-न्वारम्भणीयानन्तरमुक्त्वाऽग्नीनन्वादधातीत्याह । ततो ज्ञायत आरम्भे सिद्धेऽपि मान्वाधानं सिध्यतीति। तस्माद्दीक्षणीयया प्रधानदेवतानामेव परिग्रह इति सिद्धम्। ननु सवनीये पशौ सवनीयेषु च पुरोडाशेषु नाग्न्यन्वाधानं विद्यत इति प्रतिषेधादेवेतर-त्रान्वाधानसिद्धौ पुनर्विधानं परमतप्रतिषिद्धान्वाधानस्य पुनः प्राप्त्यर्थं यथा कृतं तथा दीक्षणीयायामपि परमतप्रतिषिद्धान्वाधानस्य पुनःप्राप्त्यर्थं कुतो न कृतमिति चेन्न। दीक्षणीयायां तद्विरहेऽपि तत्सिद्धेः। कथमिति चेत्। उच्यते—दीक्षणीयायां जातायां सत्यामेव तस्या देवतापरिग्राहकत्वम्। तस्याश्च ग्रहणार्थं च पूर्वमिष्टेस्तदर्थत्वादिति जैमिनिमते दर्शपूर्णमासप्रकृतीनां सोमेऽग्न्यन्वाधानं व्रतोपायनमारण्याशनं जागरण-मन्वाहार्यस्य च दानं पत्न्याश्च संनहनं विमोचनमिति न विद्यन्त इति आपस्तम्बमते प्रायणीयायास्तन्त्रं प्रक्रमयति तत्रैतानि[1] न क्रियन्तेऽग्न्यन्वाधानं व्रतोपायनं पत्नीसं-नहनमन्वाहार्यं इति ये के च सोम इष्टिपशुबन्धाः सर्वेष्वेवैतानि[2] न क्रियन्त इति भारद्वाजमते च साङ्गप्रधानदेवतापरिग्रहार्थत्वं तत्स्पष्टतया खण्डयितुं तत्र तत्रान्वाधान-विधानम्। अन्यथा सवनीये पशौ सवनीयेषु च पुरोडाशेषु नाग्न्यन्वाधानं विद्यत इत्यनेनैव सिद्धेस्तत्र तत्र विधानमनर्थकं स्यात्। अनिष्पन्नाया दीक्षणीयायाः स्वीय-देवतापरिग्रहे सामर्थ्याभावात्। अङ्गदेवतानामपि परिग्रहार्था दीक्षणीयेति वदताऽऽप-स्तम्बेनाप्यग्न्यन्वाधानं दीक्षणीयादेवतापरिग्रहार्थमवश्यमङ्गीकरणीयमेव। एवं च परमत-स्यापि स्वतुल्यत्वसाधनेन भगवताऽऽचार्येण दूषितप्रायत्वात्तन्मतखण्डनार्थान्वाधान-विधानक्लेशो न कृतः। प्रायणीयाया अपूर्वत्वपक्षेऽन्वाधानस्याप्यपूर्वविधानं तत्रेति द्रष्टव्य-मिति सुस्थम्। ग्रहणार्थं च पूर्वमिष्टेस्तदर्थत्वादित्युदाहृतजैमिनिसूत्रार्थस्तु पूर्वमन्वा-धानं ग्रहणार्थमपि निवर्तेत, इष्टेर्दीक्षणीयाया अपि तदर्थत्वादन्वाधानार्थत्वादिति।

**इत्योकोपाह्वश्रीमदग्निष्टोमसाहस्राग्निचयनसहितवाजपेयसर्वतोमुखद्विषाह-स्राग्निचयनसहितपौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथदीक्षित-विरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसूत्राम्बुधिगतनि-गूढार्थरत्नालाभकृतविद्वज्जनसंतापशामिकायां ज्योत्स्ना-ख्यायां वृत्तौ सप्तमप्रश्नस्य प्रथमः पटलः ॥ १ ॥**

---

१ ख. ग. °नि क्रि°। २ ख. ग. °नि क्रि°।

अथ सप्तमप्रश्ने द्वितीयः पटलः।

---

प्रायणीयायास्तन्त्रं प्रक्रमयति।

प्रपद्यतेऽनया यज्ञं दीक्षित इति प्रायणीया तत्संबन्धितन्त्रं कर्मकलापस्तं प्रक्रमयति आरमत इत्यर्थः। स्वार्थे णिजयम्। अथवा परार्थ एव णिच्। तत्र प्रयोजको यजमानः प्रयोज्योऽध्वर्युरिति। अनेनेदं ज्ञाप्यते प्रायणीयायास्तन्त्रस्य प्रक्रमं कुर्विति प्रेरणावाक्यं प्रयोक्तव्यमिति। एतच्च प्रायणीयायामेवादृष्टार्थमिति ज्ञेयम्।

तत्र यावत्क्रियते तद्व्याख्यास्यामः।

तत्र प्रायणीयासंबन्धिनि तन्त्रे यावत्कर्तव्यं तन्त्रं तद्व्याख्यास्यामो नानाश्रुतिभ्य उपसंहृत्य कथयिष्याम इत्यर्थः। अपूर्वत्वमेतस्या इष्टेर्द्योतयितुमेवैतत्सूत्रम्। अथ प्रायणीया तत्र यावत्क्रियते तद्व्याख्यास्याम इत्येतावत्येव लाघवाद्वक्तव्ये प्रायणीयायास्तन्त्रं प्रक्रमयतीति गुरुसूत्रकरणमध्वर्युतन्त्रविषय एवापूर्वत्वं न हौत्रादितन्त्रविषय इति। तेन देवा यो इत्यादि वाचस्पत इत्यादि च प्रकृतिवत्सर्वमत्र भवत्येव। अत्र यत्प्रापणे तत्संबद्धत्वेनान्यान्यपि कर्माणि प्राप्नुवन्ति तत्परो.यावच्छब्दः। तेनेध्माबर्हिराहरतीत्युक्तौ न केवलमाहरणमात्रं किंत्वसिदादानादिकः सर्वोऽपि विधिर्भवति बर्हिषः प्रोक्षणादिकं च। एवमन्येष्वपि द्रष्टव्यम्। एतादृशकर्मभिन्नचोदकपरिलोपकत्वादपूर्वत्वम्। तच्च चोदकमाज्यभागप्राशित्रहरणादि। अपूर्वत्वमूलीभूता श्रुतिः साक्षाद्यद्यपि नास्ति तथाऽपि भगवदाचार्यवचनबलादनुमीयत इति ज्ञेयम्।

अग्नीनन्वाधायेध्माबर्हिराहरति।

अपूर्वत्वादप्राप्तमन्वाधानं विधीयते। इष्टेः कृत्स्नत्वपक्षे त्वपूर्वत्वाभावेऽपि परैः ।तिषिद्धत्वाद्विधानम्। ननु अग्नीनन्वाधाय बर्हिराहरतीत्येतावदेव वक्तव्यमिध्माह
णं तु सप्तदश सामिधेन्य इत्यादिविधानादेव सिध्यतीति चेन्न। तस्याऽऽघारसमिपरिधिसहितेध्माहरणप्रापणार्थत्वात्। तेनाऽऽघारपरिधिपरिधानं च सिद्धं भवति। क्रमप्राप्तानुवाद इष्टेः कृत्स्नत्वपक्षे पौर्णमासतन्त्रत्वख्यापनार्थः।

सप्तदश सामिधेन्यो नानूयाजसमिधमुपसंनह्यति यद्यनूयाजा न भवन्ति।

नानूयाजसमिधमुपसंनह्यतीत्येतावदुच्यमानेऽनूयाजसत्त्वेऽपि अपूर्वत्वादनूयाजसमिद
ावः स्यात्तद्वारणार्थं यद्यनूयाजा न भवन्तीति। अनूयाजा न वा भवन्तीत्यनूयाजाावविधानादेवानूयाजसमिधस्तत्संबन्धित्वादभावसिद्धौ नानूयाजसमिधमुपसंनह्यति यद्यनूयाजा न भवन्तीति विशिष्टं वचनं कृत्स्नत्वपक्षेऽनूयाजानां विकल्पो न भवति किं तु नियता एवेतिज्ञापनार्थम्। आतिथ्यायामनूयाजाभावेऽपि अनूयाजसमिदस्ति। सा च

समिधो अग्न आहुतेत्यस्यां प्रक्षेपणीयदारुभिः सहैव प्रक्षेपणीयेतिज्ञापनार्थम् । सूत्रार्थस्तु स्पष्ट एव ।

**वेदं कृत्वाऽग्नीन्परिस्तीर्य पाणी प्रक्षाल्योलपराजीᳲ स्तीर्त्वा यथार्थं पात्राणि प्रयुनक्ति स्थालीं कपालानाᳲ स्थाने प्रयुनक्ति ।**

वेदं कृत्वेत्यनेन वेदसंबद्धकर्मणां सत्त्वं सूच्यते । अन्यथा वेदकरणस्य निरर्थकत्वापत्तेः । वेदसंबद्धकर्माणि वेदिसंमार्जनं वेदेनोपयम्योपबिलं स्थाल्या जुहूं धारयमाण इति वेदेनोपवाज्येति । वेद्याच्छादनस्य बर्हिष्प्रयोजनत्वेन वेदिकरणं विना वेद्यसंभवेन बर्हिराहरणविधिबलाद्वेदिकरणमपि सूचितं भवति । वेदं कृत्वेति क्त्वाप्रत्ययान्तोऽनुवादो वेदकर्ताऽध्वर्युः स एवात्राग्निपरिस्तरणकर्तेति समानकर्तृकत्वार्थः । अनेनाऽऽग्नीध्रादीनां निवृत्तिरत्र । अग्नीन्परिस्तीर्येति ल्यप्प्रत्ययान्तोऽनुवादः समानकर्तृकत्वार्थः । तेन पाणिप्रक्षालनकर्ता यः स एवाग्निपरिस्तरणकर्तेति । तेन पाक्षिकान्यकर्तृकत्वव्यावृत्तिः । प्रैषस्य त्वात्मार्थताया अपि सत्त्वान्न निवृत्तिः । प्रकृतौ ल्यप्प्रत्ययान्तप्रयोगादेव पाणी प्रक्षाल्येत्यपेक्षितम् । अन्यथाऽग्नीन्परिस्तीर्योलपराजीᳲ स्तीर्त्वेत्येवमुच्यमाने पाणिप्रक्षालनस्य निवृत्तिरेव स्यात् । अतः पाणिप्रक्षालनानिवृत्त्यर्थमिदं वचनम् । पाणी प्रक्षाल्येत्ययं ल्यप्प्रत्ययान्तोऽनुवादः । प्रकृतावेवैवमस्तीति हेतोः । सभ्यावसथ्यपक्षे तयोरपि परिस्तरणम् । उलपाः शुष्कदर्भाः । बल्वजतृणानीति केचित् । उशीरतृणानीत्यन्ये । ऊर्ध्वतृणानीति परे । तेषां राजी पङ्क्तिस्तां स्तीर्त्वा विस्तारयित्वा यथार्थं यथाप्रयोजनं पात्राणि प्रयुनक्तीत्यर्थः । यथार्थमितिवचनं प्रयोजनाभाववतां शम्यादृषदुपलाकुटरुपिष्टसंमार्जनार्थमेक्षणान्वाहार्यस्थालीमदन्तीपात्रयोक्त्राणां निवृत्तिं प्रदर्शयितुम् । अपूर्वत्वपक्षे प्राशित्रहरणस्यापि । स्थालीं कपालानाᳲ स्थाने प्रयुनक्तीति वक्ष्यमाणसूत्रादेव कपालानां निवृत्तिः । नच दृषदुपलयोः कुटरोश्च शम्यया समाहननपक्षे शम्याया वा समाहननार्थमासादनमस्तु इति वाच्यम् । चरौ समाहननस्य दृषदुपलसंस्कारार्थत्वेन प्रकृते दृषदुपलयोः प्रयोजनाभावेन तदभावे तत्संस्कारस्य समाहननस्याप्यभावात् । समाहननाभावादेव तत्करणस्य कुटरोः शम्याया वाऽपि निवृत्तिः । स्पष्टं सर्वमेतदाह भरद्वाजः—असति द्रव्ये कर्मलोपो यथा चरौ समाहननमाप्येभ्यो निनयनमिति । तत्र द्वंद्वत्वसंपत्तिरेवम्—स्फ्यः समेक्षणस्थाली चेति द्वंद्वम् । कृष्णाजिनं तृणं चेति द्वंद्वम् । सूत्रान्तरे द्वंद्वार्थं तृणप्रयोगस्य विहितत्वात् । आज्यस्थाली तृणं चेति द्वंद्वम् । पात्री तृणं चेति द्वंद्वम् । प्राशित्रहरणाभावे वेदं तृणं चेति द्वंद्वम् । स्तीर्त्वेति क्त्वाप्रत्ययेन तूष्णीं दक्षिणां तूष्णीमुत्तरामिति ब्रह्मयजमानसदनकरणं च व्यावर्त्यते । अथवा राजीमिति जातावेकवचनम् । तेन तूष्णीं दक्षिणां तूष्णीमुत्तरामिति भवत्येव । ब्रह्मयजमानसदनकरणं त्वत्र व्यावृत्तत्वात् तयोरुपवेशनकाल एवाध्वर्युणा कर्तव्यम् ।

दर्भास्तरणपात्रप्रक्षालने तु भवत एव । तयोरङ्गत्वेनाव्यवधायकत्वात् । स्थाली लोकप्रसिद्धा तां कपालानां स्थाने कपालानामतिदेशप्राप्तानां चरुपाकासमर्थानां स्थाने तत्प्रयोजन उद्देश्ये पात्रप्रयोगकाले प्रयुनक्ति । उत्तरसंस्कारानपि तुल्यान्कपालवदित्यर्थोऽन्यस्मिंश्च द्रव्य इति सूत्र उदाहृत एव । चरुकल्पान्व्याख्यास्यामः स्थालीं कपालानां स्थाने प्रयुनक्तीत्यादिनैवात्र सिद्धेरत्र पुनर्वचनमपूर्वत्वेन कपालधर्माणामप्राप्तिः स्यात्तां वारयितुम् । स्थालीं कपालानां स्थाने प्रयुनक्तीतीतरचरुधर्मप्रदर्शनार्थम् ।

निर्वपणकालेऽदित्यै प्रायणीयं चरुं निर्वपति पयसि श्रपयति ।

प्रकृष्टमयनं गमनं यज्ञं प्रति यज्ञेन सह संबन्ध इति यावत् । तत्प्रायणं तदर्हतीति प्रायणीयः । प्रधानस्य दूरत्वेऽपीत आरभ्य प्रधानकालपर्यन्तं वर्तमानत्वमेवात्र प्रकर्षः । तत्र प्रधानकालवर्तमानत्वं निष्कासद्वारा । अयधातोर्गत्यर्थकत्वेऽपि प्रकृते संबन्धार्थकत्वं स्वी क्रियते । दृष्टं ह्यन्यत्र धातूनामनेकार्थत्वम् । निर्वपणकाल इति वचनं पवित्रकरणादिसूचनार्थम् । अन्यथाऽपूर्वत्वेनाप्राप्तिः स्यात् । प्रायणीयमिति ब्राह्मणव्याचिख्यासयेति द्रष्टव्यम् । पयसि प्रणीतावत्प्रणीते पयसि नतु वत्सापाकरणादिभिर्धर्मैरुत्पादिते पयसि । तथाच नवमाध्याये चतुर्थपादे जैमिनिः—प्रदानदर्शनं श्रपणे तद्धर्म भोजनार्थत्वात्संसर्गाच्च मधूदकवत् । अधर्मं त्वप्रदानात्प्रणीतार्थे विधानादतुल्यत्वादसंसर्ग इति । आदित्यः प्रायणीयः पयसि चरुरित्यत्र चरोर्देवतासंबन्धस्य पयसश्चरुसंबन्धस्य च विधौ वाक्यभेदापत्तेर्द्रव्यद्वयविशिष्टदेवतासंबन्धविधिः । आधारत्वं तु पयसः सहश्रपणादर्थसिद्धमिति प्राप्ते पयस्यादित्यश्चरुरित्यधिकरणद्रव्योभयविशिष्टदेवतासंबन्धविधौ वाक्यभेदाभावात्पयसो न प्रदेयत्वम् । अतो न वत्सापाकरणादिभिः पयः संबध्यते किंतु प्रणीताधर्मैरेवेति सिद्धान्तः । सूत्रार्थस्तु—श्रपणे सहश्रपणे प्रदानमपि सह दृश्यते चरोः पयसा सह त्यज्यमानत्वानुभवात् । अतस्तद्धर्मं तस्य प्रदेयस्य धर्मा यस्मिंस्तथाभूतं भोजनार्थत्वाद्यागार्थत्वान्मधूदकवत्संसर्गाच्चित्रेष्टिवदिति पूर्वसूत्रार्थः । उत्तरसूत्रार्थस्तु—अधर्मं न विद्यन्ते धर्माः प्रदेयधर्मा यस्य तदधर्मं । मधूदकदृष्टान्तवैलक्षण्यद्योतनाय तुशब्दः । अप्रदानात्प्रदानाभावात् । दधि मधु घृतमापो धानास्तत्संसृष्टमितिवदत्र सह श्रपणं नास्ति उभयोरत्र समप्रधानत्वाभावात् । तर्हि पयसो विधानं किमर्थमिति चेदित्यत आह—प्रणीतार्थे विधानादिति । अतश्चरुवत्प्रथमानिर्देशो नास्ति किंतु सप्तमीनिर्देशः । सप्तम्या चाऽऽधारभूतत्वम् । अत एवातुल्यत्वादित्युक्तम् । अतो न प्रदेयधर्मा इति । असंसर्गः, मधूदकवत्संसर्गो न भवति । तुल्यद्रव्यसंसर्गो न भवति किंत्वार्थिकः संसर्ग इति । यजुरुत्पूते वा श्रपयति ।

१ क. ख. ग. °त्वमप्र° ।

चतुर्गृहीतान्याज्यानि गृह्णाति यद्यनूयाजा न भवन्ति ।

प्रथमगणस्य प्रयाजार्थत्वात्तमेव गृह्णाति । द्वितीयगणस्य त्वनूयाजार्थत्वान्न तं गृह्णाति अनूयाजाभावपक्षे । अनूयाजसत्त्वे तु तमपि गृह्णातीत्यर्थः । चतुर्गृहीतमेवोपभृति यद्यनूयाजा न भवन्तीत्येवं वक्तव्यं तावतैवाष्टगृहीतव्यावृत्तौ चतुर्गृहीतान्याज्यानि गृह्णातीत्येवं वचनं प्राकृतं पाक्षिकं पञ्चगृहीतं व्यावर्तयितुम् । यद्यनूयाजा न भवन्तीति वचनमेतद्वचनाभावेऽनूयाजसत्त्वेऽपि उपभृति चतुर्गृहीतमेव स्यान्नाष्टगृहीतमिति तद्व्यावर्तयितुम् । आज्यपदग्रहणेनेदं ज्ञाप्यते पदार्थाभावाधीन एव विशेषो निर्वपणोत्तरं नत्वपूर्वकृतो विशेष इति । तेनैतदुत्तरं प्राकृतं सर्वं तन्त्रं भवति ।

षड्ढोत्रा प्रायणीयमासादयति ।

चरुमिति शेषः । तस्याः प्रायणीयया कल्पो व्याख्यात इति वक्ष्यमाणसूत्रादुदयनीयायां चरोरासादने षड्ढोतुः प्राप्तिः स्यात्तां वारयितुं प्रायणीयमिति वचनम् । अहोमार्थत्वादग्रहोऽस्वाहाकारः षड्ढोता । अत्र सूर्यं ते चक्षुरित्येव षड्ढोता नतु वाग्घोतेति प्रायश्चित्ती वाग्घोतेति श्रुतौ सूत्रे च प्रायश्चित्तीति श्रवणात्तस्य प्रायश्चित्त एवोपयोगात् ।

सर्वमिध्ममादधाति सर्वमौपभृतꣳ
समानयते यद्यनूयाजा न भवन्ति ।

सर्वमौपभृतं समानयतेऽनूयाजाभावपक्षे । अनूयाजसत्त्वे तु तदर्थं द्वितीयगणस्य गृहीतत्वान्न सर्वस्यौपभृतस्य समानयनम् । अनूयाजसमिधं नावशेषयति औपभृतमाज्यं च । अनूयाजाभावादिति भावः । सर्वमिध्ममादधातीतिवचनं प्रतिसामिधेनि वेतिप्राकृतपक्षान्तरनिवृत्त्यर्थम् । सर्वमौपभृतꣳ समानयत इतिवचनं प्रयाजार्थाज्यस्यैकप्रयत्नेनैवाऽऽनयनं विधातुम् । एतेन ज्ञायते पशुबन्धे चातुर्मास्येषु च सोमे च विगृह्य विगृह्यैवाऽऽनयनमिति ।

आज्यभागाꣳश्चतुरो यजति पथ्याꣳ स्वस्तिं पुरस्ता-
दग्निं दक्षिणतः सोमं पश्चात्सवितारमुत्तरतोऽदितिं मध्ये
हविषा स्थालीं निष्कासं मेक्षणं च निदधाति ।

आज्यं भागो येषां त आज्यभागा आज्यहविष इत्यर्थः । तांश्चतुरो यजति । कथमित्याकाङ्क्षायां पथ्याꣳ स्वस्तिमित्यादि । हविषा चरुणेत्यर्थः । आज्यभागाꣳश्चतुरो यजतीति सामान्यप्रतिज्ञा । उत्तरत्र चतुर्णां संकीर्तनादेव चतुष्ट्वे सिद्धे चतुरो यजतीत्यत्र चतुर्ग्रहणं चतुर्णामेको गणो गणत्वादव्ययः स्यादव्यो भूयासं पाप्मानं दभेयमित्यूहेन चतुर्णामन्त एवानुमन्त्रणं भवतीतिज्ञापनार्थम् । पथ्याꣳ स्वस्तिमित्यादि सवितार-

मुत्तरत इत्यन्तं देवतादिग्विधानार्थम् । ननु पथ्याᳪ स्वस्तिमग्निं सोमं सवितारमित्ये-
कैकां प्रतिदिशं यजतीत्येतावतैव प्रतिदिशं यागस्य सिद्धौ पुरस्तादित्यादिदिग्वचनं
पथ्याᳪ स्वस्तिमयजन्प्राचीमेव तया दिशं प्राजानन्नित्याद्यर्थवादज्ञानावश्यकत्वद्योतना-
र्थम् । पथ्यास्वस्त्यादीनां ध्रौवमाज्यं तस्य सर्वार्थत्वात् । नन्वदितिं मध्य इत्येतावदे-
वास्तु चरुलाभस्तु पूर्वानुवृत्त्यैव सिध्यति, एवं च हविषेति वचनं व्यर्थमिति चेन्न ।
तस्य पञ्चानामपि तुल्यत्वख्यापनार्थत्वेन सार्थक्यात् । पञ्चानां प्राधान्यं श्रुतावप्युक्तं
पञ्च देवता यजतीति । तेनाऽऽज्यहविष्काणां पथ्यास्वस्त्यादीनां प्रधानहविष्ट्वादुपांशु-
याजविकारत्वं सिद्धं भवति । नन्वेवं पञ्चानां तुल्यत्वख्यापनार्थं चरुणेत्येव वक्तव्यं
किमर्थं हविषेतिवचनमुपात्तमिति चेन्न । तस्य श्रपणोत्तरभाविनामुद्वासनान्तानां हविः-
संबन्धिधर्माणामपूर्वत्वेनाप्राप्तानां प्राप्तिं द्योतयितुमुपात्तत्वात् । आज्यभागशब्दः प्रकृते
कर्मनामधेयम् । आज्यभागाभ्यामाज्यहविर्भ्यां प्रचरतीति निर्देशात् । आज्यं च निर्दि-
ष्टमस्ति सर्वार्थत्वातच्च ध्रौवं हविर्भवति । एवं च नैषां प्राकृताज्यभागकार्यभाक्त्वं तेन
प्रधानहवींष्येवैतानि । सूत्र आज्यभागशब्दश्च यौगिकत्वादाज्यहविष्कत्वमेषामनुवदति
सरस्वत्याज्यभागा वायव्य आज्यभाग इतिवत् । उदयनीये पथ्याᳪ स्वस्तिमुत्तमामाज्येन
देवतां यजतीतिवचनादप्येषां प्रधानत्वमवगम्यते । यत्र द्विवचनेन निर्देशो यथाऽनुप-
दावाज्यभागौ जिन्वन्तावाज्यभागावित्यादिस्तत्रैव प्राकृताज्यभागयोः संप्रत्ययो नान्यत्र ।
अतः पृथगाज्यभागावपि चोदकप्राप्तौ कर्तव्यौ । आश्वलायनीयहौत्रे पौर्णमासेनेष्टि-
पशुसोमा उपदिष्टा इति सूत्राद्वार्त्रघ्नौ । याजुषहौत्रेऽपि पौर्णमासतन्त्रत्वाद्वार्त्रघ्नावेव ।
प्रधानदेवतायाज्यानुवाक्यास्त्वाश्वलायनोक्ता एव । नन्वाग्निसोमसवित्रदितिदेवतालिङ्ग-
कानां बह्वीनां याज्यानुवाक्यानां स्वशाखायां सत्त्वात्स्वशाखास्थानामेव यासां कासांचि-
द्ग्रहणम् । पथ्यास्वस्तिदेवतालिङ्गकयाज्यानुवाक्ययोरभावात्तावतो(त्यो)राश्वलायनो-
क्तयोरेव ग्रहणमिति वाच्यम् । स्वसूत्रे प्रायणीयाप्रयुक्तयाज्यानुवाक्यानामविहितत्वे-
नाऽऽश्वलायनेन विहितत्वेनाविहितविहितानां मध्ये विहितानामेव ग्रहणस्य युक्तत्वात् ।
हौत्रशास्त्रविषये स्वसूत्रे वचनाभाव आश्वलायनोक्तस्यैव प्रबलत्वाच्च । नचैवमाश्वला-
यनोक्तानामेव ग्रहणमस्तु माऽस्तु यासां कासांचित्तथाऽपि पाठस्तु स्वशाखारीत्यैव
भवत्विति वाच्यम् । एतस्य मन्त्रपाठस्यात्र सावकाशत्वेनाविधानानुरोधेन तत्पाठस्यैव
ग्रहीतुमुचितत्वात् । सवितृदेवताविषयकयाज्यायाः स्वशाखायामभावेन तदुक्तयाज्याग्र-
हणं तदनुरोधेन तदुक्तानामेव चाऽऽश्वलायनपाठस्यैव ग्रहीतुमुचितत्वात् । विना निर्वा-
हासंभवेनैतस्या ग्रहण इतरासामपि तच्छाखागतानामेव ग्रहणं प्रकरणनियमितत्वात् ।
शाखापठितमन्त्रैर्निर्वाहासंभवेनाऽऽग्नेर्व्यादीनामेवात्र ग्रहणात् । एताभ्यामिष्टोपांशुयाजधर्मे-

---

१ क. °दिविधा° ।

णैताश्चतस्रो देवता यष्टव्याः । आज्यभागाविष्ट्वाऽऽज्येन देवताश्चतस्रो यजतीति कात्यायनः । कल्पकारश्च संस्रावेण पञ्चकृत्वो ध्रुवामभिघारयतीति ब्रुवन्नाज्यभागयोः सत्त्वं प्रदर्शयति । तत्र प्राकृताज्यभागार्थमेकमभिघारणं दृष्टम् । उपांशुयाजचतुष्टयार्थं चत्वारि । प्राकृताज्यभागयोः सत्त्व एवैतद्वचनमुपपद्यते नान्यथा । तस्माद्विद्येते एवाऽऽज्यभागाविति । अन्यत्तु मतम्—अस्त्वेतेषां प्रधानहविष्ट्वमिहाऽऽज्यभागयोरनुपदेशात् । आतिथ्यायामुपदेशाच्चक्षुषी वा एते यज्ञस्येत्याज्यभागकार्यस्य चक्षुषः । चक्षुषी वा एते यज्ञस्य यदग्नीषोमावित्यत्राग्नीषोमयोर्दर्शनात् । सूत्रस्थस्याऽऽज्यभागशब्दस्याऽऽज्यभागनिवृत्त्यर्थत्वाच्च प्राकृतावाज्यभागौ न भवत इति । आज्यभागाविष्ट्वा यजेतेत्याश्मरथ्यस्तावेतौ न भवत इत्यालेखन इति भरद्वाजः । शंय्वन्ते यमनाज्यभागेत्याश्वलायनः । मेक्षणेन चरूणामिति परिभाषया मेक्षणेनावदानम् । अदितियागानन्तरं मारुतीमृचमनुब्रूयात् । अदितिमिष्ट्वा मारुतीमृचमन्वाहेति श्रुतेः । तत्र प्रक्षेपानन्तरमेवेति केचित् । अनुमन्त्रणान्त इत्यन्ये । प्रत्याक्रमणानन्तरमिति परे । इष्ट्वेति क्त्वाप्रत्ययात्प्रक्षेपानन्तरमेवेति युक्तम् । मन्त्रसमाम्नाये सूत्रे चानुक्तत्वात्कृताकृतं मारुत्यनुब्रवणम् । सा च मरुतो यद्ध व इत्युक्ता बौधायनेन । समाख्यावशादध्वर्युकर्तृकं मारुत्यनुब्रवणम् । नात्राऽऽधानीयादित्यचरुधर्माः । प्रापकाभावात् । स्थाली चरुस्थाली । निष्कासः स्थालीमेक्षणसंलग्नो लेपः । चर्वालोडनार्था दर्वी मेक्षणम् । निष्कासस्य स्वतन्त्रतयोपादानात्स्थालीतः पृथक्कृत्यैव प्रज्ञातं निदधाति शिक्यादौ । एवं स्थालीमेक्षणे अपि प्रज्ञाते स्थापयितव्ये । निधानवचनादेव मेक्षणानुप्रहरणं न निष्कासनिधानबलादितरस्य हविःशेषस्य कृत्स्नस्य स्विष्टकृदादिचतुर्धाकरणान्ता कृत्स्नाऽपि प्रतिपत्तिरस्तीति गम्यते । अन्यथा स्थालीं चरुशेषं मेक्षणं च निदधातीत्येव ब्रूयात् । तस्माल्लेपमात्रं निधातव्यं तद्व्यतिरिक्तस्य सर्वाः स्विष्टकृदादयो यथायथं प्रतिपत्तयः कर्तव्या एवेति । अपूर्वत्वात्प्राशित्रनिवृत्तिः प्राशित्रमपि प्रतिपत्तिरिति केषांचिन्मतम् । अस्मिन्पक्षे प्राशित्रमपि भवत्येव । चातुर्धाकरणिकब्रह्मभागं ब्रह्माऽपि सर्वैः सहैव भक्षयति । शंयुवाकान्तत्वादिष्टेः शंयुवाकान्ते वा । एतच्चावशिष्टप्रतिपत्तिकर्मणामननुष्ठानपक्षे । अनुष्ठानपक्षे तु क्रमप्राप्ते स्थाने शेषकरणात्प्राङ्निधानमुत्सर्गकाले वा । अनेन त्यागो व्यावर्त्यते । चकारः साहित्यार्थः । तेन त्रयाणामेकत्रैव निधानं भवति ।

ध्रुवायाः शेषं करोति ।

पूर्ववद्व्याख्येयं, प्रयोजनं च पूर्ववत् ।

शंय्वन्ता कृत्स्ना वा ।

भवतीत्येव शेषः । कृत्स्ना भवति न यजमानभागमवद्यति । यदि शंय्वन्तेत्येतावतैव पाक्षिकशंय्वन्तत्वलाभे शंय्वन्तेतिवचनं शंय्वन्तत्वपक्ष एवायमपूर्वत्वप्रकारो न कृत्स्नत्व-

पक्ष इतिद्योतनार्थम् । तेनान्वाधानप्रभृति कृत्स्नमपि कर्म भवति नतु शंय्वन्तात्वमात्र-निवृत्तिः । शंय्विडान्तत्वे विकल्पः स्यात्परेषु पत्न्यनूयाजस्य प्रतिषेधोऽनर्थकः स्यात्, नित्यानुवादो वा कर्मणः स्यादश(शा)ब्दत्वादितिजैमिनिन्यायानुगुणत्वात्स्वशाखानुगु-णत्वाच्च पूर्वः पक्षो मुख्य उत्तरो दुर्बलः । स च न्यायो दशमाध्याये सप्तमे पादे वर्तते । सूत्रार्थस्तु शंय्विडान्तत्वविधानादेव तदुत्तरकर्मनिषेधः सिद्धस्तेनैव पत्नीसंयाजा-नूयाजनिषेधसिद्धौ पुनरुभयोर्निषेधोऽनर्थको व्यर्थः स्यात् । अत उभयोर्निषेधोऽन्यान्त-राणामकर्तव्यताप्रतिषेधेन कर्तव्यताविधानार्थ इत्यवश्यं वक्तव्यम् । पत्नीसंयाजानेव न कुर्यात्, अन्यानि तु कुर्यादेव । अनूयाजानेव न कुर्यात्, अन्यानि तु कुर्यादेवेति । तेन पत्नीसंयाजानूयाजप्रतिषेधेन कृत्स्नसंस्थाविधानाच्छंय्विडान्तवचनेन तत्संस्थाविधाना-द्वयोः संस्थयोर्विरोधाद्विकल्पो भवेदिति पूर्वसूत्रार्थः । उत्तरसूत्रार्थस्तु नित्यानुवादो नित्यत्वाय शंय्विडान्तविधेर्नित्यत्वाय । अयमेव विधिर्नित्यो न कृत्स्नसंस्था । तस्मा-त्प्रशस्तोऽयमेव विधिरिति प्राशस्त्यायानुवादो नित्यानुवादः । वाशब्दः पूर्वपक्षव्या-वर्तकः । नित्यानुवादो निषेधो नतु पत्नीसंयाजानूयाजेतरकृत्स्नकर्मविधायक इति । कुतः, कर्मणः पत्नीसंयाजानूयाजातिरिक्तकर्मणोऽश(शा)ब्दत्वाच्छब्देन विधिना गम्यः शाब्दो न शाब्दोऽशाब्दस्तस्य भावस्तत्त्वं तस्मात् । कृत्स्नसंस्थापरतायां स्पष्टो विधिर्नास्ति येन विकल्पो वक्तव्यः । नित्यानुवादत्वेनोपपत्तेर्विधिपर्यवसानकल्पनमयु-क्तम् । तथाच नैव कृत्स्नसंस्थेति संस्थाप्यपक्षे पत्नीसंयाजानां विकल्पः । तथाचाऽऽ-पस्तम्बः—शंय्वन्ता सꣳस्थाप्या वा पत्नीस्तु न संयाजयेत्ता उदयनीये संयाजयेत्समे वा कार्ये इति । समे उभे अपि पत्नीसंयाजवत्याविस्यर्थः । ननु प्रकृतौ द्वौ शंयू पत्नी-संयाजानां पुरस्तादेकः पश्चादन्यः । तत्रोत्तरेणैव शंयुना तदन्तताविधिः । एवं च शाखान्तरीयः पत्नीसंयाजनिषेधोऽप्यर्थवान् । अन्यथाऽनुवादमात्रत्वापत्तेः । अतः पत्नीसंयाजवर्जमुत्तरशंय्वन्तं सर्वं कार्यमिति चेन्न । प्रयोगोपरमस्यैव शंय्वन्तत्वे निमित्ते विधानात्पूर्वस्मिन्नपि शंयौ कृते निमित्तस्य संजातत्वेन तत्रैवोपरमस्य युक्त-त्वात् । पत्नीसंयाजप्रतिषेधस्तु नित्यानुवादत्वेनार्थवादमात्रमौचित्येन शंय्वन्तत्वस्तुत्यर्थं न विरुध्यते । तथाच दशमेऽध्याये षष्ठे पादे जैमिनिः—'प्रतिषेधार्थवत्त्वाच्चोत्तरस्य परस्तात्प्रतिषेधः स्यात्, प्राप्तेर्वा पूर्वस्य वचनादतिक्रमः स्यात्' इति । सूत्रार्थस्तु पत्नीसंयाजानूयाजप्रतिषेधार्थवत्त्वादुत्तरस्य शंय्विडस्य परस्ताद्यत्कर्तव्यं तस्य प्रतिषेधः स्यादिति । तथाचानुवादो न भवति निषेधे किंतु इतरकर्तव्यताबोधक एवेति । तथाच पूर्वाधिकरणसिद्धान्तोपरि आक्षेपकमिदमधिकरणमिति पूर्वसूत्रार्थः । उत्तरसूत्रार्थस्तु पूर्वस्य शंय्विडस्य प्राप्तेरतिक्रमो वचनात्स्पष्टवचनात्स्यात् । उपस्थितपरित्यागे स्पष्ट-वचनाभावात्पूर्वत्रैवोपरम इति ।

न यजमानभागमवद्यति यदि शंय्वन्ता ।

शंयुनाऽन्तो यस्याः सा शंय्वन्ता । शंयुवन्तेति पाठोऽपपाठ एव । न यजमानभागमवद्यति सर्वेषु सौमिकेष्विष्टिपशुबन्धेष्वित्यनेनैव निषेधसिद्धाविदं वचनं कृत्स्नायां यजमानभागनिषेधो नात्र प्रवर्तत इति बोधयितुम् । कृत्स्नायां यजमानभागसत्त्वमनेन गम्यते । ध्रुवाशेषस्याग्रे कार्यान्तरविधानात्संस्थाप्यपक्षेऽपि न समिष्टयजुः । नत्र यज्ञविमोकः । संस्थाप्यपक्षेऽन्तिमप्रायश्चित्ताहुत्यर्थग्रहणयोर्नाऽऽप्यायनम् । स्विष्टकृदभिघारणहुधे स्वाप्यायनं भवत्येव । दक्षिणादानवर्जं ब्राह्मणभोजनान्तामितरत्सर्वं भवति ।

अत्र राज्ञो निवपनमेके समामनन्ति ।

राज्ञो निवपनमुत्तरवेदिदेश इत्यारभ्य प्रैषान्तं कर्म प्रागुक्तं तत्तत्र न कर्तव्यं किंत्वत्रास्मिन्काले कर्तव्यमित्येक आचार्या वदन्तीत्यर्थः ।

ध्रुवाशेषाच्चतुर्गृहीतं पञ्चगृहीतं वा गृहीत्वेयं ते शुक्रतनूरिति दर्भेण हिरण्यं निष्टर्क्य बद्ध्वाऽऽज्येऽवदधाति ।

चतुरवत्तिनश्चतुर्गृहीतं पञ्चावत्तिनः पञ्चगृहीतमिति व्यवस्थितविकल्प इति केचित् । प्राकृतं ध्रुवाप्यायनम् । निष्टर्क्यं शिखाबन्धनवद्दर्भेण हिरण्यं वलयाकृति बद्ध्वा जुह्वां गृहीत आज्येऽवदधाति येन हिरण्यं बद्धं तं दर्भं धृत्वा दर्भबद्धं तद्धिरण्यं जुह्वां गृहीत आज्येऽवनतः सन्निक्षपतीत्यर्थः । निष्टर्क्यशब्दश्छन्दसि निष्टर्क्यदेवहूयेति सूत्रेण निपातनात्साधुः । गच्छेत्यन्तो मन्त्रः । प्रसूनरहिता दीर्घा दर्भाः । कुशास्तु ह्रस्वाः सप्रसूनाः । यत्परुषि दिनं तद्देवानामिति श्रुतेर्देवकार्येष्वेते दर्भाः पर्वच्छिन्ना एव । यत्समूलं तत्पितृणामिति श्रुत्या पितृकार्येषु समूलत्वोक्तेरर्थाद्देवकार्येषु अमूलत्वं दर्भेषूक्तं भवति । तृणं तु च्छिन्नाग्रो दर्भ इति सार्वत्रिकम् । रजतसुवर्णयोर्हिरण्यत्वाविशेषेऽपि तस्मात्सुवर्णꣳ हिरण्यं भार्यमित्यादिना सुवर्णरूपहिरण्यस्यैव सर्वदा धार्यत्वोक्त्या पवित्रत्वोक्ते रजतस्य दुर्वर्णत्वेनामङ्गलत्वात् ।

अमङ्गलं तद्यत्नेन देवकार्ये विवर्जयेत् ।

इति स्मृतौ देवकार्ये तन्निषेधादश्रुजत्वेन निन्दितत्वाच्च सर्वत्र देवकार्ये सुवर्णात्मकहिरण्यस्यैव ग्रहणं नतु दुर्वर्णरजतात्मकस्य । तत्र हिरण्यस्य मानमैच्छिकम् । तस्मिन्नवदधातीत्येतावतैव सिद्ध आज्यग्रहणं श्रुतौ घृतशब्द आज्यमात्रमाचष्टे नतु यदम्रियत तद्घृतमभवदितिश्रुतिसिद्धघनीभूतमेवाऽऽज्यमाचष्ट इति दर्शयितुम् । अतो घनीभूतत्वस्यावधानसमये न नियमः ।

उपध्वस्ता सोमक्रयणी समक्षा बन्धुमती यथाऽग्नीषोमीयो बभ्रुररुणा रोहिणी वोपध्वस्ता मपीनाऽथ वा

**रोहिणी पिङ्गाक्षी बभ्रुलोम्नी श्वित्रोपकाशा पृश्निवाला पृश्निशफैकहायनी द्विहायनी त्रिहायणी वा जूरसीति तामीक्षमाण एतच्चतुर्गृहीतं जुहोति ।**

अन्वारब्धे यजमान इति बौधायनः । सोमः क्रीयते यया गवा सा सोमक्रयणी सोपकृप्ता भवति । उपकृप्तेति भूतनिर्देशादेतद्दिवसानुष्ठानारम्भात्पूर्वमेवोपकल्पनं कर्तव्यमित्यवगतं भवति । समङ्गा संपूर्णाङ्गा । बन्धुमती, अत्र बन्धुशब्देन स्वहिता मातृपितृभ्रातृसखायो गृह्यन्ते । तेन मातृपितृभ्रातृसखिमतीत्यर्थो भवति । अनु त्वा माता मन्यतामनु पिताऽनु भ्राता सगर्भ्योऽनु सखा सयूथ्य इति मन्त्रवर्णादयमर्थो लभ्यते । यथाऽग्नीषोमीय इत्यनेन वक्ष्यमाणे स्थूलत्वपीवत्वे अतिदिश्येते । यथा निरूढपशुबन्ध इत्यग्नीषोमीये वचनादुपकृप्तः पशुरकूट इत्यादीनि पशुसूत्रोक्तानि लक्षणान्यप्यतिदिश्यन्ते । उपकृप्ता सोमक्रयणी यथाऽग्नीषोमीय इत्येतावतैव समङ्गत्वबन्धुमत्त्वसिद्धौ पुनर्वचनं समङ्गत्वबन्धुमत्त्वे एवाऽऽवश्यके न यमान्यतरत्वं स्थूलत्वं पीवत्वं चापीति । कृष्णश्वेतत्वं तु बभ्रुत्वादिविशेषविधानादेव निवृत्तं भवति । बभ्रुः पिङ्गला । अरुणा कपिशवर्णा । रोहिणी सत्युपध्वस्ता, उपध्वस्ताऽन्येन वर्णेनाभिभूतो यो वर्णः स उपध्वस्तस्तद्वती क्वचित्प्रदेशे केवलरोहिणी क्वचित्प्रदेशे मिश्रितवर्णा, एतादृशवर्णद्वयविशिष्टेत्यर्थः । बभ्रुवर्णा, अरुणवर्णा, लोहितमिश्रितवर्णात्मकवर्णद्वयवतीति त्रितयान्यतमा सोमक्रयणीत्यर्थः । रोहिणी, उपध्वस्तेति द्वयोः पृथक्पदार्थत्वेऽग्रे रोहिणीपदवैयर्थ्यापत्तिरतो विशिष्ट एव पदार्थः । न चैवमपि तद्दोषतादवस्थ्यं शङ्क्यम् । तस्य केवलरोहितवर्णपरत्वेन तदभावात् । प्रपीना मांसला । केचित्तु अप्रपीनेतिपदच्छेदं कृत्वा प्रपीनोष्ट्ररोमसदृशवर्णा तदन्येति व्याचक्षते । मध्येऽथशब्दो भिन्नक्रमार्थः । तेनेत उत्तरं सर्वं समुच्चितमेव विकल्पते । अत्राऽऽपस्तम्बो विशेषमाह—द्विरूपया राजन्यस्येति । द्विरूपा श्वेतकृष्णा । यच्छ्वेतया क्रीणीयाद्दुश्चर्मा यजमानः स्याद्यत्कृष्णयाऽनुस्तरणी स्यात्प्रमायुको यजमानः स्यादिति पूर्वत्र तयोरेव वर्णयोरुपक्रान्तत्वात् । षोडश्यादौ विशेषो वक्ष्यते । रोहिणी केवलरक्तवर्णा । पिङ्गाक्षी पिङ्गनेत्रा । बभ्रुलोम्नी प्ररूढकपिलवर्णलोम्नी नानाजातीयवर्णैर्लोमभिः क्वचित्क्वचिदुपेता वा । श्वित्रोपकाशा श्वित्रं चित्रं कुष्ठं तत्समानवर्णा । वाला अक्ष्णोर्यस्याः सा पृश्निवाला श्वेतपृषत्कवाला । पृश्निशफा श्वेतपृषत्कखुरा । एकं हायनं यस्याः सैकहायनी । एवं द्विहायनी त्रिहायणीत्यत्रापि, हायनशब्दो वर्षवाची, एकवर्षा द्विवर्षा त्रिवर्षा वेत्यर्थः । दामहायनान्ताच्चेत्यनेन सूत्रेण ङीप् । त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यमिति त्रिहायणीत्यत्र णत्वं, वयोवाचकत्वान्ङीब्णत्वे युक्ते एवात्र । एतच्चैकहायनीत्यादिकं साधारणं ज्ञेयम् । नचारुणयैकहायन्या सोमं क्रीणातीत्यत्रारुणगुणस्यामूर्तत्वेन क्रयसाधनत्वासंभवादेकी-

यद्द्रव्येषु वासःप्रभृतिषु सर्वेषु निवेश इति वाच्यम् । अमूर्तस्यापि द्रव्यपरिच्छेदद्वारा साधनत्वसंभवेन द्वारापेक्षायां च स्ववाक्योपात्तैकहायनीसंबन्धस्य कल्पनेनैकहायन्यामेव निवेशस्य मीमांसकैरङ्गीकारात् । तथा च तृतीयाध्याये प्रथमे पादे जैमिनिः—अर्थैक्यत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यादिति । सूत्रार्थस्तु—अर्थैक्यत्वे तत्प्रयुक्तैकवाक्यत्वे द्रव्यगुणयोरैककर्म्यादेकक्रयरूपकर्मार्थत्वान्नियमः परस्परान्वयरूपः स्यादिति । तां सोमक्रयणीं गामीक्षमाणः पश्वङ्गूरसीति मन्त्रेणैतत्पूर्वं गृहीतं चतुर्गृहीतं जुहोति । ईक्षमाण इति वर्तमानशानचेक्षणहोमयोः समकालत्वम् । प्राग्वंशाभ्यन्तर एव पुरस्तादाहवनीयस्य प्राङ्मुखी सोमक्रयणी गौः स्थाप्या । कामादेकद्वारे सर्वतः परिश्रिते बहिःस्थितताया ईक्षणानुपपत्तेः प्राग्वंशाभ्यन्तरे स्थापनम् । एतच्चतुर्गृहीतमिति विशिष्टैकवचनेनोभयोर्विनियोगादिदं ज्ञायते यत्र यत्रैतच्छब्दपूर्वकचतुर्गृहीतविनियोगविधिस्तत्र पञ्चगृहीतविधिर्विकल्पते । शते पञ्चाशदिति न्यायेन पञ्चसंख्यायामपि चतुःसंख्याया अनुप्रवेशाच्चतुर्गृहीतहोम एव सः । अधिकं प्रविष्टं नतु तद्धानिरिति न्यायादधिकसंख्याप्रवेशेऽपि चतुःसंख्याया हानिर्नास्ति । नचैवं षड्गृहीताद्यतिप्रसङ्गस्तत्रापि चतुःसंख्यानुप्रवेशसत्त्वादिति वाच्यम् । चतुर्गृहीतहोमसंबन्ध्यर्थवादस्य चतुष्पादः पशवः पशूनेवावरुन्धे चतस्रो दिशो दिक्ष्वेव प्रतितिष्ठतीत्यस्य पञ्चगृहीतं भवति पाङ्क्ता हि पशवः पञ्च देवता यजति पञ्च दिशो दिक्ष्वेव प्रतितिष्ठतीत्युभयवाक्यगतपञ्चसंबन्ध्यर्थवादस्य च समत्वेन षट्संख्यादिषु तदभावेनातिप्रसङ्गवारणात् । न्यूनसंख्यावारणं तु चतुःसंख्याया अनुप्रवेशाभावादेव सिध्यति । अत इदं सिद्धमेतच्छब्दपूर्वकचतुर्गृहीतविनियोगविधौ पञ्चगृहीतमपि विकल्पत एव तेनापि चतुर्गृहीतहोमविधिसिद्धिरिति । नच चतुर्गृहीतवचनस्य हिरण्यव्यावृत्त्यर्थत्वमेवास्तु इति वाच्यम् । हिरण्यव्यावृत्तेस्तु घृतादुद्धरतीत्यग्रे विधानादेव तत्सिद्धत्वेनैतस्य तद्व्यावृत्त्यर्थत्वानुपपत्तेः, चतुर्गृहीतवचनवत्पञ्चगृहीतवचनस्यापि कर्तव्यतापत्तेश्च ।

**अपरं चतुर्गृहीतं गृहीत्वा शुक्रमस्यमृतमसीति हिरण्यं घृतादुद्धरति ।**

अपरमिति वचनं पूर्वेण संबन्धार्थम् । तेनेयमपि ध्रुवाशेषादेव होतव्या । अपरमित्येतावत्येवोच्यमाने पञ्चगृहीतस्यापि पक्षे प्राप्तिः स्यात्सा मा भूदित्येतदर्थं चतुर्गृहीतवचनम् । प्रथमयोर्ध्रुवाप्यायनं ध्रौवसमाप्तिः । घृतवचनमाज्यस्य द्रवीभूतत्वं सूचयितुम् । घृ क्षरणदीप्त्योरित्यस्माद्धातोरञ्जिघृसिभ्यः क्त इत्युणादिसूत्रेण क्तः । एतेन घृतस्यापादानत्वमपि निर्वोढुं शक्यं भवति ।

**वैश्वदेवं हविरित्यभिमन्त्रयते ।**

आज्यमित्येव शेषो नतु हिरण्यं मन्त्रे हविरिति श्रवणात्, आपस्तम्बेन स्पष्टतयाऽभिधानाच्च ।

हविरसि वैश्वदेवमित्यवेक्षते ।

अवनतो भूत्वेक्षत इत्यर्थः । अत्राप्याज्यमित्येव शेषः । मन्त्रे हविरिति श्रवणात् । एतदन्तमासीनेनैव ।

सूर्यस्य चक्षुरारुहमिति सहिरण्येन
पाणिनाऽऽदित्यमुपतिष्ठते ॥ ५ ॥

सहिरण्येनेति पाणिविशेषणम् । पाणिनेतितृतीयेत्थंभूतलक्षणे । तेन पूर्वमेवावश्यं हिरण्यं पाणौ भवति ।

अशून्यं तु करं कुर्यात्सुवर्णरजतैः कुशैः ।

इति स्मृत्या पवित्रत्वेन सर्वदाऽङ्गुलिषु हिरण्यधारणं विहितं ततो भिन्नं पाणितले हिरण्यधारणमपूर्वमनेन विधीयते । स्मृतिसिद्धं यदङ्गुलिषु हिरण्यधारणं तस्यैव कर्माङ्गत्वमनेन विधीयत इति वा । तेन श्रौतमपि प्रायश्चित्तं कर्तव्यं भवति । अङ्गुलिषु हिरण्यधारणेनापि पाणौ हिरण्यधारणं भवत्येव । अङ्गुलीनामपि पाणित्वात् । अन्यथाऽशून्यं तु करं कुर्यात्सुवर्णरजतैः कुशैरिति करस्य सुवर्णरजतकुशसंबन्धविधानेनाङ्गुलीनां तद्भिन्नत्वेन तत्र धारणस्य स्मृतिविरुद्धत्वापत्तेः । करपाणिशब्दौ हि पर्यायभूतौ । उपस्थाने तिष्ठत्ताऽऽसीनता वा । नचोपतिष्ठत इत्यत एव तिष्ठत्ता सिद्धेति वाच्यम् । उपान्मन्त्रकरण इत्यात्मनेपदविधानान्नात्र तिष्ठत्ता धातुप्रत्यययोरर्थः किंतु मन्त्रकरणमञ्जलिकरणपूर्वकं विनयेनाऽऽशीर्याच्ञा । तदुक्तमाहिताग्नेराशीर्यदाग्निमुपतिष्ठत इति । तस्मादुपस्थानादन्यैव तिष्ठत्ता । यदि उपस्थानान्तर्गतैव तिष्ठत्ता स्यात्तदा तिष्ठन्ती गार्हपत्यमुपतिष्ठते, उत्तरामाहुतिमुपोत्थाय कवातिर्यङ्ङिवाऽऽहवनीयमुपतिष्ठत इत्यत्र यथायथं तिष्ठत्तोपोत्थानविधानं न कृतं स्यात् । अतो यत्र यत्र विधानं तत्रैव, अन्यत्र त्वनियम इति सिद्धम् । तथाच मन्त्रप्रतिपाद्यं पदार्थं ध्यायन्प्रतिमुद्रायुत आशीः(शिषं) प्रार्थयन्मन्त्रं पठेदित्येष उपस्थानशब्दार्थो भवति । अत्र पाणिनेति वचनादञ्जलिना नोपस्थानं किंतु पाणिनैवेति । यत्र यत्र दक्षिणग्रहणं क्रियते तत्रैव दक्षिणाङ्गस्य ग्रहणमन्यत्रानियम इति तत्र तत्र दक्षिणग्रहणेन ज्ञाप्यते । प्रकृते दक्षिणग्रहणाभावादनियम एव । एवमन्यत्रापि । एतच्च निर्दिष्टाङ्गविषयम् । अनिर्दिष्टाङ्गविषये तु दक्षिणस्यैव ग्रहणं नियतम् । अत्र ज्ञापकं याजुषदर्शपूर्णमासहौत्रसूत्रे सव्येन तूष्णीमाग्नीध्रमित्युत्तरसूत्रात्पूर्वत्र दक्षिणस्य प्राप्तौ दक्षिणग्रहणमनिर्दिष्टस्थले दक्षिणस्यैव ग्रहणमिति । विपश्चितेत्यन्तो मन्त्रः ।

चिदसीति सोमक्रयणीꣳ सꣳशास्ति ।

आसीन एव । संशब्दो मन्त्रस्य स्पष्टोच्चारणं गमयति । तेनोपांशुता निवृत्ता भवति । अवेक्षणविशिष्टं मन्त्रोच्चारणं संशासनम् । संशासनवाच्यस्य शिक्षणस्य

पत्न्यामेव संभवात्तस्या एव ग्रहणं स्यात्तद्व्यावृत्त्यर्थं सोमक्रयणीमितिवचनम् । नन्वेवं तां संशास्तीति तच्छब्देनापि तद्ग्रहणं संभवति किमर्थं सोमक्रयणीमिति वचनमिति चेत्सत्यम् । तच्छब्दस्य प्रसिद्धिवाचकत्वस्यैव संशिक्षणानुरोधेनावश्यं स्वीकर्तव्यतया तद्दोषतादवस्थ्यापत्तेः ।

मित्रस्त्वा पदि बध्नात्विति दक्षिणे पूर्वपादे बध्नाति ।

आसीन एव । सोमक्रयणीमिति पूर्वसूत्रादनुवर्तते । ग्रीवाव्यावृत्त्यर्थं पादग्रहणम् । एतावानेव मन्त्रः ।

पूषाऽध्वनः पात्विति नयति यत्र सोमोऽ-
बद्धामकर्णगृहीतां बद्धां वा कर्णगृहीताम् ।

पूषाऽध्वनः पात्विति मन्त्रेणाबद्धामकर्णगृहीतां बद्धां कर्णगृहीतां वा नयति यत्र सोम इत्यन्वयः । अत्रापि सोमक्रयणीमित्यनुवर्तते । अबद्धामित्यादीनि सोमक्रयणी-विशेषणानि । यत्र सोम इत्यत्र न्युप्तो भवतीति शेषः । अबद्धामकर्णगृहीतामिति पक्षः स्वशाखास्थः । बद्धां कर्णगृहीतामिति पक्षः शाखान्तरीयः । अबद्धां पदि अबद्धां बद्धां पदि बद्धाम् । यदबद्धा स्यादयता स्याद्यत्पदि बद्धाऽनुस्तरणी स्यात्प्र-मायुको यजमानः स्याद्यत्कर्णगृहीता वार्त्रघ्नी स्यात्स वाऽन्यं जिनीयात्तं वाऽन्यो जिनीयान्मित्रस्त्वा पदि बध्नात्वित्याह मित्रो वै शिवो देवानां तेनैवैनां पदि बध्ना-तीति श्रुतौ यदबद्धा स्यादयता स्यादित्यनेन बन्धनं प्राप्यते तच्चाग्रे पदबन्धननिषे-धाद्ग्रीवाबन्धनविषये पर्यवस्यति । अयताऽनियमिता गमने । अनुस्तरणी मृतसंब-न्धिनी गौरिव । प्रमायुकः शीघ्रमरणः । वार्त्रघ्नी शत्रुघ्नी, अथवाऽबद्धां ग्रीवायामपि अबद्धाम् । अनियमितत्वं तु हस्ताभ्यां दार्ढ्येन धारणेन संपादनीयम् । बद्धां ग्रीवायां बद्धाम् । पदि बन्धनं तु उभयपक्षेऽपि निषिद्धमिति । मन्त्रपाठमात्रेण मित्रकर्तृकपद्बन्धनं भवति । मित्रस्य कल्याणरूपत्वादनुस्तरणीत्वं तत्प्रयुक्तं यजमाने प्रमायुकत्वं च न । स्वकर्तृकपद्बन्धने हि स दोष इति । एतदर्थकं लिङ्गं स्पष्टं प्रदर्शयितुमेव मित्रस्त्वा पदि बध्नात्विति कृत्स्नः पाठः । उत्तरस्य मन्त्रस्येन्द्राय सोममित्यन्तः ।

तस्या वस्व्यसीत्येतैर्मन्त्रैर्दक्षिणेन
पूर्वपादेन षट्पदान्यनुनिक्रामति ।

अत्रापि सोमक्रयणीशब्दानुवृत्त्यैव सोमक्रयण्या लाभे तच्छब्दः संशासनबन्धन-नयनान्यतरस्य लोपे विस्मृत्याऽनुनिक्रामणे कृते प्रायश्चित्तेन न चारितार्थ्यं किंतु लुप्तं कृत्वा पुनः षट्पदानुनिक्रामणस्यापि करणमितिज्ञापनार्थः । नचाध्वर्युव्यावृत्त्य-र्थत्वं तस्य स्त्रीलिङ्गेनासीति शब्देन च सिद्धेः । नच पत्नीव्यावृत्त्यर्थत्वं तस्या अनु-

ास्थितत्वादेव प्राप्त्यभावसिद्धेः । तस्या उदक्प्राग्वा नीयमानाया वस्व्यसीत्यारभ्या-
स्यन्ताः षण्मन्त्राः । एतैरितिवचनं प्रतीकोपात्त एक एव मन्त्र इत्येतादृशमर्थं व्यावर्त-
यितुम् । मन्त्रैरितिवचनमेकैकेन मन्त्रेणैकैकं क्रमणमिति ज्ञापयितुम् । अनु आनुपूर्व्येण
निक्रामति निगृह्य क्रामति क्रामयतीत्यर्थः । अन्तर्भावितोऽत्र णिच् । अथवा तस्या
दक्षिणेन पूर्वपादेन यानि षट्पदानि क्रम्यन्ते तान्यध्वर्युरनु पश्चादितरां क्रामति
आक्रामति उपर्युपरि निदधातीति तात्पर्यार्थः । दक्षिण एव पादोऽत्राधिकारात् ।
अस्मिन्पक्षे णिजाऽऽश्रयणीयो भवति । अत्र यजमानः पत्नी चापि गच्छतः ।
अध्वर्युमनु यजमानस्तमनु पत्नी । तथाच बौधायनः—अन्वग्यजमानोऽनूची पत्नी
स्थालीं पद्धरणीमादायेति । गच्छतीति शेष उभयत्र । पदं ह्रियतेऽनयेति पद्ध-
रणी तां स्थालीमादाय गच्छतीत्यर्थः । अन्यच्चाप्याह—अथैना[१] सोमक्रयणीमग्रेण
शालामुदीचीमतिवित्स(वास?)यन्तीति ।

बृहस्पतिस्त्वा सुम्ने रण्वत्विति सप्तमं पदमभिगृह्णाति ।

सप्तमपदानुनिक्रमणं तूष्णीमेव मन्त्रानुपदेशात् । अभिगृह्णाति च्छादयति ।
अञ्जलिनेति शेषः । उत्करमभिगृह्णात्यञ्जलिनेति प्रकृतौ दर्शनात्, आपस्तम्बेन स्पष्टो-
क्तत्वाच्च । एतेन वस्त्राच्छादनं व्यावर्त्यते । चिकेत्विति मन्त्रान्तः ।

तस्मिन्हिरण्यं निधाय पृथिव्यास्त्वा
मूर्धन्नाजिघर्मीत्येतच्चतुर्गृहीतं जुहोति ।

अत्रापि पूर्ववत्पञ्चगृहीतेन विकल्पः । तस्मिन्पदे हिरण्यं निधाय पृथिव्यास्त्वेति
मन्त्रेण चतुर्गृहीतं हिरण्यमनुपदे जुहोति । इष्टिशेषद्रव्यत्वात्परिक्रमणं नेति केचित् ।
घृतवति स्वाहेत्यन्तो मन्त्रः । अत्र बौधायनः कर्मान्ते—किंदेवत्या उ खलु पदाहुति-
र्भवतीति प्रकृत्याऽऽग्नेयीत्येके वैष्णवीत्येके प्राजापत्येत्येके वाग्देवत्येत्येव ब्रूयादिति ।
तेनात्र वाग्देवता वाग्वा एषा यत्सोमक्रयणीत्यर्थवादाद्वाचे सोमक्रयण्या इदमिति त्याग
इति केचित् । हिरण्यस्योपर्येव होमः । यदध्वर्युरनग्नाविति श्रुतेः । ध्रुवाशेषनाशे पूर्व-
वद्ध्रौवैर्मन्त्रैर्गृहीत्वा तेन जुरसीति होमश्च । भ्रान्त्या कदाचित्स्विष्टकृदभिघारणद्वयेऽन्ति-
मप्रायश्चित्ताहुत्यर्थग्रहणद्वये वाऽऽप्यायनं कृतं चेत्तदा तेनैवैतौ जुहुयात् । उभयत्रापि
सर्वप्रायश्चित्तहोमोऽनाज्ञातजपादि च । यदि एकहायनत्वादिगुणविशिष्टायां गवि क्रयार्थं
नीयमानायां दैवाद्धावणि सप्तमपदपातस्तदा होमस्याऽऽरादुपकारकत्वादग्रावण्येव ।
भक्षाभ्यञ्जनं तु यैः कैश्चिदपि पांसुभिः कार्यम् । गुणलोपे मुख्यलोपानुपपत्तेः । नच
वाजिनयागवल्लोप एवास्त्विति वाच्यम् । एतस्य परप्रयुक्तद्रव्योपजीवित्वाभावेन लोपस्य

१ ख. घ. 'तिवरस'।

वक्तुमशक्यत्वात् । वाजिनयागः परप्रयुक्तद्रव्योपजीवी । इह तु न द्रव्यं परप्रयुक्तं किंतु पांसुरूपस्य द्रव्यस्य यः संस्कार एकहायन्याः सप्तमपदनिधानात्मकः स एव परप्रयुक्त इति वैषम्याल्लोप एवात्र युक्तः । तथा च चतुर्थाध्याये प्रथमपादे जैमिनिः— पदकर्माप्रयोजकं नयनस्य परार्थत्वादिति । सूत्रार्थस्तु पदकर्म सप्तमं पदमभिगृह्णातीत्यादि नयनस्य सोमक्रयण्या नयनस्य प्रयोजकं न भवति परार्थत्वादन्यार्थत्वात्, अन्योऽर्थः क्रयस्तदर्थत्वात् । नच शाखान्तरे तस्याः सप्तमं पदमितिश्रवणात्तत्र च तस्या इत्यने- नैकहायन्याः परामर्शादेकहायन्याः सप्तमपदग्रहणार्थत्वे सति विनिगमनाविरहान्नयन- स्योभयमपि प्रयोजकमेवेति वाच्यम् । तत्रापि ह्येकहायनी न स्वरूपेण प्रकृता किंत्वे- कहायन्या क्रीणातीति क्रयार्थत्वेनैवेति परप्रयुक्तत्वेन निर्ज्ञाताया एव विनियोगादिति विनिगमनाविरहासिद्धेः । तदयं निर्गलितोऽर्थः—याऽसौ क्रयार्थैकहायनी क्रयसिध्यर्थं नीयते तस्याः सप्तमं पदं गृह्णातीति क्रयार्थाया एवैकहायन्या बुद्धौ विपरिवर्तमानायाः प्रसङ्गात्पांसुग्रहणोपकारतामात्रेण संबन्धेऽपि सप्तमपदवाक्यस्य निराकाङ्क्षतया तदर्थ- त्वावेदकप्रमाणाभावात् क्रयार्थैवैकहायनी नतु पदपांसुग्रहणार्थेति ।

अपादाय हिरण्यं परिलिखितमिति स्फ्येन पदं परिलि- खति यावद्घृतमनु विसृतं भवति तूष्णीं विषाणया चानुपरिलिख्यास्मे राय इति स्थाल्यां पदं निवपति ।

अपादाय गृहीत्वा । स्फ्योऽत्रैष्टिको लौकिको वा । पदं पदसंबन्धिप्रदेशं परितो लिखति । कदाचित्पदप्रदेशाद्बहिरन्तरेत्न वा घृतं विसृतं प्रसृतं भवति तावत्परिमितमेव पदमनुलक्षीकृत्य परितो लिखतीत्यर्थः । अनेन केवलपदपरिमितप्रदेशस्यैव परितो लेखनं व्यावर्त्यते । प्रादक्षिण्यं परिभाषासिद्धम् । पुरस्तादुपक्रमस्तथाऽपवर्गः । त्रिः परिलिखतीत्यापस्तम्बः । अस्मिन्पक्षे सकृन्मन्त्रेण द्विस्तूष्णीमिति ज्ञेयम् । परिलेखनार्थं स्फ्यादानं तूष्णीमेव मन्त्रानुपदेशात् । आपस्तम्बस्तु सावित्रेण स्फ्यादानमाह । अस्य ग्रीवा अपि कृन्तामित्यन्तो मन्त्रः । विषाणया यजमानसंबन्धिन्या कृष्णविषाणया तस्या एवोपस्थितत्वात् । चकारो यावद्घृतमनु विसृतं भवतीत्येतस्यानुकर्षणार्थः । एवं चात्रापि न ततो न्यूनं नाप्यधिकं परिलेखनमिति सिद्धं भवति । अथवा स्फ्येन सह कृष्णविषाणायाः साहित्यार्थः । तेनोभाभ्यां मिलिताभ्यां परिलेखनमिति सिद्धं भवति । पूर्वसूत्रान्मन्त्रस्यापि प्राप्तिर्भविष्यति तां वारयितुं तूष्णीमितिवचनम् । स्थाली- शब्द आकारविशिष्टधातुमृन्मयान्यतरपात्रमाचष्टे । तेनैतदितरपात्रं भूमौ निवपनं चापि व्यावृत्तं भवति । पदं पादपांसून् । स्थाल्यां निवपतीत्यत्रोपक्रान्तत्वाद्यथास्थपदलाभे पदग्रहणं कृष्णाविषाणानिवृत्त्यर्थम् । ननु एतत्तच्छब्देनैव सिद्ध्यति किमर्थं पदग्रहण-

१ ख. ग. 'तच्छ' ।

मिति चेत् । तर्हि कृष्णविषाणसाहित्यव्यावृत्त्यर्थं तद्ग्रहणमिति द्रष्टव्यम् । याव-त्पूतमिति श्रुतेर्यावद्घृतमित्यर्थो द्रष्टव्यः ।

**पदायतने संहिरण्यौ पाणी प्रक्षाल्य त्वे**
**राय इति पदं यजमानाय प्रयच्छति ।**

पदायतने पदस्थाने । आयतनग्रहणं स्थाल्यां निक्षिप्ते पदे पाणिप्रक्षालनं व्यावर्त-यितुम् । सहिरण्यौ हिरण्यसहितौ । अनेन हिरण्यस्यापि प्रक्षालनम् । अनेन पाणिप्र-क्षालनेनेदं ज्ञायते पदपांसवः स्थाल्यां हस्तेनैव न्युप्या नतु स्फ्येन पात्रान्तर आनीय तेन न्युप्या इति । एवं च दृष्टार्थत्वमेवैतस्य हिरणस्य घृतलिप्तत्वात्प्रक्षालनं हिरण्यस्य पाणिसाहित्येनैव प्रक्षालनम् । सहिरण्याविति वचनात् ।

**तोते राय इति यजमानः पत्नियै ।**

प्रयच्छतीति शेषः । पत्न्यनेकत्वे तु महिष्या एव प्रयच्छति निधानार्थत्वात्, असंस्कारकर्मत्वाच्च । आध्वर्यवसूत्रे वचनमवसरख्यापनार्थम् ।

**मा ऽहꣳ रायस्पोषेण वियोषमिति पत्नी प्रदीयमानं प्रतीक्षते ।**

प्रदीयमानं पदं प्रतीक्षते, अभिमुखी भूत्वेक्षत इत्यर्थः । सर्वाभिरपीक्षणं कार्यं संस्कारकर्मत्वात् ।

**सं देवि देव्योर्वश्या पश्यस्वेति सोम-**
**क्रयण्या पत्नीꣳ संख्यापयति ।**

संख्यापनानुकूलव्यापारं करोतीत्यर्थः । एतत्करणीभूतोऽयं मन्त्रः । तस्मादध्वर्यो-रेव मन्त्रः । संख्यापनं प्रदर्शनम् । अत्रानेकासामपि तन्त्रेणैव संख्यापनं विभवात् । मन्त्रगतमेकवचनं तु जात्यभिप्रायेण समर्थनीयं न प्रकृतावूह इत्यूहनिषेधात्पत्नीꣳ संन-ह्येतिवत् । संदृशीत्यन्तो मन्त्रः ।

**उन्नम्भय पृथिवीमिति पद उदपात्रं निनीय**
**त्रेधं पदं प्रतिविभज्य गार्हपत्यस्य शीते**
**भस्मनि तृतीयमुपवपत्याहवनीये तृतीयम् ।**

पदे स्थाल्यां निक्षिप्तेषु पदपांसुषु पात्रस्योदकमुदपात्रं पात्रसंबन्धि उदकं पात्र-स्थितमुदकमिति यावत् । पात्र उदकमुदपात्रमिति वा । तात्पर्यार्थः पूर्ववदेव । राज-दन्तादिशब्दवदयं समासः । उदकस्योदः संज्ञायामित्युदादेशः । निनीयेतिपदयोगाद-यमेव समासोऽत्र नतूदकेन पूर्णं पात्रमुदपात्रमिति पात्रस्य निनयनासंभवात् । साम-र्थ्यात्पदपांसुमिश्रणपर्याप्तं जलं यावति पात्रे संमाति तावत्परिमितम् । विसृजाह-तिमित्युदकनिनयनरूपार्थानुगुणलिङ्गादुन्नम्भय पृथिवीं भिन्धीत्यादिरन्यत्र दृष्ट एव

मन्त्रोऽत्र ग्राह्यः । त्रैधं संख्याया विधार्थे धा इति सूत्रेण क्रियाप्रकारे वर्तमाने संख्या-शब्दाद्धाप्रत्ययः । द्वित्र्योश्च धमुञ् इति धाप्रत्ययस्य धमुञादेशे उकारस्योपदेशेऽजनु-नासिक इदितीत्संज्ञायां हलन्त्यमिति ञकारस्येत्संज्ञायां तस्य लोप इतीतोर्लोपे तद्धितेष्वचामादेरित्यादिवृद्धौ त्रैधमिति रूपं भवति । पदं पदपांसून् । प्रतिविभज्य प्रतीत्युप-सर्गो विभजनमाभिमुख्येनैव कर्तव्यमित्येतादृशार्थद्योतनाय । विशब्दो विभागरूपार्थ-लाभाय । शीतग्रहणमुष्णव्यावृत्त्यर्थम् । उष्णभस्मन्यग्निसत्तासंभवात्तत्र सोदकपदोपव-पनेऽभ्युपघातप्रायश्चित्तं प्रसज्येतेति भावः । परस्परापेक्षया सर्वेषु तृतीयत्वम् ।

**प्रतिषिद्धमेकेषामाहवनीये ।**

*शाखान्तरीयोऽयं प्रतिषेधः । अस्मिन्पक्षे द्विधैव विभागः ।*

**तृतीयं पत्नियै प्रयच्छति तत्सा गृहेषु निधत्ते ।**

तत्तृतीयं पदं सा पत्नी गृहेषु शालासु । बहुवचनं प्राग्वंशशाला पत्नीशाला बाह्य-शालेत्येतत्रितयान्यतमशालामध्ये निधानं कर्तव्यं न तु पत्नीशालायामेव निधानमिति नियम इति प्रदर्शयितुम् । शब्दस्वाभाव्यादेव वा बहुवचनम् । दृष्टं चैतत्—अनश्या अतृष्या गृहा माऽस्मद्बिभीतनेतिमन्त्रे । अस्मिन्पक्षे पत्नीशालायामेव निधानं तस्या एव पत्नीसंबन्धित्वेन मुख्यत्वात् । तृतीयं पत्नियै प्रयच्छतीत्येतदनन्तरं तस्याः सका-शात्पुनरादाय तोते राय इति यजमानः पुनः पत्नियै प्रयच्छति तव ते राय इति वा । अस्मिन्प्रदाने वैकल्पिकः सौत्रोऽयं मन्त्रः । वक्ष्यति च याजमानसूत्रे प्रत्तं पदं तोते राय इति पत्नियै प्रयच्छति तव ते राय इति वेति । नचैतत्पूर्वप्रदानस्यैव शेष इति वाच्यम् । उभयत्रोपादानस्य व्यर्थत्वापत्तेः । प्रत्तं पदमध्वर्युणा पत्निया इत्येव । प्रत्त-मित्यत्रापिशब्दोऽध्याहार्यः । पत्निया इत्यनन्तरं पुनःशब्दश्च । अनयैव रीत्या सूत्र-संगतिर्भवति नान्यथेति द्रष्टव्यम् । अत्र प्रदर्शनं प्रयोगसंगत्या । प्राणि सप्तमपाते पदपरिलेखनादि पत्नीकर्तृकप्रतीक्षणान्तं पद उदपात्रनिनयनादि गृहे पदनिधानान्तं च पदसंबन्धित्वाल्लुप्यते । पदायतने सहिरण्यपाणिप्रक्षालनं तु दृष्टार्थत्वाद्भवत्येव । सं देवि देव्योर्वश्या पश्यस्वेति सोमक्रयण्या पत्नीं संख्यापयतीत्येतस्यापि पदसंबन्धि-त्वाभावाद्भवत्येवानुष्ठानम् । लोपनिमित्तं सर्वप्रायश्चित्तहोमोऽनाज्ञातजपो विष्णुस्मरणं च । बहुपत्नीकत्वे मुख्याया एव प्रदानं पदसंस्कारत्वात् । इत उत्तरं न पत्न्याः साहित्यम् । प्रयोजनाभावात् । अत एव बौधायनो नयन्ति पत्नीमित्याह ।

**सूर्यस्य चक्षुरारुहमित्यत्राऽऽदित्योपस्थानमेके समामनन्ति ।**

पूर्वत्रोक्तमादित्योपस्थानं यत्तत्तत्र न कर्तव्यं किंत्वत्रास्मिन्काले कर्तव्यमित्येक आचार्या वदन्तीत्यर्थः । सूर्यस्य चक्षुरारुहमितिवचनमुत्तरोपस्थानस्यात्र क्रियाया व्यावृत्त्यर्थम् ।

अपि पन्थामगस्महीति परिश्रितेन शकटेन च्छ-
दिष्मतोद्धृतपूर्वफलकेन राजानमच्छ याति ।

परिश्रितेन सुगन्धितृणकटादिना । छदिष्मता तथाभूततृणनिर्मितच्छदिषोपर्याच्छादनात् । उद्धृतानि पूर्वाणि पुराणानि पूर्वभागस्थानि वा फलकानि यस्य । अनेन नूतनफलकानां योजनं सूच्यते । शकटं प्रसिद्धम् । एतादृशेन शकटेन सह राजानं सोममच्छ याति अभिमुखो यातीत्यर्थः । सोमशब्दं परित्यज्य राजशब्दप्रयोगो राजभावनयाऽभिमुखगमनार्थः । गिरौ क्रीते विशेषः श्रुतौ—तस्माच्छीर्षहार्यं गिरौ जीवनमिति । आपस्तम्बोऽपि—शीर्ष्णो गिरौ क्रीतꣳ हरन्तीति । अस्मिन्पक्ष आनडुहचर्मास्तरणादिकं सर्वं गिरावेव शकटाभावः । अपि पन्थामगस्महीति मन्त्रस्तु भवत्येव गमनाभिधानादिति केचित् । येन विश्वाः परिद्विषो वृणक्तीति शकटाभिधामाल्लोपो मन्त्रस्येत्यन्ये । पायसौदनेन पूजनं तत्र गत्वैव ।

उत्तरेण राजानꣳ शकटं मुखेन प्रतिष्ठाप्या-
मात्योऽसीत्यभिमन्त्रयत आस्माकोऽसीति वा ।

उत्तरेणेत्येनया राज्ञः समीपे । तेन सर्वतः परिश्रित्य तस्योदीचीं द्वारं कृत्वेत्यत्र तथा कटादिभिः परिश्रयणं द्वारं च कर्तव्यं यथा शकटं परिश्रिते द्वारेण गच्छतीति द्रष्टव्यम् । शकटमपरेणैव राज्ञः समीपं गच्छति प्राङ्मुखत्वानुगुण्यात् । मुखेनाग्रभागेन(ण) । अनेनोपस्तम्भनं व्यावर्त्यते । उत्तरेण तं तन्मुखेन प्रतिष्ठाप्येति तत्तद्विभक्त्यन्ततत्तल्लिङ्गकतच्छब्देनैवोभयोः परामर्शसिद्धौ राजानमितिपुनर्वचनं सर्वत्राभिमन्त्रणं राजभावनापूर्वकमेव कर्तव्यमितिसूचनार्थम् । शकटस्य पुनर्वचनं शकटस्यैव मुखेन प्रतिष्ठापनं न रथस्येतिनियमसूचनार्थम् । तेन रथपक्षोऽप्यस्तीति गम्यते । रथश्चतुश्चक्रः । अभिमन्त्रणं राज्ञ एव नतु शकटस्य मन्त्रे पुंलिङ्गश्रवणात्, आपस्तम्बेन स्पष्टमभिहितत्वाच्च । उत्तरस्याऽऽदिनेति परिभाषया ग्रह इति मन्त्रान्तः । आस्माकोऽसीत्ययं शाखान्तरीयो मन्त्रांशोऽमात्योऽसीत्यस्य स्थाने विकल्पते नतु कृत्स्नस्यामात्योऽसि शुक्रस्ते ग्रह इत्यस्य स्थान आस्माकोऽसीत्येतावानेव विकल्पेन भवति । तथाच शुक्रस्ते ग्रह इत्यत्रापि अनुषञ्जनीयमेव । अथवाऽमात्योऽसीत्येतावानेव मन्त्रो निराकाङ्क्षत्वात् । अस्मिन्पक्ष आस्माकोऽसीति सुतरां तावानेव । एतादृशव्याख्यायामꣳशुना ते अꣳशुरित्ययं मन्त्रो ग्रह इत्यन्तो द्रष्टव्यः । शकटप्रतिष्ठापने विशेषमाहाऽऽपस्तम्बः—प्रागीषमुदगीषं वा नद्धयुगꣳ शकटं चुबुकप्रतिष्ठितमिति ।

अꣳशुना ते अꣳशुः पृच्यतामित्यꣳशून्समुद्वपति ।

एकत्र राशीभूतान्करोति । अंशवः काण्डानि । शुद्धभूमाविति शेषः । चर्मण उत्तरत्रोपादानात् । यदि चर्मणि समुद्वपनमिष्टं भवेत्तदाऽत्रापि ब्रूयादेव । अच्युत इति मन्त्रान्तः । ग्रह इति मन्त्रान्तो वा ।

**उत्तरेण राजानं चर्मणि क्षौमं वासोऽहतं महद्द्विगुणं चतुर्गुणं वा प्राचीनदशमुपरिष्टाद्दशमास्तीर्याभित्यं देवमिति तस्मिन्सहिरण्येन पाणिनाऽतिच्छन्दस- र्चा राजानं मिमीत एकैकयाऽङ्गुल्या प्रसारितया।**

अत्र ब्राह्मणे विशेषः—यं कामयेतापशुः स्यादित्यृक्षतस्तस्य मिमीतर्क्षं वा अपशव्य- मपशुरेव भवति यं कामयेत पशुमान्स्यादिति लोमतस्तस्य मिमीतैतद्वै पशूनाꣳ रूपꣳ रूपेणैवास्मै पशूनवरुन्धे पशुमानेव भवतीति। ऋक्षं चर्मणो विशस्तदेशस्तस्मिन्राजानं मिमीत इत्यर्थः। लोमतो लोमवति प्रदेशे। लोमशब्दादर्शआदित्वादज्मत्वर्थे। उभयत्र सप्तम्यास्तसिः। नहि निन्दा निन्दितुं प्रवर्ततेऽपि तु स्तुत्यं स्तोतुमितिन्यायेनोत्तरपक्षस्य प्राशस्त्यं कथयितुं पूर्वस्य निन्दा। एनपाद्(पो)त्तराज्ञः समीपे चर्मणि आस्तृते चर्मणि। अत्र सामान्यतश्चर्मणीत्युक्त्या यस्य कस्यचिन्मेध्यस्य पशोश्चर्मात्र ग्राह्यम्। क्षुमाऽ- तसीवृक्षत्वक्। तन्निर्मितं क्षौमम्। एतदभावे प्रतिनिधिभूतं कौशेयादि। पूर्वोदाहृते- षद्धौतत्वादिलक्षणलक्षितमहतम्। महत्सोमबन्धनपर्याप्तं, श्रौतप्रायश्चित्तप्राप्त्यर्थमेतत्। द्विगुणत्वचतुर्गुणत्वयोरैच्छिको विकल्पः। अतिरात्राप्तोर्यामयोरहर्गणेषु च सोमबाहुल्या- द्विगुणम्। अग्निष्टोमाद्येकाहेषु सोमाल्पत्वाच्चतुर्गुणमिति व्यवस्थितविकल्पो वा। प्राचीनोपरिष्टाद्दशमित्येकपदकरणे प्राचीनत्वमुपरिष्टाद्दशानां विशेषणम्। तथाचोपरि- ष्टाद्दशा एव प्राचीना नाधस्तनाः। तास्तु प्रतीचीना इत्यप्यर्थः संभाव्येत स मा भूदि- त्येतदर्थं पदद्वयकरणम्। तस्मिन्नास्तृते वाससि सहिरण्येनेति पूर्ववद्व्याख्येयम्। अतिच्छन्दसेति ज्ञानार्थं, ज्ञानाभावे दक्षिणाग्नौ भुव इति यजुर्भेषप्रायश्चित्तम्। अत्रर्चा मानमुक्तम्। तस्याङ्गत्वेन वक्ष्यमाणं पञ्चेतिसंख्याविधानम्। ऋचेतिवचनं यदृचोऽधीत इत्यदृष्टप्रतिपत्त्यर्थम्। अन्यत्रापि यत्र यत्रर्चेति वदति तत्रापीदमेव प्रयोजनं ज्ञेयम्। एकैकया, एकयैकयाऽङ्गुल्या प्रसारितया यावद्ग्रहीतुं शक्यते तावन्मिमीत इत्यर्थः। उत्सर्गमिति शेषः। एकयैकयोत्सर्गं मिमीत इति श्रुतेः। उत्सर्गमुत्सृज्योत्सृज्य पूर्वां पूर्वामङ्गुलिं क्रमादुत्तरयोत्तरया चैकयैकया, एवं मिमीत इत्यर्थः। सुवरिति मन्त्रान्तः।

**सर्वास्वङ्गुष्ठमुपनिगृह्णाति।**

सर्वास्वङ्गुलीषु मानकालेऽङ्गुष्ठं योजयेदित्यर्थः।

**यथा प्रथमं न तथा पञ्चमं तथैव दशमम्।**

न तथा पञ्चममित्यस्यायं भावः—कनिष्ठिकादिभिश्चतसृभिः क्रमेण माने कृते पुनः कनिष्ठिकादिक्रमस्वीकारे मध्यमानामिकयोर्द्वयोः परित्यागः स्यात्। तथाचैकयैकयोत्सर्गं मिमीत इत्यनया श्रुत्या विरोध आपद्येतेति। कनिष्ठिकादिभिश्चतसृभिः क्रमेण मानच- तुष्टयं कृत्वा मध्यमानामिकाकनिष्ठिकाभिः क्रमेण मानत्रयं कृत्वा पुनर्मध्यमानामिका-

कनिष्ठिकाभिः क्रमेण मानत्रयमित्ययमेव मानक्रमो युक्तः पुनस्तर्जन्यादिक्रमस्वीकार एकैकैकयोत्सर्गं मिमीत इत्येतच्छ्रुतिविरोधापत्तेः । एवं चायातयाम्नियाऽयातयाम्नियैवैनं मिमीत इत्यनया श्रुत्यैकयैकयोत्सृष्टया माने कृतेऽयातयाम्नियाऽयातयाम्नियैव मानं कृतं भवति । सकृत्प्रवृत्तायाः अनन्तरमेव प्रवृत्त्यभावात् । यातयामत्वं गतरसत्वं न भविष्यतीति तात्पर्यार्थः । अथवा कनिष्ठिका मध्यमोपकनिष्ठिका तर्जन्युपकनिष्ठिका तर्जनी कनिष्ठिका तर्जन्युपकनिष्ठिका कनिष्ठिकेत्येवं क्रमेण वा । एतेन कनिष्ठिकादि-भिश्चतसृभिः क्रमेण तर्जन्यादिभिर्व्युत्क्रमेणोपकनिष्ठिकया कनिष्ठिकया चेति । अथवा कनिष्ठिकादिभिश्चतसृभिः क्रमेण ( *तर्जन्यादिभिर्व्युत्क्रमेण तर्जन्या कनिष्ठिकया चेति । अथवा कनिष्ठिकादिभिश्चतसृभिः क्रमेण ) तर्जन्या पुनः कनिष्ठिकादिभिश्चतसृभिः क्रमेण कनिष्ठिकया चेति, एते क्रमा निरस्ता भवन्ति । तयैव यया प्रथमं मानं कृतं तयैवाङ्गुल्या दशमं मानं कर्तव्यम् । आद्यान्त्ययोर्मानयोरैकरूप्यसंपत्तेरिति भावः ।

पञ्चकृत्वो यजुषा मिमीते पञ्चकृत्वस्तूष्णीम् ।

ननु यजुषेति वचनमनुपपन्नं पादबद्धत्वेनाभित्यमित्यस्यर्क्त्वादिति चेत्सत्यम् । नैष दोषः । कुतः, ब्राह्मणानुसारित्वान्निर्देशस्य । यजुर्वेदसमाम्नातानामाध्वर्यवोपयुक्तानामृचामपि गौणं यजुष्ट्वमिति । तासां श्रेषप्रायश्चित्तमेव कर्तव्यम् । ऋचेति वचनस्य प्रयोजनं तु यदृचोऽधीत इत्यदृष्टप्रतिपत्त्यर्थमित्युक्तमेव प्राक् । एतेनैव दर्शनेनर्ग्वेदस्थ-यजुषां हौत्रोपयुक्तानामृग्भ्रेषप्रायश्चित्तमेव । अदृष्टं तु लक्षणानुगत्या वेदाधिकारा-त्स्ववेदोक्तमप्यस्थैवेति । यदि त्वतिरात्रादिकं महत्कर्म तत्र दीर्घत्रिपर्वविशिष्टांशुसमुदा-यात्मकजूटिका मातव्याः ।

प्रजाभ्यस्त्वेति परिशिष्टानꣳशूनुपसमूहति ।

मानतः परिशिष्टानंशून्दशकृत्वो मिमानो राज्ञोऽर्धं मातव्यम् । तथाच बौधायनः— दशकृत्वो मिमानोऽर्धवेलं राज्ञो मिमीत इति । वेला मर्यादा । परीत्युपसर्गः समन्तभागस्था-नामेवावशेषस्तेषामेवात्र ग्रहणमिति द्योतयति । एतेन दशकृत्वो माने मध्यगतानामेव ग्रहणं सिद्धं भवति । उपोपर्येव समूहति मिते राज्ञि यावदर्थं प्रक्षिपति नैतेषां परि-माणम् । श्रूयते च—यद्वै तावानेव सोमः स्याद्यावन्तं मिमीते यजमानस्यैव स्यान्नापि सदस्यानां प्रजाभ्यस्त्वेत्युपसमूहति सदस्यानेवान्वाभजतीति । तस्मात्प्रदेयविवृद्धिरर्था-त्संस्थाप्य । कात्यायनेनोक्तं च—अर्थात्परिमाणमिति सूत्रेणाऽऽधिकं परिमाणम् । यदि दशमुष्टिपरिमित एव सोमः स्यात्तदा स यजमानस्यैव स्यान्नतु सदसि विद्यमाना-

---

* धनुश्चिह्नान्तर्गतं ख. ग. पुस्तकयोर्न विद्यते ।

नामृत्विजां स्यात्। अतः प्रजाभ्यस्त्वेति मन्त्रेणावशिष्टानपि सोमांशूनुपसमूहति दश-मुष्टिपरिमितसोमेन संयोजयेदिति यावत्। तथा सति सदस्याननुगृहीतवान्भवत्यध्वर्युरिति श्रुतेरर्थो द्रष्टव्यः।

**समुद्गृह्य वाससोऽन्तान्प्राणाय त्वेति क्षौमेणोष्णीषेणोपनह्यति ।**

समुद्गृह्य वाससोऽन्तान्सम्यगुद्गृह्योर्ध्वं गृहीत्वा सोमांशूनामेकीकरणार्थं तूष्णीमेव वाससोऽन्तान्वाससः प्रान्तान्क्षौमेणोष्णीषेण दीर्घशाटकेन वाससोपनह्यति दृढं बध्नाति। एतच्च वासः परिधानयोग्यं, सोमोपहतं वासो यजमानः परिधत्त इत्यग्रेऽवभृथे वक्ष्यमाणत्वात्। प्रादक्षिण्यं परिभाषासिद्धम्।

**व्यानाय त्वेत्यनुशृन्थति ।**

अनुशृन्थति शिथिली करोति। किंचिदवेक्षणार्थं क्वचित्प्रदेशे तूष्णीमेव विस्रस्ये-त्यर्थः। मन्त्रानुपदेशात्। एतच्चावेक्षणाङ्गम् । नच विस्रंसनं विनेक्षणानुपपत्तेरर्थत एव सिद्धौ वचनं व्यर्थमिति वाच्यम्। बद्धस्यैव राज्ञ ईक्षणं वारयितुं तद्वचनस्याऽऽ-वश्यकत्वेन वैयर्थ्याभावात्। सोमविक्रयिणे राजानं प्रदाय तं पृच्छतीत्येतत्प्रभृतिक-र्मार्थतां बोधयितुं वा । अत्र नियममाह बौधायनः—अथोपरिष्टादङ्गुल्याऽवकाशं कृत्वेति।

**प्रजास्त्वमनुप्राणिहि प्रजास्त्वामनुप्राणन्त्वित्यवेक्ष्यैष ते गायत्रो भाग इत्येतैर्मन्त्रैरभिमन्त्रयते ॥ ६ ॥**

पूर्वत्र प्रजाकर्मकमनुप्राणनमुत्तरत्र प्रजाकर्तृकमनुप्राणनमित्येतादृशार्थभेदान्मन्त्रद्वि-त्वमिति शङ्कां द्वितीयाध्यायप्रथमपादगतेनार्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादित्यनेन सूत्रेण भगो वामित्यस्मिन्मन्त्रेऽर्थैक्येऽपि आकाङ्क्षाया अभावादनेके मन्त्रा इति यथा प्रतिपादितं जैमिनिना तथाऽनुप्राणनरूपार्थैक्येऽपि आकाङ्क्षाया अभावान्मन्त्रद्वित्वमिति शङ्कां च दूरीकर्तुं कृत्स्नः पाठः । अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादित्येतत्सूत्रार्थस्तु—अर्थशब्दोऽत्र नाभिधेयवाची किंतु प्रयोज-नवचनः। तथाच प्रयोजनैकत्वादित्यर्थो भवति। नह्येकं यजुरित्येव वक्तव्ये यजुष्परिमा-णविचार एकवाक्यलक्षणमसंगतमित्याशङ्क्य नात्र लौकिकवाक्यसाधारण्येनैकवाक्यल-क्षणमुच्यते किंतु तावदेकं यजुरित्येकयजुष एवेत्याशयेन सूत्रे वाक्यशब्दस्य यजुष्परत्वम्। ननु वाक्यशब्दयजुःशब्दयोः कथमेकार्थत्वमिति चेत्। उच्यते—यागसाधनत्वाद्यजुः, यागप्रयोगे वक्तव्यत्वाच्च वाक्यम्। तथाचैकार्थत्वं वाक्ययजुः शब्दयोः सिद्धं भवति । ततश्चेदमपि यागसाधनत्वे पर्यवसितमिति भावः । वक्तव्यत्वादित्यनेनैव यावदेकं यजुस्तावत्प्रयोगसमये प्रयोक्तव्यं नतु तदेकदेश इति प्रयोजनमपि सूचितम् । एवं च तत्प्रयोजनसूचनायैव सूत्रे यजुःशब्दे

प्रयोक्तव्येऽपि वाक्यशब्दप्रयोग इति नाकौशलं सूत्रकारस्येति द्रष्टव्यम् । एकप्रयोजनत्वमात्रे कृते भगो वां विभजत्वित्यादीनां पुरोडाशविभागप्रकाशनरूपैक-प्रयोजनत्वादेकयजुष्ट्वं स्यात्तद्व्यावृत्त्यर्थं विभागे सति साकाङ्क्षत्वमिति । तावत्युक्ते स्योनं ते सदनं करोमीत्यस्य कृत्स्नस्यैकयजुष्ट्वं स्यात्तस्मिन्सीदेति तच्छब्दबलेन विभागे साकाङ्क्षत्वादत एकप्रयोजनत्वमिति । तत्र पूर्वभागस्य सदनकरणप्रकाशन-मुत्तरभागस्य प्रतिष्ठापनप्रज्ञानं प्रयोजनमिति नातिप्रसङ्गः । अवेक्ष्येत्यत्र सोममिति शेषः । अवनतो भूत्वोपरीक्षित्वेत्यवेक्ष्येत्यस्यार्थः । एतैरिति वचनमेष ते त्रैष्टुभ इत्यादीनामवशिष्टानां वैकल्पिकत्वव्यावृत्त्यर्थम् । मन्त्रैरिति वचनं त्रैष्टुभ इत्य-त्रोत्तरानुषङ्गलाभार्थं जागत इत्यत्र पूर्वानुषङ्गलाभार्थं च । पूर्वोऽनुषङ्ग एष इति पदद्वयात्मकः । उत्तरोऽनुषङ्गः पदपञ्चकात्मकः । तथाच—एष ते गायत्रो भाग इति मे सोमाय ब्रूतात्, एष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतात् । एष ते जागतो भाग इति मे सोमाय ब्रूतात्, छन्दोमानाᳫं साम्राज्यं गच्छेति मे सोमाय ब्रूतादित्येवं मन्त्राणां पाठो भवति । बौधायनोऽप्येवमाह कल्प-सूत्रे, एष ते त्रैष्टुभो जागतो भाग इति मे सोमाय ब्रूतादित्येक एव वा मन्त्रः । अनुषङ्गवचनाभावात् । नच गायत्रं छन्दोऽनुप्रजायस्वेत्येतैस्त्रिः प्रदक्षिणं यथासुखमत ऊर्ध्वं मन्थतीत्यत्रानुषङ्गवचनाभावेऽपि यथाऽनुषङ्गस्तद्वदत्राप्यस्त्विति वाच्यम् । एतस्य दृष्टान्तस्य विषमत्वेनासंगतत्वात् । तथाहि मन्थने त्रैष्टुभमित्यत्रानुषङ्गं विना मन्त्रबहुत्वासंभवेन बहुवचनस्यासंगतत्वापत्त्या तत्सिद्धेः । प्रकृते त्रैष्टुभ इत्यत्रानुषङ्गं विनाऽपि बहुवचनं संगतमेव । अस्मिन्कल्पे प्रतिमन्त्रं विच्छेदार्थं मन्त्रग्रहणं द्रष्टव्यम् । अभिमन्त्रणस्य बाह्यक्रियत्वाभावात् । अविच्छेदेन मन्त्राणां पाठेऽप्यभिमन्त्रणे विरोधो न कोऽपीत्यविच्छेदेनापि मन्त्राणां पाठः स्यात्तं निवारयितुं मन्त्रग्रहणं युक्तमेवात्र । एतन्मन्त्रत्रित्वं द्वैधसूत्रे बौधायनोऽप्याह ।

देव सूर्य सोमं क्रेष्यामस्तं ते प्रब्रूमस्तं
त्वं विश्वेभ्यो देवेभ्य ऋतून्कल्पय
दक्षिणाः कल्पय यथर्तु यथादेवतमिति
सहिरण्येन पाणिनाऽऽदित्यमुपातिष्ठते ।

पूर्ववद्व्याख्येयम् ।

**सोमविक्रयिणे राजानं प्रदाय तं पृच्छति**
**सोमविक्रयिन्क्रय्यस्ते सोमा ३ इति ।**

उपनद्धमेनं राजानं सोमविक्रयिणे दत्त्वा तं सोमविक्रयिणं पृच्छति सोमविक्रयिन् क्रय्यस्ते सोमा ३ इति । उपोत्थाय पृच्छतीति बौधायनः । हे सोमविक्रयिंस्ते तवायं

सोमः क्रय्यो विक्रेतव्य एवायमिति निश्चयेन प्रसारितोऽस्त्यास्मिन्देशे किमिति प्रश्न-वाक्यस्यार्थः। प्रश्ने प्लुतिः। अद्भिरभ्युक्ष्य चर्मोद्दूहतीति बौधायनः।

क्रय्य इति स प्रत्याह।

स सोमविक्रयी क्रय्य इति प्रतिब्रूयात्।

दशभिः क्रीणाति।

दशभिरित्यत्र व्यक्तिभिरित्येव शेषो नतु द्रव्यैरिति। गोधेनुतद्वत्सर्षभानडुन्मिथुन-गवां सप्तत्वेऽपि गोत्वावच्छिन्नपदार्थस्यैकत्वेन दशभिः क्रीणातीतिदशसंख्यानुपपत्तेः। नच गोत्ववद्धेनुत्वतद्वत्सत्वर्षभत्वानडुत्त्वमिथुनगोत्वजातिरूपधर्मभेदमादाय द्रव्यभेद इति वाच्यम्। गोत्वादिना सांकर्येण धेनुत्वादीनां जातित्वासंभवात्। सप्त गाव इति गोजातीयत्वेनैवैतेषां सूत्रकृत्कृतनिर्देशानुपपत्तेश्च। एतानीतिवक्ष्यमाणसूत्रस्थपदानन्तरं क्रयणानीति पदं देयम्। तावतैव दशसंख्यालाभो भविष्यतीति चेत्। न भविष्यति। कुतः। विकल्पस्यापि संभवात्। अतः समुच्चयसिद्धयर्थमिदं सूत्रमावश्यकमेव। अय-मर्थ उक्तो द्वादशाध्याये चतुर्थे पादे—क्रयणेषु तु विकल्पः स्यादेकार्थत्वात्। समुच्च-यो वा प्रयोगे द्रव्यसमवायादिति सूत्राभ्यां जैमिनिना। सूत्रार्थस्तु क्रीयते सोमो यैस्तानि क्रयणानि द्रव्याणि तेषु क्रयणेषु। तुशब्दो याजमानमन्त्रजपसमुच्चयवदत्र समुच्चयो न भवति किंतु विकल्प इति वैलक्षण्यद्योतनाय। एकार्थत्वादानति-रूपकार्यैक्याद्विकल्पः स्यादिति। यद्यपि तत्तद्द्रव्यसाधनक्रयादानतिर्विलक्षणैव जायत इति द्वारकार्यभेदान्न विकल्पसंभवस्तथाऽप्यानतिसामान्यैक्याद्द्वारकार्यमप्येकमिति भावः। इति पूर्वसूत्रार्थः। द्रव्यसमवायाद्दशभिः क्रीणातीतिवचनप्रतिपादितादिति शेषः। अन्यत्स्पष्टम्। [ इति ] उत्तरसूत्रार्थः।

ता व्यक्तीराह—

सप्त गावो हिरण्यं वासोऽजा च त्रीण्येतानि।

सप्तसु गोषु एक आद्यो गोपदार्थ उपक्लृप्ता सोमक्रयणी समङ्गा बन्धुमतीत्यादिल-क्षणलक्षितः। द्वितीयो धेनुरूपः। धेनुर्नवप्रसूता। तृतीयो धेनुवत्सरूपः। चतुर्थ ऋषभरूपः। पञ्चमः शकटवाहिबलीवर्दरूपः। षष्ठसप्तमौ मिथुनगोरूपौ। एताः सप्त गावः। एतानि हिरण्यवासोजात्मकानि त्रीणि द्रव्याणि चैवं दश व्यक्तय इत्यर्थः। चकारः परस्परसमुच्चयार्थः। त्रीणीतिवचनं सप्तगवां क्रयप्रदेशे सहैव संनिधापनमिवै-तेषां त्रयाणामपि सहैव संनिधापनं कर्तव्यमितिज्ञापनार्थम्। त्रीणीत्येतावतैव सिद्ध एता-नीतिवचनं हिरण्यवासोजानां जातयोऽपि कदाचित्संख्यासंपादिका नतु व्यक्तय एवेति नियम इतिज्ञापनार्थम्। तेन षोडशमाषात्मकसुवर्णरूपहिरण्यद्वयं त्रयमितोऽप्यधिकं वाऽपि शक्त्यनुसारेण देयम्। एवं वासोद्वयं त्रयमधिकं वाऽपि तथाऽजाद्वयं त्रयम-

धिकं वाऽपि । मन्त्रास्तु न प्रकृतावूह इतिनिषेधादेकवचनान्ता एव वक्तव्याः पत्नीᳬ संनह्येतिवत् । तथोत्तरस्यां ततावित ऊहनिषेधकात्सूत्राद्विकृतावपि । एकवचनं जात्यभिप्रायपरतया समर्थनीयम् । द्रव्यत्रयस्य प्रदानं हिरण्यमजा वास इत्येवं क्रमेण विधास्यति । तत्क्रमेणैवात्र निर्देशे कर्तव्ये वासोनिर्देशानन्तरमजानिर्देशो व्युत्क्रमेण यः कृतः स ज्ञापयति द्रव्यत्रयप्रदानक्रमविषयेऽयमपि पक्षे क्रमोऽस्तीति ।

दश गावो भवन्त्यथैतानि त्रीणीत्येकेषाम् ।

दश गावः, त्रीण्येतानि एवं मिलित्वा त्रयोदश व्यक्तय इत्यर्थः । अस्मिन्पक्षे चतस्रो गाः(गावो) धेनुस्तद्वत्स ऋषभोऽनड्वान्मिथुनौ गावौ । एता दश गावो हिरण्यं वासोऽजा चेत्येतानि त्रीणि द्रव्याणि चेत्येवं त्रयोदशेत्येकेषामाचार्याणां मतम् । अयं च पक्षः शाखान्तरीयः । अथशब्दो दशगोव्यक्तिप्रदानानन्तरमेव वा हिरण्यवासोजानां प्रदानमिति पाक्षिकं क्रमान्तरं प्रदर्शयितुम् । एतेनेदमपि ज्ञायते केषांचिन्मते दशानां गवां प्रदानात्पूर्वमपि एतेषां त्रयाणां दानमस्तीति ।

अपि वा चतुर्भिरेव ।

अनाढ्यस्य दशव्यक्त्यभावे चतुर्भिरेव द्रव्यैः क्रयः ।

तान्याह—

गवा चैतैश्च त्रिभिः ।

एतैरनन्तरोक्तैर्हिरण्यवासोजात्मकैर्द्रव्यैः । गवा चेत्यत्र चकारो मतान्तरसमुच्चयार्थः । एवं च चतस्रो गावो हिरण्यं वासोऽजा चेति सप्तभिरपि पक्षे क्रयः सिध्यति । एतेषां पक्षाणां शक्ताशक्तपरत्वेन व्यवस्था ।

गवैकविंशतिदक्षिणस्य ।

नियमार्थमिदं सूत्रम् । एकविंशतिदक्षिणस्यैकया गवैव क्रय इत्यर्थः । एतैश्च त्रिभिरित्येतस्य नानुवृत्तिः । यद्येतैश्च त्रिभिरित्येतस्यानुवृत्तिरिष्टा स्यात्तदैकविंशतिदक्षिणस्य चेत्येवं ब्रूयात् । यतो नैवमुक्तवानतो नानुवृत्तिः । अस्मिन्पक्षे हिरण्यप्रत्यादानं लुप्यते । एकविंशतिदक्षिणस्य गवेत्युक्त्या षष्टिदक्षिणस्याधिकसंख्याऽर्थादवगम्यते । तां स्पष्टमाहाऽऽपस्तम्बः—तिसृभिः षष्टिदक्षिणस्येति । अपरिमितदक्षिणापक्षे विशेषमाह स एव—अपरिमिताभिरपरिमितदक्षिणस्येति ।

त्रिंशता सहस्रदक्षिणस्य ।

स्पष्टम् । सर्वस्वदक्षिणे क्रतौ चतुर्विंशत्या क्रयः । तथाचाऽऽपस्तम्बः—चतुर्विंᳬ शत्या सहस्रे सर्ववेदसे वेति ।

ता व्यक्तीराह—

सप्तविꣳशतिर्गावो हिरण्यं वासोऽजा च त्रीण्येतानि ।

एकविंशतिर्गावः । धेनुस्तद्वत्स ऋषभोऽनड्वान्मिथुनौ गावौ । एवं सप्तविंशतिर्गावः । हिरण्यं वासोऽजा चेत्येतानि त्रीणि द्रव्याणि । एतत्सर्वं मिलित्वा त्रिंशद्व्यक्तयो भवन्तीत्यर्थः । त्रीण्येतानीति प्रयोजनं पूर्ववदत्रापि ज्ञेयम् ।

त्रिꣳशद्गावो भवन्त्यथैतानि त्रीणीत्येकेषाम् ।

सहस्रदक्षिणस्येत्यत्रानुवर्तते । अथशब्दप्रयोजनं पूर्ववत् । अन्यत्पूर्ववद्व्याख्येयम् ।

शतेन वाजपेये द्वाभ्याꣳ राजसूये सहस्रेणाश्वमेधे ।

शतेनेति पूर्वत्रोपक्रमाच्छतशब्दस्य वचनविपरिणामेन द्वाभ्यामित्यत्रानुषङ्गः । तेन द्वाभ्यां शताभ्यामित्यर्थो भवति । शतेनेत्येतत्पूर्वं व्यक्तीनामिति योग्यतया शेषो द्रष्टव्यः । एवमुत्तरत्रापि । सप्तनवतिर्गावो हिरण्यादित्रयं च शतं गाव एतानि त्रीणि चेत्येवं पक्षद्वयं त्रिष्वपि ज्ञेयम् ।

सोमं ते क्रीणामीति क्रीणाति ।

सोमं ते क्रीणामीतिमन्त्रमभिमातिषाहमित्यन्तमुक्त्वा वक्ष्यमाणैस्तत्तन्मन्त्रैस्तत्तत्क्रयद्रव्यं निर्दिश्य प्रयच्छतीत्यर्थः ।

सोमं महान्तं बह्वर्धꣳ शोभमानमिति वोक्त्वैकैकमनुदिशति ।

सोमं ते क्रीणामीत्यस्य मन्त्रस्य स्थान इमं मन्त्रमुक्त्वा वैकैकं द्रव्यमनुदिशति निर्दिश्य प्रयच्छतीत्यर्थः । अथवा सोमं महान्तं बह्वर्धꣳ शोभमानमिति वोक्त्वेति यथाश्रुत एवान्वयः । पूर्वकल्पे सोमं ते क्रीणामि सोमं महान्तं बह्वर्धꣳ शोभमानमित्यनयोर्विकल्पः । उत्तरकल्पे सोमं ते क्रीणामीत्येतदनन्तरमेतस्यापि पाठो वैकल्पिक इति द्रष्टव्यम् । यथा सोमं ते क्रीणाम्यूर्जस्वन्तं पयस्वन्तं वीर्यावन्तमभिमातिषाहꣳ सोमं महान्तं बह्वर्धꣳ शोभमानमित्येवमुभौ मन्त्रावुक्त्वा वक्ष्यमाणैस्तत्तन्मन्त्रैस्तत्तत्क्रयद्रव्यं निर्दिश्य प्रयच्छतीत्यर्थः ।

कलया ते क्रीणानि कुष्ठया ते क्रीणानि शफेन ते क्रीणानि पदा ते क्रीणानीति गोस्त्रीन्पादान्प्रसंख्याय गवा ते क्रीणानीति गाम् ।

कला जङ्घाया अधोभागः । कुष्ठा कलाया अधोभागः । शफः खुरः । पत्पादः । एतैर्मन्त्रैः प्रतिपादमावृत्तैर्गोस्त्रीन्पादांस्तत्तद्देशे स्पृशन्प्रसंख्याय निर्दिश्येत्यर्थः । पश्चिमपादद्वयं दक्षिणः पूर्वपादश्चेति क्रमः । चतुर्थपादं यत्र कुत्रचित्स्पृशन्गवा ते क्रीणानीति गां निर्दिशतीत्यर्थः । तस्यास्त्रीन्पादान्प्रसंख्यायेति तच्छब्देन गवा ते क्रीणानीतिमन्त्र-

समभिव्याहाराद्गोपरामर्शसिद्धौ गोरितिग्रहणमनित्योऽयमवयवशः क्रय इतिज्ञापनार्थम् । यत्कलया ते शफेन ते क्रीणानीति पणेतेति कलाशफाभ्यामवयवक्रयं निन्दित्वा गवा ते क्रीणानीत्येव ब्रूयादितिसमुदायक्रय एव ब्राह्मणे प्रस्तुतः । अवयवक्रयस्तु शाखान्तरीय उक्तः । ब्राह्मणे कलाशफयोर्ग्रहणं कुष्ठ(ष्ठा)पादयोरुपलक्षणम् ।

**भूयो वाऽतः सोमो राजाऽर्हतीति सोमविक्रय्या संपदः प्रत्याह ।**

मन्त्रे वाशब्दोऽवधारणे । भूयो वाऽत इति याच्ञारूपं वाक्यम् । आ क्रयसंपदः सोमविक्रयी प्रति अध्वर्युरभिमुखो भूत्वाऽऽह । संपद इति पञ्चम्येकवचनम् । आ संपद इति वचनाद्दशभिः क्रीणातीति पक्षे दशम्यां व्यक्तौ नैतत् । त्रयोदशपक्षे त्रयोदश्याम् । एवमन्यसंख्यास्वपि द्रष्टव्यम् ।

**भूय एवार्हतीत्यध्वर्युः ।**

प्रतिब्रूयादिति शेषः ।

**शुक्रं ते शुक्रेण क्रीणामीति हिरण्यम् ।**

सोमं ते क्रीणामीति मन्त्रमभिमातिषाहमित्यन्तमुक्त्वा शुक्रं ते शुक्रेण क्रीणामि चन्द्रं चन्द्रेणामृतममृतेनेति हिरण्यं प्रयच्छतीत्यर्थः । केचित्तु अमृतेनेत्यन्ते हिरण्येन ते क्रीणामीत्यनुषजन्ति ।

**तपसस्तनूरसीत्यजाम् ।**

अभिमातिषाहमित्यन्ते तपसस्तनूरसि प्रजापतेर्वर्णस्तस्यास्ते सहस्रपोषं पुष्यन्त्याश्चरमेण पशुना क्रीणामीत्यजां प्रयच्छति । पशुना क्रीणाम्यजया ते क्रीणामीति केचिद्‌त्रानुषजन्ति । प्रतीचीनग्रीवयाऽजया पणत इति बौधायनो द्वैधे । अजाया उपनिग्रहण इति सूत्रं बौधायनस्यानुपनिगृह्णन्नेवाजां मन्त्रं जपेदिति शालीकिरिति । उपनिग्रहणं सोमविक्रयिणः समीपे स्वकक्षाप्रदेशेन गतिरोधनार्थं तस्या दार्ढ्येन संश्लेषणविशिष्टं धारणम् । उपनिग्रहणाभावेऽपि केवलं नियमनं तु भवत्येव ।

**धेन्वा ते क्रीणामीति धेनुम् ।**

अभिमातिषाहमित्यन्ते वत्सेन ते क्रीणामीत्येतावता मन्त्रेण धेनुं प्रयच्छति । अभिमातिषाहमित्यन्ते वत्सेन ते क्रीणामीति वत्सम् । यद्यपि वत्सः सूत्रकृता नोक्तस्तथाऽपि गुणभूतस्यापि तस्याऽऽक्षेपाल्लाभः । अन्यथा धेनोर्वत्सस्य स्तनंधयस्य जीवनानुपपत्तेः, दश संपद्यन्त इति श्रुतिविरोधापत्तेः, दशभिः क्रीणातीति सप्त गाव इति संख्यापरिगणनाभ्यां विरोधापत्तेश्चेति । ननु विहितधेनुप्रदानानन्तरमन्या धेनुरेव दशसंख्यासंपत्त्यर्थं क्रयसाधनत्वेन देया तस्या अप्यार्थिकमेव सवत्सत्वम् । एवं च धेनोर्वत्सस्य धेनुसहभावेऽपि संख्यासंपत्तिस्तद्वत्सेन न भवति गुणभूतवत्सस्य क्रयसाधनत्वकल्पनापेक्षयाऽन्यधेन्वा एव क्रयसाधनत्वकल्पनाया युक्तत्वादिति चेन्न । तथा सत्यपि

धेन्वा ते क्रीणामीति धेनुं वत्सेन ते क्रीणामीति तस्या एव धेनोर्वत्समिति सूत्रान्तरे धेनुप्रदानानन्तरं तद्वत्सस्यैव क्रयसाधनत्वेनोपात्तत्वेन सूत्रान्तरानुरोधेन दशसंख्यासंपत्त्यर्थं क्रयसाधनत्वेन वत्सोपादानस्यैव युक्ततरत्वात्। तस्मात्सूत्रान्तरानुरोधाद्धेनोर्वत्स एव गोषु परिगणनीयः। दश संपद्यन्त इतिश्रुतितोऽप्ययमर्थो लभ्यते। कथमिति चेदुच्यते—यत्कलया त इत्यनुवाके नव द्रव्याण्युक्त्वा दश संपद्यन्त इति वचनान्नवद्रव्येष्वेवाऽऽर्थिकं दशमं द्रव्यमप्यस्तीति ज्ञायते। तच्च धेनोर्नवप्रसूतत्वेन तद्वत्सस्य जीवनान्यथानुपपत्त्या तस्यैव ग्रहणादुपस्थितत्वाच्च धेनुवत्सात्मकमेव। मिथुनगोद्वयान्तर्गतगोवत्सस्य तु स्तनंधयत्वे मातृसहभावेनैव दानं न स्वतन्त्रतयेति। अतो धेनुवत्सेनैव दशत्वसंपत्तिर्द्रष्टव्या।

**ऋषभेण ते क्रीणामीत्यृषभं वत्सतरेण साण्डेनेत्येकेषाम्।**

अभिमातिषाहमित्यन्त ऋषभेण ते क्रीणामीत्यृषभम्। एकेषामाचार्याणां मत ऋषभस्थाने साण्डेन वत्सतरेण क्रयः। स्तनपानोपरतो वत्सो वत्सतरः। साण्ड इत्यनेन बलिष्ठत्वं द्योत्यते। वत्सोक्षाश्वर्षभेभ्यश्च तनुत्व इति ष्टरच्प्रत्ययः। अभिमातिषाहमित्यन्ते साण्डेन वत्सतरेण ते क्रीणामीति मन्त्रः।

**अनडुहा ते क्रीणामीत्यनड्वाहम्।**

अनड्वाञ्शकटवाही बलीवर्दः। अभिमातिषाहमित्यन्तेऽनडुहा ते क्रीणामीत्यनड्वाहम्।

**मिथुनाभ्यां गोभ्यां क्रीणामीति मिथुनौ गावौ।**

पुंगौः स्त्रीगौश्च मिथुनौ नतु पुंगोद्वयं स्त्रीगोद्वयमिति। अन्यथा सप्त गाव इत्यनेन विरोधापत्तेः। मिथुनौ गावौ ददातीत्यत्राप्येवमेव। ब्राह्मणे मिथुनाभ्यां क्रीणातीत्यत्राप्येवमेव मिथुनशब्दार्थोऽभिप्रेतस्ताभ्यां युगपत्क्रीणातीत्यर्थः। अभिमातिषाहमित्यन्ते मिथुनाभ्यां गोभ्यां ते क्रीणामीति केचित्पठन्ति। सर्वत्र तच्छन्ददर्शनादित्याशयः। एतेषु द्रव्येषु भूयो वाऽतो भूय एवेत्यावर्तते।

**वाससा ते क्रीणामीति वासः।**

अभिमातिषाहमित्यन्ते वाससा ते क्रीणामीति वासः। अत्र न भूयो वाऽतो भूय एवेति। वासोऽत्र परिधानपर्याप्तम्। सोऽयं दशव्यक्तिविधिरविशेषचोदनात्सति वैशेषिकविधौ सर्वत्रोपतिष्ठते।

**दशभिः संपादयति भूयस एके सोमक्रयणानामनन्ति॥ ७॥**

दशत्वसंख्यासंपादनमात्रमेताभिर्दशभिर्व्यक्तिभिः कर्तव्यं सोमविक्रयिपरितोषार्थं भूयो बहून्सोमक्रयणानन्यानिवमीहिष्यश्वप्रभृतीनपि दद्यादित्येक आचार्या वदन्तीत्यर्थः।

---

१ ढ. °भ्यां ते क्री°।

अथवा—दशभिर्व्यक्तिभिरेव भूयसो विहितसंख्यातोऽधिकान्सोमक्रयणान्सोमविक्रयिपरितोषार्थं संपादयतीत्येके समामनन्तीत्यर्थः । शतेन वाजपेये द्वाभ्यां२ राजसूये सहस्रेणाश्वमेध इत्यत्र परितोषार्थं नाधिकसोमक्रयणदानं विहितसंख्याया एव बहुत्वेन तथैव परितोषसिद्धेः । सर्वथा तस्यापरितोष एव चेत्तदोपहरेत्तैवेति वक्ष्यमाण उपाय एव ।

तत्र भूयस्त्वनियममाह—

**पञ्चदशभिः क्रीणाति सप्तदशभिः क्रीणाति चतुर्विंशत्या क्रीणात्यपरिमिताभिः क्रीणाति क्रीणामीत्यन्ततो वदति ।**

षोडशाष्टादशाद्याश्चतुर्विंशतिसंख्याया अर्वाग्भूता मध्यतनाः संख्याः परिसंख्यायन्ते पञ्चदशसप्तदशचतुर्विंशतिसंख्यावाचकैः शब्दैः । मध्यतनसंख्याभिः परितोषेऽपि संख्याद्वयान्यतमसंख्यथैव देया इति अदृष्टार्थोऽयं नियमः । पञ्चदशभिरपरितोषे सप्तदशभिः परितोषणम् । सप्तदशभिरपरितोषे चतुर्विंशत्या परितोषणम् । चतुर्विंशत्याऽप्यपरितोषे प्रमाणतोऽप्यधिकाभिस्त्रिचतुरादिभिः परितोषणम् । सर्वथा परितोषाभावे वक्ष्यमाण उपाय एव सोमविक्रयिपरितोषार्थं भूयोदाने क्रियमाणेऽन्ततोऽन्ते पञ्चदशसप्तदशचतुर्विंशत्यपरिमितान्यतमभूयःपदवाच्यसंख्याशब्दोच्चारणानन्तरं क्रयसाधनव्यक्तीनां तूष्णींप्रदानेऽपि क्रीणामीति वदतीत्यर्थः । यथा वाससा क्रये सति पञ्चदशभिः क्रीणामि सप्तदशभिः क्रीणामि चतुर्विंशत्या क्रीणामि अपरिमिताभिः क्रीणामीति । अपरिमितशब्द उक्तप्रमाणाधिकप्रमाणवाची । अपरिमितं प्रमाणाद्भूय इति कात्यायनोक्तेः । अथवा यानि परितोषार्थं देयानि द्रव्याणि भवन्ति तान्युच्चार्यान्त एव क्रीणानीति सकृच्छब्दमुच्चारयति नतु प्रतिद्रव्यमिति । यथा गोहिरण्याजावासोभिः क्रीणामीति, यथा वा गोभिर्हिरण्येनाजया वाससा च क्रीणानीति । नच द्वादशरात्रं दीक्षितो भृतिं वन्वीतेतिश्रुतिविहितं द्रव्ययाचनमरुणया क्रीणाति हिरण्येन क्रीणातीत्यादिश्रुतिविहितोऽयं सोमक्रयश्चाविद्यमानद्रव्यसोमकस्यैव तद्वतस्तदानर्थक्यादिति वाच्यम् । अपूर्वस्य तदभावेऽनुत्पत्त्यापत्त्यैतयोर्नित्यत्वस्वीकारस्यात्यन्तावश्यकत्वात् । तथाच षष्ठेऽध्यायेऽष्टमे पादे जैमिनिः—याच्ञा क्रयणमविद्यमाने लोकवत्, नियतं वाऽर्थवत्त्वात्स्यादिति । द्रव्ये सोमे चाविद्यमान एव याच्ञा याचनं क्रयणं क्रयश्च, अन्यथा न । एतच्च सुप्रसिद्धमिति लोकवदित्यनेनोच्यत इति पूर्वसूत्रार्थः । अर्थवत्त्वात्, अपूर्वात्तस्य प्रयोजनवत्त्वान्नियतमेवेदं द्वयं विद्यमानत्वेऽप्युभयस्येति ।

**संपाद्य सम्पत्ते गोरस्मे चन्द्राणीति हिरण्यं प्रत्यादत्ते ।**

संपाद्येत्यनुवादः । परितोषार्थं बहूनां सोमक्रयणानां दानेऽपि संपादनाव्यवहितोत्तरं हिरण्यप्रत्यादानमेव कर्तव्यम् । अनन्तरं परितोषार्थसोमक्रयणदानमित्यर्थं बोधयितुं प्रत्तं हिरण्यं सोमविक्रयिणो हस्तादादत्ते । येन हिरण्येन सोमं क्रीणीयात्तदमीषहा

पुनराददीत तेज एवाऽऽत्मन्धत्त इति ब्राह्मणात्प्रतिशब्दाच्च। एकया गवैव क्रये हिरण्यप्रत्यादानं लुप्यते।

**अस्मै ते बन्धुरिति शुक्लामूर्णास्तुकां यजमानाय प्रयच्छति।**

ऊर्णास्तुका छिन्नप्ररूढा स्तुका। एतादृश्यूर्णा। सा च शुक्ला तां शुक्लामूर्णास्तुकां यजमानाय प्रयच्छति सुरक्षितां स्थापयितुम्। यजमानाय प्रदानमदृष्टार्थम्। ज्योतिरित्यन्तो मन्त्रस्य।

**तां विततनकाले दशापवित्रस्य नाभिं करोति।**

तां यजमानाय दत्तां तस्मिन्नुदीचीनदशमुद्गातारो वितत्य धारयन्तीत्येतस्य कालो दशापवित्रविततनकालः। तस्मिन्काले ततो गृहीत्वा दशापवित्रस्य वितनिष्यमाणस्य मध्ये नाभिं धारास्रवणानुकूलामधोलम्बमानां नालरूपां करोति अध्वर्युरेव। अध्वर्युसूत्रे पाठात्। अत्र पाठस्तु प्रसङ्गसंगत्या। अथवा नाभिं करोतीत्यत्रान्तर्भावितो णिच्। तेन नाभिं कारयतात्यर्थो भवति। तथाच दशापवित्रस्य नाभिं कुरु इति प्रैषः सिद्धो भवति। तस्य यजमानो नाभिं करोतीति याजमानसूत्रे नाभिकरणे यजमानकर्तृकताया वक्ष्यमाणत्वाद्यजमानं प्रत्ययं प्रैषः। अथवा तस्य यजमानो नाभिं करोतीत्यत्रैवान्तर्भावितो णिच्। तथाच पूर्ववत्प्रैषः सिद्धो भवति। स चाध्वर्युं प्रति यजमानेन देय इति ज्ञेयम्। पवित्रप्रमाणं दशाप्रमाणं च मानवसूत्रे—अरत्निमात्रं पवित्रं प्रादेशमात्री दशेति।

**शुक्लानामाविकोर्णानाममोते द्वे दशापवित्रे भवतोऽदशाकमन्यतरत्।**

शुक्लानां शुक्लवर्णानां जीवोर्णानामिति कात्यायनः। आविकोर्णानामविसंबन्धिनीनामूर्णानाममोते आमा सहोते सूत्रेण प्रोते द्वे। दशाऽञ्चलस्तद्युक्ते पवित्रे दशापवित्रे भवतः सोमरसपवनसाधनत्वात्पवित्रसंज्ञितयोः सहार्थकेनामाशब्देनेदं गम्यतेऽध्वर्युप्रतिप्रस्थात्रोः सहत्वमत्रेति। तेनैकमध्वर्युणा प्रोतमेकं प्रतिप्रस्थात्रेति। अथवाऽमाशब्दो दशापवित्रयोः समत्वार्थः। द्विग्रहणमुभे प्रोते एकं दशापवित्रमेवमेव द्वितीयमेवं द्वे भवत। इति बोधयितुम्। तयोः प्रोतयोर्द्वयोर्द्वयोर्मध्येऽदशाकं दशारहितमन्यतरदेकं भवतीत्यर्थः। एतेन प्रोतयोर्द्वयोर्द्वयोर्मध्ये द्वितीयं सदशमित्यर्थादवगतं भवति। एवं चोभयोर्दशायुक्तपवित्रत्वमपि संगतं भवति।

**उदकेन क्लेदयित्वा कृष्णामूर्णास्तुकामिदमह९ सर्पाणां दन्दशूकानां ग्रीवा उपग्रथ्नामीत्युपग्रथ्य सोमविक्रयिणि तम**

१ ख. ग. °योर्भ°। ख. ग. °योर्म°।

**इति तया सोमविक्रयिणꣳ रराटे विध्यति ।**

कृष्णामूर्णास्तुकामुदकेन क्लेदयित्वेत्यन्वयः । उपग्रथनं गोलिकाकरणम् । तया गोलिकारूपया रराटे रलयोः सावर्ण्याल्ललाट इत्यर्थः । विध्यति प्रहरति । तयेतिवचनाभाव ऊर्णास्तुकाया उपग्रथनमात्रं वेधस्तु अन्येन येन केनचिदनुपग्रथितयोर्णास्तुकया वा स्यात्स मा भूदित्येतदर्थम् ।

**स्वजा असि स्वभूरस्यस्मै कर्मणे जात ऋतेन त्वा गृह्णाम्यृतेन नः पाहीति सोमविक्रयिणो राजानमपादत्ते ।**

सोमविक्रयिणः सकाशाद्राजानमपादत्ते गृह्णातीत्यर्थः । अपेत्युपसर्गो यथा हस्ताभ्यां न पतति तथा दानं कर्तव्यमित्यर्थं द्योतयति । अथवाऽत्र वाससा बन्धनं द्योतयितुम् ।

**यदि कृच्छ्रायेतापैव[1] हरेत ।**

यदि तु सोमविक्रयी पुनर्लिप्सया दाने कृच्छ्रायेत दुःखायेत तदा बलादपहरेतैवेत्यर्थः । उपैव हरेतेति पाठे झटितीत्यर्थ उपेत्युपसर्गः ।

**इन्द्रस्योरुमाविश दक्षिणमिति यजमानस्योरौ राजानमासादयति ।**

ऊरौ दक्षिणे मन्त्रलिङ्गात् ।

**नीव गृह्णीते ।**

अन्तर्भावितोऽत्र णिच् । व्यत्ययो बहुलमिति सूत्रस्थेन सुप्तिङुपग्रहेत्यनेन च्छान्दसमात्मनेपदम् । उपग्रहशब्देनाऽऽत्मनेपदं गृह्यते । निग्राहयतीवेति तदर्थः । निग्रहणमाश्लेषणम् । आसादयतीत्येतस्मात्पूर्वमन्वयः । तेनाध्वर्योरेवेदम् ।

**अध्वर्यवा शक्तवा इति यजमानः पृच्छत्याशकामेत्यध्वर्युः कथमाशकतेति विष्णुꣳ स्तोममरुत्स्महि बृहस्पतिं छन्दाꣳस्युत्थाय यजूꣳषि वि पर्वता अजिह्त सुतरणा अपो अतारिषमित्यध्वर्युः ।**

शक्तवै शक्ल शक्तावित्यस्माद्धातोः कृत्यार्थे तवैप्रत्ययः । अध्वर्यो आ अत्यन्तं शक्तवै पर्वतात्सोमं गृहीत्वाऽवतर्तुं शक्यं त्वया किमिति यजमानः पृच्छति । आशकामेति लुङो रूपम् । आ अशकामेति पदच्छेदः । शक्ल धातोश्च्लि लुङीति च्लिः । पुषादिद्युताद्य्लृदितः परस्मैपदेष्विति च्लेरङ् । लुङ्लङ्लृङ्क्ष्वडुदात्त इत्यडागमः । अतो दीर्घो यञीति दीर्घः । आ अशकामेत्याकाराकारयोरेकादेशः सवर्णदीर्घः । आ अत्यन्तमशकाम शक्ताः स्मेति तदर्थः । आशकामेत्यध्वर्युः प्रत्याह । कथमाशकतेति लुङो मध्यमपुरुषबहुवचनम् । तस्थस्थमिपामिति थविभक्तेस्तकारः पूजार्थं बहुवचनम् । अत्र यद्यपि कर्तृनिर्देशो नास्ति तथाऽपि संदंशपतितत्वाद्यजमानस्यैव प्रश्नकर्तृत्वं कथं केन प्रकारेण शक्ताः स्थेति । एतदुत्तरार्थकं मन्त्रमाह—विष्णुमिति । स्तोमं जनसमुदाय-

---

[1] इ. ज. झ. ञ. ढ. 'येतोपै' ।

रूपं विष्णुमरुत्स्महि वयं संपादितवन्तः कल्पितवन्त इति यावत्। बृहस्पतिं छन्दाꣳसीत्युभयत्रापि स्तोममरुत्स्महीत्यन्वेति। व्यापनशीलो विष्णुः सामर्थ्यप्रदत्वेनास्माकमनुकूलः। बृहस्पतिर्बुद्धिप्रदातृत्वेनास्माकमनुकूलः। छन्दांसि च्छादकत्वेनास्माकमनुकूलानि। एतेष्वनुकूलेषु सत्सु शक्तत्वे किमाश्चर्यं भो यजमाना अस्मात्प्रदेशाज्झटिति उत्थाय यजूंषि पर्वता यजुर्भ्यो यजूरूपेभ्यः पर्वतेभ्यो यूयं व्यजिहत गच्छत। लकारव्यत्ययः कर्तव्यः। तेन प्रार्थनरूपो लिङर्थोऽत्र भवति गच्छतेति। पर्वतेषु यजूरूपत्वं विप्रकीर्णत्वसाम्यात्। यथा यजुःषु पादासंबद्धत्वाद्विप्रकीर्णत्वं तथा पर्वतेषु दुर्विगाह्यभूमिकत्वाद्विप्रकीर्णत्वम्। एवं च यजूरूपत्वं पर्वतेषु केनापि सादृश्येनोपपन्नं भवति। पर्वता इति पञ्चम्यर्थे प्रथमा। दुस्तरणाः सतीरप्यपः सुतरणाः सुष्ठु तर्तुं योग्या अतारिषमुत्तीर्णोऽस्मीत्यर्थः। अथवाऽतारिषमित्यस्य लकारव्यत्ययं कृत्वा तरिष्यामीत्येवमर्थः कार्योऽर्थानुरोधात्। विष्णुꣳ स्तोममित्यध्वर्युः प्रत्याह। एतान्यदृष्टार्थानि प्रश्नप्रतिवचनानि। पर्वता अजिहतेति लिङ्गात्पर्वते क्रय एतानि। एतेन गिरौ क्रयोऽनुज्ञातो भवति।

स्वानभ्राजेति सोमक्रयणाननुदिशति।

स्वानभ्राजादयः सप्त गन्धर्वास्तानुद्दिश्य सोमक्रयणान्सोमक्रयसाधनीभूतान्पदार्थाननुदिशति संकल्पयतीत्यर्थः। अत्र ब्राह्मणम्—स्वानभ्राजेत्याहैते वा अमुष्मिँल्लोके सोममरक्षन्तेभ्योऽधिसोममाहरन्यदेतेभ्यः सोमक्रयणान्नानुदिशेदक्रीतोऽस्य सोमः स्यान्नास्यैतेऽमुष्मिँल्लोके सोमꣳ रक्षेयुर्यदेतेभ्यः सोमक्रयणाननुदिशति क्रीतोऽस्य सोमो भवत्येतेऽस्यामुष्मिँल्लोके सोमꣳ रक्षन्तीति। दमन्नित्यन्तो मन्त्रः। तदेकया क्रयेऽप्येषा वः सोमक्रयणी ताꣳ रक्षध्वमित्यूहेनेति कश्चित्। वस्तुतः प्रकृतावूहनिषेधात्पूजार्थं बहुवचनं भविष्यति।

रुद्रस्त्वाऽऽवर्तयत्विति सोमक्रयणीमावृत्यान्यया गवा निष्क्रीय यजमानस्य गोष्वपिसृजति।

आवर्तने प्रादक्षिण्यं परिभाषासिद्धम्। सोमक्रयणीं गामावृत्य पराङ्मुखीं कृत्वाऽन्यया सोमक्रयणीव्यतिरिक्तया गवा निष्क्रीय तां गां सोमविक्रयिणे दत्त्वा यजमानस्य या गावस्तासु गोषु तां सोमक्रयणीमपिसृजति मेलयतीत्यर्थः।

पृषता वरत्राकाण्डेन सोमविक्रयिणमपक्षामं नाशयति।

पृषता बिन्दुमता वरत्राकाण्डेन चर्ममयरज्जुकाण्डेनापक्षामं परोक्षं नाशयति गमयति।

लोष्टैर्घ्नन्ति लकुडैर्घ्नन्तीत्येकेषाम् ॥ ८ ॥

इति हिरण्यकेशिसूत्रे सप्तमप्रश्ने द्वितीयः पटलः।

---

लोष्टैर्मृत्पिण्डैः । लकुटैः काष्ठखण्डैः । लोष्टैर्घ्नन्ति लोष्टैरादौ तस्माद्देशाद्घ्नन्ति गमयन्ति तस्मादपि देशाल्लकुटैर्घ्नन्ति गमयन्तीत्येकेषामाचार्याणां मतमित्यर्थः । अनयैव रीत्या क्रियापदद्वयं सार्थकं भवति । अत्राऽऽपस्तम्बः—यदि सोमविक्रयी प्रतिविवदेत पृषतैनं वरत्राकाण्डेनापक्षामं नाशयेयुर्लकुटैर्घ्नन्तीत्येकेषां नित्यवदेके वधꣳ समामनन्तीति । नित्यवत्, अविवदमानस्यापीत्यर्थः । वधः प्रहारः । स च शरीरापीडनानुगुण्येन । सर्वत्र लोष्टमित्येव पाठो युक्तः । लोष्टपलिताविस्युणादिसूत्रे क्तान्ततया एव निपातनात्सिद्धत्वात् । तस्यै दिशो लोष्टमाहरेदितिश्रुतौ स्पष्ट एव क्तान्तः पाठः । तेन लोष्ठमित्यपपाठ एवेति ज्ञेयम् ।

इति श्रीमदोकोपाह्वाग्निष्टोमयाजिसाहस्राग्नियुक्तवाजपेययाजिसर्वतोमुखयाजिद्विसाहस्राग्नियुक्तपौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथदीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसूत्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंतापशामिकायां ज्योत्स्नाख्यायां वृत्तौ सप्तमप्रश्नस्य द्वितीयः पटलः ॥ २ ॥

---

अथ सप्तमप्रश्ने तृतीयः पटलः ।

---

**अदित्याः सदोऽसीति शकटस्य नीडे कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमाऽऽस्तृणाति प्रत्तꣳ राजानमदित्याः सद आसीदेति तस्मिन्नासादयति ।**

नीडं राज्ञ उपवेशनदेशः । प्रत्तवचनं स्तरणोत्तरकालं प्रदानमुत्थानगमने तु पूर्वमेवेतिख्यापनार्थम् । यजमानेन दत्तमेव गृहीत्वाऽऽसादयति न तु यजमानात्स्वयमेव गृहीत्वाऽऽसादयतीत्येतदर्थं वा । तस्मिन्नास्तृते कृष्णाजिने ।

**अस्तभ्नाद्द्यामित्यासन्नमभिमन्त्रयते ।**

आसन्नं राजानम् । व्रतानीत्यन्तो मन्त्रः ।

**आसादयतीत्येकेषाम् ।**

वारुण्यर्चाऽऽसादयतीतिश्रुतेः । अस्तभ्नाद्द्यामित्यनेन मन्त्रेणाऽऽसादनमेव कर्तव्यमित्येक आचार्या वदन्तीत्यर्थः । एतन्मतेऽदित्याः सद आसीदेत्ययं मन्त्रः कृष्णाजिनास्तरणकरणीभूतस्यादित्याः सदोऽसीत्येतस्यैव शेषभूत इति द्रष्टव्यम् ।

**वनेषु व्यन्तरिक्षं ततानेति वाससा पर्यानह्यति ।**

वाससाऽन्येन महता पर्यानह्यति परि परित आ, अत्यन्तं वेष्टयतीत्यर्थः । ग्रावस्विपु सोमस्योत्पत्तेर्ग्रावावेष्टितत्वमास्ति । प्रकृतेऽप्यनेन वाससा वेष्टनेन ग्रावभिर्वेष्टित

इव भवति । ग्रावाणो वा अद्रयस्तेषु वा एष सोमं दधातीत्यर्थवादादयमर्थो लभ्यते । शकटमिति शेषः । उपस्थितत्वात् । अद्रावित्यन्तो मन्त्रः ।

**उदु त्यं जातवेदसमिति कृष्णाजिनेनोर्ध्वग्रीवेण बहिर्लोम्नाऽपिदधाति तरणिर्विश्वदर्शत इति वा ।**

अपिदधातीत्यत्र द्वारमिति शेषः । सूर्यमित्यन्तो मन्त्रः । तरणिर्विश्वदर्शत इति वा । तरणिर्विश्वदर्शत इति वैकल्पिको मन्त्रो रोचनमित्यन्तः ।

**उस्रावेतं धूर्षाहावित्यनड्वाहावुपासजति ।**

उस्रावेतमिति मन्त्रेणानड्वाहौ शकटसमीपं प्रेरयति । ब्रह्मचोदनावित्यन्तो मन्त्रः । सकृदेव मन्त्रो द्विवचनलिङ्गाद्द्विभवाच्च ।

**धूरसीति धुरावभिमृशति ।**

द्वयोर्धुरोरावृत्तिर्मन्त्रस्य ।

**वारुणमसीति शकटमुत्खिदति ।**

उत्खेदनमुद्यमनम् ।

**प्रागीषमवस्थाप्य वरुणस्योत्तम्भनात्वित्युपस्तभ्नोति ।**

अवस्थाप्य धृत्वा । उपस्तम्भनं काष्ठेऽवस्थापनम् । वरुणस्य स्कम्भनमसीति स्वशाखोक्तेन विकल्पते ।

**दक्षिणमनड्वाहं युनक्ति ।**

सामान्यप्रातिज्ञेयम् ।

**वारुणमसीति योक्त्रं परिकर्षति ।**

शम्याछिद्रयोर्योक्त्रं बलीवर्दबन्धनरज्जुं परिकर्षति ।

**वरुणस्य स्कम्भनिरसीति शम्यामवगूहति ।**

अवगूहनमभिहितयोक्त्रपाशे युगच्छिद्रेऽवधानं तद्द्वितीयस्याप्यावर्तते । वरुणस्य स्कम्भसर्जनमसीति स्वशाखोक्तेनायं विकल्पते ।

**प्रत्यस्तो वरुणस्य पाश इति योक्त्रपाशं प्रत्यस्यति ।**

शम्यायां प्रत्यस्यति श्लेषयति ।

**बलीवर्दं चाभिनिदधाति ।**

बलीवर्दमप्यनेनैव मन्त्रेण शृङ्गयोरभिधान्या बध्नाति ।

**एवमुत्तरमनड्वाहं युनक्ति ।**

योक्त्रपरिकर्षणशम्यावगूहनयोक्त्रपाशप्रत्यसनशृङ्गबन्धनैः ।

**हरिणी शाखे बिभ्रदन्तरेषाꣳ सुब्रह्मण्य उपसर्पति पलाशशाखे शमीशाखे वा ।**

शकटस्य दक्षिणोत्तर ईषाद्वयं तत्र यां कांचिदीषामन्तरा यस्याः कस्याश्चिदीषाया

अन्तःप्रदेशे पादौ संस्थाप्य शाखे धारयन्नुप शकटगमनानुगुण्येन सर्पति गच्छतीत्यर्थः । अथवैषामन्तरा यस्याः कस्याश्चिदीषाया अन्तराऽन्तर्वर्ती यः प्रदेशस्तं प्रति शाखे बिभ्रद्गच्छतीति । शकटवाहनं तु लोकप्रसिद्धमेवेति । हरिणी हरिते हरिद्वर्णे । हरिणी स्यान्मृगी हेमप्रतिमा हरिता च येतिकोशात् । एतावता कोमलत्वं सिद्धं भवति । प्रथमयोः पूर्वसवर्णप्राप्तौ तं बाधित्वा नादिचीतिसूत्रस्थनकारस्य दीर्घाज्जसि चेतिसूत्रस्थचकारेणानुवृत्तौ सत्यां पूर्वसवर्णनिषेधे प्राप्ते वा छन्दसीत्यनेन विकल्पेन पूर्वसवर्णदीर्घ एव पुनः स्थाप्यते । तथा च हरिणी इति रूपं सूत्रे युक्ततरं भवति । हरिणी इति द्विवचनम् । इदं च शाखाविशेषणम् । हरिणीपदोत्तरं यच्छाखापदं तद्गोबलीवर्दन्यायेन पलाशशाखाशमीशाखातिरिक्तयज्ञियवृक्षशाखापरम् । अन्यथैतस्य शाखापदस्यानन्वयापत्तेः । नन्वेवं पलाशशाखाशमीशाखयोर्ग्रहणं व्यर्थम् । एकेनैव सामान्यशाखाशब्देन तयोर्लाभादिति चेन्न । तयोर्मुख्यत्वद्योतनार्थत्वेन सार्थक्यात् । ईषामित्यत्रान्तरान्तरेण युक्त इति द्वितीया ।

**शकटमन्वारभ्य सोमाय राज्ञे क्रीताय प्रोह्यमाणायानुब्रूहि ब्रह्मन्वाचं यच्छ सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति संप्रेष्यति ।**

दक्षिणामीषामन्वारभ्येति बौधायनः । अनुब्रूहीत्ययं प्रैषो होतारं प्रति । अनुब्रूहीत्येतादृशस्य प्रैषस्य बाधकं विना मुख्यहोतारं प्रत्येव दर्शनात् । आश्वलायनेन कर्मचोदनायां होतारमित्यनेन सामान्यतो होतुरेव कर्तृत्वप्रतिपादनाच्च । एवमन्यत्रापि ज्ञेयम् । अत्र प्रैषत्रयेण होतृब्रह्मसुब्रह्मण्यान्संप्रेष्यतीत्यर्थः । तेन प्रैषत्रयं पृथक्पृथगेव वक्तव्यम् । एवमन्यत्रापि ज्ञेयम् । ब्रूहीत्यत्र ब्रू इत्यस्य प्लुतो ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेरितिपाणिनिसूत्रात् । अविच्छेदेनैव पाठो वा । एकेतिकरणात् । यजुर्वेदेनाध्वर्युरिति परिभाषयाऽध्वर्युर्न होतृब्रह्मसुब्रह्मण्याः । स्वस्मै नाम्ना प्रैषायोगात् , होतृब्रह्मसुब्रह्मण्यानां परस्परनिरूपितप्रेष्यत्वायोगाच्च । सुब्रह्मण्यकर्म लाट्यायनद्राह्यायणावाहतुः-क्रीते राजनि सुब्रह्मण्य उत्तरेण सोमवहनं गत्वाऽन्तरेणेषे शमीशाखां पलाशशाखां वा सपलाशां पाणौ कृत्वाऽवतिष्ठेताध्वर्युप्रैषः सर्वत्राऽऽकाङ्क्षेत्सुब्रह्मण्याया२ रश्मीन्धारयञ्छाखया प्रेष्येद्गावौ दक्षिणं पूर्व२ सुब्रह्मण्योमिति त्रिराह्वयेत्प्राचि वर्तमाने षट्कृत्वः प्रतीचि पूर्वेण पत्नीशालां विमुक्ते छदिषि शाखामवगूह्य तामेवैषामनूत्क्रम्य यथार्थं स्यादिति । अत्र स्वसूत्राविरुद्धं यत्तत्सर्वमप्यनुष्ठेयम् । सर्वैर्ज्योतिष्टोम इति सूत्रात्सर्वशाखाप्रत्ययमेकं कर्मेति न्यायाच्च । स्वसूत्रपरसूत्रयोर्विरोधे स्वसूत्रमेवाऽऽश्रयेत् । स्वशाखापरित्यागे दोषश्रवणात् । सूत्रस्यापि शाखात्वं चरणव्यूहशास्त्रे प्रदर्शितम् । चरणाः शाखाः सूत्राणि च तेषां व्यूहो विविच्य कथनं यस्मिन्ग्रन्थे स ग्रन्थश्चरणव्यूहाख्यः । तत्र शाखाभेदाः प्रदर्शितास्ते ततो द्रष्टव्याः ।

त्रिरनूक्तायां प्रच्यवस्व भुवस्पत इति प्राञ्चोऽभिप्रयाय प्रदक्षिणमावर्तन्ते ।

त्रिरनूक्तायामित्यत्रोपस्थितत्वात्प्रथमायास्त्रिरनुवचनम् । अत एवावचनं प्रथमायामिति स्पष्टमेवापठदापस्तम्बः । अत्र हौत्रमाश्वलायनीयमेव याजुषस्याभावात् । प्रथमोत्तमयोस्त्रिरनुवचनं सर्वत्र याजुषहौत्ररीत्यैव शस्त्राणि विना शस्त्रविषयकविधेर्विशेषशास्त्रत्वेन प्रबलत्वात् । प्राञ्च इति आवर्तन्त इति बहुवचनादध्वर्युब्रह्मयजमानाः । एतेषामेव प्रकृतकर्मसंबन्धात् । सुब्रह्मण्यस्य तु च्छन्दोगसूत्रेऽनुक्तत्वान्न मन्त्रः । प्राञ्चः प्राङ्मुखाः । शकटेन सह पार्श्वद्वयमभितो गत्वेत्यर्थः । अभिशब्दः पार्श्वद्वयमभित इत्यर्थं बोधयति । आवर्तनेऽपि उत्तरपार्श्वेऽध्वर्युर्दक्षिणपार्श्वे ब्रह्मयजमानाविति । प्रयायेत्यत्र प्रशब्दः शकटागमनलक्षकतावैशिष्ट्यं सूचयति । प्रदक्षिणशब्दोऽत्राऽऽनुगुण्यवाची । अर्थाच्छकटावर्तनानुगुणम् । अन्यथा प्रदक्षिणं यज्ञे कर्माणि करोतीति परिभाषयैव सिद्धे प्रदक्षिणग्रहणवैयर्थ्यापत्तेः । स्वस्त्ययन्यसीत्यन्तो मन्त्रः । अभिप्रयाणस्यैव मन्त्रः प्रच्यवस्वेति लिङ्गात् । च्यवनं स्वस्थानाच्चलनम् । एतस्मादेव लिङ्गाच्छकटस्थितराज्ञा सहैवाभिप्रयाणमपि ज्ञायते । ब्रह्मयजमानाध्वर्यूणां मन्त्रः । प्राञ्च इति बहुवचनेन ब्रह्माध्वर्युकर्तृत्ववद्यजमानकर्तृत्वस्याप्यभिप्रयाणक्रियायां तत्करणीभूतमन्त्रोच्चारणे चापि सिद्धिः । स्वस्मिन्यजमानप्रयोगस्तूच्छुष्मो अग्ने यजमानायैधीत्यत्र यथा तथाऽत्रेति द्रष्टव्यम् ।

अपि पन्थामगस्महीत्युत्तरेण राजानं पूर्वावतिक्रामतो यजमानोऽध्वर्युश्च ।

उत्तरेण राजानं राज्ञ उत्तरतोऽदूरे । ब्रह्मव्यावृत्त्यर्थमुभयोर्ग्रहणम् । पूर्वौ शकटस्य प्रतीच्यां चालनात्पूर्वौ पूर्वभूतौ, अति राजानमतीत्य गच्छतः । चकार उभयोः सहभावार्थः । उभयोर्मन्त्रः । वस्वित्यन्तस्तस्य ।

प्रज्वलयन्त्यग्नीनाहवनीये वर्षिष्ठमादधाति ।

प्रज्वलयन्तीति बहुवचनं परिकर्म्यृत्विजामन्यतमप्राप्त्यर्थम् । वर्षिष्ठं स्थविष्ठम् । इध्ममिति शेषः । आदधातिसाहचर्यात् । प्रज्वलयन्ति ज्वालायुक्तान् सूक्ष्मैरिन्धनैः करोति (कुर्वन्ति) । सभ्यावसथ्यपक्षे तावपि प्रज्वलयन्ति । आहवनीये स्थविष्ठं लौकिकमिध्ममादधाति प्रक्षिपतीत्यर्थः । आहवनीयेऽयं विशेष इतराग्न्यपेक्षया द्रष्टव्यः । यावत्पर्यन्तं राजाऽऽसन्द्यामासन्नो भवति तावत्पर्यन्तमिदं प्रज्वलितत्वमग्नीनाम् । एतदतिक्रमे सर्वप्रायश्चित्तं होतव्यम् । तदूर्ध्वं तु कर्मानुगुण्येन । इदं चाध्वर्युकर्तृकमाग्नीध्रकर्तृकं वा ।

उपक्लृप्तोऽग्नीषोमीयः समङ्गो बन्धुमान्यथा निरूढपशुबन्धे लोहस्तूपरः श्मश्रुलः स्थूलः पीवा ॥ ९ ॥ कृष्णश्वेतो लोहितश्वेतो वा तेन कर्णगृहीतेन यजमानो राजानं प्रतीक्षते ।

अग्नीषोमदेवत्यः पशुरुपक्लृप्तो भवति । उपक्लृप्त इति भूतनिर्देशादेतद्दिवसानुष्ठानारम्भात्पूर्वमेवोपकल्पनं कर्तव्यमिति सिद्धं भवति । तत्स्वरूपमाह—समङ्ग इत्यादिना । समङ्गः संपूर्णाङ्गः । बन्धुमान्मातृपितृभ्रातृसखिमानित्यर्थः । अन्वेनं मातेत्यादिमन्त्रवर्णात् । यथा निरूढपशुबन्ध उपक्लृप्तः पशुरकूटोऽकर्णोऽकाण इत्यादिसूत्रेण लक्षणान्युक्तानि तथाऽग्नीषोमीयः पशुर्भवतीत्यर्थः । एतस्मादेव सूत्राच्छाग एवात्र नियतः । जैमिनिनाऽपि षष्ठेऽध्यायेऽष्टमे पादे पशुचोदनायामनियमोऽविशेषादिति सूत्रेणानियमं पूर्वपक्षीकृत्य च्छागो वा मन्त्रलिङ्गादिति सूत्रेण च्छाग एव नियत इति सिद्धान्तितम् । छागो वा मन्त्रलिङ्गादित्यत्र वाशब्दः पूर्वपक्षव्यावर्तकः । सूत्रद्वयार्थः स्पष्ट एव । सामान्यस्य विशेष उपसंहारः कार्य इति भावः । उक्तश्च स्मृतावयमुपसंहारः—

> सामान्यविधिरस्पष्टः संह्रियेत विशेषतः ।
> स्पष्टस्य तु विधेर्नैवमुपसंहार इष्यते ॥ इति ।

उपसंहारस्तत्रैव यत्र सामान्यवचनानुष्ठानाय विशेषापेक्षा । भवति चाग्नीषोमीयं पशुमालभेतेतिसामान्यवचनानुष्ठानाय च्छागस्य वपाया मेदस इतिमन्त्रवर्णोपस्थितविशेषापेक्षा । न तु विशेषवचनत्वमात्रेण सामान्यवचनप्राप्तोपसंहारकत्वम् । तथात्वे न ब्राह्मणं हन्यादितिसामान्यवचनस्यापि नाऽऽत्रेयं हन्यादिति विशेषवचनेनोपसंहारप्रसङ्गात् । अतः पूर्वोक्तरीत्यैवोपसंहारः । सामान्यविधिरस्पष्ट इत्यत्रास्पष्टत्वमनुष्ठानाय विशेषापेक्षत्वमेवेति ज्ञेयम् । अत्रान्यमपि विशेषमाह—लोह इत्यादिना । लोहो लोहितः । तूपरः शृङ्गरहितः । श्मश्रुलः श्मश्रुणा युक्तः । श्मश्रुण इति पाठेऽप्ययमेवार्थः । अयं पाठो ब्राह्मणानुगुणः । स्थूलो मांसलः । पीवा चिक्कणाङ्गः । कृष्णश्वेतः कृष्णश्वेतवर्णः । लोहितश्वेतो लोहितश्वेतवर्णः । अतूपरोऽप्यापस्तम्बेनानुज्ञातः—लोहस्तूपरो भवत्यतूपरः कृष्णसारङ्गो लोहितसारङ्गो वेति । तेनेत्थंभूतेन कर्णगृहीतेन कर्णे धृतेन पशुना सह राज्ञोऽभिमुखं गत्वा तमीक्षते । अग्निं तु मन्थनमारभ्य प्रहरणपर्यन्तमधृतेनैव पशुना कर्णव्यतिरिक्तप्रदेशे धृतेन वा प्रतीक्षते । यदग्नावग्निं मथित्वा प्रहरति तेनैवास्य आतिथ्यं क्रियत इति श्रुत्या मन्थनप्रभृतिप्रहरणान्तस्य कर्मण आतिथ्यरूपत्वस्योक्तत्वेन तदवसर एव प्रतीक्षणस्य युक्तत्वात् । अग्नीषोमदेवत्यस्य पशोरत्रोपकल्पनाद्राजातिथ्यार्थत्वमिवाग्न्यातिथ्यार्थत्वमप्यवश्यं कल्पयितव्यमेव । आध्वर्यवे याजमानविधानमध्वर्युसांनिध्यार्थम् ।

औदुम्बर्यासन्द्यरत्निमात्रशीर्षण्यानूच्या नाभि-
दघ्नपादा मौञ्जविवाना तामध्वर्यव उद्गृह्णन्ति।

औदुम्बरी, उदुम्बरवृक्षनिर्मिता। आसन्दी मञ्चविशेषः। तल्लक्षणमाह—अरत्निमात्रशीर्षण्यानूच्या शीर्षण्ये तिरश्चे(श्चीने)फलके अनूच्ये प्राच्ये। एतानि फलकानि अरत्निमात्राणि यस्याः साऽरत्निमात्रशीर्षण्यानूच्या, नाभिदघ्ना नाभिमात्राः पादा यस्याः सा, मौञ्जैस्तृणैर्विवानं यस्याः सा मौञ्जविवाना। मौञ्जीभी रज्जुभिः स्यूतेत्यर्थः। तामेवंभूतामासन्दीम्। अध्वर्यवोऽध्वर्युप्रतिप्रस्थातृनेष्टृन्नेतार एत उद्गृह्णन्ति। तच्छब्द उपकल्पनार्थः। एतच्चैतद्दिवसानुष्ठानारम्भात्पूर्वमेव कर्तव्यम्। अध्वर्युः प्रतिप्रस्थाता नेष्टोन्नेतेत्यध्वर्यव इति याजमानसूत्रात्प्रतिप्रस्थात्रादीनामप्यध्वर्युत्वम्। अध्वर्युव्यतिरिक्तास्त्रय उद्गृह्णन्तीति केचित्।

अग्रेण प्राग्वंशं वारुणमसीति शकटमाक्खिदत्युदग्गीषमवस्थाप्य।

अग्रेण प्राग्वंशं प्राग्वंशस्यादूरे। आक्खेदनं किंचिदुद्यमनम्।

वरुणस्त्वोत्तभ्नात्वित्युपस्तभ्नोति।

गतार्थम्। वरुणस्य स्कम्भनमसीत्यनेन विकल्पतेऽयं मन्त्रः।

दक्षिणमनड्वाहं विमुञ्चति।

सामान्यप्रतिज्ञेयम्।

वारुणमसीति योक्त्रं परिकर्षति।

योक्त्रं परिकर्षति विसर्जनार्थम्।

वरुणस्य स्कम्भसर्जनिरसीति शम्यां प्रवृहति।

प्रवृहणमुत्पाटनम्। वरुणस्य स्कम्भसर्जनमसीत्यनेन विकल्पः।

विचृत्तो वरुणस्य पाश इति योक्त्रपाशं विचृन्तति।

विचर्तनं शिथिलीकरणम्।

उन्मुक्तो वरुणस्य पाश इत्यभिधानीमुन्मुञ्चति।

अभिधानी विषाणबन्धनरज्जुः।

एवमुत्तरमनड्वाहं विमुञ्चति।

एवं दक्षिणानडुन्मोचनकल्पेनेत्यर्थः। अत्र लाट्यायनद्राह्यायणौ विशेषमाहतुः—दक्षिणमनड्वाहं सुब्रह्मण्याय दद्यादुभाविति शाट्यायनकं विज्ञायते कर्मसंयोगादिति। सामर्थ्याद्यजमानो दानकर्ता। उभावप्यनड्वाहौ देयाविति शाट्यायनकं ब्राह्मणं विज्ञायते कर्मसंयोगात्। उभाभ्यां हि कर्म कृतम्। हेतूपादानं क्रियते कर्मसंयोगादिति। यस्य येन कर्मसंयोगः स तद्द्रव्यं लभत इत्यर्थः।

उत्तरानडुन्मोचनावसरमाह—

अविमुच्योत्तरमातिथ्यायास्तन्त्रं प्रक्रमयति ।

विमुक्तोऽन्योऽनड्वान्भवत्यविमुक्तोऽन्योऽथाऽऽतिथ्यं गृह्णातीति स्वशाखीयः कल्पः । प्रदर्श्यतेऽनेन । आतिथ्येति कर्मनाम । किमत्र प्रवृत्तिनिमित्तमिति चेत् । अग्नेरातिथ्यमसि सोमस्याऽऽतिथ्यमसि अतिथेरातिथ्यमसीति निर्वापमन्त्रेषु अग्न्यादिभ्यो देवताभ्य आतिथ्यत्वेन कीर्तनमेवेति द्रष्टव्यम् । आतिथ्यप्रयोजना वेष्टिरातिथ्या तस्यास्तन्त्रमङ्गसमुदायस्तं प्रक्रमयति आरभत इत्यर्थः । प्रक्रमयतीत्यत्र स्वार्थे णिच् । तत्र यावत्क्रियते तद्व्याख्यास्याम इत्यस्यात्रानुक्तत्वात्सर्वं प्रकृतिवद्भवत्येव ।

उभौ वा विमुच्य ।

उभौ विमुच्य वाऽऽतिथ्यायास्तन्त्रं प्रक्रमयतीत्यन्वयः। अयं शाखान्तरीयः कल्पः । उत्तरमविमुच्य तमपि विमुच्य वाऽऽतिथ्यायास्तन्त्रं प्रक्रमयतीतिसूत्रद्वयपिण्डितोऽर्थः।

अग्नीनन्वाधायेध्माबर्हिराहरति ।

पौर्णमासतन्त्रनैयत्यख्यापनार्थोऽनुवादः । तेन नात्र कालतस्तन्त्रं भवति ।

सप्तदश सामिधेन्यः ।

स्पष्टम् ।

इक्षुशलाके विधृती ।

इक्षुशलाके इक्षुत्वगात्मिके । इक्षुवत्रात्मिके इति केचित् । काशमूलके इति मीमांसकाः । वाक्यशेषस्यात्राभावात्काशमूलपरत्वे प्रमाणाभावेन लौकिक एवार्थो ग्राह्य इति पूर्वमताशयः । आश्ववालस्य काशपरत्वे वाक्यशेषो यथा स्पष्टोऽस्ति तथैक्षवीशब्दस्य काशमूलपरत्वे नास्ति तथाऽपि अन्वेषणीय इति द्वितीयमताशयः । अत्र पाठेनेदं ज्ञायते—एतयोराहरणादयो बर्हिर्धर्मा बर्हिर्धारणवद्रुपसदाद्यर्थं धारणं बर्हिषः स्तीर्णत्वपक्षे विधृत्योरपि सादितत्वं च भवतीति ।

कार्ष्मर्यमयान्परिधीनिध्म उपसंनह्यत्याश्ववालं प्रस्तरं बर्हिषि ।

इध्माबर्हिराहरतीत्युक्तं तत्रेध्मे कार्ष्मर्यमयाञ्श्रीपर्णीवृक्षनिर्मितान्परिधीनुपसंनह्यति । भूतभाव्युपयोगं हि द्रव्यं संस्कारमर्हतीतिन्यायेन भाव्युपयोगिनां परिधीनामपि संस्कारार्थमिध्मे संभरणं मन्त्रेण कृत्वोपसंनहनं कार्यम् । अनियतवृक्षत्वं परिधीनां वारयितुं कार्ष्मर्यमयानिति । उपशब्द इध्मसमिधामुपर्येव संनहनमत्रेति नियमं द्योतयितुम् । बर्हिषि आश्ववालं काशमयं प्रस्तरम् । आश्ववालशब्दोऽश्वस्य वालाः केशास्तन्मयः प्रस्तर इति लोकप्रसिद्धिः । यज्ञो वै देवेभ्योऽश्वो भूत्वाऽपाक्रामत्सोऽपः प्राविशत् ।

स वालधौ गृहीतस्तान्वालान्मुक्त्वा विवेश ह ।
ते वालाः काशतां प्राप्ताः कार्योऽतः प्रस्तरस्तु तैः ॥

इति वाक्यशेषात्तु काशास्तन्मयस्तत्र लोकप्रसिद्ध्यपेक्षया वाक्यशेषबोधितोऽर्थ एव गृह्यते । तथा च काशानामेव ग्रहणं नत्वश्वकेशानाम् । तथाच प्रथमाध्याये चतुर्थपादे संदिग्धेषु वाक्यशेषादिति सूत्रेणामुमर्थमाह जैमिनिः । सूत्रार्थस्तु संदिग्ध-विधावर्थवादरूपाद्वाक्यशेषात्तद्विषयकल्पनेति । उत्तरसूत्रगतकल्पनापदानुषङ्गेणान्वयो बोध्यः । यद्यपि विधावपि सामान्यरूपेण निश्चयान्न मुख्यः संदेहस्तथाऽपि घृततैलवसा-नामन्यतममञ्जनसाधनमित्यव्यवस्थितार्थप्रतीतिमादाय गौणसंदेहपरोऽयं शब्द इति व्याख्यातं व्याख्यातृभिः । ऐक्षवीशब्दो याज्ञिकमत इक्षुपत्रत्वगन्यतरपरः । मीमांसकमते काशमूलपरः । तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात्, शास्त्रस्था वा तन्निमित्त-त्वादिति न्यायोऽप्यत्र योजयितुं शक्यः । आश्ववालं प्रस्तरमित्येतदनन्तरमुपसंनह्यतीत्य-नुषज्यते । विधृत्योराहरणमाश्ववालप्रस्तरेण सहैव । प्रजापतेर्वा एतानि पक्ष्माणि यदश्व-वाला ऐक्षवी तिरश्ची यदाश्ववालः प्रस्तरो भवत्यैक्षवी तिरश्ची प्रजापतेरेव तच्चक्षुः संभरतीति श्रुत्योभयोरेकरूपत्वप्रतिपादनात् । पूर्वेद्युरिध्माबर्हिः करोतीतिवाक्योक्तक्र-माभिप्रायेण विपरीतोक्तिः । अनुष्ठानक्रमस्तु प्रकृतिवदेव न तु चोदकप्राप्तक्रमबाधः । अत्र कार्ष्मर्यमयत्वरूपपरिधिमात्रविषयकगुणमात्रस्य प्रत्याम्नानात् । तेन खादिरः पालाश एव वेध्मः । द्वाविंशतिदारुरेव च सः । अनूयाजसमिदभावात् । बर्हिस्तु दर्भमयमेव । आश्ववालत्वस्य प्रस्तरमात्र एव विधानात् । यदि समानदेशे दर्भाः काशाश्च सन्ति तदैकमेवाभिमर्शनान्तं कर्म । यदि नानादेशे तदोर्वन्तरि-क्षमित्यादीदं देवानामित्यन्तमावर्तते । आलवाभिमर्शनस्याऽऽवृत्तिर्देशभेदात् । प्रस्त-रस्यापि बर्हिःशब्दाभिधेयत्वान्न काशेष्वस्य निवृत्तिः । आत्माभिमर्शनं तु सकृदे-वान्ते । शुल्बं तु दर्भाणामेव क्रियते ।

**निर्वपणकाले वैष्णवं नवकपालं पत्न्या हस्तेन निर्वपति ।**

यतोऽस्मिन्निर्वापे बहवो विशेषा वक्ष्यमाणा अतः सावधानतार्थं निर्वपणकाल इति वचनम् । निर्वपणकाले निर्वपणस्थाने । कालशब्दस्य स्थानपरत्वं तु बोधानीये दृष्टं स उपरवाणां काल इति । निर्वपणकाल इत्यतः प्राक्परिगृहीत इति योज्यम् । पूर्ण-मासप्रथमप्रयोगे निर्वपणस्थानं यत्परिगृहीतं तत्रेत्यर्थः । सिद्धे सत्यारम्भो नियमार्थः । तेन निर्वपणकाल एवेति सावधारणं वाक्यं भवति । तथाचायमर्थो भवति—पूर्णमास-प्रथमप्रयोगपरिगृहीतनिर्वपणस्थान एवायं निर्वाप इति । एतेनान्यासु सर्वासु विकृ-तिष्वनियम इति विशिष्टार्थज्ञापनार्थं वा । न च वेदकरणादिकर्मसूचनार्थं तदिति वाच्यम् । तस्य प्रकृतित एव सिद्धेः । प्रायणीयायां तत्पूर्वत्वाद्वचनम् । अग्निहोत्रह-वणीप्रत्याम्नायो हस्तः । अस्मिन्पक्षेऽग्निहोत्रहवणीधर्मा हस्ते कार्याः । पात्रप्रयोगका-

लेऽग्निहोत्रहवण्या सह हस्तस्य प्रयोगः । स च दक्षिणः । एकाङ्गवचने दक्षिणं प्रतीयादनादेश इत्याश्वलायनवचनात् । हस्तविषये त्वनिर्दिष्टस्थलेऽपि दक्षिणस्यैव ग्रहणमित्येतादृशार्थस्य दर्शपूर्णमासयाजुषहौत्रसूत्रे होतुरंसान्वारम्भविधायके दक्षिणग्रहणेन ज्ञापितत्वाच्च । संविशन्तामिति हस्तस्य संमर्शनम् । दक्षाय मानुष्याति । नास्ति प्रत्युष्टम् । दक्षिणहस्ते वाममुष्टयोद्वपनम् । यावन्त्यग्निहोत्रहवणीकार्याणि तानि हस्तेनैव कर्तव्यानि । इदं चाग्निहोत्रहवणीप्रत्याम्नायपक्षे ।

पत्न्या वा हस्तात् ।

शकटपात्र्योः प्रत्याम्नायोऽयम् । अस्मिन्पक्षे हस्त एव सर्वमन्त्राणां जपो भवति ।

अन्वारब्धायां वा स्रुचा ।

अन्वारब्धायां पत्न्यां सत्यां स्रुचैव वा निर्वापः । अस्मिन्पक्षेऽग्निहोत्रहवण्यामेव प्रोक्षणीसंस्कारादि । आद्यौ पक्षौ शाखान्तरीयौ । अन्त्यः स्वशाखागतः ।

अग्नेरातिथ्यमसीत्येतैः पञ्चभिस्त्रिषु सावित्रं जुष्टं चानुषजति ।

विष्णवे त्वेत्यन्ताः पञ्च मन्त्रास्तैः पञ्चभिः । निर्वपतीति शेषः । पञ्चकृत्वो गृह्णातीति श्रुतावप्ययमर्थः प्रतिपादितोऽस्ति । तत्र विशेषः । त्रिषूपस्थितत्वान्नोत्तमयोरित्येक इत्यापस्तम्बसूत्राच्चाऽऽद्येषु । सावित्रो देवस्य त्वेत्यादिर्हस्ताभ्यामित्यन्तो भागस्तं निर्वापमन्त्रेभ्यः पूर्वं जुष्टशब्दं चैतेभ्य उत्तरमनुषजतीत्यर्थः । त्रिष्विति वचनादन्त्ययोर्मन्त्रयोः सावित्रजुष्टयोरनुषङ्गो नास्तीति गम्यते । यथा देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेरातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामि । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ सोमस्याऽऽतिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामि । देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामतिथेरातिथ्यमसि विष्णवे त्वा जुष्टं निर्वपामि । अग्नये त्वा रायस्पोषदाव्ने विष्णवे त्वा निर्वपामि । श्येनाय त्वा सोमभृते विष्णवे त्वा निर्वपामीत्येवं प्रयोगः । एतैरिति वचनं प्रतिमन्त्रं निर्वापसिद्ध्यर्थम् । पञ्चभिरिति वचनं पञ्चैते मन्त्रा भवन्ति तैः पञ्चभिः पञ्च निर्वापा भवन्तीत्येतादृशार्थबोधनार्थम् । चकारः सावित्राख्यः कश्चन भागो जुष्टशब्दश्चेत्येतद्द्वयानुषङ्गलाभाय । न चैवं जुष्टमित्यस्य जुष्टं निर्वपामीत्येतावान्य उत्तरभागस्तत्परत्वमेव न तु जुष्टशब्दमात्रपरत्वम् । तथाच निर्वपामीत्येतस्यापि त्रिष्वेव प्रयोगो नावशिष्टयोर्द्वयोरिति वाच्यम् । जुष्टशब्दस्योत्तरभागपरत्वेऽग्नेरातिथ्यमसीत्येतैः पञ्चभिस्त्रिषु प्राकृतावनुषजतीति लाघवेनैव वक्तव्ये गुरुभूतसावित्रजुष्टशब्दोपादानस्य निरर्थकत्वापत्तेः । अतो जुष्टशब्दस्य भागपरत्वं न किंतु शब्दपरत्वमेव वक्तव्यम् । एतेनानुक्तस्य निर्वपामीत्येतस्य समुच्चयार्थश्चकार इति

शङ्का निरस्ता। नच त्रिषु मन्त्रेषु जुष्टशब्दानुषङ्गवत्सावित्रशब्दस्यैवानुषङ्गोऽस्त्विति वाच्यम्। तथा सति सावित्रं जुष्टमित्येतादृश्या आनुपूर्व्या अनुषक्तव्यतयैकपदार्थत्वेन पदार्थान्तरस्य चाभावेन चकारवैयर्थ्यापत्तेः। न चैवं मन्त्रादौ सावित्रशब्दानुषङ्गो मन्त्रान्ते जुष्टशब्दानुषङ्गस्तथा च समुच्चेतव्यपदार्थान्तरं लब्धं तथा च न वैयर्थ्यमिति वाच्यम्। सावित्रशब्दस्य शब्दमात्रपरताया याज्ञिकप्रसिद्धकर्मणि अत्यन्तानुपयोगात्। एवं च परस्परसमुच्चयार्थ एव चकारः। तथाच निर्वपामीति सर्वमन्त्रेष्वस्त्येव। अथवा जुष्टशब्दस्य भागपरत्वमेवाङ्गीकर्तव्यम्। अग्नेरातिथ्यमसीत्येतैः प्रतिमन्त्रं देवतादेशनस्य प्रत्याम्नायो भवति। पञ्चसु सावित्रं जुष्टं चानुषजति। नोत्तमयोरित्येक इत्यापस्तम्बसूत्रेऽपि स्वरसतो जुष्टशब्दस्य भागपरत्वमेव प्रतीयते। यच्छन्तामित्यप्यस्त्येव सर्वत्र। सजातीयमेव सजातीयस्थाने निविशत इति न्यायेन प्राकृतानां त्रयाणां समन्त्रकाणां निर्वापाणां स्थान एते समन्त्रकाः पञ्च निर्वापा भवन्ति। प्राकृतं तूष्णीं तु भिन्नमेव भवति तच्च षष्ठं भवति। अन्वावापः सप्तम इदं देवानामित्यादि।

**विष्णुमेवोत्तरेषु निगमेषूपलक्षयेत्।**

इत उत्तरेषु निगम्यते देवतापदं येषु ते निगमा मन्त्रा मन्त्रविशेषास्तेषु विष्णुमेवोपलक्षयेद्देवतात्वेन केवलं विष्णुमेव प्रयोजयेत्। एवकारोऽग्नये रायस्पोषदाव्ने श्येनाय सोमभृत इतिचतुर्थ्यन्तानां शब्दानां मन्त्रेषु प्रयोगो मा भूदित्येतदर्थम्। वैष्णवं नवकपालं निर्वपतीत्येतेन सूत्रेण त्वग्न्यादिदेवतात्वमात्रं निरस्यते।

**यत्प्रागुद्वपनात्तत्कृत्वोत्तरमनड्वाहं विमुञ्चति तेनैव कल्पेन यदि पुरस्तादविमुक्तो भवति।**

वर्षवृद्धाः स्थेत्यन्तं कृत्वोत्तरमनड्वाहं विमुञ्चति तेनैव कल्पेन पूर्वातिदिष्टेनैव कल्पेन तूष्णीमुत्तरमनड्वाहं विमुञ्चति। यदि पुरस्तादविमुक्तो भवतीति सूत्रान्तरोक्तकल्पव्यावृत्त्यर्थम्। अन्यत्स्पष्टम्।

**वारुणमसीति राज्ञो वासोऽपादत्ते।**

पर्यानहनीयमिति शेषः। छित्समहीति मन्त्रान्तः।

**वरुणोऽसि धृतव्रत इति राजानम् ॥ १० ॥**

अपादत्त इत्यनुवर्तते। एतावानेव मन्त्रः।

**अच्छिन्नपत्रः प्रजा उपावरोहोशन्नुशतीः स्योनः स्योना इत्युपावहरति।**

राजानं शकटद्वारेण बहिरानयतीत्यर्थः।

अत्राऽऽसन्द्या उद्ग्रहणमेके समामनन्ति ।

तामध्वर्यव उद्गृह्णन्तीति यदासन्द्या उद्ग्रहणं पूर्वत्रोक्तं तत्तत्र न कर्तव्यं किंत्वत्रा- स्मिन्काले कर्तव्यमित्येक आचार्या वदन्तीत्यर्थः ।

उर्वन्तरिक्षमिति गच्छति ।

प्राग्वंशमिति शेषः । स्वशाखायां दृष्टत्वादविहितेव मन्त्रान्तः ।

या ते धामानीति सौम्यर्चा राजानं
पूर्वेण द्वारेण प्राग्वंशं प्रपादयति ।

सोमो देवता यस्याः सा सौमी तया सौम्या । सोमाट्ट्यण्टित्वान्ङीप् । सौमीत्यृग्वि- शेषणम् । तृतीयान्तमिदं सौम्येति । * असमासे सौम्यृचेति स्यादिति ज्ञेयम् । सौम्येति ज्ञानार्थम् । ज्ञानाभावे दक्षिणाग्नौ भुव इति यजुर्भ्रेषप्रायश्चित्तम् । ऋचेतिव- चनप्रयोजनमतिच्छन्दस्सर्चेत्यत्र यथोक्तं तद्वदत्रापि ज्ञेयम् । प्रपादयति प्रवेशयति । प्रवेशनस्य द्वारं विना कदाचिदप्यसंभवेनार्थादेव विशेष्यस्य द्वारस्य लाभे द्वारग्रहणं यत्कृतं तज्ज्ञापयति अन्योऽपि पदार्थः प्रवेशने संभावितोऽस्ति सभासदां कर्मेक्षणार्थ- मावश्यकत्वात् । वातायनरूपः सः । अथच द्वित्र्यादिसभासदीक्षणानुगुण्येन महान् । तत्र प्रतिदिशं वातायनद्वयम् । तत्र वातायनस्य महत्त्वेन तेनापि कदाचित्प्रवेशसंभवा- त्तद्वारणार्थं द्वारग्रहणम् । एतेनाष्टौ वातायनान्यपि तथा कर्तव्यानि । यथैकैकस्मिन्वा- तायने द्वौ त्रयो वा चतु(त्वा)रो वोपविष्टाः सन्तः कर्मेक्षितुं शक्नुयुरिति । तथाचाध- स्तनानि द्वारसाम्येनाष्टौ वातायनानि चत्वारि द्वाराणि अतीरोकशब्दवाच्यानि लघुभू- तानि गवाक्षाणि पश्चोर्ध्वतनान्येतद्वर्जं परिश्रयणं कर्तव्यमिति । एवमग्रेऽपि यत्र यत्र द्वारशब्दस्तत्रेति ज्ञेयम् । दुर्यानिति मन्त्रान्तः ।

उर्वन्तरिक्षं वीहीत्यपरेणाऽऽहवनीयं दक्षिणाऽतिहरति ।

दक्षिणा दक्षिणतः, अति अतिक्रम्यैव हरति नतु अग्रेणाऽऽहवनीयं स्वयं गच्छन्न- परेणाऽऽहवनीयं राजानं हरतीति ।

वरुणस्यर्तसदानिरसीति दक्षिणे-
नाऽऽहवनीयमासन्दीं प्रतिष्ठापयति ।

यथेतं प्रत्येत्याग्रेणाऽऽहवनीयमासन्दीं नीत्वा वरुणस्यर्तसदनिरसीति मन्त्रेणाऽऽ- हवनीयसमीपे दक्षिणत आसन्दीं स्थापयति । अन्येनाऽऽसन्द्यानयनेऽपि यथेतं प्रत्येत्यै- वाऽऽसन्दी प्रतिष्ठापनीया । प्रतीत्युपसर्गाद्यथा न चलति तथा स्थापयति ।

---

* अत्र समासे सौम्यृचयेत्यपेक्षितम् ।

---

१ ख. ग. °त्येवं म° ।

अदित्याः सदोऽसीति तस्यां कृष्णा-
जिनं प्राचीनग्रीवमुत्तरलोमाऽऽस्तृणाति ।

तस्यां प्रतिष्ठापितायामासन्द्याम् ।

प्रत्तꣳ राजानमदित्याः सद आसीदेति तस्मिन्नासादयति ।

प्रत्तवचनादन्यस्मै प्रदानं सिद्धं तच्चाऽऽसन्दीस्थापनात्पूर्वं तेन विना तस्य कर्तुमशक्यत्वात् । तस्मिन्नास्तृते कृष्णाजिने ।

वरुणस्यर्तसदनमासीदेति वा ।

अनेन मन्त्रेण वा कृष्णाजिन आसादनम् ।

वनेषु व्यन्तरिक्षं ततानेति वाससा परिश्रयति ।

वाससा महता प्रागारभ्य परिश्रयति । प्रादक्षिण्यं परिभाषासिद्धम् ।

वरुणोऽसीति राजानमभिमन्त्रयते वरुणाय त्वेति वा ।

स्पष्टम् ।

एवा वन्दस्व वरुणं बृहन्तं नमस्या धीरममृतस्य
गोपाम् । स नः शर्म त्रिवरूथं वि यꣳसत्पातं नो द्यावा-
पृथिवी उपस्थ इति वारुण्यर्चा राजानं परिचरति ।

वारुण्येतिवचनमत्र क्रीत उपनद्धः सोम एव वरुणशब्दवाच्यो नतु वरुणदेवतापर इतिश्रुतिसिद्धोऽर्थ इति प्रदर्शयितुम् । सा च श्रुतिर्वारुणो वै क्रीतः सोम उपनद्ध इति । अस्यां श्रुतौ वारुण इत्ययं तद्धितः स्वार्थे द्रष्टव्यः । वरुणो वा एष यजमानमभ्यैति यत्क्रीतः सोम उपनद्ध इतिश्रुत्यन्तरानुरोधात् । वारुणीत्यत्र तस्येदमिति सूत्रादण् तदन्तत्वान्ङीप् । ऋचेतिवचनप्रयोजनमतिच्छन्दसर्चेत्यत्र यथोक्तं तद्वदत्रापि ज्ञेयम् । परिचरति गन्धपुष्पादिभिरुपचारैः पूजयति नमस्करोति च ।

यत्र क्व चाऽऽसीदेदेतयैवाऽऽसीदेत् ।

यत्र क्व च वैधे यादृच्छिके वा राजानं प्रति गमन एतया वारुण्यर्चैव गच्छेत् । उपविशति चेद्राजसमीपे तदेतयैव तत्समीपमुपविशेच्च । तथा सूत्रान्तरे–वारुण्यर्चा राजानं पूजयेदेतयैव राजानमभिसर्पेदुपविशेच्चेति । अत्र यजमानो राजानं मधुपर्केण पूजयति । गोमधुपर्कार्हो वेदाध्याय्याचार्य ऋत्विक् श्वशुरो राजा वा धर्मयुक्त इति धर्मसूत्रे राज्ञो मधुपर्कपूजाया विहितत्वात्सोमस्यापि राजत्वात् । अथास्मै मधुपर्कं च प्राहुरिति बौधायनसूत्राच्च मधुपर्कपूजा । तत्र प्रतिवचनानां लोपः । अध्वर्युर्वा तानि वदेत् । तामध्वर्युर्विशास्तीति बौधायनसूत्रेऽध्वर्युकर्तृकताया विशसने दर्शनात् । एतस्य कलौ निषिद्धत्वादुत्सर्ग एवेदानीम् ।

अग्निꣳ राजानं चान्तरेण मा संचारिष्टेति संप्रेष्यति ।

संप्रैषवत्सर्वे कुर्वन्ति । अग्निमित्येकवचनादेक एवाग्निः । स चाऽऽहवनीय एव संनिहितत्वान्मुख्यत्वान्मा राजानं चाऽऽहवनीयं चान्तरेण कश्चन संचारीदिति बौधायनोक्तेश्च । एतेन सोमदक्षिणाग्न्योरन्तरा गमने दोषो नास्तीति अर्थात्सूचितं भवति । अयं प्रैष आत्मार्थोऽन्यार्थश्च । तेनाध्वर्युः सर्व ऋत्विजश्चममाध्वर्यवः परिकर्मिणोऽन्ये च ते सर्वे प्रैषोक्तनिषेधपालकाः । परप्रत्यायनार्थत्वादुच्चैस्त्वमैकश्रुत्यं च । राजाऽन्यो वा क्षत्रियादिः सोमसमीपमागच्छति तेनाप्ययं मन्त्रो वक्तव्य एव । तत्राऽऽयुधादि धृत्वा नैव सोमसमीपे गन्तव्यम् । अमुमर्थं बौधायनः प्रैषरूपेणैवाऽऽह–मा राजानं चाऽऽहवनीयं चान्तरेण कश्चन संचारीन्मैनꣳ सायुधो मा सदण्डो मा सच्छत्रो मा सोष्णीषो मा साधस्पाद्योऽनुप्रपादीदिति । अत्र निषेधार्थका माङ् एनं कश्चन यःकश्चन पुरुषो राजादिः । एनं राजानम् । आयुधं शस्त्रमस्त्रं च । अनयोर्भेदो धनुर्वेदे—

धृत्वा प्रहरणं शस्त्रं मुक्त्वा ह्यस्त्रमितीरितम् । इति ।

अधस्पाद्यावुपानहौ ।

उद्द्रपनप्रभृतीनि कर्माणि प्रतिपद्यते ।

यथेतं प्रत्येत्य प्रति त्वा वर्षवृद्धं वेत्त्वित्यादीनि कर्माणि प्रतिपद्यते वर्षवृद्धमसीत्यादीनि वा । पुरस्ताच्छूर्पोपोहनपुरोडाशयाभिमर्शनयोरुद्द्रपनाङ्गत्वात् ।

गार्हपत्ये नव कपालान्युपदधाति ।

पक्षे प्राप्तस्याऽऽहवनीयस्य बाधनार्थमिदम् । तेनाऽऽहवनीयाधिश्रयणपक्षाङ्गीकर्तुरपि गार्हपत्य एवाधिश्रयणमत्रेति द्रष्टव्यम् । आतिथ्येष्टिहविरधिश्रयणकाल आतिथ्यामदन्तीरप्यधिश्रयेत् । अग्नीन्मदन्त्यापा३ इति वक्ष्यमाणप्रश्नात् । श्रपयत्येतमातिथ्यं वैष्णवं नवकपालं तेन सह मदन्तीरधिश्रयतीतिबौधायनोक्तेश्च । मदन्तीशब्दोऽपां तप्ततामाचष्टे । तेन तापार्थमिदमधिश्रयणम् । आतिथ्येन सहाधिश्रयणविधानाद्गार्हपत्य एवाधिश्रयणम् । लौकिक इति केचित् । केवलानामपामधिश्रयणासंभवात्पात्रेण सहाधिश्रयणम् । तच्च ताम्रमयं रीतिजं वा । मृन्मयं वा । एवमन्यत्रापि । गव्यक्षीरस्य दोहपाकयोस्ताम्रं नैव भवति । स्मृतौ ताम्रे गव्यस्थापनस्य निषेधात् ।

यत्तु-होमकार्ये तथा दोहे पाके च परिवेषणे ।
पञ्चगव्याशने चैव ताम्रे गव्यं न दुष्यति ।

इति स्मृतिवचनं तल्लौकिकदोहविषय एव संकटमात्राभ्यनुज्ञाविषयम् । एवं पाकपरिवेषणयोरपि । होमोऽत्र पञ्चगव्यस्यैव । अथ वाऽत्रापि संकटविषयत्वमेव । पञ्चगव्याशन इत्यनेन पञ्चगव्यग्रहणसाधनीभूतपात्रविषये प्रतिप्रसवः क्रियते ।

---

१ क. °यन्त्येत° । २ क. °श्रपय° ।

**चतुर्गृहीतान्याज्यानि गृह्णाति ।**

पञ्चावत्तिनोऽपि चतुर्गृहीतनियमार्थं वचनम् । अनूयाजार्थग्रहणनिवृत्तेस्त्वर्थादेव सिद्धेर्न तदर्थता ।

**चतुर्होत्राऽऽतिथ्यमासादयति ।**

आतिथ्यं हविः । अहोमार्थत्वादग्रहोऽस्वाहाकारोऽयम् ।

**संभारयजूꣳषि व्याख्याय निर्मन्थ्यस्याऽऽवृता निर्मन्थ्येन प्रचरति ।**

अग्निर्यजुर्भिरित्यादीनि अहꣳ श्रद्धयेत्यन्तानि संभारयजूंषि तानि व्याख्याय वाक्यशः पठित्वाऽग्नेर्जनित्रमसीत्यादिना निर्मन्थ्यस्याऽऽवृता प्रकारेण पशुबन्ध उक्तेनाग्नावग्निरिति प्रहरणान्तेन निर्मन्थ्येन प्रचरति ।

**वेदं निधाय सामिधेनीभ्यः संप्रेष्यति ।**

वेद्यन्तपरिस्तरणनिवृत्त्यर्थोऽनुवादः । होतृषदनकल्पनं तु होत्रैव स्वार्थं कल्पनीयम् । अध्वर्युणा वेदमहꣳ सप्तदशेन वज्रेणेत्येतस्माद्धोतृर्जपात्पूर्वं कल्पयितव्यं, परं त्वनुवादस्वरसादत्र नैव कल्पनीयम् । आश्वलायनीयहौत्रे त्विदमहꣳ सप्तदशेन वज्रेणेत्येतस्य जपस्याभावाद्वेद्युत्तरश्रोणिसमीपदेशे होतर्यागते कल्पनीयम् । एतच्च होतरेहीतिशाखान्तरोक्तप्रैषाङ्गीकारपक्षे सार्थकमन्यथा नेति द्रष्टव्यम् ।

**सर्वमिध्ममादधाति सर्वमौपभृतꣳ समानयते ।**

अनूयाजाभावात्तदर्थसमित्तदर्थचतुर्गृहीताज्ययोरप्यभाव इति भावः । इडान्तत्वादेवानूयाजाभावे सिद्धेऽनूयाजाभावबोधकलिङ्गप्रदर्शकवचनं शाखान्तरोक्तोऽनूयाजनिषेधः स्तुत्यर्थोऽनुवाद एव नतु विधिपर इतिजैमिनीयन्यायप्रदर्शनार्थम् । स च न्यायोऽनन्तरमेव प्रदर्शयिष्यते ।

**आज्यभागाभ्यां प्रचर्य विष्णुꣳ हविषा यजति ।**

आज्यभागवचनमाज्यभागविशेषसंप्रत्ययार्थम् । स च विशेष आश्वलायनेनोक्तः— अतिथिमन्तौ समिधाऽग्निं दुवस्यताऽऽप्यायस्व समेतु त इति । याजुषहौत्रपक्षेऽप्येतावेव । तत्राऽऽप्यायस्वेत्यृचः पाठस्तु याजुषधर्मेणर्ग्धर्मेण वा । विष्णुं यजतीत्येतावत्येव वक्तव्ये हविर्ग्रहणमाज्यभागाभ्यां प्रचर्येतिपूर्वभागाद्वचनविपरिणामेन विभक्तिविपरिणामेन वाऽऽज्यभागशब्दस्यानुवृत्तिः स्यात्, तस्यां च सत्यां विष्णुमाज्यभागं यजतीत्यर्थः स्यात्, तथा चाऽऽज्यभागं विष्णुमिष्ट्वा वैष्णवं नवकपालं निर्वपतीतिविधिप्राप्तो निरुप्तेन हविषाऽनन्तरं याग इति शङ्काकुलं स्यात्तन्मा भूदित्येतदर्थम् । आज्यभागविशेषं विधातुं विष्णुं यजतीत्युत्तरानुवादः ।

**ध्रुवायाः शेषं करोति ।**

दीक्षणीयावद्व्याख्येयम् । प्रयोजनं च तद्वत् ।

इडान्ताऽऽतिथ्या संतिष्ठते ।

इडयाऽन्तः समाप्तिर्यस्याः सेडान्ता । इडान्ताऽऽतिथ्या भवतीत्येतावतैव सिद्धे संतिष्ठत इति पुनः संस्थाबोधकवचनमिडान्तत्वेऽपि पूर्वोपयुक्तपदार्थप्रतिपत्तिकर्मभिरपि संस्थापनीयेत्येतदर्थम् । तेन समन्त्रमेवात्र प्रतिपत्तिकर्माणि । वेदप्रतिपत्तिरपि समन्त्रैव । प्रकरणादेवाऽऽतिथ्यालाभे पुनर्वचनमुपसदि प्रतिपत्तिकर्मणामनावश्यकत्वार्थम् । मार्जनमपीडाङ्गत्वाद्भवति । न च शाखान्तरे नानूयाजान्यजन्तीतिनिषेधानुपपत्त्या कृत्स्नत्वमपि कल्प्यते, तथा च विकल्प इडान्तत्वस्येति वाच्यम् । शंयिडान्तत्वे विकल्पः स्यात्परेषु पत्न्यनूयाजप्रतिषेधोऽनर्थकः स्यात्, नित्यानुवादो वा कर्मणः स्यादशब्दत्वादिति दशमाध्यायषष्ठपादान्तर्गतजैमिन्युक्तन्यायविरोधापत्तेः । तस्मान्निषेधोऽनुवादमात्रम् । पूर्वप्रतिज्ञातोऽयं न्यायः । प्रायणीयायां व्याख्याते एते सूत्रे । ननु प्रकृते द्वे इडे अनूयाजानां पुरस्तादेका पश्चादन्या तत्रोत्तरयैवेडया तदन्ततविधिः । एवं च शाखान्तरीयोऽनूयाजनिषेधोऽप्यर्थवान् । अन्यथाऽनुवादमात्रत्वापत्तेः । अतोऽनूयाजवर्जमुत्तरेडान्तं सर्वं कार्यमिति चेन्न । प्रयोगोपरमस्यैवेडान्तत्वे निमित्ते विधानात्पूर्वस्यामपीडायां कृतायां निमित्तस्य संजातत्वेन तत्रैवोपरमस्य युक्तत्वात् । अनूयाजप्रतिषेधस्तु नित्यानुवादत्वेनार्थवादमात्रमौचित्येनेडान्तत्वस्तुत्यर्थं न विरुध्यते । तथा च दशमाध्याये षष्ठे पादे जैमिनिः—प्रतिषेधादर्थवत्त्वाच्चोत्तरस्य परस्तात्प्रतिषेधः स्यात्, प्राप्तेर्वा पूर्वस्य वचनादतिक्रमः स्यादिति । प्रायणीयायां व्याख्याते एते सूत्रे ।

ध्रुवाशेषादापतये त्वा गृह्णामीति कꣳसे चमसे वा
तानूनप्त्रꣳ समवद्यति चतुरवत्तं पञ्चावत्तं वा ।

अत्र लौकिक एव चमसो न प्रणीतार्थचमसः । तस्येष्टयर्थत्वात् । तानूनप्त्रग्रहणस्य चाप्राकृतकार्यत्वात् । अहोमार्थत्वादयं चमसो वारणवृक्षजः । तत्स्वरूपं वक्ष्यमाणसोमचमसवत् । जुहोमीतिलिङ्गादेतस्यापि होमार्थत्वमिति यद्युच्यते तदा वैकङ्कत एवायम् । अवघ्राणस्यापि अदनरूपत्वेन तत्साधनत्वाच्चमसशब्दार्थो बाधितो न भवति । अवघ्राणस्यादनरूपत्वमवघ्रेयमेव तन्नेव प्राशितं नेवाप्राशितमिति श्रुतितो ज्ञेयम् । चमुधात्वर्थादनपर्याय एव ह्यशधातुः । तनूनप्तृदेवतासंबन्धात्तानूनप्त्रमित्याज्यसमाख्या । येनर्त्विजः सख्यमुपगच्छन्ति । व्यवस्थितविकल्पोऽयमिति केचित् । गृह्णाम्यन्ताः पञ्च मन्त्राः । एतेषां मन्त्राणां मध्य एकैकेन मन्त्रेणैकैकं समवद्यति । पञ्चावत्तपक्षे पञ्चवारं समवद्यति चतुरवत्तपक्षे चतुर्वारम् । समवदानं ग्रहणम् । यद्यप्यत्रैतैरितिवचनं नास्ति तथाऽप्युत्तरसूत्रादयमर्थो लभ्यते ।

अवशिष्टो विकल्पार्थो यदि चतुरवत्तम् ।

अवशिष्टः शक्मन्नोजिष्ठाय त्वा गृह्णामीति मन्त्रो विकल्पार्थो भवति यदि चतुरवत्तं

तानूनप्त्रं भवति तदा । पञ्चावत्तपक्ष एव विनियोग इति न किं तु चतुरवत्तपक्षेऽपि चतुर्णां मन्त्राणामन्तिमेन विकल्पितो भवतीति निकृष्टोऽर्थः ।

तदनाधृष्टमसीति सर्वर्त्विजः समवमृशन्ति ।

तत् तानूनप्त्रं सर्वे च त ऋत्विजश्च सर्वर्त्विजः । सर्व ऋत्विज इत्यसमस्तपाठो वा । समवमृशन्ति सहैवावमृशन्ति अवनताः सन्तो मृशन्ति स्पृशन्ति । सदस्यश्चेत्सोऽपि तानूनप्त्रमवमृशति सहैव । सर्वग्रहणं सर्वे स्वयमेवाभिमृशेरन्नान्योऽन्यस्य प्रातिनिध्येनेत्येवमर्थम् । ऋत्विग्ग्रहणं चमसाध्वर्युव्यावृत्त्यर्थम् । याजुषहौत्रसत्त्वे तद्रीत्यैव होत्रादयः कुर्युः । आश्वलायनहौत्रसत्त्वे तद्रीत्या याजुषरीत्या वा । अनभिशस्तेन्यमिन्यन्तो मन्त्रः । तस्माद्यः सतानूनप्त्रिणां प्रथमो द्रुह्यति स आर्तिमार्छतीति ब्राह्मणम् ।

समवमृष्टं प्रजापतौ त्वा मनसि जुहोमीति त्रिरवघ्रायान्तर्वेदि निनयति ।

समवमृष्टमिति वचनं सर्वैः समवमृष्टस्यैव तानूनप्त्रस्यावघ्राणं यदि कस्यचित्प्रतिबन्धेन समवमर्शो न जायते तदा तदीयसमवमर्शार्थं प्रज्ञातं तत्स्थापयित्वा तत्समवमर्शोत्तरमवघ्राणं कार्यम् । अग्रिमं कर्म तु कर्तव्यमेव । सर्वथा कस्यचिन्महता प्रतिबन्धेन समवमर्शो नैव जायते तदा तस्याऽऽर्त्विज्यकरण एवायोग्यत्वादन्यं वृत्वा तेन समवमर्शे कृतेऽवघ्राणं कर्तव्यम् । अतानूनप्त्रिणा यजमानेनर्त्विजा वा कर्माणि क्रियमाणे यावद्भिर्दिनैः क्रतुः समापनीयो भवति तावत्संख्येषु दिवसेषूपवासः कर्मसमाप्तौ मनो ज्योतिरित्याहुतिश्चेति कौशिकसूत्र उक्तम् । सकृन्मन्त्रेण द्विस्तूष्णीमित्येवं त्रिः प्राशनमिति केचित् । अन्ये तु न प्राश्नन्ति न जुह्वत्यथ क तानूनप्त्रं प्रतितिष्ठतीति होमप्राशने प्रस्तुत्यावघ्राणविधानाज्जुहोमीति लिङ्गाच्च त्रिर्मन्त्रेणैवावघ्राणमित्याहुः । सर्वस्यैवाऽऽज्यस्यावघ्राणम् ।

प्रतिषिद्धमेकेषाम् ।

अन्तर्वेदि निनयनं प्रतिषिद्धमेकेषामाचार्याणां मते । अन्तर्वेदिनिनयनप्रतिषेधाद्बहिर्निनयनं तु भवत्येव नतु निनयनमेवानेन प्रतिषिध्यते । नचावघ्राणस्यापि प्रतिषेधोऽस्त्विति वाच्यम् । श्रुतौ तानूनप्त्रावघ्राणस्य तानूनप्त्रप्रतिष्ठारूपत्वेनोक्ततया तस्य प्रतिषेद्धुमयोग्यत्वात्, विगीतत्वमूलकत्वेनान्तर्वेदिनिनयनस्यैव प्रतिषेध्यत्वकल्पनाया उचितत्वाच्च ।

असंचर उत्सिञ्चतीत्येकेषाम् ।

जनानां यत्र संचरो मार्गो नास्ति तत्रोत्सिञ्चतीत्येकेषामाचार्याणां मतम् । तेन पूर्वमतेऽप्यसंचर एव निनयनं परं तु अस्मिन्मत उत्सेचनं नास्तीत्येतावान्भेद इति द्रष्टव्यम् ।

---

१ ख. ग. मनसा ।

अग्नीन्मदन्त्याऽऽपा ३ इति पृच्छति ।

किमापो मदन्त्य उष्णीभूता आपः किमित्याग्नीध्रं प्रति प्रश्नः । मदन्तीशब्दोऽप्सु तप्ततामाचष्टे । मदन्त्य आपा इत्यपेक्षिते मदन्त्याऽऽपा ३ इति संधिरार्षः । प्रश्ने प्लुतिः । अत एवावगम्यते पूर्वमग्नीधाऽऽपोऽधिश्रिता इति । तत्कालस्तु प्रागेव दर्शितः । परप्रत्यायनार्थत्वादुच्चैस्त्वम् ।

मदन्ति देवीरमृता ऋतावृध इत्याग्नीध्रः प्रत्याह ।

देवीर्देव्यः स्वच्छा अमृता अमृततुल्या ऋतावृधः । ऋतं मानसिकं सत्यं तदभिवर्धयन्तीत्यृतावृधः । यत्स्पर्शोऽपि मनःशुद्धिकर एतादृश्य आपो मदन्त्यः । तप्ता इति प्रत्युत्तरवाक्यार्थः । अत्रापि पूर्ववदुच्चैस्त्वम् । अग्निमिन्ध इत्यग्नीत् । तस्य गृहमाग्नीध्रम् । अग्नीधः शरणे रणभं चेति रः । शरणं गृहं तात्स्थ्यात्सोऽप्याग्नीध्रः । ऐष्टिकपाशुकयोः सोमकर्मवद्गृहासंभवात्स्थानमात्रं लक्षणीयं तत्स्थत्वादाग्नीध्रो भवति । ऐष्टिकपाशुकयोराग्नीध्रस्थानं यत्र तिष्ठन्नाश्रावयति तत् । सौमिके तु आग्नीध्रमण्डप एव विहितोऽस्ति तदेव स्थानं तस्य । ऋत्विग्विशेषवाच्ययं शब्दः सूत्रकारैर्ऋत्विग्विशेषेऽप्याग्नीध्रशब्दप्रयोगात्तदनुरोधेनाग्नीधः शरणे रण्भं चेति सूत्र(वार्तिक)स्थचकारोऽनुक्तसमुच्चयार्थो वक्तव्यः । तेनानुक्तस्यर्त्विग्विशेषरूपार्थस्य संग्रहः सिद्धो भवति ।

ताभिराद्रवेति संप्रेष्यति ।

ताभिरद्भिः सह, आ समीपे द्रव, एहीत्यर्थः संप्रैषस्य । अत्रापि पूर्ववदुच्चैस्त्वं, प्रश्नवलात्सांनिध्यसिद्धेर्दूराद्दाह्वानाभावान्न प्लुतिः । प्रश्नस्तु सांनिध्य एव संभवति नासांनिध्य इति ज्ञेयम् ।

मदन्तीभिः पाणीन्प्रक्षालयन्ते; ब्रह्मा राजानं विस्रꣳसयति ।

मदन्तीभिस्तप्ताभिरद्भिः । बहुवचनात्सर्वे तानूनप्त्रिणः । ऋत्विगपेक्षया पाणीनिति बहुवचनम् । सर्वैः पाणिप्रक्षालने कृतेऽनन्तरं ब्रह्मा राजानं विस्रंसयति । बृंहणात्कर्मसु सदसद्विवेचनाद्ब्रह्मा । ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हतीति निरुक्तात् । सर्वविस्त्वं सदसद्विवेचकत्वं, यः सर्ववित्स ब्रह्मा भवतीति निरुक्तार्थः । सर्वविदित्यस्य विवरणं सर्वं वेदितुमर्हतीत्यनेन क्रियते । विस्रंसनं बन्धनाद्विमोचनम् । ब्रह्मत्वविधेरवसरख्यापनार्थमत्र वचनम् ।

अꣳशुरꣳशुरिति तꣳ सर्वे सहिरण्यैः पाणिभिराप्याययन्ति ।

सर्वे तानूनप्त्रिणः । आप्यायनलिङ्गेन मन्त्रेणाऽऽमर्शनमेवाऽऽप्यायनम् । अद्भिः सेचनमित्यन्ये । वरणक्रमेण सहैव वाऽऽप्याययन्ति । सहिरण्यैः पाणिभिरित्याप्यायनाङ्गं पाणिषु हिरण्यधारणं विहितं भवति ।

प्रत्युपनद्धेऽप उपस्पृश्येष्टा राय इति प्रस्तरे निह्नुवते सव्यान्नीचः पाणीन्कृत्वा दक्षिणानुत्तानान् ॥ ११ ॥

इति हिरण्यकेशिसूत्रे सप्तमप्रश्ने तृतीयः पटलः ।

---

कृत्वा निह्नुवत इत्यन्वयः । सर्वैराप्यायने कृते प्रत्युपनद्धे पुनर्बद्धे राज्ञि ब्रह्मणैव परिकर्मिणेति केचित् । येन विस्रंसनं कृतं तेनैव बन्धनं कर्तव्यमिति ब्रह्मणेत्येव युक्तम् । सोमस्याऽऽप्यायितस्यान्तरिक्षदेवत्यत्वाच्छादनेन द्यावापृथिवीभ्यां सव्यान्नीचः पाणीन्कृत्वा दक्षिणानुत्तानानित्येवंरूपनमस्काराञ्जलिकरणं निह्नवः । प्र वा एतेऽस्माल्लोकाच्च्यवन्त इत्युपक्रम्य द्यावापृथिवीभ्यामेव नमस्कृत्यास्मिँल्लोके प्रतितिष्ठन्तीति श्रुतेः । द्यावापृथिवीभ्यामेव तन्नमस्कुर्वन्त्यथो एने वर्धयन्त्येवेति बह्वृचश्रुतेः । नमो दिवे नमः पृथिव्या इति मन्त्रलिङ्गाच्च वचनात्प्रस्तरे निह्नवः । न्यक्शब्दस्य द्वितीयाबहुवचनं नीच इति । अत्र केचिदुद्गातारः सुब्रह्मण्याह्वानं कुर्वन्ति केचिन्न । स्वोद्गातृवशेन कर्तव्यम् ।

इति श्रीमदोकोपाह्वाग्निष्टोमयाजिसाहस्राग्नियुक्तवाजपेययाजिसर्वतोमुखयाजिद्विपाहस्राग्नियुक्तपौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथदीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसूत्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंतापशामिकायां ज्योत्स्नाख्यायां वृत्तौ सप्तमप्रश्नस्य तृतीयः पटलः ॥ ३ ॥

---

अथ सप्तमप्रश्ने चतुर्थः पटलः ।

---

प्रवर्ग्येण प्रचर्योपसदा प्रचरत्युपसदा वा प्रचर्य प्रवर्ग्येण प्रचरति ।

तत्र प्रवर्ग्यो मन्त्रब्राह्मणयोरनारभ्याधीत इति सूत्रकृताऽपि स्वतन्त्र एव व्याख्यायते । तत्र प्रवर्ग्येण प्रचर्योपसदा प्रचरतीत्येकः पक्षोऽनुष्ठानक्रमे । उपसदा प्रचर्य प्रवर्ग्येण प्रचरतीत्यपरः । तत्रैतद्वा विपरीतमिति लाघवेन वक्तव्ये गुरुनिर्देशप्रयोजनं ग्रीवा उपसदः पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति यत्पुरस्तादुपसदां प्रवृज्यते तस्मादितः पराङमूँल्लोकाꣳस्तपन्नेति यदुपरिष्टादुपसदां प्रवृज्यते तस्मादमुतोऽर्वाङिमाँल्लोकाꣳस्तपन्नेतीति निन्दाप्रशंसाभ्यां प्रत्यक्षश्रुतिविरुद्धमिति नाऽऽशङ्कनीयं सोऽपि प्रत्यक्षभूत एवेतिज्ञापनम् । अधीयते हि माध्यंदिनः(नाः)—शिरो वा एतद्यज्ञस्य यत्प्रवर्ग्यो ग्रीवा उपसद उपरिष्टादुपसदां प्रवृञ्ज्यात्तस्मादुपरिष्टाद्ग्रीवायाः शिरो भवतीति ।

यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्य तत्प्रस्तरपरिधि ।

यदातिथ्यायां बर्हिस्तदुपसदामपि बर्हिर्भवति तदेवाग्नीषोमीयस्य पशोरपि । अनेनाऽऽतिथ्योपसदग्नीषोमीयाणां साधारण्येनैकं बर्हिः प्रस्तरः परिधयश्चेति प्रतिपाद्यते । नच यादृशमाश्वबालादिकमातिथ्यायां तादृगेवोपसदग्नीषोमीययोरित्यनेन प्रतिपाद्यते नतु साधारण्यमिति वाच्यम् । तथा सति विधेः कर्मापवर्गित्वादर्थान्तरे विधिप्रदेशः स्यात् । अपि वोत्पत्तिसंबन्धोऽविशिष्टानां प्रयोगैकत्वे हेतुः स्यादिति जैमिनिन्यायविरोधापत्तेः । अयं च न्यायश्चतुर्थाध्याये द्वितीयपादे वर्तते । एवं चैकमेव बर्हिः प्रस्तरः परिधयश्चेति । सूत्रार्थस्तु विधेर्विधिगम्यातिथ्यासंबन्धस्य बर्हिषः कर्माऽऽतिथ्यारूपं तस्यापवर्गे समाप्तौ, अपवर्गित्वाद्बर्हिषोऽपवृक्तत्वात्, अर्थान्तरे भिन्न उपसद्बर्हिषि विधिप्रदेशो धर्मातिदेशः स्यादिति पूर्वसूत्रार्थः । अपि वेति पूर्वपक्षव्यावर्तनाय । अविशिष्टानामातिथ्योपसदग्नीषोमीयाणां त्रयाणामपि उत्पत्तिर्बर्हिष उत्पत्तिस्तत्संबन्धादातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्येत्यनेन प्रदर्शितः स बर्हिष उपादानसंस्काररूपप्रयोगस्यैकत्वे हेतुर्भवतीत्युत्तरसूत्रार्थः । तथाच त्रयाणामप्यर्थे सकृदेकमेव बर्हिरुपादेयं संस्कार्यं चेति सिद्धान्तार्थो ज्ञेयः । यदातिथ्यायां बर्हिरित्यस्मिन्सूत्रे बर्हिरित्युपलक्षणं विधृत्योः । अत्र ज्ञापकमातिथ्येष्टाविक्षुशलाके विधृती इत्यस्मिन्सूत्र उक्तमेव । अत्र प्रस्तरग्रहणमन्यत्र बर्हिर्ग्रहणेन प्रस्तरस्य ग्रहणं न भवतीतिज्ञापनार्थम् । तेन चातुर्मास्यादिषु प्रसूनं बर्हिस्त्रीन्कपालान्संनह्यैकध्यं पुन संनह्यतीत्यादौ न प्रस्तरस्य ग्रहणम् । शरमयं बर्हिरित्यादावपि आतिथ्याबर्हिरादीनामातिथ्यादित्रयार्थमुत्पत्तिरतस्तान्यादाय तूष्णीमेव संनह्य पुनः पुनः प्रयुञ्जीत । तत्प्रस्तरपरिधीति बर्हिर्विशेषणम् । प्रस्तरश्च परिधयश्च प्रस्तरपरिधयः, त एव प्रस्तरपरिधयो यस्मिन्बर्हिषि तद्बर्हिस्तत्प्रस्तरपरिधि । अनेन प्रस्तरवत्परिधीनामपि बर्हिष्येव संनहनं भवति न त्विध्मे । तेन षोडशदारुत्वमेवेध्मस्य । अथवा तत्प्रस्तरपरिधीति क्रियाविशेषणम् । सा च क्रिया संनहनरूपा । प्रस्तरश्च परिधयश्च प्रस्तरपरिधयः स एव प्रस्तरस्त एव परिधयो ययोर्बर्हिःसंनहनेध्मसंनहनरूपक्रिययोर्यथाक्रमं यथा भवति तथोभयसंनहनत्वसाजात्येन मिलित्वा तत्प्रस्तरपरिधि संनहनं भवति । बर्हिःसंनहनं तत्प्रस्तरम्, इध्मसंनहनं तत्परिधि, तेनैव प्रस्तरेण सह बर्हिःसंनहनं, तैरेव परिधिभिः सहेध्मसंनहनं भवतीति तात्पर्यार्थः । अथवोपसदग्नीषोमीयात्मकक्रियाविशेषणम् । पुंलिङ्गप्रथमाबहुवचनविशिष्टयच्छब्दसहितं षष्ठ्यन्तमातिथ्यापदमत्रानुवर्तनीयम् । तथा चायमर्थो भवति य आतिथ्यायाः प्रस्तरो ये च परिधयस्त एवोपसत्सहिताग्नीषोमीयात्मककर्मणि भवन्तीति । समासस्तु पूर्ववदेव । संभरणं तु परिधीनां पृथगेवामन्त्रम् । सहैव संभरणे मन्त्रविरोधः स्यात् । नचैकविंशतिधेत्यूहोऽस्तु तथा च सहैव संभरणे विरोधो न । षोडशदारुमिध्मं संनह्यतीति सूत्रं तु परिधीनां परिहितत्वपक्षाभिप्रायेण योजनीयमिति

वाच्यम् । आतिथ्यायां मन्त्रेण संभृतानां पुनर्मन्त्रेण संभरणायोगात् । अन्यथाऽऽतिथ्याबर्हिषोऽपि पुनर्मन्त्रेण संभरणापत्तेः । इष्टापत्तौ जैमिनीयन्यायविरोध आपद्येत । अतः संभरणममन्त्रमेवेत्येव युक्तं, संनहनमप्यनेनैव प्रकारेण तूष्णीमेव ।

स्तीर्णे प्रस्तरबर्हिरुपसत्सु शयाः परिधयः ।

पक्षान्तराभिप्रायेणेदं सूत्रं योजनीयम् । पूर्वं सूत्रं पुनः पुनस्तान्येवोपादाय प्रयोज्यानीत्येतादृशार्थपरम् । आतिथ्यार्थं स्तीर्णं बर्हिस्तथैव स्थापनीयं तच्च प्रस्तरेण संयुक्तमेव स्थापनीयम् । अत्र प्रस्तरग्रहणाभावे प्रस्तरस्य स्थानादादाय पुनः पुनः स्थापनं स्यात्तन्मा भूदित्येतदर्थं शया आतिथ्यायां ये परिहिताः परिधयस्ते तथैव स्थापनीया इति न तु पुनः पुनरादायैतत्सर्वं प्रयोज्यमिति स्तीर्णे प्रस्तरबर्हिरित्येतस्य सूत्रस्यार्थः । यदातिथ्यायाः प्रस्तरबर्हिः स्तीर्णं शयाः परिधयस्तथैवोपसदां तदग्नीषोमीयस्य चेति लाघवादेव बर्हिषः स्तीर्णत्वसिद्धौ परिधीनां परिहितत्वसिद्धौ च यदातिथ्याया बर्हिरित्यारभ्य शयाः परिधय इत्यन्तं गुरुसूत्रकरणं व्यर्थं स्यादतोऽर्थद्वयबोधकत्वमेव वक्तव्यम् । उक्तं चार्थद्वयमापस्तम्बेन—आतिथ्याबर्हिरुपसदामग्नीषोमीयस्य च तदेव प्रस्तरपरिधि तत्स्तीर्णं बर्हिस्तत्परिधिताः परिधय इत्येक इति । तदेव प्रस्तरपरिधीत्यन्तं पुनःप्रयोगाभिप्रायेणैव तद्व्याख्यातृभिर्व्याख्यातम् । तत्स्तीर्णमित्यादिकं तु पुनःप्रयोगाभावाभिप्रायेणेति । परिधिताः परिहिता इत्यर्थः । छान्दसोऽयं प्रयोगः । स्तीर्णं प्रस्तरेण युक्तं च बर्हिरुपसत्सु भवति परिधयः शयाः परिहिता भवन्ति । अग्नीषोमीये तु देशभेदात्पुनः प्रयोगः सूत्रोक्तः । प्रयोगक्रमस्तु स्तीर्णपक्षाभिप्रायेण द्रष्टव्यो गृहमेधीयप्रयोगवत् । यदातिथ्याया बर्हिस्तदुपसदामग्नीषोमीयस्य चेत्येतावतैव सिद्धे पुनस्तच्छब्दोपादानमर्थविशेषमपि द्योतयति । अग्नीषोमीयस्याऽऽतिथ्यार्थबर्हिरेव बर्हिस्तस्य स्तरणं यत्र कर्तव्यं भवति तद्देश एव वेदिकार्यकरो न कृत्स्ना महावेदिरिति । तेनोत्तरवेदिहविर्धानयोर्मध्य एव यावत्पर्यन्तमास्तृतं पश्वर्थमातिथ्याबर्हिर्भवति तावति प्रदेश एव वेदिप्रयुक्तकार्याणीति । एतदभिप्रेत्यैव वक्ष्यति सूत्रकारः—अपरेणोत्तरवेदिं मन्त्रेण बर्हिः स्तृणातीति । कृत्स्नस्योत्तरवेदितः पश्चिमभूतस्य महावेदिप्रदेशस्यैतया व्यावृत्तिः क्रियते । तदग्नीषोमीयस्य चेत्यग्नीषोमीयवचनं सवनीयादिव्यावृत्त्यर्थम् । तेन सवनीयादौ वेदिप्रयुक्तकार्याणि महावेद्यामेवेति ज्ञेयम् । स्पष्टं चैतत्सूत्रान्तरे—अग्नीषोमीय उत्तरवेदिहविर्धानयोर्मध्यप्रदेशोऽसंचरो वेदिस्तत्र प्रोक्षणबर्हिःस्तरणादीति । अग्नीषोमीय इति सप्तमी । असंचर इत्यनेनोत्तरभागो द्वारं च व्यावर्त्यते । संचरोऽत्र लौकिकः । न विद्यते संचरो यस्मिन्प्रदेश इत्यसंचरः । इदं चोत्तरवेदिहविर्धानमध्यप्रदेशविशेषणम् । उपसत्स्वितिवचनमुपसत्स्वेव प्रस्तरयुक्तं बर्हिः स्तीर्णं नाग्नीषोमीयेऽपि । तेनाग्नीषोमीये बर्हिरास्तरणाव्यवहितोत्तरमेव प्रस्तरयुक्तमिति बर्हिर्विशेषणसिद्धं प्रस्तरासादनं न किंतु स्वस्थान एव ।

उपसदस्तन्त्रं व्याख्यास्यामः ।

उपोपगतानि संगतानि एतादृशानि पुराणि विशीर्णानि भवन्ति यया सोपसत् । उपोपगताः स्वेन सह संगता अपि भ्रातृव्या विशीर्णा भवन्ति यजमानस्य यया सा वा । एतादृश्युपसन्नामकेष्टिस्तस्यास्तन्त्रं कर्मकलापस्तं व्याख्यास्यामः । खण्डतन्त्रत्वा- म्नानाश्रुतिभ्यः कर्तव्यत्वेनाभिमतं तन्त्रमुपसंहृत्य कथयिष्याम इत्यर्थः । तेषामसुराणां तिस्रः पुर आसन्नित्यत्रोपसद्विषयिण्याख्यायिका प्रसिद्धा । पुराणां संगतत्वं स्कान्द- पाद्मादिपुराणेषु प्रसिद्धम् ।

तस्यामाज्यं हविः ।

उत्तरत्र विनियोगादेवाऽऽज्यस्य हविष्ट्वे सिद्ध इदं वचनमेतस्या इष्टेरपूर्वत्वमेवेति- ज्ञापनार्थम् । तेनात्रापि यावदुच्यते तावदेव कर्तव्यमिति सिद्धं भवति । ननु तत्र याव- त्क्रियते तद्व्याख्यास्याम इति प्रायणीयावदेवात्र कुतो वचनं न कृतमिति चेन्न । हौत्र- तन्त्रविषयेऽप्यपूर्वत्वस्यात्राऽऽवश्यकत्वेन हौत्रतन्त्रविषयकापूर्वत्वनिवर्तकस्य तत्र याव- त्क्रियते तद्व्याख्यास्याम इत्यस्य वचनस्य प्रकृतेऽनिष्टत्वेन तदनुक्तेरेव युक्तिसहत्वात् । तेन देवा यो इत्यादिकं प्राकृतं हौत्रतन्त्रमपि निवर्तते[1] । तथाचाऽऽश्वलायनः—अथो- पसत्तस्यां विव्यया जपा इति । जैमिनिरप्येतस्या इष्टेरपूर्वत्वं दशमाध्याये षष्ठे(सप्तमे) पाद आह—उपसत्सु यावदुक्तं कर्म स्यात्, स्रौवेण वा गुणत्वाच्छेषप्रतिषेधः स्यात्, अप्रतिषेधो वा प्रतिषिध्य प्रतिप्रसवात्, अनिज्या वा शेषस्य मुख्यदेवतानभीष्टत्वादिति चतुर्भिः सूत्रैः । सूत्रार्थस्तु-उपसत्सु अप्रयाजास्ता अननूयाजास्ता इति प्रयाजानूयाज- निषेधादेतद्वर्जितं यावदुक्तं सर्वं कर्तव्यं स्यादिति प्रथमसूत्रार्थः । द्वितीयसूत्रार्थस्तु— स्रुवेणाऽऽघारमाघारयति यज्ञस्य प्रज्ञात्या इति विहितः स्रुवाघारः स्रौवः । ततः स्रौव- शब्दान्मत्वर्थीयोऽच्प्रत्ययः । तथा च स्रौववानित्यर्थो भवति । स्रौववदितिपदं योग्य- तया वाक्यविशेषणं प्रतिपाद्यतासंबन्धेन । तथा च स्रुवेणाऽऽघारमाघारयति यज्ञस्य प्रज्ञात्या इति स्रुवाघारप्रतिपादकवाक्येनेत्यर्थो भवति । अप्रतिषिद्धादाघारातिरिक्ता- विहिताच्च कर्मणोऽन्यत्कर्म शेषशब्देनोच्यते । तस्य सर्वस्य प्रतिषेधो भवतीति गुण- त्वाद्गुणवत्त्वात्, स्रौवाघारस्याऽऽख्यातसद्भावरूपप्रज्ञातिरूपगुणवत्त्वाच्चैतेन स्रुवाघार- प्रतिपादकवाक्येन शेषकर्मणां प्रतिषेध इति । आघारवचनं नान्यामाहुतिं पुरस्तादिति प्रतिषिद्धस्य प्रतिप्रसवार्थमस्त्वित्याशङ्कते तृतीयेन सूत्रेण प्रतिषिद्धस्य प्रतिप्रसवार्थ- त्वान्न शेषप्रतिषेध इति । तत्राऽऽग्नेयी सौमी वैष्णवी चेति तिस्रः प्रधानाहुतयो या ते अग्न इत्यौपसदाहुतयश्चाऽऽम्नाता नत्वाघारादय इत्यनाम्नानादभावशङ्कायां सत्यां प्रति-

---

1 ख. ग. °ते । जैं° ।

षेधः प्रसक्तस्तत्प्रतिप्रसवार्थं वचनम्। एवं चाऽऽघारयतीति सर्वप्राकृतोपलक्षणार्थमित्यर्थः। चतुर्थसूत्रार्थस्तु-शेषस्य प्रधानाघाराहुतिव्यतिरिक्तास्वा (क्तस्याऽऽ)हुतिसमुदायरूपस्यानिज्या न होमो यागश्च। मुख्यास्तिस्रो देवतास्तासां फलप्रदाने नान्यामाहुतिमितिनिषेधेनेतराहुतीनां मुख्यदेवतानभीष्टत्वात्फलप्रदानाननुगुणत्वात्। निषिद्धानुष्ठाने प्रकृतफलं नैवोत्पद्यते मुख्यदेवतानां फलप्रदानविषयेऽभीष्टफलप्रदातृत्वानुगुण्यं न भवतीति।

अग्निः सोमो विष्णुर्देवताः।

उत्तरत्र विधिदर्शनादेवैतासां देवतात्वसिद्धाविदं वचनं तिसृणामपि देवतानां प्रधानत्वख्यापनार्थम्। तेनाग्नेः सोमस्य चाऽऽज्यभागदेवतात्वशङ्का परिहृता भवति। फलं दर्भिधरसीत्येव सर्वानुमन्त्रणम्।

उपांशुयाजेन कल्पो व्याख्यातः।

कल्पः प्रकारः। सादृश्याद्विकारः, विप्रतिषेधे हविःसामान्यं बलीय इति सूत्राभ्यामेवोपांशुयाजविकारत्वसिद्धौ परप्रत्यायनार्थत्वेनाऽऽश्रावणप्रत्याश्रावणसंप्रैषवषट्कारागूःप्रणवानामुच्चैस्त्वे प्राप्त उपसदि सर्वस्याप्युपांशुताया उपांशूपसदा चरामेति श्रुत्या विहितत्वेन तदुच्चैस्त्वं बाधित्वोपांशुत्वं प्राप्तमाज्यहविषोपांशुयाजेन प्रचरति तस्योच्चैराश्रुतप्रत्याश्रुते याज्यापुरोनुवाक्यासंप्रैषो वषट्कारश्चोपांशु देवतादेशनमित्युपांशुयाजधर्मैः पुनस्तदपि बाधितुमिदं वचनम्। वषट्कारश्चेत्यत्रत्यचकारेणाऽऽगूःप्रणवयोः संग्रहः। तथाचाऽऽश्वलायनः—आगूःप्रणववषट्कारा उच्चैः सर्वत्रेति। उच्चैस्त्वेऽन्यं च विशेषमाह स एव-तन्त्रस्वराण्युपांशोरुच्चानि मन्द्राण्युपांशुतन्त्राणामिति। एतेनोपसदामुपांशुतन्त्रत्वादेतेषामुच्चैस्त्वं मन्द्रस्वरात्मकं भवति। नचोपांशूपसदा चरामेत्येतस्याः श्रुतेः प्रधानमात्रपरत्वमिति वाच्यम्। तस्य चोपांशुयाजविकारत्वेनैव सिद्धौ श्रुतेर्निष्प्रयोजनत्वापत्तेः। एवं च साङ्गप्रधानपरतायां सिद्धायामाश्रावणादिविषयकं श्रुतिसिद्धमुपांशुत्वं बाधितुमपेक्षितमेवेदं सूत्रमिति ज्ञेयम्। प्रणवः पुरोनुवाक्यायाः। सामिधेनीप्रैषादिषु तु संज्ञयैव परप्रत्यायनं राजसूयान्तर्गतमारुत्याश्रावणप्रत्याश्रावणवत्। सा च संज्ञा हस्तमध्यमाङ्गुल्यङ्गुष्ठसंस्फोटनेनैव। अथवाऽत्र प्रैषविषये परप्रत्यायनार्थत्वान्नोपांशुत्वमित्येव स्वीकर्तव्यम्। मारुत्याश्रावणप्रत्याश्रावणयोस्तु वचनात्परप्रत्यायनार्थत्वेऽप्युपांशुत्वमेव। परप्रत्यायनं तु संज्ञयैव सामिधेनीविषय उपांशूपसदा चरामेति श्रुत्याऽङ्गानामप्युपांशुत्वस्योक्तत्वात्। पित्र्योपसदः सतन्त्रा इत्याश्वलायनसूत्राच्चोपांशुत्वमेव। प्रणवपरिज्ञानार्थं मध्यमाङ्गुल्यङ्गुष्ठसंस्फोटनमत्रापि। आश्वलायनोक्तसुमन्द्रत्वपक्षस्तु श्रुतिविरुद्धत्वान्नात्र भवति।

अग्नीनन्वाधाय षोडशदारुमिध्मꣳ संनह्यति ।

अग्न्यन्वाधानवचनप्रयोजनं प्रायणीयावज्ज्ञेयम् । संनहनं संभरणोपलक्षणम् । इदं च षोडशदारुत्वमातिथ्यायां परिहिताः परिधयस्ते तथैवोपसत्सु भवन्तीति पक्षे । अग्नीनन्वाधायेति ल्यबिध्माहरणाव्यवधानार्थः । तेन परिस्तरणाद्यर्थदर्भच्छेदनमिध्माहरणानन्तरमेव भवति नात्रेति । नतु पौर्णमासतन्त्रत्वख्यापनार्थः । तस्य सादृश्याद्विकारः स लिङ्गेन गम्येतेति सूत्रादुपांशुयाजसत्त्वरूपलिङ्गेनैव सिद्धेः । इध्मसंभरणमन्त्र एवमूहः—यत्कृष्णो रूपं कृत्वा प्राविशस्त्वं वनस्पतीन् । ततस्त्वाꣳ षोडशधा संभरामि सुसंभृता । एकाꣳ समिधं यज्ञायुरनुसंचराम् । उपवेषꣳ संभरामि सुसंभृतेति । उपवेषशब्दविवक्षयाऽनुसंचरमित्येव वा । अपरिहितत्वपक्षे तु इध्मे संभरणं परिधीनां पृथगेवामन्त्रमित्युक्तमेव प्राक् । संभृतत्वान्न मन्त्रेण संभरणम् ।

वेदं कृत्वाऽग्नीन्परिस्तीर्य पाणी प्रक्षाल्योलपराजीꣳस्तीर्त्वा यथार्थमाज्यपात्राणि प्रयुनक्ति स्फ्यꣳ स्रुवꣳ स्रुच आज्यस्थालीं येन चार्थः ।

वेदं कृत्वेति क्त्वाप्रत्ययान्तानुवादप्रयोजनं प्रायणीयावद्द्रष्टव्यम् । उपवेषस्य करणं पात्रप्रयोगकालेऽपि न तस्य प्रयोजनाभावात् । अग्नीन्परिस्तीर्येत्यादि उलपराजीꣳस्तीर्त्वेत्यन्तं कृतव्याख्यानम् । यथार्थं यथाप्रयोजनम् । अर्थं प्रयोजनमनतिक्रम्य यथार्थम् । आज्यार्थानि पात्राणि आज्यपात्राणि । आज्यवचनमाज्यार्थपात्राणामुक्तानामनुक्तस्य च प्रथमं प्रयोगस्तदनन्तरं तदितरपात्रप्रयोग इत्येवं क्रमविशेषं सूचयितुम् । आज्यपात्रेषु यथार्थशब्दोपादानं निषेचनपात्रस्यानुक्तस्यापि प्रयोगार्थम् । कपालशूर्पनिवृत्तावर्थात्स्फ्येन सहत्वमग्निहोत्रहवण्याः प्राप्तं तद्वारयितुं स्फ्यस्यानाज्यपात्रत्वेनाऽऽज्यपात्रप्रयोगानन्तरं प्रयोगं वारयितुं च स्फ्यादीनां वचनम् । नन्वेवं स्फ्यमाज्यपात्राणि येन चार्थ इत्येव लाघवेन वक्तव्यम् । तथा च पृथक्पृथगुद्देशो व्यर्थः, स्रुवस्याप्याज्यसंबन्धित्वादाज्यपात्रेषु ग्रहणं भविष्यति, निषेचनपात्रप्रयोगार्थं यथार्थग्रहणमपि न कर्तव्यं भवतीति चेत् । सत्यम् । आज्यपात्रत्वसाजात्येनाऽऽज्यपात्रसमूहात्मकमेकं पात्रं स्फ्यश्चेत्येवं द्वंद्वत्वापत्तेः(त्तिः) । अतः पृथक्पृथग्ग्रहणम् । येन चार्थ इतिवचनोपात्तपात्रत्रयस्य तु अग्निहोत्रहवणी दर्भ इत्येवं द्वंद्वम् । सूत्रान्तरे द्वंद्वतार्थं दर्भप्रयोगस्य विहितत्वात् । वेदं वेदाग्रमिति द्वंद्वम् । अथवाऽग्निहोत्रहवण्या सह वेदो वेदाग्रेण सह दर्भ इत्येवं द्वंद्वसंपत्तिः । अथवा वेदवेदाग्रे एकमेव द्रव्यं वेदाग्रस्य तज्जन्यत्वात् । तेनाग्निहोत्रहवणी वेदवेदाग्रे इत्येकमेव द्वंद्वमिति द्रष्टव्यम् । निषेचनपात्रेण सह दर्भ एव द्वंद्वतार्थं भवति । नन्वेवं स्फ्यꣳ स्रुवमाज्यपात्राणीत्येवमेवास्तु किमर्थं स्रुगादिग्रहणमिति चेत्सत्यं, स्रुचां समुदायत्वेनैकपात्रत्वं वक्तुमुपादानात् ।

तेन जुहूपभृद्ध्रुवा आज्यस्थाली चेत्येवमेवात्र द्वंद्वं भवति। आज्यस्थालीवचनं निषेचनपात्रस्य प्रथममुपयोगात्तस्यैव स्रुग्भिः प्रयोगोऽपि कदाचित्स्यात्तं वारयितुम्। अवशिष्टं निषेचनपात्रमेव तत्प्रयोगार्थं यथार्थमिति । येन चार्थ इत्याज्यपात्रव्यतिरिक्तपात्रप्रयोगार्थम् । येनेत्येकवचनं पात्रसमुदायपरम् । तेन पात्रत्रयस्य लाभः सिध्यति। एकपात्रपरत्व एकस्यैव पात्रस्य प्रयोगः स्यात् । अन्ययोः प्रयोजनवतोरपि न स्यात्।

**पवित्रे कृत्वा यजमान वाचं यच्छेति संप्रेष्यति वाग्यतः पात्राणि संमृशति प्रोक्षितेषु वाचं विसृजते।**

पवित्रे कृत्वा यजमान वाचं यच्छेति संप्रेष्यतीति वचनाद्दृष्टार्थत्वेऽपि प्रणीता नेष्यन्ते। कात्यायनेन त्वत्र तासामुक्तत्वात्तन्निरासार्थो वा प्रयत्नः। हविष्कृता वाचं विसृजत इति कालाभावात्प्रोक्षितेषु पात्रेष्वपि वाग्यतेन कर्तव्येषु पदार्थेषु प्राकृतेषु चोदकप्राप्तेषु मध्ये न सन्तीति प्रोक्षितेष्वित्युक्तम्। वाग्यतो वाचा यतः कृतवाग्यमनः । पाणितलेन संस्पर्शः संमर्शः। प्रोक्षितेष्वित्यनेन संगृहीताः पदार्था उच्यन्ते—दक्षाय वानस्पत्याऽसि प्रत्युष्ट९ रक्षः, देवो वः सवितोत्पु० अच्छिद्रे० वसोः सू० आपो देवीरग्रे० शुन्धध्वं दै०। ब्रह्मन्प्रोक्षिष्यामीत्यामन्त्रणं न भवति । हविष इध्माबर्हिषश्च प्रोक्ष इति ब्रह्मत्वसूत्रे पात्रप्रोक्षणस्यानुपादानात्। प्रसवाभावेनाऽऽमन्त्रणमपि तदनुरोधित्वान्न कर्तव्यम् । अथवा चकारेण पात्रप्रोक्षणस्य संग्रहः। अस्मिन्पक्षेऽत्रापि ब्रह्मन्प्रोक्षिष्यामीत्यामन्त्रणं भवति । अत्र प्राक्प्रोक्षणात्करत्वेति यज्ञं युनक्ति यजमानः।

**स्फ्यमादाय स्तीर्णाया वेदेर्लोमभ्योऽधिस्तम्बयजुर्हरत्युत्तरं परिग्राहं परिगृह्य संप्रैषेण प्रतिपद्यते।**

स्फ्यादानं मन्त्रेणैव स्तम्बयजुरर्थत्वात्। वेद्यभिमर्शनं वेदिसंमार्जनं च न वेदेश्छन्नत्वात्। लोमानि आस्तृतदर्भाः। तदुपरि दर्भं निधाय स्तम्बयजुर्हरति प्रकृतिवत्। तत्र वर्षतु ते द्यौरिति न भवति वेदेश्छन्नत्वादक्षतत्वाच्च। इमां नरा इति प्रैषोऽपि न वेदेः करणाभावात्। उद्धननखनने न, असंभवात्। उत्तरं परिग्राहं परिगृह्येत्यनुवादो धा असीति संमार्गस्य पुरा क्रूरस्येत्यभिमन्त्रणस्य च निवृत्त्यर्थो ननु पूर्वपरिग्राहनिवृत्त्यर्थः। स्यपा मध्यगतोत्तरनिवर्तकत्वस्यैव बोधनात्। *(अभिमन्त्रणमात्रनिवर्तकत्वेनैवानुवादसार्थक्यसंभवे पूर्वपरिग्राहश्रोण्यंसोन्नयनरूपकर्मद्वयनिवर्तकत्वस्यानौचित्यात्।) संप्रैषः प्रोक्षणीरासादयेति तेन प्रतिपद्यत उत्तरपरिग्राहपरिग्रहणानन्तरं संप्रैषमेव वदतीत्यर्थः।

---

* धनुश्चिह्नान्तर्गतं क. पुस्तके नास्ति।

यदन्यद्बर्हिषः पत्नीसंनहनाच्च तत्संप्रेष्यति ।

बर्हिषः पत्नीसंनहनाच्चान्यद्यत्कर्म तत्संप्रेष्यतीत्यर्थः । यथा प्रोक्षणीरासादयेध्ममुपसादय स्रुवं च स्रुचश्च संमृड्ढ्याऽऽज्येनोदेहीति । अस्तीर्णत्वपक्षे वेद्यभिमर्शनं वेदिसंमार्जनं च भवत्येव वेदेरच्छन्नत्वात् । लोमभ्यः स्तम्बयजुर्हरणं न । वर्षतु ते द्यौरिति भवत्येव वेदेरच्छन्नत्वात्सक्षतत्वाच्च । इमां नरा इति प्रैषोऽपि भवत्येव वेदेः करणस्य सत्त्वात् । उद्धननखनने धा असीति च भवत्येव संभवात् । पुरा क्रूरस्येत्यभिमन्त्रणं निवर्तत एव वचनबलात् । अस्तीर्णत्वपक्षेऽपि प्रैष एवमेव । नच बर्हिरुपसादनस्यापेक्षितत्वात्कथमेतादृशः प्रैषोऽत्रोपयुक्तो भवतीति वाच्यम् । उपसादनस्य प्रोक्षणार्थत्वेन बर्हिष्प्रोक्षणस्यैवाभावेनैतस्याप्यभावस्यैव सिद्धत्वेन यथापठितस्यैव प्रैषस्यात्रोपयोगसंभवात् । तथा चानुपसादितमेव बर्हिः स्थापितप्रदेशादादायाऽऽस्तरणीयम् । नच प्रोक्षणमप्यस्तीर्णत्वपक्षेऽस्तु तदर्थत्वादुपसादनमप्यस्तु तथा च प्रैषस्योक्तस्यात्रानुपयोगात्प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुवं च स्रुचश्च संमृड्ढ्याऽऽज्येनोदेहीति बर्हिष्पदवानेवास्तीर्णत्वपक्षे प्रैषो भवत्विति वाच्यम् । आतिथ्यायां प्रोक्षितस्य पुनःप्रोक्षणायोगाद्यावज्जीवं पात्राणि धार्यन्ते तेषां प्रतितन्त्रं संस्कारोऽभ्यावर्तत इति पात्राणामेव संस्कारावृत्तिविधानेनान्यत्र तन्निवृत्तेरुक्तप्रायत्वात् । यज्ञोत्पत्त्युपदेशे निष्ठितकर्म प्रयोगभेदात्प्रतितन्त्रं क्रियेत न वा कृतत्वात्तदुपदेशो हीति द्वादशाध्यायप्रथमपादान्तर्गतजैमिनिन्यायसिद्धत्वाच्च । सूत्रार्थस्तु यज्ञानामातिथ्योपसदग्नीषोमीयाणामुत्पत्तौ य उपदेशो यदातिथ्याया बर्हिरित्यादिस्तत्रानुष्ठितं बर्हिषि प्रोक्षणादिकं प्रयोगभेदात्प्रतितन्त्रं क्रियेतेति । निष्ठितकर्मेति पाठे साधारण्येन निश्चितं यद्बर्हिस्तत्कर्मेत्यर्थ इति पूर्वसूत्रार्थः । उत्तरसूत्रार्थस्तु कृतत्वात्संस्काराणां प्रोक्षणादीनां कृतत्वान्न पुनरनुष्ठेया हि यस्मात्तदुपदेशस्तस्योपदेशस्तदुपदेशः । तच्छब्देन बर्हिःसाधारण्यं गृह्यते । तस्य बर्हिःसाधारण्यस्योपदेशो यस्मादतस्तत्संबन्धिसंस्काराणामपि साधारण्येनैवानुष्ठानं नतु प्रतिप्रयोगं पृथक्पृथगिति । द्वारसाधारण्ये सत्यातिथ्याकाल एव नियतं प्रोक्षणाद्यनुष्ठानं तु नान्तरीयकमुपसदादेस्तदानीमप्राप्तत्वादिति । अत एव प्राथमिकत्वादातिथ्यायास्तन्निमित्तत्वमितरयोः प्रसङ्गित्वमिति ज्ञेयम् । बर्हिष्प्रोक्षणस्य निवृत्तौ सिद्धायां तदर्थस्योपसादनस्यापि निवृत्तत्वेन यथापठितस्य प्रैषस्य सुतरामुपयोगसंभवात् । ननु पत्नीसंनहनस्यात्रासंभवादेवाभावे सिद्धे पर्युदासो व्यर्थ इति चेत्सत्यं, पक्षे पत्नीसंनहनमप्यत्र भवतीतिज्ञापनार्थत्वेन वैयर्थ्याभावात् ।

यत्प्रागाज्यग्रहणात्तत्कृत्वा ध्रुवायामेव गृह्णाति ।

आज्यग्रहणात्प्राग्बर्हिरुपसादनपत्नीसंनहनव्यतिरिक्तं यत्कर्म प्रोक्षण्यासादनप्रभृति

वेदेनोपयम्य भूमौ प्रतिष्ठितायां ध्रुवायामित्यन्तं तत्कृत्वा ध्रुवायामेव गृह्णाति । एव-कारेण जुहूपभृतोराज्यग्रहणं व्यवच्छिद्यते । अनेन स्रुच्याघाराद्याज्यभागान्तकर्मणो निवृत्तिरुक्ता भवति । तथा चाऽऽपस्तम्बः—नान्यामाहुतिं पुरस्ताज्जुहुयात्स्रौवमेवाऽऽघारयेदिति । अग्ने गृहपत उप मेत्यादिकमुभयपक्षेऽपि भवति ।

प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्र्येध्मं वेदिं च प्रोक्ष्य प्रोक्षण्यवशेषं निनीय पवित्रे अपिसृज्याग्निमभिमन्त्र्य पूर्वामाघारसमिधमाधाय ध्रुवां स्रुवं च सादयत्येषाऽसददिति मन्त्रं संनमति विष्णवसि वैष्णवं धाम प्राजापत्यमित्याज्यमभिमन्त्रयते ।

उक्तेतरपरिसंख्यार्थमनुक्रमणम् । आज्यस्थाल्यपोद्धरणं तु भवत्येव । प्रोक्षणार्थं वेदे रिक्तत्वापेक्षणात्, आज्ये प्रोक्षणबिन्दुपातापत्तेश्च । आमन्त्रणेन प्रसवोऽप्युपलक्ष्यते । अन्यथाऽऽमन्त्रणस्यैव निरर्थकत्वापत्तेः । इध्मं वेदिं चेत्यत्र चकारः परस्परसमुच्चयार्थः । वेदेश्छन्नत्वाद्वेदिप्रोक्षणलोपः शङ्क्येत तन्निवृत्त्यर्थं वेदिमितिवचनम् । नचास्तीर्णत्वपक्ष एवैतदस्तु इति वाच्यम् । अग्नीषोमीय आस्तृताया अपि वेदेः प्रोक्षणविधिदर्शनेनात्रापि तथैव कल्पनस्य युक्तत्वेन संकोचस्यानुचितत्वात् । प्रोक्षण्यवशेषं निनीय पवित्रे अपिसृज्येत्यनेन क्रमेण प्रस्तरदानं निवर्त्यते । अस्तीर्णत्वपक्ष एतदपि भवत्येव । पवित्रे अपिसृज्याग्निमभिमन्त्र्येत्यनेन क्रमेण ब्रह्मणे प्रस्तरप्रदानमाहवनीयकल्पनं च व्यावर्त्यते । आहवनीयकल्पनकार्यमिध्माधानेनैव सिध्यति होमस्यात्र स्वल्पत्वात् । आहवनीयस्यातीव स्वल्पत्वे तु आवश्यकत्वादाज्याभिमन्त्रणोत्तरमेतत्कर्तव्यमेव । तावत्पर्यन्तं स्थातुमशक्यत्वे त्वत्रैव कर्तव्यम् । अथवाऽनूयाजार्थोल्मुकोदूहनसहचारित्वादेव निवृत्तिः । अन्तर्वेदि पुरोग्रन्थीत्यादि ग्रन्थिप्रत्युक्षणान्तमस्तीर्णत्वपक्षेऽपि न भवति । ग्रन्थेर्नूतनत्वेऽपि समन्त्रकग्रन्थिकरणाभावान्न प्रत्युक्षणम् । यत्र लूनस्य बर्हिषो विहारदेशप्रापणार्थं यत्संनहनं तत्रैव संनहने मन्त्रः । एवं हरणेऽपि । प्रकृते तथात्वाभावान्न संनहने हरणे च मन्त्रः । तथा च द्वादशाध्याये प्रथमे पादे जैमिनिः संनहनहरणे तथेति चेत्, नान्यार्थत्वादिति । अग्नीनन्वाधायाऽऽतिथ्यापरिवीनिध्म उपसंनह्यतीत्येतत्सूत्रव्याख्यानावसर एतत्सूत्रद्वयं व्याख्यास्यते । स्तीर्णत्वपक्षे तृणैर्वेदिमन्तर्धायेत्यादिकं प्रत्यादाय प्रस्तरं परिधीन्परिदधातीत्यादिविहितं परिविपरिवानं चार्थान्निवर्तते । अस्तीर्णत्वपक्षेऽपि बर्हिषः प्रोक्षितत्वान्न प्रोक्षणम् । अन्तर्वेदि पुरोग्रन्थीत्यादिकमपि नेत्युक्तमेव प्राक् । बर्हिर्वेद्यां तूष्णीमेव विस्रस्य समन्त्रमेव प्रस्तरं गृहीत्वा प्रस्तरे पवित्रे समन्त्रमेवापिसृज्य समन्त्रमेव ब्रह्मणे प्रदाय तृणैर्वेदिमन्तर्धायाक्षणया शुल्बं स्तीर्त्वा समन्त्रमेव क्रमेण दर्शपूर्णमासवत्स्तृणाति । आहवनीयकल्पनमप्यस्ति । अनू-

याजाभावान्नोल्मुकोदूहनम् । प्रत्यादाय प्रस्तरं परिधीन्परिदधातीत्यादि पूर्वाघारसमि-
दाधानान्तमस्ति । उत्तराघारसमिदाधानमुभयपक्षेऽपि न । परिधीनां परिहितत्वादेत-
स्याभिमन्त्रणस्य न पुरस्तात्परिदधात्यादित्यो ह्येवोद्यन्पुरस्ताद्रक्षाꣳस्यपहन्तीति श्रुत्या
रक्षोपहननरूपकार्यकारित्वसाम्येन परिधिरूपत्वादातिथ्यार्थपरिहिता यथाऽन्यत्रोपयु-
ज्यन्ते तथाऽऽतिथ्यायां कृतमभिमन्त्रणमपि अत्रोपयोगाय भविष्यति । तथा चाभिम-
न्त्रणनिवृत्तिरत्रेति शङ्कां दूरीकर्तुमग्न्यभिमन्त्रणवचनम् । अभिमन्त्र्येति ल्यप्प्रयोगः
कालाव्यवधानार्थः । सूर्यस्त्वेत्यग्न्यभिमन्त्रणं कृत्वा कालाव्यवायेनैव वीतिहोत्रं त्वेति
पूर्वामाघारसमिधमादधाति । आघारसमिदाधानवचनाभावेऽग्न्यभिमन्त्रणोत्तरं ध्रुवास्रुवयोः
सादनमेव स्यात्, आघारसमिधोऽपीध्माधान एव विनियोगः स्याच्चैतद्वारयितुं पूर्वामा-
घारसमिधमाधायेति । पूर्वामाघारसमिधमाधाय ध्रुवाꣳ स्रुवं च सादयतीत्यनेन क्रमे-
णाऽऽपस्तम्बोक्तमन्तर्वेदि विधृतीनिधानं निवार्यते । विधृत्योस्तदवस्थतायामिदमपि
लिङ्गम् । यदा बर्हिरस्तीर्णं तदा विधृती अपि तूष्णीं सादनीये एव परिधयोऽप्यपरि-
हिता एव । यदा तु स्तीर्णं तदा विधृती अपि तदवस्थे एव परिधयः परिहिता एवेति
द्रष्टव्यम् । परिधीनां पुनः पुनरादाय प्रयोगे पुनः परिधीनां परिधानं समन्त्रकमेव ।
पूर्वामाघारसमिधमाधायेत्यत्रत्यस्य पूर्वामिति समिधो विशेषणीभूतस्य शब्दस्य पूर्वां
पूर्वदिग्गतामित्यर्थः । तेन स्रौवाघारस्यात्र प्राक्त्वमेव नियतमिति ज्ञापितं भवति । इदं
चाऽऽघारसमिच्छब्दबलाल्लभ्यते । आघारसमाप्त्यवधिभूता समिदाघारसमिदिति ह्याघा-
रसमिच्छब्दार्थः । तस्याः पूर्वत्वविशेषणेन पूर्वदिग्गतत्वलाभे यदर्था समित्तस्य कर्म-
णोऽपि प्राक्त्वं सिध्यत्येव । पूर्वामित्यस्य प्रथमामित्यर्थस्तु न भवति स्रुवाघारसंबन्धादेव
तल्लाभे प्रथमत्वविधानस्य व्यर्थत्वापत्तेः । अत एव पूर्वाघारसमिधमाधायेत्येवमपि
नोक्तम् । उत्तराघारसमिन्निवृत्तिस्तु स्रुच्याघाराभावादेव । आघारवचनमूर्ध्वतयाऽग्न्याधा-
नार्थम् । समिद्वचनं पञ्चदशेध्मकाष्ठसजातीयत्वव्यावृत्त्यर्थम् । तेन द्विप्रादेशपरिमित-
त्वाद्यत्र न भवति । ध्रुवां स्रुवं च सादयति तत्तन्मन्त्रेण । चकारादाज्यस्थालीमपि
सादयति । एता असदन्निति बहुवचनान्तत्वैच्छब्दवन्तं मन्त्रमेषाऽसददित्येकवचनान्तैत-
च्छब्दवन्तं करोतीत्यर्थः । ता विष्णो इत्यत्रापि तां विष्णो इत्येकवचनान्तः प्रयोगः
कर्तव्यः । या एताः स्रुचः सुकृतस्य लोकेऽसदंस्ता विष्णो पाहीत्येकार्थकत्वेनैकत्रोहे
प्रदर्शितेऽपरत्र तस्य दर्शितप्रायत्वात् । विष्णूनि स्थेत्यस्य स्थाने विष्णवसि वैष्णवं
धाम प्राजापत्यमित्येकवचनान्तप्रयोगविशिष्टेनाऽऽज्यं स्रुगतमभिमन्त्रयेत इत्यर्थः ।
बहुवचनस्य पूजार्थत्वं स्वीकृत्य बहुवचनान्तप्रयोगविशिष्टस्यैव मन्त्रस्य विनियोगं वार-
यितुमुभयत्रोहप्रदर्शनम् । सस्रुवामाज्यस्थालीमित्यादिकं त्वर्थान्निवर्तते । अत एव

ल्यप्प्रत्ययो नोपात्तः । अत्रायं यज्ञः० ममाग्ने वर्चो०मापरादाः पृथिवी होता० एतैरा-सन्नमाज्यं यजमानोऽभिमृशति ।

वेदं निधाय सामिधेनीभ्यः संप्रेष्यति
नवधेध्मं प्रतिविभज्य सर्वमिध्ममादधाति ।

वेदं निधाय सामिधेनीभ्यः संप्रेष्यतीतिक्रमानुवादो वेद्यन्तपरिस्तरणनिवृत्त्यर्थः । होतृषदनकल्पनं तु होत्रैव स्वार्थं कल्पनीयम् । अथवाऽनुवादस्वरसादत्र नैव कल्प-नीयं किं तु होतुरुपवेशनकाल एव कल्पनीयमध्वर्युणैव । वेदं निधाय नवधेध्मं प्रति-विभज्य सामिधेनीभ्यः संप्रेष्यतीत्यन्वयः । तत्रापि सामिधेनीभ्य इत्यस्योभयत्रान्वयः सामिधेनीभ्यो नवधेध्मं प्रतिविभज्य सामिधेनीभ्यः संप्रेष्यतीति । सामिधेनीभ्य इत्युभ-यत्रापि तादर्थ्य एव चतुर्थी । तेन सामिधेन्यर्थं प्रतिविभज्य सामिधेन्यर्थं संप्रेष्यती-त्यर्थो भवति । होतारमिति शेषः । सामिधेनीप्रैषात्पूर्वं विभागस्त्वदृष्टार्थः । सामिधे-न्यर्थं संप्रैषोऽग्नये समिध्यमानायानुब्रूहीति । नवधेध्मं प्रतिविभज्येत्यनेन सामिधेन्योऽत्र नवैवेति गम्यते । ताश्चाग्रे प्रदर्शयिष्यन्ते । सामिधेनीभ्यः प्रतिविभज्येत्यत्र प्रतीतिव-चनात्समो विभागः । तत्र समत्वं विभाग एकैककाष्ठात्मकत्वमेव । अन्यस्यासंभवात् । एवं च नवसु सामिधेनीप्रणवेषु नव काष्ठानि प्रक्षिपति । अवशिष्टानि[1] षट्काष्ठानि नवमकाष्ठप्रक्षेपेण सहैवेन्धनार्थत्वेनैव प्रक्षिपति न तु सामिधेनीसंबन्धित्वेन प्रक्षिपति । तत्र द्वे समिधाविन्धनभावनयैव प्रक्षिपति न तु सामिधेनीसंबन्धि-भावनयेति तात्पर्यार्थः । अयमर्थः पुनरिध्मशब्दोपादानाल्लभ्यते । अन्यथा तस्य वैयर्थ्यापत्तेः । एतेन षट्सु प्रणवेषु द्वे द्वे काष्ठे प्रक्षेपणीये परिधानीयायां त्रीणि सह प्रक्षिपति, अथवा तृतीयषष्ठनवमेषु प्रणवेष्वेकैकं प्रक्षिपति, इतरेषु षट्सु द्वे द्वे इति केषांचित्कल्पनं निरस्तम् । प्रकृतिवद्याजमानम् । नास्ति देवाः पितरः । अत्र हौत्रे विशेषमाहाऽऽपस्तम्बः—तिस्र ऋचस्त्रिरनूक्ता भवन्ति नव वा पराचीरिति । तिस्र आद्या ऋचः प्राकृतीः, आश्वलायनोक्ता वा । पराचीरनावृत्ताः प्राकृतीरेवेति । याजुष-हौत्रसत्त्व आपस्तम्बोक्तमाश्वलायनोक्तं वा ग्राह्यमिति ज्ञेयम् ।

ओढासु देवतास्वग्निमुपवाज्य स्रुवाघारमाघार्याग्नीत्परि-
धींश्चाग्निं च त्रिस्त्रिः संमृड्ढीति संप्रेष्यति संमृष्टे
प्रवरं प्रवृणीते यथा महापितृयज्ञे सीद होतरित्युक्त्वा
॥१२॥ ध्रुवाया अष्टौ जुह्वां गृह्णाति चतुरुपभृति ।

ओढासु आवाहितासु होत्रा देवतासु अग्निमुपवाज्य वेदेनाऽऽहवनीयमग्निं त्रिरु-

[1] क. °नि न° ।

पवाज्य । इदमुपवाजनमदृष्टार्थम् । ओढासु देवतासूदकमुपवाज्येत्यवभृथ उदकोपवाजनदर्शनात् । स्रुवेण ध्रुवाया आज्यमादाय वेदेनोपयम्य प्रजापतये मनवे स्वाहेति प्राञ्चं स्रौवमाघारमाघारयति स्रौवमाघारमाघार्य संमार्गाय संप्रेष्यति । संमृष्टे प्रवरं प्रवृणीत इत्येतावतैव संमार्गवत्तदर्थस्य प्रैषस्यापि प्राप्तौ प्रैषपाठ उत्तरत्र संमृष्ट इत्येकवचनेनाग्नेरेव संमार्गेऽवगतेऽग्निमग्नीत्रिः संमृड्ढीत्येवं प्रैषः स्यात्स मा भूदित्येतदर्थम् । नन्वेवं संमृष्ट इत्येकवचनं विरुध्येतेति चेन्न । तस्याग्नेरेव संमार्गो न परिधीनामितिपक्षान्तरज्ञापनार्थत्वेन विरोधाभावात् । एकवचनस्य जात्यभिप्रायकत्वकल्पना प्रैषपाठस्य व्यर्थत्वापत्तेरेव निरस्ता । एवं च प्रैषपाठः परिधीनामपि संमार्गं बोधयितुं, संमृष्ट इत्येकवचनमग्नेरेव संमार्गो न परिधीनामिति बोधयितुमित्येवं पक्षद्वयं सिद्धं भवति । परिधीनां संमार्गाभावपक्षेऽग्निमग्नीत्रिः संमृड्ढीति प्रैषः श्रुतौ स्रुवेणाऽऽघारमाघार्य तिस्रः पराचीराहुतीर्हुत्वेत्यनुक्रमणात्संमार्गप्रवरणाविधान एतयोर्निवृत्तिः स्यात्सा मा भूदित्येतदर्थमुभयोर्विधानम् । स्रुवाघारो ध्रुवाप्यायनान्तः । प्रवरं प्रवृणीते यथा महापितृयज्ञ इत्येकं सूत्रम् । यथा महापितृयज्ञे सीद होतरित्येतावान्प्रवर इत्यत्रत्येनैतावच्छब्देन यथाऽऽर्षेयहोतृवरणनिवृत्तिः क्रियते तद्वदत्रापीत्यर्थः । सीद होतरित्युक्त्वेति पुनरनुवादो ध्रुवाया अष्टौ जुह्वां गृह्णातीत्यनेन कालाव्यवधानार्थः। ध्रुवाया इत्यनन्तरमाज्यमिति शेषः । ध्रुवासंबन्ध्याज्यमष्टौ, अष्टवारं जुह्वां गृह्णाति उपभृति चतुः, चतुर्वारं गृह्णाति । जुह्वां ग्रहणेष्वेवाऽऽप्यायनं नोपभृति ग्रहणेषु । ध्रुवायां नावशेषयेत् । पञ्चावत्तिनस्तु दशकृत्वः पञ्चकृत्वश्च यथाक्रमं स्रुचोर्गृह्णाति ।

सादयति स्रुचौ होताऽऽदापयति ।

याजुषहौत्रसत्त्वे याजुषहोत्रैव । आदापयतीति पदच्छेदः । णिजन्तमिदम् । अध्वर्युमिति शेषः । सीद होतरित्यनेन प्रवरवाक्येने(णे)दमपि ज्ञायते होतुरेतावत्पर्यन्तं तिष्ठतैव तत्र तिष्ठत एवोपवेशनमिति । स्रुचाविति देहलीदीपन्यायेनोभयत्रान्वेति । अत्र जुहूपभृतोः स्रुचोः सादनं तूष्णीमेव ध्रुवासादनोत्तरं तयोः समन्त्रकासादनस्यानुचितत्वात् ।

घृतवतीमध्वर्यो स्रुचमास्यस्वे त्युच्यमाने जुहूपभृतावादाय सकृदतिक्रान्तास्तिस्रो देवता यजति ।

दक्षिणेति शेषः । तथैवाऽऽपस्तम्बोऽपि पठितवान् । उच्यमान इति वर्तमाननिर्देशादेतद्वाक्योच्चारणसमकालं स्रुचोरादानम् । स्रुचौ होताऽऽदापयतीत्येतावतैव प्रकृतिप्राप्ते घृतवतीमध्वर्यो स्रुचमास्यस्वेत्युच्यमाने जुहूपभृतोरादाने सिद्धेऽत्र वचनं केवले घृतवतीशब्द एवाऽऽदानमन्त्राप्यापस्तम्बेनोक्तं तद्वारयितुम् । एतेन प्रयाजार्थमेव स्रुगादापन-

मित्याश्वलायनादीनां मतमपि निरस्तं भवति । प्रतियागमतिक्रमणं वारयितुं सकृदिति-वचनम् । स्पष्टोऽर्थः । अत्र पञ्चहोतारं वदेद्यजमानः ।

उत्तरतः प्रथमायाः पुरोनुवाक्याः संप्रेष्यति दक्षिणत इतरयोः ।

सकृदतिक्रमणं यागत्रयार्थं विहितं तत्र प्रथमयागक्रियासंबन्धिपुरोनुवाक्यासंप्रैषस्याप्यतिक्रमणोत्तरमेव कर्तव्यताप्रसक्ताविदं वचनमुत्तरतः प्रथमायाः पुरोनुवाक्याः संप्रेष्यतीति । सकृदतिक्रान्त इति वचनात्सर्वयागोत्तरं प्रत्याक्रमणविधानाच्च सर्वयागार्थमतिक्रान्तस्य मध्ये प्रत्याक्रमणासंभवेनार्थादुत्तरयागद्वयार्थपुरोनुवाक्यासंप्रैषयोर्दक्षिणतः सिद्धाविदं वचनं सर्वयागार्थमतिक्रान्तस्य मध्ये प्रत्याक्रमणासंभवेऽपि अग्रेणाऽऽहवनीयं पुरोनुवाक्यासंप्रैषार्थमुत्तरत आगत्य प्रैषं दत्त्वाऽग्रेणाऽऽहवनीयं दक्षिणतो गत्वाऽऽश्रावणादि अग्रेणाऽऽहवनीयं पुरोनुवाक्यासंप्रैषार्थमुत्तरत आगतस्यापि प्रत्याक्रमणं तत्र भवति । येन मार्गेण गतस्य तेनैव मार्गेणाऽऽगमने प्रत्याक्रमणव्यवहारात् । क्रमु पादविक्षेप इति धातोर्वेदिमुल्लङ्घ्य पादविक्षेप एव शक्तेश्च । नह्यग्रेणाऽऽहवनीयमुत्तरतो गमनमाहवनीयाग्निप्रदेशोल्लङ्घनविशिष्टपादविक्षेपरूपं किंतु शुद्धं गमनमेव । अतः सकृदतिक्रमणविरोधाभावादुत्तरतो दक्षिणतो वेत्यनियमः स्यात्तं वारयितुं दक्षिणत इतरयोरिति । उत्तरतो वेदेरुत्तरतः । प्रथमाया यागक्रियाया देवताया इति वा । पुरोऽनुवक्ति देवताह्वानार्थं होतेति पुरोनुवाक्या । ह्वयति वै पुरोनुवाक्ययेति श्रुतेः । पुरो देवतायै यागं प्रवक्तीति वा पुरोनुवाक्या । प्रैवैनं पुरोनुवाक्ययाऽऽहेति श्रुतेः । प्रथमायाः पुरोनुवाक्यां प्रथमायाः पुरोनुवाक्यावक्तारमित्यर्थः । अथवा प्रथमायाः पुरोनुवाक्यामित्यनन्तरं वक्तुं होतारमित्यध्याहारः । चतुर्थ्यर्थे वा द्वितीयाऽत्र द्रष्टव्या ।

यज्जुह्वामाज्यं तस्यार्धेनाग्निं यजत्यर्धेन सोमम् ।

स्पष्टम् ।

यदुपभृति तज्जुह्वामानीय तेन विष्णुम् ।

तज्जुह्वामानीयेति वचनं सर्वानयनार्थं बिन्दुमात्रमपि नावशेषयेदित्येतदर्थम् । यज्जुह्वामानीतं तेनेत्यर्थः । तेनेतिवचनं पूर्वसूत्रादर्धेनेत्यस्यानुवृत्त्याऽर्धेन विष्णोर्यागोऽर्धेनोपसदाहुतिरिति शङ्का स्यात्सा मा भूत्किंतु औपभृतेन जुह्वामानीतेन सर्वेणैव विष्णोर्यागः स्यादित्येतदर्थम् । उपांशुयाजविकारत्वात्सर्वेषां दब्धिरसीत्यनुमन्त्रणम् । प्रत्यक्संस्थमेतद्यागत्रयम् । तिस्रः पराचीराहुतीर्हुत्वेति श्रुतेः । आहुतीनां होम इति सूत्रं बौधायनस्य प्रतीचीरेवैता आहुतीः संस्थापयेदिति शालीकिरिति द्वैधात् । पूर्वार्धे मध्ये पश्चादिति कल्पसूत्रे स्पष्टोक्तेश्च । संस्थापनं समापनम् । श्रुतौ द्वैधे चाऽऽहुति-

शब्देन वषट्कारकरणक्रिया ज्ञेया । याजुषहौत्रसत्त्वेऽपि आश्वलायनीय एव पाठो याज्यानुवाक्यानाम् ।

**प्रत्याक्रम्य या ते अग्नेऽयाशया तनूरिति स्रुवेणोपसदं जुहोति ।**

उपसदमित्याहुतिसमाख्यातामाज्यस्थाल्याज्येन जुहोति या ते अग्नेऽयाशया तनूरित्यत्र तनूशब्दप्रदर्शितानुषङ्गबोधितसानुषङ्गरजाशयाहराशयात्मकं मन्त्रद्वयं मिलित्वा मन्त्रत्रयं भवति । तथा च या ते अग्नेऽयाशयेतिप्रतीकसूचितमन्त्रैरेकैकेनैकैकामुपसदं जुहोतीत्यर्थः । स्रुवग्रहणं जुह्व्यावृत्त्यर्थम् । अपावधीं९ स्वाहेत्यन्तो मन्त्रः । अत्र पठित एव स्वाहाकारः । तनूरित्यनुषङ्गप्रदर्शनार्थं जैमिनिनाऽपि द्वितीयाध्याये प्रथमे पादेऽनुषङ्गो वाक्यपरिसमाप्तिः सर्वेषु तुल्ययोगित्वादित्यनेन सूत्रेणानुषङ्ग उक्तः सूत्रार्थस्तु वाक्यस्य परिसमाप्तिः पर्यवसानं येन सोऽनुषङ्गो भवति । सर्वेषु शेषिषु तुल्ययोगित्वादन्वयकारणसाम्यादिति । इष्टिसंबन्धित्वादैष्टिकमेवाऽऽज्यम् । अपूर्वाज्यमिति तु भाष्यकारः । तत्र मूलं चिन्त्यम् । प्रतिपत्तिकर्माणि कृताकृतानीत्युक्तमेव । अन्यत्तन्त्रं सर्वं निवर्तत एव । अननुक्रमणात् । ब्राह्मणे च तिस्र एव सामिधेनीरनूच्येत्यादिना यावदुक्तेन परिसंख्यानाच्च । अत एवाङ्गलोपनिमित्तकप्रायश्चित्तान्यप्यन्तरा पतितानि निवर्तन्ते । तथाच बौधायनः—कर्मान्ते संत्वरमाणा इवोपसद्भिः प्रचरेयुर्नाकृतमाद्रियेरन्निति । अनेन द्रुतैवात्र वृत्तिर्भवति नतु मध्यमेति प्रदर्शितं भवति । प्रधानसंबन्धिप्रायश्चित्तं तु भवत्येव । तत्संबन्ध्याहुतिस्तु आज्यस्थाल्याज्येनैव ।

**मदन्तीभिः पाणीन्प्रक्षालयन्ते ब्रह्मा राजानं विस्रꣳसयत्याप्याययन्ति निह्नुवते च यथा पुरस्ताद्दक्षिणोत्तानैः पूर्वाह्णे सव्योत्तानैरपराह्णे ।**

पाणिप्रक्षालनं विस्रंसनमाप्यायनं निह्नवनं च यथा पुरस्तादित्येवं लाघवेन वक्तव्ये पाणिप्रक्षालनविस्रंसनयोः पुनर्विधानं तानूनप्त्रोत्तरकालिकं पाणिप्रक्षालनं विस्रंसने ब्रह्मकर्तृकत्वं चानित्यमितिज्ञापनार्थम् । अथवा मदन्तीभिः पाणीन्प्रक्षालयन्त इति पुनर्विधानमत्र मदन्त्यो भिन्ना एव नाऽऽतिथ्यायां याः कृतास्ता एवेति ज्ञापनार्थम् । ब्रह्मा राजानं विस्रꣳसयतीत्येतद्वचनप्रयोजनं त्वनन्तरोक्तमेवेति । मदन्त्यस्तप्ता आपः । ब्रह्मत्वविधेरवसरख्यापनार्थमत्र वचनम् । यथा पुरस्तादितिवचनं तत्तन्मन्त्रप्राप्त्यर्थम् । दक्षिणा उत्ताना येषां सव्यानां तैः सव्या उत्ताना येषां दक्षिणानां तैः । अग्नीन्मदन्त्याऽऽपा३ इत्याद्यत्रापि । तथाचाऽऽपस्तम्बः—अग्नीन्मदन्त्याऽऽपा३ इत्येदाद्यानिह्नवात्कृत्वेति ।

**अग्नीदेवपत्नीर्व्याचक्ष्व सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति संप्रेष्यति ।**

स्पष्टम् ।

अग्नीद्देवपत्नीर्व्याचक्ष्वेतिप्रैषोत्तरं देवपत्नीव्याख्यानं कर्तव्यं तत्कथमित्याकाङ्क्षायामाह—

**वाग्वायोः पत्नीत्यपरेण गार्हपत्यमुपविश्याऽऽग्नीध्रो देवपत्नीर्व्याचष्टे सेनेन्द्रस्य धेनेति वा ।**

अपरेण गार्हपत्यं गार्हपत्यस्य समीपेऽदूर एवोपविश्याऽऽसित्वा देवपत्नीर्देवपत्नीप्रतिपादकान्मन्त्रान्व्याचष्टे । ते च सेनेन्द्रस्येत्यनुवाकोपात्ताः । व्याख्यानं वाक्यशः पाठः । धेनेति वेत्येतदनन्तरं ब्रूयादित्येव शेषः । तथा च संततं ब्रूयादित्यर्थो भवति । व्याचष्ट इत्यस्यानुवृत्तौ तु तस्य संततपाठपरतया पक्षद्वयविरोधापत्तेः । अथ वा व्याचष्ट इत्यस्यैव संततपाठपरता लक्षणयाऽङ्गीकर्तव्या । अध्याहारापेक्षया लक्षणाया लघुत्वात् । यत्र व्याचष्ट इति उक्तिस्तत्र वाक्यशः पाठ एव । यत्र च सूत्रकृता वाक्यशः पठितस्य मन्त्रस्य सांतत्येन पाठः कृतस्तत्र सांतत्यमेव । अन्यत्र तु अनियम इत्युपोद्धातोक्तप्रकारेणात्रापि विकल्पसिद्धाविदं वचनमिदं ज्ञापयति यत्र कृत्स्नानामनुवाकोपात्तानां मन्त्राणामेकत्र विनियोगस्तत्रानियमश्चेदत्रैव नान्यत्र, परमानानुवाकादिमन्त्रोपात्तविनियोगे तु वाक्यश एव पाठो नियत इति । सेनेन्द्रस्य धेना बृहस्पतेः पथ्या पूष्णो वाग्वायोर्दीक्षा सोमस्य पृथिव्यग्नेर्वसूनां गायत्री रुद्राणां त्रिष्टुगादित्यानां जगती विष्णोरनुष्टुग्वरुणस्य विराड्यज्ञस्य पङ्क्तिः प्रजापतेरनुमतिर्मित्रस्य श्रद्धा सवितुः प्रसूतिः सूर्यस्य मरीचिश्चन्द्रमसो रोहिण्यृषीणामरुन्धती पर्जन्यस्य विद्युच्चतस्रो दिशश्चतस्रोऽवान्तरदिशा अहश्च रात्रिश्च कृषिश्च वृष्टिश्च त्विषिश्चापचितिश्चाऽऽपश्चौषधयश्चोर्क्च सूनृता च देवानां पत्नय इत्येवं सांतत्येन वा पाठः ।

सुब्रह्मण्यस्य कर्माऽऽह—

**सुब्रह्मण्यः सुब्रह्मण्यामाह्वयति ।**

सुब्रह्मण्योमितिनिगदाध्यूढसामप्रवक्ता सुब्रह्मण्यः स सुब्रह्मण्यामाह्वयति सुब्रह्मण्याख्यनिगदाध्यूढसाम्नेन्द्रमाह्वयतीत्यर्थः । सुब्रह्मण्यादिशब्दैरिन्द्रमामन्त्रयते सुत्यार्थमिति यावत् । इन्द्राह्वानार्थं सुब्रह्मण्याख्यनिगदाध्यूढं साम ब्रूयादित्यर्थो वा । सुब्रह्मण्येति सुब्रह्मण्योमित्येतन्निगदोत्पन्नसामसंज्ञेयम् । स्त्रीलिङ्गनिर्देशस्तु सुब्रह्मण्याख्यसामरूपवाग्विशेषणत्वेन । वाग्वै सुब्रह्मण्येति बह्वृचश्रुतेः । सुब्रह्मण्याह्वानदेशमाहाऽऽपस्तम्बः— उत्करे सुब्रह्मण्यामाह्वयति पूर्ववेदेनां यजमानोऽनुमन्त्रयत इति । पूर्वद्वारस्य दक्षिणद्वार्बाहोः पुरस्तात्तिष्ठन्निति लाट्यायनद्राह्यायणौ । तत्कर्म तदीयसूत्रतो ज्ञेयम् ।

**अनूपसदमेतानि क्रियन्ते ।**

उपसदमुपसदमनु इत्यनूपसदं प्रत्युपसदमेतानि कर्माणि कर्तव्यानीत्यर्थः ।

एवं त्रिरात्रꣳ सायंप्रातः प्रवर्ग्योपसद्भ्यां प्रचरति ।

एतावता सामान्यत उपसत्प्रयोगः कथितः। अधुना प्रवर्ग्योपसत्संख्या तद्दिवससंख्या चोच्यते—तिसृणां रात्रीणां समाहारस्त्रिरात्रम् । अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेरिति सूत्रे चकारेण तत्पुरुषस्याङ्गुलेः संख्याव्ययादेरिति पूर्वसूत्रस्थसंख्यानुवृत्तिलाभेन संख्योत्तरभूतरात्रिशब्दादच्प्रत्ययः। द्विगुरेकवचनमित्येकवद्भावः। द्विग्वर्थे समाहारे स नपुंसकमिति नपुंसकत्वम्। द्विगुस्तु संख्यापूर्वः समासः संख्यापूर्वो द्विगुरिति सूत्रात्। अत्र रात्रिशब्दो दिवसपरः सायंप्रातःशब्दसमभिव्याहारेण । नन्वेवं त्र्यहमित्येव वक्तव्यं लाघवात्। ऋजुमार्गेण सिध्यतो वंक्रणायोगाच्च, तथा च त्रिरात्रमित्येवं वचनं किमर्थमिति चेत्सत्यम्। उपसदिष्टे रात्रौ क्रियायामपि दोषाभावं ज्ञापयितुं तथोक्तेरावश्यकत्वेन वैयर्थ्याभावात्। दोषस्तु दिवाकीर्त्यो वषट्कार इत्याश्वलायनसूत्रसिद्धः। प्रवर्ग्यस्य तु अनारब्धत्वेऽपि रात्रौ प्रचार इत्ययमर्थस्तु प्रवर्ग्यसूत्रे वक्ष्यमाणेन ज्ञापकेनैव सेत्स्यति । योऽयमुक्तः प्रयोगः स उपस्थितत्वात्प्रातःकालसंबन्धी भवति । स एवेतरेष्वपि प्रयोगेषु भवति । तत्र सायंशब्दस्योक्तप्रातःकालसंबन्धिप्रयोगोत्तरं तस्यैवोपस्थितेः प्रथममुपादानम् । प्रथमेऽहनि सायं द्वितीयेऽहनि प्रातः सायं च तृतीयेऽहनि प्रातः सायं च । एवमुक्तेन प्रकारेण प्रवर्ग्यश्चोपसच्च प्रवर्ग्योपसदौ ताभ्यां प्रचरतीत्यर्थः। अध्वर्योर्मुख्यत्वात्तमभिप्रेत्यैकवचनम् ।

सुपूर्वाह्णे पौर्वाह्णिकीभ्याꣳ स्वपराह्ण आपराह्णिकीभ्याम् ।

प्रवर्ग्योपसद्भ्यां प्रचरतीत्यनुषज्यते । सुष्ठु पूर्वाह्णः सुपूर्वाह्णः । सुष्ठु अपराह्णः स्वपराह्णः । सुपूर्वाह्णशब्देन पूर्वाह्णपूर्वार्धात्मकः कालो गृह्यते । स्वपराह्णशब्देनापराह्णोत्तरार्धात्मकः कालो गृह्यते । तत्राप्युदयोत्तरं घटिकाद्वयमस्तात्पूर्वं घटिकाद्वयं त्याज्यम्। अत्र द्वेधा त्रेधा वा विभागः। पूर्वाह्णे भवे पौर्वाह्णिक्यौ। आपराह्णे भवे आपराह्णिक्यौ ।

उपसदाहुतिव्यवस्थामाह—

या ते अग्नेऽयाशया तनूरिति प्रथमेऽहनि सायंप्रातः स्रुवप्रदानां जुहोति ।

प्रातश्च सायं चेति सायंप्रातरित्येवमेव विग्रहः। धर्मादिष्वनियम इति वार्तिकादयं साधुः। धर्मादिराकृतिगणः। उभयकालवाचिशब्दयोः सह संप्रयोगे सायंशब्दस्यैव बाहुल्येन प्रथमं प्रयोगः। तत्राग्निहोत्रहोमादौ यथास्थितमेव। तत्र सायमारभ्यैवोपक्रमो दृश्यते। वैश्वदेवे तु अथ सायंप्रातः सिद्धस्य हविष्यस्य जुहुयादित्याश्वलायनेन सायंप्रातरित्युक्तेऽपि प्रमाणान्तरानुरोधेन प्रातरारभ्यैवोपक्रमो दृश्यते । प्रकृतेऽपि

---

१ ख. वक्रेणा° ।

प्रातरारभ्यैवोपक्रमात्तदनुरोधेनैव प्रातःसायं प्रवर्ग्योपसद्भ्यां प्रचरतीत्येवं वक्तव्ये सामान्यतो निर्देशो व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षणमिति परिभाषां ज्ञापयति। तेनाग्निकार्ये उपस्थितिरूपव्याख्यानात्सायमुपक्रमस्यैव विशेषप्रतिपत्तिः। वैश्वदेवे दिवाचारिभ्य इति दिवा नक्तंचारिभ्य इति नक्तमिति। दिवानक्तं बलिमिच्छन्त इति प्रातःसायंपरयोर्दिवानक्तंपदयोः क्रमदर्शनरूपव्याख्यानात्प्रातरुपक्रमस्यैव विशेषप्रतिपत्तिः। अग्निहोत्रेऽग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेतिमन्त्रक्रमदर्शनरूपव्याख्यानात्सायमुपक्रमस्यैव विशेषप्रतिपत्तिः। प्रकृते *यद्यप्युभयथाऽपि क्रमो दृश्यते तत्राग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेत्येवं मन्त्रक्रमः, स्वाहा त्वा सूर्यस्य रश्मिभ्य इति प्रातः सꣳसादयति स्वाहा त्वा नक्षत्रेभ्य इति सायमित्येव मन्त्रविशेषविनियोगक्रमः। सुपूर्वाह्णे पौर्वाह्णिकीभ्याꣳ स्वपराह्ण आपराह्णिकीभ्यामित्येवं कालविधिक्रमः। तत्र सायमुपक्रमसाधकलिङ्गापेक्षया प्रातरुपक्रमसाधकलिङ्गाधिक्यरूपव्याख्यानाद्विशेषप्रतिपत्तिः प्रातरुपक्रमस्यैवेति परिभाषाप्रयोजनम्। तेन प्रकृते बहुदर्शनानुरोधेन सायंप्रातरिति पठितेऽपि प्रातःसायमित्येव क्रमः सिध्यति। तनूरित्यनुषङ्गप्रदर्शनार्थम्। उपसदाहुतिविधायकेन पूर्वसूत्रेण व्यवस्थाया असिद्धत्वात्तदर्थमिदं सूत्रम्। स्रुवेणैव प्रदानं यस्याः सा स्रुवप्रदाना तां स्रुवप्रदानां स्त्रीलिङ्गद्वितीयैकवचनान्तमिदं पदम्। उपसदाहुतेरियं संज्ञा, योगरूढं पदम्। स्रुवाहुतिं जुहोतीत्येव प्रसिद्धत्वाद्वक्तव्ये स्रुवप्रदानामित्येवं वचनं(ने) कश्चिदत्र विशेषोऽस्ति। स चेषुप्रक्षेपणक्रियानुकरणरूपः। तथा च सूत्रान्तरम्—इषुप्रक्षेपणमिव या ते अग्नेऽयाशया तनूरिति स्रुवेणोपसदाहुतिं जुहोतीति। प्रथमेऽहनि प्रथमोपसद्दिवसे या ते अग्नेऽयाशया तनूरिति मन्त्रेण प्रातःसायंकालिकप्रथमोपसत्प्रयोगयोः स्रुवप्रदानां जुहोतीत्यर्थः।

**या ते अग्ने रजाशयेति द्वितीये।**

अहनि सायंप्रातः स्रुवप्रदानां जुहोतीत्यनुवर्तते। द्वितीयेऽहनि द्वितीयोपसद्दिवसे या ते अग्ने रजाशया तनूरितिमन्त्रेण प्रातःसायंकालिकद्वितीयोपसत्प्रयोगयोः स्रुवप्रदानां जुहोतीत्यर्थः। पूर्वमन्त्रे तनूरित्यनुषङ्गप्रदर्शनादत्राप्यनुषङ्गोऽर्थाद्दर्शित एव भवति।

**या ते अग्ने हराशयेति तृतीये।**

अत्राप्यहनीत्यादिकमनुवर्तते। तृतीयेऽहनि तृतीयोपसद्दिवसे या ते अग्ने हराशया तनूरिति मन्त्रेण प्रातःसायंकालिकतृतीयोपसत्प्रयोगयोः स्रुवप्रदानां जुहोतीत्यर्थः। अस्मिन्मन्त्रेऽनुषङ्गः पठित एव श्रुतौ।

---

* यद्यपीत्यसंबद्धम्।

यदि पुरो युध्येयुरयः प्रथमायामवधाय जुहुयात् ।

यदि क्षत्रियस्य यजमानस्यामित्राणां पुरः पुराणि स्वेन सह युध्येयुः पुराणि शत्रवः कामयेयुर्वा तदाऽयः कालायसं प्रथमोपसदाहुत्यर्थाज्येऽवधाय प्रक्षिप्य या ते अग्नेऽयाशया तनूरित्याहुतिं जुहुयात् ।

रजतꣳ हिरण्यं मध्यमायाम् ।

* मध्यमायां मध्यमायां मध्यमोपसदाहुत्यर्थाज्ये रजतात्मकं हिरण्यमवधाय या ते अग्ने रजाशया तनूरित्याहुतिं जुहुयात् । हिरण्यपदवाच्यत्वं रजतेऽप्यस्तीति प्रदर्शयितुं हिरण्यवचनम् । सर्वꣳ हिरण्यꣳ रजतं तद्दुर्वर्णꣳ हिरण्यमभवदित्यादीनि लिङ्गान्यपि सन्ति । दुर्वर्णशब्दो रजतवाची । हिरण्यशब्दस्य हेमरजतोभयवाचित्वात्किंजातीयमत्र हिरण्यं ग्राह्यमिति शङ्का स्यात्तां दूरीकर्तुं रजतवचनम् ।

हरितमुत्तमायाम् ।

उत्तमायामुत्तमोपसदाहुत्यर्थाज्ये हरितमवधाय या ते अग्ने हराशया तनूरित्याहुतिं जुहुयात् । हरितशब्दः सुवर्णवाच्येव । सर्वꣳ सुवर्णꣳ हरितमिति मन्त्रलिङ्गात्, तेभ्यो हरिते पात्रे सोममदुहदिति लिङ्गाच्च ।

यदि सङ्ग्रामं युध्येयुरित्येकेषाम् ।

यदि क्षत्रियस्य यजमानस्य शत्रवः सङ्ग्रामं युध्येयुः सङ्ग्रामं कुर्युस्तदाऽयं विधिरित्येकेषामाचार्याणां मतमित्यर्थः ।

अयज्ञसंयुक्तः कल्पः ॥ १३ ॥

यद्युपायान्तरं नैव विद्यते तदा यज्ञसंयुक्तत्वम् । उपायान्तरसत्त्वे त्वेतस्य यज्ञसंयुक्तत्वं नैव भवतीत्यर्थः । अयमर्थः समुपसर्गबलाल्लभ्यते ।

मध्यमाभ्यां पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्याग्रेण प्राग्वꣳशं त्रीन्प्राचः प्रक्रमान्प्रक्रम्य शङ्कुं निहन्ति स पश्चार्धे वेदेः ।

प्रचर्येति ल्यपा वेदिविमानाव्यवहितोत्तरत्वं बोध्यते । तेन व्रतप्रदानमुदुम्बरशाखाभिश्छन्नां परिवासयतीत्येतदनन्तरमेव । प्राग्वंशस्य पूर्वप्रान्तभवोदक्सूत्रपृष्ठ्यासूत्रयोर्यः संपातस्तत्रस्थाच्छङ्कोस्त्रिषु प्रक्रमेष्वतीतेषु पृष्ठ्यासूत्रानुगुण्येन शङ्कुं निहन्ति, स शङ्कुर्वेदेः पश्चार्धे पश्चिमप्रान्तभवोदक्सूत्रपृष्ठ्यासूत्रयोर्यः संपातस्तत्र देयः, स मध्यमो भवति । अत्रैव वेदकरणम् । वेदिविमानात्पूर्वमेव पशौ दृष्टत्वात् ।

विमिमे त्वा पयस्वतीं देवानां धेनुꣳ
सुदुघामनपस्फुरन्तीमिन्द्रः सोमं पिबतु

* इदं पदमधिकम् ।

**क्षेमो अस्तु न इति षट्त्रिंशत्प्राचः प्रक्रमान्प्रक्रम्य शङ्कुं निहन्ति स पूर्वार्धे ।**

वेदेरित्यनुवर्तते । प्रथमनिखाताच्छङ्कोरारभ्य षट्त्रिंशत्प्राचः प्राक्संस्थान्प्रक्रमान्प्रक्रम्य वेदेः पूर्वार्धे पूर्वप्रान्तभवोदक्सूत्रप्राक्सूत्रयोर्यः संपातस्तत्र शङ्कुं निहन्ति स वेदेः पूर्वार्धे मध्यमो भवति । सकृदेव मन्त्रः ।

**पश्चार्ध्याच्छङ्कोः पञ्चदश दक्षिणतः पञ्चदशोत्तरतः प्रक्रम्य शङ्कू निहन्ति ते श्रोणी पूर्वार्ध्याच्छङ्कोर्द्वादश दक्षिणतो द्वादशोत्तरतः प्रक्रम्य शङ्कू निहन्ति तावंसौ ।**

प्रक्रम्येत्यतः पूर्वं प्रक्रमानिति पूर्वसूत्रादनुवर्तते । शुल्बसूत्रेणैव माने सिद्धेऽत्र वचनं श्रोण्यंसमानेष्वपि मन्त्रप्राप्त्यर्थम् । एतस्य सूत्रस्य स्वतन्त्रमानविधानार्थत्वे शुल्बसूत्रोक्तप्रकारं विनाऽऽनैवासंभवेनासंगत्यापत्तेः । तेन पञ्चदश दक्षिणत इत्यत्राऽऽदौ मन्त्रेणैकं प्रक्रमं प्रक्रम्य तूष्णीमितरान्प्रक्रामति मन्त्रजन्यादृष्टलाभाय । एवं पञ्चदशोत्तरत इत्यत्रापि द्वादश दक्षिणतो द्वादशोत्तरत इत्यत्रापि च । एवं च पृथ्व्यां श्रोणिद्वयमंसद्वयं मिलित्वा पञ्चवारं मन्त्रावृत्तिः सिद्धा भवति । पश्चार्धे भवः पश्चार्ध्यस्तस्मात् । पूर्वार्धे भवः पूर्वार्ध्यस्तस्मात् । दिगादित्वाद्यत्प्रत्ययः । पश्चार्धात्पूर्वार्धादित्यपपाठ एव । शुल्बसूत्रे त्रिंशत्पदानि प्रक्रमा वा पश्चात्तिरश्ची भवति षट्त्रिंशत्प्राची चतुर्विंशतिः पुरस्तात्तिरश्चीति सौमिक्या वेदेर्विज्ञायत इति । एतस्मात्सूत्राद्वेदिमाने पदान्यपि प्रक्रमैर्विकल्पन्ते । तत्र पदस्यानेकविधत्वमुक्तं शुल्बसूत्रे-पदे युगेऽरत्नावियति शम्यायां च मानार्थेषु याथाकामी शब्दार्थस्य विशयित्वादिति । विशयित्वात्, अनेकविधत्वादित्यर्थः । पदं दशाङ्गुलमिति बौधायनः । दशाङ्गुलं क्षुद्रपदमित्यपि सः । द्वादशाङ्गुलं पदमिति कात्यायनः । एतानि त्रिविधानि पदानि लौकिकपदेन विकल्पन्ते । एतान्येव द्विगुणानि त्रिगुणानि वा प्रक्रमा एनेन प्रक्रममानेनैव सप्तविधाग्निचित्ये सोमे मानम् । पदैर्मानं तु नात्र भवति । तत्राग्निक्षेत्रासंभवात् । एवं सप्तविधेऽग्नौ विंशत्यङ्गुलवृद्धिर्व्याख्याता । साग्निचित्ये तु सर्वेषामेव पदप्रक्रमाणामिच्छया विकल्प इति केचित् । अन्ये पुनरेवं व्यवस्थामिच्छन्ति पदैश्चतुर्विधैर्विंशत्यङ्गुलेन वा प्रक्रमेण मानमग्निचित्ये । एकविधेऽग्नौ विंशत्यङ्गुलेन द्विविधादिषु पञ्चविधपर्यन्तेषु चतुर्विंशत्यङ्गुलेन षड्विधादिषु द्वादशविधपर्यन्तेषु त्रिंशदङ्गुलेन लौकिकेन वा द्विपदेन त्रयोदशादिषु षट्त्रिंशदङ्गुलेनेत्यादिषु सर्वेषामपि पक्षे येऽग्नयः पञ्चचत्वारिंशदङ्गुलेन प्रक्रमेण संभवन्ति तत्राग्न्यनुगुणा वेदेर्वृद्धिः कार्या यूपैकादशिन्यां तस्य प्रदर्शितत्वात् । यथा पञ्चाशद्विधेऽग्नौ षट्पञ्चाशदङ्गुलो दण्डः प्रक्रमस्थानीयः,

---

१ ख. ग एनेन ।

एकशतविधेऽशीत्यङ्गुल इत्यादि । तां शौल्बेन विधिना मीत्वा तत्र तत्र शङ्कून्नि-
हन्ति स्पन्द्यावेष्टनार्थम् ।

अक्ष्णया मानेन संपाद्य प्रदक्षिण१ स्पन्द्यया पर्यातनोति ।

अक्ष्णया कोणसाधिन्या रज्ज्वा युक्तं मानं तच्छुल्बोक्तप्रकारेणैकरज्जुसाध्य-
मनेकरज्जुसाध्यं वा तेन मानेन वेदिं संपाद्य स्पन्द्या रज्जुस्तया चतुर्षु कोणेषु
निहितेषु शङ्कुषु प्रदक्षिणं सर्वतः पर्यातनोति परिवेष्टयतीत्यर्थः । वेदिक्षेत्रमिति
शेषः । अक्ष्णयेत्यव्ययम् । अत्रापि प्रादक्षिण्यवाची न भवति तस्य परिभाषयैव
सिद्धेः किंत्वानुकूल्यवाची । अस्मिन्नर्थे प्रमाणं प्राग्दर्शितमेव । तेन वेदिप्रान्तप्रदेश-
प्रज्ञातत्वानुकूलं यथा भवति तथा दृढं पर्यातनोतीति सिद्धं भवति ।

अन्वातनोति पृष्ठ्याम् ।

यद्यपि वेदिसाधनार्थं पूर्वमेव पृष्ठ्यासूत्रं दत्तमेव तथाऽपि तस्याः प्रयोजनसत्त्वं
सूच्यते । तस्या वेदिविमानोत्तरं विनाशे पुनरपि पृष्ठ्यासूत्रं देयमेव तत्प्रयोजनं संतत-
मनुपृष्ठ्यं बर्हिः स्तीर्त्वेति । पृष्ठशब्दो मध्यवाची । पृष्ठे भवा पृष्ठ्या रज्जुः । दिगा-
दित्वाद्यत्प्रत्ययः । अक्ष्णया मानेन संपाद्येत्यनेन विहरणं प्रदर्शितं तत्प्रकाराः
शुल्बसूत्रे त्रिकचतुष्कयोः पञ्चिकाऽक्ष्णया रज्जुस्ताभिस्त्रिरभ्यस्ताभिरंसौ चतुरभ्यस्ताभिः
श्रोणी इति । त्रिकचतुष्कयोस्तिर्यक्पार्श्वमान्योस्ताभिस्त्रिकचतुष्कपञ्चिकाभिस्त्रिवार-
मभ्यस्ताभिरुपरि क्षिप्ताभिरंसौ भवतः । चतुर्वारमभ्यस्ताभिः श्रोणी भवतः । यथा त्रिका
त्रिरभ्यस्ता द्वादशिका चतुष्का त्रिरभ्यस्ता षोडशिका पञ्चिका त्रिरभ्यस्ता विंशिका ।
एताभिस्त्रिभिरभ्यस्ताभिर्द्वादशिकया षोडशिकया विंशिकया चांसौ मातव्यौ ।
एताभिरेव चतुर्भिरभ्यस्ताभिः पञ्चदशिकया विंशिकया पञ्चविंशिकया च श्रोणी
मातव्ये । एवं षड्भी रज्जुभिर्विहरणम् । प्रकारान्तरमुक्तं तत्रैव—द्वादशिकपञ्चिकयोस्त्र-
योदशिकाऽक्ष्णया रज्जुस्ताभिरंसौ द्विरभ्यस्ताभिः श्रोणी इति । अन्यदपि प्रकारान्तर-
मुक्तं तत्रैव—पञ्चदशिकाष्टिकयोः सप्तदशिकाऽक्ष्णया रज्जुस्ताभिः श्रोणी द्वादशिक-
पञ्चत्रिंशिकयोः सप्तत्रिंशिकाऽक्ष्णया रज्जुस्ताभिरंसाविति । अन्यदपि प्रकारान्तरमुक्तं
तत्रैव—षट्त्रिंशिकायामष्टादशोपसमस्यापरस्मादन्ताद्द्वादशसु लक्षणं पञ्चदशसु लक्षणं
पृष्ठ्यान्तयोरन्तौ नियम्य पञ्चदशिकेन दक्षिणाऽऽयम्य शङ्कुं निहन्त्येवमुत्तरतस्ते
श्रोणी विपर्यस्तयांऽसौ पञ्चदशिकेनैवायाम्य द्वादशिके शङ्कुं निहन्त्येवमुत्तरतस्तावंसौ
तदेकरज्ज्वोक्तं विहरणमिति । इदमेकरज्ज्वा विहरणम् । यावदायाममित्युक्तस्य मान-
स्यैवायं प्रपञ्चः । अन्यच्च तत्रैव—एतावन्ति ज्ञेयानि वेदिविहरणानि भवन्तीति । छेद-
रहितानि एतावन्ति भवन्तीत्यर्थः । अन्यच्च तत्रैव—अष्टात्रिंशत्योनपदसहस्रं महावे-
दिरिति । पदग्रहणं प्रक्रमस्याप्युपलक्षणम् । संख्यानोपायोऽपि तत्रैव—दक्षिणस्मादं-

साद्द्वादशसु दक्षिणस्यां श्रोण्यां निपातयेच्छेदं विपर्यस्येतरत उपदध्यात्सा दीर्घचतुरस्रा तथा युक्तां संचक्षीतेति । दक्षिणस्मादंसादारभ्यापरान्त्यपृष्ठ्याया दक्षिणतो द्वादशसु रज्जुं निपातयेत् । दक्षिणतश्छेदं दीर्घत्रिकोणमञ्जसा विपर्यस्योत्तरपार्श्वे उपदध्यात् । सा षट्त्रिंशत्प्राचिका सप्तविंशतिव्यासा दीर्घचतुरश्रा भवति तथा भूतां गणयेत् । सप्तविंशतिषट्त्रिंशतोस्तयोः संसर्गे नव शतानि द्वासप्ततिश्च भवन्ति ।

अथ याज्ञिकानां सुखबोधार्थं कारिकाः क्रियन्ते—

पदैस्तु त्रिविधैर्वेदिः प्रक्रमैर्वाऽपि मीयते ।
आदौ वह्नौ सार्धवेदे सार्धवह्नौ निशाकरे ॥ १ ॥
सार्धचन्द्रे सार्धचन्द्रेऽनलेऽर्धे चन्द्रकेऽर्धके ।
कृष्णवर्त्मनि चार्धे च तथाऽर्धे सार्धचन्द्रके ॥ २ ॥
सार्धवेदे तथाऽर्धे च चन्द्रेऽर्धे सार्धवह्निके ।
अर्धे चेति तु पृष्ठ्यायामेकविंशतिशङ्कवः ॥ ३ ॥
स्युस्तीक्ष्णाग्रा अथ भवेद्रज्जुः सूक्ष्मा दृढा तथा ।
पदैर्द्वादशभिः प्रोक्ता पार्श्वमानी तु मानतः ॥ ४ ॥
तिर्यङ्मानी षोडशभिर्विंशत्याऽक्ष्णा प्रकीर्तिता ।
आदौ च पञ्चमे श्रोणिर्वेदेस्तिथिषु दक्षिणा ॥ ५ ॥
एवमेवोत्तरा श्रोणिर्बुधैर्वेदेः प्रकीर्तिता ।
अथ रज्जुं पार्श्वमानीं पुरस्तात्पश्चिमेऽक्ष्णिकाम् ॥ ६ ॥
कृत्वा विहरणं कुर्यान्महावेद्यंसयोर्बुधः ।
अन्त्ये चतुर्दशे चैव महावेदेस्तु दक्षिणः ॥ ७ ॥
अंसो द्वादशसु प्रोक्त एवमेवोत्तरः स्मृतः ।
अथ पाशौ विपर्यस्य रज्ज्वा विहृतिरुत्तरा ॥ ८ ॥
द्वितीये सप्तमे श्रोणिः सदसो दक्षिणा मता ।
दशस्वथाष्टसु श्रोणिरुत्तरा तस्य कीर्तिता ॥ ९ ॥
तृतीये दशमे दक्षे त्वौदुम्बर्यवटः पदे ।
तुर्ये द्वादशके दक्षे प्रशास्तुर्धिष्ण्यमीरितम् ॥ १० ॥
तदुदग्घोतृधिष्ण्यार्थं दक्षिणं परिकीर्तितम् ।
उत्तरे होतृधिष्ण्यार्धसंलग्नं स्यात्तथाऽर्धकम् ॥ ११ ॥
तदुत्तरे वेदसंख्याः शंसिपोत्रादिधिष्ण्यकाः ।
प्रादेशमात्राः प्रादेशान्तरालाः सर्वधिष्ण्यकाः ॥ १२ ॥
स्यादच्छावाकधिष्ण्यस्य मानं किंचित्ततोऽधिकम् ।
पञ्चमे च मनौ चैव दक्षिणः सदसोंऽसकः ॥ १३ ॥

दशस्वथाष्टसु प्रोक्तः सदसस्तूत्तरोंऽसकः ।
षष्ठे पञ्चदशे धानश्रोणिः पञ्चसु दक्षिणा ॥ १४ ॥
एवमेवोत्तरा श्रोणिर्हविर्धानस्य कीर्तिता ।
अष्टमे षोडशे चैव मार्जालीयं तु दक्षिणे ॥ १९ ॥
तथैवोत्तर आग्नीध्रधिष्ण्यं प्रोक्तं विचक्षणैः ।
प्रदर्श्यते विहरणप्रकार उभयोरथ ॥ १६ ॥
पार्श्वमानीसूत्रमहावेदिदक्षान्तसूत्रयोः ।
संपातादुत्तरे मध्योऽङ्गुलेषु रविषु स्मृतः ॥ १७ ॥
मार्जालीयस्य धिष्ण्यस्य तत्र शङ्कुं नियोजयेत् ।
महावेद्युत्तरप्रान्तपार्श्वमान्याख्यसूत्रयोः ॥ १८ ॥
संपाताद्दक्षिणे मध्योऽङ्गुलेषु रविषु स्मृतः ।
आग्नीध्रीयस्य धिष्ण्यस्य तत्र शङ्कुं नियोजयेत् ॥ १९ ॥
नवमे च सप्तदशे पदे सार्धे च दक्षिणे ।
प्रभञ्जनदिशास्थोपरवमध्यः प्रकीर्तितः ॥ २० ॥
प्रादेशद्वितये तस्मान्मध्यादुपरवस्य तु ।
रक्षोधिपतिदिक्स्थोपरवमध्यः प्रकीर्तितः ॥ २१ ॥
दशमे चाष्टादशे च पदे सार्धे च दक्षिणे ।
अपराजितदिक्स्थोपरवमध्यः प्रकीर्तितः ॥ २३ ॥
प्रादेशद्वितये तस्मान्मध्यादुपरवस्य तु ।
वीतिहोत्रदिशास्थोपरवमध्यः प्रकीर्तितः ॥ २२ ॥
प्रादेशमात्राः प्रादेशान्तराला एत ईरिताः ।
द्वादशे विंशके चैव पञ्चस्वंसस्तु दक्षिणः ॥ २४ ॥
धानस्याथोत्तरांसश्चाप्येवमेव प्रकीर्तितः ।
अथ रज्जुं पार्श्वमानीं पुरस्तात्पश्चिमेऽक्षिणकाम् ॥ २९ ॥
कृत्वाऽग्रिमं विहरणं प्रकर्तव्यं विचक्षणैः ।
विंशके द्वादशे चैव लघुवेद्यास्तु दक्षिणः ॥ २६ ॥
अंसः पञ्चसु संप्रोक्त एवमेवोत्तरः स्मृतः ।
षष्ठे पञ्चदशे चैव लघुवेद्यास्तु दक्षिणा ॥ २७ ॥
श्रोणिः पञ्चस्वथैवं स्याल्लघुवेद्यास्तथोत्तरा ।
रज्ज्वा विपर्यस्तया वाऽपि स्याद्विहरणं त्विदम् ॥ २८ ॥
अणीयसी पुर इति पक्षोऽथात्र प्रदर्श्यते ।
वेदेषु दक्षिणोंऽसः स्यात्तथैवोत्तर ईरितः ॥ २९ ॥

षट्सु श्रोणिर्दक्षिणा स्यादेवमेवोत्तरा मता ।
युगं दशपदायामं नेति केचित्समूचिरे ॥ ३० ॥
त्रिवेदेष्वङ्गुलेष्वस्मिन्मते श्रोणिस्तु दक्षिणा ।
एवमेवोत्तराऽपि स्यादसावप्येवमीरितौ ॥ ३१ ॥
सर्वतो युगमात्री वा स्यात्प्राणीयस्त्वमत्र तु ।
पूर्वार्धशङ्कुस्थाने तु यूपावट उदाहृतः ॥ ३२ ॥
आग्नीध्रीयस्य धिष्ण्यस्य मण्डपोऽथ प्रदर्श्यते ।
वेदेः पदेषु पाश्चात्यशङ्कोरर्केषु तूत्तरे ॥ ३३ ॥
लक्ष्म स्याद्यन्महावेद्या उत्तरांसस्य लक्ष्म च ।
एतयोश्चिह्नयोः सूत्रं तन्मध्येऽपि च लाञ्छनम् ॥ ३४ ॥
महावेद्युत्तरप्रान्तसूत्रमध्येऽपि लाञ्छनम् ।
एतयोरपि सूत्रं स्यादथ पश्चार्धशङ्कुतः ॥ ३५ ॥
कृतं रविषु यल्लक्ष्म तावन्मानं च सूत्रकम् ।
तदुत्तरे प्रदेयं तु तत्र स्पष्टं च लाञ्छनम् ॥ ३६ ॥
महावेद्युत्तरांसात्तु देयं सूत्रमुदक्तथा ।
एतयोरपि सूत्रं स्यात्ततो वेद्यन्तसूत्रके ॥ ३७ ॥
मध्ये कृतादङ्कनात्तु पुरः सार्धद्वये पदे ।
पश्चाच्च लाञ्छनं कार्यं विहृत्य चतुरश्रवत् ॥ ३८ ॥
मण्डपं तत्र संसाध्य कटाद्यैस्तं परिश्रयेत् ।
द्वारं दक्षिणतः कुर्यात्षोडशाङ्गुलविस्तृतम् ॥ ३९ ॥
अथवाऽरत्निविस्तारमथवा द्वारमेव न ।
किंतु दक्षिणतो नैव परिश्रयणमेव तु ॥ ४० ॥
मण्डपस्यर्जुतापक्षे प्रकारोऽयं प्रदर्शितः ।
मण्डपस्य प्रकारोऽथ वक्रतापक्ष ईर्यते ॥ ४१ ॥
महावेद्युत्तरप्रान्तसूत्रमध्ये तु लाञ्छनम् ।
कृत्वा सूत्रानुरोधेन तत्प्राक्सार्धपदद्वये ॥ ४२ ॥
प्रत्यक्चैवापि तद्वत्स्याच्छंस्यायतनवत्ततः ।
वक्रता यादृशी वेद्या महत्यास्तादृशी भवेत् ॥ ४३ ॥
वक्रता मण्डपस्यापीत्येवं पक्षद्वयं स्मृतम् ।
परमानं यदा वेद्यास्तदा तु सदआदिकम् ॥ ४४ ॥
पदमानेनैव भवेदिति प्रोक्तं विचक्षणैः ।
दशाङ्गुलात्मकपदद्वयात्मा प्रक्रमो यदि ॥ ४५ ॥

पदमानेनैव तदा कर्तव्यं सदआदिकम् ।
रवितिथ्यङ्कुलात्मान्यतरात्मा प्रक्रमो यदि ॥ ४६ ॥
सदसोऽरत्निमानं स्याद्धविर्धानस्य चैव हि ।
एतदात्मप्रक्रमेण माने द्वाराणि चैव हि ॥ ४७ ॥
अरत्निमात्राण्येव स्युरित्थं विहृतिरीरिता ।
कारिकाः सुखबोधाय याज्ञिकानां समीरिताः ॥ ४८ ॥

**तां करोति यथा दर्शपूर्णमासयोर्यदन्यत्संनामात् ।**

तां कृतस्पन्द्यावधिकां वेदिं करोति संनमनवर्जम् । यथा दर्शपूर्णमासयोरिति वचनादुद्धननात्प्राग्यः प्रैषः स प्राकृत एव नात्राच्छिद्रप्रपाठकोक्तः प्रैष इति दार्शिकवेदिवदेव पुरस्ताद्द्वितीयदेश उदग्वेदेः स्तम्बयजुर्निवपतीत्युक्तं भवति । स्तम्बयजुरपादानदेशोऽप्यनेनैव व्याख्यातो मध्यमस्य वेदितृतीयस्य पूर्वार्धादिति । तत्रोपरवाणां कालात्स्तम्बयजुर्हरतीति बौधायनः । अत्र कालशब्दो देशवाची । उपरवदेशात्स्तम्बयजुर्हरतीति स्पष्टमाह कात्यायनः । इदं तस्मा इत्यादि संनमनवर्जं खननान्तं करोति ।

**स्फ्येन विघनेन पर्श्वा परशुना च ।**

वेदिं कुर्वन्तीति वचनविपरिणामेन संबन्धः । आपस्तम्बस्त्वेतत्स्पष्टमेवाऽऽह । एतस्य कर्मणो वैशेषिकत्वादत्रैव वैशेषिक आच्छिद्रिकप्रपाठकोक्तः प्रैषो भवति । स यथा— इमां नराः कृणुत वेदिमेत्य वसुमतीꣳ रुद्रवतीमादित्यवतीं वर्ष्मन्दिवो नाभा पृथिव्या यथाऽयं यजमानो न रिष्येद्देवस्य सवितुः सव इति । अत्र मन्त्रे यद्विश्वदेव्यावतीमित्याधिक्यं बौधायनेनोक्तं तन्नोपसंहर्तव्यम् । अनवस्थापत्तेः । किंतु आकाङ्क्षिताङ्गकर्मसंबन्ध्येवाऽऽधिक्यमुपसंहर्तव्यम् । एवं सर्वत्र द्रष्टव्यम् । यथारूपमितर इत्यनेन सूत्रकृता विनियोग उक्तः परं तु स्पष्टतयाऽनुक्तत्वात्कृताकृतः । कृणुतेति लिङ्गात्प्रैषत्वम् । परिकर्मिणोऽत्र प्रेष्याः । अतस्त एव कर्तारः । यथा प्रकृतौ कृणुतेति बहुवचनात्परिकर्मिकर्तृत्वं तथाऽत्र विघनादिकरणकलोष्टादिहननाद्यर्थकोऽयं प्रैषः । स्फ्योऽत्र लौकिक एव त्याज्यत्वात् । विघनो मुद्गरः । पर्शुरश्वस्यानडुहो वा पार्श्वास्थि । परशुः कुठारः । स्फ्येन मृत्तिकायाः प्रथनं, विघनेन लोष्टादिहननम् । पर्श्वा तृणच्छेदनम् । परशुना मूलच्छेदनम् । स्फ्यकार्यं विघनादित्रितयकार्यान्ते । पर्शुशब्दः स्त्रियाम् । प्रेयमगाद्धिषणा बर्हिरच्छेति मन्त्रलिङ्गात् । स्फ्यादीनि प्रज्ञातान्येव निदधाति । उत्तरत्रोपयोगसत्त्वात् । स्फ्यः खड्गाकृतिः, अहोमार्थानि तु वारणस्येति वक्ष्यमाणपरिभाषासूत्राद्वारणवृक्षजस्तदभावे यज्ञियवृक्षजः । विघनोऽप्येवम् । पर्श्वभावे तदाकारा योग्यत्वादायसी पर्शुर्ग्राह्या । इदानीं पर्श्वानयनस्यातिनिन्दितत्वात्, अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नत्विति याज्ञवल्क्येनास्वर्ग्यस्यातिनिन्दित-

स्थाननुष्ठेयत्वोक्तेस्तत्स्थान आयसीमेव पर्शुं शिष्टा गृह्णन्ति । आयस्यां पर्श्वामपि मन्त्रे पर्शुशब्दप्रयोगो न विरुध्यते । परशुरायसमय इति लोके प्रसिद्धमेव । चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका भुवनस्य मध्ये तस्या२ सुपर्णावधि यौ निविष्टौ तयोर्देवानामधिभागधेयमित्यभिमन्त्रणमध्वर्युणा कार्यम् । तथा चाऽऽपस्तम्बः—दर्शपूर्णमासवत्संनमनवर्जं प्रागुत्तरात्परिग्राहात्कृत्वा चतुःशिखण्डा युवतिः सुपेशा घृतप्रतीका भुवनस्य मध्ये तस्या२ सुपर्णावधि यौ निविष्टौ तयोर्देवानामधिभागधेयमित्यभिमन्त्रयेति । वेदिं करोतीति विपरिणामेन संबन्ध इत्यापस्तम्बसूत्रसंगतिः । अनुवृत्तेन वेदिशब्देनोत्तरवेदिरेव ग्राह्या नतु महावेदिः । अन्यथाऽभिमन्त्र्य वेदिं करोतीतिल्यप्प्रत्ययबोधितसमानकर्तृकत्वानुपपत्तेः । नच स्फ्येन विघनेन पर्श्वा परशुना च वेदिं कुर्वन्तीति पूर्वसूत्रेणान्वयः, तथा च वेदिशब्देन महावेदेरेव ग्रहणमस्त्विति वाच्यम् । अभिमन्त्रणस्य समानकर्तृकत्वानुरोधेनाध्वर्युव्यतिरिक्तकर्तृकत्वापत्तेः । नचेष्टापत्तिः । मुख्यकर्तृकत्वनिर्वाहोपपत्तौ गौणबहिर्भूतकर्तृकत्वकल्पनाया अनुचितत्वात् । अत एवोत्तरसूत्र उदुम्बरशाखाभिः प्लक्षशाखाभिर्वा छन्नां परिवासयतीत्युत्तरवेदिप्रयुक्तोऽयं विधिः संगच्छत इत्यस्त्वापस्तम्बसूत्रविचारः । स्फ्येन विघनेनेति सूत्रं प्राकृतवेदिकरणशेषभूतमेव । यन्मूलमतिशेते स्फ्येन तच्छिनत्ति स्फ्येनोत्तमां त्वचमुद्धत्योत्करे निवपतीत्यादिविधितः स्फ्यस्यैव करणत्वं प्राप्तं तस्यात्र वेदेर्महत्त्वेनायोग्यत्वाद्विघनादीन्यपि तत्तत्कार्यसाधनत्वेन विधीयन्ते । स्फ्यग्रहणं लौकिकस्फ्यग्रहणार्थम् । पारिकार्मिकर्तृकवेदिकरणेऽयं स्फ्यः प्राकृतकर्मसु त्वैष्टिक एव । चकारः प्राकृतवेदिकरणसमुच्चयार्थः । तेन प्राकृतं खननान्तं कृत्वेदं वैशेषिकं करोति । नचानुक्तसमुच्चयार्थत्वं चकारस्यास्त्विति वाच्यम् । स्फ्यः स्वस्तिरिति वक्ष्यमाण उपस्थानमन्त्रे चतुर्णामेवोपस्थानविधानेन चतुरतिरिक्तस्यासंभवात् ।

**यत्प्रागुत्तरस्मात्परिग्राहात्तत्कृत्वोत्तरवेद्याः कल्पेन दशपदामुत्तरवेदिं करोति ।**

यदित्यनुवादश्चोदकप्राप्तस्योत्तरवेदिकरणकालविधानार्थः । देवस्य सवितुः सव इति खनति त्र्यङ्गुलां त्र्यङ्गुलां चतुरङ्गुला२ सीतामात्रीमित्यादि उत्करं तद्गमयतीत्यन्तं दर्शपूर्णमासवत् । आहार्यपुरीषां पशुकामस्येति काम्यपक्षः प्रकृतावेव । काम्यानां प्रकृतावेव निवेश इत्यभियुक्तोक्तेः । उत्तरपरिग्राहात्पूर्वतनं यत्कर्म तत्कृत्वोत्तरवेद्याः कल्पः प्रकारः पशुसूत्र उक्तस्तेन प्रकारेणोत्तरवेदिं करोति । अत्र ततोऽयं विशेषो दशपदामिति । एतद्विहरणप्रकारः शुल्बसूत्रे—दशपदोत्तरवेदिर्भवतीति सोमे विज्ञायते तदेकरज्ज्वोक्तं पञ्चदशिकेनैवापायम्यार्धेन ततः श्रोण्यंसान्निर्हरेत्तां युगेन यजमानस्य वा पदैर्विमाय शम्यया परिमिमीत इति । तत इति षष्ठ्यन्तात्तसिः । तस्या उत्तरवेदेरित्यर्थः । दशपदा सर्वतः क्षेत्रतो दशपदा । युगमपि दशपदायाममेव, मानं

वेणुवत् । केचित्स्वतन्त्रं प्रमाणमाहुः । तन्मते युगं षडशीत्यङ्गुलात्मकम् । षडशीति-र्युगमाहुरिति शुल्बसूत्रात् । अत्र यजमानग्रहणमध्वर्युव्यावृत्त्यर्थम् । शम्यया परिमाण-मदृष्टार्थं पूर्वार्धे वेदेर्यूपावटायावकाशमवशिष्य शम्ययोत्तरवेदिं विमिमीते पुरस्तादुदी-चीनकुम्बाꣳ शम्यां निधाय वित्तायनी मेऽसीत्यादि ।

उत्तरवेदिकरणे पक्षान्तरमाह—

अꣳहीयसीं पुरस्तादित्येकेषाम् ।

अंहीयसी, अणीयसी । शुल्बसूत्रे—विमितायां पुरस्तात्पार्श्वमान्यावुपसंहरेच्छ्रुतिसामर्थ्या-दिति । उपसंहारो ह्रासः । अर्थात्पूर्वत्र यावतः प्रमाणस्य ह्रासस्तावता प्रमाणेन पश्चा-त्पार्श्वमान्यौ वर्धयेदिति सिध्यति । यथा महावेद्याः श्रोणिमानं त्रिंशत्पदात्मकं त्रिंश-त्प्रक्रमात्मकं वा तत्पञ्चमांशः षट्पदात्मकः षट्प्रक्रमात्मको वा तस्य ह्रासः पुरस्तात् । पश्चात्तु त्रिंशत्पदात्मकं त्रिंशत्प्रक्रमात्मकं वा तन्न्यायेनात्र । तेन पूर्वत्राष्टापदा द्वादश-पदा पश्चात्पूर्वत्रांहीयसीत्यस्मिन्पक्षे भवति ।

उत्तरेणोत्तरं वेद्यꣳसं प्रक्रमे चात्वालः<br>पश्चाद्द्वादशसूत्करो विद्यतेऽपरिमिते वा ।

चात्वाल इति भाविनी संज्ञा संस्कारनिमित्ता । उत्तरेणेत्यनेनोत्तरवेद्यंसस्योत्तरतः संलग्नमेकं प्रक्रममानपक्ष एकं प्रक्रमं पदमानपक्ष एकं पदं मीत्वा तत्र चात्वालस्य दक्षिणांसं दक्षिणरेखामध्यं वा परिकल्प्य तदनुरोधेनोत्तरतः शम्यामात्रं चात्वालं चतुरश्रं परिकल्पयेत् । शम्यामात्रश्चात्वाल इति बौधायनः । शम्याशब्देन षट्त्रिंशद-ङ्गुलात्मकं मानमेव गृह्यते नतु शम्याकारोऽपि । तदाकारस्यर्जुत्वाभावेनर्जुरेखालेखना-ननुकूलत्वात्, उत्तरवेद्याः कल्पेनोत्तरवेदिं करोतीति विधानेनैव तदन्तर्गतत्वात्तत्साधन-त्वाच्च । उत्तरेणोत्तरं वेद्यꣳसं प्रक्रमे चात्वाल इत्यस्यापि परिलेखनादिक्रियाया इव सिद्धावत्र पुनर्वचनं शम्यया मानार्थम् । उत्तरं वेद्यंसमित्यत्र वेदिर्महावेदिरेव नतूत्तर-वेदिः । अन्यथा चात्वालस्य महावेदिमध्ये समावेशापत्तेः । ननूत्करस्थानप्रदर्शनायाय-मनुवाद इति चेन्न । चात्वालाद्द्वादशसूत्कर इत्येतावतैव तदर्थसिद्धावनुवादवैयर्थ्यापत्तेः । चात्वालपश्चिमान्तान्मध्याद्वा द्वादश प्रक्रमान्प्रक्रम्य तत्रोत्करप्रान्तं तन्मध्यं वा कुर्यात् । उत्करः पदद्वयात्मकः । द्विपद उत्कर इति सूत्रान्तरात् । विद्यत इत्यस्य भवतीत्यर्थः । अपरिमिते वेत्यनेनाधिकमप्यनियतं प्रमाणं ग्राह्यमिति बोध्यते । अपरिमितशब्दार्थः कात्यायनेनोक्तः—अपरिमितं प्रमाणाद्भूय इति । भूयः, अधिकम् । पदमानपक्षे चात्वालमध्यादेव द्वादश पदानि मीत्वा तत्रोत्करमध्य एव कार्यः । पदमानपक्षे चात्वालपश्चिमान्ताद्द्वादश पदानि न संभवन्ति । आग्नीध्रीयमण्डपनिवेशानुपपत्तेः ।

आग्नीध्रीयमण्डपोऽपि पवमानपक्षे पवमानेनैव। उत्करे वेदिधर्माः सर्वे कार्या वाजि- नासादनार्थं, ते च काण्डानुसमयेनैव। अन्यस्मिंश्च द्रव्ये तेनार्थेन संयुज्यमाने धर्मावेश इति सूत्राद्वेदिधर्माणामुत्करे प्राप्तिः। अन्यस्मिन्द्रव्य उत्कररूपे द्रव्ये पदार्थे तेनार्थेन संयुज्यमाने वेदिसंबद्धासादनपदार्थेन वचनात्संबध्यमाने धर्मावेश आसादनाधिकरण- धर्माणामावेशः प्राप्तिर्भवतीत्यर्थः। अस्ति चोत्करे वाजिनस्याऽऽसादनं वाचनिकं चातुर्मास्येषु। मैत्रावरुण्यामिक्षाया वैश्वदेव्यामिक्षाविकृतित्वाद्वाजिनासादनस्योत्करे कर्तव्यताया अत्रापि प्राप्तिः। उत्करे वाजिनासादनमप्येतत्सूत्रोदाहरणत्वेन सूत्रकृता संगृहीतम्—उत्करे वाजिनमासादयति परिधौ पशुं नियुञ्जन्तीति। परिधौ पशुं नियुञ्जन्तीत्युदाहरणं सौमिकचातुर्मास्येषूपयुज्यते।

**तावन्तरेण वेदेः संचरः।**

अन्तरेणेत्यव्ययम्। ताविति अन्तरान्तरेणयुक्त इति द्वितीया। चात्वालोत्करयो- र्मध्येन वेदेर्वेदिसंबन्धी प्रवेशनिर्गमार्थः संचरो मार्गो भवतीत्यर्थः। अत्राऽऽपस्तम्बः— अन्तरा चात्वालोत्करावाग्नीध्रचात्वालौ वाऽध्वर्युर्दशीकवश्च संचरेयुः सर्वतः प्रसुते दशीकवः संचरेयुरित्येक इति। अत्राध्वर्युग्रहणं कैमुतिकन्यायेनर्त्विजामुपलक्षणं द्रष्टॄणां संचरनियमे किमु वक्तव्यमृत्विजामिति। दशीकवो द्रष्टारः। ते ये बाह्या दशीकव इत्यविवाक्यदर्शनात्ते द्विविधा बाह्या आभ्यन्तराश्च। तत्र य आभ्यन्तरा द्रष्टारस्ते नित्यमनेन यथा संचरेयुर्निष्क्रमणप्रवेशने कुर्युः। अथवा प्रसुते सोमे सुत्येऽहनि दशी- कवो यथाकामं संचरेयुरित्यर्थः। सर्वत इति वचनादन्तराऽग्नी गमनेऽपि न दोष इति केचित्।

**प्राचीनमाग्नीध्रात्प्रतीचीनं चात्वालादित्येकेषाम्।**

अनेनोत्करपश्चिमतोऽपि संचरो भवति।

**उदुम्बरशाखाभिश्छन्नां परिवासयति।**

उदुम्बरस्य याः शाखाः पल्लवास्ताभिः शाखाभिर्बहुवचनात्त्रिप्रभृतिभिः। आपस्त- म्बेनोदुम्बरशाखाभिः प्लक्षशाखाभिर्वा छन्नां परिवासयतीति पक्षे प्लक्षशाखाभिश्छादनं विहितं, सूत्रान्तरे दर्भैश्छादनं विहितमेतदुभयं व्यावर्तयितुमिदं वचनम्। एतदन्तं मध्य- मोपसद्दिवसे। एतदर्थमेव मध्यमाभ्यां पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्याग्रेण प्राग्वंशं त्रीन्प्राचः प्रक्रमान्प्रक्रम्य शङ्कुं निहन्ति स पश्चार्धे वेदेरित्यस्मिन्सूत्रे मध्यमाभ्यामित्युक्तम्। अन्यथा प्रथमोपसद्दिवसे वेदिकरणं स्यात्। उदुम्बरशाखाभि- श्छन्नां परिवासयतीत्यत्रैव श्वोभूतपदस्यान्वयेन मध्यमोपसद्दिवस उदुम्बरशाखाभि-

---

१ क. 'माने'।

श्छन्नां परिवासयतीत्येतावदेव स्यात् । उत्तमाभ्यां पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्येत्युत्तरत्रोत्तमत्वप्रयुक्तविधिबलात् । एतत्सर्वं वारयितुं मध्यमाभ्यामिति । एवं च श्वोभूत इत्युत्तरान्वय्येव । नन्वेवं श्वोभूत इति वचनं व्यर्थमुत्तमाभ्यामित्यनेनैव सिद्धेरिति चेन्न । उदुम्बरशाखाभिश्छन्नां परिवासयतीत्येतदपि मध्यमोपसद्दिवस एवेतिबोधनार्थत्वेनैव सार्थक्यात् । अन्यथोत्तरदिनेऽपि कदाचिदनुष्ठानं प्रसक्तं स्यात् । नच मध्यमोपसद्दिवसे वेदिकरणेऽपि उदुम्बरशाखाभिश्छन्नां परिवासयति श्वोभूत इत्येवमेवान्वयं स्वीकृत्य तदुत्तरदिवस उदुम्बरशाखाभिश्छन्नां परिवासयतीत्येतावन्मात्रमनुष्ठेयं तदुत्तरदीवस उत्तमपौर्वाह्णिक्यादीति वाच्यम् । उपसद्रहितदिवसस्य मध्ये कल्पनायाः सकलसूत्रविरुद्धत्वेनात्यन्तानुचितत्वात् । नच श्वोभूत इत्यत्र खण्डसमाप्तिस्तस्य पूर्वत्रैवान्वय इति वाच्यम् । एतस्य नियमस्य यथार्थं हविर्धानयोः प्राग्वंशस्य सदोहविर्धानयोश्चेत्यादौ व्यभिचारेणाप्रयोजकत्वात् । खण्डव्यवहारस्य भगवदाचार्योच्छ्वासनिबन्धनत्वात् । उच्छ्वासस्य नियतप्रमाणत्वाभावात् । छन्नामाच्छादितां परिवासयति निर्व्यापारेण रात्रिं गमयति रक्षयतीति वा । परिकर्मिभिरिति शेषः । छन्नां रक्षयतीत्यनेन शाखानामपि रक्षणं गम्यते । नहि शाखानां रक्षणाभावे विशिष्टाया रक्षणं भवति । श्वोभूतपदसाहचर्यादयमर्थो लभ्यते । एतदनन्तरमापराह्णिकप्रवर्ग्योपसदौ । एवं त्रिरात्रं सायंप्रातः प्रवर्ग्योपसद्भ्यां प्रचरतीत्यनेनैव तयोः सिद्धेरत्रानुक्तिः । अन्तरा मध्यमे प्रवर्ग्योपसदौ वेदिं कुर्वन्तीत्यापस्तम्ब एतत्स्पष्टमाह ।

**श्वोभूते ॥ १४ ॥ उत्तमाभ्यां पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्यार्धव्रतं प्रदाय तदानीमेवाऽऽपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचरति ।**

श्वोभूते मध्यमोपसद्दिवसोत्तरदिवसे श्वोभूते श्वस्तनरूपे दिवस इत्यर्थः । श्वोभूते पौर्वाह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्येत्येतावत्येवोच्यमाने द्वादशाहाद्यहीनानां तिस्र एव साह्नस्योपसदो द्वादशाहीनस्येति श्रुत्या द्वादशोपसत्कत्वस्योक्तत्वेन मध्यमोपसद्दिवसचतुष्टये प्रथमद्वितीयतृतीयदिवसान्यतमदिवसेऽपि वेदिमानादिच्छादनान्तकर्मणः प्राप्तत्वेन वेदिच्छादनोत्तरप्रभृतिषु दिवसेष्वपि तदानीमेवाऽऽपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्येत्यस्य प्राप्तिः स्यात्तां वारयितुमुत्तमाभ्यामिति वचनम् । तथा च मध्यमोपसद्दिवसचतुष्टये वेदिकरणेऽपि द्वादशोपसद्दिवसान्तिमोपसद्दिवस एव तदानीमेवाऽऽपराह्णिकीभ्यां प्रवर्ग्योपसद्भ्यां प्रचर्येति विधिर्नतु वेदिकरणदिवसोत्तरप्रभृतिषु दिवसेष्विति सिध्यति । अर्धव्रतप्रदानतात्कालिकप्रवर्ग्योपसदनुष्ठानविधानार्थं उत्तमाभ्यामित्याद्यनुवादः । श्वोभूतवचनमन्तिमपौर्वाह्णिकापराह्णिकप्रवर्ग्योपसत्प्रभृति हविर्धाने यजमानो राजानं गोपायतीत्यन्तं कर्मैकदिनसाध्यमिति प्रदर्शयितुमिति द्रष्टव्यम् । अन्यथा प्रवर्ग्योपसद्द्वयमात्रं स्यव्द्योधितसंबन्धाद्वत्सापाकरणान्तं चान्तिमोपसद्दिवसेऽवशिष्टमुत्तरदिवस इत्यनियमः

स्यात् । अत आवश्यकमेव श्वोभूतवचनम् । अर्धं च तद्व्रतं चार्धव्रतम् । एकस्तनमुत मेऽहनीति याजमानसूत्रेऽन्तिमोपसद्दिवस एकस्तनव्रतस्य विधास्यमानस्यार्धमर्धशब्दे नोच्यते ।

प्रवर्ग्यमुद्वास्योपसदमुपैति यदि पूर्वो भवति ।

यदि उपसदपेक्षया पूर्वः प्रथमः प्रवर्ग्यो भवति तदा प्रवर्ग्योद्वासनोत्तरमुपसत्क र्तव्येत्यर्थः ।

अर्धव्रतं प्रदायाऽऽग्नेराहृताऽग्निं प्रणीयाग्न्यायतन
ऊर्णास्तुकां निधायाग्निं प्रतिष्ठाप्याऽऽमिक्षायै
मैत्रावरुण्यै सायंदोहाय वत्सानपाकरोति ।

अर्धव्रतमवशिष्टम् । आग्नेरिति पदच्छेदः । अग्नेरिति पदच्छेदेऽग्नेरावृताऽग्ने प्रकारेणेत्यर्थः स्यात् । स चासंगतः स्यात् । नह्यग्नेः कश्चन प्रकारोऽत्रापेक्षितोऽस्ति नन्वाग्नेरिति पदच्छेदेऽपि कथमर्थस्य संगतत्वमिति चेत् । उच्यते-आग्नेः, अग्नेरिय माग्नि तस्याऽऽग्नेः, अग्निसंबन्धिप्रणयनस्येत्यर्थः । तथा चाग्निप्रणयनस्य प्रकारेणाग्नि प्रणीयेत्यर्थो भवति । स चानुष्ठानानुगुणः सूत्राविरुद्धश्च भवति । नच तद्धितप्रत्यया न्तत्वाभावपुंलिङ्गविरोधः । अनुष्ठानानुगुण्येनाविरुद्धत्वेन चाऽऽग्नेरितिपदच्छेदकल्प नाया एव प्रबलत्वेनैकदेशितद्धितप्रत्ययान्तत्वाभावपुंलिङ्गयोर्दुर्बलत्वादेवाऽऽर्षत्वकल्प नाया उचितत्वेन विरोधाभावात् । आवृच्छब्दः प्रकारवाची । आग्नेरावृताऽग्निप्रणय नादीपनादिना पौतुद्रवपरिधिपरिधानान्तेन गुग्गुलुसुगन्धितेजनान्तेन वाऽग्निप्रणयनप्रका रेणाग्निं प्रणीयाग्निकर्मकप्रणयनविधिं कृत्वेत्यर्थः । अ(आ)ग्नेरावृता प्रणीयेत्येतावतै वार्थादग्नेः प्राप्तावत्राग्निग्रहणमिध्मे कृत्स्ने प्रज्वलित एवात्र प्रैषादि भवतीत्येतदर्थम् अग्न्यायतन ऊर्णास्तुकां निधायेति वचनं गुग्गुलुसुगन्धितेजनव्यावृत्त्यर्थम् । शुक्लत्व पेत्वान्तराशृङ्गभवत्वं चास्त्येव । अथवा तानसकृदेवोत्तरनाभ्यां निवपतीति पशुसूत्रात्स कृदेव गुग्गुलुसुगन्धितेजनोर्णास्तुकानां निवपने प्राप्त ऊर्णास्तुकायाः पार्थक्येनाग्न्यायतने निवपनार्थम् । अस्मिन्पक्षे मन्त्र आवर्तनीयः । एतद्द्विधातुमेव पूर्वोत्तरानुवादः । एकत रानुवादे प्रयोगक्रमः संशयितः स्यात् । पेत्वो गलितपुंस्को मेषस्तच्छृङ्गद्वयान्तराल वर्तिन्यूर्णास्तुका पशुसूत्रे दृष्टा तथैवात्र ग्राह्या । अथवोर्णास्तुकाया एव निधानमितरयो निवपनमिति विशेषं प्रदर्शयितुमेव विधानम्[1] । अस्मिन्पक्षेऽपि क्रियाभेदादावृत्तिरपि सिद्धा भवति । ऊर्णास्तुकायां मानवसूत्रे विशेषः—वृष्णेरलूनपूर्वकस्यान्तराशृङ्गादूर्णा स्तुकामिति । अस्यार्थः-पूर्वं लून इति लूनपूर्वो न लूनपूर्वोऽलूनपूर्वस्तस्य कदाऽपि

१ ख. ग. निधानम् ।

यस्य लोमकर्तनं न कृतं तस्य वृष्णेर्मेषस्य शृङ्गादन्तराऽन्तराले वर्तमानोर्णास्तुका ग्राह्येति । निवपनं यथा बीजं न्युप्यते क्षेत्रे तद्वत्क्रिया । निधानं तु स्थापनमेव । आयतनवचनमूर्णास्तुकानिधान उत्तरनाभिनियमो नास्ति किं तु यत्रकुत्रचित्प्रदेश आयतन इत्येतादृशार्थं बोधयितुम् । अग्निपदमग्निर्यत्र स्थाप्यते तादृश आयतनप्रदेशो ग्राह्यो न तु तदितरप्रदेशः । स चोत्तरनाभिरूपस्तदितरो मध्यप्रदेशश्च । शास्त्रान्तरे गार्ह्यकर्मणि च मध्यप्रदेशस्यैवाग्निस्थानत्वोक्तेः । अग्निप्रतिष्ठापनमन्त्रैः कुलायमसी- त्यादि पूर्णाहुत्यन्तम् । प्रतिष्ठापनस्यैवाङ्गान्येतानि । येन नाव्यवधानं तेन व्यवहि- तेऽपि नाव्यवहितत्वबाधः । पशुबन्धवदग्निं प्रणयतीत्यापस्तम्बः । याजुषहौत्रसत्त्वे याजुषमेवात्र सर्वं हौत्रम् । मित्रावरुणौ देवता यस्याः सा मैत्रावरुणी तस्यै, आमि- क्षायै तादर्थ्ये चतुर्थीयम् । सायंदोहायेत्यत्रापि तादर्थ्ये चतुर्थी । आमिक्षार्थो यः सायंदोहस्तदर्थमिति वाक्यार्थः । वत्सानपाकरोति मातृभ्यः पृथक्करोति तूष्णीमेव । वत्सापाकरणस्य शाखानिष्पाद्यत्वादादौ शाखाहरणं कर्तव्यम् । मैत्रावरुण्या इत्या- मिक्षाविशेषणं देवताविधानार्थम् । शाखाहरणमन्त्रेषु यथार्थमूहः । तप्ते पयसि दध्या- नीय श्रपयित्वा घनीभूतं यद्द्रव्यं निष्पद्यते साऽऽमिक्षा । आण्डस्य वा एतद्रूपं यदा- मिक्षेति श्रुतेः । यद्द्रवीभूतं तद्वाजिनं, रेतो वै वाजिनमिति श्रुतेः ।

इन्द्राय च दधिघर्माय घर्मदुघो वत्सम् ।

इन्द्रायेन्द्रार्थं दधिघर्मो दध्ना साध्यो घर्मो दधिघर्मो दध्ना घर्म इव घर्म इति वा घर्मशब्देन रक्षणविशिष्टा क्रियोच्यते । दध्नो घर्मः क्षरणं यत्रेति वा । योगरूढं पदम् । इदं च विशे- षणं वक्ष्यमाणे दधिघर्महोमसाधनीभूते यमिन्द्रमाहुर्वरुणं यमाहुरिति मन्त्रे देवतानिश्च- यासंभवात्का देवता ग्राह्येत्याकाङ्क्षां निवर्तयितुम् । घर्मो घर्मार्थं पयो यस्या दुह्यते सा घर्मधुक्तस्या वत्समपाकरोतीत्यर्थः । इदमपि तूष्णीम् । एतदर्थं शाखाहरणं तु समन्त्रमेव वषट्कारप्रदेयत्वाद्दधिघर्मद्रव्यस्य । चकारो दधिग्रहाद्यर्थकसायंदोहार्थं तत्तद्दोग्ध्यस्तत्तद्वत्सापाकरणं कर्तव्यमित्यनुक्तसमुच्चयं प्रदर्शयितुम् । एतदर्थं शाखा- हरणं तूष्णीमेव वषट्कारप्रदेयत्वाभावात् । यद्यपि शृतातङ्क्यस्य वषट्कारप्रदेयत्व- मस्ति तथाऽपि तस्य मिश्रणोद्देश्यत्वमेव न यागोद्देश्यत्वमतो न दोषः ।

सर्वाण्यैन्द्राणि भवन्तीत्येकेषाम् ।

मैत्रावरुण्यामिक्षासांनिध्यात्सर्वशब्दो धानादिरूपसवनीयहविःपरः । आमिक्षायाः सवनीयाया या मित्रावरुणदेवता तामपोह्य तत्स्थान इन्द्रस्य देवतात्वं प्रसङ्गात्त्रै- वाऽऽमिक्षा सहप्रदेयद्रव्याणां धानादीनां सवनीयायां या देवता इन्द्राय हरिवते धाना निर्वपतीन्द्राय पूषण्वते करम्भः सरस्वत्यै भारत्यै परिवापलाजानिन्द्राय पुरोडाशमष्टा- कपालमिति सूत्रेण विधास्यमानास्ता अपोह्य तासां स्थाने चेन्द्रस्य देवतात्वं पक्षे विधीयते । आमिक्षाया मित्रावरुणयोः स्थान इन्द्रः । धानानां हरिवद्गुणरहित

इन्द्रः। करम्भस्य पूषण्वद्गुणरहित इन्द्रः । परिवापलाजानां सरस्वतीभारतीस्थान इन्द्रः। पुरोडाशस्य त्विन्द्र एवास्ति । इन्द्राय च दधिघर्माय घर्मदुघो वत्समिति पूर्वसूत्रादिन्द्रायेत्यस्यानुवृत्त्यैवेन्द्रसंबन्धलाभ ऐन्द्रपदं किमर्थमिति चेत्सत्यम्। सर्वाणि भवन्तीत्यैन्द्रपदराहित्येन सूत्रे क्रियमाण इन्द्रपदाकाङ्क्षाया नियतत्वाभावेन सर्वस्य संशयग्रस्तत्वानन्वितत्वापत्तेः। नचेन्द्राय च दधिघर्माय घर्मदुघो वत्समित्येतस्मात्पूर्वमेवैतत्सूत्रं कर्तव्यं तथा सत्यैवैन्द्रपदस्य सार्थक्यमिति वाच्यम् । सर्वाण्यैन्द्राणि भवन्तीत्येतस्य पूर्वं करण इन्द्राय च दधिघर्माय घर्मदुघो वत्समित्यत्रापि अपाकरोतीत्येतदुपादानस्याऽऽवश्यकत्वेन गौरवापत्तेः।

अग्निवन्युत्तरं परिग्राहं परिगृह्णाति ।

अग्निवतीति सप्तमी द्वितीयार्थे । उत्तरपरिग्राहविशेषणमग्निवदिति । अग्निवत्त्वं वसवस्त्वेत्यस्य तेऽग्निना प्राञ्चोऽजयन्, वसुभिर्दक्षिणा रुद्रैः प्रत्यञ्चः, आदित्यैरुदञ्च इत्यस्य प्रागग्निना परिग्रहस्तवनात्। एतेन वेदिकरण ऋतमसीत्यस्यार्थात्पूर्वपरिग्राहत्वं प्रदर्शितं भवति।

न परिगृहीतामप्रोक्षितामधिचरत्यास्तरणात् ।

परिगृहीतामुत्तरपरिग्राहेण परिगृहीतां वेदिमप्रोक्षितां सतीं नाधिचरति नाधितिष्ठति । आ, आस्तरणात् । परिगृहीतामिति वचनमुत्तरपरिग्राहात्पूर्वमधिचरणे निषेधो नेति प्रदर्शयितुम् । आस्तरणादिति वचनात्स्फ्येन प्रतीचीं संमार्ष्टीत्यारभ्य स्तरणान्तमप्रोक्षिताया अधिचरणनिषेध इति । तेन संमार्गार्थं प्रोक्ष्य वेदिं संमृज्य स्तरणार्थं प्रोक्ष्य स्तृणातीति सिद्धं भवति। आ, आस्तरणादित्यत्राऽऽङभिव्याप्तावेव। तेनाप्रोक्षिताया अधिचरणनिषेधः कृत्स्नस्तरणान्तं भवति । इयं शाखान्तरीया श्रुतिरेवानूद्यते।

सुत्यार्थानि काष्ठानि माहावेदिकं च बर्हिरुपक्लृप्तं भवति तूष्णीकाभिरद्भिः काष्ठानि वेदिं बर्हिश्च त्रिस्त्रिः प्रोक्षति।

सुत्यैवार्थः प्रयोजनं येषां तानि सुत्यार्थानि। माहावेद्या इदं माहावेदिकं महावेद्याःस्तरणपर्याप्तं बर्हिश्चोपक्लृप्तं भवति। सुत्यार्थानि काष्ठानीत्यत्रोपक्लृप्तशब्दस्य वचनविपरिणामेनान्वय उपक्लृप्तानीति। परिकर्मिभिरिति शेषः। सूयते कण्ड्यते सोम इति सुत्या, सूयते कण्ड्यते सोमो यस्मिन्कर्मणीति वा सुत्या। संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिण इति सूत्रात्स्त्रीलिङ्गे वाच्ये भावादिरूपेऽर्थे क्यप्। लशक्वतद्धित इति ककारस्येत्संज्ञायां पकारस्य हलन्त्यमित्यनेनेत्संज्ञायां ह्रस्वस्य पिति

१ ख. 'त्येवेन्द्र'। २ ख. ग. 'ज्य स्त'।

कृति-तुगिति तुगागमे सुत्येति रूपम् । एवं च सुत्याशब्देन सुत्याख्यदिवससंबन्धिसकलकर्मग्रहणम् । तेनावभृथोत्तरोत्पन्नानामुदयनीयामिक्षादीनामपि तान्येव काष्ठानीति । सुत्यार्थानीति विशेषणात्काष्ठानां सुत्यार्थत्वेनैवोपकल्पनं, तेषामेवैतत्प्रकारेण प्रोक्षणम् । माहावेदिकमिति बर्हिर्विशेषणात्तत्र सुत्यार्थत्वस्य नान्वयो विरोधात् । एतेन ज्ञायतेऽग्नीषोमीयार्थं भिन्नान्येव काष्ठानि तेषां नैवैतत्प्रकारेण प्रोक्षणं किंतु नाप्रोक्षितमिन्धनमग्नावादध्यादितिधर्मसूत्रेणाप्रोक्षितेन्धनाभ्याधानस्य निषेधाच्छुद्धाभिरद्भिर्लौकिकमेव प्रोक्षणं तूष्णीमेव । उभयत्रापि चकार उपकल्पने प्रोक्षणे चानुक्तद्दिवससंबन्धिग्रहणासमुच्चयार्थः । अपूर्वत्वेऽपि प्राकृत एव क्रम इति दर्शयितुं पदार्थकीर्तनम् । त्रिस्त्रिरिति वीप्सा प्रत्येकं त्रित्वप्राप्त्यर्था । तूष्णीकाभिरिति गृह्योक्तप्रोक्षणीसंस्कारप्राप्त्यर्थम् । प्रोक्षणसाधनत्वेनार्थादेवापां ग्रहणे सिद्धेऽद्भिरिति वचनं गृह्योक्तसंस्कारस्य पाक्षिकत्वज्ञापनार्थम् । तेन गृह्योक्तरीत्या संस्कृताभिर्लौकिकीभिरेव वा प्रोक्षणमिति पक्षद्वयं सिद्धं भवति । तूष्णीकाभिरेवेत्युच्यमाने तूष्णीकाभिरद्भिरन्येन द्रवद्रव्येण वेत्येवंरूपः प्रोक्षणं वैकल्पिकमित्येवं वाऽपि कदाचिदर्थः संभाव्येत स मा भूदित्येतदर्थं स्पष्टार्थकवाशब्दं परित्यज्य ज्ञापनसिद्धविकल्पार्थमद्भिरिति ग्रहणं कृतम् । परस्परविरोधाद्धि विकल्पोऽत्रेति ज्ञेयम् । उपक्लृतमिति भूतनिर्देशादग्नीषोमीयदिवससंबन्ध्यनुष्ठानारम्भात्प्रागेवोपकल्पनं परिकर्मिभिः कर्तव्यमिति गम्यते । अप्रोक्षितवेद्यभिचरणनिषेधान्महावेदिदक्षिणश्रोणिसमीपदेशं प्रोक्ष्य तं देशमधिष्ठाय तत्रस्थ एव मन्त्रेण तस्मिन्देशे बर्हिरास्तरणं कृत्वाऽग्रिमं देशं प्रोक्ष्य तं देशमधिष्ठाय मन्त्रेण तस्मिन्देशे बर्हिरास्तरणं कृत्वेत्येवं क्रमेणाऽऽन्तं कर्तव्यमिति द्रष्टव्यम् । अनेन प्रोक्षणस्याप्यत्र प्रत्यगपवर्गता भवति । तूष्णीकाभिरद्भिः काष्ठानि वेदिं बर्हिश्च त्रिस्त्रिः प्रोक्षतीत्यत्र पूर्वसूत्रात्सुत्यार्थानि माहावेदिकमित्येतत्पदद्वयमनुवर्तते ।

**तूष्णीं बर्हिषा वेदिꣳ स्तृणाति यथा दर्शपूर्णमासयोः ।**

तूष्णीमिति वचनं यथा दर्शपूर्णमासयोरित्यनेन देवबर्हिरूर्णाम्रदसमित्यस्य मन्त्रस्य प्राप्तिः स्यात्सा मा भूदित्येतदर्थम् । यथा दर्शपूर्णमासयोरित्यनेन तृणैरन्तर्धानं प्रत्यगपवर्गताऽग्रैर्मूलाभिच्छादनमनतिदृश्नं स्तरणमित्यादयो धर्माः प्राप्यन्ते । बौधायनेनाऽऽस्तावस्य सदोहविर्धानयोश्च बहुलं स्तरणमुक्तं तदप्यविरुद्धत्वाद्दृष्टार्थत्वाच्च स्वीकर्तव्यमेव ।

**आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् । येषामिन्द्रो युवा सखेति स्तरणीमेके समामनन्ति ॥ १९ ॥**

**इति हिरण्यकेशिसूत्रे सप्तमप्रश्ने चतुर्थः पटलः ।**

---

वेदिर्बर्हिषा स्तीर्यतेऽनयेति स्तरणी करणे ल्युट्, युवोरनाकावित्यनादेशः । टित्वा-त्ङीप् । स्तरणीति स्त्रीलिङ्गनिर्देश एतस्य मन्त्रस्यर्क्त्वात् । स्तरणार्थेयमृग्भवतीत्यर्थः ।

इति ओकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्निचित्वाजपेययाजिसर्व-तोमुखयाजिद्विषाहस्राग्निचित्पौण्डरीकयाजिगणेशदीक्षिततनूज-गोपीनाथदीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्य-केशिसूत्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसं-तापशामिकायां ज्योत्स्नाख्यायां वृत्तौ सप्तम-प्रश्नस्य चतुर्थः पटलः ॥ ४ ॥

---

अथ सप्तमप्रश्ने पञ्चमः पटलः ।

---

उपक्लृप्ते शकटे मण्डलचक्रे प्रयुक्तपूर्वे तयोः पुराणान्ग्रन्थीन्वि-स्रस्य प्रक्षाल्य नवान्कुर्वन्ति च्छदिष्मती युग्यकृते कृत्वाऽग्रेण प्राग्वंशमवस्थाप्य युञ्जते मन इत्यौत्तरवेदिके जुहोति ।

उपक्लृप्ते इति भूतनिर्देशादग्नीषोमीयदिवससंबन्धिकर्मानुष्ठानारम्भात्प्रागेवोपकल्प-नीये । द्विवचनाद्द्वे शकटे अनसी मण्डलाकारे चक्रे ययोस्ते पूर्वमेवान्यकार्येषु प्रयुक्ते प्रयुक्तपूर्वे तयोः शकटयोः पुराणान्पुरातनान्पूर्वकृतान्ग्रन्थीन्विस्रस्य प्रक्षाल्य हविर्धाने प्रक्षाल्य नवान्नूतनान्दार्ढ्याय ग्रन्थीन्कुर्वन्ति । पारिकर्मिण इति शेषः । छदिष्मती कट-वती युग्यकृते युग्ये च ते कृते च युग्यकृते । इदं च शकटविशेषणम् । युग्ये युगार्हे खलयवमाषतिलवृषब्रह्मणश्चेतिसूत्रस्थानुक्तसमुच्चयार्थकचकारेण संगृहीताद्युगशब्दात्तदर्ह-तीत्यस्मिन्नर्थे यत्प्रत्ययः । कृते नूतनाक्षादियोजनेन कृते कार्यसमर्थे । एतादृशे शकटे कृत्वाऽग्रेण प्राग्वंशं प्राग्वंशस्य समीप एव प्राग्रीषे एव दक्षिणे दक्षिणमुत्तर उत्तरमि-त्येवमव्यवायेनावस्थाप्य युञ्जते मन इत्यौत्तरवेदिके जुहोति । परिष्टुतिरित्यन्तो मन्त्रः । जुहोतिचोदितत्वात्स्वाहाकारः । उपक्लृप्ते शकटे इत्येतावतैव चक्रयोः शकटाङ्गत्वात्प्र-सिद्धत्वाच्च मण्डलचक्रत्वे सिद्ध इदं वचनं चक्रयोः केवलमण्डलाकारत्वं न विधीयते किंतु रविमण्डलं यथा छिद्ररहितं तद्वन्मण्डलाकारचक्रे इत्यर्थविशेषं प्रदर्शयितुम् । तेन च्छिद्रपदार्थोपलक्षितान्तरालवत्सारचक्रव्यावृत्तिर्भवति । प्रयुक्तपूर्वे इत्यनेन पुरातने प्रयाणगृहकार्यार्थनिर्मिते एव ग्राह्ये इति सूचितं भवति । असंभवे नूतने एव ग्राह्ये । प्रयुक्तपूर्वत्वे विशेषमाह—तयोः पुराणान्ग्रन्थीन्विस्रस्येति । प्रक्षाल्य नवान्कुर्वन्तीति पुरातननूतनसाधारणं नवत्वं प्रकृतकार्यक्षमत्वं लक्षयति । कृत्वेति वचनमध्वर्युकर्तृकत्वा-र्थम् । अत एव क्त्वाप्रत्ययस्य समानकर्तृकत्वमप्युपपद्यते । अव्यवायेनावस्थापनमाप-

स्तम्बेनोक्तम्-अग्रेण प्राग्वंशमभितः पृष्ठ्यामव्यवयन्निति । कात्यायनः—हविर्धाने स्थापयति पृष्ठ्यामुभयतो व्यरत्न्यन्तरे प्रक्षालिते प्राची उभयतः शालामावृत्य वर्षीयो दक्षिणमिति । मानवसूत्रेऽन्यो विशेषः—बहिर्वेदि चक्राण्यन्तर्वेद्युपस्तम्भयतीति । औत्तरवेदिग्रहणं बौधायनकात्यायनोक्तशालामुखीयनिरासार्थम् ।

देवश्रुताविति पदतृतीयस्यैकदेशेन पत्नी दक्षिणस्य हविर्धानस्य दक्षिणामक्षधुरं दक्षिणेनोत्तानेन त्रिः पराचीनमुपानक्त्येवमुत्तरस्य ।

गृहे स्थापितस्य पदपांसुतृतीयभागस्यैकदेशेन द्विधाविभक्तस्यैकांशेन हविःसोमाख्यं धीयते स्थाप्यते यस्मिंस्तद्धविर्धानं, तच्च दक्षिणं दक्षिणदिक्संबन्धीदमितिसंज्ञार्थं चिह्नितम् । एतादृशस्य हविर्धानस्य चक्रं निष्काश्य दक्षिणामक्षधुरं दक्षिणेन हस्तेनोत्तानेन त्रिः पराचीनमधःप्रदेशमारभ्योपरिष्टात्प्रदेशान्तं त्रिवारमुप समीप उपविश्यानक्ति । अञ्जनानन्तरं तस्य तच्चक्रं योजयति । एवमेवोत्तरस्य हविर्धानस्य कृत्वा चक्रं योजयति । द्रव्यपृथक्त्वान्मन्त्रावृत्तिः । वशीत्यन्तो मन्त्रः । पत्नीग्रहणमध्वर्युव्यावृत्त्यर्थम् । दक्षिणग्रहणमुपकल्पनसमय एवेदं दक्षिणमिदमुत्तरमितिचिह्नकरणार्थं, पृष्ठ्याया दक्षिणत एकमुत्तरत एकमित्येवं विशिष्टं स्थापनं ज्ञापयितुं च नतु पृष्ठ्याया दक्षिणत एवोत्तरत एव वा । दक्षिणतः स्थापितं दक्षिणमुत्तरतः स्थापितमुत्तरमित्येवमुच्यमान उदक्संस्थत्वेनैव सिद्धेर्दक्षिणोत्तरशब्दोपादानवैयर्थ्यापत्तेः । हविर्धानग्रहणं शकटस्य प्रयोजनं प्रदर्शयितुम् । दक्षिणामित्यक्षधुरो विशेषणमुत्तराक्षधूर्व्यावृत्त्यर्थम् । ऋक्पूरब्धूःपथामानक्ष इति अकारः समासान्तो न भवति अनक्ष इति पर्युदासात्, एतस्या अक्षसंबन्धित्वात् । अक्षश्चक्रयोर्मध्यतनं तिर्यक्काष्ठं तस्मिन्यत्र चक्रं प्रोतं भवति स प्रदेशोऽक्षधूरित्युच्यते । दक्षिणेनेति हस्तविशेषणं वामव्यावृत्त्यर्थम् । अथवा दक्षिणेनेति नियमार्थं दक्षिणेनैवोपानक्ति नतु वामेनापीति । दक्षिणेनेत्यस्यानुक्तावञ्जलिनाऽपि उपाञ्जनं कदाचित्संभाव्येत तद्वारयितुं दक्षिणवचनम् । उत्तानग्रहणं न्यक्त्व[1]व्यावृत्त्यर्थम् । अञ्जनसाधनत्वस्य हस्त एव प्रसिद्धत्वाद्योग्यत्वाच्च विशेष्यभूतहस्तशब्दस्यानुक्तिः । प्राचेति बौधायनो हस्ते विशेषमाह । यत्रैकस्मिन्द्रव्य इति सूत्रात्सकृदेव मन्त्रः । हविर्धाने प्रतिगमने क्रमनियम उक्तो बौधायनेन—अन्वग्यजमानोऽनूची पत्नी पदतृतीयमादायेति ।

सर्वा उपानक्तीत्येकेषाम् ।

सर्वा अक्षधुरो नतु पत्नीपरः सर्वशब्दो बहुत्वस्यानियतत्वात् । परार्थान्येकेन क्रियरन्निति सूत्रविरोधाच्च । तेन मुख्यैवानक्ति । अक्षसंस्कारकं हीदमुपाञ्जनम् । मुख्यत्वं

---

[1] क. 'शेष्वीभू' ।

ज्येष्ठाया एव ज्येष्ठया न विनेतरा इति शास्त्रात्। परार्थं कर्म कर्तव्यं ज्येष्ठयैव नचा-न्ययेति शास्त्राच्च। तस्यामविद्यमानायां विद्यमानासु या ज्येष्ठा सा ज्ञेया। अत्र ज्येष्ठत्वं विवाहकृतं नतु वयःकृतमिति। एतन्मूलमन्यतो द्रष्टव्यम्। सर्वा अक्षधुरः समन्त्रमेवानक्तीत्यर्थः। तेन पूर्वकल्प उत्तरयोर्धुरोस्तूष्णीमुपाञ्जनं सिद्धं भवति। दृष्टा-र्थत्वाच्चाऽऽवश्यकं चैतत्।

आज्येन चेत्येकेषाम् ।

चकारः पदसमुच्चयार्थः। अन्यदाज्यं तस्मिन्पद आनीय तेन मिश्रितेन धूरञ्जनं कर्तव्यमित्यर्थः। अथवाऽऽदौ पदेनैवाञ्जनं कृत्वा पुनः केवलेनाऽऽज्येनैवानक्तीत्येवं वा समुच्चयः। अस्मिन्पक्षे मन्त्रावृत्तिः । एकेषां मते समुच्चयस्य नित्यत्वमिति सूत्रतात्पर्यार्थः । तेनान्येषां मते नैमित्तिकत्वं सिद्धं भवति। पदस्य शुष्कत्व आज्येन मिश्रयित्वाऽञ्जनमवश्यं कर्तव्यं, पदनाशेऽन्यान्पांसूञ्छुद्धदेशस्थान्गृहीत्वाऽऽ-ज्येन मिश्रयित्वाऽञ्जनमावश्यकमिति । अथवा लौकिकेनाऽऽज्येनान्यान्पांसून्मिश्र-यित्वा तेनाञ्जनं कृत्वाऽन्येन संस्कृतेनाप्यञ्जनमवश्यं कर्तव्यमेवेति। अत्र पत्नी कृत-कार्यत्वात्स्वस्थानं प्रति गच्छति। उक्तं च बौधायनेन—नयन्ति पत्नीमिति। बहुवचनं परिकर्म्यृत्विजामन्यतमप्राप्त्यर्थम् ।

हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहीति
संप्रेष्यति प्रवर्त्यमानाभ्यामनुब्रूहीति वा ।

होतारमिति शेषः । अत्रैवाऽऽह्वानमुक्तं बौधायनेन—ह्वयन्ति होतारमिति। बहुवचनं ब्रह्मयजमानाध्वर्य्वन्यतमप्राप्त्यर्थम्। अत्र वैशेषिकं हौत्रमाश्वलायनीयमेव।

त्रिरनूक्तायां प्राची प्रेतमिति समुद्गृह्णन्तः प्राची प्रवर्तयन्ति ।

त्रिरनूक्तायां होत्रा। उपस्थितत्वात्प्रथमैव त्रिरनूक्ता भवति। स्पष्टमेवापठदापस्तम्बः-प्रथमायां त्रिरनूक्तायामिति। प्राची प्रेतमिति मन्त्रेण धुर्यवद्युगधुरौ दक्षिणेन हस्ते-नोर्ध्वं गृह्णन्तः प्राची अनसी नयन्ति। प्रशब्दो यथा शकटनयने शकटचक्राद्यङ्ग-स्याऽऽघातो न भवेत्तथा नयनं द्योतयितुम्। बहुवचनोपात्ता अध्वर्यव एव नतु परिक-र्मिणः। मन्त्रवत्कर्मत्वात् । समुद्गृह्णन्त इति शत्राऽनःप्रवर्तनसमकालत्वं समुद्ग्रहणस्य। तेन यावत्पर्यन्तमनःप्रवर्तनं तावत्पर्यन्तं समुद्ग्रहणम्। समुद्गृह्णन्त इत्यत्र संशब्दो दार्ढ्येनोद्ग्रहणार्थः। उच्छब्द ऊर्ध्वग्रहणार्थः। जीह्वरतमित्यन्तो मन्त्रः।

सुवाग्देव दुर्या आवदेत्यभिमन्त्रयते यद्यक्ष उत्सर्जेत्[1] ।

यदि अक्षश्चक्रसंघर्षणेनोत्सर्जेच्छब्दं कुर्यात्तदा सुवागित्यभिमन्त्रयते। अक्षशब्द-मिति शेषः। अक्रन्ददग्निरित्यक्षशब्दमभिमन्त्रयत इत्यग्नौ दर्शनात्। एतच्च रक्षोपह-

[1] ङ. अ. उत्सृजेत् ।

ननार्थम् । यदन उत्सर्जत्यक्रन्ददित्यन्वाह रक्षसामपहत्या इत्यग्नौ श्रुतेः । एकवचनादध्वर्युरेवात्र कर्ता नतु प्रतिप्रस्थाताऽपि ।

**यत्र वेदिमवक्रामतस्तद्दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्यां वेद्यन्ते हिरण्यं निधायेदं विष्णुरिति जुहोति ।**

स्फ्येनोद्धत्यावोक्ष्य हिरण्यं निधाय संपरिस्तीर्याभिजुहोतीति बौधायनः । यत्र यस्मिन्देशे वेदिमनसी अवक्रामतो वेदिमवक्रम्य गच्छतस्तत्तस्मिन्देशे दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्यामुत्तरचक्रमार्गे वेद्यन्ते महावेदिसमीप इत्यर्थः । पांसुर इत्यन्तो मन्त्रः । तदित्यत्र सुपां सुलुगित्यनेन सप्तम्या लुक् । अवक्रामत इति द्विवचनाद्द्वयवक्रमणं सहैव द्वयोः । अत्र दक्षिणग्रहणमुत्तरसूत्र उत्तरग्रहणं च क्रमार्थं दक्षिणहविर्धानोत्तरवर्तन्यधिकरणको होमोऽध्वर्युणा पूर्वं कर्तव्य उत्तरहविर्धानोत्तरवर्तन्यधिकरणको होमः प्रतिप्रस्थात्राऽनन्तरं कर्तव्य इति । अन्यथाऽत्रानियतिः स्यात् । अन्तवचनं वेदिप्रान्तसंलग्नदेशग्रहणार्थम् । उत्तरत्र प्रतिप्रस्थातृग्रहणात्पूर्वत्र यजुर्वेदेनाध्वर्युरिति परिभाषाप्राप्तोऽध्वर्युः कर्ता ।

**इरावती धेनुमती इत्येवं प्रतिप्रस्थातोत्तरस्य ।**

प्रतिशब्दोऽन्वर्थे । अध्वर्युमनु यागार्थं तिष्ठतीति प्रतिप्रस्थाता । प्रतिः सादृश्यार्थको वा । अध्वर्युरिव यागार्थं तिष्ठतीति प्रतिप्रस्थातेति । उत्तरस्येत्येव पाठो युक्तः सापेक्षत्वात् । उत्तरस्यामिति पाठस्त्वयुक्त एव । एवमित्यतिदेशादेवोत्तरवर्तन्याः प्राप्तौ तद्ग्रहणस्य व्यर्थत्वापत्तेः । प्रतिप्रस्थातृग्रहणमध्वर्युव्यावृत्त्यर्थम् । मयूखैरित्यन्तो मन्त्रः । उभयत्रापि दर्विहोमधर्मः । नाग्न्योरन्तरागमने दोषः । तेनैव प्रत्यागमनम् । जुहोतिचोदितत्वात्स्वाहाकारः ।

**अध्वर्युर्दक्षिणस्य हविर्धानस्य कर्माणि करोति प्रतिप्रस्थातोत्तरस्य ।**

यत्र द्विवचनं श्रूयते मन्त्रभेदश्च नास्ति तत्र साहित्यमेवेति बोधयितुमियं परिभाषा । तद्व्यतिरिक्तस्थले तु एतदभावादेव साहित्यव्यावृत्तिर्भवति । एतादृशं स्थलं मेथीनिहननमेव । धर्मभेदादेतस्य पृथगुपादानम् । प्रकरणादेव विशेष्यस्य हविर्धानस्य लाभे पुनर्हविर्धानग्रहणं दक्षिणस्य हविर्धानस्य पश्चादक्षं द्रोणकलशं[१] सदशापवित्रं प्रयुनक्ति उत्तरस्य नीड आहवनीयं तस्यैव प्रधुरे पूतभृतं पश्चादक्षं तिस्र एकधनाः स्थालीरित्येतस्य पात्रप्रयोगस्य तत्तद्धविर्धानसंबन्धित्वादेतस्याः परिभाषाया अत्रापि प्राप्तिः स्यात्सा मा भूत्किंतु हविर्धानसंस्कारककर्मविषय एवैतस्याः परिभाषायाः प्रवृत्तिः स्यात्पात्रप्रयोगस्य तु हविर्धानसंस्कारककर्मत्वाभावान्नात्र परिभाषायाः प्रवृत्तिरित्येतदर्थम् ।

---

१ ङ. ज. झ. ञ. ध्णर्नेचक्रम इति ।

अपजन्यं भयं नुदाप चक्राणि वर्तय गृहं सोमस्य गच्छतमिन्द्रस्य सꣳसदमिति पश्चार्धे वेदेर्वितृतीयदेशे मनसा होता पदा जन्यं भयं प्रतिनुदत्यध्वर्युर्यजमानो ब्रह्मा वा ।

याजुषहौत्रपक्षेऽत्र होतृकर्म याजुषरीत्यैव वेदेर्महावेदेः पश्चार्धे, कथंभूते वितृतीयदेशे विगतस्तृतीयो देशः पश्चार्ध्यः पूर्वार्ध्यो वा तस्मिन्होता मनसा मन्त्रमुक्त्वा पदा पादेन जन्यं जनसंबन्धि भयं प्रतिनुदति निरसनमुद्रया पांसुप्रत्यसनेन वा दूरी करोतीत्यर्थः । मन्त्रपाठेनैवात्र दूरीकरणम् । आच्छिद्रिकप्रश्नान्तर्गतेन गच्छतमित्यन्तेन मन्त्रेणायं विकल्पः । तच्च भयं कर्मण एव नतु होत्रध्वर्युयजमानब्रह्मणाम् । विकल्पस्वरसादयमर्थो लभ्यते । अत्र पादस्यानिर्दिष्टाङ्गत्वेऽपि दक्षिणवचनाभावादनियमः । होतृशब्दार्थो बह्वृचब्राह्मणे यदेवामुमावहामुमावहेत्यावाहयति तदेव होतुर्होतृत्वमिति । जुहोतीति होतेति व्युत्पत्तिर्नात्रोपयुज्यते । अतिप्रसक्तत्वात् । तत्र वैकल्पिकान्कर्तृनाह–अध्वर्युरित्यादिना । अध्वर्युशब्दव्युत्पत्तिर्नाध्वर्युः सोमं विचिनुयादित्येतत्सूत्रव्याख्यानावसर उक्ता । यजमानशब्दव्युत्पत्तिस्तु अग्निष्टोमयाजमानसूत्रे वक्ष्यते । ब्रह्मशब्दव्युत्पत्तिर्मदन्तीभिः पाणीन्प्रक्षालयन्ते ब्रह्मा राजानं विस्रꣳसयतीतिसूत्रव्याख्यानावसर उक्ता ।

अपरेणोत्तरवेदिं त्रीन्प्रतीचः प्रक्रमान्प्रतिविक्रम्यात्र रमेथामित्यभितः पृष्ठ्यां नभ्यस्थे स्थापयतः ।

उत्तरा चासौ वेदिश्चोत्तरवेदिः । उत्तरत्वमुत्कृष्टत्वम् । स चोकर्ष ऐष्टिकपाशुकसौमिकादिबहुतन्त्रार्थकाग्न्यधिकरणत्वरूपगुणाधिक्यात् । सपत्नीबाधनार्थकसूक्तान्तर्गत उत्तराऽहमुत्तर इत्यस्मिन्मन्त्र उत्तरशब्दस्योत्कर्षार्थत्वदर्शनात् । योगरूढं पदम् । प्रतीचः प्रत्यक्संस्थान् । त्रीनिति वचनं चतुरादिव्यावृत्त्यर्थम् । प्रतिशब्द ऋजुतया प्रक्रमाः क्रमितव्या इत्यर्थं द्योतयितुम् । विशब्दो येन पदेन प्रक्रमेण वा मानं कृतं ततोऽप्यभीष्टानुरोधेन माने वृद्धिं गमयति । उत्तरवेदिपश्चार्ध्यशङ्कुमभितो दक्षिण उत्तरे चापरभागोऽत्र विवक्षितः । अभितःपरितःसमयानिकषाहाप्रतियोगेऽपीत्यनेन पृष्ठ्यामिति द्वितीया । यथोत्तरवेदेः पश्चादभीष्टवृद्धिमत्सु त्रिषु प्रक्रमेषु हविर्धानयोर्नभ्यस्थे भवतस्तथा पृष्ठ्यामभितोऽनसी स्थापयतः । दक्षिणस्योत्तरं नभ्यस्थमुत्तरस्य दक्षिणं नभ्यस्थमभितः पृष्ठ्यां भवति । नभ्यं चक्रं तस्य यन्मध्यमं फलकं यत्र नाभिः क्रियते मध्येनभ्यमिति लिङ्गात्, तत्फलकाधारफलकस्थिते चक्रे स्थापयतः । तेन चक्राधारत्वेन स्थिते भवतो न भूमिस्थिते भवत इत्यर्थः । हविर्धानयोः परिशिष्टचक्र-

---

१ ज. झ ञ. ढ. °न्प्रक्र° ।

द्वयस्यार्थादेतदनुरोधेनैव । उगवादिभ्यो यदिति यत्प्रत्यये नाभि नभं चेति नाभि-शब्दस्य नभादेशः । नाभेर्नोकारस्य ह्रस्वः । पृथिव्या इत्यन्तो मन्त्रः ।

अन्तरालप्रमाणानियममाह—

**यथार्थꣳ हविर्धानयोः ॥ १६ ॥ अन्तरालं कुरुतः ।**

यथार्थं यथाप्रयोजनम् , अर्थमनतिक्रम्य यथार्थम् । पदार्थानतिवृत्तिरूपयथार्थ-समासोऽयम् । प्रयोजनादधिकमुभयोर्मध्येऽन्तरालं न कर्तव्यमित्यर्थः ।

**वैष्णवमसि विष्णुस्त्वोत्तभ्नात्वित्युपस्तभ्नुतः ।**

उपस्तम्भनाभ्यां काष्ठाभ्यामिति शेषः ।

**पुरस्तादुन्नते भवतः ।**

उपस्तम्भनं तथा कर्तव्यं यथा पुरस्तादुन्नते शकटे भवत इत्यर्थः ।

**दिवो वा विष्णवुत वा पृथिव्या इत्याशीर्पदयर्चा दक्षिणस्य हविर्धानस्य दक्षिणं कर्णातर्दमपरेण मेथीं निहन्ति विष्णोर्नुकमित्युत्तरस्योत्तरं कर्णातर्दमपरेण प्रतिप्रस्थाता ।**

आशीः प्रार्थनार्थकानि पदानि यस्यां साऽऽशीर्पदा तयाऽऽशीर्पदया, एतादृश्यर्चे-त्यर्थः । हस्तौ पृणस्व बहुभिर्वसव्यैराप्रयच्छ दक्षिणादोत सव्यादिति आशीः प्रार्थना-र्थकानि पदानि । आशीर्पदयेति ज्ञानार्थम् । ज्ञानाभावे यजुर्भ्रेषप्रायश्चित्तं भुवः स्वाहेति दक्षिणाग्नौ होतव्यम् । दक्षिणस्य हविर्धानस्येति वचनं ब्राह्मणानुकरणार्थम् । दक्षिणस्य हविर्धानस्येत्येतस्योत्तरत्रानुवृत्तिं वारयितुमुत्तरस्येति वचनमावश्यकमेव । दक्षिणं कर्णातर्दमित्यत्र दक्षिणग्रहणमुत्तरकर्णातर्दव्यावृत्त्यर्थम् । कर्णातर्दशब्देनेषयोः संधानकील उच्यते । कर्णातर्दमित्यत्र द्वितीया, एनपा द्वितीयेति सूत्रेण । मेथी बन्ध-नार्थो दृढः स्तम्भः । उत्तरं कर्णातर्दमित्यत्रोत्तरग्रहणं दक्षिणव्यावृत्त्यर्थम् । मेथीं निहन्तीत्यनुषज्यते । सव्यादित्यन्तः पूर्वो मन्त्रः । त्रेधोरुगाय इत्यन्त उत्तरः । विष्णोर्वीर्याणि प्रवोचमित्यनेन लिङ्गेनाऽऽशीर्पदसंज्ञा विष्णोर्नुकमित्येतस्या अपि । अथवा दिवो वा विष्णवित्येतस्या एवाऽऽशीर्पदसंज्ञा श्रुतावुक्ता तदनुरोधेन सूत्रेऽपि दिवो वेत्येतस्या एवेयं संज्ञा नोत्तरस्या इति । अस्मिन्पक्षे योगरूढत्वं पदस्य द्रष्टव्यम् ।

**विष्णोर्ध्रुवमसीति तत्रैते निबध्नीतः ।**

तत्र तयोर्मध्योरेते शकटे कर्णातर्दयोर्बध्नीतः । निशब्दो दार्ढ्यमाचष्टे । बन्धनं रज्ज्वा वेष्टनम् ।

**विष्णोर्ध्रुवोऽसीति ग्रन्थी कुरुतस्तौ प्रज्ञातौ भवतः ।**

वेष्टितरज्ज्वोर्ग्रन्थी कुरुतः । तौ ग्रन्थी प्रज्ञातौ दृढौ, सदोहविर्धानानां पूर्वकृता-न्ग्रन्थीन्विस्रस्येत्यग्रे सूत्रकृता ग्रन्थिविस्रंसनस्य विधास्यमानत्वात्तावत्पर्यन्तं प्रज्ञातत्वम् ।

**ऊर्ध्वाः शम्याः समुत्कृष्योपरिष्टात्परिवेष्टयतो यथा सुष्ठु ।**

ऊर्ध्वा उत्पाट्याधःकुम्बाः प्रतिमुच्य रज्ज्वोपरिष्टात्परिवेष्टयतो यथा न पततस्तथा दृढं परिवेष्टयत इत्यर्थः । ऊर्ध्वत्वे हेतुभूतां श्रुतिमाहाऽऽपस्तम्बः—उत्ताना हि देवगवा वहन्तीति विज्ञायत इति । हिर्हेतौ ।

**पर्यन्त्याः स्थूणा मिनुतः ।**

पर्यन्तमर्हन्ति पर्यन्त्याः । दण्डादित्वाद्यत्प्रत्ययो ननु पर्यन्ते भवा इति । तत्र भवनाभावात् । अथवा भवनमत्र सत्तारूपं द्रष्टव्यम् । सत्ता चात्र भाविनी ज्ञेया । स्थूणा द्विशाखास्तम्भा मिनुतः खनतः । साध्यानां२ षडहेन स्वर्गकामः पृष्ठ्यः षडहो बृहद्रथंतराभ्यां यन्त्याश्वत्थी हविर्धानं चाऽऽग्नीध्रं च भवतश्चक्रीवती भवत इत्यत्राश्वत्थवृक्षनियमादत्र स्थूणानां वृक्षा अनियता यज्ञिया ज्ञेयाः । अत्रापि यथा सुष्ठ्विति पदमन्वेति ।

**यथाऽग्रेण खरं३ संचरो भवति ।**

यथाऽग्रेण खरं संचरो मार्गो भवति तथा मिनुत इति पूर्वेणान्वयः ।

**अग्रेण हविर्धाने स्थूणे निहत्य तयोरुद-**
**गग्रं वंशं निधाय प्राचो वंशानादधाति ।**

अग्रेण हविर्धाने स्थूणे निहत्येत्यनेनेदं ज्ञायते हविर्धानाग्रे हविर्धानमण्डपार्धे यथा भवतस्तथा स्थापनीये तदग्रसमीपे एते स्थूणे । एते च स्थूणे मण्डपमध्यस्थे मण्डपाधारभूते भवत इति । तयोः स्थूणयोः, उदक्, अग्रं यस्य स उदगग्रस्तमुदगग्रम् । एतादृशं वंशं वेणुस्तम्भं निधाय स्थापयित्वा प्राचः प्राचीनाग्रान्वंशान्सर्वतः पर्याप्तान्निदधाति स्थापयति ।

**विष्णोः पृष्ठमसीति मध्यमं छदिरधि निदधाति ।**

अधि उपरि वंशेषु परिशेषादितरे तूष्णीम् । तूष्णीमितरे छदिषी अध्यूह्येते-वाऽऽपस्तम्बः ।

**विष्णो रराटमसीति पुरस्ताद्रराटीं परिश्रयति ।**

पुरस्तात्पुरोभागे करिष्यमाणद्वारप्रदेशे रराटीं वक्ष्यमाणलक्षणां परिश्रयति उपरिष्टाच्छ्लेषयतीत्यर्थः ।

तस्याः स्वरूपमाह—

**तेजनी रराट्यैषीकी प्राच्यर्ण+काण्डा**
**मध्ये विततां तां वंशे निबध्नाति ।**

तेजनी यष्टिः । यथोक्तं बाह्वृच्ये–तेजन्या उभयतोऽन्तयोरिति । चतुर्थः संधिर्हीषुरनीकं शल्यस्तेजनं पर्णानीति च । सोमः शल्यो विष्णुस्तेजनमिति च । ब्राह्म-

+ सूत्रपुस्तकेषु अणुकाण्डेति ह्रस्वपाठो लभ्यते ।

णेऽपि अग्निमनीकं० लोमं० शल्यं विष्णुं तेजनमिति । सा चैषीकी, इषीकतृणजन्यय-ष्टिकारूपा । प्राची प्रागायता नतूदीची । अणुकाण्डाऽस्थूलपर्वा । दीर्घश्छान्दसः । मध्ये वितता विष्यूता । क्वचित्पुस्तके तथैव पाठः । मध्ये सुषिरं कृत्वा सूत्रे प्रोता । एवंभूता तेजनीरूपा रराटी तां तोरणस्थानीययोः पूर्वद्वारस्थूणयोरुपरितनवंशे निबध्नातीत्यर्थः ।

विष्णोः स्यप्त्रे स्थ इति रराट्या अन्तौ व्यवास्यति ।

स्थूणयोर्निहिते उदगग्रे पूर्वप्रान्तस्थवंशे रराट्या रज्ज्वा अन्तौ व्यवास्यति । विशब्दो दार्ढ्यमाचष्टे । अवावनतः सन्बध्नाति ।

कटांस्तेजनीश्च प्रवर्तं छदिषामन्तरालेष्वन्ववस्यन्ति ।

कटान्, तृणानि च्छदींषि तेजनीर्यष्टिकाश्च प्रवर्तं प्रवृत्य प्रवृत्य च्छदिषामन्तरालेषु अन्ववस्यन्ति तं तमन्तरालप्रदेशमनुलक्षीकृत्यावस्यन्ति अधोऽधो योजयन्तीत्यर्थः । चकारस्तृणसंग्रहार्थः । अत्र बहुवचनश्रवणात्परिकर्मिणः कर्तारः । तेजन्यो यष्टयः । पूर्ववत्काभिश्चियष्टिभिः सह कटान्बद्ध्वा बद्ध्वा तत्र च्छिद्रेषु दधतीत्यर्थः ।

तानन्तर्वर्ता इत्याचक्षते ।

य इमे तेजनीकटा बद्धा योजितास्तानन्तर्वर्ता इत्याचक्षते । अन्तर्वर्तान्करोति व्यावृत्त्या इति ब्राह्मणेऽन्तर्वर्तशब्देनाभिधीयन्त इत्यर्थः ।

परि त्वा गिर्वणो गिर इत्यभितः परिश्रयतः ।

हविर्धानमिति शेषः । द्विवचनादध्वर्युप्रतिप्रस्थातारौ । अभितः स्वं स्वं भागमभि-लक्ष्य परितः श्रयत आच्छादयतः । जुष्टय इत्यन्तो मन्त्रः ।

पूर्वमपरं च द्वारे कुरुतः ।

चकारो द्वारे इत्येतदनन्तरमन्वेति । तथा चैवमर्थो भवति पूर्वमपरं द्वारे च कुरुत इति । चकारो महतां गवाक्षाणामपि करणं समुच्चेतुम् । एकं पूर्वमेकपरमिति द्वारद्वयं कुरुतः । पूर्वं पूर्वदिक्स्थमपरमपरदिक्स्थं कुरुतोऽध्वर्युप्रतिप्रस्थातारौ ।

तत्र विशेषमाह—

अध्वर्युर्दक्षिणां द्वारेयीं परिषीव्यति प्रतिप्रस्थातोत्तराम् ।

पूर्वा परिभाषा हविर्धानविषयिण्यत्र कथं प्रवर्ततेतीदं सूत्रं कृतम् । द्वारशब्दाद्भवार्थे नद्यादित्वाड्ढक्, एयादेशः । तेन द्वारे भवा द्वारेयीत्यर्थो भवति । अत्र भवनमुत्पत्तिर्न भवति असंभवात्, किंतु सत्ता । सा च भाविन्यत्र ग्राह्या । इदं च द्वारस्थूणाविशेषणम् । दक्षिणां द्वारस्थूणामध्वर्युः परिषीव्यति प्रतिप्रस्थातोत्तरां द्वारेयीमुत्तरां द्वारस्थूणाम् ।

विष्णोः स्यूरसीति सीव्यतः ।

सीवनं तु बौधायनो व्याचष्टे—अथ दक्षिणद्वार्बाहौ कुशहस्तमुपनिगृह्य दर्भेणेन प्रवयतीति। विष्णोः स्यूरसीत्यध्वर्युर्दक्षिणां द्वार्यां परिषीव्यति प्रतिप्रस्थातोत्तरामित्येतावतैव सिद्धौ सीव्यति सीव्यत इति क्रियाद्वयं पक्षद्वयज्ञापनार्थम्। पूर्वसूत्रेण क्रमेण परिषीवणं विधीयत उत्तरसूत्रेण सह परिषीवणं विधीयत इति विरोधाद्विकल्पः। मन्त्रस्तु देहलीदीपन्यायेनोभयत्रान्वेति। दर्भेणच्छिद्रप्रोतया रज्ज्वा कूर्चवत्कुशानुपचारयन्नाऽऽप्राद्वेष्टयतीत्यर्थः।

विष्णोर्ध्रुवोऽसीति ग्रन्थी कुरुतस्तौ प्रज्ञातौ भवतः।

स्पष्टोऽर्थः। यं प्रथमं ग्रन्थिं ग्रथ्नीयाद्यत्तं न विस्रंसयेदमेहेनाध्वर्युः प्रमीयेत तस्मात्स विस्रस्य इति ब्राह्मणे प्रथमकृतग्रन्थेरविस्रंसने दोषश्रवणात्प्रज्ञातं ग्रन्थिकरणम्। सदोहविर्धानानां पूर्वकृतान्ग्रन्थीन्विस्रस्येत्यन्ते विस्रंसनं विहितमेव सूत्रकृता। अमेहेन मूत्रनिरोधेन। तस्माद्यत्र यत्र प्रथमग्रन्थयस्तत्र तत्र ग्रथितास्ते सर्वे प्रज्ञाताः कार्याः पश्चाद्विस्रंसनीयाश्चेति भावः। विष्णोर्ध्रुवमसीत्यनेन विकल्पतेऽयं मन्त्रः। अथवा पूर्वत्र विनियोगो य उक्तः स एव वैतद्विनियोगः।

वैष्णवमसि विष्णवे त्वेति संमितमभिमृशतः।

संमितं विमितं हविर्धानमिति शेषः।

प्र तद्विष्णुः स्तवते वीर्याय मृगो न भीमः कुचरो गिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वेति संमिताद्धविर्धानात्प्रागुपनिष्क्रामतः।

संमितात्, विमितात्। हविः सोमाख्यं धीयते स्थाप्यते यस्मिंस्तस्माद्धविर्धानाद्धविर्धानमण्डपात्प्राक्पुर उपनिष्क्रामतो गच्छतः। अध्वर्युप्रतिप्रस्थाताराविति शेषः। तयोरेवोपस्थितत्वात्। प्रागित्येव पाठः। प्राङिति पाठे कर्तृविशेषणं स्यात्, तथा सति प्राञ्चाविति द्विवचनापत्तिः स्यात्। अन्यत्स्पष्टम्।

उपनिष्क्रम्य वा जपतः।

उपविष्टाभ्यां तिष्ठद्भ्यां वा जपः कार्यः।

त्रीन्प्राचः प्रक्रमान्प्रक्रम्य जपत इत्येकेषाम् ॥ १७ ॥
इति हिरण्यकेशिसूत्रे सप्तमप्रश्ने पञ्चमः पटलः।

---

प्रक्रममानपक्षेपि प्रक्रम्यत इति प्रक्रम इति व्युत्पत्त्या पदमेवात्र ग्राह्यम्। यस्योरुषु त्रिषु विक्रमणेष्विति मन्त्रवर्णात्। त्रिः प्रक्रामतीति विज्ञायत इति भरद्वाजेन

व्यक्तवचनाच्च । हविर्धानकरणे विशेषमाहाऽऽपस्तम्बः—पुरस्तादुन्नतं पश्चान्निनतं हविर्धानमिति । उपरवकर्मण उपस्थितत्वादध्वर्योर्निष्क्रमणप्रयोजनाभावेऽप्यदृष्टार्थमस्मिन्नेव काले कृत्वा पुनः प्रविश्योपरवकर्म कर्तव्यमिति केचित् । अन्ये तु दृष्टार्थं मत्वाऽऽग्नीध्रीयविमानकाल एव निष्क्रामत्यध्वर्युः । इतरोऽत्रैव निष्क्रामति । यजमानस्यापि याजमानसूत्रे निष्क्रमणं वक्ष्यति । तस्याप्यध्वर्युवदेवेत्याहुः । वस्तुतोऽत्रैव वाऽऽग्नीध्रीयविमानकाल एव वोभयोर्निष्क्रमणं सहैवेत्येव युक्तम् । यजमानस्य तु धिष्ण्यनिवपनोत्तरमेव निष्क्रमणमित्यत्र साधकं याजमानसूत्रे वक्ष्यते ।

इति ओकोपाह्वश्रीमदग्निष्टोमयाजिसहस्राग्नियुक्तवाजपेययाजिसर्वतोमुखयाजिद्विषाहस्राग्नियुक्तपौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथदीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसूत्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंतापशामिकायां ज्योत्स्नाख्यायां वृत्तौ सप्तमप्रश्नस्य पञ्चमः पटलः ॥ ५ ॥

---

अथ सप्तमप्रश्ने षष्ठः पटलः ।

---

**दक्षिणस्य हविर्धानस्य पुरोक्षं चत्वार उपरवा भवन्त्यवान्तरदेशेषु प्रादेशमुखाः प्रादेशान्तराला बाहुमात्राः संतृण्णा अधस्ताद्विधृता उपरिष्टात् ।**

दक्षिणग्रहणमुत्तरव्यावृत्त्यर्थम् । दक्षिणस्येत्येतावत्युच्यमाने चक्रस्यापि विशेष्यस्य संभवात् । षष्ठ्याश्च सामीप्यार्थत्वस्यापि कदाचित्सत्त्वाद्दक्षिणसत्त्वसमीपवर्तिसंलग्नो योऽक्षप्रदेशस्तस्य पुर इत्यप्यर्थः स्यात्स मा भूत्किंतु मध्ये यथा स्यादित्येतादृशार्थविशेषद्योतनाय हविर्धानग्रहणम् । अक्षस्य पुरः पुरोक्षं पुरस्तादक्षस्येत्यर्थः । षष्ठ्याः सामीप्यार्थत्वकल्पनयाऽक्षस्य समीप एव । एवं चाधस्ताद्दक्षिणस्य हविर्धानस्येति फलितं भवति । स्पष्टमेवामुमर्थमाहाऽऽपस्तम्बः—दक्षिणस्य हविर्धानस्याधस्तात्पुरोक्षं चतुर उपरवानवान्तरदेशेषु प्रादेशमुखान्प्रादेशान्तरालान्करोतीति । चत्वार उपरवा भवन्तीत्येतत्सामान्यप्रतिज्ञानम् । उपोपरिष्टाद्ग्राव्णां रवः शब्दो येषु ते । अवान्तरदेशेषु आग्नेयैशाननैर्ऋत्यवायव्यकोणेषु । प्रादेशमितानि मुखानि येषां ते प्रादेशमुखाः । प्रादेशमितान्यन्तरालानि दिक्षु येषां ते प्रादेशान्तरालाः । अन्तरालमानमपि प्रादेश इत्यर्थः । बाहुरेव मात्रा प्रमाणं येषां ते बाहुमात्राः । संतृण्णाः सम्यगेकीभूताः । एतद्द्वयमधस्तात्सर्वेषां भवति । विधृताः पृथग्भूता उपरिष्टात्सर्वे भवन्ति ।

अग्नेरादानं परिलेखनं च यूपे व्याख्यातम् ।

देवस्य त्वेत्यग्नेरादानं परिलिखितमिति परिलेखनं च यूपे यूपनिमित्तके कर्मणि व्याख्यातमुक्तं यथा तथाऽत्र कर्तव्यमित्यर्थः। चकारोऽनुक्ताया अवटखननविषयकान्यकर्तृकतायाः समुच्चयार्थः ।

परिलेखनक्रममाह—

पूर्वयोर्दक्षिणं परिलिख्यापरयोरुत्तरं परिलिखत्यपरयोर्दक्षिणं पूर्वयोरुत्तरम् ।

पूर्वयोर्दक्षिण आग्नेयीस्थ उपरवः। अपरयोरुत्तरो वायवीस्थः। अपरयोर्दक्षिणो नैर्ऋतीस्थः। पूर्वयोरुत्तर ऐशानीस्थः। अनेनैवमितरान्प्रदक्षिणमुत्तरापवर्गमितिसूत्रान्तरोक्तः क्रमो बाध्यते ।

एवमनुपूर्वाण्येषां कर्माणि क्रियन्ते ।

एवं परिलेखनोक्तोऽनुपूर्वः क्रमो येषां तानि एषामुपरवाणां कर्माणि भवन्ति। बाहुमात्रा इति पूर्वत्र स्वतन्त्रतयोक्तेः परिलेखनोत्तरं तूष्णीमेव बाहुमात्रं खननम्। इदं चान्यकर्तृकमिति सूचितमेव प्राक्। संतृण्णता विधृतता च बाहुमात्रखननाव्यवहितोत्तरमेव संपादनीया। अमुमर्थं स्पष्टमाहाऽऽपस्तम्बः—अधस्तात्संतृण्णा भवन्त्युपरिष्टादसंभिन्नास्तूष्णीं बाहुमात्रान्खात्वेति। तूष्णीं बाहुमात्रान्खात्वाऽधस्तात्संतृण्णा भवन्तीत्यन्वयः। बौधायनेन तु बाहुमात्रखननार्थकप्रैषपूर्वकमुन्नेतृकर्तृकं बाहुमात्रखननादिकमुक्तम् ।

एवमनुपूर्वाण्येषां कर्माणि क्रियन्त इत्युक्तं तानि कर्माण्याह—

रक्षोहणो वलगहनो वैष्णवान्खनामीति खनति ।

उपरवान्बाहुमात्रतोऽधिकं किंचित्खनति। खनन उदकस्पर्शः स्मार्तः ।

रक्षोहणो वलगहनो वैष्णवान्निष्खिदामीति निष्खिदति ।

खानितानां मृदः शिथिलीकरणं निष्खेदनम्। अत्रोदकस्पर्शं केचिदिच्छन्ति ।

बृहन्नसीत्यभ्रिं प्रहरति ।

शिथिलीकृतायां मृदि अभ्रिं प्रहरति उपगूहति। एतावानेव मन्त्रः! ननु बृहन्नसि बृहद्ग्रावा बृहतीमिन्द्राय वाचं वदेत्येतस्य मन्त्रस्य प्रतीकग्रहणं लिङ्गविरोधात् ।

विराडसीति बाहुमुपावहरति बाहू वा ।

सपत्नहेत्यन्तो मन्त्रः। उत्तरेणोत्तरेण मन्त्रेण बाहुमुपावहरतीति वक्ष्यमाणसूत्राल्लिङ्गात्। उपावहरति प्रहृताभ्रिकाया मृदः समीपे बाहुं बाहू वाऽवनतः सन्नयतीत्यर्थः ।

इदमहं तं वलगमुद्वपामीति पांसूनुद्वपति ।

अभ्र्या पांसून्पात्रान्तर उद्वपति प्रक्षिपति। बाहोरेवोपावहरणमिति पक्ष एकेनैव हस्तेन पांसूद्वपनम्। बाह्वोरुपावहरणमिति पक्षे द्वाभ्यां हस्ताभ्याम्। निचखानेत्यन्तो मन्त्रः ।

इदमेनमधरं करोमीत्युपरवबिलेऽवबाधते ।

उपरवबिलसमीपवर्तिसमन्तप्रदेशेऽवबाधतेऽवनतो भूत्वा हस्तेन निपीडयतीत्यर्थः । अरातीयतीत्यन्तो मन्त्रः ।

निरस्तो वलग इति हरति ।

उद्धृतदेशाद्धरति पात्रेण ।

अवबाढो दुरस्युरिति यत्र खरं करिष्यन्भवति तस्मिन्देशे निवपति ।

खरः सोमसंबन्धिपात्रासादनार्थश्चतुरश्रोऽर्थसिद्धपरिमाणश्चत्वरः । निवपनं प्रक्षेपणम् ।

गायत्रेण छन्दसाऽवबाढो वलग इत्युपरवबिलेऽभ्र्या निगृह्णाति ।

दार्ढ्यार्थमभ्र्या नितरां गृह्णाति संहन्तीत्यर्थः ।

एवमितरेषु ।

उपरवेष्विति शेषः । एवं खननादिरभ्र्या निग्रहणान्तो विधिरितरेषूपरवेष्वपि भवतीत्यर्थः ।

तत्र विशेषमाह—

उत्तरेणोत्तरेण मन्त्रेण बाहुमुपावहरत्युत्तरेणोत्तरेण च छन्दसा निगृह्णाति ।

सम्राडसीत्ययं मन्त्रः पूर्वस्मादुत्तरस्तेन द्वितीये बाहुमुपावहरति । स्वराडसीत्ययं मन्त्रः सम्राडसीत्येतस्मादुत्तरस्तेन तृतीये बाहुमुपावहरति । विश्वाराडसीत्ययं मन्त्रः स्वराडसी॰ त्येतस्मादुत्तरस्तेन चतुर्थे बाहुमुपावहरति । इदमुपलक्षणं बाहू वेत्यस्य पक्षस्य । भ्रातृ॰ व्यहा, अभिमातिहा, विश्वासां नाष्ट्राणा᳚ं हन्तेति मन्त्रत्रयान्ताः क्रमेण ज्ञेयाः ।

उत्तरेणोत्तरेण च छन्दसा निगृह्णातीत्युक्तं तत्र स्वशाखायां गायत्रच्छन्दस एवाऽऽम्नानादुत्तरं छन्दः किं किं ग्राह्यमित्याकाङ्क्षायामाह—

गायत्रं त्रैष्टुभं जागतमानुष्टुभमित्याम्नातानि छन्दांसि ।

भवन्तीति शेषः । आम्नातानि शाखान्तरे । शाखान्तरे चत्वार्याम्नातानि नतु केवलं गायत्रमेव च्छन्दः स्वशाखायामिवाऽऽम्नातम् । अत्र गायत्रग्रहणं शाखान्तराभिप्रायेण । अथवा गायत्रेणैव केवलेन सर्वेषां निग्रहणमित्ययमपि पक्षोऽस्तीति ज्ञापनार्थम् । तथा- चाऽऽपस्तम्बः—प्रथमं वा सर्वेष्विति । प्रथमं गायत्रं छन्दः ।

विराडसीति पूर्वयोर्दक्षिणं यजमानोऽवमृशति सम्राडसीत्यपरयोरुत्तरमध्वर्युः ।

परस्परव्यावृत्त्यर्थमुभयोर्ग्रहणम् । पूर्वयोर्दक्षिण आग्नेयीस्थोपरवः । अव, उपरवाधो

मृशति । अपरयोरुत्तरो वायवीस्थोपरवः । अध्वर्युरित्यनन्तरमवमृशतीति शेषः । पूर्व-वदन्त उभयोर्मन्त्रयोः ।

संमृश इमानायुषे वर्चसे च देवानां निधिरसि द्वेषो यवनो युयोध्यस्मद्द्वेषाᳪसि यानि कानि चकृम देवानामिदं निहितं यदस्त्यथाभाहि प्रदिशश्चतस्रः कृण्वानो अन्याᳪ अधरान्सपत्नानित्यधस्तात्संमृशतः ।

अधस्तात्सम्यक्परस्परं मृशतः । संमृशतीमानायुष इति अपपाठ एव । एतादृशे पाठ एकत्रावमृशति एकत्र संमृशतीत्युपसर्गकृतं क्रिययोर्वैरूप्यं स्यात् । अतः संमृश इमानायुष इत्येव पाठो युक्तः । आपस्तम्बेनापि तथैव पाठ उक्तः । संमृश इति मन्त्रावयव एव । इमानिति द्वितीयान्तस्य पदस्य क्रियापदं विनाऽऽकाङ्क्षाशान्ते-रभावात् ।

किमत्रेत्यध्वर्युः पृच्छति भद्रमिति यजमानः प्रत्याह तन्नौ सहेत्यध्वर्युः ।

किमत्रेत्यत्र यजमानः संबोध्यः । यजमानाध्वर्य्वोरधस्तात्स्थितहस्तयोरेव प्रश्नप्रति-वचने । भद्रमित्यत्राध्वर्युः संबोध्यः । तन्नौ सहेत्यत्र यजमानः संबोध्यः । तन्नौ सहे-तिद्विवचनलिङ्गादध्वर्युनिष्ठमपि फलं तृतीयाध्यायेऽष्टमे पादे व्यपदेशाच्चेति सूत्रेण जैमिनिरपि अध्वर्युनिष्ठत्वमपि फलस्याऽऽह । सूत्रार्थस्तु यत्र व्यपदेशो भवति तन्नौ सहेति तत्रापि द्विवचनस्यानुपपत्तेर्ऋत्विग्गामित्वमेव फलस्येति । चकारः कर्मार्थं तु फलं तेषां स्वामिनं प्रत्यर्थवत्त्वात्स्यादिति ऋत्विग्गामित्वमेव फलस्योक्तं तदनु-कर्षणार्थः ।

स्वराडसीत्यपरयोर्दक्षिणं यजमानोऽवमृ-शति विश्वाराडसीति पूर्वयोरुत्तरमध्वर्युः ।

अपरयोर्दक्षिणो नैर्ऋतीस्थ उपरवः । पूर्वयोरुत्तर ऐशानीस्थ उपरवः । अन्यत्पूर्व-वद्व्याख्येयम् । पूर्ववदन्तोऽनयोर्मन्त्रयोः ।

संमृशतो यथा पुरस्तात् ।

यथा पुरस्तादित्यनेन संमृश इमानायुष इति मन्त्रोऽधस्तात्प्रदेशश्च प्राप्यते । संमृ-शति यथा पुरस्तादित्यपपाठ एव ।

किमत्रेति यजमानः पृच्छति भद्रमित्य-ध्वर्युः प्रत्याह तन्म इति यजमानः ।

किमत्रेत्यत्राध्वर्युः संबोध्यः । भद्रमित्यत्र यजमानः संबोध्यः । तन्म इत्यत्रा-ध्वर्युः संबोध्यः । अत्राप्यधस्तात्स्थितहस्तयोरेव प्रश्नप्रतिवचने ।

रक्षोहणो वलगहनः प्रोक्षामि वैष्णवानिति ॥ १८ ॥ यवमतीभिरद्भिरुपरवाꣳस्त्रिः प्रोक्षति ।

यवमतीभिर्यवमिश्राभिः । यवो यवौ यवा वाऽऽसु सन्तीति विग्रहत्रयस्यापि प्रकृते स्वीकारे बाधकाभावादेकेन यवेन द्वाभ्यां यवाभ्यां त्रिभिश्चतुरादिभिर्वाऽपि यवैर्मिश्रणम् । न यवसंख्यानियमः । अद्भिरिति वचनाद्गृह्योक्तसंस्काराभावोऽत्र । त्रिस्त्रिरित्यपि पाठः क्वचित्पुस्तके दृश्यते । अयमेव पाठो युक्तः । सर्वेषां युगपत्प्रोक्षणस्य नियमेनासंभवात् । एवमनुपूर्वाण्येषां कर्माणि क्रियन्त इत्यनेनात्रापि क्रमस्य प्रापणात् । सूत्रान्तरे स्पष्टतया क्रमस्यैवोक्तत्वात् । उपरवमन्त्रस्तन्त्रं स्याल्लोकवद्बहुवचनात्, न संनिपातित्वादसंनिपातिकर्मणां विशेषाग्रहणे कालैकत्वात्सकृद्वचनमिति जैमिनिना सूत्रद्वयेनास्यार्थस्योक्तेश्च । उपरवमन्त्रस्तन्त्रं स्यात्, बहुवचनात् । लोके यथैकस्मिन्बहुवचनमसमर्थं तद्वदिहापीति पूर्वसूत्रार्थः । संनिपातित्वान्मन्त्रस्य कर्मादौ संनिपतनशीलत्वात्, मन्त्रान्तकर्माद्योः संनिपतनशीलत्वात्करणमन्त्रत्वादिति यावत्करणमन्त्रे मन्त्रान्तेन कर्मादिसंनिपातनियमात् । खननस्योपक्रमो मन्त्रान्तेन संनिपतितस्तदर्थ एव मन्त्रो नान्येषामुपरवाणामलमुपकर्तुम् । करणमन्त्र एतादृशविशेषग्रहणात्सकृद्वचनं मन्त्रस्य न भवति । अतः प्रातिपदिकमात्रं कारकमात्रं च विवक्षितं, बहुवचनं त्वेकस्मिन्नेव पूजार्थं प्रयुक्तमिति द्रष्टव्यम् । न च पाशानित्यत्रापि बहुवचनस्याविवक्षा स्यादिति वाच्यम् । बहुवचनविवक्षितत्वस्य सर्वथैवात्रासंभवेन दृष्टान्तवैषम्येण पाशाधिकरण आपत्तेरभावात् । असंनिपातीनि कर्माणि यत्र मन्त्रान्तक्रियाद्योः संनिपातो नास्ति तान्यसंपातिकर्माणि तेषां मन्त्रक्रिययोरेकस्यान्तोऽपरस्याऽऽदिरित्ययं विशेषः । सोऽकरणमन्त्रे नास्ति । अतो विशेष(षा)ग्रहणादुभयोः कालैकत्वात्सकृदेव वचनमकरणमन्त्रस्य । तेनार्थात्करणमन्त्रस्याऽऽवृत्तिरिति उत्तरसूत्रार्थः । एकादशाध्याये चतुर्थे पादेऽस्ति । सूत्रे त्रिस्त्रिरिति पाठे सकृन्मन्त्रेण द्विस्तूष्णीमिति प्रत्युपरवम् । मन्त्रगतं बहुवचनमग्रिममन्त्रगतबहुत्ववत्पूजार्थं ज्ञेयम् । त्रिरिति पाठेऽपि सकृदेव मन्त्रः संभवात् । असंभवे मन्त्रावृत्तिः क्रियासमाप्त्यनुरोधेन ।

रक्षोहणो वलगहनोऽवनयामि वैष्णवानिति यवमतीरपोऽवनयति ।

उपरवेषु यवमिश्रा अपः प्रक्षिपति । सर्वत्र मन्त्रावृत्तिः ।

यवोऽसीति यवं प्रास्यति ।

[य]वोऽसीति मन्त्र एकवचनश्रवणाद्यवं प्रास्यतीत्यत्राप्येकवचनम् । अविवक्षितमेतदेकव[च]नम् । तेन बहव एव यवाः प्रक्षेपणीयाः । तथा च बौधायनः—अथैषु यवान् [प्र]कन्दयति यवोऽसि यवयास्मद्द्वेषो यवयारातीरितीति । प्रासनं प्रक्षेपणम् । अत्र

१ ख. ग. ˚शेषग्र˚ ।

प्रशब्दस्ताडनमिव क्षेपणं द्योतयति । यवयास्मद्द्वेषो यवयारातीरिति लिङ्गात् । अराती-रित्यन्तो मन्त्रः ।

रक्षोहणो वलगहनोऽवस्तृणामि वैष्ण-
वानिति प्राचा बर्हिषाऽवस्तृणाति ।

अत्र बर्हिःशब्दस्तृणजातिवाची न तु संस्कारवाचीति ज्ञेयम् । एवं च च्छेदनादयो बर्हिर्धर्मा न भवन्ति । तथा च प्रथमाध्याये चतुर्थपादे जैमिनिः—बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः इति । सूत्रार्थस्तु—बर्हिराज्ययोरसंस्कारे जातिमात्रे शब्दला-भाद्याज्ञिकप्रयोगेऽपि जात्यनुगमाद्बर्हिर्लुनातीत्यत्र च यद्बर्हिस्तल्लुनातीतिवाक्यार्थानुगु-ण्यादन्यथाऽतिक्लिष्टकल्पनापत्तेरतच्छब्दः संस्कारनिमित्तकः शब्दो नेति । प्राचा प्राचीनाग्रेण बर्हिषा तृणेनावाधः प्रदेशान्स्तृणाति अन्तर्हितान्करोति ।

रक्षोहणो वलगहनोऽभिजुहोमि वैष्णवा-
निति हिरण्यमन्तर्धाय स्रुवेणाभिजुहोति ।

क्रमेणोपरवभूमिषु हिरण्यमन्तर्धाय तथैव मध्ये निधाय स्रुवेणाभिजुहोति हिरण्यम-भिलक्षीकृत्य जुहोति । जुहोतिचोदितत्वात्स्वाहाकारः । दर्विहोमधर्मः । अग्न्योरन्तरा गमने नात्र दोषः । तेनैव प्रत्यागमनम् । स्रुवग्रहणं जुह्वा्व्यावृत्त्यर्थम् ।

रक्षोहणौ वलगहनौ प्रोक्षामि वैष्णवे इत्यधिषवणफलके
प्रोक्षत्यौदुम्बरे कार्ष्मर्यमये पालाशे वा तष्टे प्रधिमुखे
सꣳहिते पुरस्तात्समापिकर्ते पश्चाद्द्व्यङ्गुलेन त्र्यङ्गुलेन
चतुरङ्गुलेन वा पश्चादसꣳहिते संतृण्णे असंतृण्णे वा ।

फलकशब्दस्य नपुंसकलिङ्गत्वाद्वैष्णवे इत्येव पाठः । उत्तरमन्त्रेषु स्त्रीलिङ्गपाठस्तु छान्दसत्वेन समर्थनीयः । रक्षोहणौ वलगहनौ प्रोक्षामि वैष्णवी इति केचित्पठन्ति । ययोरधि उपरि सोमः सूयते कण्ड्यते ते अधिषवणे, अधिषवणे च ते फलके चाधि-षवणफलके ते अनेन मन्त्रेण संस्कृताभिरद्भिः प्रोक्षति युगपदेव, द्विवचनलिङ्गात्संभ-वाच्च । तयोः स्वरूपमाह—औदुम्बरे इत्यादिना । औदुम्बरे उदुम्बरविकारभूते । बिल्वादित्वाद्विकारार्थेऽण्प्रत्ययः । कार्ष्मर्यः श्रीपर्णीवृक्षस्तद्विकारभूते कार्ष्मर्यमये । नित्यं वृद्धशरादिभ्य इत्यनेन शरादित्वान्नित्यं मयट्प्रत्ययः । पालाशे पलाशविकार-भूते । पलाशादिभ्यो वेत्यनेन वैकल्पिकोऽण्प्रत्ययः । तष्टे सर्वतः कपाटे इव । प्रधि-र्धनुराकारं चक्रस्य फलकं तस्यैव मुखं ययोस्ते प्रधिमुखे । संहिते संश्लिष्टे । एतादृशे पुरस्ताद्भवतः । सममृजु । अपिरत्र च्छेदने किंचिद्विशेषं द्योतयितुम् । स च श्लैक्ष्ण्य-रूपः । अपिकर्तं श्लैक्ष्ण्यविशिष्टं छेदनं ययोस्ते समापिकर्ते । एतादृशे पश्चाद्भवतः । समीचीनत्वार्थको वा । तेन समीचीनच्छेदनं कर्तव्यमिति सिद्धं भवति । तच्च श्लैक्ष्ण्य-रूपमेव । अनेन पश्चात्प्रधिमुखत्वं व्यावर्त्यते । पश्चात्फलकयोः पश्चिमप्रान्ते मध्ये

द्व्यङ्गुलाद्यन्यतममात्रमन्तरालं भवति । द्व्यङ्गुलेनेत्यत्र प्रमाणेनेति शेषः । एवं त्र्यङ्गुलेन चतुरङ्गुलेनेत्यत्रापि । इदं च प्राक्तिर्यक्त्व तिर्यगेव वा । तथा चायमर्थो भवति—दक्षिणफलकस्यैकाङ्गुलात्मकं सार्धाङ्गुलात्मकं द्व्यङ्गुलात्मकं वा पश्चिमप्रान्तोत्तरप्रान्तयोः समचतुरश्र(म)संभेदार्थं तक्ष्णा छिद्रं कारयेत् । उत्तरफलके तु पश्चिमप्रान्तदक्षिणप्रान्तयोस्तथैव । तिर्यगेवेति पक्षे दीर्घचतुरश्रं भवति । अनेन संश्लिष्टता पश्चाद्व्यावर्त्यते । समाधिकर्ते द्व्यङ्गुलेन त्र्यङ्गुलेन चतुरङ्गुलेन वाऽसश्हिते च पश्चादिति छावत्राद्भक्तव्ये भेदेन सूत्रकरणमसंहितत्वस्यानित्यताज्ञानार्थमिति द्रष्टव्यम् । संतर्दनं संश्लेषणं तद्विशिष्टे संतृण्णे द्वयोः समीभूतयोर्दृढसंश्लेषार्थं संश्लेषणप्रदेशौ तक्षणेन तनूकृत्यैकस्योपर्यपरं संश्लेषयेदित्येतत्संतर्दनम् । दक्षिणफलकस्योत्तरप्रान्त उतरफलकस्य दक्षिणप्रान्ते साम्येन च्छिद्रे कृत्वा दक्षिणफलकोत्तरप्रान्तस्थाच्छिद्रे दारुमयं कीलकं दत्त्वा तं कीलकमुत्तरफलकदक्षिणप्रान्तस्थच्छिद्रे प्रवेशयेदित्येवं संतर्दनं तद्विशिष्टे इति केचिदाहुः । असंतृण्णे संतर्दनरहिते । दीर्घसोमे संतृद्ये धृत्या इति श्रुतौ संतृण्णे अधिषवणफलके इत्यहीनसूत्रे चाहीने संतर्दननियमादत्र विकल्प ऐच्छिक इति केचिदाहुः । वस्तुतः प्रकृतावसंतृण्णे दीर्घसोमशब्दवाच्येऽहीने संतृण्णे इति व्यवस्थितविकल्प एव । यद्यपीष्ट्याद्यपेक्षया दीर्घत्वं प्रकृतावपि तथाऽपि सोमगतदीर्घत्वस्य सोमान्तरापेक्षत्वाद्विकृतावुत्कर्षः संतर्दनस्य । तथा च तृतीयाध्याये तृतीयपादे जैमिनिः—संतर्दनं प्रकृतौ क्रयणवदनर्थलोपात्स्यादिति । क्रयणवदनर्थलोपादर्थलोपाभावात्संतर्दनं प्रकृतौ स्यात् । वासोहिरण्यप्रभृतिषु क्रयद्रव्येष्वेकेनैव क्रयसिद्धावितराणि वचनसामर्थ्याद्दीयमानान्यपि सुतरामानतिं कुर्वन्तीति वासःप्रभृतिषु यथा नार्थलोप एवं प्रकृतेरल्पकालत्वादसंतृण्णयोरपि फलकयोरभिषवसंभवेऽपि वचनसामर्थ्यात्संतर्दनाश्रयणे सति अभिषवे सौकर्यमेव लभ्यते नत्वर्थलोप इत्यलुप्तार्थत्वात्संतर्दनं प्रकृतौ स्यादिति पूर्वपक्षसूत्रमाचार्यैरित्थं व्याख्यातम् । भाष्यकारेण तु संतर्दनमलुप्तार्थत्वात्प्रकृतौ स्यात्संतर्दनासंतर्दनयोः क्रयणवद्विकल्पसंभवेनासंतर्दने सत्यपि संतर्दननिवेशोपपत्तेरित्येवं विकल्पे क्रयणवदित्येतद्दृष्टान्तीकृत्य व्याख्यातम् । अविशेषेण संस्थासु द्विरात्रादिषु चोत्कर्ष इति सिद्धान्तः । अत्र सूत्रं तत्रैव—उत्कर्षो वा ग्रहणाद्विशेषस्येति । दीर्घसोमत्वरूपविशेषस्य संस्थादिष्वेव सत्त्वेन तत्रैव संतर्दनं न प्रकृतौ तदभावादिति तदर्थः । दीर्घत्वं यजमानगतं गृहीत्वा पुनः प्रकृतावेव समावेशनकर्तृनो वा विशेषस्य तन्निमित्तत्वादिति सूत्रेण कर्ता यजमानस्तस्मात् , दीर्घत्वरूपविशेषस्य तन्निमित्तत्वाद्यजमाननिमित्तत्वादिति कर्तृतो वेति सूत्रोक्तपक्षं खण्डयति क्रतुतो वाऽर्थवादानुपपत्तेः स्यादिति सूत्रेण धृत्या इत्यर्थवादानुपपत्तेः क्रतुतः क्रतुनिमित्तक एव विशेषो नतु यजमाननिमित्तक इति

बौधायनोऽपि —अथास्यैते फलके दीर्घसोमे संतृण्णे भवतोऽसंतृण्णे एकाहे ते संसृष्टे उपदधातीति ।

**रक्षोहणौ वलगहनावुपदधामि वैष्णवी इत्यधिषवण-फलकाभ्यामुपरवानपिदधाति द्वौ दक्षिणेन द्वावुत्तरेण ।**

द्वाभ्यां हस्ताभ्यां युगपदधिषवणफलकाभ्यामुपरवानपिदधाति आच्छादयति । तत्र विशेषः—द्वावुपरवौ दक्षिणेनाधिषवणफलकेनापिदधाति द्वावुपरवावुत्तरेणाधिषवणफलके-नापिदधाति द्वौ दक्षिणेन द्वावुत्तरेणेति । अनेन द्वयोः प्रमाणं प्रयोजनं च तुल्यमिति गम्यते । तेन काष्ठलाभानुरोधेनैकेन फलकेन त्रयाणामपिधानमेकेनैकस्यापिधानमित्यपि कदाचित्स्यात्तन्निवारितं भवति । सकृदेव मन्त्रः । द्विवचनलिङ्गात्संभवाच्च । ताभ्या-मुपरवानपिदधातीति तच्छब्दपरामर्शेनैव तयोर्लाभे पुनरधिषवणफलकाभ्यामितिवचनम-नन्तरोक्तौदुम्बरत्वादिस्वरूपापेक्षायाः पाक्षिकत्वद्योतनार्थम् । अपिधाने द्वौ दक्षिणेन द्वावुत्तरेणेतिवचनेनोदक्संस्थतयाऽपिधानं नतु प्राक्संस्थतयेति गम्यते । एकेन द्वावेकेन द्वावित्येवमुच्यमाने प्राक्संस्थताऽपि पक्षे स्यात्सा मा भूदित्येतदर्थमेवं वचनम् । एकेन दक्षिणावपिदधात्येकेनोत्तरावित्येतावतैवोदक्संस्थतासिद्धावेवं वचनमिदं फलकं दक्षिणमि-दमुत्तरमितिज्ञानार्थं पूर्वमेव चिह्नं कर्तव्यमितिज्ञापनार्थम् । दक्षिणेनोत्तरेणेति करणार्थक-तृतीयान्ते पदे । अथैने शङ्कुभिः परिणि(ण)हन्तीति बौधायनेन षड्भिः शङ्कुभिरनवस-र्पणार्थं स्तम्भनमुक्तं तदपि दृष्टार्थत्वात्कर्तव्यमेव । द्वाभ्यां पुरस्ताद्द्वाभ्यां पश्चाद्द्वाभ्यामभि-तोऽनवसर्पणायेति शङ्कुसमावेशनप्रकारोऽप्युक्तस्तेनैव । द्वयोः पुरो द्वौ शङ्कू द्वयोः पश्चाद्द्वौ दक्षिणस्य दक्षिणत एक उत्तरस्योत्तरत एक इत्यर्थः ।

**रक्षोहणौ वलगहनौ पर्यूहामि वैष्णवी इत्यौपरवेण पुरीषेण पर्यूहति ।**

अधिषवणफलके इति शेषः । उपरवाणामिदमौपरवं तेनौपरवेण पुरीषेण मृदा परि परितः समन्तादूहति वेष्टयतीत्यर्थः । संतृण्णत्वपक्षे पर्यूहणक्रियैकैव । असंतृण्णत्वपक्षे भिन्नैव । यद्यपि द्रव्यपृथक्त्वेऽभ्यावर्तेत इति परिभाषासूत्रान्मन्त्रावृत्तिरस्मिन्पक्षे प्राप्ता तथाऽपि मन्त्रस्य द्विवचनलिङ्गत्वात्सकृदेव भवति ।

**रक्षोहणौ वलगहनौ परिस्तृणामि वैष्णवी इति दर्भैः परिस्तृणाति ।**

अधिषवणफलके इति शेषः । परिस्तरणविषये दर्भसाध्यत्वस्यातिप्रसिद्धत्वेनार्था-देव तत्सिद्धौ दर्भवचनं प्रसूनरहिततृणविशेषसंग्रहार्थमच्छिन्नाग्रत्ववैशिष्ट्यसंग्रहार्थं च । परि परितः समन्तप्रदेशं दर्भैराच्छादयतीत्यर्थः । परितो वेष्टयतीति वाऽर्थः । अत्रापि संतृण्णासंतृण्णत्वभेदेन पूर्ववद्व्यवस्था द्रष्टव्या । प्रादक्षिण्यं परिभाषासिद्धम् ।

---

१ ख. संतृण्णे ।

रक्षोहणौ वलगहनौ वैष्णवी इत्यभिमन्त्रयते ।

अधिषवणफलके इति शेषः । स्पष्टोऽर्थः ।

रक्षोहत्वा वलगहत्प्रोक्षामि वैष्णवमित्यधिषवणचर्म प्रोक्षति ।

अधि उपरि सोमः सूयते कण्ड्यते यस्मिंस्तच्च तच्चर्म च । अद्भिरितिवचनाभावात्प्रोक्षणार्थानामपां संस्कारः ।

चर्मस्वरूपमाह—

लोहितमानडुहमुपरिष्टाल्लोमाऽऽसेचनवद्यथाऽभिषवायोपाप्तं भवति ।

लोहितं रक्तम् । अनडुह इदमनडुहो विकारो वाऽऽनडुहम् । उपरिष्टाल्लोमानि यस्य । आसिच्यते बहिरानीयते सोमरसो येन तदासेचनं तदस्यास्तीत्यासेचनवत् । आसेचनवदित्यनेन पुटाकारता गम्यते । यथाऽभिषवायेत्यनेनार्थसिद्धपरिमाणं प्रदर्शितम् । उपाप्तं पर्याप्तम् । उपात्तमिति पाठ उपयुक्तमित्यर्थः । यथाशब्दस्य यावदित्यर्थ उभयत्रापि चर्मविशेषणान्येतानि ।

रक्षोहत्वा वलगहत्स्तृणामि वैष्णवमित्यधिषवणफलकयोरास्तृणाति ।

चर्मेति शेषः । चर्मणि विशेषमाहाऽऽपस्तम्बः—यस्मिन्निमभीते तस्याधिषवणचर्म खरं परिकृत्तं चतुष्पुटमुपरिष्टादासेचनवदिति । अस्यार्थः—यस्मिंश्चर्मणि सोमो मितस्तस्यैकदेशेनाधिषवणचर्म कर्तव्यं तच्च खरं भवति न मृदूकृतम् । परि परितः समन्तभागे कृत्तं छेदितं चतुष्पुटं येषु पुटेषु ग्रावाणः(वाणः) साद्यन्ते । अनेन चतसृषु दिक्षु विदिक्षु वा चत्वारः पुटाः कर्तव्या इति गम्यते ।

तस्मिꣳश्चतुरो ग्राव्णः सꣳसादयत्यूर्ध्वसानूनाहननप्रकारानुपरं प्रथिष्ठं मध्ये पञ्चमम् ।

तस्मिन्नास्तृते चर्मणि । यद्यपि ग्रावशब्दः केवलपाषाणपरस्तथाऽपि अग्रे स्वरूपविशेषाभिधानात्कण्डनसाधनीभूत आकारविशिष्टो लोकप्रसिद्धः पाषाणोऽत्र ग्रावशब्देन ग्राह्यः । तत्संख्यामाह—चतुर इति । संसादयतीत्यत्रत्यसंशब्दो यथोर्ध्वसानव आसादिता न पतेयुस्तथेत्येतादृशमर्थं सूचयति । तत्र विशेषमाह—ऊर्ध्वसानूनाहननप्रकारानिति । सानुशब्दोऽग्रवाची । ऊर्ध्वानि सूक्ष्मरूपप्रदेशात्मकानि सानूनि येषां त ऊर्ध्वसानवस्तानूर्ध्वाग्रानिति यावत् । स्थूलप्रदेशो मुखं तदेव कण्डनसाधनम् । आहन्यतेऽनेनेत्याहनन आहननाय प्रकारो येषु त आहननप्रकारास्तान् । आहननं कण्डनं तदर्थं विशेषः स्थौल्यरूपः संज्ञार्थं कल्पनीय इत्यर्थः । कण्डनाधिकरणीभूतः

---

१ इ. ज झ. ञ. ढ. °पात्तं भ° ।

पाषाण उपरः । मध्ये चर्मणो मध्य उपरं प्रथिष्ठम् । मध्य इति स्वतन्त्रवचनात्पृथगे-तस्य सादनम् । उपरस्य महत्त्वेन चतुर्भिर्ग्रावभिः सहाऽऽसादनासंभवात्पृथगारम्भः । अतिशायने तमबिष्ठनाविति सूत्रेणातिशयितेऽर्थे पृथुशब्दादिष्ठन्प्रत्ययो र ऋतो हला-देर्लघोरित्यनेनेष्ठे परत ऋकारस्य रकारः, टेरिति सूत्रेणेष्ठे परत उकारस्य लोपस्तेन प्रथिष्ठमिति रूपं भवति । पञ्चममिति वचनं कण्डनाधिकरणीभूतस्याऽऽकारविशिष्ट-स्यापि पाषाणस्य ग्रावत्वमस्तीति प्रदर्शयितुम् । प्रयोजनं यदि ग्रावा भिद्येतेत्यादिना विहितं प्रायश्चित्तमुपरभेदेऽपि भवतीति ।

बृहन्नसीत्येकैकम् ।

एकैकमित्यनेन पूर्वं चतुर्णां ग्राव्णां तूष्णीमेव संसादनं कृत्वा मध्य उपरस्य तत-स्तूष्णीमेव संसादनं कृत्वा पुनर्मन्त्रेण प्रागादिदिक्षु क्रमेणैकैकं ग्रावाणं मध्य उपरं च मन्त्रेण संसादयतीत्यर्थो गम्यते । अन्यथा मन्त्र एकवचनश्रवणात्सुसंभृता त्वा संभ-रामीति मुष्टिष्विव प्रत्येकं मन्त्रप्राप्तावेकैकमित्यस्य वैयर्थ्यापत्तेः । एवं चेदं ज्ञायते युगपदासादनस्य फलं विजातीयमदृष्टम्, एकैकासादनस्य ततो विलक्षणमदृष्टं फल-मिति । तत्र युगपदासादनस्य प्रागादिषु दिक्षु कर्तुमशक्यत्वादुपरस्य चर्मणो मध्ये संसादनविधानाद्ग्राव्णां चर्मणो दक्षिणोत्तरप्रान्तयोः पश्चिमपूर्वप्रान्तयोर्वा संसादनम् । तत्र दक्षिणेन हस्तेन द्वयोर्ग्राव्णोरेकस्मिन्प्रान्ते सव्येन हस्तेन द्वयोरेकस्मिन्नित्येवं युग-पदासादनम् । एकैकस्य संसादनमपि चर्मण्येव । उपरे ग्राव्णः संमुखान्कृत्वेत्युपराधि-करणत्वस्य विधास्यमानत्वात् ।

रक्षोघ्नो वो वलगघ्नः प्रोक्षामि वैष्णवानि-त्युपरे ग्राव्णः संमुखान्कृत्वा प्रोक्षति ।

स्थूलप्रदेशो मुखं येन सोमः कण्ड्यते ।

सार्धप्रादेशमात्रः स्याद्दृढपाषाणनिर्मितः ।
वर्तुलः सूक्ष्म एकत्र स्थूल एकत्र वै भवेत् ॥
षडङ्गुलपरीणाहो मुखं(खे) तु स्थौल्यमीरितम् ।
अग्रं सूक्ष्मप्रदेशः स्यादुग्राव्ण एतद्धि लक्षणम् ॥ इत्यभियुक्ताः ।

प्रादेशमात्रत्वं मुखपदवाच्यपदार्थं चाऽऽपस्तम्बोऽप्याह—तस्मिंश्चतुरो ग्राव्णः प्रादे-शमात्रानूर्ध्वसानूनाहननप्रकारानश्मनः सञ्सादयन्तीति, स्थवीयांसि मुखानीति च । स्थवीयांसि स्थूलतराणि । स्थवीयांस्यभ्यन्तराणि कृत्वा तानि मुखानीति लाट्यायनद्रा-ह्यायणौ । उपरे ग्राव्णः संमुखान्कृत्वा प्रोक्षतीत्यत्रोपर इत्यधिकरणसप्तमी । अनेनाऽऽप-स्तम्बोक्तमुपरसंमुखत्वं व्यावर्त्यते । उपरस्य तु लक्षणाभावादर्थलक्षणावायामविस्तारौ । आकारश्चतुरश्रो वर्तुलो वा । संमुखानभिमुखान् । बहुवचनलिङ्गात्संभवाच्च युगपदेव

प्रोक्षणम् । अत्राद्भिरिति वचनाभावात्प्रोक्षणार्थानामपां संस्कारो भवत्येव । दक्षिणस्य हविर्धानस्याग्रेणोपस्तम्भनं स्तोत्रार्थं बर्हिर्मुष्टिमुपनिबध्नाति । तथा च बौधायनः—अथ दक्षिणस्य हविर्धानस्याग्रेणोपस्तम्भनं बर्हिर्मुष्टिमुपनिबध्नाति स्तोत्रेभ्य इति ।

**औपरवस्य पुरीषस्याग्रेणोपस्तम्भनं चतुरश्रं खरं करोति यावन्तमाप्तं पात्रेभ्यो मन्यते ॥ १९ ॥**

**इति हिरण्यकेशिसूत्रे सप्तमप्रश्ने षष्ठः पटलः ।**

---

उपरवाणामिदमौपरवं तस्यौपरवस्य पुरीषस्य मृदः । इदं चेतरपुरीषव्यावृत्त्यर्थम् । औपरवस्य पुरीषस्येत्यवयवषष्ठी । औपरवपुरीषैकदेशेनेत्यर्थः । तृतीयार्थे षष्ठी वा । प्रथमपक्ष औपरवपुरीषैकदेशोऽवश्यं स्थापनीयो भवति खरलेपनार्थम् । द्वितीयपक्षे सर्वस्यैवौपरवस्य पुरीषस्य खरकरण एवोपयोगः । लेपनस्य प्रयोजने लौकिकेन पुरीषेण लेपनम् । येन काष्ठेन शकटमुपष्टब्धं तदग्रभागे समीप एव चतुरश्रं चतुष्कोणं खरसंज्ञकं चत्वरं करोति । खरस्य चतुरश्रताऽग्रेऽसश्रोणिव्यवहारात् । तत्प्रमाणमाह—यावन्तमित्यादिना । पात्रेभ्यः सोमसंबन्धिभ्य ऊर्ध्वपात्रेभ्यश्चमसेभ्यः परिप्लवार्थे चाऽऽप्तमेतावत्परिमिते खरे सर्वसोमपात्रासादनं भवतीति निश्चित्य तदनुरोधेन करोतीत्यर्थः । अनेन प्रमाणनियमाभावः सूच्यते । उच्चताया अनुपदेशादनियमः । पुरीषेण जलमिश्रितेनैव खरः कार्यो दार्ढ्याय पुरीषस्य पात्रबुध्नासंलग्नतायै च । इदं जलमिश्रणमर्थापत्तिसिद्धम् । हविर्धानप्राक्स्थूणातः पश्चात्संचरार्थं स्थलमवशिष्य कार्यः । यथाऽग्रेण खरं संचरो भवतीति सूत्रात्, अग्रेण खरं परीत्य दक्षिणत उपविशतीति ब्रह्मत्वसूत्राच्च । स्पष्टमाहात्रैवाऽऽपस्तम्बः—पुरस्तात्संचरं शिनष्टीति । अग्रेणोपस्तम्भनमित्यत्र दक्षिणस्यैवोपस्थितत्वादुदाहृतब्रह्मत्वसूत्राल्लिङ्गाच्च ग्रहणम् । स्पष्टमाहात्राऽऽपस्तम्बः—एतस्यैव हविर्धानस्याग्रेणोपस्तम्भनमुपरवपांसुभिश्चतुरश्रं खरं करोति सोमपात्रेभ्य आप्तं मन्यत इति ।

**इति ओकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्नियुक्तवाजपेययाजिसर्वतोमुखयाजिद्विसाहस्राग्नियुक्तपौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथदीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसूत्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंतापनामिकायां ज्योत्स्नाख्यायां वृत्तौ सप्तमप्रश्नस्य षष्ठः पटलः ॥ ६ ॥**

---

अथ सप्तमप्रश्ने सप्तमः पटलः ।

---

**उत्तरत आग्नीध्रीयं मिनोति मध्ये वेदेरर्धमन्तर्वेद्यर्धं बहिर्वेदि प्राचीनवꣳशं विमितं विमिन्वन्ति दक्षिणतउपचारम् ।**

उत्तरत इत्यत्र सप्तम्यर्थे तसिः । उत्तरस्मिन्प्रदेश इत्यर्थः । आग्नीध्रशब्दात्तस्येदमित्यर्थे वृद्धाच्छ इति च्छप्रत्यय इयादेशः । वेदेर्महावेदेरुत्तरप्रान्तस्थप्राक्सूत्रमध्ये शङ्कुं निखाय यावदायामं प्रमाणमिति शुल्बोक्तप्रकारेण चतुरश्रं विहरति । तत्र विशेषः-अर्धमन्तर्वेद्यर्धं बहिर्वेदीति । अर्धमाग्नीध्रीयमण्डपार्धमन्तर्वेदि वेदिमध्ये भवति, अर्धं वेदेर्बहिर्भवतीत्यर्थः । अर्धं बहिर्वेदीत्ययमेव विधिः । अर्धमन्तर्वेदीति त्वनुवादश्रुत्यनुकरणार्थः । एतादृशी श्रुतिः शाखान्तर उन्नेया । यथा स्वशाखायां प्रकृतौ हविर्निर्वापे तूष्णीं चतुर्थमित्ययमेव विधिस्त्रिर्यजुषेत्यनुवादस्तथाऽत्रेति द्रष्टव्यम् । न च विनिगमनाविरहः । वेदेः सर्वार्थत्वेन सर्वस्य मण्डपस्यापि वेद्यन्तर्भावे प्राप्ते बहिर्भावांश एव विधेरपेक्षितत्वेनार्धं बहिर्वेदीत्यस्यैव विधित्वकल्पनात् । अर्थादर्धमन्तर्वेदीत्यस्यानुवादत्वमर्थलक्षणावेतस्याऽऽयामविस्तारौ । बौधायनस्तु अथ महावेद्या उत्तरादंसीयाच्छङ्कोर्वेद्यन्तेनाष्टादश प्रतीचः प्रक्रमान्प्रक्रामन्ति तदाऽऽग्नीध्रागारं विमिमीते यथाऽन्तर्वेद्यर्धं स्याद्बहिर्वेद्यर्धमथैनत्समुच्छ्रित्य परिश्रयन्ति तस्य दक्षिणं द्वारं कुर्वन्त्याग्नीध्रागारस्य पार्श्वमानीयं पञ्चारत्निरिति प्रमाणविशेषमाह । उत्तरत आग्नीध्रीयं मिनोतीति सामान्यप्रतिज्ञा । विमितमिति वचनं महावेदिविहरणोत्तरमेवाऽऽग्नीध्रीयमानमिदं कर्तव्यमितिसूचनार्थम् । उत्तरत आग्नीध्रीयं मिनोतीत्यत्र वचनादत्रैव मानं कर्तव्यम् । विमितमिति वचनं महावेदिविहरणाव्यवहितोत्तरं वा मानं कर्तव्यमितिपक्षान्तरसूचनार्थं वा परिश्रयणस्य विमानसमकालताव्यावृत्त्यर्थं वा । विमिन्वन्ति परिश्रयन्ति। आद्यपक्षद्वयेऽपि परिश्रयणमत्रैव। दक्षिणतो दक्षिणप्रदेश उपचर्यते निष्क्रमणप्रवेशात्मकं कर्म क्रियते येन स उपचारो मार्गः । मार्गार्थं द्वारं द्वारप्रमाणं च वाधूल आह-उत्तरत आग्नीध्रीयं मिनोति मध्ये वेदेरर्धमन्तर्वेद्यर्धं बहिर्वेदि प्राचीनवꣳशं विमितं विमिन्वन्त्यरत्निमात्रं षोडशाङ्गुलमात्रं वा दक्षिणतो द्वारं कुर्वन्तीति । सूत्रान्तरे दक्षिणदिग्वर्जमेव परिश्रयणमुक्तम् । तेन द्वारं मार्गार्थं कर्तव्यं दक्षिणदिशः परिश्रयणमेव वा न कर्तव्यं मार्गार्थमिति पक्षद्वयं सिद्धं भवति । उपचारमित्यत्राकर्तरि च कारके संज्ञायामिति सूत्रेण घञ् । ञित्वाद्धातोरादिवृद्धिः । दक्षिणतउपचारमिति समस्तं पदं तस्मादुत्तरतउपचारोऽग्निरित्यत्रेव । उत्तरतउपचार इत्यत्र समस्तपदत्वं तु उत्तरतउपचार इत्युत्तरतः—उपचार इत्यवग्रहाज्ज्ञेयम् । चतुःस्थूणमित्यप्यापस्तम्बः । साध्यानाः षडह आश्वत्थत्वनियमादत्र वृक्षानियमः । आग्नीध्रीयमण्डपवन्मार्जालीयमण्डपोऽपि

बौधायनेनोक्तः—उत्तरतउपचारत्वमत्र विशेषः, एतेन मार्जालीयो व्याख्यातस्तस्योदीचीं द्वारं कुर्वन्तीति ।

अग्रेणापरं वेद्यन्तं त्रिषु प्रक्रमेष्वपरिमिते वोदीचीनवंशꣳ सदो दक्षिणतः प्रतिकृष्टतरं यावद्धत्विग्भ्यो धिष्णियेभ्यः प्रसर्पकेभ्यश्चाऽऽप्तं मन्यते ।

सद इत्यनन्तरं मिनोतीति शेषः । अपरस्य वेद्यन्तस्य मध्यशङ्कुमारभ्य त्रीन्प्राचः प्राक्संस्थान्प्रक्रमान्प्रक्रम्य तत्र शङ्कुं दद्यात् । स सदसः पश्चिमान्तस्तत आरभ्योदीचीनवंशं सदः साधयेत् । उदीचीनवंशमित्यनेन दक्षिणोत्तरदीर्घत्वं सदसः प्रदर्श्यते । सीदन्ति ऋत्विजः सोमभक्षणार्थं यत्रेति सदस्तत् । योगरूढं पदम् । दक्षिणतो दक्षिणे भागेऽतिशयेन प्रतिकृष्टमिति प्रतिकृष्टतरम् । द्विवचनविभज्योपपदे तरबीयसुनावित्यनेनातिशयेऽर्थे तरप्प्रत्ययः । प्रतिकर्ष आधिक्यम् । तत्रातिशयः पदमानपक्ष एकपदात्मकः प्रक्रममानपक्ष एकप्रक्रमात्मकः । चतुर्विंशाङ्गुलाद्यात्मकप्रक्रममानपक्ष एकारत्न्यात्मकः सांकाशनानुरोधेन स्वीकर्तव्यः । प्रतिकर्षे हेतुमाहाऽऽपस्तम्बः—दक्षिणतः प्रक्रमे पृष्ठ्याया औदुम्बरीं मध्ये सदसो मिनोति दक्षिणा सदः प्रतिकर्षेद्यथा सांकाशनस्याविरोधं स्यादिति । अस्यार्थः—आयामतो विस्तारतश्च मध्ये सदस औदुम्बरीं मिनोति दक्षिणतः प्रक्रमे पृष्ठ्याया औदुम्बरीं मिनोति यथा मध्ये सदो भवति तथा दक्षिणांशो विवृद्धः स्यात् । किमर्थमिति चेत्, शालामुखीयादीनां सांकाश्याविरोधो यथा स्यादिति । इतरथा ह्यौदुम्बर्या तिरोधीयेत इति । अविरोधमित्यर्थाभावेऽव्ययीभाव इति । यावद्धत्विग्भ्य इत्यादिनाऽर्थसिद्धपरिमाणत्वं प्रदर्शितम् । सदसोऽष्टादशपदैरेव मानमिति नियमः परं नास्ति किं तु धिष्ण्यादिसमावेशानुरोधेनाष्टादशपदेभ्यो न्यूनमधिकं वाऽपि भवतीति द्रष्टव्यम् । एतच्च नवारत्नि तिर्यक्सप्तविंशतिरुदगायतमिति सदसो विज्ञायतेऽष्टादशेत्येकेषामितिशुल्बसूत्रोक्तमानद्वयेन विकल्पितं द्रष्टव्यम् । आपस्तम्बस्तु नवारत्निविस्तारं सप्तविंशतिरुदगायतमपरिमितं वेति । अपरिमितशब्द उक्तप्रमाणाधिकप्रमाणवाची । यावद्धत्विग्भ्य इत्यनेनाष्टादशारत्नितोऽपि न्यूनं मानं प्राप्यते । वेदिमध्ये कृत्स्नस्य सदसो निवेशो यथा भवति तथा मानं पदात्मकं प्रक्रमात्मकं वा कल्पनीयम् । शुल्बसूत्रे सप्तविंशतिरुदगायतमिति दक्षिणोत्तरदीर्घत्वविधानात्तिर्यक्शब्देनात्र प्राच्येव ग्राह्या । तन्नवारत्निप्रमाणं भवति । अपरिमितत्वपक्षेऽपि प्राग्विस्तीर्णं नवारत्न्येव भवति विंशतिचतुर्विंशत्यन्यतरसंख्याङ्गुलप्रक्रमेणाष्टादशारत्नि उदक्सप्तविंशत्यरत्नि । देशस्तु प्रयोगसूत्र एवोक्तः । तद्विहरणप्रकारः शुल्बसूत्रे—तदेकरज्ज्वोक्तं पञ्चदशिकेनैवापायम्यार्धपञ्चमैः श्रोण्यꣳसान्निर्हरेदिति । उदीच्यत्र पृष्ठ्या ।

दक्षिणेन पृष्ठ्यां प्रक्रमे मध्ये सदस औदुम्बर्यवटः ।

अत्र प्राची पृष्ठ्या ग्राह्या । दक्षिणपदसाहचर्यात् । पृष्ठ्याया दक्षिणप्रदेशे समीप एवैकं पृष्ठ्यासंलग्नमार्जवेन प्रक्रममानपक्षे प्रक्रमं पदमानपक्षे पदं मीत्वौदुम्बर्यवट आयामतो विस्तारतश्च सदसो मध्ये भवतीत्यर्थः । मध्ये सदस इति वचनात्तदनुरोधे- नैव पृष्ठ्याया दक्षिणप्रदेश आर्जवेन प्रक्रमो मातव्योऽथवा पदं मातव्यम् । अनेन सांकाश्यं रक्षितं भवति । औदुम्बर्युदुम्बरविकारभूता तस्या अवटो गर्तः ।

अभ्रेरादानं परिलेखनं च यूपे व्याख्यातम् ।

देवस्य त्वेत्यभ्रेरादानं परिलिखितमित्यवटपरिलेखनं च यूपे यूपनिमित्तके कर्मणि व्याख्यातमुक्तं यथा तथाऽत्र कर्तव्यमित्यर्थः । अत्रैवावटं खानयति । अभ्र्यादानपरि- लेखनयोरवटमर्यादाकरणार्थत्वेन तस्य चावटखननार्थत्वेनावटखननस्यार्थतोऽत्रैव सिद्धेर्द- र्शितप्रायत्वात्खात्वा प्रोक्षतीति भरद्वाजेन स्पष्टोक्तेश्च । चकारोऽत्र खननार्थकप्रैषस्या- नुक्तस्य समुच्चयार्थः । स चाग्नीदौदुम्बर्यवटं खनेत्येतावानेव । उपराभावादुपरसंमित- मित्यादिः प्रैषांशो लुप्यते । अत आग्नीध्रकर्तृकताऽवटखननस्य सिद्धा भवति । बौधायनेन तु प्रैषपूर्वकमुद्गातृकर्तृकमौदुम्बर्यवटखननमुक्तम् । प्राक्पुरीषस्योद्वपनमि- त्ययं विशेषश्चात्र तेनैवोक्तः । दार्ढ्यानुरोधेन गर्तः खननीयः ।

दिवे त्वेति परस्तादर्वाचीं प्रोक्षति ।

परस्तादग्रभागप्रदेशमारभ्यार्वाचीं मूलपर्यन्तं प्रोक्षति, यदीयोऽवटस्तमग्रेण स्थापन- मार्थिकम् । इयं प्रागग्रैव स्थापनीया । अवटोत्तराग्रस्थापने प्रोक्षणस्य दक्षिणापवर्ग- तापत्तेः प्रत्यगपवर्गत्वापेक्षया दक्षिणापवर्गत्वस्य देवकर्मस्वतीव विरुद्धत्वात् । स्पष्टमेत- दाहाऽऽपस्तम्बः—अग्रेणावटं प्राचीं निधायेति । प्रत्यगग्रत्वं दक्षिणाग्रत्वं वाऽत एव निरस्तं भवति । तूष्णीं प्रक्षालयेत्यप्याह सः । अग्रं मध्यं मूलमित्येतादृशोऽत्र क्रमस्तत्क्र- मेण प्रोक्षतीति परस्तादर्वाचीं प्रोक्षतीत्यस्यार्थः । दिवे त्वेतिग्रहणं मन्त्रक्रमदर्शनार्थं न त्वेतावत एव मन्त्रस्य प्रोक्षणकरणत्वं न चेतरयोर्विकल्पार्थकत्वं चेति प्रदर्शयितुम् । तेन दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेत्येतावता मन्त्रैणैकप्रयत्नेन परस्तादर्वाचीं प्रोक्षतीत्यर्थः सिद्धो भवति । अमुमर्थमाह बौधायनः—तां परस्तादर्वाचीं प्रोक्षति दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेतीति । पूर्वत्रौदुम्बर्या उपक्रान्तत्वात्तच्छब्देन तस्याः परामर्शः । अथवा दिवे त्वेत्यग्रस्य प्रोक्षणमन्तरिक्षाय त्वेति मध्यस्य पृथिव्यै त्वेति मूलस्येत्येवं मन्त्रत्रयेणौदुम्ब- रीप्रदेशत्रयं *मन्त्रत्रयेण प्रोक्षतीत्यर्थः । भरद्वाजादिभिः स्पष्टमेवमेवोक्तम् । परस्ताद- र्वाचीं प्रोक्षतीतिवचनं यूपे दृष्टस्य क्रमान्तरस्य बाधनार्थम् । प्रोक्षणात्प्राग्बौधायनेन

---

* मन्त्रत्रयेणेति अधिकम् ।

कश्चन विशेष उक्तः—औदुम्बर्येषा स्थूणा प्रक्षालिता प्रपन्ना प्रागवटाद्युपशेत इति । प्रपन्ना तीर्थेन प्रपादिता ।

**अपामवनयनं यवप्रासनं बर्हिषाऽवस्तरणं च यूपे व्याख्यातम् ।**

शुन्धतां लोक इत्यपामवनयनं यवोऽसि यवयेति यवप्रासनं पितृणाᳲ सदनमसीति बर्हिषाऽवस्तरणं यूपे यूपनिमित्तके कर्मणि व्याख्यातमुक्तं यथा तथाऽत्र कर्तव्यमित्यर्थः । चकारः प्रोक्षणेऽनुक्तस्य यवमिश्रितत्वस्य समुच्चयार्थः । उक्तं च यवमतीभिः प्रोक्षणीभिरौदुम्बरीं प्रोक्षतीति भरद्वाजेनापि यवमिश्रणम् ।

**उच्छ्रयस्व वनस्पते सजूर्देवेन बर्हिषेति प्राचीनकर्णामुद्गात्रा सहोच्छ्रयत्युद्दिवᳲ स्तभानेति वा ।**

प्राचीनः प्रागग्रः कर्णो यस्या उच्छ्रयणकाले सा प्राचीनकर्णा । कर्णः क्षुद्रशाखामूलं स यथा प्राग्भागगतो भवति तथोच्छ्रयति । व्यवस्थितविकल्पोऽयमेकस्मिन्प्रयोग एको मन्त्रोऽन्येष्वपर इति । तत्रापि आद्ये प्रयोग आद्यो मन्त्र इतरेष्वन्त्यः । इदमेव ज्ञापयितुं शाखान्तरीयमन्त्रस्य प्रथममुपादानमेतत्प्रकरणपठितस्य स्वशाखास्थस्यानन्तरमुपादानम् । अनेन स्वशाखास्थस्यापि कर्मसंबद्धत्वं सिद्धं भवति । यत्र शाखान्तरीयस्यैवोपादानं न तु स्वशाखास्थस्यापि तत्राऽऽर्थिको विकल्पः । वरुणस्त्वोत्तभ्नात्वित्युपस्तम्भनमन्त्रः शाखान्तरीयो वरुणस्य स्कम्भनमसीति स्वशाखागतः । तेन यज्ञकर्मार्था मन्त्रा यथारूपमितर इति सूत्राभ्यां स्वशाखागतस्य वरुणस्य स्कम्भनमसीत्यस्य प्राप्तावेकस्मिन्प्रयोगे द्वयोर्विनियोगासंभवाद्विकल्पः पर्यवस्यति । अयं विकल्प आर्थिकः । अत्राऽऽद्ये प्रयोगेऽयमेव मन्त्रोऽन्येष्वयमेवेति नियमो न, किंतु ऐच्छिको विनियोग इति । एतादृशं भेदं प्रदर्शयितुमेवोपस्तम्भनादिषु स्वशाखास्थमन्त्रविनियोगावचनमौदुम्बर्युच्छ्रयणे तद्वचनमिति । आर्थिकविकल्पवाचनिकविकल्पयोरेतादृशो भेदः । नच प्रक्रमात्तु नियम्यत इति परिगृहीतपक्षस्वीकारनियमविधायकसूत्रविरोधः शङ्क्यः । तस्य वैमृधोपक्रममात्रविषयत्वात् ।

> रूपं कालोऽनुनिर्वापो देवताश्रवणं तथा ।
> आदौ ये विधृताः पक्षास्त एव स्युः सदैव हि ॥

इतिच्छन्दोगपरिशिष्टवचने पञ्चानामेव ग्रहणेनैतदतिरिक्तस्थले परिगृहीतपक्षस्वीकारनियमस्याप्रवृत्तेरेव प्रदर्शितत्वाच्च । नच पञ्चानां ग्रहणमितरवैकल्पिकपदार्थोपलक्षणमिति वाच्यम् । उपलक्षणपरतायां प्रमाणाभावात् । अवशिष्टस्य मन्त्रस्य फलोपधायककारणताया अभावेऽपि स्वरूपसत्येव कारणताऽरण्यस्थदण्डादीनामिव द्रष्टव्या । स्वेनोच्छ्रयणं कर्तुमशक्यं चेदुच्छ्रापयति । अयमर्थो णिजर्थविवक्षया लभ्यते । उद्गीथांशमुद्गायतीत्युद्गाता तेन सहित औदुम्बरीमुत्थापयतीत्यर्थः । द्वितीयो मन्त्रो द्दᳲहेत्यन्तः ।

द्युतानस्त्वा मारुतो मिनोत्वित्यवटेऽवदधाति ।

अत्र वाऽवटं खानयति परिकर्मिभिः । धर्मणेत्यन्तो मन्त्रः । अवटेऽवधानं स्थापनम् । अत्रापि प्राचीनकर्णामुद्गात्रा सहेत्यनुवर्तते । स्पष्टमाहाऽऽपस्तम्बः—द्युतानस्त्वा मारुतो मिनोत्विति प्राचीनकर्णाꣳ सहोद्गात्रा मिनोतीति ।

पर्यूहणं परिदृꣳहणं परिषेचनं च यूपे व्याख्यातम् ।

ब्रह्मवनिं त्वेति पुरीषेण पर्यूहणं ब्रह्म दृꣳहेति मैत्रावरुणदण्डेन परिदृंहणमुत्तम्भयेति प्रदक्षिणमपां परिषेचनमित्येतत्त्रितयं यूपे यूपनिमित्तके कर्मणि व्याख्यातमुक्तं यथा तथाऽत्र कर्तव्यमित्यर्थः ।

तस्याः कर्णे विशाखे वा हिरण्यं निधाय घृतेन द्यावापृथिवी आपृणेथाꣳ स्वाहेति स्रुवेणाभिजुहोति ।

कर्णः क्षुद्रशाखामूलम् । विशाख इत्यौदुम्बर्यवयवविशेषविशेषणम् । विगता शाखा यस्मादवयवात् । एतादृशोऽग्रात्मकोऽवयवः । तत्र वा हिरण्यं निधायाभिजुहोतीत्यर्थः । अथवा विशिष्टा शाखा यस्मादवयवात्तस्मिन्वेत्यर्थः । अस्मिन्व्याख्याने यस्मिन्प्रदेशे महती शाखा तादृशेऽवयवे हिरण्यनिधानं भवति । स्रुवग्रहणं जुहूव्यावृत्त्यर्थम् । स्थापितं हिरण्यमभिलक्षीकृत्यौदुम्बर्युपर्येव होमः कर्तव्य इत्येतदर्थं द्योतयितुमथवौदुम्बर्यभिमुख्यार्थको वाऽभिः । जुहोतिचोदितत्वादेव स्वाहाकारे सिद्धे स्वाहेतिवचनं मूल आज्ये प्राप्ते सत्येव स्वाहाकारः कर्तव्योऽवस्रावणं तु मन्त्रारम्भसमकालं पूर्वमेवेत्यर्थविशेषं द्योतयितुम् । तथाच कात्यायनः—भूमिं प्राप्ते स्वाहाकार इति । भूमिं प्राप्ते सत्याज्ये स्वाहाकारः कर्तव्य इत्यर्थः । मन्त्रस्याल्पत्वात्क्रियाया दीर्घत्वान्मन्त्रारम्भकालेऽत्वमवस्रावणक्रियारम्भस्यासंभवान्मन्त्रान्तेऽत्र क्रिया न । एतेनावस्रावणस्य धारारूपत्वादाघारे धारायां चाऽऽदिसंयोग इत्यापस्तम्बोक्तपरिभाषाङ्गीकारो ज्ञापितो भवति । एतेनार्थादिदमपि सिध्यति अत्र मन्त्रपाठो विलम्बितवृत्त्येति ।

आमूलादन्ववस्रावयति ।

आङत्राभिव्याप्तौ । औदुम्बर्या मूलमभिव्याप्येत्यर्थः । तथा चाग्रमारभ्य मूलपर्यन्तमौदुम्बरीमनुलक्षीकृत्यावाधः स्रावयति । मूलपर्यन्तं स्रावित आज्ये भूमिप्राप्तं भवत्येव तयोः संबद्धत्वात् । तथा च मूलं प्राप्तमाज्यं भूमिप्राप्तमेव तत्रैव स्वाहाकार इत्यर्थः ।

यजमानमात्रीसंमिता वर्षिष्ठाः स्थूणा मिनुतो यथा सुष्ठु ।

यजमानमात्री यजमानप्रमाणा यावद्यजमानस्योर्ध्वं प्रमाणं तावत्प्रमाणौदुम्बरीत्यर्थः । यूपे दर्शनाद्भूमौ निखातव्येन भागेन सह यजमानमात्रीति केचित् । ऊर्ध्वं

१ ख. ग. °लम° ।

निखाताद्यजमानमात्री भवतीत्यन्ये । संकोचे प्रमाणाभावात् । निखातव्येन प्रदेशेन सहैव यजमानमात्रत्वमित्येव युक्तम् । यजमानमात्रीत्यनेनौदुम्बर्या ऊर्ध्वप्रमाणं दर्शितम् । स्थौल्यं तु दार्ढ्यानुरोधेनैव सिद्धम् । यजमानमात्र्यौदुम्बरी वर्षिष्ठा स्थूणानां भवतीति भरद्वाजेन स्पष्टमेवोक्तमेतत् । परार्थान्येकेन क्रियेरन्यथाकपाठेनोपवपति यजमानेन संमितौदुम्बरी भवतीत्युदाहरणादपि औन्दुम्बर्या ऊर्ध्वप्रमाणं ज्ञेयम् । इदं चोदाहरणं द्वादशाहविषये । तत्रानेकयजमानोपस्थितावेकेन येन केनचिद्यजमानेन गृहपतिसंज्ञकेन मुख्येन यजमानेन वा संमितौदुम्बरी भवतीति । यजमानमात्र्यौदुम्बरी तत्संमितास्तया संमितास्तावत्प्रमाणा वर्षिष्ठा अतिशयेन वृद्धा इति वर्षिष्ठाः । अतिशायने तमबिष्ठनाविति वृद्धशब्दादिष्ठन्प्रत्यये प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धेत्यनेन वृद्धशब्दस्य वर्ष इत्यादेशे रूपम् । वृद्धशब्दः पुरातनपर्यायः । स च दार्ढ्यं लक्षयति । तेनातिशयेन दृढा इत्यर्थो भवति । स्थूणा द्विशाखास्तम्भाः । उत्तरत्र पर्यन्त्यानां प्रमाणविशेषविधानात् । औदुम्बरीसादृश्याच्च यजमानमात्रीसंमिता इत्यनेन मध्यमा एव स्थूणा अत्र ग्राह्याः । मिनुत इति द्विवचनात्स्वस्वभागस्थाः स्थूणा उभाभ्यां सहैव मातव्याः । दक्षिणभागस्थास्तिस्रोऽध्वर्युणा । उत्तरभागस्थास्तिस्रः प्रतिप्रस्थात्रा । बहुत्वस्य प्रत्येकमन्वयात्तस्य च त्रित्वे पर्यवसानात्तिस्रस्तिस्रः । अधिकप्रयोजनेऽधिका अपि । यथा सुष्ठु यथा दृढं सदो भवति तथा स्थूणा कार्या इत्यर्थः ।

**पर्यन्त्या नाभिदघ्ना औदुम्बरीमभ्यग्रा मिनोति ।**

पर्यन्ते प्रान्ते भवाः पर्यन्त्याः । दिगादित्वाद्भवार्थे यत्प्रत्ययः । अत्र भवनं नोत्पत्तिरसंभवात्, किंतु सत्ता सा च भाविनी ग्राह्या । अथवा पर्यन्तमर्हन्तीति पर्यन्त्याः खलयवमाषतिलवृषब्रह्मणश्चेत्यत्रत्येनानुक्तसमुच्चयार्थेन चकारेण पर्यन्तशब्दादपि यत्प्रत्ययो भवति । नाभिदघ्ना नाभिप्रमाणाः पादावारभ्य नाभ्यवधिकं यावत्प्रमाणं तावत्प्रमाणा इत्यर्थः । एकप्रमाणोपस्थितौ मात्रज्दघ्नचोस्तिर्यगूर्ध्वव्यवस्थया प्रयोग इति नियमो नास्ति । औदुम्बरीमभ्यग्रा औदुम्बर्यभिमुखाग्राः सर्वाः स्थूणा मिनोतीत्यर्थः । औदुम्बरीमभिनम्रा इति यावत् । नम्रत्वमेवाभिमुखत्वमत्र प्रकारान्तरस्यासंभवात् । मिनोतीत्येकवचनादध्वर्युणैव पर्यन्त्याः सर्वा मातव्याः । यथा सुष्ठ्वित्यत्राप्यन्वेति ।

**नीचैः सदो वृष्टिकामस्य मिनुयादुच्चैर-**
**वृष्टिकामस्य विपरीतमेके समामनन्ति ।**

नाभिदघ्नं नित्यं प्रमाणं ततोऽपि किंचिन्नीचैर्नीचं सदो वृष्टिकामस्य यजमानस्य मिनुयात् । किंचिदुच्चैरुच्चं सदोऽवृष्टिकामस्य यजमानस्य । अवर्षणे सति वृष्टिकामना । अतिवर्षणे त्ववृष्टिकामना । इदं च यदैवैनं यज्ञ उपनमेत्, अथाऽऽदधीत सैवास्यर्धिरितिश्रुत्यनुरोधेन यदा वर्षासु सोमपूर्वाधानं क्रियते तदैतत्संभवो द्रष्टव्यः । नीचैरित्यव्ययं

नीचत्वार्थकम् । उच्चैरित्यव्ययमुच्चत्वार्थकम् । समस्ते क्रतावर्थं श्रूयमाणं यजमानः कामयते तथा नित्येषु यज्ञाङ्गेषु यानि तु कामयतिः श्रावयतीतिसूत्रात् । अत्र कमि-धातुश्रवणात्संकल्पोऽत्र यजमानेन कार्यो वृष्टिकामो नीचैः सदः करिष्ये, अवृष्टि-काम उच्चैः सदः करिष्य इति । कामयतिः कमिधातुः । इक्श्तिपौ धातुनिर्देश इति सूत्रात् (वार्तिकात् )श्तिप् । विपरीतमेके समामनन्ति यत्पूर्वस्य फलं तदुत्तरस्य यदु-त्तरस्य फलं तत्पूर्वस्येति विपरीतशब्दार्थः । सदसो नीचैस्त्वोच्चैस्त्वे औदुम्बर्याः स्थूणानां च नीचोच्चत्वाभ्यामिति द्रष्टव्यम् ।

**नव च्छदींष्युपक्लृप्तानि भवन्ति ।**

एतद्दिवससंबन्ध्यनुष्ठानारम्भात्प्रागेवोपकल्पनम् । अर्थः स्पष्टः ।

**उदीचो वंशानाधाय प्राचो वंशानादधाति ।**

वंशान्वेणून्वंशानिति बहुत्वमविवक्षितम् । तेन संभव एकस्य वंशस्य वेणोर्द्वयोर्वा वंशयोर्वेण्वोरप्याधानम् । उदीच उदगग्रान्प्राचः प्रागग्रान् । आधानं स्थापनम् ।

**ऐन्द्रमसीति त्रीणि मध्यमानि छदींष्युदग्राणि निदधाति ।**

मन्त्रावृत्तिरेकवचनात् । ऐन्द्रमसीत्येकैकं मध्यमं छदिरुदगग्रं निदधाति । एतावा-नेव मन्त्रः । ऐन्द्रमसीत्येकैकं मध्यमानि छदींष्यभिनिदधातीति भरद्वाजः ।

**इन्द्रस्य सदोऽसीति त्रीणि दक्षिणानि**
**विश्वजनस्य छायेति त्रीण्युत्तराणि ।**

एतेन नवच्छदि सदो भवतीत्युक्तं भवति । उभयत्रापि मन्त्रावृत्तिः ।एकवचनात् ।

**दक्षिणान्युत्तराणि करोत्यौदुम्बरीमभिसंमुखानि ।**

दक्षिणानि च्छदींषि उत्तराणि सर्वेषामुपरिशयानि करोतीत्यर्थः । दक्षिणान्युदग-ग्राणि उत्तराणि दक्षिणाग्राणीति औदुम्बरीमभिसंमुखानीत्यस्यार्थः । संशब्दः सम्य-क्श्लेषणार्थः ।

**नवछदि तेजस्कामस्य मिनुयादितिब्राह्मणव्या-**
**ख्यातानि काम्यानि छदींषि तेषां याथाकामी ।**

नवछदि तेजस्कामस्य मिनुयादित्यादि यद्ब्राह्मणं तेन व्याख्यातानि उक्तानि काम्यानि कामायार्हाणि नवादिसंख्याविशिष्टानि छदींषि तेषां कामानां तेजआदीनां मध्ये यः कामस्तत्संबन्धिपक्षोऽङ्गीकर्तव्य इत्यर्थः । याथाकामीत्यत्र ताच्छील्ये णिनिः । अत्रापि कमिधातुश्रवणात्संकल्पो यजमानेन कार्योऽमुककामोऽमुकच्छदि सदः करिष्य इति कामनानुरोधेन । नवच्छदिपक्षो नित्योऽपि । त्रीणि मध्यमानि त्रीणि दक्षिणानि त्रीण्युत्तराणीति नित्यविधिबलान्नवछद्यग्निष्टोमस्य मिनुयादिति भरद्वाजोक्तेश्च । नवच्छ-

दिसदःपक्षे समं स्यादश्रुतत्वादिति न्यायान्मध्ये दक्षिण उत्तरे च त्रीणि त्रीण्येव । एकादशच्छदिसदःपक्षे मध्यदेशस्य प्रधानत्वान्मध्ये पञ्चेतरयोस्त्रीणि त्रीणि । पञ्चदशच्छदिसदःपक्षे पञ्च पञ्चैव सर्वत्र समं स्यादश्रुतत्वादिति न्यायात् । सप्तदशच्छदिसदःपक्षे मध्ये सप्त मध्यदेशस्य प्रधानत्वात्, इतरयोः पञ्च पञ्च । एकविंशतिच्छदिसदःपक्षे सप्त सप्तैव सर्वत्र, समं स्यादश्रुतत्वात्, अपि वा कर्मवैषम्यात्, अतुल्याः स्युः परिक्रये समाख्याविधिश्रुतौ परिक्रयान(त्र) कर्मण्युपपद्यन्ते(ते) दर्शनाद्विशेषस्य तथाऽभ्युदय इति न्यायत इति द्रष्टव्यम् । अयं न्यायो जैमिनिना दशमाध्याये तृतीयपादे दर्शितः। सूत्रार्थस्तु अश्रुतत्वाद्विशेषाश्रवणात्समो विभागः स्यादिति प्रथमसूत्रार्थः। अपि वेत्यनेन साम्यं व्यावर्त्यते समो विभागो न भवति किं तु कर्मणो वैषम्यात्कस्यचित्कर्म बहुप्रयासं कस्यचित्कर्माल्पायासमित्येवं कर्मणो वैषम्यात्प्रयासानुरूपेण विभाग इति द्वितीयसूत्रार्थः । परिक्रयेऽतुल्याः स्युः समा न स्युः समविभागा न स्युरिति यावत् । कस्मिन्विषय एषामतुल्यत्वमित्याकाङ्क्षायां परिक्रय इति । परिक्रयविषय इति तदर्थः । तेन परिक्रयातिरिक्तविषये विशेषाश्रवणे साम्यमेवेति प्रदर्शितं भवति । अतुल्यत्वे हेतुमाह—समाख्याविधीति । द्वादशाहेऽध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयतीत्यादिवाक्येऽर्धिनो दीक्षयति तृतीयिनो दीक्षयति पादिनो दीक्षयतीत्यत्रार्धिसमाख्यया ब्राह्मणाच्छंस्यादीनां तृतीयसमाख्ययाऽऽग्नीध्रादीनां पादिसमाख्यया पोत्रादीनां व्यवहारदर्शनादर्धादिसंबन्धं विनाऽर्धादिव्यवहारायोगात्प्रधानेभ्यो ब्रह्मादिभ्यो यद्दीयते तस्यार्धं ब्राह्मणाच्छंस्यादिभ्यस्तृतीयांश आग्नीध्रादिभ्यश्चतुर्थांशः पोत्रादिभ्यो देय इति नियमः कल्प्यते । अर्धित्वादिसमाख्याकल्प्यो विधिः समाख्याविधिः, एतत्प्रतिपादकश्रुतौ परिक्रयाद्वैषम्यमुपपद्यते न परिक्रयव्यतिरिक्ते कर्मण्युपपद्यते वैषम्यं विशेषस्य तस्या(थाऽ)भ्युदयेऽभ्युदयेष्टौ[1] ये मध्यमाः स्युस्तानग्नये दात्र इत्यादिश्रुत्या विशेषस्य साम्यविषयस्य प्रदर्शनादिति । तत्र येषु क्रतुषु च्छदिःसंख्यानियमो नास्ति तेषु तत्तत्संस्थानुरोधेन काम्यानां प्रकृतावेव निवेश इति न्यायाङ्गीकारे नव च्छदींष्यैवैतेषु नेतरे पक्षाः । काम्यं नवच्छदित्वमपि न ।

कटांश्स्तेजनीश्च प्रवर्तं छदिषामन्तरालेष्वन्ववस्यन्ति तानन्तर्वर्ता इत्याचक्षते परि त्वा गिर्वणो गिर इत्यभितः परिश्रयतः पूर्वमपरं च द्वारे कुरुतोऽध्वर्युर्दक्षिणां द्वारेयीं परिषीव्यति प्रतिप्रस्थातोत्तरामिन्द्रस्य स्यूरसीति सीव्यत इन्द्रस्य ध्रुवोऽसीति ग्रन्थी कुरुतस्तौ प्रज्ञातौ भवतः ।

इन्द्रस्य ध्रुवोऽसीत्यनेनेन्द्रस्य ध्रुवमसीति विकल्पते । अन्यद्धविर्धानविमानसूत्रवद्व्याख्येयम् ।

---

1 ख, ग. °पश्वाभ्युदयेष्टौ ।

**ऐन्द्रमसीन्द्राय त्वेति संमितमभिमृशतः ।**

संमितं विमितं सदः ।

**प्राग्वंशस्य सदोहविर्धानयोश्च ॥ २० ॥ समानं सांकाशिनम् ।**

संकाशयतीति संकाशनम् । नन्द्यादित्वाल्ल्युः । युवोरनाकावित्यनादेशः । सांकाशनमिति पाठे संकाशनमेव सांकाशनमिति स्वार्थेऽण्प्रत्ययं कृत्वा समर्थनीयः । सांकाशिनमितीकारविशिष्टपाठस्त्वार्ष एव । सांकाशनं संदर्शनं सर्वतो दर्शनं तदेषां समानं भवति । यथैकत्र स्थितः सर्वानपि पश्येत्तथाऽऽर्जवेनैषां द्वाराणि कार्याणीत्यर्थः । प्राग्वंशस्यासमासेन निर्देशस्तत्तत्कामनानिमित्तदक्षिणाप्रत्यगुत्तरदिगन्यतमे केवलैकद्वारनिमित्तकप्राग्वंशप्राग्द्वाराभावहेतुकतुल्यसांकाशनत्वानित्यत्वनिबन्धनः ।

**नासंस्थिते सोमेऽध्वर्युः पूर्वेण द्वारेण हविर्धाने प्रविश्यापरेण निष्क्रामेद्यदि निष्क्रामेदिदं विष्णुर्विचक्रम इति जपेत् ।**

सोमे सोमसंबद्धे तन्त्रेऽसंस्थितेऽसमाप्ते सतीत्यर्थः । सोमसंबद्धतन्त्रसमाप्तिस्तु अवभृथ एव भवति तावत्पर्यन्तोऽयं निषेधः । अवभृथे यद्यपि साक्षात्सोमसंबन्धो नास्ति तथाऽप्यृजीषसोमलिप्तपात्रद्वारा संबन्धोऽस्ति अतोऽवभृथपर्यन्तमस्त्येव निषेधः । अमुमर्थमाह वाधूलः—नाऽवभृथादध्वर्युः पूर्वेण द्वारेण हविर्धाने प्रविश्यापरेण निष्क्रामेद्यदि निष्क्रामेदिदं विष्णुरिति जपेदिति । आऽवभृथादिति पदच्छेदः । अवभृथपर्यन्तमिति तदर्थः । इदमुपलक्षणमपरेण प्रविश्य पूर्वेण निष्क्रमणं नेत्यापस्तम्बोक्तस्य निषेधस्य । एवं च येन द्वारेण प्रवेशस्तेनैव निष्क्रमणमिति नियमः पर्यवस्यति । यदिशब्दान्नैमित्तिकत्वमेतस्य । अध्वर्युग्रहणमितरेषामृत्विजां व्यावृत्त्यर्थम् । तेनाध्वर्योरेवायं निषेधः । नच प्रतिप्रस्थातृनेष्टुन्नेतॄणामप्यध्वर्युत्वात्तत्परोऽप्ययं निषेध इति वाच्यम् । एकवचनविरोधापत्तेः । यदि प्रतिप्रस्थातृनेष्टुन्नेतृग्रहणमिष्टं स्यात्तदा तामध्वर्यव उद्गृह्णन्तीत्यत्रेवात्रापि ब्रूयादेव । नह्यत्र तथोक्तमतोऽध्वर्योरेव निषेधः । एतेनैकवचनस्य जात्यभिप्रायकत्वकल्पना निरस्ता भवति । एवमुत्तरसूत्रेऽपि द्रष्टव्यम् ।

**नापरेण सदः प्रविश्य पूर्वेण निष्क्रामेद्यदि निष्क्रामेदुत्तिष्ठन्नोजसा सहेति जपेत् ।**

असंस्थिते सोमेऽध्वर्युरित्यनुवर्तते । इदमुपलक्षणं पूर्वेण द्वारेण सदः प्रविश्यापरेण निष्क्रमणं नेत्यापस्तम्बोक्तस्य । अयमप्यवभृथपर्यन्त एव निषेधः । तथा च वाधूलः—नाऽवभृथादध्वर्युरपरेण सदः प्रविश्य पूर्वेण निष्क्रामेद्यदि निष्क्रामेदुत्तिष्ठन्नोजसा सहेति जपेदिति । आऽवभृथादित्यत्रापि पदच्छेदः । अत्रापि येन द्वारेण प्रवेशस्तेनैव निष्क्र-

---

१ ख. ग. °तमके° ।

मणमिति नियमः पर्यवस्यति । यदिशब्दान्नैमित्तिकत्वमेतस्यापि जपस्य । सदोविमाना-नन्तरमसंस्थिते सोमे नाध्वर्युः प्रत्यङ्सदोऽतिक्रामेत् । तथा च श्रुतिः—नासंस्थिते सोमेऽध्वर्युः प्रत्यङ्सदोऽतीयादिति । अत्रापि सोमसंस्थाऽवभृथपर्यन्तैव ग्राह्या । अत्राऽऽपस्तम्बः—नाध्वर्युः प्रत्यङ्सदोऽतीयाद्धिष्णियान्होतारं वेति । सदस्यपि धिष्णियानतीत्य न गच्छेत् । तत्र तु होतारं वेत्यस्मिन्कल्पे धिष्णियातिगमनेऽपि न दोषः । अत्र श्रुतिरपि—प्राणा वा एते यद्धिष्णिया यदध्वर्युः प्रत्यङ्धिष्णियानतिसर्पेत्प्राणान्संकर्षेत्प्रमायुकः स्यान्नाभिर्वा एषा यज्ञस्य यद्धोतोर्ध्वः खलु वै नाभ्यै प्राणोऽवाङ्पानो यदध्वर्युः प्रत्यङ्होतारमतिसर्पेदपाने प्राणं दध्यात्प्रमायुकः स्यादिति । अत्र परिगृहीतपक्ष एवाऽऽन्तं स्वीकर्तव्यः । अन्यथा दोषाभावमेवैकतरपक्षं गृहीत्वा संपाद्येत । धिष्णियसंबन्धिकर्मसु धिष्णियानतिक्रम्य गमनं निषिद्धम् । इतरकर्मसु होतारमतिक्रम्य गमनं निषिद्धमिति व्यवस्थितविकल्पो वाऽयम् ।

अत्रोपरवकर्मैके समामनन्ति ।

पूर्वत्रोपरवकर्म यदुक्तं तत्तत्र न कर्तव्यं किंतु अत्रास्मिन्काले कर्तव्यमित्येक आचार्या वदन्तीत्यर्थः ।

चात्वालात् पुरीषमाहृत्य धिष्णिया-
न्निवपति चतुरश्रान्परिमण्डलान्वा ।

पुरीषार्थं चात्वालं पुनरधस्तात्खात्वा तस्मात्पुरीषमाहृत्याऽऽहार्य वा धिष्णियानायतनानि निवपति करोतीत्यर्थः । चतुर्थ्यर्थे द्वितीया वा । सा च तादर्थ्ये, तेन धिष्णियार्थं तत्तत्स्थाने निवपतीत्यर्थो भवति । सप्तम्यर्थे वा द्वितीया, तेन धिष्णियस्थानेषु निवपतीत्यर्थो भवति । निवपनं तत्तत्प्रदेशे पुरीषप्रक्षेपणम् । चात्वालाद्धिष्णियानुपवपतीति श्रुतौ यदुपवपनमुक्तं तन्निवपनमेव । न्यन्ये धिष्णिया उप्यन्त इत्यनुवादात् । अथ याचति स्फ्यमुदपात्रं चात्वालात्पुरीषं सिकता इत्येतत्समादायेति, आग्नीध्रं हुत्वा स्फ्येनोद्धृत्यावोक्ष्य चात्वालात्पुरीषं सिकता इति निवपतीति, अथैनं सिकताभिराभ्राशिनं करोतीति च बौधायनः । आभ्राशिनं प्रकाशवन्तम् । ते च धिष्णियाश्चतुरश्राः परिमण्डला वा भवन्ति । तथा च शुल्बसूत्रे—पिशीलमात्रा भवन्तीति धिष्णियानां विज्ञायते चतुरश्रा इत्येकेषां परिमण्डला इत्येकेषामिति । यदि सौमिकेषु धिष्णियेषु शुल्बसूत्रोक्तं पिशीलप्रमाणं सिंहावलोकनन्यायेनाऽऽकाङ्क्षितत्वादुपयुज्यत इति कल्प्यते तदा समावेशानुरोधेन पञ्चविधपिशीलान्यतमपिशीलमानेनैव धिष्णियाः कल्पनीयाः । अस्मिन्पक्षे प्रादेशान्तरालता न भवति असंभवात् । इदं च पदमानपक्षे । वस्तुत इदं पिशीलमानमाग्निकेषु धिष्णियेष्वेव न सौमिकेषु । चतुरश्रान्परिमण्डलान्वेत्यस्योभयत्रोपादानवैयर्थ्यापत्तौ सौमिकेषु पिशीलप्रमाणानियमज्ञापनार्थत्वेनैव सार्थक्यस्य

निर्वोढुं शक्यत्वात् । अस्मिन्पक्षेऽतीव न्यूनं मानं प्रादेशात्मकं तदप्यत्र भवति । शास्त्रान्तरे प्रादेशमानं दृष्टं चास्ति । प्रादेशमात्रान्तरालत्वमप्यस्मिन्नेव पक्षे सूत्रान्तरे दृष्टम् । इदं च पञ्चदशाङ्गुलपदपक्षे । दशाङ्गुलद्वादशाङ्गुलान्यतम(र)पदपक्षे न्यून-मप्यन्तरालं समावेशानुरोधेन । पिशीलमात्रत्वपक्षे समावेशानुरोधेनान्तरालकल्पना द्रष्टव्या । तत्र पिशीलं पञ्चधा वदन्ति बाह्वोरन्तरालमेकं बद्धमुष्टीरत्निर्द्वितीयमरत्नि-स्तृतीयं द्वात्रिंशदङ्गुलं चतुर्थं षट्त्रिंशदङ्गुलं पञ्चममिति । त्रिंशत्यङ्गुलं षष्ठमिति केचित् । परिमण्डलत्वपक्षे क्षेत्रतः पिशीलमात्रत्वम् । प्रादेशमात्रत्वेऽप्येवम् । होतार-मतिक्रम्य न गच्छेदित्यस्मिन्कल्पे प्रत्यङ्मुखतोदङ्मुखता वा निवपने । धिष्णियानति-क्रम्य न गच्छेदित्यस्मिन्कल्प उदङ्मुखतैवेति ।

विभूरसीत्याग्नीध्रीयमाग्नीध्रागारे यथोत्तरेणान्तर्वेदि संचरो भवति ।

आग्नीध्रस्येदमाग्नीध्रीयं धिष्णियम् । आग्नीध्रं च तदगारं चाऽऽग्नीध्रागारम् । आग्नी-ध्रस्यागारमाग्नीध्रागारमिति वा, तस्मिन्नाग्नीध्रीयं धिष्णियं कर्तव्यं, तच्च यथोत्तरेणान्त-र्वेदि वेदिमध्यतो धिष्णियमुत्तरेणाऽऽयतनस्य गमनवेलायां पादस्पर्शो यावत्परिमिते मार्गे न भवति तावत्परिमितप्रदेशं संचरार्थमवशिष्य कर्तव्यमित्यर्थः । अग्नीध्ः शरणे रणं चेत्यनेनाग्नीच्छब्दाद्गृहे वाच्ये रणप्रत्ययस्तस्माद्वृद्धाच्छ इति चछप्रत्यय-स्तस्येयादेशः । अगारशब्दो गृहवचनः । प्रवाहण इत्यन्तो मन्त्रः ।

अन्तःसदसमितरान् ।

इतरान्मैत्रावरुणादीनां धिष्णियान् । सदसो मध्य इत्यन्तःसदसम् । अव्ययी-भावसमासोऽयम् । शरदादित्वात्समासान्तष्टच्प्रत्ययः ।

वह्निरसीत्यपरेण सदोबिलं पृष्ठ्यायां प्रक्रमे होत्रीयम् ।

अपरेण सदोबिलं सदसः पूर्वबिलस्यापरतः प्रक्रमेऽतीते होतुरिदं होत्रीयं धिष्णियं भवतीत्यर्थः । होत्रीयमिति धिष्णियविशेषस्य नामधेयम् । एङ्प्राचां देश इति वृद्ध-संज्ञाविधायके सूत्रे वा नामधेयस्य वृद्धसंज्ञा वाच्येति होत्रीयशब्दस्य धिष्णियविशेष-नामधेयत्वाद्वृद्धसंज्ञायां वृद्धाच्छ इति छप्रत्ययस्तस्येयादेशः । अत्रैनपा प्रक्रमात्मक-मेव सामीप्यं विवक्षितं वचनात् । अन्तःसदसमित्यनेनापरबिलस्य व्यावृत्तिः । बिल-शब्दोऽत्र द्वारवाची, सदःपदसांनिध्यादन्यस्य बिलस्यासंभवात् । हव्यवाहन इत्यन्तो मन्त्रस्य ।

श्वात्रोऽसीति दक्षिणेन होत्रीयं मैत्रावरुणस्य ।

पञ्चदशाङ्गुलपदप्रभृतिमानपक्षे प्रादेशान्तरालसंभवाद्द्वादशाङ्गुलपदप्रादेशयोस्तुल्य-त्वात्तावत्परिमितमेवान्तरालम् । तथा च दक्षिणेनेत्येनपाऽत्रापि तावदेव सामीप्यं विवक्षितं भवति । दशाङ्गुलद्वादशाङ्गुलान्यतम(र)पदमानपक्षे प्रादेशान्तरालासंभवा-

यावदर्धमन्तरालम् । धिष्णियानां पिशीलमात्रत्वपक्षे तु प्रादेशान्न्यूनमेवान्तरालम् । एवमग्रिमेष्वपि धिष्णियेषु द्रष्टव्यम् । देव्यौ प्रशास्तारौ मित्रावरुणौ । एतस्यापि मानुषप्रशास्तृत्वेन मित्रावरुणतुल्यत्वात्तदीयकर्मकर्तृत्वाद्वा मित्रावरुणलिङ्गकयाज्याप्रवक्तृत्वाद्वा मैत्रावरुणत्वम् । मित्रावरुणयोः प्रशास्तृत्वं मित्रावरुणौ प्रशास्तारौ प्रशास्तादित्यस्मिन्प्रवरणवाक्य आम्नातम् । मैत्रावरुणस्यैव प्रशास्तेति संज्ञान्तरम् । प्रशास्तर्यजेति प्रस्थितयाज्याप्रैषात् । प्रकर्षेण सर्वान्प्रेष्याञ्छास्तीति प्रशास्तेति तदर्थः । प्रचेता इत्यन्तः ।

उत्तरेण होत्रीयमुदगायतानितरान् ।

अत्राप्यन्तरालव्यवस्था पूर्ववद्द्रष्टव्या । होतृधिष्ण्यस्य सामीप्यं ब्राह्मणाच्छंसिधिष्ण्यं यावदन्तरालं भवति तावद्विवक्षितम् । एवमुत्तरोत्तरेष्वपि ज्ञेयम् । नचैनप्प्रत्ययबलात्सर्वधिष्ण्यानां होतृधिष्ण्यसंलग्नत्वैव कुतो न कल्प्यतेऽपरेणाऽऽहवनीयं यजमानमात्रीं वेदिं करोतीतिवदिति वाच्यम् । सर्वेषां होतृधिष्ण्यसंलग्नताया एवासंभवेनैतादृशकल्पनाया दूरापास्तत्वादुदगायतानितिवचनविरोधाच्च । नचैनप्प्रत्ययविरोधः । होतृधिष्ण्यस्येतरेषां धिष्ण्यानां च मध्ये यावदन्तरालं तावत एव सामीप्यस्यात्रानायत्या विवक्षणात् । नच होतृधिष्ण्यस्य मैत्रावरुणब्राह्मणाच्छंसिधिष्ण्ययोरेव संलग्नत्वमेवास्तु संभवात्, इतरेषामपि परस्परमेवमेव सजातीयत्वसंपादनायेति वाच्यम् । अन्तरालाभावे स्वस्वधिष्ण्योत्तरेण गमनासंभवापत्तेः । नचाङ्गुलात्मकमेवान्तरालमस्त्विति वाच्यम् । एतावत्परिमितान्तरालप्रदेशस्य गमनक्रियायामयोग्यत्वात् । एवं च यावताऽन्तरालेनाऽऽयतनस्य गमनवेलायां पादाघातो न भवेत्तावदन्तरालं मध्ये कर्तव्यमिति सिद्धं भवति । धिष्णियानां पञ्चदशाङ्गुलपदप्रभृतिमानपक्षे प्रादेशान्तरालान्न्यूनमेव । अन्यथाऽङ्कधारणधर्मेणोपवेशनानुपपत्तेः । नचेष्टापत्तिः । अङ्गप्रधानार्थोपवेशनाङ्गभूताङ्कधारणधर्मकोपवेशनबाधापेक्षया केवलधिष्ण्यसंलग्नत्वादिरूपैनवर्थबाधस्यैवोचितत्वात् । अथवा दक्षिणेन होत्रीयमुत्तरेण होत्रीयमित्यत्र द्वितीया षष्ठ्यर्थे । दक्षिणेनोत्तरेणेतिपदद्वयं दक्षिणत उत्तरत इत्यर्थकं विभक्तिप्रतिरूपकमव्ययं, तेन सामीप्यस्यानपेक्षणे सिद्धे मध्येऽन्तरालसिद्धिः । दशाङ्गुलद्वादशाङ्गुलान्यतम(र)पदमानपक्षेऽङ्कधारणसंकोचः स्थलालाभनिमित्तकसंकुचितपदमानानुरोधेनानायत्या स्वीकर्तव्यः । स्वी कुर्वन्ति चेदानीं शिष्टाः । तत्प्रयुक्तं शालामुखीये तत्तदुपवेशनकाले कालव्यवधाने सति भेदेन तदव्यवधाने सकृत्सर्वादावौपवसथ्ये सौत्येऽहनि च सर्वप्रायश्चित्तं होतव्यं न वा । उदगायतानुदक्संस्थान् । उदगायतानितिवचनं होतृधिष्ण्यस्योत्तरतो ब्राह्मणाच्छंसिधिष्ण्यं सान्तरालं तत उत्तरतः पोतृधिष्ण्यं सान्तरालं तत उत्तरतो नेष्टृधिष्ण्यं सान्त-

१ ख. ग. 'शान्न्यून'।

रालं तत उत्तरतोऽच्छावाकधिष्ण्यं सान्तरालमित्येवं क्रम इत्यर्थं बोधयितुम् । एतेन प्रागायतत्वं साक्षाद्धोतृधिष्ण्यस्यैव सर्वेषां सामीप्यार्थं समन्तभावश्चेति निरस्तं भवति ।

इतरशब्दवाच्यानाह—

**तुथोऽसीति ब्राह्मणाच्छंसिन उशिगसीति पोतुरन्धारिरसीति नेष्टुरवस्युरसीत्यच्छावाकस्य प्रतिक्रुष्टतरम् ।**

ब्राह्मणाच्छंसिन उपसंख्यानमिति पञ्चम्या अलुक् । ब्राह्मणे विहितानि शस्त्राण्युपचाराद्ब्राह्मणानि तानि शंसतीति ब्राह्मणाच्छंसी, ऋत्विग्विशेषः । द्वितीयार्थे पञ्चम्युपसंख्यानादेव । ब्रह्मशब्दोऽपि स्थलविशेषे ब्राह्मणाच्छंसिनि । ब्रह्मन्यजेतप्रस्थितयाज्याप्रैषदर्शनात् । पाति यजमानमाशासनद्वारेति पोता, ऋत्विग्विशेषः । अस्ति चास्मिन्नर्थे लिङ्गं मरुतो यस्य हि क्षये पाथा दिवो विमहसः । स सुगोपातमो जन इति पोतृप्रस्थितयाज्यायाम् । नप्तृनेष्टृहोतृपोतृभ्रातृजामातृपितृदुहितृ इत्युणादिसूत्रेण निपातनात्साधुः । पत्नेजनीग्रहणप्रदेशं प्रति पत्नीं नयतीति नेष्टा । अयमप्यनन्तरोदाहृतेनोणादिसूत्रेण निपातनात्साधुः । अच्छशब्देनाच्छशब्दादिसूक्तं लक्ष्यतेऽच्छा वो अग्निमवस इति । तत् , आ, अत्यन्तं समीचीनं वक्तीत्यच्छावाक ऋत्विग्विशेषस्तस्य धिष्णियं प्रतिक्रुष्टतरमधिकतरमितरधिष्णियतो भवतीत्यर्थः । तत्राऽऽधिक्यप्रमाणस्यानुपदेशाददृष्टार्थं किंचिदधिकं कर्तव्यम् । दृष्टासंभवाददृष्टार्थताऽत्र । वासिष्ठवाधूलौ तु आधिक्ये प्रमाणानियममाहतुः—सर्वेभ्यो धिष्णियेभ्योऽधिकं चतुरङ्गुलैरच्छावाकस्य धिष्णियं भवतीति । विश्ववेदाः कविर्विभ्मारिर्दुवस्वानिति क्रमेणान्ताः ।

**शुन्ध्यूरसीति मार्जालीयं बहिःसदसं दक्षिणार्धे वेदेः सममाग्नीध्रीयेण यथा दक्षिणेनान्तर्वेदि संचरो भवति ।**

मृज्यन्ते शुद्धानि क्रियन्ते पात्राणि यत्र तन्मार्जालीयम् । मृजेरालीयच्, इत्युणादिसूत्रेण मृजूष् शुद्धावित्यस्माद्धातोरालीयच्प्रत्ययः । बहिःसदसं सदसो बहिर्बहिःसदसम् । अव्ययीभावसमासोऽयम् । शरदादित्वात्समासान्तष्टच्प्रत्ययः । अन्तःसदसमितरानित्यस्यानुवृत्त्या मार्जालीयस्यापि सदस्येव समावेशः स्यात्तं वारयितुं बहिःसदसमिति वचनम् । दक्षिणार्धे वेदेरिति वचनं बहिःसदसत्वेऽपि वेदेरुत्तरार्धं व्यावर्तयितुम् । सममाग्नीध्रीयेणेत्यनेन पूर्वसूत्रोपात्तायाः प्रतिक्रुष्टतरताया व्यावृत्त्यर्थम् । नन्वेवं लाघवाद्धोतृधिष्णियस्य मुख्यत्वाच्च तस्यैवात्र प्रतिक्रुष्टतरत्वव्यावृत्त्यर्थं ग्रहणं कर्तव्यं समं होत्रीयेणेति किमर्थममुख्यगुरुभूताग्नीध्रीयग्रहणमिति चेन्न । आग्नीध्रीयमार्जालीययोरुदक्सूत्राजवेन साम्यत्वसिद्ध्यर्थं तदुपादानाद्धोतृधिष्ण्ये तदसंभवात् । आग्नीध्रीयस्य महावेद्युत्तरप्रान्तप्राक्सूत्रमध्यमारभ्याऽऽर्जवेन महावेदिदक्षिणप्रान्तप्राक्सूत्रमध्यपर्यन्तमुदक्सूत्रं दत्त्वा तत्र मार्जालीयं कार्यमित्यर्थः फलितो भवति । सममाग्नी-

भिधेयेऽत्यत्र तृतीया तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्यामिति सूत्रेण । यथा दक्षिणेनान्तर्वेदि संचरो भवतीत्येतत्सूत्रं यथोत्तरेणान्तर्वेदि संचरो भवतीतिसूत्रवद्व्याख्येयम् । बौधायनेनाऽऽग्नीध्रमण्डपस्य पश्चारत्निरत्वमुक्तं मार्जालीयमण्डपोऽपि तद्वदुक्तः सोऽपि संभवे कार्यः । अरत्निमानं चतुर्विंशाङ्गुलप्रभृतिप्रक्रमपक्ष एव संभवति नान्यदा । विंशाङ्गुलपर्यन्तप्रक्रमपक्षे पदमानमेवेति ज्ञेयम् ।

रौद्रमनीकꣳ सर्वत्रानुषजति ।

रौद्रं रौद्रपदवन्तमनीकमनीकपदवन्तं मन्त्रभागं सर्वेषु मन्त्रेषु अन्तिममन्त्रव्यतिरिक्तेषु अनुषजति योजयतीत्यर्थः । स च भागो रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा हिꣳसीरिति । इमं भागं तत्तन्मन्त्रान्तेषु योजयतीति निष्कृष्टोऽर्थः । रौद्रमनीकमित्यत्र मतुबर्थकोऽर्शआदित्वादच्प्रत्ययः । एतेन केवलरौद्रानीकपदयोरनुपयुक्तयोर्व्यावृत्तिर्भवति । केवलरौद्रपदोपादान उत्तरस्याऽऽदिना पूर्वस्यान्तं विद्यादित्यनया परिभाषया तत्तन्मन्त्रान्तेष्ववगतेषु तदनन्तरं यस्य कस्यचिद्रौद्रपदवतो मन्त्रस्यानुषङ्गः स्यात् । रौद्रपदवान् मन्त्रस्तु स्वशाखायां ब्रह्मणा त्वा शपामीत्यनुवाकात्मक एव । केवलानीकपदोपादाने यस्य कस्यचिदनीकपदवतः सैनानीकेनेत्यस्यानुषङ्गः स्यात्स च मा भूत्किंतु पदद्वयविशिष्टमन्त्रस्यैवानुषङ्गः स्यादित्येतदर्थम् । पदद्वयविशिष्टस्तु रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा हिꣳसीरित्ययमेवैतत्प्रकरणगतश्च । अहिरसि बुध्निय इत्यन्तिममन्त्रान्त एव पठितत्वात्तत्रैवानुषङ्ग इत्येतादृशार्थं वारयितुमनुषङ्गविधिः । सर्वत्रान्तिममन्त्रव्यतिरिक्तेषु मन्त्रेषु । अन्तिमे तु पठित एवास्ति । अत्र नोपस्पर्शनमनीकविशेषत्वाद्रौद्रशब्दस्य । रौद्रेणानीकेनेति सर्वत्रानुषजतीत्येतावतर्जुमार्गेणैवानुषङ्गसिद्धौ रौद्रमनीकमिति वक्रवचनं रौद्रानीकवद्विशिष्टोऽयमनुषङ्ग इतिज्ञानावश्यकत्वसिध्द्यर्थम् । ज्ञानाभावे यजुर्भ्रेषप्रायश्चित्तं दक्षिणाग्नौ होतव्यमिति ।

अत्र वेदिस्तरणमेके समामनन्ति ।

पूर्वत्र यद्वेदिस्तरणमुक्तं तत्तत्र न कर्तव्यं किं तु अत्रास्मिन्काले कर्तव्यमित्येक आचार्या वदन्तीत्यर्थः । नचोत्तरं बर्हिष उत्तरबर्हिः स्तृणातीतिश्रुतेर्वैयर्थ्यभिया पूर्वत्र स्तरणं नित्यमत्र द्वितीयं स्तरणं वैकल्पिकमिति वाच्यम् । एतस्याः श्रुतेरग्नीषोमीयार्थबर्हिःस्तरणपरत्वेन सार्थक्यसंभवे द्वितीयापूर्वस्तरणकल्पनाया अनुचितत्वात् ।

अत्र स्तरणे विशेषमाह—

उत्तरवेदिं खरमुपरवान्धिष्णियाꣳश्च न स्तृणाति ॥ २१ ॥

इति हिरण्यकेशिसूत्रे सप्तमप्रश्ने सप्तमः पटलः ।

———

उत्तरवेदिमित्यनन्तरमिवशब्द उपमार्थकोऽध्याहार्यः । यथोत्तरवेदिं न स्तृणाति पूर्वत्र तद्वदत्र स्तरणे खरमुपरवान् धिष्ण्यानपि न स्तृणातीत्यर्थः । अन्यथा पूर्वत्र स्तरण उत्तरवेदिस्तरणापत्तेः । नचेष्टापत्तिः । उत्तरवेदेरग्न्यायतनत्वेन तत्स्तरणस्य कुत्राप्यदर्शनात्, अग्नेस्तत्र विद्यमानत्वेनासंभवाच्च ।

इत्योकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्निचित्कवाजपेययाजिसर्वतोमुखयाजिद्विसाहस्राग्नियुक्तपौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथदीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसूत्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंतापशामिकायां ज्योत्स्नाख्यायां वृत्तौ सप्तमप्रश्नस्य सप्तमः पटलः ॥ ७ ॥

---

अथ सप्तमप्रश्नेऽष्टमः पटलः ।

---

**अग्नीषोमीयस्य पशोस्तन्त्रं प्रक्रमयति ।**

अग्निश्च सोमश्चाग्नीषोमौ । अग्नीषोमौ देवता यस्य सोऽग्नीषोमीयः । तस्य पशोस्तन्त्रमग्न्यन्वाधानादिकर्मकलापं प्रक्रमयति आरभत इत्यर्थः । स्वार्थे णिजयम् ।

**तस्य निरूढपशुबन्धेन कल्पो व्याख्यातः ।**

स्वतन्त्रः पशुर्निरूढः स बध्यते यस्मिन्कर्मणि तत्पशुबन्धाख्यं कर्म तेन कर्मणा तस्याग्नीषोमीयस्य पशोः कल्पः प्रकारो व्याख्यात उक्त इत्यर्थः । तत्र सर्वपशूनामेष कल्पः पशुः प्रातर्दोहविकारः कालसामान्यात्तथाऽऽग्नेयाऽऽग्नेयैन्द्राग्नयोस्तद्विकारेषु चैतदविकृतमग्नीषोमीये तद्विकारेषु चाऽऽश्ववालः प्रस्तर ऐक्षवी तिरश्ची कार्ष्मर्यमयाः परिधयोऽधिकाः पौतुदारवेभ्योऽमुष्मा अमुष्य वपाया मेदसः प्रेष्यामुष्मै पुरोडाशस्य प्रेष्यामुष्मा अमुष्य हविषः प्रेष्येति पशोर्दैवते संप्रेष्यत्यैन्द्रे सारस्वत्यां तद्विकारेषु च दार्शपूर्णमासिकः प्रचरणकल्पः प्रचरणकल्प इति पशुप्रकृतिविकृतिभावबोधकं सूत्रम् । आग्नेयैन्द्राग्नयोरित्यादिना पञ्चानां पशूनां प्रकृतित्वं प्रदर्श्यते । आग्नेयैन्द्राग्नावग्निष्टोमोक्थ्यसंस्थयोरेतौ सवनीयौ पशू तयोरविकृतमन्यूनानतिरिक्तमेतत्तन्त्रं यन्निरूढ उक्तं तयोर्ये विकृतिभूताः पशवस्तेष्वपि तथा । अग्नीषोमीय उपवसथीयः पशुस्तद्विकारेष्वौपवसथेषु निरूढादधिकमाश्ववालादिकं तत्तु पूर्वमातिथ्यायामिष्टौ कृतं यदातिथ्याया बर्हिस्तदुपसदां तदग्नीषोमीयस्येत्यादिनाऽग्नीषोमीयार्थमेवोक्तमिति तद्विकारेष्वपि तथैव । निरूढे सवनीये तद्विकारेषु च प्रणयने पौतुद्रवा एव परिधयो न कार्ष्मर्यमयाः । तेषामग्नीषोमीय एव वचनेन प्राप्तत्वात् । प्रैषविशेषास्तु शाखान्तरेण व्यवस्थापितास्ते निरूढे न सन्तीत्युक्त

मन्त्रैव ते तथैव शाखान्तरात्सवनीयेष्वपि न सन्तीत्येतद्विकृतमित्यनेनोक्तम्। ऐन्द्रे सारस्वत्यां तद्विकारेषु च दार्शपूर्णमासिकः प्रवरणकल्प इत्यनेन मैत्रावरुणव्यापारो ऽपपुरोडाशाङ्गयागेषु व्यावर्त्यते। तत्राग्नीषोमीयादयो निरूढस्यांशेन विकृतयः। अन्याध्वर्यवे चैते प्रकृतयो निरूढो विकृतिरिति। निरूढपशुं प्रकृत्यैव स्वशाखायाम- ग्नन्ति स्वेति प्रश्ने हौत्राद्याम्नानात्तत्सर्वेषु नैमित्तिककाम्येषु स्वतन्त्रेषु नित्येषु च सर्वेष्वे- तेषु पशुषु हौत्रं प्रयच्छत्तेषां प्रकृतिर्भवत्येव। तथाऽऽध्वर्यवे वैशेषिकं वेदिमानादिकं चौपदेशिकमेव प्राप्यान्येषु प्रयच्छत्तथाऽग्नीषोमीयादाध्वर्यवमतिदिष्टं प्राप्य तद्विकृतोऽ- पि भवति। सर्वपशूनामेष कल्प इत्यनेन सर्वेषां पशुबन्धानां साङ्गो विधिरेष एवेत्ये- तावन्मात्रं प्रदर्श्यते नातिदेशोऽनेन क्रियते किंतु सोमाङ्गैः संकीर्णोऽग्नीषोमीयसवनी- यानां विधिरिति ततो निष्कृष्टो निरूढेऽतिदेशप्राप्तो निरूढ एव व्याख्यातः स सर्वेषां समानः। औपदेशिकोऽग्नीषोमीयादीनामितरेषामातिदेशिकः। ये वैशेषिका मन्त्राः शाखान्तरीया इन्द्राग्निभ्यां त्वा जुष्टमुपाकरोमीत्यादयो निरूढे श्रूयमाणास्तेऽग्नीषोमी- यादौ सौर्यप्राजापत्ययोरपि चातिदेशादूह्याः। अत्रेत्थं व्यवस्था तन्त्रान्तर्गतेषु पशुषु सादृश्यादग्नीषोमीयादय एव प्रकृतिभूताः। तत्राप्यौपवसथ्ये क्रियमाणानामग्नीषोमीय एव सुत्यायां क्रियमाणानामाग्नेयादयस्तत्राप्याग्नेयैन्द्राग्नयोस्तुल्यत्वेऽपि पशुपुरोडाशव- शेनाव्यवस्था। येषां ह्याग्नेयपुरोडाशविकाराः पशुपुरोडाशास्तेषामाग्नेयः सवनीयः प्रकृतिः। येषां तु द्विदेवत्यानां बहुदेवत्यानां वा पशुपुरोडाशाश्चतुरक्षरनामवत्त्वेनैन्द्राग्नपु- रोडाशविकारास्तेषामैन्द्राग्न एव प्रकृतिः। येषामनेकदेवतानां चतुरक्षरनामवतामग्नीषोमीय एव पुरोडाशः पशुपुरोडाशप्रकृतिस्तेऽप्याग्नेयस्यैव सवनीयस्य विकाराः। आग्नेयाष्टाक- पालधर्माणामग्नीषोमीयैकादशकपालेषु विहितं साक्षादतिदेशमादाय सादृश्याद्विकार इति- सूत्रबोधितसादृश्यहेतुकविकारानिर्वाहोऽत्र कार्यः। एतच्चैतस्मिन्व्यवस्थितविकल्पे द्रष्ट- व्यम्। इन्द्रदेवत्यानां पशूनां ये पशुपुरोडाशास्तेषां तु ऐन्द्राग्नपुरोडाशधर्मकत्वादैन्द्राग्नः सवनीयः प्रकृतिर्नाग्नेः। अन्यत्र प्रकृतिदेवताभ्यो यथा सौम्यश्चरुरैन्द्रः पुरोडाश इतीति सूत्रेण सोमेन्द्रदेवत्ययोः पुरोडाशयोरेकवचनप्रतिपाद्यदेवत्यत्वेऽपि आग्नेयविकारत्वाभाव- प्रतिपादनेनाथेतरेऽग्नीषोमीयस्यैन्द्राग्नस्य वेति सूत्रेणैन्द्रस्य सौम्यस्य चाऽऽग्नेयविकाराति- रिक्तकोट्यन्तर्गतत्वेन यद्यप्युभयविकारत्वस्येच्छया प्राप्तिर्वाशब्दस्य व्यवस्थितविक- ल्पार्थत्वं स्वीकृत्यैन्द्रस्यैन्द्राग्नविकारत्वमेव सोमस्याग्नीषोमीयविकारत्वमेवेति तथाऽपि सौत्यसौम्यादिष्वाग्नेयविकारत्वमेव। कपालधर्मसादृश्यात्। प्रकृतिगता देवताः प्रकृतिदेवतास्ताभ्यः प्रकृतिदेवताभ्यः। प्रकृतिगतत्वं हि देवतात्रयस्य, अग्नेरिन्द्रस्य सोमस्य च। तत्राग्नेः स्वातन्त्र्येण सहभूतत्वेन च देवतात्वं प्रकृतौ, इन्द्रस्य सोमस्य चाग्निसहभावेनैवेत्ययं विशेषः। अन्यत्र प्रकृतिदेवताभ्यो यथा सौम्यश्चरुरैन्द्रः पुरोडाश इतीत्यत्रेतिशब्दो वैमृधगुणविशिष्टेन्द्रदेवतापरिग्रहार्थः। अत एव प्रकृतिदेव-

ताम्य इति बहुवचनं संगच्छते। ननु इन्द्रस्य वैमृधाख्यगुणविशिष्टस्यापीन्द्राभिन्नत्वेमै-न्द्रशब्देनैव तद्ग्रहणं तथा च बहुत्वस्य प्रकृतावसंभवेनासंगत्यापत्तिरिति चेन्न। इन्द्रम-हेन्द्रवदत्रापि भेदस्य सत्त्वेन बहुत्वस्य संभवेनासंगतेरभावात्। इन्द्रस्य सोमस्य च प्रकृतिगतत्वमांशिकं तदेव प्रकृतिदेवताम्य इत्यत्र गृह्यते। यद्यप्यग्नेरपि प्रकृतिगत-त्वमस्ति तथाऽपि नाऽऽग्नेयस्यान्यत्र प्रकृतिदेवताम्य इत्यत्र ग्रहणम्। यथा सौम्यश्च-रुरैन्द्रः पुरोडाश इत्युभयोरेव ग्रहणात्सोमदेवत्यपशुविषय आग्नेयधर्माणामप्राप्तेः साधि-तत्वेन सामान्यत्वात्तदपेक्षयांऽशभूतस्येन्द्रस्य विशेषत्वेनैन्द्राग्नधर्माणां प्रापणे प्रबलत्वेन त्र्यक्षरनामकत्वेन चाऽऽश्वमेधिकसोमेन्द्रपशूनामैन्द्राग्नधर्मा एव, ये क्रत्वन्तरे विहिता ऐन्द्राः पशवस्ते षोडशिसंस्थासंबन्धिसवनीयस्यैन्द्रस्य पशोर्विकाराः, ये सरस्वद्देवताका-स्त आग्नेयपशोरेव विकाराः। प्रातिपादिकसाम्यात्सरस्वतीविकारत्वं केचिदिच्छन्ति। ये त्वन्ये सरस्वतीदेवत्या ये च स्त्रीदेवतास्ते स्त्रीदेवतासाम्येनातिरात्रसंस्थासंबन्धिसवनी-यायाः सरस्वत्या मेष्या एव विकारा मैत्रावरुणीसौर्याद्यनुबन्ध्या विना। संप्रैषश्च भव-तीतिवक्ष्यमाणानूबन्ध्याप्रकरणस्थात्सूत्राल्लिङ्गेन साजात्यमत्र न भवतीति ज्ञापितत्वात्। अन्यत्र तु भवत्येवेति व्यवस्था। तस्मादग्नीषोमीयादयः पञ्चापि सोमतन्त्रान्तर्गतानां व्यवस्थिताः प्रकृतयः सोमतन्त्रबहिर्भूतानां तु निरूढ ऐन्द्राग्न इति पञ्चापि पशवः प्रत्यक्षधर्माणो हौत्रेण निरूढस्य विकृतयः। इतर आध्वर्यवेण वैशेषिकेण च हौत्रम-तिदेशात्समानमेव प्राप्तमपि शास्त्रान्तरादैन्द्रे सारस्वत्यां च वपापुरोडाशाङ्गयागविषय-कमैत्रावरुणव्यापारप्रतिबन्धेनैव व्यवस्थापितम्। औपवसथ्ये क्रियमाणानां सुत्यायां क्रियमाणानां चापि पशवः प्रकृतिभूता यथायथमिति मतमैच्छिकविकल्पाभिप्रायं द्रष्ट-व्यमित्यस्तु प्रासङ्गिको विचारः। इदानीं प्रकृतमुच्यते तस्य निरूढपशुबन्धेन कल्पो व्याख्यात इति सूत्रं हौत्रेण सर्वपशुप्रकृतित्वं निरूढस्यैवेत्यभिप्रायेणैव भगवताऽऽचा-र्येण प्रणीतमिति द्रष्टव्यम्।

षड्ढोता पश्चिष्टिश्चाङ्गभूते[1] न विद्येते।

येऽन्तस्तन्त्रवर्तिनोऽङ्गपशवः समानदेशकालाग्नयश्चाग्नीषोमीयाद्यनूबन्ध्यान्ता अङ्गि-नश्च तेषु षड्ढोता न भवति आरम्भार्थत्वात्। प्रधानारम्भेणैव तदारम्भसिद्धेश्च। तथा पश्चिष्टिरपि देवतारूपाग्न्यारम्भस्य दीक्षणीययैव सिद्धेर्न भवति। ये तु बहिस्तन्त्रव-र्तिनो भिन्नदेशकालाग्नयश्च वायव्यपशुपञ्चपशुसौत्रामणीपश्वादयश्च तेषां सत्यपि कथं-चिदङ्गभावे भवत एव षड्ढोतृपश्चिष्टी। ननु षड्ढोता पश्चिष्टिश्च न विद्येते इत्येतावदेव वक्तव्यं प्रकरणादेवैतस्याङ्गभूतस्य पशोर्लाभात्। अतोऽङ्गभूत इत्येतस्य शब्दस्योपा-दानं नैव कर्तव्यमिति चेत्सत्यम्। अङ्गभूत इत्येतस्य हेतुपरत्वप्रदर्शनार्थमुपादानस्याऽऽ-

---

१ क तेषु न'।

वश्यकत्वात् । यतोऽङ्गभूतः पशुरतः षड्ढोतृपश्विष्टयोर्निषेधो नतु केवलाग्नीषोमीयप्रयुक्तोऽयं निषेध इति । तेन सवनीयादिषु पशुष्वपि षड्ढोतृपश्विष्ट्यभावः सिध्यति । एकवचनं चोपपन्नं भवति । जात्यभिप्रायं वैकवचनम् । तथा चाऽऽपस्तम्बः—षड्ढोता पश्विष्टिश्चाङ्गभूतेषु न विद्येते इति ।

**अग्नीनन्वाधायाऽऽतिथ्यापरिधीनिध्म उपसंनह्यति ।**

अग्न्यन्वाधानवचनं सूत्रान्तरोक्ताग्न्यन्वाधानप्रतिषेधनिराकरणार्थम् । अग्नीनन्वाधायेति ल्यप्प्रत्ययोऽग्नीषोमीयस्य पशोस्तन्त्रं प्रक्रमयति प्लक्षशाखामातिथ्याबर्हिष्युपसंनह्यतीति भरद्वाजेन सांनाय्यविकारत्वाच्छाखाहरणमुक्तं तन्मा भूदित्येतदर्थम् । द्रवद्रव्यं हि शाखया शोधनीयं न मांसं कर्मण्यविद्यमाने सहधर्मद्रव्यं निवर्तत इत्युक्तत्वादिति भावः। आतिथ्याबर्हिष एवाग्नीषोमीयकार्यकारित्वस्योक्तत्वादर्थाद्बर्हिराहरणं निवर्तते । उत्करार्थे बर्हिस्तु सुत्यादिवस एवाऽऽहरणीयम् । प्रस्तरमेवाऽऽहरति बर्हिषः करोनेतिवक्ष्यमाणसूत्रगतैवकारव्यवच्छेद्यं वेद्यर्थबर्हिरेव । अत्रान्वाधेया अग्नय औत्तरवेदिकशालामुखीयदक्षिणाग्नयः सभ्यावसथ्यपक्षे तावप्यन्वाधेयौ । प्राजहितस्य नैवान्वाधानं किंतु शालामुखीयस्यैव । एषोऽत्राऽऽहवनीयो यतः प्रणीयते स गार्हपत्य इति पशुसूत्रेण प्रकृताहवनीयस्यैव गार्हपत्यत्वोक्त्या पुराणगार्हपत्यस्य निवृत्तेरुक्तत्वात् । अत्रेति शब्देन तस्मिन्नेव कर्मणि स गार्हपत्यो न तदन्तःपतिताग्निहोत्रहोमे । शालामुखीयं गार्हपत्यकर्मभ्योऽन्ववस्यन्ति तस्मिन्गार्हपत्यकर्माणि क्रियन्त इति वक्ष्यमाणसूत्रेऽप्यत्रेति शब्दो योज्यः । अन्यथा कुण्डपायिनामयने मासमग्निहोत्रं जुहोतीति विहितेऽग्निहोत्रहोमेऽपि ज्योतिष्टोमाद्द्वादशाहं द्वादशाहाद्गवामयनं गवामयनात्कुण्डपायिनामयनमित्येवंरूपचोदकपरम्परया प्राप्ते शालामुखीय एव श्रपणं स्यात् । यद्यपि दर्विहोमेऽस्मिन्स्वतश्चोदकाच्छालामुखीयस्य प्राप्त्यभावस्तथाऽपि कुण्डपायिनामयने शालामुखीयस्य चोदकात्प्राप्त्या तदङ्गभूतदर्विहोमहविःश्रपणेऽप्यस्ति तत्प्राप्तिरिति द्रष्टव्यम्। अतोऽत्रेत्येवमवश्यं वक्तव्यम् । तथा चात्रेति शब्देन कुण्डपायिनामयनान्तर्गते नामातिदेशप्राप्तमुख्यगार्हपत्यश्रपणवत्कर्मण्यग्निहोत्रेति । तथा च द्वादशाध्याये प्रथमे पादेऽमुमर्थमाह श्रपणं चाग्निहोत्रस्य शालामुखीये न स्यात्प्राजहितस्य विद्यमानत्वादित्यनेन सूत्रेण। नामप्राप्तेन प्राजहितेनान्यार्थस्य शालामुखीयस्य बाधो युक्त इति भावः। सूत्रार्थस्तु स्पष्ट एव । यद्यपि नाम्नः प्राबल्यं साप्तमिकन्यायेनैव सिद्धं तथाऽपि प्रसङ्गनिराकरणार्थं सूत्रमिदमिति द्रष्टव्यम् । नन्वेषोऽत्राऽऽहवनीयो यतः प्रणीयते स गार्हपत्य इति सामान्यसूत्रं शालामुखीयं गार्हपत्यकर्मभ्योऽन्ववस्यन्ति तस्मिन्गार्हपत्यकर्माणि क्रियन्त इति विशेषसूत्रेण बाध्यते, एवं च शालामुखीयप्राजहितदक्षिणाग्नीनामेवान्वाधानमत्रेति वाच्यम् । एषोऽत्राऽऽहवनीयो यतः प्रणीयते स गार्हपत्य इति सूत्रस्थेनात्रेति शब्देन पाशुककर्मण्येव प्रवृत्तेरुक्त्या सौमिककर्मण्येतस्याप्राप्तौ तत्रापि प्राप्त्यर्थ-

मेतत्सूत्रप्रणयनस्याऽऽवश्यकत्वेन समानविषयत्वाभावेन बाध्यबाधकभावस्यैवासंभवात्। एषोऽत्राऽऽहवनीयो यतः प्रणीयते स गार्हपत्य इत्येतस्य सूत्रस्य विषयः पाशुकं कर्म शालामुखीयं गार्हपत्यकर्मभ्योऽन्ववस्यन्ति तस्मिन्गार्हपत्यकर्माणि क्रियन्त इत्येतस्य सूत्रस्य विषयः सौमिकं कर्म । एवं च विषयभेदाद्बाध्यबाधकभावो नात्रास्ति । अथवा पशुसूत्रविषयस्य हेतुपरताप्रदर्शनार्थं शालामुखीयं गार्हपत्यकर्मभ्योऽन्ववस्यन्ति तस्मिन्गार्हपत्यकर्माणि क्रियन्त इति सूत्रं यतः शालामुखीयं गार्हपत्यकर्मार्थमन्ववस्यन्ति विनियोजयन्ति श्रुतयः पाशुके कर्मणि अतस्तदग्निसाध्यत्वात्तस्मिन्नेव सौमिकान्यपि गार्हपत्यकर्माणि क्रियन्त इति । इध्म इति सिद्धवन्निर्देशादिध्माहरणस्यात्र कर्तव्यता गम्यते । आतिथ्याबर्हिःसंनहनं तु इध्माहरणोत्तरं कर्तव्यं न तु प्रकृतिप्राप्तस्थाने स्यया तद्बाधात् । अथवाऽऽशानसमय एव बर्हिःसंनहनम् । अथवा परिधीनित्यनन्तरमपिशब्दोऽध्याहार्यः । तेन बर्हिःसंनहनमपि प्राकृतस्थान एव सिध्यति । तथा चाऽऽपस्तम्बः—आतिथ्याबर्हिस्तूष्णीमुपसंनह्यति तांश्च परिधीन्पाशुक इध्म इति । अत्रापि तूष्णीमुपसंनह्यतीत्यनुवर्तते । द्वादशाध्याये प्रथमपादे जैमिनिरपि संनहनहरणे तथेति चेत्, नान्यार्थत्वादिति सूत्राभ्यामाह । संनहनं च हरणं चानयोः समाहारः संनहनहरणं तस्मिन्संनहनहरणे । देशपृथक्त्वान्मन्त्रोऽभ्यावर्तेत इति पूर्वसूत्रोक्ता मन्त्रावृत्तिस्तथाशब्देनानुकृष्यते । नेत्यनेनाऽऽवृत्तिः खण्ड्यते । विहारदेशप्रापणं मुख्यं संनहनहरणयोः कार्यं तदतिरिक्तं कार्यमन्यशब्देनोच्यते । तच्च वेदिप्रापणात्मकं तदर्थत्वादित्यर्थः । यदि वेदिप्रापणार्थताऽपि स्यात्तदा प्रकृतावेव गार्हपत्याहवनीयं प्रति नीयमानेऽपि मन्त्रः प्रयुक्तः स्यात् । एवं संनहनेऽपि दैवाद्ग्रन्थिशैथिल्ये प्रसक्ते पुनस्तूष्णीं क्रियमाणे । नच विहारदेशप्रापणार्थतैवैतयोरित्यत्र किं विनिगमकमिति वाच्यम् । प्रथमोपस्थितेरेव विनिगमकत्वाल्लाघवात् । तदयं निर्गलितोऽर्थो जैमिनिसूत्रस्य देशपृथक्त्वान्मन्त्रोऽभ्यावर्तेत इतिसूत्रोक्तरीत्याऽत्रापि मन्त्रावृत्तौ प्राप्तायां लूनस्य बर्हिषो विहारदेशप्रापणार्थं यत्संनहनं हरणं च तदर्थौ हि संनहनहरणौ मन्त्रौ प्रकृते तथात्वाभावान्न मन्त्राविति । अत एव संभरणमन्त्रोऽपि न तेन परिधीनां सामिधेन्यर्थकाष्ठसंभरणोत्तरं तूष्णीं पृथगेव संभरणम् । अतः संभरणमन्त्रे त्रीन्परिधीनिति लुप्यते । विंशतिधेत्यूहः संचरा इति संनामश्च । उपवेषधृष्टिशब्दविवक्षया संचरानित्येव वा । उपसंनह्यतीत्यत्रोपशब्दादिध्मसमिधामुपर्येव परिधीनां संनहनम् । अत्र तूष्णीं प्लक्षशाखां छित्त्वाऽऽनयन्ति । केचित्तु बर्हिर्धर्मेणैव तूष्णीमानयन्ति ।

अग्नीन्परिस्तीर्य पाणी प्रक्षाल्योलपराजीः स्तीर्त्वा यथार्थं पाशुकानि पात्राणि प्रयुनक्ति ।

अत्राग्नयो ये साक्षादन्वाहितास्त एव । ते चौत्तरवेदिकशालामुखीयदक्षिणाग्नयः । सभ्यावसथ्यपक्षे तावपि । आग्नीध्रस्य साक्षादन्वाधानाभावान्न परिस्तरणम् । अग्नीन्प-

रिस्तीर्येत्यादि स्तीर्त्वेत्यन्तं कृतव्याख्यानम् । अत्र वेदकरणावचनादेवेदं ज्ञातं भवति महावेदिकरणार्थं कृतो यो वेदः स एवाऽऽवभृथाद्भवतीति । अवभृथे तु वेदकरणविधानात्पृथगेव वेदः । यथार्थं यथाप्रयोजनम् । इदं वचनमतिदेशप्राप्तौषधपात्राणां प्रयोजनाभाव इति वक्तुम् । पाशुकानीति वचनं पशुसंबन्धिनां स्वधितिवपाहोमहवनीयूपयूपशकलारणीसुवर्णशकलानां प्रयोगार्थम् । ननु पाशुकानीति नैव वक्तव्यं प्रकरणादेव तत्सिद्धेरिति चेन्न । तस्याऽऽपस्तम्बोक्तप्रचरणीप्रयोगनिवृत्त्यर्थत्वात् । नच सुत्यायामेव तत्प्रयोगविधानादन्यार्थान्निवृत्तौ पाशुकानीति वचनं व्यर्थमेवेति वाच्यम् । सुत्यायां प्रथमं तत्प्रयोगविधानेन पूर्वत्र प्रचरणीः स्रुचः सप्तमीं प्रयुनक्तीत्यापस्तम्बोक्तरीत्या ध्रुवाप्रयोगापत्तौ तन्निवृत्त्यर्थत्वेन सार्थक्यसंभवात् । सोमपात्रैर्न प्रसङ्गसिद्धिरित्यपि पाशुकानीत्यनेन प्रदर्शितं भवति । तथा च द्वादशाध्याये प्रथमपादे जैमिनिः—पात्रेषु च प्रसङ्गः स्याद्धोमार्थत्वात्, न्याय्यानि वाऽप्रयुक्तत्वादप्रयुक्तेः प्रसङ्गः स्यात्, अस्ति शब्दसंस्पर्श इति । पूर्वाधिकरणे यथा महावेद्यां प्राकृतवेदिप्रसङ्गस्तथा पात्रेष्वपि जुह्वादिपात्रेष्वपि प्रसङ्गः स्यात्, होमार्थत्वात्तेषामपि होमार्थत्वात् । होमार्थैः सौमिकैरैष्टिकजुह्वादिसाधकहोमादिकार्यसिद्धेरिति भावः । अयं पूर्वसूत्रार्थः । उत्तरसूत्रार्थस्तु न्यायो होमादिरूपं कार्यं तस्मादनपेतानि न्याय्यानि जुह्वादीनि । धर्मपथ्यर्थन्यायादनपेत इति सूत्राद्यत्प्रत्ययः । वाशब्दः पूर्वपक्षव्यावर्तकः । जुह्वादीन्येव सोमव्यतिरिक्तद्रव्यहोमकारीणि नतु चमसैः प्रसङ्गसिद्धिरिति । कुतः । अप्रयुक्तत्वात् । वेदिर्हि प्रयुक्ता पात्राणि त्वप्रयुक्तानि । अङ्गे प्रयुक्ते तद्गुणार्थं न प्राकृतस्य पुनः प्रयोगः । येन रूपेणैव प्राकृतपदार्थस्याङ्गत्वं तेनैव तल्लक्षणाङ्गप्रयुक्तौ सत्यां तत्र गुणहानावपि प्रसङ्गो युक्तः । भवति च वेद्यां हवींष्यासादयतीति वेदित्वेनैव प्राकृतवेदेरङ्गत्वेन वेदिलक्षणाङ्गप्रयुक्तौ सत्यां तत्र गुणहानावप्यासादने प्रसङ्गो युक्तः । इह तु नाङ्गप्रयुक्तिर्जुह्वादीनां चमससाधारणपात्रत्वेन नाङ्गत्वं येनाङ्गप्रयुक्तिः स्यात् । किं तु जुहूत्वादिना जुह्वा जुहोतीति वचनात् । ततश्च जुहूरूपस्याङ्गस्यैवाप्रयुक्तत्वात्पुनरनुष्ठेयानां जुह्वादिभिरङ्गैरनुष्ठानाय प्राकृतपात्रप्रयुक्तिरिति । तथा च निर्गलितोऽयमर्थः—न्यायशब्देन प्रकृतकार्यमुच्यते । प्रकृतकार्यं होमादिकार्यं तेभ्योऽनपेतानि बाधकशास्त्रं विना तेभ्यो न वियुक्तानि एतादृशानि जुह्वादीनि तेष्वेव सोमाङ्गेष्टिककर्मसु न तु साधारणधर्मेण पात्रत्वरूपेणैव प्रयुक्तौ जुह्वादीनां कथं तत्प्रयुक्तैर्ग्रहचमसादिभिः प्रसङ्गसिद्धिर्भवति । जुह्वादीनि तु जुहूत्वादिविशेषधर्मेणैव प्रयुक्तानि नतु पात्रत्वधर्मेण प्रयुक्तानि । अतो न प्रसङ्गसिद्धिरिति । इति द्वितीयसूत्रार्थः । तृतीयसूत्रार्थस्तु—शब्दस्य जुहूशब्दस्य संस्पृक्*पात्राणीतिवचनं स्फ्यादिसाधारणपात्रसंग्रहार्थम् । अन्यथा प्रचरणीव्यावृत्त्यर्थं

* अत्र तृतीयसूत्रार्थप्रतिपादको ग्रन्थस्त्रुटितः ।

पाशुकवचनस्याऽऽवश्यकत्वे स्वधित्यादीनामेवासाधारणत्वेन पाशुकत्वात्तेषामेव प्रयोग इति शङ्का स्यात्तां वारयितुं पात्राणीतिवचनम् ।

पत्न्यागाज्यग्रहणात्तत्कृत्वा प्रतिहृत्य
गार्हपत्ये पाशुकान्याज्यानि गृह्णाति ।

जुहूपभृतोश्चतुर्गृहीते गृहीत्वा तृतीयमाज्यस्य दधन्यानीयेत्यादिना पशुबन्धोक्तेन प्रकारेणेत्यर्थः । गार्हपत्य इति सप्तम्यन्तेनैव प्रतिहृत्येत्यस्यान्वयः । प्रतिहरणं प्रतीचीनं हरणम् । गार्हपत्य इति समीपसप्तमी । गार्हपत्यसमीपदेशे प्रतीचीनं हृत्वा तत्रैव पाशुकान्याज्यानि गृह्णातीत्यर्थः । प्रतिहृत्येत्यत्रान्तर्भावितो णिज्द्रष्टव्यः । अन्यथा गार्हपत्ये पाशुकान्याज्यानि गृह्णातीत्यनेनैवार्थात्प्रतीचीनहरणे सिद्धे प्रतिहृत्येत्यस्य वैयर्थ्यापत्तेः । प्रोक्षण्यासादनमातिथ्याबर्हिषा यावान्प्रदेश आस्तीर्यते तावतः प्रदेशस्य पश्चार्धे वितृतीयदेशे भवति । अत्र प्रचरण्याः पात्रप्रयोगकाले प्रयोगो नैव भवति । सुत्यायामेव तद्विधानात् । प्रचरण्यामाज्यग्रहणकाले प्रथमं न ग्रहणं तस्यापि सुत्यायामेव विहितत्वात् । अन्तेऽपि च न वैसर्जनहोमकाल एव तस्य विहितत्वात् ।

एवा वन्दस्वेत्युपस्थे ब्रह्मा राजानं कुरुते ।

अपोद्धृत्याऽऽज्यस्थालीमित्यन्तेऽध्वर्युणा कृते । उपस्थः पादविन्यासविशेषरूपासनविशेषः । तस्मिन्राजानं सोमं कुरुते स्थापयतीत्यर्थः । ब्रह्मत्वसूत्रेणैव सेत्स्यति सत्यत्र पुनर्वचनं प्रयोगक्रमज्ञानार्थमुपस्थे राज्ञः स्थापनादनन्तरमेवाऽऽदानं ग्रावादीनां न तत्पूर्वमिति । अत्र मन्त्रवचनं मन्त्रावचनात्पक्षे तूष्णींत्वमपि स्यात्तद्व्यावर्तयितुम् । अब्रह्मेति पदच्छेदो वाऽत्र । ब्रह्मव्यतिरिक्तो यः कश्चनर्त्विक्तद्व्यतिरिक्तोऽन्यो वोपस्थे राजानं कुरुत इत्यर्थः । इदं च ब्रह्मत्वसूत्रे वक्ष्यमाणेन विधिना विकल्पते । ब्रह्मोपस्थे राजानं कुरुते ब्रह्मव्यतिरिक्तो यः कश्चनर्त्विग्वेति । अस्मिन्व्याख्यानेऽपि मन्त्रवचनं ब्रह्मव्यतिरिक्तर्त्विगर्थमपेक्षितमेव । अन्यथा तूष्णींत्वतादवस्थ्यापत्तेः ।

आददते ग्राव्णो वायव्यानि द्रोणकलशं चमसाना-
तिथ्याबर्हिरिध्ममाज्यान्यग्नीषोमीयं चानुनयन्ति ।

आददत इत्यनन्तरं परिकर्मिण इति शेषः । कर्तृसमुदायापेक्षमत्र बहुवचनम् । ग्रावादीध्मान्तानां रज्ज्वा बद्ध्वा तथा वहनेनाप्यनुनयनं संभवति । अत आदानविधिरिति चेत् । तस्य ग्रावादिचमसान्तानां भक्षेनैव निवृत्तत्वात् । अर्थादेवाऽऽदानविधौ सिद्धे वचनं व्यर्थमिति चेत्सत्यम् । तस्य ब्रह्मकर्तृकाद्राज्ञ उपस्थे स्थापनादनन्तरमेवाऽऽदानं यथा स्यान्न तु पूर्वमपीच्छया कदाचिदपीत्येतादृशार्थज्ञापनार्थत्वेन वैयर्थ्याभावात् । ग्रावाणः प्रसिद्धाः । वायव्यानि ऊर्ध्वपात्राणि । द्रोणाकारः कलशो द्रोणकलशः । स

च चतुरङ्गुलदण्डः परिमण्डलश्चतुरश्रो वाऽर्थसिद्धपरिमाणोऽर्थसिद्धबिलोऽस्र । अत एव सूत्रकृता चतुरश्रपरिमण्डलान्यतराकारता द्रोणचितेरप्युक्ता । तेषां यान्यनादिष्टवृक्षाणि विकङ्कतस्य तानीति वक्ष्यमाणवचनाद्वैकङ्कतः । अभावे वारणव्यतिरिक्तयज्ञियवृक्षजः । अहोमार्थानि तु वारणस्येति सूत्रेणाहोमार्थपात्र एव वारणवृक्षजत्वोक्त्या द्रोणकलशे होमार्थत्वस्यापि सत्त्वेनार्थाद्वारणवृक्षनिषेधस्यैव प्रवृत्तेः । मार्तिकस्तु कलशो न भवति । नहि मृन्मयमाहुतिमानश इति श्रुत्या निषेधात् । घर्मे तु वाचनिकं मृन्मयस्य घर्मस्य होमसाधनत्वम् । चमसा वक्ष्यमाणलक्षणाः । ग्रावादीनि पूर्वोपयुक्तानि प्रोक्षितान्येव । आतिथ्याबर्हिस्तूष्णीमेव सप्रस्तरं संनद्धम् । इध्मः सातिथ्यापरिधिकः संनद्धः । आज्यानि स्रुग्गतानि स्थालीगतं च । स्रुग्गतस्थालीगते पृषदाज्ये च । अग्नीषोमीयमग्नीषोमदेवत्यमुपकल्प्तं पशुं येन कर्णगृहीतेन राज्ञ आतिथ्यं कृतं यजमानेन तम् । चकारोऽनुक्तसमुच्चयार्थः । तेन स्रुवसोमस्थालीपूतभृदाधवनीयपरिप्लवैकधनाकलशपन्नेजनीकलशवसतीवरीकलशदशापवित्रोदञ्चनादीन्यादत्ते परिकर्मिणः । प्रायश्चित्तपशुसत्त्वे तौ च । अनुनयन्तीत्यत्र पूर्वोक्तानि ग्रावादीन्येव संबध्यन्ते । अग्निं सोमं चानु पश्चाद्भागमेतानि नयन्ति प्रापयन्ति परिकर्मिण इत्यर्थः । आतिथ्याबर्हिष इध्मस्य चोपसादितत्वेऽपि अत्रानुनयनवचनात्पुनर्ग्रहणं ग्राववत् ।

उत्पत्नीमानयन्त्यन्वनांसि प्रवर्तयन्ति ।

पत्नीमुदानयन्तीत्यन्वयः । श्रुतिरेवेयमनूद्यत उत्पत्नीमानयन्तीति । अत एव व्यवहिताश्चेति सूत्रेण विहितमुपसर्गधात्वोर्मध्ये पदान्तरव्यवधानं न विरुध्यते । बहुवचनं परिकर्म्यभिप्रायम् । ते च बहुवचनाग्निप्रभृतयः । एतच्चाऽऽनयनं पत्नीशालातः शालामुखीयं प्रति । बहुभिरानयनमदृष्टार्थम् । अनांस्यनुप्रवर्तयन्तीत्यन्वयः । प्रवर्तनं नयनम् । इयमपि श्रुतिरेवानूद्यते । पदान्तरव्यवधानाविरोधोऽत्रापि पूर्ववद्द्रष्टव्यः । लौकिकान्यत्रानांसि । बहुवचनाग्निप्रभृतीनि । अतःप्रवर्तका बहुवचनात्प्रत्यनग्निप्रभृतयः । अनुशब्दात्पश्चादनसां प्रवर्तनम् । एतानि शालामुखीय उत्तरवेदिसमीपे वा स्थाप्यन्ते यथोपयोगम् । अनसामभावे परिकर्मिणो हविरादि वहेयुः । तच्च महावेदिमुत्तरेणाऽऽग्नीध्रमण्डपपूर्वावधिपर्यन्तमेव । बहुवचनात्परिकर्मिण ऋत्विजो वैव नयन्ति । एतेन नयनार्थं बलीवर्दयोजनं नेति सूचितं भवति । वक्ष्यमाणकर्मोपयोगिसामग्रीसहितानि शकटानि प्रवर्तयन्ति । यावदेवास्यास्ति तेन सह सुवर्गं लोकमेतीति लिङ्गात् । अन्वनांसि प्रवर्तयन्ति यदस्यात्र शर्वं भवति पूर्वं तेनाग्निमन्ववस्यन्तीतिबौधायनसूत्राच्च । शर्वं यज्ञायुधं यज्ञपात्राणीति यावत् । अनसां प्रवर्तनं यायावरविषयमित्यापस्तम्बः । तेनैतन्मते शालीनस्य निर्मन्थ्य एवेति गम्यते ।

---

१ क. ग. 'हवि' ।

पत्न्युदानयनप्रकारमाह—

**प्रैतु ब्रह्मणस्पत्नीति नेष्टा पत्नीमुदानयति ।**

परिकर्मिभिः साकं नेष्टाऽपि पत्नीमुत्थाप्याऽऽनयति वैसर्जनहोमार्थं शालामुखीयं प्रति प्रैतु ब्रह्मणस्पत्नीति मन्त्रेणेत्यर्थः । उत्थाप्येत्ययमर्थ उच्छब्दाल्लभ्यते । उत्थाप्येत्यनेन यदि तिष्ठन्ती तदा तामुपवेश्योत्थाप्यैवाऽऽनेया न तु तादृश्येवाऽऽनेयेति बोध्यते । निपाता अनेकार्थका इति शास्त्रात् । उच्छब्दः शनैरित्यर्थे वा । वर्णेन्सीदत्विति मन्त्रान्तः ।

**अथाहमनुकामिनीत्यानीयमाना जपति ।**

आनीयमाना नेष्ट्रा परिकर्मिभिश्च । पत्नीविशेषणमेतत् । विशा इहेति मन्त्रान्तः ।

**सुप्रजसस्त्वा वयमित्यपरेण शालामुखीय-**
**मुपविश्य दार्शपौर्णमासिकान्मन्त्राञ्जपति ।**

शालामुखीयस्यापरभागे समीप एवोपविश्य दर्शपूर्णमासयोर्भवा दार्शपौर्णमासिकास्तानन्त्रानग्ने गृहपत इत्यादीञ्जपति । पत्नीत्यनुवर्तते । अध्यात्मादेष्ठञिष्यत इत्यनेन ठञ् । अनुशतिकादित्वादुभयपदवृद्धिः । जपतीत्यनेनोपस्थानादीन्निवर्त्य तत्स्थाने जपोऽनेन विधीयते । सुप्रजसस्त्वा मम पुत्रा इत्यनयोस्तु स्वभावतो जप एव ।

**शालामुखीयं गार्हपत्यकर्मभ्योऽन्वव-**
**स्यन्ति तस्मिन्गार्हपत्यकर्माणि क्रियन्ते ।**

शालाया मुखं शालामुखं प्राग्वंशस्य पूर्वो भागः । तत्र भवः शालामुखीयो गृहपतिर्यजमानस्तेन संयुक्तोऽग्निर्गार्हपत्यः । गृहपतिसंयुक्तत्वं तदुत्पादितत्वेन । अतिप्रसङ्गपरिहारार्थं रूढिरपि स्वीकर्तव्या । गार्हपत्यस्य कर्माणि गार्हपत्यकर्माणि तेभ्यो गार्हपत्यकर्मभ्यो गार्हपत्यकर्मार्थमन्ववस्यन्ति श्रुतयो यतः । अतो यानि गार्हपत्यकर्माणि सर्वाणि तानि तस्मिञ्शालामुखीये क्रियन्त इत्यर्थः । प्रथमतः प्राग्वंशरूपाया एव शालायाः सिद्धत्वात्तन्मुखभवस्य प्राकृताहवनीयस्यैव शालामुखीयत्वम् । कृत्स्नायाः शालाया असिद्धत्वात्तन्मुखभवस्यापि औत्तरवेदिकस्य न शालामुखीयत्वम् । यद्यौत्तरवेदिकस्य शालामुखीयत्वं स्यात्तदा प्राञ्चो गच्छन्तीत्येतद्विरुध्येत । तस्मात्प्राकृताहवनीय एव शालामुखीयत्वम् । अत एव हविर्धानप्रणयने युञ्जते मन इत्याहुत्यधिकरणीभूतस्याग्नेरौत्तरवेदिकशब्देनैव ग्रहणं कृतं न तु शालामुखीयशब्देन । अथवाऽयमर्थः—शालामुखीयं शालामुखीयसंज्ञकं प्राकृताहवनीयं गार्हपत्यकर्मार्थमन्ववस्यन्ति कल्पयन्ति कर्तार इति शेष इति । द्विविधोऽत्र नियमः—शालामुखीयमेव गार्हपत्यकर्मभ्योऽन्ववस्यन्ति न तु पुराणगार्हपत्यमिति, उत्तरनियमेनाऽऽहवनीयकर्माणि व्याव-

र्यन्ते, आहवनीयत्वेऽपि शालामुखीयं गार्हपत्यकर्मभ्य एवान्ववस्यन्ति नत्वाहवनीय-कर्मभ्योऽपीति। गार्हपत्यकर्माणि सौमिकान्यत्र विवक्षितानि नतु पाशुकानि। तेषु तु एषोऽत्राऽऽहवनीयो यतः प्रणीयते स गार्हपत्य इत्येतत्सूत्रादेव सिद्धेः। नन्वेव-मेषोऽत्राऽऽहवनीयो यतः प्रणीयते स गार्हपत्य इत्येतस्मादेव सूत्रादपि सिध्यति किमर्थमिदं वचनमिति चेत्सत्यम्। एषोऽत्राऽऽहवनीय इत्यत्रत्येनात्रेति शब्देन पाशु-ककर्मस्वेवैतस्य प्राप्तत्वेन तदितरत्राप्राप्तौ तत्रापि प्राप्त्यर्थमेतत्सूत्रप्रणयनस्याऽऽवश्यक-त्वात्। सौमिकेषु अग्निप्रणयनोत्तरं द्विविधगार्हपत्योपस्थितौ कस्मिन्गार्हपत्यकर्म कर्त-व्यमित्याशङ्कायां शालामुखीयस्यैव गार्हपत्यकर्मसंबन्धित्वं नियम्यते। गार्हपत्यसंब-न्धीनि सौमिकानि कर्माणि अग्नीषोमप्रणयनमारभ्यैव प्रवर्तन्तेऽतोऽत्र परिभाषाकरणम्। नन्वेवं तत्र तत्र गार्हपत्यशब्द एव प्रयोक्तव्यः, परिभाषयैव शालामुखीयस्य प्राप्तिर्भ-विष्यति, शालामुखीयस्य गार्हपत्यत्वमौत्तरवेदिकस्याऽऽहवनीयत्वं व्यावर्तयितुमेवोद-यनीयायां प्राग्वंशग्रहणम्। एवं चोदयनीयाविषयकातिप्रसङ्गवारणे सिद्धे किमर्थं क्वचित्क्वचिच्छालामुखीयपदोपादानं क्रियत इति चेन्न। सर्वेषामितउत्तरभाविकर्मणां सौमिकत्वाविशेषेऽपि कर्मविशेषपरत्वमेव परिभाषाया ज्ञापयितुं तदावश्यकत्वेन तत्र तत्र शालामुखीयपदोपादानस्य प्रयोजनसत्त्वात्। तथा हि शालामुखीयं गार्हपत्यकर्म-भ्योऽन्ववस्यन्ति तस्मिन्गार्हपत्यकर्माणि क्रियन्त इति परिभाषया यागसंबद्धान्येव कर्माणि गृह्यन्ते। अत एव सवनीयपुरोडाशप्रयुक्तपात्रासादनादीनां सवनीयपुरोडाश-यागसंबद्धत्वादेव शालामुखीयप्राप्तेर्न कस्याप्यग्नेः श्रवणम्। अत एवोदयनीयायां प्राग्वंशग्रहणम्। यागव्यतिरिक्तेषु यागासंबद्धेषु वैसर्जनहोमादिषु गार्हपत्ये जुहोती-त्येवमुच्यमाने गार्हपत्ये जुहोतीति तत्र तत्र प्रत्यक्षश्रुतौ श्रूयमाणत्वेन प्राकृतगार्हपत्य-परतैव स्यात्तां वारयितुं शालामुखीयवचनमावश्यकं, प्रत्यक्षशालामुखीयपदश्रवणस्य यत्राभावः सवनीययागप्रयुक्तपात्रप्रयोगानिर्वापादौ तत्र परिभाषायाश्चरितार्थता। याग-भिन्नेषु यागासंबद्धेषु वैसर्जनादिषु शालामुखीयग्रहणं प्राग्वंशे गार्हपत्यात्पत्नीत्यत्र प्राजहित एव गार्हपत्य इति परिसंख्यातुम्। नन्विदमेषोऽत्राऽऽहवनीयो यतः प्रणी-यते स गार्हपत्य इत्यनेनैव सिध्यतीति चेन्न। एतत्सूत्रस्य तत्रस्थेनात्रेतिशब्देन पाशु-कमात्रपरतायाः प्रदर्शनेन सवनीयपुरोडाशयागस्य पाशुकत्वाभावेन परिभाषाया अप्राप्तौ तत्प्रापणार्थं शालामुखीयं गार्हपत्यकर्मभ्योऽन्ववस्यन्ति तस्मिन्गार्हपत्यकर्माणि क्रियन्त इति परिभाषाया अवश्यमपेक्षितत्वात्। नचैवं वैसर्जनहोमादिष्वपि परिभाष-यैव सिध्यतीति वाच्यम्। तथा सति तत्र तत्र शालामुखीयग्रहणस्य निर्हेतुकत्वापत्तेः। नच वैसर्जनहोमादिष्वपि कस्याप्यग्नेः श्रवणं माऽस्त्विति वाच्यम्। आहवनीये जुह्वा हूयन्त इति परिभाषयाऽऽहवनीयप्राप्त्यापत्तेः। शालामुखीयं गार्हपत्यकर्मभ्योऽन्वव-स्यन्ति तस्मिन्गार्हपत्यकर्माणि क्रियन्त इति सूत्राच्छालामुखीये गार्हपत्यकर्मप्रवृत्तिर-

ग्नीषोमप्रणयनमारभ्यैव नत्वन्वाधानमारभ्येत्येतादृशार्थाङ्गीकारे शालामुखीयस्य गार्ह-पत्यत्वेनान्वाधानमेव न स्यात्, गार्हपत्यत्वस्यैवाभावात् । इष्टापत्तौ तु प्रकृतकर्मण्यनु-पयुक्तस्य शालामुखीयस्यान्वाधानाभावश्चाऽऽपद्येत । अत्रापीष्टापत्तौ शालामुखीययोने-राग्नीध्रीयस्याग्नेःप्युपयोगसत्त्वेन तस्यानन्वाहितताप्राप्तिरित्येवं महाविप्लव आपद्येत । अतो हेतुपरत्वमेवैतस्य युक्तमिति सुस्थम् । आहवनीय आग्नीध्रीयभागे विद्यमानेऽपि तदानीमेव गार्हपत्यादृष्टसंक्रमणात्तत्र कर्मोपपत्तिर्यथाऽऽपस्तम्बीयैः कृता तथाऽ-स्माभिरपि कर्तव्या । एतेन सोमसंबन्ध्यग्निप्रणयनप्रकरणस्थ एष सोमस्याऽऽहवनीयो यतः प्रणीयते स गार्हपत्य इत्यापस्तम्बसूत्रे, सत्याषाढभरद्वाजयोस्तु मताद्राग्नीध्रप्रणय-मात्परत एव तत्र गार्हपत्यकर्माणीति द्रष्टव्यमिति सत्याषाढभरद्वाजसूत्राशयमज्ञा-त्वाऽऽपस्तम्बसूत्रविरुद्धमर्थं वर्णयन्तो धूर्तरामाण्डाररुद्रदत्ताः परास्ताः ।

सव्रतान्ह्वयध्वमिति संप्रेष्यति ।

परिकर्मिण ऋत्विजो वाऽत्र प्रेष्याः । अपि समुच्चितं सपिण्डसहकृतं व्रतमेकपाक-संभोजनं येषां ज्ञातीनां तान् । अथवाऽपिशब्दस्तुल्यत्वार्थकस्तुल्यमेकपाकाशित्वरूपं व्रतं येषां तानिति । संह्वयध्वमाह्वयतेति प्रैषार्थः । परप्रत्याय्यनार्थत्वादुच्चैस्त्वम् । उप-सर्गस्य क्रियायामन्वयः । व्यवहिताश्चेति सूत्रादुपसर्गक्रिययोर्मध्ये पदान्तरव्यवधानं न विरुध्यते । एतस्य प्रैषस्य शाखान्तरीयत्वाच्छन्दस्त्वमस्त्येव ।

तःह्वयन्ते यजमानस्यामात्यान् ।

संह्वयन्त आह्वयन्ति यजमानस्यामात्याञ्ज्ञातीनित्यर्थः । परिकर्मिण ऋत्विजो वेति शेषः । बहुवचनं परिकर्म्यृत्विजामन्यतमप्राप्त्यर्थम् । संह्वयन्त इत्यत्र निसमुपविभ्यो ह्व इत्यात्मनेपदम् । अमात्या इति पाठे प्रथमा द्वितीयार्थे । अमात्यशब्द एकपाका-शिसगोत्रज्ञातिपरः ।

अध्वर्युं यजमानोऽन्वारभते यजमानं
पत्नी पत्नीं यजमानस्यामात्याः ।

अध्वर्युं यजमानोऽन्वारभते तं पत्नीति तच्छब्देनैव यजमानपरामर्शसिद्धौ पुनर्यजमान-ग्रहणं तच्छब्दस्य सर्वनामत्वेन बुद्धिस्थपरामर्शित्वात्कदाचिदाद्यावुपस्थितत्वेन मुख्यत्व-मादायाध्वर्योर्व्यवहितस्यापि तस्यैवान्वारम्भ इति शङ्कां दूरीकर्तुम् । यजमानं पत्नी तां यजमानस्यामात्या इत्यत्र तच्छब्देनैव पत्न्याः परामर्शसिद्धौ पुनः पत्नीपदोपादान-मनेकपत्नीसत्त्वे सर्वासामप्यन्वारम्भार्थम् । अन्यथा तच्छब्दस्य प्रधानपरामर्शित्वमादाय ज्येष्ठया न विनेतरा इतिशास्त्रात्परार्थं कर्म कर्तव्यं ज्येष्ठयैव न चान्ययेति शास्त्रात ज्येष्ठाया एव प्रधानत्वेन तस्या एवान्वारम्भः स्यात्स मा भूत्किंतु सर्वा अप्यत्रान्वार-

---

१ क. ज ञ ढ. ०माज्ञाः ।

मेयुरित्येतदर्थम् । सर्वा अपि पत्नयो यजमानमेवान्वारभन्ते सवर्णा असवर्णाश्च । सर्वा अपि पत्नीरमात्या अन्वारभन्ते । पत्नीशब्दग्रहणादाधानोत्तरं योढ़ा तस्या अन्या- धानाद्यसंबद्धतायां यज्ञसंयोगप्रयुक्तस्य पत्नीत्वस्य पत्युर्नो यज्ञसंयोग इति पाणिनि- प्रोक्तस्याभावेन न पत्नीत्वेन ग्रहणं किंत्वमात्यत्वेनैव । यजमानस्यामात्या इत्यत्र यज- मानग्रहणमध्वर्युव्यावृत्त्यर्थम् । अमात्या भ्रातृपुत्रादयः, भ्रातृपुत्रादीनां पत्नयः, अप्रत्ताः कन्याश्च । प्रत्तानां गोत्रान्तरसंक्रा(क्र)मात्र ग्रहणम् । पत्नीमेवान्वारभन्तेऽ- मात्या नान्योन्यमिति पत्नीं यजमानस्यामात्या इत्यस्यार्थः ।

तानहतेन वाससा प्रच्छाद्य प्रचरण्यां चतुर्गृहीतं
गृहीत्वा प्रच्छादनार्थस्य वाससो दशायां२
हिरण्यं बद्ध्वाऽऽज्येऽवधाय स्रुग्दण्डे वाससोऽन्त-
मुपनियम्य शालामुखीये वैसर्जनौ जुहोति त्वं
सोम तनूकृद्भ्य इति पूर्वामाहुतिं जुहोति जुषाणो
अप्तुराज्यस्य वेतु स्वाहेति द्वितीयाम् ।

तानमात्यान्यजमानादीन्वा । तानिति तच्छब्देनाध्वर्युरात्मानं न प्रच्छादयेदिति गम्यते । ईषद्धौतं नवं श्वेतमित्यादिलक्षणलक्षितेन वाससाऽऽच्छादनपर्याप्तेन प्रच्छाद्य प्रकर्षेण च्छादयित्वेत्यर्थः । छादनं शिरसां शिरःसु च्छादितेषु अमात्याश्छादिता भवन्ति । सर्वेषु गात्रेषु शिरसः प्रधानत्वात् । यथा शिरांसि न दृश्यन्ते तथा छादये- दिति प्रकर्षः । प्रचर्यतेऽपूर्वो होमः क्रियतेऽनयेति प्रचरणी । योगरूढं पदं, तस्यां चतुर्गृहीतमाज्यं स्रुवेण गृहीत्वा प्रच्छादनार्थं तस्य वाससो दशाऽञ्चलस्तत्र हिरण्यं निक्षिप्य स्रुचः प्रचरण्या दण्डः स्रुग्दण्डस्तस्मिन्वाससोऽन्तमुपनियम्य संश्लिष्टं धृत्वा यथा न चलति, शालामुखीयेऽग्नाववान्तरदीक्षा विसृज्यते याभ्यामिति वैसर्जनौ वैस- र्जननामकौ होमौ जुहोति । तत्र त्वं सोम तनूकृद्भ्य इति पूर्वा प्रथमा वैसर्जनाहुतिः । जुषाणो अप्तुरिति द्वितीया । होमार्थं पात्रासादनपवित्रकरणप्रोक्षणीसंस्कारस्रुवप्रचरणी संमार्गाज्यसंस्कारान्कृत्वा कर्तव्यौ । प्रच्छादनार्थस्येति वचनमन्यवासोव्यावृत्त्यर्थम् । दशायामिति वचनं दशारहितप्रान्तव्यावृत्त्यर्थम् । दशायामिति सप्तमीनिर्देशाद्दशाया- मन्येन सूत्रेण दर्भेण वा बन्धनं नतु दशयैव बन्धनम् । एतच्च हिरण्यं वलयाकृति सच्छिद्रं वा भवति योग्यतया यथा घटमानयेति सामान्यत उक्तेऽपि योग्य एव घट आनीयते तथा । सच्छिद्रपक्षे सूत्रं प्रोतं कृत्वा तत्सूत्रेण दशायां बन्धनीयम् । दशायेत्येकवचनादेकस्यामेव दृढायां दशायां बन्धनम् । जात्यभिप्रायं वैकवचनम् । तेन बह्वीष्वपि दशासु बन्धनमसंभवे सिद्धं भवति । शालामुखीयग्रहणमाहवनीये जुह्वा हूयन्त इतिपरिभाषाप्राप्ताहवनीयकार्यकार्यौत्तरवेदिकस्य निवृत्त्यर्थम् ।

शेषमाज्यस्य करोति ।

पूर्वाहुतिः स्रुवद्वयपरिमितेनाऽऽज्येन । द्वितीयाऽऽहुतिस्तु बिन्दुमात्रपरिमितेनाऽऽज्येन । स्रुवद्वयपरिमितमाज्यशेषं करोति स्थापयतीत्यर्थः । वरूथ९ स्वाहेत्यन्तः पूर्वो मन्त्रः । द्वितीयस्तु कृत्स्न एव पठितः । आज्यशेषकरणादेकदेशेन होमो भवति । अप्तुराज्यस्य वेतु स्वाहेति लिङ्गादिदं गम्यते बिन्दुमात्राज्याहुतिर्द्वितीया भवतीति । स्पष्टं लिङ्गं प्रदर्शयितुमेव कृत्स्नमन्त्रपाठः । बौधायनोऽमुमर्थं स्पष्टमेवाऽऽह—अथ स्रुवेणाप्तुं प्रस्कन्दयतीति । प्रचरण्यां चतुर्गृहीतं गृहीत्वा वैसर्जनौ जुहोतीति स्रुचैवाऽऽहुतिद्वयस्य विहितत्वात्स्रुवस्य बौधायनोक्तस्य नाङ्गीकारः ।

शालामुखीयेऽग्निप्रणयनान्यादीपयति सिकताश्चोपयमनीरुपकल्पयत उपयच्छतीध्ममुपयच्छस्युपयमनीरुपयते धार्यमाणे ॥ २२ ॥
अग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहीति संप्रेष्यति प्रणीयमानाभ्यामनुब्रूहीति वा ।

अग्निः प्रणीयते यैः काष्ठैस्तानि शालामुखीये प्रज्वालयति । प्रकृतगार्हपत्यादेवाथीयाथीय प्राप्तमग्न्युद्धरणं बाधितुं शालामुखीय इत्युक्तम् । सिकता वालुका एवोपयमनीरुपयम्यते प्रदीप्तोऽग्निर्याभिस्ता उपयमन्यस्ता यथोपयमनसमर्थाः स्युस्तथा पात्रेण धृताः करोति । चकारोऽवधारणार्थः । तेन सिकता एवोपयमनीरुपकल्पयत इत्यर्थो भवति । न च चकारस्य प्रसिद्धसमुच्चयार्थकत्वं परित्यज्यावधारणार्थकत्वस्वीकरणमयुक्तं, तथा चोपयमन्यः सिकतातो भिन्ना एव भवन्तीति वाच्यम् । उपयमनीरुपनिवपतीति सिकतानामेवोपवापयोग्यत्वात्सिकता उपयमनीः कृत्वेति भरद्वाजोक्तेः सिकताभिरुपयम्येत्यापस्तम्बोक्तेश्चात्रावधारणार्थत्वस्यैव युक्तत्वात् । यान्यपि(ग्नि)प्रणयनान्यादीप्तानि तान्येव समुदायापन्नानीध्म इत्युच्यते, काष्ठान्येवेध्मो न तु संस्कारनिमित्तः शब्द इति दर्शितम्, इध्ममुपयच्छति समूहीकृत्योर्ध्वं धारयति । उपयच्छति सिकताः शरावगृहीताः प्रदीप्तेध्मस्य संवरणार्थमुप समीपे यच्छति अधस्ताद्धारयति यथोह्यमानोऽग्निर्न विशीर्येताधस्ताच्च न पतेत् । उपयत उपयमनीभिर्यमिते धार्यमाण इध्म उपरीत्यर्थः । अन्यत्स्पष्टम् । अत्र हौत्रं याजुषहौत्रसत्त्वेऽपि आश्वलायनीयमेव ।

त्रिरनूक्तायामयं नो अग्निरित्यग्निप्रथमाः सोमप्रथमा वा प्राञ्चो गच्छन्ति ।

उपस्थितत्वात्प्रथमैव त्रिरनूक्ता भवति । तथैवापठदापस्तम्बः—प्रथमायां त्रिरनूक्तायामिति । अग्निः प्रथमः पूर्वो येषां तेऽग्निप्रथमाः । अस्मिन्पक्षेऽग्नेः पश्चात्सोमस्ततपश्चाद्धु-

१ ख. ग. 'ष्यमाने का°।

वचनोपात्ता अध्वर्युब्रह्मयजमानाः । सोमः प्रथमः पूर्वो येषां ते सोमप्रथमाः । अग्निपक्षे सोमस्य पश्चादग्निस्तत्पश्चादध्वर्युब्रह्मयजमानाः । प्राञ्चः प्राङ्मुखाः । अयं नो अग्निरिति मन्त्रेण गच्छन्ति । त्रयाणां मन्त्रः । पत्न्या अपीति केचित् । अत्राऽऽह बौधायनः कर्मान्ते—संप्रच्छन्नाश्चैव गच्छेयुराहवनीयादिति । आ, आहवनीयादिति पदच्छेदः । आहवनीयपर्यन्तमित्यर्थः । होतुर्वशं यन्तीति बौधायनः । शास्त्रान्तरे वैसर्जनहोमवासोऽध्वर्युर्गृह्णातीति विधानादध्वर्युणा तस्य वाससो ग्रहणं कार्यं, यजमानेनादत्तस्य ग्रहणायोगाद्दानमर्थसिद्धम् । मीमांसकास्तु लोभमूलकत्वादेतच्छास्त्रं न प्रमाणं तथा च न वासोग्रहणमध्वर्योः, अतो दानमपि नेत्याहुः । अयं न्यायः प्रथमाध्याये तृतीयपादे, जैमिनिना हेतुदर्शनाच्चेत्यनेन सूत्रेणोक्तः । इदं सूत्रं विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमिति पूर्वसूत्रस्यैव शेष इति भाष्यमतम् । वार्तिककारमते भिन्नमेवेति भेदो ज्ञेयः । श्रुतिविरोधे यन्मन्वादिवाक्यं तदनपेक्षं श्रुतिवाक्यं तदेव प्रमाणं स्यान्नतु स्मृतिवाक्यं यस्मादसत्येव विरोधे स्मृतेः श्रुत्यनुमापकत्वादिति विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमित्येतत्सूत्रस्यार्थः । हेतुदर्शनाल्लोभरूपहेतुदर्शनात् । चः पूर्वसूत्रोक्तहेतुसमुच्चायकः इति हेतुदर्शनाच्चेत्येतत्सूत्रस्यार्थः । वाजसाताविति मन्त्रान्तः ।

यथार्थमनुनयन्ति ।

अर्थं प्रयोजनमनतिक्रम्य यथार्थमनु अग्नीषोमावनु नयन्ति ग्रावादीनि परिकर्मिण इत्यर्थः । ग्रावादीनामादावग्नीषोमीये स्थापयिष्यमाणत्वाद्ग्रावादीन्येव पुरो नयन्ति । ततः पश्चादातिथ्यावर्हिः । तस्यैव प्रथमं स्तरणरूपकार्योपस्थितेः । तत इध्मं नयन्ति । तस्यैवानन्तरमभ्याधानरूपकार्योपस्थितेः । तत आज्यानि । तेषामेवानन्तरं होमरूपकार्योपस्थितेः । ग्रावादीनामनन्तरमुपयोगात्तत एतेषां नयनम् । अचेतनत्वादनुनयन्तीत्येवं वचनं, बहुवचनात्परिकर्मिणः ।

अनुगच्छन्त्यमात्याः ।

एतान्पदार्थाननु पश्चाद्गच्छन्तीत्यर्थः । पूर्वत्रान्वारम्भविधानादुत्तरत्र यथेतममात्याः प्रतिगच्छन्तीतिविधानाच्चार्थादेवानुगमनेऽमात्यानां सिद्ध इदं वचनं होमोत्तरमन्वारम्भपरिसंख्यार्थमनुगमनमात्रं भवति नत्वन्वारम्भोऽपीति । अनुगुणज्ञापनज्ञानत्वादनुगच्छन्तीत्येवं वचनम् ।

अनुनयन्त्यग्नीषोमीयम् ।

अनुगच्छन्त्यमात्या इत्येतदुत्तरं वचनादग्नीषोमीयपशोरमात्याननु नयनं, पशुत्वादनुनयन्तीत्येवं वचनं, बहुवचनात्परिकर्मिणः । अत एव पशोर्बलिष्ठत्वं गम्यते ।

---

१ क. ख. ग. घ. ङ. °नुहरन्ति ।

आग्नीध्रीय एतमग्निं प्रतिष्ठाप्याग्ने नयेति नयवत्यर्चाऽऽग्नीध्रे जुहोति ।

आग्नीध्रीये धिष्णिय एतं प्रणीतमग्निं धिष्ण्यसंमुखो भूत्वा स्थापयेदित्यर्थः । मध्य-भाग आत्माभिमुखतया स्थापनं बोधयितुं प्रतिः । अत्र प्राङ्मुखतैव नोदङ्मुखता । न विहारादुदङ्पर्यावर्तेत इति निषेधात् । अग्न्यायतनं गोमयेनोपलिप्य स्फ्येनोद्धत्यावो-क्ष्यायमग्निः स्थापनीयः सार्वत्रिकमिति वचनाद्यत्र यत्राग्निरायतने स्थाप्यते तत्र गोम-योपलेपनोद्धननावोक्षणानि कर्तव्यानि । अग्ने नयेत्यृक्, नयेतिपदवत्त्वान्नयवती । नयव-त्यर्चाऽऽग्नीध्रे जुहोतीति श्रुतिरपि । इदं च विशेषणं ज्ञानार्थं, ज्ञानाभावे दक्षिणाग्नौ यजुर्भ्रेषप्रायश्चित्तं कर्तव्यम् । ऋग्ग्रहणप्रयोजनमतिच्छन्दसर्चा मिमीत इत्यत्र यथोक्तं तद्वज्ज्ञेयम् । तस्मिञ्जुहोतीत्येतावतैव तस्याग्नेः संप्रत्ययसिद्धावाग्नीध्र इति वचनमाग्नी-ध्रीयधिष्णियस्थापितोऽग्निरा ध्रियंशो भवतीति । संज्ञायाः प्रयोजनं यत्रतत्राग्नीध्रे जुहोतीत्यादावेतस्याग्नेः संप्रत्ययः । विधेमेति मन्त्रान्तः । जुहोतिचोदितत्वात्स्वाहाकारः । वक्ष्यमाणावपि होमौ वैसर्जनसंज्ञकावेव । सुवर्गाय वा एतानि लोकाय हूयन्ते यद्वैसर्ज-नानि द्वाभ्यां गार्हपत्ये जुहोति द्विपाद्यजमानः प्रतिष्ठित्या आग्नीध्रे जुहोत्यन्तरिक्ष एवाऽऽक्रमत आहवनीये जुहोति सुवर्गमेवैनं लोकं गमयतीति श्रुतेः ।

शेषमाज्यस्य करोति ।

द्वौ स्रुवाववशिष्टौ तयोरेकस्रुवपरिमितेनाग्ने नयेत्याहुतिं हुत्वैकस्रुवपरिमितमाज्यमव-शेषयतीत्यर्थः ।

निर्दधाति[1] ग्राव्णो वायव्यानि द्रोणकलशं चमसांश्च ।

आग्नीध्रीय इति शेषः । चकारः सोमस्थालीपूतभृदाधवनीयपरिप्लवैकधनाकलशपत्ने-जनीकलशवसतीवरीकलशदशापवित्रोदचनानां समुच्चयार्थः । स्रुवस्य त्वत्र उपयोगा-त्स्रुग्भिः सह नयनम् ।

अतिहरन्तीतराणि ।

अत्रातिरग्र इत्यर्थे । तथा चाऽऽग्नीध्रीयस्याग्नेऽपीतराणि आतिथ्याबर्हिरिध्माज्यानि स्रुवं पशुं चोत्तरवेदिपर्यन्तं हरन्तीत्यर्थः । प्रायश्चित्तपशुमत्त्वे तावपि अग्रे हरन्ति । धुरोर्धको वा । अस्मिन्कल्पेऽग्नीषोमयोरग्र एवं हरणमितरेषाम् । अनुहरन्तीतराणीति पाठ इतरेषामप्यनुनयनमेव ।

उत्तरेणाऽऽग्नीध्रीयं धिष्णियं परीत्योरु विष्णो विक्रमस्वेत्यौत्तरवेदिके जुहोति ।

धिष्णियग्रहणं मण्डपव्यावृत्त्यर्थम् । परीत्येत्यस्याऽऽग्नीध्रं परिक्रम्य दक्षिणतो गत्वा जुहोतीत्येवाहशार्थविवक्षाऽऽग्नीध्रस्यापि प्रातिसंभवेन तद्वारणाय तद्ग्रहणस्याऽऽ-

---

१ क. ज. झ. ञ. ठ. 'दधाति । २ ख. 'व ग्रहण' ।

वश्यकत्वात् । औत्तरवेदिकं प्रति गमनमार्थिकं तद्विना होमासंभवात् । अत्र सर्वाज्य-होम उत्तरत्र विनियोगाभावात् । आपस्तम्बः स्पष्टमेवाऽऽह—उरु विष्णो विक्रम-स्वेति सर्वमाज्यशेषं जुहोतीति । तिरेति मन्त्रान्तः । जुहोतिचोदितत्वात्स्वाहाकारः ।

यथेतममात्याः प्रतिगच्छन्ति ।

इतमनतिक्रम्य यथेतम् । अव्ययीभावसमासोऽयम् । येन मार्गेण गमनं पूर्वं कृतं तेनैव मार्गेणामात्याः प्रतिगच्छेयुरित्यर्थः । आज्यबर्हिरिध्मानामादातारस्तु तत्तदुपयो-गपर्यन्तमुत्तरवेदिसमीप एवावतिष्ठन्ते । अग्नीषोमीयपशोर्नेताऽप्युपाकरणकालादवति-ष्ठत एव । ऐन्द्राग्नाश्विनपशुसत्त्वे तयोर्नेतारावप्यु(प्यो)पाकरणकालादवतिष्ठेते । सुर-क्षितानि सादयित्वा वैते सर्वे गच्छेयुः ।

सोमो जिगाति गातुविदिति सौम्यर्चाऽपरेण द्वारेण हविर्धाने ब्रह्मा राजानं प्रपादयति ।

सौम्यर्चेति पूर्ववद्व्याख्येयम् । प्रपादयति प्रवेशयति । अत्र वचनं प्रयोगक्रमज्ञा-नार्थं यदा राज्ञः प्रपादनं तदैव वक्ष्यमाणोऽध्वर्योर्हविर्धाने प्रवेशो न तत्पूर्वमिति । ब्रह्मत्वसूत्रे राजानं प्रत्यादाय सोमो जिगाति गातुविदिति सौम्यर्चाऽपरेण द्वारेण हविर्धाने प्रविश्याध्वर्यवे राजानं प्रदाय यथेतं प्रत्येत्यापरेणोत्तरवेदिमतिक्रम्य दक्षिणत उपविशतीति ब्रह्मकर्तृकमेवाध्वर्यवे राज्ञः प्रदानं विधास्यमानम् । अनेन तु प्रयोजक-कर्तृत्वं विधीयते । तथा च ब्रह्मा मन्त्रं स्वयमुक्त्वा येन केनापि परिकर्मिणा पूर्वेण[1] द्वारेण हविर्धाने राज्ञः प्रवेशनमात्रं तेनैवाध्वर्यवे राज्ञः प्रदानं च कारयेदिति । एवं च द्वयोरविरोधाद्विकल्पः । अत्र मन्त्रवचनं मन्त्रान्तराभावे तूष्णींत्वमपि स्यात्तद्व्या-वर्तयितुम् । ब्रह्मेति पदच्छेदो वाऽत्रापि । अर्थस्तु स्पष्टः । अस्मिन्व्याख्यानेऽपि मन्त्रवचनं ब्रह्मव्यतिरिक्तर्त्विगर्थमपेक्षितमेव । अत्रायं पिण्डितोऽर्थः—यदा तु ब्रह्मक-र्तृकमध्वर्यवे प्रदानं तदा पूर्वेण गतश्रिय इत्येतन्न भवति किं तु ब्रह्मकर्तृकप्रदानमात्र एवेति पूर्वव्याख्यायाम् । यदा तु ब्रह्मव्यतिरिक्तर्त्विक्कर्तृकता स्वी क्रियते तदैव पूर्वेण गतश्रिय इत्येतद्भवति न तु ब्रह्मकर्तृकतापमित्येतद्द्वितीयव्याख्यायामिति ।

पूर्वेण गतश्रियः ।

द्वारेणेति पूर्वसूत्राद्विशेष्यस्यानुवृत्तिः । गता प्राप्ता श्रीर्येन तस्य गतश्रियः । कृताह्व-शस्य यजमानस्योक्तव्यवस्थानुसारेण पूर्वेण हविर्धाने राज्ञः प्रपादनम् । ये गत्यर्थास्ते प्राप्त्यर्था इति शास्त्रमर्यादया गमनार्थकधातोः प्राप्त्यर्थकत्वं ज्ञेयम् । गतश्रीशब्द-वाच्याः 'त्रयो वै गतश्रियः शुश्रुवान्ग्रामणी राजन्यः' इति श्रुत्युक्ता ग्राह्याः ।

---

१ ख. ग. क्रियेत ।

शुश्रुवान्वेदत्रयाध्यायी । अहे बुध्निय मन्त्रं मे गोपाय, यमृषयस्त्रैविदा विदुः, ऋचः सामानि यजूंषि, सा हि श्रीरमृता सताम्, इति मन्त्रवर्णात् । ग्रामणीर्ग्रामाधिकारीति यावत् । अभिषिक्तः क्षत्रियो राजन्यः । एषां त्रयाणां पूर्वेण द्वारेण प्रपादनम् । आसदमिति मन्त्रान्तः ।

उर्वन्तरिक्षमन्वेमीति पूर्वेणाध्वर्युः प्रविश्यादित्याः सदोऽसीति दक्षिणस्य हविर्धानस्य नीडे कृष्णाजिनं प्राचीनग्रीवमुत्तरलोमाऽऽस्तृणाति ।

अत्रापि द्वारेणेत्यस्य विशेष्यानुवृत्तिः । स्वशाखादृष्टस्यानिहीति पाठस्य प्राप्तिः स्यात्सा मा भूदित्येतदर्थमन्वेमीत्यस्य पाठः । पूर्वेणेति वचनं नियमार्थं गतश्रियोऽगतश्रियो वाऽपि यजमानस्य क्रतौ पूर्वेणैवाध्वर्योः प्रवेशो न तु पूर्वेऽपरस्थानुसारेणेति । अध्वर्युग्रहणं ब्रह्मव्यावृत्त्यर्थम् । दक्षिणग्रहणमुत्तरव्यावृत्त्यर्थम् । अन्यत्सोमक्रयवद्व्याख्येयम् ।

प्रत्न१ राजानमादित्याः सद आसीदेति तस्मिन्नासादयति ।

इदमपि तद्वद्व्याख्येयम् ।

प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्र्येध्मं वेदिं च प्रोक्ष्य प्रोक्षण्यवशेषं निनीय पवित्रे अपिसृज्यापरेणोत्तरवेदिं मन्त्रेण बर्हिः स्तृणाति यथा दर्शपूर्णमासयोः ।

उक्तेतरपरिसंख्यार्थमनुक्रमणम् । आपो देवीरित्यभिमन्त्र्य ब्रह्मन्प्रोक्षिष्यामीति ब्रह्माणमामन्त्र्य । आमन्त्रणेन प्रसवोऽप्युपलक्ष्यते । अन्यथाऽऽमन्त्रणस्य वैयर्थ्यापत्तेः । वेदस्थत्वादैष्टिकप्रोक्षणलोपः शङ्क्येत तन्निवृत्त्यर्थं वेदिवचनम् । अत्र वेदिशातिक्यार्थबर्हिःस्तरणं यत्र कर्तव्यं भवति तावत्परिमितैव विवक्षिता न कृत्स्ना महावेदिरिति । बर्हिषः प्रोक्षितत्वात् । प्रोक्षणस्य चादृष्टार्थत्वेन प्रोक्षणजन्यादृष्टस्य निष्पन्नत्वेन पुनःप्रोक्षणप्रयोजनाभावात्प्रोक्षणादिप्रयोजनाभाववदास्तरणस्य दृष्टकार्यत्वेन तथा वक्तुमशक्यत्वादास्तरणे सिद्धे प्रोक्षणाभावादमन्त्रकमेव स्तरणमाशङ्क्येत तां शङ्कां वारयितुं मन्त्रेणेति । प्रोक्षणाद्यभावस्तु यज्ञोत्पत्त्युपदेशे निष्ठितकर्मप्रयोगभेदात्प्रतितन्त्रं क्रियेतेति सूत्रेण द्वादशाध्याये प्रथमे पादे जैमिनिनाऽपि प्रोक्तः । यदातिथ्यायां बर्हिस्तदुपसदां तदग्नीषोमीयस्येत्येतत्सूत्रव्याख्यानावसर इदं सूत्रं व्याख्यातम् । बर्हिष्प्रोक्षणविध्यभाव एव मन्त्रग्रहणं सप्रयोजनं भवति । अत एव बर्हिष्पदप्रदेः पाठ आधुनिकाक्षिप्त एवेति ज्ञायते । देशपृथक्त्वामन्त्रे२ऽप्यावर्तेत

१ क. ज झ. ञ ढ. °दिं बर्हिश्च प्रो° । २ ख. ग. °ध्याव° ।

इति सूत्रेण द्वादशाध्याये प्रथमे पादे जैमिनिनाऽपि समन्त्रकं स्तरणमुक्तं, सूत्रार्थस्तु स्पष्ट एव । बर्हिःसाधारण्यात्प्रसङ्गप्राप्तादिदमुच्यते । देशपृथक्त्वादित्यनेनेदं बोध्यते बर्हिरर्थस्तरणमिदं न भवति किं तु बर्हिषा वेदिं स्तृणातीति द्वितीयानिर्देशात्प्रयोजनवत्त्वाच्च वेदिदेशसंस्कारार्थमिति । भिन्नो मेह प्रागंशोत्तरवदिदेशसमीपदर्शी तेन तदर्थं स्तरणं तदङ्गं च मन्त्रोऽप्यावर्तते । असत्यावृत्तौ वेदिवैगुण्यादग्नीषोमीयहविषामासादनं विगुणं स्यात् । भवतु वा बर्हिरर्थं स्तरणं बर्हिषि स्तीर्णे हवींषि साक्षादासाद्यन्त इति तथाऽपि तदावृत्तेस्तदङ्गमन्त्रावृत्तिः । अन्यथा ह्यमन्त्रास्तीर्णे बर्हिषि हवींषि साधेरन्निति । अन्तर्वेदि पुरोग्रन्थीत्यादिकं प्रत्युक्षणान्तं निवर्तते । तूष्णीं गृहीत एव प्रस्तरे यजमाने प्राणापानौ दधातीति पवित्रे अपिसृजति । पवित्रे अपिसृज्येति त्वया ब्रह्मणे प्रस्तरप्रदानमाहवनीयकृत्यं च व्यावर्त्यते । तेन प्रस्तरं धृत्वैव बर्हिरास्तरणं कर्तव्यमिति सिद्धं भवति । स्तीर्णेन बर्हिषाऽस्तारितत्वात्तृणैरन्तर्धानं न । शुल्वस्तरणं तु भवत्येव । तस्य बर्हिरास्तरणाङ्गत्वेनाव्यवधायकत्वात् । अरेणोत्तरवेदिमिति वचनमुत्तरवेद्याः समीपेऽरभाग एवैतस्य बर्हिषः स्तरणं न तु सोमार्थबर्हिःस्तरणवदुत्तरवेदिपार्श्वद्वयेऽपि स्तरणमित्येतदर्थम् । एतच्चान्वयेनोत्तरवेदेर्दूरस्थोऽरभागो हविर्धानमारभ्य कृत्स्नो व्यावर्त्यते । एवं चोत्तरवेदिसमीपप्रदेशे हविर्धानमण्डपावधिके बर्हिः स्तृणातीत्यर्थः सिध्यति । ननु मन्त्रेणेति वचनं सौमिकस्तरणवत्तूष्णींत्वस्याऽऽपाय इत्यस्य मन्त्रस्य च प्राप्तिः स्यात्सा मा भूत्किं तु प्राकृत एव मन्त्रः स्यादित्येतदर्थमस्त्विति चेन्न । एतस्य बर्हिषः केवलाश्रयत्वेन सौमिकस्तरणधर्माणां प्राप्तेरेवासंभवेन तन्निवृत्तिरूपप्रयोजनासंभवात् । एवं च पूर्वोक्तमेव प्रयोजनम् । यथा दर्शपूर्णमासयोरित्यनेन प्रत्यगपवर्गत्वादयो धर्मा अतिदिश्यन्ते । नन्वनेनैव मन्त्रप्राप्तिरपि भविष्यति किमर्थं मन्त्रेणेति चेत्सत्यम् । सौमिके स्तरणे व्यभिचारदर्शनेन मन्त्रेणेति वचनं विना निर्वाहाभावात् ।

सन्नेष्वाज्येषु यूपसंमानेन प्रतिपद्यते ।

सन्नेष्वाज्येष्वित्यनेनानूयाजार्थे उल्मुके उदू(द्दु)ह्येत्येतदादिकं सूचितं भवति । वेद्यास्तरणानन्तरं प्लक्षशाखास्तरणं बर्हिषि । तथोक्तं कात्यायनीये बर्हिषि प्लक्षशाखां स्तृणातीति । यूपसंमानमग्निनाऽग्निष्ठाश्र सदिशं मिनोतीत्येतत्कर्म तेनोपलक्षितं सर्वमपि कर्म यूपसंमानं देवस्य त्वेत्यभ्यादानादि स्वर्वत्गूहनान्तं तेन प्रतिपद्यते तत्करोतीत्यर्थः ।

अग्नीषोमीयं पशुमुपाकरोति ॥ २३ ॥ स व्याख्यातरूपः ।

व्याख्यातं रूपं यस्य स व्याख्यातरूपः । मन्त्रैर्गृहीतबर्हिः प्लक्षशाखाभिरग्नीषोमदेवतोद्देशेन पशुं स्पृशन्संकल्पयतीत्यर्थः । स व्याख्यातरूप इत्यनेन यो राज्ञ आतिथ्यापेक्षरूपः स एवोपाकरणीयो नत्वातिथ्यायैव स उपाकरणार्थमन्य इति बोध्यते ।

नन्वेवं सति स स्यादुपात इत्येतावदेव वक्तव्यं रूपपरं निरर्थकमिति चेन्न । सर्वेषूक्तेषु लक्षणेषु लोहः कृष्णश्वेतो लोहितश्वेत इत्येतेषां वर्णानामत्यावश्यकत्वार्थज्ञापनार्थत्वेन सार्थक्यात् । फलं सर्वलक्षणलक्षितपशोर्लाभे लोहत्वादिभिर्न चारितार्थ्यम् । कदाचि- च्चारितार्थ्ये कृते प्राक्तो प्रायश्चित्तं कर्तव्यमेव । तादृशपश्वलाभवशेन केवललोहत्वादि- विशिष्टस्यैव पशोर्ग्रहणे तु प्रायश्चित्तं नेति द्रष्टव्यम् । छागलक्षणं कात्यायनपरिशिष्टे—

अथातः संप्रवक्ष्यामि च्छागानां लक्षणं शुभम् ।
अशुभं चैव वर्ज्यानां तत्प्रवक्ष्याम्यतः परम् ॥
एकवर्णो द्विवर्णश्च बहुवर्णस्तथैव च ।
रोहितो यस्तु वै छागः स पष्ठः कुलमुद्धरेत् ॥
यस्तु श्वेतमुखश्छागः कृष्णग्रीवः सितोदरः ।
पशूनां चैव मुख्यः स्यात्पशुकामस्तमालभेत् ॥
मञ्जिष्ठवर्णसंकाशो यच्छृङ्गे चतुरङ्गुले ।
स च्छागः पालको नाम महान्पालयते धनम् ।
विकटो वामनो वेहत्साहस्राः पशवस्त्रयः ॥
साधयन्ति महायज्ञं महच्च लभते फलम् ।
यज्ञे तु दक्षिणे पार्श्वे मण्डलं यस्य वै भवेत् ॥
छागः सर्वार्थको नाम सर्वकामफलप्रदः ।
श्वेतं तु दक्षिणे पार्श्वे भवेद्वै यस्य मण्डलम् ॥
स च्छागो विजयो नाम अमित्रदमनः स्मृतः ।
श्वेतकृष्णः प्रतिष्ठायाः कृष्णैः श्वेतैः प्रतिष्ठितैः ॥
प्रतिष्ठितौ तु तौ छागौ प्रतिष्ठार्थे तु याज्ञिकैः ।
षडुन्नतः षडावर्तः सकुक्षिलोमशोदरः ॥
स्निग्धस्त्वग्लोमवर्णः स्याच्छागः सर्वार्थसाधकः ।
लोहकर्णः पुष्करकर्णो यस्य चैतद्द्वयं भवेत् ॥
छायाकर्णपकर्णो वा शुण्ठकर्णं तथैव च ।
लम्बसशफव्यङ्गशुण्ठाकर्णस्तथैव च ॥
दारिद्र्यं पुत्रनाशं च मरणं चैव तादृशे ।
एकवर्णाश्च यः पादास्तुरीयस्तं यदा भवेत् ॥
स च्छागो मुसली नाम अचिरान्नाशयते कुलम् ।
कालालः कृष्णपार्श्वस्तु श्वेतपादो प्रतिष्ठितः ॥
छागो वैश्रवणो नाम नयागस्योपतिष्ठति ।
कपिचण्डेन्द्रियः क्षीणश्वेतं वृद्धमजायत ॥

वार्ध्रीणसं तु तं प्राहुर्वर्जयेद्यज्ञकर्मणि।
वर्जयेद्यज्ञकर्मणीति ॥

**प्रवरं प्रवृत्याऽऽश्रावमृतुप्रैषादिभिः सौमिकानृत्विजो वृणीते।**

प्रवरं प्रवृत्य प्राकृतं प्रवरं प्रवृत्य। प्रवरं प्रवृत्येति पूर्वकर्मावधित्वदर्शनायानुवादः। तेनोपाकृत्य पञ्च जुहोतीत्यादि कर्म सिद्धं भवति। सौमिकर्त्विग्वरणरूपं विशेषं विधातुमप्ययमनुवादः। प्राकृतं दैवं मानुषं च वरणं कृत्वेति प्रवरं प्रवृत्येत्यस्यार्थः। आश्राव्याऽऽश्राव्येत्याश्रावम्। आभीक्ष्ण्येऽयं णमुल्। तेन प्रतिवरणमाश्रावणासिद्धिः। आभीक्ष्ण्यं पौनःपुन्यम्। आश्रावणसंबद्धत्वात्प्रत्याश्रावणमपि प्रतिवरणम्। बौधायनः स्पष्टमेवाऽऽश्रावणं प्रत्याश्रावणं च प्रत्येकं पठितवान्—प्रसिद्धः होतारं वृणीतेऽथाऽऽश्रावयत्योश्रावयास्तु श्रौषण्मित्रावरुणौ प्रशास्तारौ प्रशास्त्रादित्यसौ मानुष इति मैत्रावरुणस्य नाम गृह्णात्यथाऽऽश्रावयत्योश्रावयास्तु श्रौषडिन्द्रो ब्रह्मा ब्राह्मणादित्यसौ मानुष इति ब्राह्मणाच्छंसिनो नाम गृह्णातीत्यादिना संपृक्तानावसंपृक्तानौ तन्व इत्यन्तेन सूत्रेण। ऋतुग्रहार्थमृतुपदवन्तश्च प्रैषास्ते च मैत्रावरुणेन पठिष्यमाणास्तेषामादय ऋतुप्रैषादयस्तैर्ऋतुप्रैषादिभिर्ऋतुप्रैषवद्भिरित्यर्थः। सौमिकान्सोमस्येमे सौमिकाः सोमसंबन्धिन एतानृत्विज ऋतुयाजिनो होत्रादीन्वक्ष्यमाणान्वृणीत इत्यर्थः। अत्रर्तुशब्द ऋतुग्रहपरः। तान्यजन्तीत्यृत्विजः। ऋतुग्रहयाजिनोऽत्रर्त्विजो विवक्षिता इत्यर्थः। प्रकरणादर्थाच्चैतेषां सौमिकत्वे सिद्ध इदं वचनं यो होता सोऽध्वर्युः स पोता य उद्गाता स नेष्टा सोऽच्छावाको यो मैत्रावरुणः स ब्रह्मा स प्रतिहर्ता यः प्रस्तोता स ब्राह्मणाच्छंसी स ग्रावस्तुद्यः प्रतिप्रस्थाता सोऽग्नीत्स उन्नेता गृहपतिर्गृहपतिः सुब्रह्मण्यः सुब्रह्मण्य इति कुण्डपायिनामयनप्रकरणस्थेन सूत्रेणैकस्यानेककर्मकर्तृत्वेनानेकर्तुयाजित्वेऽप्येकेनैव वरणसिद्धिरेकव्यक्तिकत्वादिति शङ्कां वारयितुं सौमिकानिति व्यक्त्यभेदेऽपि सोमसंबन्धिकर्तृत्वमुपादाय प्रत्यृतुयाज्येव वरणमिति सौमिकमेवेदं वरणं न तु पाशुकमिति ज्ञापनार्थं च। एतेन स्वतन्त्रपशुष्वप्यग्नीषोमीयविकारत्वमपि ज्ञायते। अग्नीषोमीयविकारत्वसत्त्व एवाग्नीषोमीयपशुनो होत्राग्नीध्राध्वर्युप्रतिप्रस्थातृमैत्रावरुणयजमानानामेव पाशुककर्मणि संभवेन तेषामेव वरणप्रसक्तौ तन्निवृत्त्यर्थत्वेनैव सौमिकानित्यृत्विग्विशेषणस्य सार्थक्यं संभवति नान्यथा। ब्राह्मणाच्छंसिपोतृनेष्टॄणामसंभव एव पाशुके कर्मणि। अतस्तेषामप्रसक्तिरेव। एवं च स्वतन्त्रेषु काम्येषु चतुरक्षरनामदेवत्येषु तथाभूतेषु सवनीयेषु अनुबन्ध्यानां चाग्नीषोमीयातिदेशोऽपि पक्षे भवतीति सिद्धं भवति।

आश्रावमृतुप्रैषादिभिः सौमिकानृत्विजो वृणीत इति सामान्यप्रतिज्ञा तत्र कथमित्याकाङ्क्षायामाह—

इन्द्र९ होत्रात्सजूर्दिव आ पृथिव्या इति होतारम् ।

इन्द्र९ होत्रात्सजूर्दिव आ पृथिव्या इत्ययमृतुप्रैषादिस्तत्र सौमिकमृतुयाजिनं होतारं वृणीत इत्यर्थः । इन्द्र९ होत्रात्सजूर्दिव आ पृथिव्येति तृतीयान्तपाठस्त्वपपाठ एव । दिव इति षष्ठीवत्पृथिव्या इत्यत्रापि षष्ठ्या एव युक्तत्वात्, ऋतुप्रैष इन्द्रं होत्रात्सजूर्दिव आ पृथिव्या ऋतुना सोमं पिबतु होतर्यजेति प्रैषे षष्ठ्या एव श्रवणाच्च । अन्यथर्तुप्रैषादिभिरित्येतस्य विरुद्धत्वापत्तेः । नचेन्द्रं होत्रे यस्मिन्नृतुप्रैषेऽनुनासिकपाठाभावेन कथं सानुनासिकस्यर्तुप्रैषादित्वमिति वाच्यम् । अनुनासिकस्य प्रायशो यजुर्वेदेनेनाऽऽम्नायेन यजुर्वेदिभिर्ऋतुप्रैषादेरेव ग्राह्यत्वात् । नहि निरनुनासिकर्तुप्रैषत्वेनाध्ययनादावि तथैव पादादिके च इति नियमः । वेदधर्मस्य प्रबलत्वात् । नहि सानुनासिकत्वनिरनुनासिकत्वविभेदेन ऋतुप्रैषयोर्भेदो सिध्यतः । मृगारेष्टेरन्यत्र्द्धेनुगादेरेवानुवृत्तेः । तत्र ... ... ... कार्यमेवेति सिद्धम् ।

अपिसृज्य तृणमस्पृश्य उत्तरान्वृणीते ।

होतारमृत्विजादिना वृत्वा स्पृष्टं हस्तेन धृतं वेदिस्थं तृणं तेन सहैवापिसृज्य मैत्रावरुणस्पृश्यः ... स्पर्शरहितो भूत्वोत्तरान्वक्ष्यमाणान्वृणीत इत्यर्थः ।

अग्निमाग्नीध्रादित्याग्नीध्रम् ।

स्पष्टम् ।

अश्विनाऽध्वर्यू आध्वर्यवादित्यात्मानं प्रतिप्रस्थातारं च ।

अध्वर्योः स्ववरणकर्तृत्वादात्मानमित्येवं निर्देशः । अत्र चकारः परस्परसमुच्चयार्थ एव । अन्यथासंभवात् ।

मित्रावरुणौ प्रशास्तारौ प्रशास्त्रादिति मैत्रावरुणमिन्द्रो ब्रह्मा ब्राह्मणाच्छंसिनं महतः पोत्रादिति पोतारं ग्रावो नेष्ट्रादिति नेष्टारम् ।

स्पष्टम्

अग्निर्दैवीनां विशां[२] पुर एताऽयश्२ सुन्वन्यजमानो मनुष्याणां तयोरस्थूरि गार्हपत्यं दीदाय गच्छत२ हि मा वायुराषाश्सीतसंपृश्चानावसंश्वृानो तन्व इति यजमानम् ।

प्रवरणेऽयं विधिः सर्वोऽप्यपूर्व एव । सौमिकानित्यविशेषेणोक्तेऽपि ऋत्विजोऽन्त्र्तुयाजार्था एव ग्राह्याः । तद्यष्टृणामेव वरणात्तत्प्रैषसंयोगाच्च । एवं चर्तुयाजार्थमेवै·

१ क. ज. ह. भ. र. 'थिव्येति । २ क. ख. ग. 'मिर्दैवी' ।

द्धरणमिति। अत एव पाशुक एतद्धरणनिवृत्तिः। अत्र केचिदाहुः—सुत्यायां वरण एव सुन्वच्छब्दः, अग्नीषोमीयदिवसे वरणे सुन्वच्छब्दस्य लोप एवेति। सुन्वन्निति वर्तमानार्थकशतृप्रत्ययनिर्देशादिति तेषामयमाशयः। अपरे तु अग्नीषोमप्रणयनादूर्ध्वं सुन्वच्छब्दस्य प्रवृत्तिर्वर्तमानसामीप्ये वर्तमानवद्वेति वर्तमानत्वमादाय, अतो न लोप इत्याहुः। सूत्रकृतोऽयमेवार्थोऽभिप्रेतः।

जुष्टो वाचो भूयासमित्येताभ्यां प्रवृतः प्रवृतो जुहोत्यनन्तरं प्रवरात्।

जुष्टो वाचो भूयासमृचा स्तोममित्येताभ्यां मन्त्राभ्यां द्वे आहुती यो यः प्रवृतः स स स्वस्वप्रवरणानन्तरमेव जुहोतीत्यर्थः। यत्र मन्त्रगणेन कर्म चोदयेत्प्रतिमन्त्रं तत्र जुहुयादिति परिभाषयाऽऽहुतिद्वित्वम्। आद्यस्य पुरस्तात्स्वाहाकारस्वात्तेनैव स्वाहाकारेण होमो न मन्त्रान्तेऽन्यः स्वाहाकारः प्रयोज्यः। तत्स्वाहाकारान्त एव प्रदानं भवति। द्वितीये भवत्येवान्ते स्वाहाकारः। पुरस्तात्स्वाहाकाराभावाद्दर्विहोमधर्मेण होमाः। आहवनीये जुह्वा हूयन्त इति परिभाषया जुह्वा होमे प्राप्ते तस्या व्यापृतत्वादेतस्य होमस्य सौमिकवरणाङ्गत्वात्प्रचरण्याः सोमसंबन्धित्वात्तयैव होमः। पशुसंबन्धिहोमो वसाहोमहवन्या। प्रवृतः प्रवृत इति वीप्सया सर्वैर्ऋतुयाजिभिः स्वस्ववरणानन्तरमेताभ्यामाहुतिद्वयं होतव्यम्। होत्रादिभिरपि याजुषधर्मेणैव होतव्यम्। एतयोराहुत्योः प्रवरणनिमित्तकत्वात्प्रवृताहुतिसंज्ञा कृताऽऽश्वलायनेन प्रवृताहुतीर्जुह्वति वषट्कर्तार इति। सूत्रकृताऽपि प्रवृतः प्रवृतो जुहोतीत्यनेनेदं संज्ञाकरणं सूचितमेव।

हुत्वाऽध्वर्युरुत्तरान्वृणीते।

अध्वर्युर्हुत्वाऽनन्तरमेवोत्तरान्वृणीते। प्रतिप्रस्थातुः प्रवृताहुत्योः प्रतीक्षा न कर्तव्येति भावः। उत्तरान्मैत्रावरुणादीन्।

सवनीय एके प्रवरानामनन्ति।

अग्नीषोमीये प्रवरकर्तव्यता योक्ता सा तत्र न कर्तव्या किं तु सवनीये पशावेव कर्तव्येत्येक आचार्या वदन्तीत्यर्थः। अच्छावाकस्य न प्रवरणं वचनाभावात्। अत एव प्रवृताहुती अपि न। प्रवृताहुतीर्जुह्वति वषट्कर्तारोऽन्येऽच्छावाकादित्याश्वलायनः। अच्छावाकस्य वषट्कर्तृत्वात्प्रवृताहुतिहोमे प्राप्तेऽन्येऽच्छावाकादिति पर्युदासः क्रियते। अध्वर्युप्रतिप्रस्थात्रोर्यजमानस्य च साक्षादपि पक्षे वषट्कर्तृत्वं वक्ष्यत्येव सूत्रकारः स्वयं वा निषद्य यजत इत्यनेन सूत्रेण। प्रव्रियन्त ऋतुयाजिन ऋतुयाजार्थमाहूयन्त इति प्रवराः। यद्यप्यृतुयाजाः सुत्यायां तथाऽपि अग्नीषोमीये वरणं वचनात्। होत्रादीनां प्रवरणे विशेषमाहाऽऽपस्तम्बः—सर्वत्रोपांशु नामग्रहणमसौ मानुष इत्युच्चैरिति। सर्वेषु प्रवरणेषु तस्य नाम प्रथमया विभक्त्योपांशु गृहीत्वा

मानुष इत्युच्चैर्वदतीत्यापस्तम्बसूत्रार्थः । अध्वर्युप्रवरणेऽहं चामुकशर्मा च मानुषाविति प्रयोगः । केचित्तु अमुकामुकशर्माणौ मानुषावित्यध्वर्योरिवाऽऽत्मनोऽपि नामग्रहणमिति वदन्ति तत्तुच्छम् ।

आत्मनाम गुरोर्नाम नामातिकृपणस्य च ।
श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥

इति स्मृतावात्मनामग्रहणनिषेधात्, स्पष्टवचनं विना नामग्रहणस्यायुक्तत्वाच्च । अत एव सूत्रकृताऽऽस्मानमिति परोक्षनिर्देशः कृतः । अतोऽहंशब्देनैव निर्देशः यजमानप्रवरणेऽयं सुन्वन्यजमान इत्येतैरेव शब्दैर्निर्देशसिद्धेर्न यजमाननामग्रहणम् ।

हुतायां वपायाः सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति संप्रेष्यति पितापुत्रीया सुब्रह्मण्या भवति ।

हुतायां वपायामग्नीषोमीयस्य पशोर्वपायां हुतायाम् । एकत्वमविवक्षितं तेनैन्द्राग्नाश्विनपशुसत्त्वे तयोरपि वपयोर्हुतयोरनन्तरमेव सुब्रह्मण्याह्वानं नत्वग्नीषोमीयवपाहोमानन्तरं सुब्रह्मण्याह्वानं तदनन्तरमैन्द्राग्नाश्विनपश्वोर्वपायाग इति हुतायामग्नौ वषट्कारेण प्रक्षिप्तायाम् । हुतायां वपायामित्यनेन घृतवतीमध्वर्यो स्रुचमास्यस्वेत्युच्यमाने जुहूपभृतावादायेत्यादिकं कर्म सूचितं भवति । यद्यपि प्रवरणानन्तरं निरूढपशौ मैत्रावरुणाय दण्डप्रदानस्यैव विहितत्वात्तदेवात्रापि प्राप्तं तथाऽपि क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीति वाक्यात्सोमक्रयोत्तरमेव तस्य यजमानेन दत्तत्वाद्दत्तस्य पुनर्दानायोगान्नात्र दानम् । सोमक्रयोत्तरं मैत्रावरुणेनाविक्षुरो विखुरो भूयासमिति मन्त्रेणैव यजमानात्प्रतिग्राह्यः । उत्तरवप्यमार्जनयोर्वपायागाङ्गत्वात्तयोरपि ग्रहणम् । तथा चाऽऽपस्तम्बः—हुतायां वपायां मार्जयित्वेति । मध्यपतितत्वादुत्तरवप्यहोमस्याप्यस्मिन्सूत्रे ग्रहणं द्रष्टव्यम् । पाशुकी दक्षिणा तु नैव भवति । सर्वेषु सौमिकेष्टिष्टिपशुबन्धेषु नान्वाहार्यं ददातीति निषेधात् । अन्वाहार्यग्रहणस्य पशुबन्धदक्षिणोपलक्षणपरतायाः पूर्वमेव वर्णितत्वात् । प्रधानदक्षिणयैव परिक्रयसिद्धेरित्येतदाशयोऽपि तत्रैव वर्णितः हुतायां वपायां वरं ददाति तिस्रो वा दक्षिणा नयेदितिपशुबन्धयाजमानसूत्रस्वरसाद्दक्षिणादानं भवत्येव । कथमेतदिति चेदुच्यते—हुतायां वपायां वरं ददातीतिसूत्रान्मार्जनात्प्रागेव वरदानं ततो मार्जनमिति यथा पशौ साधितं तथैवात्रापीति द्रष्टव्यम् । तिस्र इत्यत्र गावो विशेष्याः क्रियापदद्वयाद्वरदानं भिन्नम् । वरं ददातीति विहितं वरदानं सर्वर्त्विग्भ्य एव । तिस्रो गा इति गोत्रयदानमपि तेभ्य एव । तिस्रो वेत्यत्र वरं ददातीत्यस्माद्भागाद्वरशब्दोऽनुवर्तते । वरं तिस्रो गा वा दद्यादिति तदर्थः ।

---

१ ख. ग. °रिग्रहति° । २ ख. ग. °नं ति° ।

ऐष्टिकदक्षिणादानधर्मा वरदाने न किंतु ऋत्विजो वरं वो ददामीत्येवमेव दानं पाशुकद-क्षिणादान एवैष्टिकधर्मा उत्तरत्रैव दक्षिणापदात् । यदि वरं ददाति तिस्रो वा दक्षिणा नयेदित्येतस्य सूत्रस्यैकार्थकत्वं स्यात्तदा हुतायां वपायां वरं तिस्रो वा दक्षिणा नयेदित्येव ब्रूयात् । नोक्तं च तथा । अतो वरं ददातीत्येतद्भिन्नं तिस्रो वेत्येतद्भिन्न-मित्येव वक्तव्यम् । तथा च प्रथमवरदानं पाशुकदक्षिणा न भवति । अतस्तस्य निषेधो न । पश्वैकादशिनीसूत्रे वरदानस्य तन्त्रत्वविधानमनयैव रीत्या संगतं भवति नान्यथेति द्रष्टव्यम् । अथवाऽवधारणार्थको वाशब्दोऽत्र । सौमिकेषु पशुषु श्रुतौ विशेषः—प्राञ्चमग्निं प्रहरन्त्युत्पत्नीमानयन्त्यन्वनाꣳसि प्रवर्तयन्त्यथ वा अस्यैष धिष्णियो हीयते सोऽनुध्यायति स ईश्वरो रुद्रो भूत्वा प्रजां पशून्यजमानस्य शमयि-तोर्यर्हि पशुमाप्रीतमुदञ्चं नयन्ति तर्हि तस्य पशुश्रपणꣳ हरेत्तेनैवैनं भागिनं करोति यजमानो वा आहवनीयो यजमानं वा एतद्विकर्षन्ते यदाहवनीयात्पशुश्रपणꣳ हरन्ति स वैव स्यान्निर्मन्थ्यं वा कुर्याद्यजमानस्य सात्मत्वायेति । प्राजहितात्पशुश्रपणहरणे भागित्वसंपादनं प्रयोजनं तच्चाभागित्वोपपादनं विना कर्तुमशक्यम् । अतस्तत्प्रदर्श-यितुं प्राञ्चमग्निमित्यारभ्य शमयितोरित्यन्ता श्रुतिः । अस्याः श्रुतेरयमर्थः—पूर्वं पश्चिमदिगवस्थिते गार्हपत्ये स्थितोऽग्निः शालामुखीये पुरातनाहवनीये प्रथमं नीतोऽन-न्तरं ततोऽपि प्राङ्मुखो हृतस्तदिदमुच्यते प्राञ्चमग्निं प्रहरन्तीति । पश्चिमदिगवस्थितायां पत्नीशालायामवस्थितां पत्नीमपि शालामुखीयं पुरातनाहवनीयं प्रत्युदानयन्ति । प्रतीचीनगार्हपत्यसमीपास्थितानि शकटान्यपि प्राग्देशेऽनुक्रमेण प्रवर्तितानि । यदैत-त्सर्वं संपद्यते तदानीमेवास्य पुरातनगार्हपत्यस्य धिष्णियः स्थानविशेषो हीयते शून्यो भवति । स चाग्निः पूनर्मनसि चिन्तयति यजमानस्य हानिं संपादयामीति । चिन्तय-मानश्चासौ रुद्रः क्रूरो भूत्वा यजमानस्य प्रजां पशूञ्शमयितोर्विनाशयितुं समर्थो भवति । यर्हि पशुमाप्रीतमित्यारभ्य सात्मत्वायेत्यन्तया श्रुत्या भागित्वोपपत्तिः क्रियते । यर्हि यस्मिन्काल आप्रीसंज्ञकाभिः प्रयाजयाज्याभिराप्रीतं तोषितं पशुमुदञ्च-मुदङ्मुखं नयन्ति तर्हि तस्मिन्काले तस्य प्रतीचीनगार्हपत्यस्य संबन्धिनं पशुश्रपणका-रिणमग्निं हरेत् । तेनैव हरणेनैनं प्रतीचीनगार्हपत्याग्निं भागिनं भागयुक्तं करोति । ततः प्रजाद्यविनाश इति द्रष्टव्यम् । नन्वाहवनीयादेव पशुश्रपणमग्निं कुतो न हरेयु-रित्याशङ्क्य तत्र दोषं दर्शयति यजमानो वा आहवनीय इत्यादिश्रुतिः । आहवनी-यादग्निं विकृष्य हरणे यजमानस्यायं विकर्षः स्यात् । आहवनीयस्य प्रधानत्वेन यजमानरूपत्वात् । तस्मात्स एव प्राजहित एव वा श्रपणार्थः स्यान्निर्मन्थनेन लौकिकेन कंचिदग्निं निष्पाद्य तेन वा श्रपणं कुर्यात् । एवं सति यजमानो विकर्षरहितः संपूर्णस्वरूपो भवतीति । तर्हि तस्य पशुश्रपणं हरेदित्यत्रत्यतच्छब्देन स वैव स्यादित्यत्रत्यतच्छब्देन च प्राजहितः परामृश्यते । एतदपि प्राञ्चमग्निं प्रहरन्तीत्यादिश्रुतिपर्यालोचनयैव प्रत्ये-

तव्यम् । तथा च बौधायनः स वै स्यादिति पुराणगार्हपत्यमभ्युपदिशन्तीति । समानोऽयं विधिः सवनीयेऽपि । एतस्याप्यङ्गभूतत्वेन दैक्षपशुतुल्यत्वात् । निरूढपशौ त्वाहृत्यवचनादाहवनीयादेवाऽऽहर्तव्यः । अत्र वाधूल आह—समानमावपाहोमाद्यार्हि पशुमाप्रीतमुदञ्चं नयन्तीत्युक्त९ हुतायां वपायां मार्जयित्वा सुब्रह्मण्य पितापुत्रीया९ सुब्रह्मण्यामाह्वयेति संप्रेष्यतीति । आपस्तम्बीयप्रायश्चित्तसूत्रेऽपि यर्हि पशुमाप्रीतमुदञ्चं नयन्तीत्युक्तमिति । यर्हि पशुमित्यारभ्य ये पशुं विमथ्नीरन्नित्यन्तं प्राग्यदुक्तं ब्राह्मणे तत्सूत्रेऽनुसंधातव्यमित्यर्थः । पर्यग्निकरणं त्वौत्तरवेदिकोल्मुकेनैव । अत्र विशेषः—आग्नीध्रः पर्यग्निकरणानन्तरमुत्तरं वेद्यन्तमनु पूर्वया द्वारा प्राग्वंशं प्रविश्य पुराणगार्हपत्यादग्निमादाय पूर्वया द्वारा निर्हृत्योत्तरेणाऽऽग्नीध्रीयं पशुसमीपं नीत्वा पशोः पुरतो हरति । शामित्रदेशं प्रति पशौ गते तत्र पशोरुत्तरतो निदधाति । वपया सहैकदेशमग्निं प्रत्याहृत्यैतेनैव मार्गेण पुराणगार्हपत्य एव क्षिपेत् । केचित्तु दक्षिणं वेद्यन्तमनु गत्वा दक्षिणया द्वारा प्राग्वंशं प्रविश्य पुराणगार्हपत्यादग्निमादाय प्रदक्षिणमावृत्य दक्षिणया द्वारा निर्हृत्य दक्षिणेन मार्जालीयं ब्रह्मयजमानावन्तरेण नीत्वाऽन्तरा यूपमाहवनीयं च पशुसमीपं हृत्वा पशोः पुरतो हरति । शामित्रदेशं प्रति पशौ गते तत्र पशोरुत्तरतो निदधाति । वपया सहैकदेशमग्निं प्रत्याहृत्यैतेनैव मार्गेण पुराणगार्हपत्य एव क्षिपेदित्याहुः । तदयुक्तं प्रादक्षिण्यविरोधात् । उत्तरतउपचारो विहार इतिपरिभाषाविरोधाच्च । निर्मन्थ्यपक्षे प्रमुच्य पशुमित्येतस्मात्प्राक्तूष्णीमाहवनीयसमीपे निर्मथ्य तं पुष्टं कृत्वा केनचित्पात्रेण पशोरग्रतो हृत्वा शामित्रदेशे पशोरुत्तरतो निदधाति । वपया सह तदेकदेशमग्रतो हृत्वा शुद्धदेशे विहाराद्बहिरेव त्यजेत् । अस्मिन्मन्थने लौकिके एवारण्यौ । पितापुत्रीयेत्यत्र पितृशब्देन पितरश्च मातरश्चेत्येकशेषेण मातरोऽपि संगृह्यन्ते । तत्रापि पितृवर्गो मातृवर्गश्च पितृमातृशब्दाभ्यां ग्राह्यः । पुत्रशब्देन पुत्राश्च पुत्र्यश्च पुत्रा इत्येकशेषेण पुत्रीणामपि ग्रहणम् । इदं च पौत्रप्रपौत्रयोरुपलक्षणम् । पितरः पुत्राश्च यस्यां कीर्त्यन्ते सा पितापुत्रीया, एतादृशी सुब्रह्मण्या भवतीत्यर्थः । स्रस्नीष्व मेखलां प्रमुष्टी सारय यजमान इति त्वाचक्षतां नामग्राहं ते पितृभिः पितामहैः प्रपितामहैः पुत्रैः पौत्रैः सुब्रह्मण्यः सुब्रह्मण्यामाह्वयत्विति प्रैष एव बौधायनेन स्पष्टं सर्वमिदमुक्तम् । स्रस्नीष्व शिथिलां कुर्वित्यर्थः । सुब्रह्मण्यस्य परिज्ञानाय प्रैषोत्तरं पितापुत्रीयैषेति वक्तव्यमेव । आपस्तम्बवाधूलाभ्यां तु सुब्रह्मण्य पितापुत्रीया९ सुब्रह्मण्यामाह्वयेति प्रैष एव तथा पठितः । पितापुत्रीयसुब्रह्मण्याह्वानप्रकारो लाट्यायनद्राह्यायणसूत्रयोर्द्रष्टव्यः । नामग्रहणप्रयोजनं निदानसूत्रे द्रष्टव्यम् । मात्रादीनां स्त्रीणां नामग्रहणं नेत्यपि निदानसूत्रे । अस्मिन्पक्षे पितापुत्रीयेत्यत्र नैकशेषः । पतितप्रव्रजितानां न नामग्रहणम् ।

अपराह्णे वसतीवरीर्गृह्णाति वहन्तीनाम् ।

त्रेधा विभक्तस्याह्नस्तृतीयो भागः पञ्चधा विभक्तस्याह्नश्चतुर्थो भागो वाऽत्रापराह्णस्तस्मिन्वसतीवरीर्वसतीवरीसंज्ञका अपो गृह्णाति । तत्र विशेषमाह—वहन्तीनामिति । अनेन स्थावरादयो व्यावर्त्यन्ते । न स्थावराणां गृह्णीयादिति श्रुतावपि निषेधः । सर्वथा वहन्तीनामलाभे स्थावराणामपि ग्रहणम् । न स्थावराणां प्रतीपं तिष्ठन्गृह्णातीति बौधायनेन विशेषप्रदर्शनेन वहन्त्यलाभे स्थावराणामपि ग्रहणस्याभ्यनुज्ञानात् । सोमोपसर्जनमेतासां प्रयोजनम् । वक्ष्यति च सूत्रकारः—वसतीवरीभिरुपसृज्येति । वसतीवरीभिरुपसृज्येत्यत्रैतासामपां संप्रत्ययार्थं वसतीवरीरिति विशेषणम् । वसतीवरीनिर्वचनं तु श्रुतौ देवा वै यज्ञमाग्नीध्रे व्यभजन्त ततो यदत्यशिष्यत तदब्रुवन्वसतु नु न इदमिति तद्वसतीवरीणां वसतीवरित्वमिति । पुरा कदाचिद्देवा आग्नीध्रमण्डपे स्थित्वा यज्ञं यज्ञसाधनीभूताञ्शालादीन्पदार्थानिममेत्येतं व्यभजन्त ततः सर्वैः स्वस्वभागेषु यदवशिष्टं तदुद्दिश्य परस्परमब्रुवन्निदमवशिष्टमिदानीं साधारण्येनास्माकमेव तिष्ठतु प्रातर्विभागं करिष्यामः । यस्माद्वसत्विति देवैरुक्तं तस्मात्तस्य योगाद्वसतीवरीरिति नाम संपन्नं तद्वत्य आपो वसतीवर्य इति । विभक्ताद्यज्ञादत्यशिष्यत यदब्रूपं द्रव्यं तद्देवैः प्रार्थितं नोऽस्मदर्थमिदमब्रूपं द्रव्यम् । नुरवधारणे, अस्मदर्थमेव । अग्नीषोमीयवपायागोत्तरशालामुखीयसमीप एव वसतु इति प्रार्थितत्वाद्वसतीवरित्वमपाम् । एतादृशीरपो गृह्णातीत्यर्थः । वहन्तीनामिति षष्ठी पञ्चम्यर्थे । अवयवषष्ठी वा । अत्र विशेषमाहाऽऽपस्तम्बः—आहूतायां वसतीवरीः कुम्भेन गिरिभिदां वहन्तीनां प्रत्यङ्तिष्ठन्गृह्णातीति । गिरिभिदां वहन्तीनामित्यपां विशेषणद्वयम् । या गिरिं भित्त्वा निर्गता वहन्ति नद्यस्तासामपो गृह्णातीत्यर्थः ।

नान्तमा वहन्तीरतीयात् ।

अन्तमा समीपगता वहन्तीरपो नातीयान्नातिक्रामेत् । अन्तमा एव वहन्तीर्गुणरहिता अप्यपस्त्यक्त्वा दूरस्था वहन्तीर्गुणविशिष्टा अप्यपो न स्वीकार्या इति । समुद्रतीरस्थैः समुद्रस्याऽऽपो न ग्राह्याः क्षारत्वात् । श्रुतावपि निषेधः—तस्मात्समुद्रस्य न पिबन्ति प्रजननमिव हि मन्यन्त इति ।

संधावातपस्य च्छायायाः ।

छायाऽत्र मानुषप्रयत्नाजन्या । सा चाभ्रकृता । आतप उष्णम् । अभ्रच्छायोष्णयोः संधौ गृह्णातीत्यर्थः । श्रुतिरपि—छायायै चाऽऽतपतश्च संधौ गृह्णातीति । छायाया इति चतुर्थी षष्ठ्यर्थे । आतपन्नि(दि)ति ना (ता)न्तस्याऽऽतपवाचकस्य शब्दस्याऽऽतपत इति षष्ठ्येकवचनम् । संधेरुभयपदार्थाधीनत्वाच्चकाराभावेऽपि अर्थात्समुच्चयः सिध्यत्येव ।

कूलस्य वृक्षस्य स्वयं वा छायां कृत्वा ।

अभ्रच्छायाया अभावे कूलस्य तृणादिगुल्मस्य वृक्षस्य वा यस्य कस्यचिद्यज्ञि-

यस्य स्वयं वस्त्रच्छत्राद्यन्यतमेन पदार्थेनोपायान्तराभावे शरीरस्य वा छायां कृत्वैताह-श्याश्छायाया आतपस्य च संधौ गृह्णातीत्यर्थः। संधावातपस्य च्छायाया इति सूत्रा-त्संधावातपस्येत्यनुवर्तते। सर्वं चैतदापस्तम्बोऽप्याह—यद्यभ्रच्छायां न विन्देदात्मनो वृक्षस्य कूलस्य वा छायायामिति।

ग्रहणप्रकारमाह—

हविष्मतीरिमा आप इति प्रतीपं तिष्ठ-
न्कुम्भं कुम्भीं वाऽभिपूरयति ।

अपां प्रतीपम्। अव्ययीभावसमासोऽयम्। अव्ययीभावत्वान्नपुंसकत्वम्। अबभि-मुखमित्यर्थः। अत्राबभिमुखत्वं नाम प्रवाहाभिमुखत्वम्। प्रतीपमिति तिष्ठन्नित्यत्रैवा-न्वेति। कुम्भस्य कुम्भ्या वाऽबभिमुखताऽभिशब्दादेव लभ्यते। अबभिमुखस्तिष्ठन्कुम्भं कुम्भीं चाऽबभिमुखतया भूत्वा पूरयतीत्यर्थः। प्रतीपमित्यत्र ऋक्पूरब्धूः पथामानक्षे इति सूत्रे अन्तर्गतं—ऋगन्तरुपसर्गेभ्योऽप ईदि-त्यनेन कृतसमासान्ताप्शब्दाकारस्य दीर्घकारादेशः। अस्तनः कुम्भः सस्तना कुम्भी बौधायनसूत्रात्। तत्र स्तनद्वयं चतुष्टयं वा कुम्भ्याः। कुम्भे कुम्भ्यां वाऽपि दृढत्वं योग्यतयैव सिध्यति। स्पष्टमेवेदमाह बौधायनः—अथ यो वीडितः कुम्भस्तं याचतीति। वीडितशब्दार्थः कर्मान्ते—दृढ इत्येवेदमुक्तं भवतीति।

यद्यगृहीताः सूर्योऽभिनिम्रोचेद्यो ब्राह्मणो
बहुयाजी तस्य गृहात्कुम्भ्यानां गृह्णीयात्।

यदीत्यनेन नैमित्तिकत्वम्। अगृहीता वसतीवर्यः सत्यश्चेत्सूर्योऽभिनिम्रोचति अस्त-मेति तदा यो ब्राह्मणो बहुयाजी तस्य गृहाद्गृह एव कुम्भे भवाः कुम्भ्यास्तासामपां गृह्णीयात्। भवनमत्र सत्ता। बहुयाजिशब्देन सोमयाज्युच्यते। स हि गृहीतवसती-वरीक इति लिङ्गात्। सोमयाजी बहुयाजी भवतीति विज्ञायत इत्यापस्तम्बसूत्रात्, यो ब्राह्मणो बहुयाजीति सोमयाजिनं ब्रूत इति भारद्वाजसूत्राच्च। नतु बहुयाजनकर्ता। तस्य निषिद्धत्वात्। गृहादिति पञ्चमी सप्तम्यर्थे। गृह इत्यनेन तत आहृत्य वह-न्तीनां समीपे गत्वा तत्र ग्रहणमित्येतादृशोऽर्थो व्यावर्त्यते। कुम्भ्यानामिति पञ्चम्यर्थे षष्ठी।

यदि तं न विन्देयुरग्निꣳ हिरण्यं चाऽऽदाय
परेयाद्यत्राऽऽपः स्युस्तज्ज्योतिरुपरिष्टाद्धा-
रयन्हिरण्यमन्तर्धाय वरे दत्ते गृह्णाति।

तं बहुयाजिनम्। यदीत्यनेनाग्निं हिरण्यं चाऽऽदायेत्यारभ्य वरे दत्ते गृह्णातीत्य-न्तस्य विधेर्नैमित्तिकत्वं प्रदर्श्यते। न विन्देयुर्न लभेयुः। यथा वसतीवरीग्रहणकाले यदि सूर्योऽभिनिम्रोचति तदा बहुयाजिनो गृह एव कुम्भ्यानां ग्रहणं कर्तव्यमित्यनेन बहु-

न्तीनां व्यावृत्तिः कृता तद्वद्यदि तं न विन्देयुरित्यस्मिन्कल्पेऽप्येतत्सूचयितुमेव यत्राऽऽपः स्युरिति सामान्यनिर्देशः कृत इति। अथ वाऽवहन्त्यो वहन्त्यो वा यत्र संनिहिता आपः स्युस्तत्र गत्वा ग्रहणं कर्तव्यं न तु वहन्तीनामर्थे दूरं गन्तव्यमिति सूचयितुम्। वसतीवरीग्रहणकाले सूर्याभिनिम्रोचने वहन्तीनां परित्यागं कृत्वा बहुयाजिगृहाधिकरणककुम्भ्या ग्रहणविधिबलाद्दृष्टार्थताऽपि ज्ञायते रात्रौ भयशङ्कायाः सत्त्वात्तदर्थं संनिधान एव ग्रहणमिति। एतेनेदमपि ज्ञायते वहन्तीनां ग्रहणार्थमर्धमार्गे गतस्तत्र केनचित्प्रतिबन्धेन विलम्बो जातो दिवसस्त्वस्तात्पूर्वं ग्रहणं कर्तुमपर्याप्तस्तदा झटिति ग्राममागत्य साङ्गाग्निहोत्रहोमपर्याप्तं कालं तत्र स्थित्वाऽग्निं हिरण्यं चाऽऽदाय वहन्त्यो वाऽवहन्त्यो वा यत्राऽऽपः संनिहिताः स्युस्तं देशं प्रति अग्निहिरण्यादानं यत्र कृतं ततः परावृत्य गच्छेदिति। यदि तु अग्निहिरण्ये गृहीत्वैव गच्छेच्चेत्तदा तस्माद्देशादेव परावृत्य यत्राऽऽपः स्युस्तं देशं प्रति गच्छेदिति। एतदभिप्रायेणैव परेयादिति परेत्युपसर्गः परावर्तनार्थक उपात्तः सूत्रकृता। तज्ज्योतिरुपरिष्टाद्धारयन्। तदित्यस्य तत्रेत्यर्थः। सुपां सुलुगित्यनेन सप्तम्या लुक्। ज्योतिःशब्दग्रहणादत्र कंचन विशेषं सूचयति यथा स्वच्छमनवच्छिन्नं द्रष्टुं शक्यते तथा प्रकाशः कर्तव्य इति। तथा चेदमवगतं भवति आनीतो यो लौकिकोऽग्निस्तस्मिन्नुल्कां प्रज्वलयित्वा(त्य) तत्प्रकाशे वसतीवरीग्रहणं कर्तव्यमिति। उपरिष्टाद्धारयन्, उपरिष्टात्कुम्भस्य कुम्भ्या वा धारयन्। यथा वसतीवरीग्रहणानुकूलं भवति तथेत्यर्थः। उल्कामुपरिष्टाद्धारयमाणो गृह्णीयादित्यापस्तम्बः। धारयन्नित्यनेन शत्रा समानकालता बोध्यते। सामानाधिकरण्यादेव समानकर्तृकता। हिरण्यं कुम्भे कुम्भ्यां वाऽन्तर्धायावधायेत्यर्थः। हिरण्यं वाऽवधायेत्येवाऽऽपस्तम्बः। श्रुतावपि ज्योतिष्या वा गृह्णीयाद्धिरण्यं वाऽवधाय सशुक्राणामेव गृह्णातीति विकल्प उक्तः। शुक्रं तेजः। सूत्रकारमते तु ज्योतिर्हिरण्ययोः समुच्चय एव। वाकारः समुच्चयार्थक इत्याशयः। अत्र श्रुतिः शाखान्तर उन्नेया। वरे दत्ते यजमानेन वरे स्वस्मै दत्तेऽध्वर्युर्गृह्णातीत्यर्थः। एतदन्तं नैमित्तिकम्।

अग्नेर्वोऽपन्नगृहस्य सदसि सादया-
मीत्यपरेण शालामुखीयमुपसादयति।

स्पष्टोऽर्थः। घत्तेत्यन्तो मन्त्रः। एतदन्तो वसतीवरीग्रहणविधिः। तत्र त्रेधाविभक्तदिवसद्वितीयभागांशे वपायागोत्तरं बह्ववकाशश्चेत्तदा प्रकारद्वयम्। तत्र वपायागोत्तरं पशुपुरोडाशतन्त्रमारभ्य तृतीये भागे प्राप्ते कृतान्ताद्विरम्य वसतीवरीर्गृहीत्वा कृतान्तात्कर्म प्रतिपद्यत इत्येकः। वपायागोत्तरं तृतीयभागप्रतीक्षार्थं विरम्य तस्मिन्प्राप्ते वसतीवरीर्गृहीत्वैव पशुपुरोडाशतन्त्रमारभत इत्यपरः। यदि तु वपायाग एव विलम्बवशात्तृतीयभागे(गो) गतस्तदा वपायागोत्तरमादौ वसतीवरीरेव गृहीत्वा पशुपुरोडाशतन्त्रा-

रम्भः कार्यः। आपस्तम्बेन स्पष्टं वसतीवरीग्रहणोत्तरमेव पशुपुरोडाशतन्त्रारम्भ उक्तः। एवं पञ्चधाविभागपक्षेऽपि ज्ञेयम्। पशुपुरोडाशार्थहविर्निर्वापस्तु प्रकृतशालायामनोन्तर एव न तु हविर्धानाख्ययोः शकटयोः प्रवर्तने कृते निर्वापः प्रसङ्गात्तत्रैव कार्यः । अपरेण गार्हपत्यं निर्वपतीति प्राकृतदेशस्य हविर्धानाभ्यामसिद्धेः। अनसोऽधिनिर्वपतीति विधिस्तु अनोन्तर उपात्तेऽपि सिध्यति। नच मन्त्रवन्महावेद्यामवस्थापितयोर्हविर्धानयोः पत्नीशालायां नयनमस्त्विवति वाच्यम्। अनोन्तरोपादाने बाधकाभावात्तेनैव निर्वाहे मन्त्रवन्महावेद्यां स्थापितयोर्नयनस्यायोगादिति द्रष्टव्यम्। तथा च द्वादशाध्याये प्रथमे पादे जैमिनिः— हविर्धाने निर्वपणार्थे साधयेतां प्रयुक्तत्वात्, असिद्धिर्वाऽन्यदेशत्वात्। प्रधानवैगुण्याद्वैगुण्ये प्रसङ्गः स्यात्, अनसां च दर्शनादिति त्रिभिः सूत्रैराह। हविः सोमरसात्मकं धीयते स्थाप्यते ययोस्ते शकटे हविर्धाने ते एव निर्वपणार्थं निर्वपणरूपं कार्यं साधयेतां संपादयेतां तयोः सोमकर्मार्थं प्रयुक्तत्वात्प्रयुक्तपरित्यागे कारणाभावादिति। नच निर्वपणकार्यस्यानसोऽधिनिर्वपतीति श्रुत्याऽनो(नउ)पादानकत्वाद्धविर्धानयोर्निर्वापेऽनो(नउ)पादानकत्वाभावान्निर्वपणकार्यस्य विगुणत्वापत्तिरिति वाच्यम्। हविर्धानयोरप्यनोरूपत्वेनानस्त्वस्य तयोरपि सत्त्वेनानस्त्वाकारेणैवाङ्गत्वाद्धविर्धानयोर्निर्वापेन च निर्वापस्य सिद्ध्याऽनो(नउ)पादानकत्वाभावाभावेन विगुणत्वापत्त्यभावात्। अङ्गे प्रयुक्ते तद्गुणार्थं पुनरङ्गप्रयोगस्यायुक्तत्वाद्वेदिप्रसङ्गस्थले परिमाणहानिवदिह गार्हपत्यपाश्चात्यलक्षणहानिर्न दोष इति भावः। अयं प्रथमसूत्रार्थः । अन्यदेशत्वाद्भिन्नदेशत्वान्निर्वपणकार्यस्य सिद्धिः। हविर्धानमण्डपे हि हविर्धाने प्रकृतिप्राप्तनिर्वापदेशस्तु अपरेण गार्हपत्यं हविर्धाननिर्वपणयोरेकदेशत्वासंभवान्न हविर्धानाभ्यां प्राकृतनिर्वपणकार्यस्यासिद्धिः । अनसोऽधिनिर्वपतीति विधिस्तु अनोन्तर उपात्तेऽपि सिध्यति। नच मन्त्रवन्महावेद्यामवस्थापितयोर्हविर्धानयोः पत्नीशालायां नयनमस्त्विवति वाच्यम् । अनोन्तरोपादाने बाधकाभावात्तेनैव निर्वाहे मन्त्रवन्महावेद्यां स्थापितयोर्नयनायोगात्। इष्टापत्तौ सोमार्थं पूर्वं प्राची प्रेतमध्वरमिति मन्त्रेण कृतं हविर्धानप्रवर्तनमत्र रमेथामिति मन्त्रेण कृतं स्थापनं चानर्थकं स्यात्। पुनः प्रवर्तनस्थापनयोरनुष्ठाने त्वावृत्तिरशास्त्रीया स्यादिति सर्वथा प्रधानभूतः सोमो विगुणः स्यात्। तद्वैगुण्याद्वैगुण्यप्रसङ्गो भवेत्। नहि प्रधानवैगुण्याद्वैगुण्यं कुत्रापि दृष्टम्। अतो नयनं नैव युक्तम्। वैगुण्यप्रसङ्ग इत्यत्र प्रसङ्गशब्देनाऽऽपत्तिरुच्यते।

**अस्तमिते संवादप्रभृतिना पशुतन्त्रेण प्रतिपद्यते ।**

अस्तमदर्शनमिते गते सूर्ये सतीत्यर्थः। अनेन तत्पूर्वकालो व्यावर्त्यते। अस्तमितात्पूर्वं संवादप्रभृति नैव भवति किंतूत्तरमेवेति। तेन पशुपुरोडाशयागोत्तरं दिनावशेषे विराम एव कर्तव्यः। अस्तोत्तरं पशुपुरोडाशयागविलम्बवशात्पतितेऽपि न दोष इति

पतिद्धं भवति। शृतꣳहवी३ः शमितरित्ययं संवादस्तत्प्रभृतिना तदादिना पशुतन्त्रेण पशुसंबन्धिकर्मकलापेन प्रतिपद्यते संवादप्रभृति पशुतन्त्रमारभ्यत इत्यर्थः। जुह्वां पञ्चगृहीतं गृहीत्वा पृषदाज्यस्रुवं चाऽऽदायेति संवादसंबन्धेनेति, पशुसूत्रे स्वया तत्संबन्धित्वस्य बोधितत्वात्तदादानस्योत्तरत्रोपयोगाच्च।

**तस्य दक्षिणेन हविर्धानमुत्तरेण वा समवत्तं परिहरति।**

तस्य पशोः। पाशुकेडावदानसमूहः समवत्तशब्देनोच्यते। इदं च समवत्तधानीति पाशुकेडापात्रे सूत्रकृत(तो) व्यवहाराज्ज्ञेयम्।

**न यजमानो भक्षान्भक्षयति भक्षणमेके समामनन्ति।**

भक्ष्यन्ते ते भक्षाः। भक्षशब्देनैडा हृदयादयोऽवत्ताः पदार्था उच्यन्ते। भक्षाणामिति शेषः। तस्मात्तस्य नाऽऽश्ये तस्मादृाऽऽश्यमित्युभयश्रुतेरिति भावः। इडाभक्षणादीनां सौमिकैर्न प्रसङ्गसिद्धिः। भक्षयित्वाऽऽज्येडां विरमन्तीतिदर्शनात्, भक्षणमेके समामनन्तीति सूत्राच्च। तथा चाध्वर्य्वादिभिरिडाभक्षणं कर्तव्यमेव। जैमिनिरपि द्वादशाध्याये प्रथमे पाद एवमेवाऽऽह—शेषभक्षास्तथेति चेन्नान्यार्थत्वादिति। ऋत्विग्भक्षाः शेषप्रतिपत्त्यर्था नत्वानत्यर्थाः। अतो न प्रधानदक्षिणयैव तेषां निवृत्तिरिति शेषभक्षास्तथेति चेदित्यनेन सूत्रेण प्रतिपाद्यते।

**पत्नीसंयाजान्तः ॥ २४ ॥ अग्नीषोमीयः संतिष्ठते।**

पत्नीसंयाजैरन्तः समाप्तिर्यस्य स पत्नीसंयाजान्तः। पत्नीसंयाजान्तो भवतीत्येतावतैव कर्मसंस्थायां सिद्धायां संतिष्ठत इति पुनः संस्थाबोधकवचनं पत्नीसंयाजान्तैरप्रतिपत्तिकर्मभिरपि संस्थापनीय इत्येतदर्थम्। तेन समवत्तमेव प्रतिपत्तिकर्माणि वेदप्रतिपत्तिः परमत्र न भवति। तस्य सुत्यासमाप्त्यन्तं धारणस्योक्तत्वात्। प्रकरणादेवाग्नीषोमीयलाभे पुनर्वचनमग्नीषोमीय एव प्रतिपत्तिकर्माण्यावश्यकानि न पत्नीसंयाजान्तेषु द्वादशाहसंबन्धिसुत्यादिवसेषु प्रतिपत्तिकर्माणि आवश्यकानीति प्रदर्शयितुम्। अग्नीषोमा यो अद्य वां यो अग्नीषोमा हविषा सपर्यादिति याजुषहौत्रसत्त्वे वपाया याज्यानुवाक्ये। अग्नीषोमा य आहुतिमग्नीषोमा चेति तद्वीर्यं वामिति पशुपुरोडाशस्य याज्यानुवाक्ये। अग्नीषोमाविमꣳ सुमेऽग्नीषोमा हविषः प्रस्थितस्य वीतमित्यङ्गानां याज्यानुवाक्ये। ऐन्द्राग्नपशोस्तु शुचिं नु स्तोमं नवजातमद्य श्नथद्वृत्रमुत सनोति वाजमिति वपाया याज्यानुवाक्ये। उभा वामिन्द्राग्नी प्रचर्षणिभ्य इति पशुपुरोडाशस्य। आवृत्रहणा गीर्भिर्विप्र इत्यङ्गानाम्। अथाऽऽश्विनपशोः—आ वाꣳ रथो रोदसी स पप्रथानेऽभिपद्मभूमेति वपाया याज्यानुवाक्ये। स्वश्वायशसा युवोः श्रियं परियोषेति पशुपुरोडाशस्य। योहस्यवाꣳ रथिरायुवं भुज्युमवविद्धमित्यङ्गानाम्। पशुहौत्रं सर्वं याजुषम्। पशुद्वयसत्त्वे द्विवचनान्त ऊहः। पशुत्रयसत्त्वे बहुवचनान्तः।

निशायां वसतीवरीः परिहरति सर्वतो न पुरस्तात् ।

निशेरते प्राणिनो यस्मिन्काले स कालो निशाशब्देनोच्यते । रात्रेः पूर्वार्धं निशाशब्देन ग्राह्यमिति केचित् । द्वितीययाम एव निशेत्यन्ये । तृतीययामोऽपीत्यपरे । पूर्वमते प्रथमयामेऽपि वसतीवरीपरिहरणं भवति । द्वितीये तृतीये च मते तु न प्रथमे याम इति भेदः । अग्नीषोमीयदिवससंबन्धिन्येव निशा ज्ञेया सांनिध्यात् । अथैतस्या रात्रेर्विवासकाल इत्याश्वलायनेन संवादप्रभृतिपाशुकतन्त्रस्य बोधनप्रभृतिसोमतन्त्रैकदेशस्य चाधिकरणीभूताया रात्रेरेकत्वं प्रदर्शयितुमेवैतस्या इति विशेषणदानाच्च । परि परितो वेदिं हरति । प्रकृते परिहरणशब्दस्य विवक्षितमर्थमाह—सर्वतो न पुरस्तादिति । परिहरति सर्वत इतीयं श्रुतिरेवानूद्यत इति वा । सर्वत इत्यनेन पुरस्तादपि परिहरणे प्राप्ते रक्षोपहननरूपपरिधिपरिधानकार्यं पुरस्ताद्भाग आदित्यो यथा संपादयति तद्वदत्रापि सर्वतः परिहरति रक्षसामपहत्या इति श्रुतावुक्तं रक्षोपहननरूपवसतीवरीपरिहरणकार्यं पुरस्ताद्भाग आदित्यः संपादयिष्यत्येवेति भावः । नन्वादित्यो ह्येवोद्यन्पुरस्ताद्रक्षाᳬस्यपहन्तीत्यनेन परिधान उद्यत एवाऽऽदित्यस्य रक्षोपहननकर्तृत्वेन वसतीवरीपरिहरणस्य रात्रिसाध्यत्वेनाऽऽदित्यस्योदयासंभवेन रक्षोपहननकर्तृत्वासंभवादसंगतमिदमिति चेन्न । उद्यन्नित्यस्योदयं यास्यन्नित्येतादृशार्थाङ्गीकारस्याग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्ये रक्षाᳬसि सचेरन्नित्यस्या इष्टेर्निशितायां निर्वपेदित्यनेन रात्रौ कर्तव्यायाः परिधिपरिधानविषये साकᳬ रश्मिभिः प्रचरन्तीत्येकेषामित्यस्मिन्पक्ष आनीकवतीकैडिनीष्टिसंबन्धिनोऽर्धाद्रात्रौ पतितस्य परिधानस्य विषये चाऽऽवश्यकत्वेनात्रापि तद्रीत्या रक्षोपहननकर्तृत्वसंभवेनासंगतेरभावात् । इयं सामान्यप्रतिज्ञा । अथवा सर्वतो न पुरस्तादित्यस्यांशस्योत्तरत्रैवान्वयः । तथा च सर्वतो न पुरस्तादुत्क्रामतेत्येतावान्प्रैष एव । तदर्थस्तु सर्वतः सर्वेभ्यो दिक्प्रान्तेभ्य उत्क्रामत पुरस्तात्प्रदेशात्तु नोत्क्रामत तत्र परिहरणाभावादिति । सामर्थ्याददीक्षितान्प्रतीदं वचनम् । उक्त्वा वसतीवरीः परिहरतीत्यन्वयः ।

उत्क्रामतेत्युक्त्वाऽन्तर्वेदि यजमानः पत्नी च भवतः ।

पत्नीत्यत्रैकत्वमविवक्षितमुद्देश्यगतत्वात् । तेन पत्न्यनेकत्वे सर्वा अप्यन्तर्वेदि भवेयुः । सत्र ऋत्विजामपि दीक्षितत्वादन्तर्वेदि भवनम् । अध्वर्योर्वसतीवरीपरिहरणकर्तृत्वात्तस्य नान्तर्वेदि भवनम् । चकारः परस्परसमुच्चयार्थः ।

नादीक्षितमभि परिहरति ।

अदीक्षितानां बहिर्निष्क्रमणे हेतुरयं निषेधः । अदीक्षितमभितः परिहरणं न कर्तव्यमिति तदर्थः ।

परिहरणप्रकारमाह—

> आदाय कुम्भꣳ सव्येऽꣳसेऽत्याधायापरेण प्राज-
> हितमतिक्रम्य दक्षिणया द्वारोपनिर्हृत्य द-
> क्षिणं वेद्यन्तमनु परिहृत्येन्द्राग्नियोर्भागधेयीः
> स्थेति दक्षिणस्यामुत्तरवेदिश्रोण्याꣳ सादयति ।

आदाय कुम्भमित्यत्रान्यस्मादिति शेषः । तेनान्येनाध्वर्यवे कुम्भप्रदानं कर्तव्यमिति सिद्धं भवति । अन्यथा सव्येऽꣳसेऽत्याधायेत्यनेनैवार्थादादानसिद्धेर्वचनं व्यर्थं स्यात् । कुम्भग्रहणं कुम्भ्युपलक्षणम् । सव्य इत्यंसविशेषणं वसतीवरीणामन्तरङ्गत्वसिद्ध्यर्थम् । अंसग्रहणं पार्श्वव्यावृत्त्यर्थम् । अतिरत्रान्तर्धानार्थकः, अंसे किंचिदन्तर्धायाऽऽधानं कर्तव्यमिति । प्राजहितः पुराणगार्हपत्यः प्रकर्षेणाग्निप्रणयनादिकर्मसु जहितस्त्यक्तः स प्राजहित इत्यर्थो वा । अस्मिन्पक्षे योगरूढं पदम् । दीर्घश्छान्दसः । गत्वेति परित्यज्या-तिक्रम्येति वचनाद्गार्हपत्यापरभागमुल्लङ्घ्यैवाग्रे गन्तव्यमिति । दक्षिणया द्वारा दक्षिणेन द्वारेण । उपशब्दो नम्रीभवनरूपमर्थविशेषं द्योतयति । निर्हरणं द्वाराद्बहिर्निःसा-रणम् । दक्षिणं वेदेर्महावेदेरन्तं प्रान्तमनुलक्षीकृत्यैव वसतीवरीः परिहृत्येन्द्राग्नियोर्भाग-धेयीः स्थेति मन्त्रेण दक्षिणस्यामुत्तरवेदिश्रोण्यां सादयति ।

> आदाय कुम्भं दक्षिणेऽꣳसेऽत्याधाय यथेतं
> प्रत्येत्योत्तरपूर्वया द्वारोपनिर्हृत्योत्तरं वेद्यन्त-
> मनु परिहृत्य मित्रावरुणयोर्भागधेयीः स्थेत्यु-
> त्तरस्यामुत्तरवेदिश्रोण्याꣳ सादयति ।

दक्षिणेऽꣳस इत्यत्र दक्षिणवचनं वसतीवरीणामन्तरङ्गतासिद्ध्यर्थम् । अंसग्रहणे पार्श्व-व्यावृत्त्यर्थम् । उत्तरपूर्वया द्वारोपनिर्हृत्येति कामनार्थे विहितस्यैतस्य तत्र एव नान्य-था । तदभाव उत्तरपूर्वयोत्तरया वा द्वारोपनिर्हरणम् ।

> आदाय कुम्भꣳ सव्येऽꣳसेऽत्याधाय तीर्थेन प्रपाद्य
> विश्वेषां देवानांभागधेयीः स्थेत्याग्नीध्रे सादयति ।

तीर्थशब्दो वेद्युत्करयोरन्तरा प्रदेशे चात्वालोत्करयोरन्तरा प्रदेशे च वर्तते । अन्तरा वेद्युत्करावन्तरेण चात्वालोत्करौ वा तीर्थमिति सूत्रान्तरात् । अचा-त्वाले कर्मणि पूर्वतीर्थं सचात्वाल उत्तरम् । आग्नीध्र आग्नीध्रधिष्ण्यसमीपे । जागृतेति मन्त्रान्तः । आदाय कुम्भं सव्येंऽसेऽत्याधाय तीर्थेन प्रपद्येत्येतावतैव सव्येंऽसेऽत्याहि-तत्वाद्द्रव्यस्य तीर्थेन प्रपादने सिद्धे णिच्प्रयोगोऽन्यत्रापि स्वेनागृहीतस्यापि तीर्थेन प्रपादनं ज्ञापयति । तेन पश्वादीनां तीर्थेन प्रपादनं सिद्धं भवति । इदमपि अत्र वचनाज्ज्ञातं भवति केनचित्पदार्थेन स्वस्यासाहित्ये तीर्थेन प्रपदनं नानियतमिति ।

नन्वन्तरा यज्ञाङ्गानि बाह्याः कर्तार इत्यनया परिभाषयैवान्तरङ्गत्वे सिद्धे पुनरन्तर-ङ्गत्वसिद्ध्यर्थं सव्यदक्षिणग्रहणं तत्र तत्र यत्कृतं तद्व्यर्थमिति चेत्सत्यम् । कर्तृगृही-तस्य यज्ञाङ्गस्यान्तरङ्गत्वमत्रैव नान्यत्रेतिज्ञापनार्थत्वात् । अत्रैवोच्यमाने तद्व्यतिरिक्ते-ऽस्मिन्नेव स्थलान्तरे नियमाभावापत्तिरतस्तत्र तत्र सव्यदक्षिणवचनम् ।

अत्र वसन्ति ।

अत्राऽऽग्नीध्र एव वसन्ति नान्यत्र । वसन्तीत्यत्रान्तर्भावितो णिच् । तेन वासयन्ती-त्यर्थो भवति । अध्वर्युरित्येक शेषः । बहुवचनस्य पूजार्थत्वात् । अथवाऽध्वर्युचतुष्टयेन वासनीया वसतीवर्य इति शेषः । आग्नीध्र उपवासयत्येतद्वै यज्ञस्यापराजितं यदाग्नीध्रं यदेव यज्ञस्यापराजितं तदेवैना उपवासयतीति श्रुतेः । एमा वसतीवर्यः ।

सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति संप्रेष्यति
पितापुत्रीया सुब्रह्मण्या भवति ।

पूर्ववद्व्याख्येयम् ।

या यजमानस्य व्रतधुक्तामाशिरे दुहत या पत्न्यास्तां दधि-ग्रहाय या घर्मधुक्तां दधिघर्माय तत्समनातङ्क्यं पयो मैत्रा-वरुणाय शृतातङ्क्यं दध्यादित्यग्रहाय कुरुतादिति संप्रेष्यति।

या यजमानस्य व्रतदोग्ध्री गौस्तामाशिर आशिरनिमित्तं दुहत, मथितं दध्याशिरं, या पत्न्या व्रतदोग्ध्री गौस्तां दधिग्रहाय दधिग्रहार्थं दुहत, दध्ना ग्राह्यो ग्रहो दधि-ग्रहः । अनेनार्थाद्दधिरूपं द्रव्यमत्र ज्ञायते । या घर्मधुक्, घर्मः प्रवर्ग्यस्तत्संबन्धिद्रव्य-दोग्ध्री गौस्तां दधिघर्माय दुहत । दध्ना साध्यो घर्मो घर्मनामककर्मविशेषो दधिघर्म-स्तदर्थमित्यर्थः । अत्रापि अनन्तरोक्तरीत्या दधिरूपमेव द्रव्यं ज्ञायते । तत्समनातङ्क्य-मनातञ्चयं यस्य तत्तस्य सत आतञ्चनं न, एतादृशं पयो मैत्रावरुणाय मैत्रावरुणग्रहाय । कुरुतेत्यत्राऽऽकृष्यतेऽथवा कुरुतादित्यत्रापकृष्यते । शृतं सदेवाऽऽतञ्चयं बुध्नस्य शीतत्वापेक्षा यत्र न तच्छृतातङ्क्यमित्युच्यते । एतादृशं दधि आदित्यग्रहायाऽऽ-दित्यग्रहार्थं कुरुतादित्यर्थः । कुरुतादिति लोटः प्रथमपुरुषैकवचनम् । दधिग्रहदधिघ-र्मार्थयोर्द्वयोर्न शृतातङ्क्यरूपता । आज्यग्रहस्य सोमग्रहस्य वा तत्कामनयाऽनुष्ठानं कर्तव्यत्वेनाभिमतं यदा तदा या पत्न्यास्तां दधिग्रहायेति लुप्यते । दधिग्रहाभावेन दोहाभावात् । अप्रवर्ग्ये या घर्मधुक्तां दधिघर्मायेत्येतल्लुप्यते । दधिघर्माभावेन दोहाभा-वात् । मैत्रावरुणग्रहयोर्थं यस्याः कस्याश्चिद्दोर्दोहः । शृतातङ्क्यार्थं यस्याः कस्याश्चित् । आशिरादित्रयार्थदोहकर्ताऽतो मैत्रावरुणग्रहयोर्थदोहकर्ता तु तत्समनातङ्क्यं पयो मैत्रा-वरुणायेत्यत्र दुहतेत्यस्यान्वय इति पक्ष आशिरादित्रयार्थदोहनवत्कर्ताऽत्रापि अनि-यतः । कुरुतादित्यग्रिमस्याप्यन्वय इति पक्षे तु प्रतिप्रस्थातैव । एकवचनात् । एकव-

वनादादित्यग्रहार्थमृतातङ्क्यद्ध्यर्थदोहकर्ताऽपि पूर्ववत्प्रतिप्रस्थातैव । पञ्चानां दोहानाममन्त्रैव करणं प्रैषानुरोधात् । सवनीयामिक्षार्थस्य दोहस्येदानीमेव दोहनम् । सांनाय्यनिष्पत्तेर्दिनद्वयसाध्यत्वात् । सवनीयामिक्षार्थदोहकर्ता प्रतिप्रस्थातैव प्रातर्दोहस्य तत्कर्तृकत्वेन तत्संबन्धिन एतस्यापि तत्कर्तृकताया एव युक्तत्वात् । अनूबन्ध्यास्थानीयामिक्षाकरणमन्यथाऽनुपपत्त्या लौकिकेन दध्नैव । कलौ गवालम्भस्य निषिद्धत्वादामिक्षैव । तत्र पञ्च दोहास्तूष्णीम् । सवनीयामिक्षार्थं समन्त्रको दोहः । पञ्चानां दोहानाममन्त्रमेव शाखाहरणादितन्त्रम् । तममनातङ्क्यमिति वचनात्तापमात्रं कार्यम् । पयस आतञ्चने दधित्वापत्तिः । इष्टापत्तौ तु पयसा मैत्रावरुणं श्रीणातीति पयःकरणकं श्रपणं न सिध्येत् । एवं चार्थादेवाऽऽतञ्चननिवृत्तावनातङ्क्यमिति वचनं शाखाहरणादिदोहधर्मप्राप्तिं ज्ञापयति । स च पयसः प्रदानार्थत्वाभावात्तूष्णीमेव । अत एव क्रयधर्मा न भवन्ति । तथा च नवमाध्याये चतुर्थपादे जैमिनिः—श्रपणानां त्वपूर्वत्वात्प्रदानार्थे विधानं स्यात्, गुणो वा श्रपणार्थत्वादित्यादिसूत्रैरमुमर्थमाह । सोमे पयसा मैत्रावरुणं श्रीणातीति पयसः सोममिश्रणं प्रदानार्थं दृष्टार्थत्वात् । सोमसंस्कारार्थत्वे त्वदृष्टार्थता स्यादिति प्राप्ते द्वितीयाश्रुतिवशाददृष्टकल्पने दोषाभावान्न पयसः प्रदेयत्वमिति । श्रपणानां पयःप्रभृतीनां प्रदानार्थे । सवनीयामिक्षार्थं समन्त्रकमेव शाखाहरणादितन्त्रम् । अथवाऽऽदौ सर्वेषां क्रमेणामन्त्रसमन्त्रभेदेन शाखाहरणम् । क्रमेण तथैवोपवेषकरणं तथैव त्रिवृद्दर्भपवित्रावसर्जनम् । क्रमेण तथैव दोहा इति । शतं मित्रावरुणाभ्या१ शरदो दुहानाः । इह वो मित्रावरुणौ रमयतां गावः प्र णो ब्रूहि मित्रावरुणाभ्या१ हविरिन्द्रियं बहु धुग्धि मित्रावरुणाभ्यां देवेभ्यो हव्यं० सोमेन त्वाऽऽतनच्मि मित्रावरुणाभ्यां दधि, इति सवनीयामिक्षायां विकारः । शाखोपवेषयोराहरणसमय एव परिज्ञानार्थं चिह्नानि कार्याणि । अथवाऽऽदावेव सवनीयामिक्षार्थको दोहः । ततोऽमन्त्रकाः पञ्च दोहाः । एतदनुरोधेनैव शाखाहरणोपवेषकरणादि । सर्वेषु दोहेषु जातेषु समन्त्रकामिक्षायाः प्रातर्दोहाय वत्सापाकरणम् ।

आग्नीध्र ऋत्विजोऽलंकृता वसन्ति ।

अनेन सदसि वासो व्यावर्त्यते । आपस्तम्बेन न सदस्युपवस्तवा इति दोहार्थप्रैष एव निषेध उक्तः । अलंकृता इत्यत्रालंकारो मानुष एव नतु दिव्यापित्र्यौ । ते चोक्ता वैखानसेन—

हेमभूषणसंपन्नः शुभ्रवस्त्रानुलेपनः ।
सुगन्धिकुसुमैर्जुष्टो दिव्योऽलंकार उच्यते ॥
स एव पुष्परहितः साञ्जनो मानुषः स्मृतः ।
एषोऽनुलेपरहितः पित्र्योऽलंकार ईरितः ॥ इति ।

१ ख. ग. °ति । स° ।

प्राग्वंशे पत्नीं जागरयन्ति ।

ऋत्विजस्त्वयैतस्यां रात्रौ जागरणमेव कर्तव्यमिति पत्नीं जागरणे नियोज्य निद्राबाधायां निद्रां कुर्युः । न तु निद्राया अवश्यकर्तव्यता । न च बोधनविधिवशान्निद्राया आवश्यकत्वमन्यथा विधेर्वैयर्थ्यापत्तेरिति वाच्यम् । निद्रासत्त्व एव बोधनविधेश्चारितार्थ्यसंभवेन विधेर्वैयर्थ्याभावात् । जागरयन्तीत्यत्र प्रयोजका ऋत्विजः ।

हविर्धाने यजमानो राजानं गोपायति गोपायति ॥ २९ ॥

इति हिरण्यकेशिसूत्रे सप्तमप्रश्नेऽष्टमः पटलः ।

---

हविर्धानवचनं हविर्धानादन्यत्रापि सतो राज्ञो गोपनं व्यावर्त्यते । यथा राजानं भृत्या रक्षन्ति तद्वद्यजमानः परिकर्मिभिः सह सोमं राजानमैकाग्र्येण दस्युभ्यः श्वादिभ्यश्च रक्षतीत्यर्थः । यजमानवचनमध्वर्युव्यावृत्त्यर्थम् । जागर्त्येतां रात्रिं हविर्धाने राजानं गोपायन्नित्येतावदे(त्ये)व सूत्रे याजमानसूत्र एव लाघवात्कर्तव्येऽत्र पृथक्सूत्रकरणं स्वस्य गोपनाशक्तावन्येनापि गोपनं करणीयमिति द्वादशाहाद्यहीनद्वितीयादिरात्रिषु जागर्ति वा न जागर्ति यदा जागर्ति तदा स्वयं राजानं रक्षत्यन्येन वा रक्षयेत्, यदा न जागर्ति तदाऽन्येनैवेत्यर्थादित्येतादृशार्थज्ञापनार्थम् । द्विरुक्तिः प्रश्नसमाप्तिद्योतनार्था ।

इति ओकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्नियुक्तवाजपेययाजिसर्वतोमुखयाजिद्विषासहस्राग्नियुक्तपौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथदीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसूत्राम्बुधिगतनिगूढार्थरत्नविवेचनक्लेशकृतविद्वज्जनसंतापशामिकायां ज्योत्स्नाख्यायां वृत्तौ सप्तमप्रश्नस्याष्टमः पटलः ॥ ८ ॥

---

संपूर्णोऽयं सप्तमः प्रश्नः ।

अथाष्टमः प्रश्नः ।

तत्र प्रथमः पटलः ।

---

महारात्रे बुध्यन्ते ।

रात्रेर्महान्भागो महारात्रं तस्मिन्महारात्रे रात्रेर्यो महान्भागस्तस्मिन्नित्यर्थः । मयूरव्यंसकादिलक्षणः समासः । समासान्तो भागपदलोपश्च तद्राजित्वात् । एतादृशे व्याख्याने यदि सोमौ संस्तुतौ स्यातां महति रात्रियै प्रातरनुवाकमुपाकुर्यादिति श्रुतौ श्रुतं रात्रिशब्दमहच्छब्दयोर्लिङ्गभेदकृतवैयधिकरण्यं साधकम् । महती चासौ रात्रिश्चेति विग्रहस्तु नैवात्र भवति । महत्त्वस्य रात्रिविशेषणत्वे महत्त्वं रात्रौ मानकृतं तच्च वसन्ते सर्वथा नैव संभवति । उत्तरोत्तरं रात्रीणामल्पमानत्वात् । रात्रिषु महत्त्वं तु दक्षिणायन एवोत्तरोत्तरम् । तथा सति महतीषु रात्रिषु सतीष्वेव बोधनं स्यात्, बोधनस्य च मुख्यार्थत्वादत्रैव कर्तव्यता स्यात् । वसन्ताद्यरात्रावेव कर्तव्यता स्याद्वा । तस्या एव महत्त्वात् । सा च प्रकृते विरुध्येतेत्यतो नैतादृशो विग्रहोऽत्र युक्तः । एतेनानन्तरोदाहृतश्रुतौ रात्रिया इति चतुर्थी यथा षष्ठ्यर्थे तथा महतीति महच्छब्दगतसप्तमीविभक्तिरपि षष्ठ्यर्थिकैव । एतदनुरोधेन पुंलिङ्गमपि विपर्यस्तं कर्तव्यमिति कुसृष्टिकल्पना निरस्ता द्रष्टव्या । तत्र महच्छब्देन रात्रितृतीयभागो गृह्यते । किमेतादृशमेव महत्त्वमित्यत्र नियामकमिति चेत् । वक्ष्यमाणस्य स्वरमाणस्त्वनुदित उपांशुमुदितेऽन्तर्याममुभावनुदित इत्येकेषामिति सूत्रस्यैव नियामकत्वात् । एतेनैव जानीमो यावता कालेनोपांशुपर्यन्तमुभयपर्यन्तं वा कर्मानुदिते भवति तदनुरोधेन बोद्धव्यमिति । एतेनेदमपि ज्ञातं भवति चतुर्थाविभक्तरात्रितृतीयभागाद्यभागात्मके काल एव बोद्धव्यमिति । ननु किमर्थमिदं सूत्रमर्थादेव तत्सिद्धेरिति चेन्न । आशुकर्मकारिभिरप्यृत्विग्भिरेतास्मिन्नेव काले बोद्धव्यं नत्वेतस्य पुरस्तादुपरिष्टाद्वेतीच्छासिद्धनियमनार्थत्वात् । नन्वेवमपि महारात्रे कर्माण्युपक्रमन्त इत्येतावतैव सिध्यति नार्थो बोधवचनेनेति चेन्न । तस्य संबन्धविशेषज्ञापनार्थत्वात् । यत्र महारात्रे बोधनमस्ति तत्रैव पुरा वाचः प्रवदितोः प्रातरनुवाकोपाकरणं नान्यत्रेति । तेन द्वादशाहे प्रायणीयातिरात्राख्ये प्रथमसौत्यदिवसे समाप्त एवाहन्युदितेऽप्यादित्ये द्वितीयसौत्यदिवसीयप्रातरनुवाकोपाकरणं कर्तव्यं बोधनाभावादिति सिद्धं भवति । एतेन यत्र होताऽऽश्विनं शंसति तत्र मैत्रावरुणः प्रातरनुवाकमनुब्रूयादितिशास्त्रान्तरबलात्प्रतिप्रस्थात्रैव द्वितीयसौत्यदिवसकर्म कर्तव्यं यावत्पर्यन्तमध्वर्युः पूर्वकर्मणः सकाशान्निर्मुक्तो भवति तावत्पर्यन्तमध्वर्योर्निर्मुक्तताया-मध्वर्युरेव तत आरभ्य करोतीति केषांचिन्मतं नास्माकमनुकूलमिति प्रदर्शितम् ।

तथा कर्माण्युपक्रमन्ते यथा पुरा वाचः प्रवदितोः प्रातरनुवाको भवति ।१।

यथा वाचो मनुष्याणां पक्षिणां वा प्रवदितोः प्रवदनात्पुरा प्राक् प्रातरनुवाक

आरम्भो भवति तथा तदनुरोधेन कर्माणि यज्ञतनूहोमादीनि उपक्रमन्त आरभन्त इत्यर्थः। कर्मोपक्रमस्तु कृतशौचैरेव कार्यः। अन्यथा कर्मण्यनधिकारः स्यात्। स्नाता एव कर्म कुर्युरिति केचित्। कृतहस्तपादप्रक्षालना आचान्ता एवेत्यन्ये। न च कर्मान्ते हस्तपादान्प्रक्षाल्यान्तरेण चात्वालोत्करौ देवयजनमभिप्रपद्यन्त इति हस्तपादा-न्प्रक्षाल्याऽऽग्नीध्रे यजमानमुपसंगच्छन्त इति कल्पसूत्रे च हस्तपादप्रक्षालनमात्रेणैव कर्माधिकारस्योक्तत्वेन स्नानं विनैवाधिकारो नित्यं स्नानं तु स्वकाले भवत्येवेति वाच्यम्। अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्नत्वित्यनेन याज्ञवल्क्यवचनेन सूत्रोक्तस्यापि पक्षस्य बाधात्। तथा च स्नात्वा कर्माणि कुर्वीतेति स्मृतौ स्नातस्यैव कर्मकरणेऽधिकारस्योक्तेः सामान्यशास्त्रमनुसृत्यैव स्नातैरेव कर्म कर्तव्यमित्येव युक्तं परं तु अमन्त्रकमिदं स्नान-मिति द्रष्टव्यम्। संध्योपासिस्तु मध्य एव स्वकाले।

प्रजापतिर्मनसाऽन्धोऽच्छेत इति त्रयस्त्रिंशतं यज्ञतनूराग्नीध्रे जुहोति।

स्मार्तावृताऽऽज्यं संस्कृत्य तेन होमो दर्विहोमधर्मेण। प्रजापतिर्मनसेत्यादयस्त्रय-स्त्रिंशन्मन्त्रा यज्ञतनूसंज्ञकास्तैः साध्यास्त्रयस्त्रिंशत्संख्याका आहुतीर्जुहोतीत्यर्थः। तत्र प्रथमा चतुष्पदा। त्रयोदशी त्रिंशी च त्रिपदा। इतरा द्विपदाः। विंशत्याद्याः सदैकत्व इति कोशादेकवचनम्।

विशेषमन्त्राऽऽह—

पूर्वां पूर्वामनुद्रुत्योत्तरयोत्तरयैकया नु प्रथमया।

प्रजापतिर्मनसाऽन्धोऽच्छेत इति पूर्वा यज्ञतनूः। धाता दीक्षायामित्युत्तरा यज्ञतनूः। तत्र प्रजापतिर्मनसाऽन्धोऽच्छेत इति पूर्वां यज्ञतनूमनुद्रुत्य संयोज्य धाता दीक्षायामि-त्युत्तरया यज्ञतन्वा जुहोतीत्यर्थः। एवं धाता दीक्षायामिति द्वितीयां यज्ञतनूं संयोज्य सविता भृत्यामिति तृतीयया यज्ञतन्वा। सविता भृत्यामिति तृतीयां यज्ञतनूं संयोज्य पूषा सोमक्रयण्यामिति चतुर्थ्या यज्ञतन्वेत्यादित्रयस्त्रिंशयज्ञतनूपर्यन्तम्। एतदर्थमे-वोभयत्र वीप्सा। संहितारूपमेवैतद्योजनम्। आहुतिषु त्रयस्त्रिंशत्त्वसिद्ध्यर्थमुपायमाह— एकया नु प्रथमयेति। नुरवधारणे। त्रयस्त्रिंश्याहुतिस्तु एकयैव प्रथमयेति। एकयेति वचनमन्तिमां यज्ञतनूमनुद्रुत्य प्रथमया यज्ञतन्वा जुहोतीत्येवं स्यात्, अन्तिमापेक्षया प्रथमाया अनन्तरत्वेनोत्तरत्वात्तत्पूर्वत्वेनान्तिमायाः पूर्वत्वात्, पूर्वां पूर्वामनुद्रुत्योत्तर-योत्तरयेति सूत्रात्, अथवाऽन्ताल्लोपो विवृद्धिर्वेति न्यायेनानुद्रवणविशिष्टयाऽन्तिमया यज्ञतन्वेति स्यात्तन्मा भूदित्येतदर्थम्। एकशब्दः केवलवाची। प्रथमयेति वचनं तेनैव न्यायेन केवलाया अन्तिमायाः प्राप्ताया निवारणार्थम्। जुहोतिचोदितत्वात्स्वाहाकारः। यत्र मन्त्रगणेनेति परिभाषया प्रतिमन्त्रम्।

---

१ इ. ज. झ. ञ. ठ. 'त्यै०'।

यज्ञार्ति प्रति जुहोतीत्येकेषाम् ।

यज्ञस्याऽऽर्तिर्यज्ञार्तिस्तां यज्ञार्तिम् । आर्तिर्विनाशो भ्रेष इति यावत् । अनेन नैमित्तिकत्वमप्येतस्य होमस्य केषांचिदाचार्याणां मते भवति । यज्ञार्तिमित्यत्र कर्मप्रवचनीयसंज्ञा । तेन प्रतियज्ञार्ति अयं होम इति सिद्धं भवति ननु रात्रिसंबन्धितृतीयभागाधिकरणकबोधनाभावरूपयज्ञार्तिनिमित्तक एवायं होम इति । एतद्रूपयज्ञार्तिनिमित्तके होमे प्राप्ते प्रायश्चित्तस्य संधानार्थत्वेन प्रबलत्वादादौ प्रायश्चित्तार्थं कृत्वाऽनन्तरं नित्यः कर्तव्य इति सोमतन्त्र एव यत्किंचिद्यज्ञविभ्रेषेऽनादिष्ट इदं प्रायश्चित्तं होतव्यं नतु पाशुकैष्टिकतन्त्रयोः । उत्तरसूत्रे सवनीयस्य तन्त्रं प्रक्रमयतीत्येतावतैव पाशुकतन्त्रमेतदितिज्ञानसिद्धौ पशुशब्दोपादानं यज्ञतनूहोमः सोमतन्त्रसंबन्ध्येव तत्रानादेशेऽयमेव होम इति । दोषनिर्हरणे सामर्थ्यातिशयात्सर्वप्रायश्चित्तमपि होतव्यम् । एकेषामितिवचनात्प्रायश्चित्तात्मकत्वं पाक्षिकमिति गम्यते ।

सवनीयस्य पशोस्तन्त्रं प्रक्रमयति ।

सवने सौत्येऽहनि भवः पशुः सवनीयस्तस्य पशोस्तन्त्रं कर्मकलापं प्रक्रमयति आरभत इत्यर्थः ।

तस्य निरूढपशुबन्धेन कल्पो व्याख्यातः ।

तस्य सवनीयस्य । अन्यदग्नीषोमीये कृतव्याख्यानम् । षड्ढोतृपश्विष्टी न स्तः । अङ्गभूतत्वात्पशोः । अग्निप्रणयनान्तं कर्म कृतत्वाल्लुप्यते । सवनीये पशौ नान्यन्वाधानं विद्यत इति निषेधादन्वाधानाभावः । प्रायणीयाप्रभृतिष्वित्यनेन व्रतोपायनाद्यभावः ।

न बर्हिर्विद्यते प्रस्तरमेवाऽऽहरति बर्हिषः कल्पेन ।

बर्हिः पाशुकं बर्हिः । उत्करबर्हिस्तु विद्यत एव । ननु प्रस्तरमेवाऽऽहरति बर्हिषः कल्पेनेत्येवकारेणैव बर्हिर्व्यवच्छेदो भवति किमर्थमयं निषेधो न बर्हिर्विद्यत इति चेन्न । बर्हिषः कल्पेन प्रस्तरमेवाऽऽहरतीत्येतावत्येवोच्यमाने बर्हिर्व्यवच्छेदो न भविष्यति किंतु बर्हिषः कल्पस्यैव बर्हिराहरणे व्यवच्छेदो भविष्यति । तथा च तूष्णीमाहरणं स्यात्तदा तद्व्यावर्तयितुं निषेधस्याऽऽवश्यकत्वात् । न बर्हिर्विद्यत इत्येतावत्येवोच्यमाने प्रस्तरस्यापि बर्हिष्ट्वान्निवृत्तिः स्यात्तद्व्यावृत्त्यर्थं प्रस्तरमेवाऽऽहरतीतिवचनम् । प्रस्तरमाहरत्येवेत्येवकारस्याऽऽहरतीत्येतदनन्तरमन्वयः । तथा चैवमर्थो भवति बर्हिषः कल्पेनाऽऽहरत्येव न तु संनहनमपीति । एवंरीत्यैवैवकारः सार्थको भवति तेन संनहनं यदाऽऽपस्तम्बेनेध्माबर्हिः संनह्यति न वा बर्हिः प्रस्तरमेवेति सूत्रेण संनह्यतीति व्याख्यातृप्रदर्शितशेषेण प्रापितं व्यावर्त्यते । उत्करबर्हिरर्थमेव शुल्बकरणं न प्रस्तरार्थम् । उत्करबर्हिरर्थं शुल्बकरणादि स ते मा स्थादित्यन्तं करोति । सुसंभृता त्वा संभरामीति

नास्तिं शुल्बस्यैवाभावात् । अलुभितो योनिरित्येतदपि नास्ति अनन्तरोक्तहेतोः । उत्क-रबर्हिःसंभरणेऽलुभितो योनिरित्येतदेव । आपस्त्वामितीन्द्रस्य त्वेत्येतद्द्वयं प्रस्तर-स्याऽऽदौ कृत्वोत्करबर्हिषः करोति । बृहस्पतेर्मूर्ध्ना हरामीत्यादिनिधानान्तमुभयोः सहैव । उर्वन्तरिक्षं प्रेहीत्यस्मिन्मन्त्रे तु नोहः । गमनाक्रियाया आत्मन्येव संबन्धेन बर्हिःसंबन्धासंभवात् । हे आत्मन्नुरु विस्तीर्णमन्तरिक्षमिव बर्हिष्प्रतिच्छेदनार्थं गत-स्ततः परावृत्य प्रेहि विहारदेशं प्रति प्रकर्षेण गच्छेत्येतादृशो ह्यात्मसंबन्धः । नच बर्हिष एवात्र संबन्धोऽस्तु किं बाधकमिति वाच्यम् । पूर्वस्मिन्नेतादृश एव मन्त्रे व्यभिचाराद्गमनकरणमन्त्रत्वदर्शनाद्गमनकर्तुरेकत्वाच्च । अदित्याः सद आसीदेत्यत्राऽऽ-सीदतमिति द्विवचनान्त ऊहो भवत्येव । बर्हिरभिधायकत्वात् । एवं देवंगममसि अदि-त्यास्त्वा पृष्ठे सादयामीत्यनयोरपि देवंगमे स्थः । अदित्या वां पृष्ठे सादयामीति यथायथमूहः । परिभोजनीयाख्यमुष्टिमुलपराजयर्थमुष्टिं चैतैः सहैवाऽऽहरति प्रकृति-वत्तूष्णीमेव । अग्नीषोमीयविकारपक्ष आश्ववालः प्रस्तर ऐक्षवी तिरश्ची कार्ष्मर्यमयाः परिधयोऽधिकाः पौतुद्रारवेभ्य इति पशुसूत्रोक्तमाश्ववालप्रस्तरादिकं सर्वमस्त्येव बर्हिस्तु नैव । न बर्हिर्विद्यत इति निषेधस्यात्रापि प्रवृत्तौ बाधकाभावात् ।

पात्रसꣳसादनकाले प्रचरणीं प्रथमाꣳ स्रुचं प्रयुनक्ति ।

पात्रसंसादनकाल इत्यनेन परिस्तरणपाणिप्रक्षालनोलपराजोस्तरणब्रह्मयजमानसदन-करणानि सूच्यन्ते । अथवा पात्रसंसादनकाल इत्यस्य पात्रसंसादनदेश इत्यर्थः । तथा च पात्रसंसादनदेशे प्रचरण्याः प्रयोग इति अर्थो भवति । दृष्टं च कालशब्दस्य देशपरत्वं बौधायनसूत्रे स उपरवाणां काल इत्यादौ । स च प्रचरण्याः सौमिकत्वा-च्छालामुखीयोत्तरतःसंलग्नदेश एव । ननु सर्वैष्टिकपाशुकपात्रसंसादनदेशो यः स एव प्रचरण्याः सौमिक्या अपि तथा च कथं देशभेद इति चेत्सत्यम् । शालामुखीयं गार्ह-पत्यकर्मभ्योऽन्वतस्यान्ति तस्मिन्गार्हपत्यकर्माणि क्रियन्त इति वचनात्प्रचरण्याः सोम-कर्मसंबन्धिपात्रत्वेन शालामुखीयोत्तरतःसंलग्नदेश एव स्वतन्त्रतयैव प्रचरण्याः प्रयोगो न तु क्रमप्राप्ते स्थाने द्वंद्वत्वधर्मेणेत्येवंरीत्या देशभेदसंभवात् । वेदस्तु महावे-दर्थं कृतो यः स एव शालामुखीयस्योत्तरतो दर्भान्संस्तीर्य यथार्थे पाशुकानि पात्राणि प्रयुनक्ति । तत्र प्रचरणीं स्रुवमधिकां प्रयुनक्ति । सा च जुह्वादिभ्यः स्रुग्भ्यः प्रथमा भवति । आगन्तूनामन्ते निवेश इति न्यायेन प्राकृतस्रुक्प्रयोगानन्तरं सर्वपात्रप्रयोगान-

---

१ ख. ग. °स्ति बर्हिषोऽभा° । २ ख. ग. °तल्लुप्यते प्रस्तरसंभरण उत्त निधनादिकरणक निधानाभावात् । उत्करबर्हिःसंभरणे तु अलुभितो योनिरित्येतदेव लुप्यते प्रस्तराभावात् । आ° ३ ख. ग. प्रेतमित्यत्रोहं केचित्कुर्वन्ति । तन्न । ग° । ४ ख. ग. तु कर्मप्रा° ।

न्तरं वैतस्याः प्रयोगः स्यात्तं वारयितुं प्रथमामितिवचनम्। प्रथममिति परित्यज्य प्रथ-
मामित्येवं वचनं स्रुग्भ्य एव प्राथम्यं स्यान्नतु सर्वपात्रेभ्यः प्राथम्यमित्येतादृशार्थे बोध-
यितुम्। स्रुग्ग्रहणं वसाहोमहवनीवज्जुहूरेवेयं नतु केवलं जुहूकार्यकारित्वमात्रमितिज्ञा-
पनार्थम्। तेन सुत्याहनि जुह्वां व्यापृतायां पशुबन्धे वसाहोमहवनीवत्प्रचरण्येव भवति।
तथा च भरद्वाजः—प्रचरण्या सोम इति। व्यापृतायां जुह्वामियं होमकार्येषु भवतीति।
अत एव पालाशीयम्। अनयोर्भेदे किं फलमिति चेत्। जुहूकार्यकारिपात्राणां विशेष-
वचनाभावे वैकङ्कतत्वं जुहूरूपपात्राणां पालाशत्वमिति। यदि जुहूकार्यकारिणामपि
पात्राणां जुहूरूपता स्यात्तदा वैकङ्कतत्वविधायकपरिभाषा निरवकाशत्वेनापार्थिका
स्यादिति ज्ञेयम्। वैसर्जनहोमसंबन्धिप्रचरण्यां स्रुग्ग्रहणाभावान्न पालाशत्वं किंतु परिभा-
षाप्राप्तवैकङ्कतत्वमेव। दण्डयूपौ न प्रयुनक्ति प्रयुक्तत्वात्। यूपशकलमपि न प्रयु-
नक्ति प्रयोजनाभावात्।

**आज्यग्रहणकाले प्रचरण्यां चतुर्गृहीतं गृहीत्वोत्तरासु गृह्णाति।**

आज्यग्रहणकाल इत्यनेन पवित्रकरणादिकमाज्योत्पवनान्तं पाशुकं कर्म सूच्यते।
न ब्रह्मवरणं वाचस्पत इत्याद्येव ब्रह्मणः संमार्जनकाले प्रचरणीमादौ तूष्णीमेव जुहूवत्सं-
मृज्य जुह्वादिस्रुचः संमार्ष्टि। प्रचरण्या जुहूत्वेऽपि अवषट्कारसंबन्धित्वात्तूष्णीं संमार्गो
वसाहोमहवन्या इव। उपभृद्ध्रुवयोस्तु पृथङ्मन्त्रसत्त्वात्समन्त्रकः संमार्गः। प्रयोग
आज्यग्रहणे च प्राथम्यात्प्रत्याहारन्याये[न]तन्मध्यपतितसंमार्गेऽपि प्राथम्यम्। प्रच-
रण्यां चतुर्गृहीतमपूर्वहोमार्थत्वात्तूष्णीमेवाऽऽदौ गृहीत्वोत्तरासु जुह्वादिषु पशुवद्गृह्णा-
तीत्यर्थः। प्रचरण्याः प्रथमत्वात्तामपेक्ष्योत्तरत्वं जुह्वादीनाम्। स्फ्यस्य वर्त्मन्येवाऽऽ-
ज्यग्रहणं विशेषवचनाभावात्। आग्नीध्रे वा। अथैकेषां प्राग्वंशेऽग्नीषोमीयस्याऽऽज्यानि
गृह्णात्याग्नीध्रे सवनीयस्योत्तरवेद्यामनुबन्ध्याया इति आपस्तम्बसूत्रात्। उत्तरवेदिस-
मीपे वा। अपरेणोत्तरवेदिं सवनीयस्यानूबन्ध्यायाश्चाऽऽज्यानि गृह्णातीत्येक इति तेनैव
विकल्पेनाभिधानात्। एतत्पक्षान्तरत्वं सूचयितुमेव वाऽऽज्यग्रहणकाल इति वचनम्।
अस्मिन्कल्पे कालशब्दो देशपरो ज्ञेयः।

**प्रोक्षणीरभिमन्त्र्य ब्रह्माणमामन्त्र्येध्मं वेदिं प्रस्तरं
च प्रोक्ष्य प्रोक्षण्यवशेषं निनीय पवित्रे अपि-
सृज्य प्रस्तरं सादयित्वा स्रुचः सादयति।**

उक्तेतरपरिसंख्यार्थमनुक्रमणम्। आमन्त्रणेन प्रसवोऽप्युप[1]लक्ष्यते। अन्यथाऽऽमन्त्र-
णस्यैव निरर्थकत्वापत्तेः। इध्मं वेदिं प्रस्तरं च प्रोक्ष्य प्रोक्षण्यवशेषं निनीयेत्यनेन

---

१ ख. ॰लभ्यते।

क्रमेणान्तर्वेदि पुरोग्रन्थीत्यादेः प्रत्युक्षणान्तस्य निवृत्तिः क्रियते । प्रोक्षण्यवशेषं निनीय पवित्रे अपिसृज्येत्यनेन क्रमेण विष्णोः स्तूपोऽसीति पुरस्तात्प्रस्तरग्रहणं व्यावर्त्यते । ग्रन्थिविस्रंसनं तु भवत्येव । तद्विना पवित्रापिसर्जनासंभवात् । अत एव तदनुगुणत्वान्न व्यवधायकं भवति । पवित्रे अपिसृज्य प्रस्तरꣳ सादयित्वेत्यनेन क्रमेण ब्रह्मणे प्रस्तरप्रदानं तृणैरन्तर्धानं शुल्बस्तरणमनूयाजार्थोलमुकोद्वहनमाहवनीयकल्पमाघारसमिधोरभ्याधानं विधृत्योरासादनं च व्यावर्त्यते । स्तीर्णेन बर्हिषाऽन्तरितत्वादेव तृणैरन्तर्धानाभावः । शुल्बस्तरणमपि न । तस्य बर्हिरास्तरणाङ्गत्वेन तदभावादेव तदभावसिद्धेः । शुल्बस्य प्रतिपत्तिस्तु प्रस्तरेण सह सादनमात्रमेवेति । अनूयाजार्थोलमुकोद्वहनाहवनीयकल्पनयोः सर्वथैव व्यावृत्तिर्न किंतु अस्मिन्काले व्यावृत्तिः । तेनाऽऽज्याभिमन्त्रणोत्तरमेते कर्तव्ये एव । अत्र कर्तव्यतायां क्रमो बाधितः स्यात् । नच लोप एवानयोरस्त्विति वाच्यम् । अलोपेन निर्वाहे सर्वथा तस्यानुचितत्वात् । आघारसमिधोरभ्याधानमप्याज्याभिमन्त्रणोत्तरमेव । प्रस्तरस्य प्रदानाभावादेव प्रत्यादानाभावः । अथवाऽग्नीषोमीयपश्वर्थानूयाजार्थोलमुकयोरेकशेषौ प्रज्ञातौ स्थापयितव्यौ तयोः सवनीयपश्वर्थानूयाजाः कर्तव्या इति । आहवनीयकल्पनस्यापि तत्सहचारित्वादेव निवृत्तिः । एवमग्नीषोमीयपश्वर्थाघारसमिधावेव प्रज्ञाते तथैव स्थापनीये । अस्मिन्कल्प इध्मे ततस्त्वामष्टादशधा संभरामि सुसंभृता, एकाꣳ समिधं यज्ञायुरनुसंचराम्, धृष्टिꣳ संभरामि सुसंभृतेत्यूहः । विधृत्योरासादनं तु लुप्यत एव । पवित्रे अपिसृज्य प्रस्तरसादनादि प्रतिपद्यत इत्येतावतैव सिद्धे प्रस्तरꣳ सादयित्वा स्रुचः सादयतीतिगुरुसूत्रकरणादेवमत्र ज्ञायते प्रस्तर एव सर्वासा स्रुचामत्र सादनमिति । अत्राऽऽस्तरणरूपमेवाऽऽसादनमित्यर्थतः सिद्धं भवति । स्रुचः सादयतीति अनुवाद एव । तेन स्रुवस्वधित्याज्यस्थालीपृषदाज्यस्थालीस्रुगभिमन्त्रणाज्याभिमन्त्रणानि भवन्त्येव । अग्नीषोमीयविकारपक्षे बर्हिर्वर्जं सर्वं यथाप्रकृत्येव । परिधयोऽप्यस्मिन्पक्षे भवन्ति विधृती च ।

अयं नो अग्निर्वरिवः कृणोत्वित्याग्नीध्रमभिमृशति ।

यजमानेनायं यज्ञ इत्यनेन मन्त्रेण पञ्चहोत्रा चाऽऽज्याभिमर्शे कृत आग्नीध्रमाग्नीध्रमण्डपमभिमृशति । मण्डपशब्दो जनाश्रये वर्तते । मण्डपोऽस्त्री जनाश्रय इति कोशात् । तत्र जनाश्रयत्वं स्तम्भचतुष्टयोपरिदत्तवंशोपरिष्टाद्दत्ताच्छादनसंबद्धभूमावेव वर्तते नतु केवल आच्छादने केवलभूमौ च । आग्नीध्र उपविश्य हविर्धान उपविश्य सदस्युपविश्येत्यादौ विशिष्ट एव शक्तिग्रहात् । भूतभाव्युपयोगं हि द्रव्यं संस्कारमर्हतीतिन्यायसिद्धोऽभिमर्शात्मकः संस्कारो यद्यप्याच्छादनताद्विशिष्टभूम्योरविशिष्टो भूतभाव्युपयोगस्य तुल्यत्वात्तथाऽपि भूमेः साक्षादुपयोगात्तस्या एवाभिमर्शः । उभयोरेकदा स्पर्शासंभवेन विशेषणांशे बाधात् । नागृहीतविशेषणान्यायेन विशेष्यांश एव

पर्यवसानम् । केवलाच्छादनेऽपि यद्यप्युपवेशनं संभवति तथाऽपि तस्य कर्मण्ययोग्यत्वान्मण्डपशब्देन न ग्रहणम् । यद्यपि आग्नीध्रं प्रविश्य हविर्धानं प्रविश्य सदः प्रविश्येत्यत्र प्रवेशकरणत्वमवकाशस्यापि तथाऽपि अवकाश उपवेशनासंभवान्न मण्डपशब्देन ग्रहणम् । न च योगधारणबलेन तदपि संभवतीति वाच्यम् । तथा सत्यपि तस्य कर्मानुपयुक्तत्वेन प्रकृते ग्रहणायोगात् । एकदेशाभिमर्शेन सर्वोऽपि मण्डपोऽभिमृष्टो भवति । अभिमर्शमन्त्रपाठयोः समानकालिकता सर्वत्र । वाजसातावित्यन्तो मन्त्रः ।

इदं विष्णुर्विचक्रम इति हविर्धाने ।

अभिमृशतीत्यनुवर्तते । द्रव्यपृथक्त्वान्मन्त्रावृत्तिः । पांसुर इत्यन्तो मन्त्रः । हविर्धानमिति पाठे मण्डपस्यैकत्वात्सकृदेव मन्त्रः ।

अग्न आयूꣳषि पवस इति स्रुचः ।

सर्वासां स्रुचां मध्ये यावतीनां स्रुचां सकृत्प्रयत्नेनाभिमर्शः संभवति तावतीषु सकृन्मन्त्रः । अन्यथा मन्त्रावृत्तिः । स्रुच इति द्रव्यैकत्वात्सकृन्मन्त्रो वा क्रमेणाभिमर्शः । प्रचरण्या अप्यभिमर्शः । गृहीताज्यत्वात् । वसाहोमहवन्या नाभिमर्शः । अगृहीताज्यत्वात् । दुच्छुनामित्यन्तो मन्त्रः ।

आवायो भूषेति वायव्यानि ।

सर्वेषां वायव्यानां मध्ये यावतां वायव्यानां सकृत्प्रयत्नेनाभिमर्शः संभवति तावत्सु सकृदेव मन्त्रः । अन्यथा मन्त्रावृत्तिः । वायव्यानीति द्रव्यैकत्वात्सकृन्मन्त्रो वा क्रमेणाभिमर्शः । वायव्यानि ऊर्ध्वपात्राणि । वायव्यानीति वचनान्न चमसानभिमृशति । यद्वायव्यं वा चमसं वेतिपृथग्वचनाल्लिङ्गात् । स्थालीस्त्वभिमृशत्येव । काश्चतस्रः स्थालीर्वायव्याः सोमग्रहणीरिति लिङ्गात् । पूर्वपेयमिति मन्त्रान्तः ।

उत्तिष्ठन्नोजसा सहेति सदः ।

अत्रापि पूर्ववद्भूमिपर एव सदःशब्दः । हविर्धानमिति पाठे हविर्धानशब्दोऽपि भूमिपर एव । सुतमिति मन्त्रान्तः ।

खरे पात्राणि प्रयुनक्ति ।

पूर्वकृते खरे । पात्राणि वक्ष्यमाणानि । प्रक्षाल्येति सूत्रान्तरे । अपूर्वत्वाद्वचनाभावाच्च न न्युब्जत्वम् । सामान्यप्रतिज्ञेयम् ।

अग्निर्देवता गायत्री छन्द इत्येतैर्यथारूपं
कस्त्वा युनक्ति स त्वा युनक्त्वित्यवशिष्टानि ।

यथारूपं यथालिङ्गम् । उपांश्वन्तर्यामयोरैन्द्रवायवमैत्रावरुणाश्विनानां शुक्रामन्थि-

नोराग्रयणस्योक्थ्यस्य ध्रुवस्य च क्रमेणैतैर्दशभिर्मन्त्रैर्यथालिङ्गं प्रयोग इत्यर्थः। अस्य-न्ता मन्त्राः सर्वे। अवशिष्टानि ऋतुपात्रादीनि तेषां कस्त्वेत्ययं मन्त्रः।

तत्र सर्वपात्रप्रयोगक्रममाह—

दक्षिणेऽꣳस उपाꣳश्वन्तर्यामयोः पा-
त्रे दक्षिणमुपाꣳशोरुत्तरमन्तर्यामस्य ।

उपाꣳशुश्चान्तर्यामश्चोपाꣳश्वन्तर्यामौ। तयोरुपाꣳश्वन्तर्यामयोः, उपांश्वन्तर्या-मसंज्ञयोर्ग्रहयोः। दक्षिण उपाꣳशोरुत्तरेऽन्तर्यामस्येत्येवं वचनं परित्यज्य दक्षिणमुत्तर-मित्येवं वचनं पूर्वमेव चिह्नकरणार्थम्। दक्षिणमुपांशोरुत्तरमन्तर्यामस्येत्यनेन प्राक्सं-स्थता व्यावर्त्यते।

अपि वा पूर्वमुपाꣳशोरपरमन्तर्यामस्य।

पूर्वं पूर्वदिग्गतम्। अपरमपरदिग्गतम्। तेन प्रत्यक्संस्थता भवति। अग्निर्देवता गायत्री छन्दः सोमो देवता त्रिष्टुप्छन्द इति क्रमेण द्वयोर्मन्त्रौ।

ते अन्तरेण व्यानाय त्वेत्युपाꣳशुसवनं ग्रावा-
णꣳ सꣳस्पृष्टमुपाꣳशुपात्रेण प्रयुनक्ति ।

ते इत्यत्र द्वितीयाऽन्तरान्तरेणयुक्त इति सूत्रेण। ते उपांश्वन्तर्यामयोः पात्रे अन्तरेण तयोः पात्रयोर्मध्य इत्यर्थः। उपांशुरुपांशुग्रहार्थः सोमः सूयते कण्ड्यते येन स उपांशुसवनस्तं ग्रावाणमुपांशुपात्रेण संस्पृष्टं प्रयुनक्ति व्यानाय त्वेत्यनेन मन्त्रेण। उपांशुसवन इति पृथगन्वर्थसंज्ञाकरणाद्भिन्न एवायं ग्रावा। अत एवोपरे ग्राव्णः संमुखान्कृत्वा प्रोक्षतीत्यत्र नैतस्य प्रोक्षणम्। उपांशुसवनत्वाद्वोपांशुपा-त्रमात्रसंस्पृष्टता नान्तर्यामपात्रसंस्पृष्टता। पात्रयोः प्रत्यक्संस्थत्वेऽपि उत्तराग्र एवो-पांशुसवनः। तथा चाऽऽपस्तम्बः—बृहन्नसीति ते अन्तरेण ग्रावाणमुपांशुसवनं दक्षि-णामुखꣳ सꣳस्पृष्टं पात्राभ्यामिति। उपांशुपात्रेण संस्पृष्टमित्येकेनैव पात्रेण सह संस्प-र्शस्य विधानात्पात्रद्वयसंस्पर्श आपस्तम्बोक्तो निवारितो भवति। अग्रकल्पना तु पूर्व-वदेव द्रष्टव्या।

प्रत्यञ्चि द्विदेवत्यपात्राणि परिस्रगैन्द्रवाय-
वस्याऽऽजगावन्मैत्रावरुणस्य द्विस्रक्त्याश्विनस्य ।

प्रत्यञ्चि प्रत्यक्संस्थानि। पात्रयोरुदक्संस्थत्व उपांशुसवनमपरेण पात्रयोः प्राक्सं-स्थत्वेऽन्तर्यामपात्रमपरेण पात्रयोरुदक्संस्थत्वेऽन्तर्यामपात्रोत्तरत आरभ्य पात्रयोः प्राक्संस्थत्व उपांशुसवनोत्तरत आरभ्य प्रत्यञ्चि द्विदेवत्यपात्राणि प्रयुनक्तीत्यर्थः। अनि-यमं स्थानस्य दर्शयितुमेव दक्षमःर्तुपात्रप्रयोगवदपरशब्दो नोपात्तः। युक्तं चैतदपरश-

ब्दानुपादानम् । अन्यथा पात्रयोः प्रत्यक्संस्थत्वपक्ष उपांशुसवनसंलग्नापरभागे द्विदेवत्य-पात्रप्रयोगस्यान्तर्यामपात्रकृतव्यवधानेनासंभवात्सर्वं बाधितं स्यादिति द्रष्टव्यम् । परितः स्रक्, यस्य तत्परिस्रक् । स्रक्शब्देन रास्नोच्यते । ऊर्ध्वपात्रबिलाधःप्रदेशे परितो रास्ना-वदित्यर्थः । आजगावत्, आजग(गा?)शब्दोऽजागलस्तने याज्ञिकैः संकेतितः । तौ चाजा-गले द्वौ वर्तेते । तद्वदत्रापि द्वावेव तावस्य स्त इत्याजगावत् । तौ च पात्रबिलाधःप्रदेशे कर्तव्यौ । मतौ बह्वचोऽनजिरादीनामित्यनेन दीर्घः । द्वे स्रक्ती कोणौ यस्य तद्द्वि-स्रक्ति । ऐन्द्रवायवस्यैन्द्रवायवग्रहस्य पात्रं परिस्रग्भवति । मैत्रावरुणस्य मैत्रावरुणग्र-हस्य पात्रमाजगावद्भवति । आश्विनस्याऽऽश्विनग्रहस्य पात्रं द्विस्रक्ति भवतीत्यर्थः । द्विःस्रक्तीति सविसर्गपाठोऽपपाठ एव । इन्द्रो देवता जगती छन्दः, बृहस्पतिर्देवताऽ-नुष्टुप्छन्दः, अश्विनौ देवता पङ्क्तिश्छन्द इति क्रमेण त्रयाणां मन्त्राः ।

अपरे शुक्रामन्थिनोः पात्रे दक्षिणं
बैल्वꣳ शुक्रस्योत्तरं वैकङ्कतं मन्थिनः ।

आश्विनपात्रादपरेऽपरस्मिन्प्रदेशे शुक्रग्रहमन्थिग्रहयोः पात्रे प्रयुनक्तीत्यर्थः । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति न्यायादव्यवहितस्याऽऽश्विनस्यापरः प्रदेशो ग्राह्यः । दक्षिणं बैल्वमित्यादिना प्राक्संस्थताव्यावृत्तिः । दक्षिण उत्तर इत्येवं वक्तव्ये दक्षिणमुत्तरमित्येवं वचनं पूर्वमेव चिह्नकरणार्थम् । बैल्वं बिल्वविकारभूतं वैक-ङ्कतं विकङ्कतविकारभूतम् । प्रबाहुगित्यापस्तम्बः । सम इति तदर्थः । ननु मन्थिपात्रस्य वैकङ्कतत्वे परिभाषयैव सेत्स्यति सत्यत्र वैकङ्कतवचनं व्यर्थं दक्षिणं बैल्वꣳ शुक्रस्यो-त्तरं मन्थिन इत्येतावत्युच्यमाने बैल्वानुवृत्तिः स्यात्तां वारयितुं वैकङ्कतवचनमावश्यक-मिति चेत्तदाऽपरे शुक्रामन्थिनोः पात्रे दक्षिणं शुक्रस्योत्तरं मन्थिनो बैल्वमाद्यमित्येवं सूत्रं कर्तव्यमेवं च बिल्वप्राप्तिं वारयितुं विकङ्कतग्रहणं न कर्तव्यं भवति वर्णद्वयन्यूनता-प्रयुक्तं लाघवं च सिद्ध्यतीति किमर्थं बैल्वमाद्यमिति परित्यक्तं वैकङ्कतपदग्रहणं चोपा-त्तमिति चेन्न । एतादृशगुरुसूत्रकरणस्य यान्यनादिष्टवृक्षाणि विकङ्कतस्य तानीतिपारि-भाषासिद्धाया विकङ्कतप्राप्तेर्मन्थ्यतिरिक्तपात्रेष्वनित्यताज्ञापनार्थं तदुपादानात् । तदुक्तमापस्तम्बेन—तेषां यान्यनादिष्टवृक्षाणि वैकङ्कतानि स्युर्यो वा यज्ञियो वृक्षः फलग्रहिरिति । सूर्यो देवता बृहती छन्दः, चन्द्रमा देवता सतोबृहती छन्द इति क्रमेण द्वयोर्मन्त्रौ ।

अपरे आश्वत्थे अश्वशफबुध्ने उभयतोमुखे
ऋतुपात्रे दक्षिणमध्वर्योरुत्तरं प्रतिप्रस्थातुः ।

अपरे मन्थिनोऽपरप्रदेशे आश्वत्थे अश्वत्थविकारभूते अश्वशफाविव बुध्ने मूले ययोः, अश्वशफबुध्ने इव बुध्ने ययोरिति वा । मुखमासेचनरूपा प्रणाली । बिलाद्बहिर्येन होम-

भक्षणार्थमवनीयते सोमस्तदनयोरुभयतो भवति आर्जवेनेत्यर्थः। अत एव वचनात्पात्रा-न्तराण्यप्येकतोमुखानि भवन्तीति गम्यते। दक्षिणमध्वर्योरुत्तरं प्रतिप्रस्थातुरित्यनेन प्राक्संस्थता व्यावर्त्यते। गुरुसूत्रकरणप्रयोजनं पूर्ववत्। अत्रापि प्रबाहुगित्यापस्तम्बः। कस्त्वेति मन्त्रोऽत्र। द्रव्यपृथक्त्वादावर्तते मन्त्रः।

दक्षिणस्यां श्रोण्यामाग्रयणस्थालीम्।

खरस्य दक्षिणस्यां श्रोण्यामाग्रयणस्थालीं, विश्वे देवा देवतोष्णिहा छन्द इति। प्रायः स्थाल्यो मृन्मय्यः प्रयोज्याः।

उत्तरस्यामुक्थ्यस्थालीमुक्थ्यपात्रं चाश्वशफबुध्नम्।

खरस्योत्तरस्यां श्रोण्यामुक्थ्यस्थालीमिन्द्रो देवता ककुच्छन्द इति प्रयुज्यैतेनैव मन्त्रेण तदुत्तरत उक्थ्यपात्रं प्रयुनक्ति।

ते अन्तरेणोदञ्चि त्रीण्यतिग्राह्यपात्राणि।

ते स्थाल्यावाग्रयणोक्थ्यसंबन्धिन्यौ। नच तच्छब्देन परामर्शः पात्रत्वसाजात्यमा-दायोक्थ्यस्थाल्युक्थ्यपात्रयोरेव तथा च तयोरेव मध्येऽतिग्राह्यपात्राणां प्रयोग इति वाच्यम्। विजातीयपात्रद्वयपरामर्शापेक्षया सजातीयपात्रद्वयपरामर्शस्य युक्तत्वात्। सर्वनाम्नो बुद्धिस्थपरामर्शित्वात्। स्थालीत्वसाजात्यमुक्थ्यपात्रे नास्ति। आकारतः करणतश्च स्थालीतो विजातीयत्वात्। तथा च स्थाल्योरेव मध्येऽतिग्राह्यपात्राणि प्रयो-क्तव्यानि नतूक्थ्यस्थाल्युक्थ्यपात्रयोर्मध्य इति सिद्धं भवति। स्पष्टमाहाऽऽपस्तम्बः— स्थाल्यावन्तरेण त्रीण्युदञ्च्यतिग्राह्यपात्राणीति। उदञ्चीति प्राक्संस्थताव्यावृत्त्यर्थम्। उत्तरत्र विनियोगादेव त्रित्वे सेत्स्यति सत्यत्र त्रीणीति वचनं पात्राणां परस्परसंलग्न-त्वेन प्रयोग इति ज्ञापयितुं, त्रय एव यदाऽतिग्राह्यास्तदैवोदक्संस्थतया सादनमिति तेन वाजपेये सप्तदशातिग्राह्येषु नास्त्युदक्संस्थतानियम इतिज्ञापनार्थं वा। एतेषां पात्राणामतिग्राह्यसंबन्धिनां स्वरूपकर्मकरणत्वेन विपर्यासासंभवाच्चिह्नप्रयोजनं नातीव। कस्त्वेति मन्त्रावृत्त्या प्रयोगः।

दक्षिणस्य हविर्धानस्याग्रेणोपस्तम्भनमादि-त्यस्थालीमादित्यपात्रं चाश्वशफबुध्नम्।

अग्रेणोपस्तम्भनमित्यनेनोपस्तम्भनानुरोधेनातिग्राह्यपात्राणां पश्चात्खर एव प्रयोग इति बोध्यते। उपोतेऽन्ये ग्रहाः साद्यन्त इति श्रुतेः। एतेनेदमपि ज्ञायते—उपस्त-म्भनेन संलग्न एव खरः कर्तव्य इति। आदित्यस्थाल्युत्तरत आदित्यपात्रस्य प्रयोगः। कस्त्वेति मन्त्र आवर्तनीयः, द्रव्यपृथक्त्वात्।

उत्तरस्य हविर्धानस्याग्रेणोपस्तम्भनमनुगोप्ते ध्रुवस्थालीम्।

अग्रेणोपस्तम्भनमित्यनेनोपस्तम्भनसंलग्नतयैव ध्रुवस्थाली प्रयोज्येति बोध्यते। पृथिवी देवता विराट्छन्द इति मन्त्रः। औपरवपुरीषकृतखररूपं स्थलमुपोतं तद्भिन्न-

मनुपोसम् । अत्रानुपोसवचनमुपोतेऽन्ये ग्रहाः साद्यन्त इतिश्रुत्युक्तोपोसशब्दार्थः खर एव तत्रैव ध्रुवव्यतिरिक्तानां प्रयोग इतिप्रदर्शनार्थम् ।

उत्तरेऽंस औदुम्बरं चतुःस्रक्ति दधिग्रहपात्रम् ।

औदुम्बरमिति विकङ्कतबाधनार्थम् । परिमण्डलत्वबाधनार्थं चतुःस्रक्तीति वचनम् । मुखं त्वत्राप्यस्त्येव । कस्त्वेति मन्त्रः । षोडश्यादिषु क्रतुविशेषेषु तत्तत्संबन्धीनि षोडश्यादीनि पात्राणि यथावकाशं प्रयुनक्ति । आगन्तूनामन्ते निवेश इति न्यायाद्दधिग्रहपात्रान्ते प्रयोगः कस्त्वेति मन्त्रेण । खर एव तस्य प्रयोगः । उपोतेऽन्ये ग्रहा इति श्रुतेः । ध्रुवस्याश्रया एवानुपोसस्थले प्रयोगवचनेनान्येषामुक्तानामनुक्तानां चोपोस एव प्रयोगस्यार्थत एव सिद्धत्वात् । उपोसशब्दार्थस्तु प्रागुक्त एव ।

मध्ये परिप्लवाम् ।

मध्ये खरस्य मध्ये । परि सोमरसस्य मध्ये प्लवते तरति नौकेवेति परिप्लवा । सोमरसस्य मध्ये प्लव इवेति परिप्लवा । प्लवशब्दो नौकावाची पुंलिङ्ग एव । पात्रवाचिनष्टाबन्तता सूत्रकृद्वचनसिद्धा । पुंलिङ्गस्य प्लवशब्दस्य नौकावाचित्वं श्रुतौ—प्लवो वा एषोऽग्नेर्यत्संयानीर्यत्संयानीरुपदधाति प्लवमेवैतमग्नय उपदधातीति । परिप्लवाशब्देन सोमरसस्य मध्ये नौकेव तरणार्थं प्रक्षेपः सूचितो भवति । स च पवमानग्रहग्रहणात्प्राक्कर्तव्यः । उक्तं च बौधायनेन—परिप्लुपात्रं प्रास्य द्रप्साननुमन्त्रयत इति । परिप्लुशब्दः परिप्लवापरपर्याय एव । खरस्य मध्ये परिप्लवाख्यपात्रं कस्त्वेति मन्त्रेण प्रयुनक्तीत्यर्थः । आधारहोमार्थत्वाद्वैकङ्कतं तत् ।

यथावकाशमेकादश चमसान्नैयग्रोधान्रौहितकान्वा ॥१॥ त्सरुमतोऽत्सरुकान्वा ।

अधिकसंख्याया व्यावृत्त्यर्थमेकादशेति सावधारणं द्रष्टव्यम् । तेन धिष्णियवधाधारणार्थकस्य चमसस्य न प्रयोग इति सिद्धं भवति । अन्यथा द्वादशेति ब्रूयादेव । एकादशेति वचनं सदस्यपक्षे । सदस्याभावे दशैव भवन्ति । यथावकाशमित्यनेन स्थानानियमः प्रदर्श्यते । नैयग्रोधो वटः । रौहीतकः सूक्ष्मपर्णो वटः । यद्यप्यमरेण—

रोही रोहितकः प्लीहशत्रुर्दाडिमपुष्पकः ।
गायत्री बालतनयः खदिरो दन्तधावनः ॥

इत्यनेन करञ्जवाचकत्वमुक्तं तथाऽपि प्रकृते करञ्जस्यायज्ञियवृक्षत्वेनानुपयोगात् ।

रोही रौहितकश्चैत्यवटपादपयोः पुमान् ।

इति विश्वकोशोक्तं वटवाचित्वमेव प्रकृतोपयोगाद्ग्राह्यम् । नचैवं नैयग्रोधरौहीतकशब्दयोर्वटत्वजात्यवच्छिन्नपदार्थवाचकत्वेनैकार्थकत्वाद्वाशब्दबोधितविकल्पोऽनुपपन्न इति

वाच्यम् । तस्य नैयग्रोधानौदुम्बरान्वेतिसूत्रान्तरोक्तौदुम्बरत्वव्यवच्छेदकैवकारार्थक-त्वस्यैवाङ्गीकारेण विकल्पस्यैवाप्रसरेण तदनुपपत्तेरभावात् । नैयग्रोधग्रहणं करञ्जव्या-वृत्त्यर्थं, रौहीतकग्रहणं केवलनैयग्रोधव्यावृत्त्यर्थम् । एवं च रौहीतकाख्यवटमात्रस्य ग्रहणमिति सिद्धं भवति । एतस्यालाभे प्रसिद्धवटोदुम्बरातिरिक्तं यज्ञियवृक्षमात्रं ग्राह्यं तस्याप्यलाभे तदपीत्यपि सिध्यति । त्सरुर्दण्डस्तद्वतस्तद्रहितान्वा । अत्सरुकानित्यत्र स्वार्थे कप्रत्ययः । चम्यतेऽद्यते सोमरसो येषु होत्रादिभिरिति चमसाः । ते चतुरश्रा अर्थसिद्धपरिमाणा इति केचित्सूत्रकाराः । प्रादेशमात्राश्चतुरङ्गुलबिला इति बौधाय-नादयः । तत्रात्सरुमत्तायां पुरुषज्ञातानि लक्षणानि सांकेतिकानि कार्याणि । त्सरुम-त्तायां तु पुरुषज्ञातानि दण्डेषु विशेषलक्षणानि कार्याणीत्यत्र मूलं मानवसूत्रं—दक्षि-णस्यावालम्बदेशे चमसान्नैयग्रोधान्रौहीतकान्वा नानालक्षणान्त्सरुमत इति । अथैत-द्व्याख्यं दक्षिणस्य हविर्धानस्य, अवालम्बो नाम नीडाधोभागस्तत्र दश चमसान्न्यग्रो-धस्येमे नैयग्रोधास्तान्रोहीतकस्येमे रौहीतकास्तान्नानाचमसलक्षणोक्तानि दण्डेषु लक्ष-णानि येषां तान्त्सरुमतः सदण्डान्प्रागग्रानुदक्संस्थान्प्रयुनक्तीत्यर्थः । तथा च कठसू-त्रम्—प्रागग्रान्दश चमसान्सवृन्तानथ इति । वृन(न्त)मूल(लं)दण्ड इति यावत् । चम-सलक्षणानि मानवसूत्रे कठसूत्रे च—अथातश्चमसलक्षणानि व्याख्यास्यामोऽर्धात्परिमा-णानि पात्राणि भवन्ति व्यङ्गुलखाताश्चमसाः षडङ्गुलदण्डाश्चतुरङ्गुलेच्छायाः षडङ्गु-लविस्ताराः प्रादेशमात्राश्च दीर्घत्वेन तेषां दण्डेषु लक्षणानि भवन्ति ।

अरेखश्चमसो होतुरुन्मृष्टो ब्रह्मणः स्मृतः ।
उद्गातुरवमृष्टश्च स्वामिनः पार्श्वमृष्टकः ॥
एकरेखस्तु कर्तव्यः प्रस्तोतुश्चमसो बुधैः ।
द्विरेखो ब्राह्मणाच्छंसिनः प्रोक्तस्त्रिरेखः पोतुरुच्यते (?) ।
अभ्रिं तु कारयेन्नेष्टुराग्नीध्रस्य मयूखवान् ।
अच्छावाकस्य पद्मं कुर्यादच्छावाकस्य लक्षणम् ॥ इति ।

अरेखो रेखाशून्यो होतुश्चमसो भवतीत्यर्थः । उन्मृष्टः मृष्टस्तष्टो दण्डोपरिभागोऽ-धिकं तनूकृतश्चमसो ब्रह्मणो भवेदित्यर्थः । अव दण्डाधोभागो मृष्टस्तष्टोऽधिकं तनूकृत उद्गातुश्चमस इत्यर्थः । पार्श्वे दण्डपार्श्वे मृष्टस्तष्टोऽधिकं तनूकृतः स्वामिनो यजमानस्य चमस इत्यर्थः । एका रेखा तिर्यग्दण्डे यस्य स एकरेखः । स प्रस्तोतृचमसः । तिस्रो रेखास्तिर्यग्भूता दण्डोपरि यस्य स त्रिरेखः पोतुरित्यर्थः । नेष्टुश्चमसदण्डेऽभ्रिः काष्ठकुद्दा-लकस्तदाकारं कारयेदित्यर्थः । अभ्रिः स्त्री काष्ठकुद्दाल इत्यभिधानात् । आग्नीध्रचमस-

१ ग. प्रशास्तुश्च° । २ ग. प्रशास्तुश्चम° ।

दण्डे मयूखो बुधैः कर्तव्य इत्यर्थः। द्वे रेखे तिर्यग्भूते दण्डोपरि यस्य स द्विरेखो ब्राह्मणाच्छंसिन इत्यर्थः। खेकं तीक्ष्णमग्रं कुर्यात्तद्दण्डस्येत्यर्थः। अच्छावाकदण्डेऽजस्य च्छागस्य पदं कुर्यादित्यर्थः। एवं व्याख्यातं तद्भाष्ये। अथवा होतृचमसमारभ्याच्छावाकचमसपर्यन्तमेकैकरेखावृद्ध्या यावद्दशरेखं दण्डेष्वङ्कयेदित्यपि तद्भाष्यकृतोक्तम्। इदानींतनैरभियुक्तैरेवमुक्तानि—

> ब्रह्मणश्चतुरश्रः स्याद्धोतुस्तु परिमण्डलः।
> पृथ्वग्रो यजमानस्य त्र्यश्रिरुद्गातुरेव च॥
> प्रशास्तुरवतष्टः स्यादुत्तष्टो ब्रह्मशंसिनः।
> पोतुरग्रे विशाखी स्यान्नेष्टुः स्याद्दक्षिणावृतः॥
> अच्छावाकस्य रास्नावानाग्नीध्रस्य मयूखकः।
> सव्यावृतः सदस्यस्येत्येतच्चमसलक्षणम्॥ इति।

चतुरश्रत्वादीनि ब्रह्मादिचमसदण्डानां क्रमेण विशेषणानि। चतुरश्रश्चतुष्कोणः। परिमण्डलो वर्तुलः। पृथु स्थूलमग्रं यस्य स पृथ्वग्रः। त्र्यश्रिस्त्रिकोणः। अवतष्टोऽधस्तष्टः। उत्तष्ट ऊर्ध्वं तष्टः। विशाखी, अग्रभागे शाखाद्वयवान्। दक्षिणावृतो दक्षिणभागे तष्टः। अग्रभागे रास्ना रेखा तद्वान्। मयूखस्तीक्ष्णाग्रः। मयूखशब्दात्स्वार्थे कप्रत्ययः सव्यावृतो वामभागे तष्टः। अत्र मूलं मृग्यम्।

### प्रादेशमात्राण्यूर्ध्वसानूनि मध्ये संनतानि वायव्यानि।

अनेन वायव्यसंज्ञकपात्राणां स्वरूपं प्रदर्श्यते। प्रादेशमात्राणि प्रादेशप्रमाणानि। अत्र प्रादेशपरिमितदैर्घ्यविशिष्टकाष्ठप्रदेशस्य भागत्रयं कृत्वाऽग्रिमो भाग ऊर्ध्वशब्देनोच्यते। मध्य इत्यनेन मध्यमो भागः। अवशिष्टोऽधोभागोऽर्थतः। तत्र प्रादेशस्य द्वादशाङ्गुलत्वात्तस्य भागत्रयं चतुश्चतुरङ्गुलात्मकं भवति। तत्राग्रिम ऊर्ध्वशब्देनोपात्ते भागे सानु भवति। सानुशब्देनात्र बिलमुच्यते। मध्यमे भागे संनमनम्। अर्थात्तृतीयेऽधस्तने भागे बुध्नाकारः। एवं चोलूखलाकारता प्रदर्शिता भवति। पात्रस्य स्थौल्यं तु दैर्घ्यानुरोधेन। एतादृशलक्षणानि वायव्यानि वायव्यसंज्ञकानि पात्राणि भवन्ति यैर्देवतोद्देशेन सोमरसो गृह्यते। मानवसूत्रे—प्रादेशमात्राणि संलग्नमध्यानि तृतीयोदुप्तानीति। प्रादेशो द्वादशाङ्गुलः प्रमाणं येषां तानि प्रादेशमात्राणि प्रादेशोच्चानि वर्तुलानि संलग्नं कृशं मध्यं येषां तानि। तृतीयेन भागेनोदुप्तानि उत्खातानि चतुरङ्गुलबिलानीति भाष्यकृता व्याख्यातम्। कठसूत्रेऽपि वायव्यानि हस्तमात्राणि प्रादेशमात्राणि वा तृतीयखातानीति। स्थालीषु तु स्थालीति पृथग्व्यवहाराद्वायव्यत्वेऽपि नेदं लक्षणम्।

---

१ ग. स्वकं। २ क. तु दार्ढ्यानु॰।

स्थालीषु वायव्यत्वं तु काश्चतस्रः स्थालीर्वायव्याः सोमग्रहणीरितिश्रुतिलिङ्गात् । दधिग्रहपात्रं चतुःस्रक्तीति विशेषणादन्येषां वायव्यानां परिमण्डल आकारः ।

**यथा स्रुगदण्डैवं परिप्लुवा ।**

अदण्डा दण्डरहिता । दण्डरहितायाः स्रुचो यथा स्वरूपं निष्पद्यते तथा परिप्लुवायाः स्वरूपमित्यर्थः ।

**तेषां यान्यनादिष्टवृक्षाणि विकङ्कतस्य तान्यहोमार्थानि तु वारणस्य ।**

तेषां पात्राणां मध्ये यानि अनादिष्टवृक्षाणि, नाऽऽदिष्टोऽनादिष्टः । अनादिष्टो वृक्षो येषां तानि अनादिष्टवृक्षाणि । पात्राणीति शेषः । अनादिष्टवृक्षाणि पात्राणि विकङ्कतस्य भवन्तीत्यन्वयः । उत्तरत्राहोमार्थानीतिवचनाद्धोमार्थान्यनादिष्टवृक्षाणि विकङ्कतस्य भवन्तीति गम्यते । तुशब्दो वैलक्षण्यार्थः । विकङ्कतो भाषया सुतवीति प्रसिद्ध इति केचित् । वेहेंकल इत्यन्ये । वारणो वायवारण इति । तत्राहोमार्थान्यनादिष्टवृक्षाणि उपांश्वादीनि तेषु वैकङ्कतत्वं भवति । अहोमार्थानादिष्टवृक्षाणि तानूनप्त्रसंबन्धिचमस(सः)परिकर्मिकर्तृकसोमतन्त्रसंबन्धिवेदिकरणसाधनीभूतः स्फ्यो विघनं चेत्येतानि त्रीण्येव प्रकृतौ । यदि जुहोमीति लिङ्गादेतस्यापि होमार्थत्वमित्युच्यते तदा वैकङ्कत एव । अस्मिन्पक्षे बहुत्वं विकृतिभूतसोमतन्त्रसंबन्धिपात्राण्यादायैव सार्थकं भवति । तानूनप्त्रसंबन्धिचमसस्य वारणवृक्षजत्वेऽपि विकृतिभूतसोमतन्त्रसंबन्धिपात्राणि वारणवृक्षजान्येव । तानि तत्र तत्र व्यक्तो भविष्यन्ति । वायव्यानां बहुत्वात्प्रधानत्वाच्चात्र परिभाषाकरणं नतु तानूनप्त्रसंबन्धिचमसावसरे । न च दर्शपूर्णमाससंबन्धिपात्रप्रयोगावसर इयं परिभाषोक्तैव तत्रैव सर्वत्रेति परिभाषोत्तरं वक्तव्यम् । एवं चात्रापि निर्वाहे पुनःपरिभाषाकरणक्लेशो व्यर्थ इति वाच्यम् । उभयत्र परिभाषाकरणस्यैष्टिकसौमिकतन्त्रव्यतिरिक्तपाशुकगार्ह्यादितन्त्रपरिसंख्यार्थत्वेन सार्थक्यात् । तेन पाशुक्यां समवत्तधान्यां गार्ह्यपात्रेषु दर्व्यादिषु चरकसौत्रामणिसंबन्धिसुराग्रहणार्थकवायव्यपात्रेषु कौकिलीसौत्रामणीसंबन्धिपयोग्रहार्थकवायव्यपात्रेषु चेयं परिभाषा न प्रवर्तते । एवं च होमार्थेषु विकङ्कत एव । अहोमार्थेषु वारण एवेत्ययं नियमो नेति सिद्धं भवति । तेषामित्यस्य सर्वनाम्नो बुद्धिस्थपरामर्शित्वमादाय सर्वपात्रपरामर्शित्वमेव स्वीकर्तव्यं नतु संनिहितपरामर्शित्वमादाय वायव्यचमसपरिप्लवामात्रपरामर्शित्वम् । एतेषु अहोमार्थत्वस्य कुत्राप्यसंभवेनासंगतत्वापत्तेः । होमोऽर्थः प्रयोजनं येषां तानि न होमार्थानि अहोमार्थानि । होमोऽत्राङ्गप्रधानसाधारण एव गृह्यते । एवं च द्रोणकलशस्य वैकङ्कतत्वमेव । व्याघारणार्थचमसस्यापि वैकङ्कतत्वमेव । द्रोणकलशस्य तु होमार्थत्वेऽपि न वैकङ्कतत्वनियमः ।

वृक्षपरिभाषोत्तरमुपदेशात् । तेन यस्य कस्यचिद्यज्ञियस्य वृक्षस्य भवति । तथा चाऽऽपस्तम्बः—द्रोणकलशं प्रकृत्य तस्य वायव्यैर्वृक्षनियम इति । परं तु इयान्वायव्यतो द्रोणकलशे भेदः । वायव्येषु वैकङ्कतालाभे यज्ञियवृक्षोपादानम् । द्रोणकलशे तु अयं नियमो नेति द्रष्टव्यं मार्तिकत्वमेतेन द्रोणकलशस्य न भवतीति प्रदर्शितं भवति ।

युनज्मि ते पृथिवीं ज्योतिषा सहेति दक्षिणस्य हविर्धानस्य पश्चादक्षं द्रोणकलशꣳ सदशापवित्रं प्रयुनक्ति ।

द्रोणकलशपरिमाणं तु समाख्यावशाद्द्रोणपरिमितधान्येन पूर्णो भवति एतावत्परिमाणकः । द्रोणस्य द्रोणपरिमितधान्यस्य कला मात्राः कणा अस्मिञ्शेरते मान्तीति द्रोणकलशः । तथा च यास्कः—कलशः कला अस्मिञ्शेरते मात्रा इति । ननु कम्बुग्रीवादिमान् । याज्ञिकसमाचारात् । परिप्लवया द्रोणकलशाद्ग्रहं गृह्णातीति वक्ष्यमाणत्वात् । परि सर्वतः प्लवते तरतीति हि परिप्लवाशब्दार्थः । कम्बुग्रीवादिमति द्रोणकलशे प्रवेशाभावेन तदभावात् । तस्मात्समचतुरश्रो द्रोणकलशो वर्तुलो वेति याज्ञिकसमाचारः । उत्तरत्रोत्तरग्रहणादेव पूर्वत्र दक्षिणस्यार्थाल्लाभे दक्षिणग्रहणं पूर्वत्र दक्षिणस्योत्तरस्य वेत्यनियमशङ्कां व्यावर्तयितुम् । अक्षस्य पश्चादिति पश्चादक्षं, प्रोक्ताभ्यां द्वाभ्यां दशापवित्राभ्यां सहितं दशापवित्रद्वयं द्रोणकलशमध्ये निधाय तत्सहितं प्रयुनक्तीत्यर्थः । न्यक्त्वावचनादुत्तानस्यैव प्रयोगः । एवमाधवनीयपूतभृदेकधनानामपि । उत्तरस्याऽऽदिना पूर्वस्यान्तं विद्यादिति परिभाषयैव मन्त्रान्तलाभे कृत्स्नपाठो मन्त्रान्तेन कर्म संनिपातयेदितिपरिभाषाप्रवृत्त्यभावं ज्ञापयति । तेन युनज्मीतिक्रियापदोच्चारणकाल एव प्रयोग इति सिद्धं भवति । एवमग्रिमेष्वपि त्रिषु मन्त्रेषु ज्ञेयम् ।

युनज्मि वायुमन्तरिक्षेण ते सहेत्युत्तरस्य नीड आधवनीयम् ।

उत्तरग्रहणं दक्षिणनिवृत्त्यर्थम् । नीडं शकटोपस्थः । आधूतो निष्पीड्य गालित एव सोमोऽवनीयते यस्मिन्नित्याधवनीयस्तम् । पृषोदरादित्वात्साधुत्वम् ।

युनज्मि वाचꣳ सह सूर्येण त इति तस्यैव प्रधुरे पूतभृतम् ।

तस्येतिवचनं नीडपरामर्शार्थम् । अन्यथोत्तरहविर्धानस्यानुवृत्त्यैव प्राप्तिसंभवेन तत्परामर्शस्य निरर्थकत्वापत्तेः । पवमानग्रहान्कलशानिति सूत्र आधवनीयपूतभृतोरपि कलशयोरेव वक्ष्यमाणत्वेन कलशावेवैतयोः । तेन मृन्मयत्वं कलशाकारता च भवति । स्पष्टं कठसूत्रे—आधवनीयपूतभृतौ च कुम्भौ सापिधानाविति । कुम्भौ कलशौ कलशस्थाल्योराकारकृतः कश्चन भेदः । विस्तृतबुध्नमुखा ह्रस्वाकारा स्थाली । अविस्तृतबुध्नो विस्तृतमुखो दीर्घाकारः कलश इति द्रष्टव्यम् । प्रकृष्टा विस्तीर्णा यत्र पूतभृत्स्थापितो न पतति एतादृशी धूर्यस्मिन्स प्रधुरो देशस्तस्मिन्पूतभृतं प्रयुनक्तीत्यर्थः । ऋक्पूरब्धूःपथामानक्ष इति अकारः समासान्तः । अ अनक्ष इति पदच्छेदादयं लभ्यते ।

प्रशब्दो नीडसंबद्धसमीपदेशग्रहणार्थः । नीडसमीपवर्तिविस्तीर्णतिर्यक्काष्ठापरपर्यायधुर्विशिष्टे देशे पूतभृतं प्रयुनक्तीति निष्कृष्टोऽर्थः । एवकारेण नीडासंबद्धकेवलोत्तरहविर्धानतिर्यक्काष्ठवतो देशस्य सूत्रान्तरोक्तहविर्धानधुरुकस्य च व्यावृत्तिः क्रियते । एतेन ज्ञायते यत्रैवकारो न श्रूयते तत्रासंभवे सूत्रान्तरोक्तमपि संग्राह्यं यत्र श्रूयते तत्र तदेव नियतमसंभवेऽपीति । पूतभृदित्यन्वर्था संज्ञा । पूतं गालितमेव बिभर्ति सोममिति पूतभृदिति । वक्ष्यति च तिरःपवित्रं पूतभृत्येकदेशमवनयन्त ऊर्ध्वं पूतभृति तिरःपवित्रमवावनीयत इति । आधवनीयपूतभृतौ मृन्मयावेव । यथोक्तं बाह्वृच्ये-पूतभृतमाधवनीयं च स्थालीमिति । स्थालीशब्दान्मृन्मयत्वम् ।

**पश्चादक्षं तिस्र एकधना स्थालीयुनज्मि तिस्रो विपृचः सूर्यस्य त इति स्रुचोऽभिमृशति ।**

उत्तरस्य हविर्धानस्येत्येवानुवर्तते । अक्षपदसाहचर्यात् । अक्षस्य पश्चादिति पश्चादक्षम् । अयमव्ययीभावः । तिस्र इति वचनं पश्चादक्षं तिसृणामेव प्रयोग इति नियमार्थम् । तेनान्यासामेकधनानां यथासंभवं प्रयोग इति सिद्धं भवति । न च तिस्र एवैकधना इति भ्रमितव्यम् । उत्तरार्धो अयुज एकधना स्थालीरादायाऽऽद्रवन्तीति वक्ष्यमाणसूत्रविरोधापत्तेः । नचैवं मन्त्रलिङ्गविरोधः । पश्चादक्षं प्रयोक्तव्यासु तिसृष्वेकधनासु लिङ्गानुरोधेन मन्त्र इतरासु कस्त्वेत्येव मन्त्रावृत्त्यत्येवंरीत्या लिङ्गविरोधपरिहारात् । सोमवर्धनार्था आप एकधनास्तासां स्थालीर्मृन्मय्य इत्यर्थः । एकधनान्घटानित्यापस्तम्बः । विसर्गरहित एव पाठः । स्रुचोऽभिमृशतीति सूत्रे मन्त्रानुपदेशात्प्रथमाभिमर्शे दर्शनाबाध आवृश्णीत्यनयैवाभिमर्शनम् । उदीच्यानां स्रुचोऽभिमृशति यथा पुरस्तादिति पाठः सोत्रानुकूल एव । अथवा युनज्मि तिस्र इत्येष मन्त्रः स्रुगभिमर्शनार्थक एव । आपस्तम्बेन युनज्मि तिस्रो विपृचः सूर्यस्य त इति स्रुचः सन्ना अभिमन्त्रयत इति स्रुक्ष्वेव विनियुक्तत्वात् । तेन पश्चादक्षं प्रयोक्तव्यानां तिसृणामप्येकधनानां कस्त्वेत्येव । नच पृषदाज्यधान्या अपि अभिमर्शसंस्कारस्याऽऽवश्यकत्वेन तया सह स्रुचां चतुष्ट्वेन लिङ्गविरोधात्कथमेतस्य मन्त्रस्य स्रुगभिमर्शनकरणत्वमिति वाच्यम् । उपभृत्समाजात्येनोपभृत्पृषदाज्यधान्योरेकत्वविवक्षया त्रित्वोपपत्तेर्लिङ्गविरोधाभावात् । प्रचरण्या यागसंबन्धित्वाभावेन नाभिमर्शः । स्रुक्त्वस्यास्यामपि सत्त्वात्तस्या अप्यभिमर्श इति आग्रहे उपभृद्जुहूत्वसाजात्येन तयोरप्येकत्वविवक्षया त्रित्वोपपत्तिर्भवत्येव । वसाहोमहवन्यास्तु रिक्तत्वान्नाभिमर्शः । तूष्णीमेव स्रुचामभिमर्श इति केचित् ।

**अत्राधिषवणचर्मणो ग्राव्णामिति प्रयोजनमेके समामनन्ति ।**

अधिषवणफलकाभिमन्त्रणोत्तरमधिषवणचर्मणः प्रोक्षणमास्तरणं ग्राव्णामासादनमुपरे संमुखकरणं तेषां प्रोक्षणं च यदुक्तं तत्तत्र न कर्तव्यं किं त्वत्रास्मिन्काल एव

कर्तव्यमित्येक आचार्याः समामनन्ति वदन्तीत्यर्थः। अधिषवणचर्मास्तरणमेवाधिषवण-चर्मणः प्रयोजनं प्रोक्षणस्य तदङ्गत्वात्तस्यापि ग्रहणम्। ग्राव्णां त्वासादन-मेव प्रयोजनं संमुखीकरणविशिष्टप्रोक्षणस्यापि तत्संस्कारत्वात्तत्संबद्धत्वाच्च तस्याप्यत्र ग्रहणं ननु प्रयोजनं नाम पदार्थान्तरं तस्यान्यत्रानुक्तत्वेनात्रेति कालविशेषस्याधिकर-णत्वप्रदर्शनमनुपपन्नं स्यात्। अत आस्तरणासादने एव प्रयोजनशब्देन ग्राह्ये इति द्रष्टव्यम्। उक्तं चैतदापस्तम्बेनात्रैव रक्षोहणो वलगहनः प्रोक्षामि वैष्णवमित्यधिषवण-चर्म प्रोक्ष्य रक्षोघ्नो वो वलगघ्नः प्रोक्षामि वैष्णवानिति ग्राव्णो रक्षोहा त्वा वलगहा वैष्णवमास्तृणामीत्यधिषवणफलकयोरुत्तरलोमाऽऽस्तीर्य रक्षोघ्नो वो वलगघ्नः सम्साद-यामि वैष्णवानिति तस्मिंश्चतुरो ग्राव्णः प्रादेशमात्रानूर्ध्वसानूनाहननप्रकारानश्मनः सम्सादयन्त्युपरं प्रथिष्ठं मध्ये पञ्चममिति। एतेन कस्त्वेतिमन्त्रकरणकप्रयोजनशङ्का परास्ता। इतिशब्दोऽत्र समुच्चयार्थे। वायव्यपात्रादिप्रयोजनेन सह समुच्चयः।

अपां क्षया ऋतस्य गर्भा भुवनस्य गोपाः श्येना अतिथयः पर्वतानां ककुभः प्रयुतो न पातारो वग्नुनेन्द्रं ह्वयत घोषे-णामीवाँश्चातयत युक्ताः स्थ वहत स्वर्गं लोकमभि-इत यजमानमित्युपरे ग्राव्णः संमुखान्कृत्वाऽभिमन्त्रयते।

संमुखीकरणस्य यथायथं प्रोक्षणाभिमन्त्रणार्थत्वात्प्रतिप्रधानं गुणावृत्तिरिति न्याया-न्मध्ये प्रोक्षणेन व्यवधानाच्च द्वितीयं संमुखीकरणमपि भवत्येव।

आसन्यान्मा मन्त्रात्पाहीत्याग्नीध्रे जुहोति।

आहवनीयबाधनार्थमाग्नीध्रग्रहणम्। जुह्वाः प्रचरण्याश्च व्यापृतत्वादाज्यस्थाल्या-ज्येन स्रुवेणैवायं होमः। अपूर्वाज्यादिति केचित्। अत्र मूलं चिन्त्यम्। न च प्रचरणीस्थाज्यैकदेशेन तयैव होमोऽस्त्विति वाच्यम्। एतस्याऽऽज्यस्याग्रे विनियोगस्य विधास्यमानत्वेनात्र तेन होमासंभवात्। अभिशस्त्या इति मन्त्रान्तः।

हृदे त्वा मनसे त्वेति द्वाभ्यामन्तरेषाः राजानं ग्रावसूपावहरति।

हृदे त्वा मनसे त्वा सोम राजन्नेह्यवरोहेति द्वाभ्यां मन्त्राभ्यामेषामन्तरेणैषयोर्मध्येन नीत्वा संमुखीकृतेषु ग्रावसूपावहरति उपसादयति। भुरिगनुष्टुप्छन्दोलक्षणाक्रान्तत्वा-द्यच्छेत्यन्तः पूर्वो मन्त्रः। अथोत्तरः सोम राजन्नेहीति। स्पष्टमाहाऽऽपस्तम्बः— अत्र राजानमन्तरेषु ग्रावसूपावहरति हृदे त्वा मनसे त्वा सोम राजन्नित्येताभ्यामिति। बौधायनोऽपि— दक्षिणस्य हविर्धानस्यान्तरेणेषु राजानमुपावहरति हृदे त्वा मनसे त्वा सोम राजन्नेह्यवरोहेति द्वाभ्यामिति।

---

१ ख. ग. °लदघ्नः। २ ख. ग. °क्षोद त्वा। ३ ख. ग. °लदघ्नः। ४ क. पृथिष्ठं। ५ ख. ग. °मन्तरेणेषे°।

**आग्नीध्रे पञ्चहोतारं जुहुयात्स्वर्गकामस्येत्येकेषाम् ।**

अग्निर्होतेति पञ्चहोतृसंज्ञको मन्त्रस्तं जुहुयाद्दर्विहोमधर्मेण पूर्ववत्स्रुवेणैवायं होमः । होमार्थत्वात्सग्रहः पञ्चहोता । आग्नीध्रग्रहणमाहवनीयनिवृत्त्यर्थम् । जुहुयादित्यन्तमेकं सूत्रम् । स्वर्गकामस्येत्यपरम् । तेन नित्यत्वं काम्यत्वं च सिध्यति । स्पष्टमेतमर्थमाहाऽऽपस्तम्बः—पञ्चहोतारं चाऽऽग्नीध्रे स्वर्गकामस्य नित्यवदेके समामनन्तीति । अस्मिन्नवसरे होमविषये परिभाषाविशेषमाहाऽऽपस्तम्बः—मध्येऽग्नेराज्याहुतीः पश्वाहुतीः पुरोडाशाहुतीरिति जुहोत्यभितः सोमाहुतीरिति । याः सोमाङ्गभूता आज्यपशुपुरोडाशानां प्रधानाहुतयस्ता मध्येऽग्नेर्जुहोति तदङ्गभूतास्त्वाज्यभागस्विष्टकृदाज्याहुतीर्यथाप्रकृत्येव यास्तु सोमाहुतयस्ता अभितो जुहोति यत्र यत्र दिशि या या आहुतिरुक्ता तत्र पार्श्वतोऽग्नेर्जुहोति न मध्य इत्यस्यार्थः ।

**पुरा वाचः प्रवदितोः प्रातरनुवाकमुपाकरोति ।**

पुरा मनुष्याणां पक्षिणां वा वाचः प्रवदिताः प्रवदनात्प्रातरनुवाकमुपाकरोति । तथा चाऽऽपस्तम्बः—पुरा वाचः पुरा वा वयोभ्यः प्रवदितोः प्रातरनुवाकमुपाकरोतीति । आश्वलायनेन पक्षिप्रवदनमेव प्रातरनुवाकार्थमन्त्रणे निमित्तमुक्तम्—अथैनस्या रात्रेर्विवासकाले प्राग्वयसां प्रवादात्प्रातरनुवाकायाऽऽमन्त्रित इति । प्रवदितोरिति भावलक्षणे स्थेण्, इति पाणिनिसूत्रात्तोसुन्प्रत्ययः । प्रातरनूच्यत इति प्रातरनुवाकस्तस्योपाकरणं तदारम्भार्थं होतुः प्रवर्तनम् । उपाकरणशब्दाच्छन्दोवाददर्शं सूचितं भवति । तथा च प्रतिगरोऽत्र सिद्धो भवति । स्पष्टः प्रतिगरप्रकार उक्त आपस्तम्बेन—मनसा ते वाचं प्रतिगृणामीत्यध्वर्युर्होतारमाहेति । इत्युक्त्वा मनसा प्रतिगराननुसंधत्तेऽध्वर्युरित्यस्यार्थः । ननु स्तोत्रग्रहाभावात्कथमेतदिति चेत् । उच्यते—छन्दोगैर्विश्वरूपाणां गानस्यैव स्तोत्रत्वं वसतीवरीणां ग्रहत्वं चोक्तं तेनैव सर्वसंपत्तिर्भवतीति । बौधायनेनापि कर्मान्त उक्तम्—क उ खलु वासतीवरस्य स्तोत्रभक्तिर्भवति शस्त्रभक्तिश्चेति विश्वरूपासु हास्य स्तोत्रभक्तिर्भवति प्रातरनुवाके ह शस्त्रभक्तिरिति । ननु नचान्यत्र विश्वरूपा ज्योतिष्टोमादिति लाट्यायनद्राह्यायणाभ्यां ज्योतिष्टोमव्यतिरिक्तस्थले विश्वरूपागानाभावस्योक्त्वेन स्तोत्राभावात्प्रातरनुवाकाभावः प्रसज्येतेति चेन्न । छन्दोगवचनबलादग्निष्टोमोक्थ्यादिषु प्रकृतिभूतेषु कृतं सद्विकृतिष्वप्युपकरोतीत्येवमेव कल्पनात् । न चातिप्रसङ्गः । अन्यत्रैवंरूपवचनाभावेनातिप्रसङ्गाभावात् । युञ्जे वाचꣳ शतपदीं गाये सहस्रवर्तनि गायत्रं त्रैष्टुभं जगद्विश्वा रूपाणि संभृता देवा आकाꣳसि चक्रिर इति विश्वरूपागानमन्त्रादपि प्रकृतिभूतज्योतिष्टोमशब्दवाच्याग्निष्टोमोक्थ्यषोडश्यतिरात्रात्मकप्रकृतिभूतक्रतुचतुष्टये तस्य विश्वरूपागानस्य विकृतिष्वपि उपकारो ज्ञायते । कथमि-

---

१ ग. °विषयमा° ।

त्याशङ्कायां तदर्थमर्थ उच्यते—शतशब्दोऽनन्तवाची । शतमनन्तं भवतीति निरुक्तात् । शतं पदानि अनन्तार्थवाचकानि पदानि यस्याः सा शतपदी तां शतपदीम् । एतादृशीं वाचं सुत्यार्थं युञ्जे योजयामि । सहस्रशब्दोऽप्यनन्तवाची । सहस्राणामनन्तानां विकृतीनां वर्तनिरूपो मार्गो येभ्यो यतोऽतस्तेष्वग्निष्टोमादिषु प्रकृतिभूतेषु सहस्रवर्तनी-ष्वेवाहं गाये तेनैव विकृतिष्वपि तदुपकारसिद्धिरिति तात्पर्यार्थः । सहस्रवर्तनीति सुपां सुलुगिति सूत्रेण सप्तम्या लुकि सति भवति । येषु गायत्रं त्रैष्टुभं जगत् । उपलक्षणमे-तदन्येषामपि च्छन्दसाम् । तेनान्यान्यपि च्छन्दांसि अत्र गृह्यन्त । विश्वा विश्वानि विकृत्यात्मकानि रूपाणि संभृता संभृतानि देवा इन्द्रादयो येषु स्वस्वभागग्रहणार्थमोकांसि गृहाणि चक्रिरे कृतवन्त इति मन्त्रार्थः । अथवापाकरणशब्द आरम्भार्थक एव । प्रतिगरणं वाचनिकम् । प्रातरनुवाकं जाग्रदुपासीताध्वर्युः स्वप्याद्वेति कात्यायनेन पक्षे स्वापोऽप्युक्तः । अयं च जाग्रत्ताया असंभव द्रष्टव्यः ।

द्वेष्यस्य प्रोषितायाम् ।

द्वेष्यस्य शत्रोः सप्तम्यर्थे षष्ठी । सा च निमित्तार्थिका । द्वेष्ये सति तन्निमित्तं तत्पराभवनिमित्तमिति यावत् । प्रोषितायां प्रकर्षेणोषितायां समाप्तायां रात्रौ प्रातरनु-वाकमुपाकरोतीत्यर्थः । उष प्रुष प्लुष दाह इति धातुसूत्रे दाहशब्देन नाशो लक्ष्यते । तेन नष्टायां समाप्तायामित्ययमर्थो लभ्यते ।

देवेभ्यः प्रातर्यावभ्योऽनुब्रूहि ब्रह्मन्वाचं यच्छ सुब्रह्मण्य सुब्रह्मण्यामाह्वय प्रतिप्र-स्थातः सवनीयान्निर्वपेति संप्रेष्यति ।

प्रातर्यान्तीति प्रातर्यावाणो देवविशेषा अग्न्युषोश्विरूपाः । तदागमनार्थं प्रातरनुवा-कमनुब्रूहीत्यर्थः । होताऽत्र प्रेष्यः । बौधायनेन प्रातर्यावभ्यो देवेभ्यो होतरनुब्रूहीति प्रेष्यनिर्देशः स्पष्टमेव कृतः । सवनीयान्सवने सौत्यऽहनि भवाः सवनीयास्तान्पुरोडा-शान्निर्वपेति धानादिष्वपि पुरोडाशशब्देन व्यवहाराऽत्रेत्यत्र प्रमाणं सवनीयपुरोडाश-यागे वक्ष्यते । यथासंप्रैषं स्वं स्वं कर्म प्रेष्याः कुर्वन्ति । अस्यां सुब्रह्मण्यायां पितापुत्रीया सुब्रह्मण्या भवतीतिवचनाभावान्न पितापुत्रीयत्वनियमः ।

प्रतिप्रस्थाता सवनीयानां पात्रसंसादनप्रभृतीनि कर्माणि प्रतिपद्यते यथार्थमोपधिपात्राणि प्रयुनक्ति ।

प्रैषेणैव सिद्धे पुनः प्रतिप्रस्थातृग्रहणमध्वर्युव्यावृत्त्यर्थम् । अन्यथा निर्वापमात्रं प्रतिप्रस्थातृकर्तृकमितरत्करम्भोत्पादनपर्यन्तं सवनीयतन्त्रमध्वर्युकर्तृकमिति स्यात् । अत अध्वर्युव्यावर्तनायाऽऽवश्यकमेव प्रतिप्रस्थातृग्रहणम् । सवनीयानामिति वचनं

नियमार्थं सवनीयसंबन्धिकर्मैव प्रतिप्रस्थातृकर्तृकं न तु सौमिकमिति। तथा च शृणोत्व-ग्निरित्यादावनुक्तोऽप्यध्वर्युरेव करोतीति सिध्यति। अथवा सवनीयानामिति वचनं सवनीयानामेव प्रतिप्रस्थाता नियत इतरेषु सौत्येषु सौम्यादिनिर्वापेषु नायं नियत इति। तेनाध्वर्युवत्प्रतिप्रस्थाताऽपि सौम्यादिचरुषु पक्षे कर्ता भवतीति सिद्धं भवति। प्रतिप्रस्थातृकर्तृकता सौम्यचरौ बौधायनेन स्पष्टमेवोक्ता प्रैषेणैव—प्रतिप्रस्थातर्वारुणमेककपालं निर्वप सौम्यस्य विद्धीति। अत्र नियमार्थं प्रतिप्रस्थातैव करोति। तेन माध्यंदिनसवनतृतीयसवनयोः पक्षेऽन्यकर्तृकताऽप्यस्तीति सिद्धं भवति। स च बौधायनसूत्रे दृष्टत्वादाग्नीध्रः। पात्रसंसादनप्रभृतीनीतिवचनात्पाणिप्रक्षालनोलपराजीस्तरणयोर्निवृत्तिः। अथवोलपराजीस्तरणमात्रस्यैव निवृत्तिः। तस्य जातत्वात्। पाणिप्रक्षालनं तु कर्मणे वां देवेभ्यः शकेयमित्याह शक्त्या इति शक्तिरूपपुरुषनिष्ठसंस्कारस्यावश्यमपेक्षितत्वात्कर्तव्यमेवेति। तथा चाऽऽपस्तम्बः—सवनीयानां पाणिप्रक्षालनादिकर्म प्रतिपद्यत इति। प्रतिपद्यत आरभत इत्यर्थः। यथार्थं यथाप्रयोजनम्। ओषधिग्रहणस्य पाशुकव्यावृत्तिपरत्वादैष्टिकहविरुपलक्षणीयमनेन। तेनाऽऽमिक्षावाजिनसंयुक्तानामपि प्रयोगः। यानि पश्वर्थं न प्रयुक्तानि अर्थवन्ति च तानि प्रयुनक्तीत्यर्थः। तानि च शूर्पकृष्णाजिनशम्योलूखलमुसलदृषदुपलावाजिनपात्रकुटरुपात्रीद्विरूपमेक्षणप्राशित्रहरणप्रणीताप्रणयनप्राक्तनेडापात्रप्रातर्दोहपात्रामिक्षोद्धरणपात्रवाजिनोद्धरणपात्रधानार्थपात्रकरम्भार्थपात्रलाजार्थपात्रमर्जनार्थमेक्षणमदन्तीपात्रचतुर्धाकरणपात्रपिष्टलेपफलीकरणपात्राणीत्येतानि। स्फ्याग्निहोत्रहवणीस्रुवजुहूपभृद्ध्रुवाज्यस्थाल्युपवेषाः पाशुका एव। वेदस्य प्रयुक्तस्यापि पशुपुरोडाशे पुनःप्रयोगविधानदर्शनादत्रापि प्रयोगः। पशुपुरोडाशविषयत्वाद्विधानस्य तत्रैव प्रवृत्तिर्नात्रेत्याग्रहे न वेदप्रयोगः। पवित्रे कृत्वा यजमान वाचं यच्छेति संप्रेष्यति वाग्यतः पात्राणि संमृशतीति पशुसूत्रात्। पशौ प्रणीतानामभावेनात्र प्रसङ्गत उपकाराभावात्प्रणीताप्रणयनं भवत्येव। सवनीयानां मार्जनप्रभृतीनि कर्माणि प्रतिपद्यते यथा निरूढपशुबन्ध इति वक्ष्यमाणपशुबन्धातिदेशेन मार्जनपिष्टलेपफलीकरणहोमकपालविमोचनवदेतेषामपि प्रापितत्वाच्च सवनीयार्थं प्रणीताभेदस्याऽऽवश्यकत्वात्। नचैतद्भिन्नविषयकमेतदिति वाच्यम्। संकोचे प्रमाणाभावात्। अथवा यदि प्रणीता न विद्येरन्याः काश्चन यजुषात्पूता ताभिः संयौतीत्यापदर्थवाद इति सूत्रादत्र प्रणीताभाव एव। कोऽस्य विषय इति चेदुच्यते—प्रणीतानिषेधेन क्त्वाप्रत्ययबोधिताव्यवहितत्वेन च प्रणीतारहितानि यानि प्रसङ्गेन प्रणीतासापेक्षाणि कर्माणि यथा सौमिकेषु पशुषु सवनीया देविका देवसूहविर्दार्वीत्यादीनि तान्येतस्य विषयः। आपच्छब्देन संकटविषय एतत्प्रवर्तते न प्रणीतासमकक्षत्वेन सर्वत्र। नन्वनेनैव सूत्रेणावभृथवैश्वानरीयादावपि निषेधेनैव सेत्स्यति सति तत्र तत्र यजुरुत्पूताभिः संयौतीति वचनं व्यर्थमिति चेत्सत्यम्। अपूर्वत्वेन तत्र तत्राप्राप्तेर्वारणार्थं तस्य वचनस्यावश्यमपेक्षि-

तत्वात् । न च संयवनं विना पुरोडाशान्यथानुपपत्त्यैव तत्सिद्धेस्तद्दोषतादवस्थ्यमिति वाच्यम् । यजुरुत्पूतत्वविधानार्थत्वेन तद्वचनोपपत्तेस्तद्दोषतादवस्थ्याभावात् । निरूढपशुसंबन्धिपशुपुरोडाशेऽपि यजुरुत्पूताभिः संयवनं वारयितुं तत्र प्रणीतावचनम् । उपवेषस्य पश्वर्थस्यापि उद्सनं पशुतन्त्रसमाप्तावेव । नन्वेवं प्रणीताप्रणयनाभाव उपवेषोद्सनाभावे च कर्माणि प्रतिपद्यत इतिबहुवचनानुपपत्तिरिति चेन्न । पिष्टलेपफलीकरणात्मकहोमद्वयात्मकं कर्मद्वयमादाय बहुवचनोपपत्तेः । तथा च यजुरुत्पूताभिरेव संयवनं पक्षे सिद्धं भवति । तथा च भरद्वाजः–यजुरुत्पूताभिः पुरोडाशं श्रपयतीति । बौधायनश्च पशुपुरोडाशे स्थित्वाऽऽह प्रोक्षणीशेषेण पिष्टानि संयौति यावदेवं सवनीयानामिति । पशावुपवेषस्य शामित्राङ्गारनिरूहणार्थमावश्यकत्वेन नियतत्वात्तदुपवेषेणैव कार्यसिद्धिः । वेदाग्राणि चतुर्धा विभज्यैकं भागं पाशुकपात्रेषु प्रयुनक्ति तेनैव स्रुचः संमार्ष्टि तमेव प्रहरति च । अपरो भागोऽत्र प्रयोज्यः । तेनैव वाजिनपात्रप्राशित्रहरणयोः संमार्गः । तमेव प्रहरति च । अवशिष्टौ द्वौ भागौ माध्यंदिने सवने तृतीयसवने च प्राशित्रहरणसंमार्गार्थं यथायथं प्रयोज्यौ तौ तत्र तत्र प्रहरति च । इध्मप्रव्रश्चनानामभ्याधानं पाशुकपात्रेषु प्रयुक्तानामपि प्रातःसवनसंबन्धिनि तृतीयसवनसंबन्धिनि वा सवनीयपुरोडाशतन्त्रान्तर्गतपिष्टलेपफलीकरणहोमे विभज्य त्रिषु सवनेषु वा ।

विशेषपात्राण्याह–

**द्वे भर्जनार्थे कपाले अष्टौ पुरोडाशार्थान्यामिक्षार्था[१] स्थालीम् ।**

भर्जनमेवार्थः प्रयोजनं ययोस्ते द्वे कपाले बृहती भवतः । एकं धानार्थमेकं लाजार्थम् । बृहत्त्वं योग्यतया । कपालशब्दः खर्परावयवे रूढः । तेन शरावं कपालत्वेन ये प्रयुञ्जते त उपेक्ष्याः । भर्जनार्थे कपाले इति द्विवचनेनैव द्वित्वसिद्धौ द्विग्रहणं सजातीयत्वं द्वयोर्ज्ञापयति । तेन तुल्यपरिमाणत्वं सिद्धं भवति । आमिक्षार्थां स्थालीमिति आकृतिविशिष्टपदार्थः स्थालीशब्दवाच्यः स एवात्र भवति नतु कुम्भीशरावादीत्येतादृशार्थबोधनार्थम् ।

**निर्वपणकाल इन्द्राय हरिवते धाना निर्वपतीन्द्राय पूषण्वते करम्भः सरस्वत्यै भारत्यै परिवापलाजानिन्द्राय पुरोडाशमष्टाकपालम् ।**

निर्वपणकाल इत्येतदातिथ्यावद्व्याख्येयम् । इन्द्राय हरिवते धाना निर्वपतीत्यादिनाऽष्टाकपालमित्यन्तेन कस्यै देवतायै किं द्रव्यमित्याकाङ्क्षा निवार्यते । ननु इन्द्राय पुरोडाशमित्येतावदेव वक्तव्यम्, अष्टाकपालत्वं तु अष्टौ पुरोडाशार्थानीत्यनेनैव

---

१ ख. ग. °र्थां प्रो° ।

सिद्धम्, एवं चाष्टाकपालमिति वचनं व्यर्थमिति चेन्न। सर्वैन्द्रत्वाभावपक्ष ऐन्द्रः पुरोडाशोऽष्टाकपाल एव भवति न त्वेकादशकपालो भवतीतिज्ञापनार्थत्वेन वैयर्थ्या-भावात्। तत्प्राप्तिस्तु ऐन्द्रपुरोडाशस्य सर्वत्रैकादशकपालत्वप्रसिद्ध्या। धानादिशब्दानां भाविनीं संज्ञामादाय प्रवृत्तिः। नानाबीजविषये नानाबीजेषु समवेतेष्वेकमुलूखलं मुसलꣳ शूर्पं कृष्णाजिनं चेतिपरिभाषातः। उलूखलादीनां चतुर्णां चकारसंगृहीतदृषदु-पलयोश्च न प्रतिबीजं भेदः। प्रदेशभेदेन निर्वापोद्वापौ। विवेकपरापवने तु सामर्थ्या-त्पात्रान्तरेष्वेकैकस्य बीजस्य भवतः। दृषद्यधिवापः पर्यायेण कृष्णाजिने प्रस्कन्दनं संवापश्च प्रदेशभेदेनेत्यादि द्रष्टव्यम्। ब्रह्मयजमानौ यथास्थितावेव। निर्वापविषय एव मन्त्रप्रयोगो दक्षाय वानस्पत्याऽसीत्यादि। अपरेण शालामुखीयं पात्रीद्वयं निधाय दक्षिणतः स्प्यमुपकृष्येत्यादि। सर्वे शकटमन्त्रा आवर्तनीयाः। शकटभेदपक्ष एतन्ना-न्यदा। शकटभेदपक्ष एव पात्रीभेदः। शकटभेदपक्षे पात्र्या अप्यभेदः। अस्मिन्पक्षे नाऽऽवृत्तिः। एकस्यामेव पात्र्यां दक्षिणतो यवानामुत्तरतो व्रीहीणामित्येवं निधानम्। प्रस्कन्दनेऽप्येवम्। ऊर्जं धत्स्वेत्यस्याऽऽवृत्तिस्तन्त्रेण स्पर्शस्यासंभवात्। विभवन्ति तन्त्रमङ्गान्यविभवन्त्यावर्तन्त इति परिभाषासूत्रात्। पयो मयि धेहीति सकृदेव। अपहतꣳ रक्ष इत्यपि सकृदेव। दशहोतारं व्याख्याय शूर्पैकदेशे पवित्रे निधाय यच्छन्तामिति मुष्टिं पूरयित्वा तूष्णीमेव स्रुच्योप्य देवस्य त्वा० म्यामिन्द्राय हरिवते जुष्टं निर्वपामीति यवान्निर्वपति। यच्छन्तां० देवस्यत्वा०म्यामिन्द्राय पूषण्वते जु० इति यवान्पुनर्निर्वपति। यच्छन्तां० देवस्य त्वा० म्याꣳ सरस्वत्यै भारत्यै जु० इति व्रीही-ञ्शूर्पोत्तरभागे निर्वपति। यच्छन्तां० देवस्य त्वा० म्यामिन्द्राय जुष्टं नि० इति व्रीहीन्। सर्वाण्यैन्द्राणि भवन्तीत्येकेषामिति पूर्वसूत्रोक्तसर्वैन्द्रत्वपक्ष इन्द्रायेत्येव सर्वत्र।

प्रोक्षितेषु विभागमन्त्रेण व्रीहीन्विभ-
ज्याधानवहन्त्यर्धाꣳल्लाजार्थान्निदधाति।

इदं देवानामिति आवर्तते। तन्त्रेण स्पर्शस्यासंभवात्। इदमु नः सह स्फात्यै त्वेति चाप्यावर्तते। असंभवादेव। इदमहमित्यादि स्कन्नानुमन्त्रणान्तानि कर्माणि सकृत्सकृदेव। उर्वन्तरिक्षमन्विहीत्यपि सकृदेव। अत्रोर्हं केचित्कुर्वन्ति तदुर्वन्तरिक्षं प्रेहीत्यस्मिन्मन्त्रे सवनीयपशावूहखण्डनेन खण्डितं द्रष्टव्यम्। अदित्या वामुपस्थे साद-यामीत्यूहितेन मन्त्रेण युगपदेवाऽऽसादनम्। इन्द्र हरिवन्हव्यꣳ रक्षस्व, इन्द्र पूषण्व-न्हव्यꣳ रक्षस्व, सरस्वति भारति हव्यꣳ रक्षस्व, इन्द्र हव्यꣳ रक्षस्वेति यथादेवतं परि-

१ ख. ग. स्फ्यमवकृ'।

ददाति । सर्वैन्द्रत्वपक्ष इन्द्र हव्यꣳ रक्षस्वेत्येव । सशूकायामित्यादि । प्रोक्षणे देवस्य त्वा० म्याꣳ सरस्वत्यै भारत्यै वो जुष्टं प्रोक्षामीन्द्राय हरिवत इन्द्राय पूषण्वत इन्द्राय । सर्वैन्द्रत्वपक्षे देवस्य त्वा० म्यो वो जुष्टं प्रोक्षामीन्द्रायेति । इति हविः प्रोक्ष्य पात्रेषु प्रोक्षितेषु विभागमन्त्रो यथाभागं व्यावर्तेथामिति । अनेन मन्त्रेण व्रीहीन्विभज्येदꣳ सरस्वत्यै भारत्यै चेदमिन्द्राय चेति द्वयोर्यथाक्रमं तां तां देवतामुपलक्ष्योपलक्षितं द्वितीयं पुरोडाशार्थं भागं यवावघातोत्तरमवहन्ति । अर्धाल्लाँजार्थान्व्रीहीन्सुरक्षितान्निद‍धाति । कृष्णाजिनादानाद्युलूखलाधिवर्तनान्तं तन्त्रम् । मुसलादानं तन्त्रेण । प्रथमे बीजे हविष्कृतमाह्वयत्युत्तमे वाचं विसृजत इति सूत्रात्प्रथमे बीज एव हविष्कृदाह्वानमन्तिमे बीजे त्रिष्फलीकरणसंप्रैषे सति वाचं विसृजते । प्रथमबीजाह्वानेनैव हविष्कृदाह्वाने सिद्धे न पुनराह्वानं प्रयोजनाभावात् । प्रथमबीजे त्रिष्फलीकरणसंप्रैष एव विसर्गेऽन्येषामवहननं नियमरहितेन कर्त्रा कृतमवैधं स्यादिति सूत्राशयः । अवहननं च दृष्टतण्डुलीभावसंपादनार्थं यावत्त्रिष्फलीकरणं तावत्तण्डुलीभावोऽतः संयुक्तानि त्वेकापवर्गाणीति काण्डानुसमयोऽत्र द्रष्टव्यः । तुषाणां निवपनं तन्त्रेणैव । तथा च भरद्वाजः—सर्वेषामन्ततस्तुषानुपवपतीति । प्रक्षालननिनयनमप्येतेनैव व्याख्यातम् । विवेचनं तत्तत्पात्रयां त्रिष्फलीकर्तवा इति प्रैषः प्रतिबीजम् । अत्र दर्शित एव हेतुः प्रागेव । प्रक्षालने एकीकृत्य निनयति सहैव । प्रक्षालननिनयनान्तं यवानां कृत्वा व्रीहीणां कार्यम् । प्रोक्षितेष्वितिवचनं चरुपुरोडाशार्थविभागदृष्टं प्रागधिवपनाद्विभागं व्यावर्तयितुम् । युक्तश्चावहननात्प्राग्विभागः । सतुषाणामेव व्रीहीणां लाजनिष्पादने सामर्थ्यात्प्रागधिवपनाद्विभाग एव मन्त्रो नात्रेति शङ्का स्यात्तां व्यावर्तयितुं विभागमन्त्रेणेति । व्रीहीन्पुरोडाशार्थानर्धानवहन्ति । अर्धानवशिष्टाल्लाँजार्थान्सुरक्षितान्निदधाति स्थापयति । व्रीहिग्रहणार्थग्रहणाभ्यामिदं ज्ञायते धानाकरम्भौ यवमयाविति । भ्रष्टेषु यवतण्डुलेषु धानाशब्दस्य लोकप्रसिद्धत्वात् । पुरोडाशस्य यवमयत्वं वैकल्पिकं चोदकप्राप्तमनेन व्यावर्त्यते । करम्भस्वरूपं तु सूत्रकार एव वक्ष्यति । परिवापशब्दो लाजापरपर्याय एव । कृष्णाजिनादानादि अव्यवकिरन्तीत्यन्तं कृत्वा पिष्टलेपं प्रज्ञातं निदधाति ।

**प्रथमेन कपालमन्त्रेण धानार्थं लाजार्थं च कपाले उपदधाति ।**

कपालमन्त्राणामनेकत्वादनेके विकल्पेन प्राप्तास्तत्र प्रथमेनैवोपधानम् । एतत्कपालद्वयं प्रथमं प्रथमकपालधर्मेणैवोपधेयं कृतप्रयोजना इतरे निवर्तन्ते । ननु प्रथमस्य मन्त्रस्य प्रथमकपालोपधाने प्रातिरूप्यस्थितत्वादेव सिध्यति किमर्थं प्रथमग्रहणमिति चेत्सत्यम् । प्रथमेन कपालमन्त्रेण स्थालीमुपधायेति स्थाल्युपधानवत्कपालोपधाने परिभाषाया अभावेन प्रथमेन कपालमन्त्रेणेतिवचनं यत्र यत्र तत्रैव प्रथमेन कपालमन्त्रेण प्रथमकपालोपधानं नान्यत्रेतिज्ञापनार्थं तद्ग्रहणात् । तेनाश्वमेधे पशुपुरोडाशान्निरू(रु)-

त्याग्नयेऽꣳहोमुचेऽष्टाकपाल इति दशहविषं मृगारेष्टिं निर्वपत्यग्नेर्मन्वे प्रथमस्य प्रचे-तस इति याज्यानुवाक्या भवन्ति पशुपुरोडाशानां मृगारेष्टेश्च समानꣳ स्विष्टकृदिड-मिति विहितायां मृगारेष्ट्यां तन्त्रस्यानुक्तत्वेन प्रथमेन कपालमन्त्रेण धानार्थं कपालमुप-धायेतिवचनाभावेन येन केनचित्कपालोपधानान्यतरमन्त्रेणैककपालोपधानमिति प्रयोजनं सिद्धं भवति। कपालग्रहणमयं कपालोपधानमन्त्र इति कपालोपधानात्पूर्वमन्त्र स्मरण-मावश्यकमितिज्ञापनार्थम्। मदन्तीरधिश्रित्य धृष्टिरसीत्यादि अवशिष्टमवस्थाप्येत्यन्तं कृत्वा करोति। अत्र कार्यक्षम एवाङ्गारः। तस्य चेन्धनैः प्रज्वालनं कृत्वा यथा कपाले धानानां भर्जनं भविष्यति तदनुकूलज्वालायुक्तं कृत्वा ध्रुवमसीति प्रथमेन कपा-लमन्त्रेणोपधाय निर्दग्धमिति तस्मिन्नङ्गारमधिनिर्वर्त्य पुनरङ्गारनिर्वर्तनादिना धानार्थकपा-लवल्लाजार्थं कपालमुपधाय निर्दग्धमित्यङ्गारमधिनिर्वर्त्य पुनरङ्गारनिर्वर्तनादिनैन्द्राग्नपुरो-डाशकपालोपधानवदष्टौ कपालानि ऐन्द्रस्य पुरोडाशस्योपधाय क्रमेणाङ्गाराध्यूहनं करोति। केचिद्भर्जनकपालयोर्निर्दग्धमिति न भवतीति वदन्ति तन्न। तापरूपदृष्टप्रयो-जनस्यावश्यमाकाङ्क्षितत्वात्। भृगूणामित्यङ्गाराध्यूहनं पुरोडाशार्थेष्वेवेत्यपि केचिद्व-दन्ति तदनेन निरस्तं द्रष्टव्यम्। धानालाजार्थयोः कपालयोस्तप्यस्वेत्यूहः। यद्यपि ल्यप्प्रत्ययेनाव्यवधानं बोध्यते तथाऽप्यङ्गाराध्यूहनस्य कपालोपधानाङ्गत्वाद्येन नाव्य-वधानमिति न्यायेन नाव्यवहितत्वबाधः। अथवाऽऽमिक्षाकरणोत्तरमङ्गाराध्यूहनं, धानार्थं लाजार्थं च कपाले उपधायेतिकपालवचनं पूर्वत्र द्वे भर्जनार्थे कपाले इत्यनेन भर्जनपर्यन्तमेव कपालत्वं नोत्तरत्र तथा च भर्जनपर्यन्तमेव कपालधर्मप्राप्तिर्नोत्तरत्रेति शङ्कामपाकर्तुम्।

अष्टौ पुरोडाशस्योपधायाऽऽमिक्षायाः कल्पेन मैत्रावरुणीमामिक्षां करोति।

आमिक्षाया वैश्वदेव्याः कल्पेन प्रकारेण मैत्रावरुणीं मित्रावरुणदेवत्यामामिक्षां करोतीत्यर्थः। आमिक्षां करोतीत्यत्राऽऽमिक्षावचनं मित्रावरुणौ पयस्ययेति श्रुतौ पयस्यां मैत्रावरुणस्येति वक्ष्यमाणसूत्रे च पयस्याशब्दार्थ आमिक्षैव न तु पयस्याख्यं द्रव्यान्तरं किंचिदस्तीति प्रदर्शयितुम्। अत्रैवाऽऽमिक्षाकरणं नतु पुरोडाशाधिश्रयणो-त्तरं धानालाजानां भर्जनात्पूर्वं विधानात्। अन्यथा वैपरीत्योक्तिरसंगता स्यात्। तेनाऽऽमिक्षाकरणं प्रातर्दोहानन्तरमेव, अनन्तरं संवपनादीति सिद्धं भवति। तत्रायं प्रयोगक्रमः—निरूढमित्यादिना संपृच्यध्वमित्यन्तेन विधिना प्रातर्दोहं दोहयित्वा शूर्पात्पात्रान्तरे मन्त्रेण यवतण्डुलान्समोप्य हर्योर्वोवाराभ्यामुत्पुनामीत्युत्पूय तथैव लाजार्थान्व्रीहीन्समोप्योत्पूय मन्त्रेणैव पिष्टानि समोप्योत्पुनाति। ततः समाप इत्यादि पिण्डकरणान्तं पुरोडाशस्य कृत्वा धानार्थलाजार्थाभ्यां कपालाभ्यां क्रमेणाङ्गारापोहनं कृत्वा कपालयोगादङ्गारानपोहतीति।

अधिश्रयणमन्त्रेण धाना लाजांश्च भर्जयति ।

अधिश्रयणमन्त्रो घर्मोऽसि विश्वायुरिति, तेन मन्त्रेण धाना लाजांश्च भर्जयति । पुरोडाशस्य कपालेषु स्थापनेऽयं मन्त्रो यथा तथा यवतण्डुलानां व्रीहीणां च कपालयोः प्रक्षेप एतस्य मन्त्रस्य प्राप्तिः स्यात्सा मा भूत्किं तु भर्जन एवैतस्य विनियोगो यथा स्यादित्येतदर्थमिदं सूत्रम् । तेन यावद्भर्जनं तावत्पर्यन्तं मन्त्रावृत्तिः । मन्त्रान्ते भर्जनानुकूलव्यापार आरब्धव्य इति वेति सिध्यति । घर्मोऽसीत्यस्यैकवचनान्तशब्दवतो मन्त्रस्य प्रकृतेऽसमर्थत्वादूहः कार्यः । तत्र घर्माः स्थ विश्वायुष इति यवतण्डुलेषु, लाजार्थव्रीहिष्वपि घर्माः स्थ विश्वायुष इति । प्रकृतिवद्वा घर्मोऽसि विश्वायुरिति परिवाप इति तेषामेकवदेव चोदनात् । घर्मशब्देन हविरेव संस्तूयते न तु तदवयवभूततण्डुला इत्यस्मिन्पक्षे धानास्वपि नोह इति द्रष्टव्यम् । धानानां लाजानां च प्रथमलेपानुमार्जने न स्तः । असंभवात् । पर्यग्निकरणं संस्कारत्वात्संभवाच्च सर्वेषाम् । आमिक्षायास्तु न तस्या अपूर्वधर्मवत्त्वात् । अभिज्वलनं तु पुरोडाशस्यैव नेतरत्रासंभवात् । अग्निस्त इत्यस्त्येव । परितस्तपनस्य पाकानुकूलत्वेनाऽऽवश्यकत्वात् । सं ब्रह्मणेति नास्ति असंभवात् । अविदहन्तः श्रपयतेति[1] त्वस्त्येव[2] । अस्यार्थस्य प्रकृतेऽपेक्षितत्वात् । य( प )कारोऽपपाठ एव । णिजन्तता वा कल्पनीया । लाजशब्दस्य बहुवचनान्तत्वं पुंलिङ्गं च दाराक्षतलाजानां बहुत्वं चेति लिङ्गानुशासनसूत्रेण ।

अनुपदह्यमानाः परिशेरते ।

उपशब्दोऽत्रात्यर्थकः । यावदुद्वासनं स्वे स्वे कपाल एव परिशेरतेऽवस्थिता भवेयुः । अनुपदह्यमाना इति वचनाद्यथाऽतिदाहो न भवति तथा क्रमेण भर्जनम् । किंचिद्दाहस्य दुष्परिहार्यत्वान्नावर्जनीयत्वम् । महापितृयज्ञे तु बहुरूपा धाना भवन्तीति श्रुतेः कासांचिदतिदाहोऽपि न दोषाय । अन्यथा बहुरूपत्वमनुपपन्नं स्यात् । आप्यनिनयनं गार्हपत्यस्य पश्चादेव महावेद्या आस्तृतत्वात्, जघनेन गार्हपत्यमाप्येभ्यो निनीयेति बौधायनोक्तेश्च ।

यत्प्रागलंकरणात्तत्कृत्वा विभागमन्त्रेण धाना विभज्य पिष्टानामावृताऽर्धाः सक्तून्कृत्वा संयवनमन्त्रेण संयौति स करम्भो भवति ।

वाजिनपात्रं प्राशित्रहरणं चाऽऽसादितैर्वेदाग्रैः संमृज्य तानि प्रहृत्य धानादीनि उद्वासयति । धानाभ्यो लाजाभ्यश्चाध्यूहनाभावादेवाङ्गारापोहनाभावः । अधिश्रयणमन्त्र ऊहः कृतश्चेदभिमन्त्रणादिमन्त्राणामप्यूहः । इदमहᳪ सेनाया इति पुरोडाशस्यैव ।

---

१ ख. ग. 'ति प्रैषोऽस्त्ये' । २ ख. ग. 'व । प्रैषार्थ' ।

सूर्यज्योतिषो विभात महत इन्द्रियायेत्यूहेन प्रकृतिवद्धा धाना अभिमन्त्र्य तथैव लाजानूहेन प्रकृतिवद्वाऽभिमन्त्र्य प्रकृतिवदेव पुरोडाशमभिमन्त्र्य स्योनं त इति ऊहेन प्रकृतिवद्वा धानार्थपात्र उपस्तीर्य तथैव लाजार्थपात्रे उपस्तीर्य स्योनं त इति पात्र्यामुपस्तीर्याऽऽमिक्षावाजिनोद्धरणपात्रयोस्तूष्णीमुपस्तृणाति । धानानामत्र नाभिघारणम् । आप्यायतां घृतयोनिरग्नि० स्वमङ्क्ष्व त्वचमङ्क्ष्व सुरूपान्वो वसुविदः पशूनां तेजसा सरस्वत्यै भारत्यै जुष्टानभिघारयामीति लाजानभिघारयति । अनूहो वा । सर्वैन्द्रत्वपक्षे तूष्णीमभिघारणम् । तूष्णीं पुरोडाशमभिघार्य यस्त आत्मेत्यामिक्षामभिघार्य वाजिनमभिघारयति । आर्द्रा भुवनस्य गोपाः शृता उत्स्नान्ति जनित्र्यो मतीनामित्यूहेन कपालाद्धाना उद्वासयति । प्रथस्नुपदस्यालोपो वा । अस्मिन्पक्षे प्रथस्नव इत्यूह ऊहपक्षे । अनूहो वा । तस्मिन्सीदतामृते प्रतितिष्ठत यवानां मेधाः सुमनस्यमाना इति उपस्तीर्णे स्वपात्रे निदधाति । अनूहो वा । तूष्णीं वा निधानम् । जनितार इति लाजोद्वासनमन्त्र ऊहपक्षे धानोद्वासनमन्त्रतो विशेषः । तस्मिन्सीदतामृते प्रतितिष्ठत व्रीहीणां मेधाः सुमनस्यमाना इत्युपस्तीर्णे स्वपात्रे निदधाति । अनूहो वा । प्रकृतिवत्पुरोडाशमुद्वासयति । ततो दृꣳहेत्यामिक्षामुद्वास्य तथैव वाजिनमुद्वासयति । तत इरा भूतिरिति अङ्गारं संख्यानमुद्वासनं च क्रमेण कपालयोर्द्वयोः कृत्वा पुरोडाशकपालानां करोति । एतदन्ताः पदार्था अलंकरणप्राग्भूतास्तान्कृत्वा यथाभागं व्यावर्तेथामिति धानाः समशो द्वेधा विभज्येदमिन्द्राय हरिवते चेदमिन्द्राय पूषण्वते चेति देवतोपलक्षणं करोति । सर्वैन्द्रत्वपक्ष उभयत्रेन्द्राय चेत्येव । तूष्णींत्वव्यावृत्त्यर्थं विभागमन्त्रेणेति वचनम् । यथा धानाः सर्वा आज्येन स्निग्धा भवन्ति तथाऽत्राभिघारणं धानानां तूष्णीमैन्द्राग्नविकारत्वात् । ततोऽर्धानां करम्भं करोति । अथवा करम्भोत्पत्त्यनन्तरं वा धानानामभिघारणं तदनन्तरं करम्भस्येति । पिष्टानामावृता पिष्टानां याऽऽवृत्करणप्रकारः कृष्णाजिनादानादिरवेक्षणादिर्वा तेन प्रकारेणार्धाधानाः सक्तून्सक्तुरूपाः करोति । द्वितीयपक्षे कृष्णाजिनशम्यादृषदुपलास्तथैवावस्थिता भवेयुः । यवानां पिष्टानि सक्तव इत्युच्यन्ते । सक्तुशब्दो नित्यं बहुवचनान्तः पिष्टशब्दवत् । संयवनमन्त्रो जनयत्यै त्वा संयौमीति । अनेन मन्त्रेणाऽऽज्येन ततः संयौति मिश्रयति यथाऽऽज्यप्लुतो भवति तथा । संयवने सति स पदार्थः करम्भसंज्ञको भवतीत्यर्थः । संयवनमन्त्रेणेतिवचनं प्रकृतौ पिण्डार्थानयनस्य दृष्टार्थत्वादिह तदभावान्मन्त्रनिवृत्तिरित्याशङ्कां निराकर्तुम् । केचित्तु संयवनमन्त्रेणेत्युपलक्षणं तेनाऽऽदित आज्यस्यापि प्रणयनं कार्यम् । समाज्यमाज्येनाग्मत्समोषधयो रसेन सꣳ रेवज्जगतामधुमन्मधुमता सृज्यस्वेति विकारः । तत एव तत्समाज्यमा-

१ ख. ग. 'जिनयोरुद्ध' ।

ज्यात्परिप्रजातमसीत्यानीय समाज्येन पृच्यस्वेति परिप्लाव्य जनयत्यै त्वेति संयौतीति। तत्तुच्छम्। उपलक्षणपरतायां प्रमाणाभावात्। एतदाज्यमैष्टिकमेव। अपूर्वाज्यमिति केचित्। यजुरुत्पूतमित्यन्ये। विभागोत्तरमभिघारणं स्पष्टमापस्तम्ब आह—उद्वासनकाले धाना उद्वास्य विभागमन्त्रेण विभज्यार्धा आज्येन संयौत्यर्धाः पिष्टानामावृता सक्तून्करोतीति। अत्र संयवनमभिघारणमेव परं तु किंचित्सविशेषं शब्दान्तरोपबन्धात्सद्द्रष्टव्यम्। स च सर्वव्यापिस्निग्धतारूपः। मन्थं संयुतं करम्भ इत्याचक्षत इत्यप्यापस्तम्बः। परिशेषाल्लाजानां परिवापसंज्ञाऽर्थत एव सिद्धा भवतीति संज्ञाकरणाभावः। आपस्तम्बस्तु स्पष्टमेवाऽऽह—लाजान्परिवाप इति। परितो भर्जनसमये वाप इव वापो भवति यासां ताः परिवाप इत्यन्वर्थसंज्ञयाऽपि लाजवाचकत्वम्। लाजेभ्यस्तुषाणां निःसारणे नखानामेव योग्यता नोलूखलस्य। अन्यथा लाजानां खण्डितत्वापत्तेरित्येतादृशार्थस्य लोकत एव सिद्धत्वादनुक्तिः। स्पष्टमेतदुक्तमापस्तम्बेन—नखैर्लाजेभ्यस्तुषान्संहरति नखैरूलूखलधर्मान्मुसलधर्मांश्च करोतीति। संहरणमपोद्धरणम्। तुषविमोकार्थं सवनीयकर्म कर्तुं नखैरूलूखलधर्मान्मुसलधर्मांश्च करोति। तेषां संमर्शनप्रोक्षणे अपि काले कृते भवतः। ततो लाजेषूद्वासितेषु कृष्णाजिनादानादिभसदुपसमसनान्तं कृत्वाऽधिषवणानि स्थ मानुषाणि प्रति वोऽदित्यास्त्वग्वेत्तु इति स्वयामहस्तनखानि निधाय तेषु प्रकृतिवद्रोऽप्याद्रयः स्थ मानुषास्त इदं देवेभ्यो हव्यꣳ सुशमि शमीष्वमिति आदानं भावयज्ञपित्वाऽव रक्षो दिवः सपत्नं वध्यासमिति तुषान्निःसारयित्वोत्करे निनीय वर्षवृद्धमसीति जपित्वा वर्षवृद्धाः स्थेत्यभिमन्त्र्याद्वपनपरापवनमन्त्रौ जपित्वा पराधमाता अमित्रा इति तुषानभिमन्त्रयते। तथा च भरद्वाजः—तत्राऽऽवपनमन्त्रोऽवहननमन्त्र उद्वपनमन्त्रो निष्पवनमन्त्र इति क्रियते पाण्योरुलूखलमुसलधर्माः क्रियेरन्निति। ततो हस्तेन तुषानुपवपति कपालानामुपहितत्वात्। केचित्तु सतुषेष्वपि लाजशब्दो वर्तते तेन नास्ति तुषविवेचनमिति प्राहुस्तन्न। सतुषस्य यागयोग्यत्वाभावात्, लोकप्रसिद्धिविरोधात्, आपस्तम्बभरद्वाजाभ्यां स्पष्टतया तुषविमोचनस्योक्तत्वाच्च। औपासनहोमे व्रीहीणां स्वरूपा एव हामसाधनत्वं तु वाचनिकम्।

**अनलंकृतेष्वभूद्वाऽऽरुशत्पशुरग्निरधायि(?)त्विव इत्येनस्याꣳ शस्यमानायाꣳ शृणोत्वग्निः समिधा हवं म इत्येकचतुर्गृहीतं जुहोति।**

नालंकृता अनलंकृतास्तेषु अनलंकृतेषु। पुरोडाशविशेषणमेतत्। तथा चायमर्थो भवति अनलंकृतेषु पुरोडाशेषु सत्स्विति। अनलंकृतेष्वित्यत्र प्रतिप्रस्थातेति शेषः। अत्रालंकरणशब्देन लक्षणयाऽभिघारणं गृह्यते न तु देवस्त्वा सवितेति अभ्यञ्जनमुपाञ्जनं च। अन्यथाऽग्रे विधास्यमानेनालंकरणेनैवात्र तदभावे सिद्धेऽनलंकृतेष्विति वचनस्य वैयर्थ्यापत्तेः। तथा चेदं सिद्धं भवति शृणोत्वग्निरित्याहुत्यनन्तरमभिघारणमिति। अभूद्वा

इति शस्यमानायामित्येतावतैव सिद्धे दीर्घप्रतीकग्रहणं पूर्वार्धस्यैव शस्यमानत्वमपेक्षत इयमाहुतिर्नोत्तरार्धस्यापीति । एतस्यामिति वचनं त्रिवारं शस्यमानायामपि प्रथमावृत्तावेवेयमाहुतिर्न द्वितीयतृतीयावृत्त्योरितिज्ञापनार्थम् । एतच्छब्दस्य सर्वनामत्वेन प्रधानपरामर्शित्वात्प्रथमावृत्तेरेवोपस्थितत्वेन स्वतःसिद्धत्वेन चतुर्गृहीतहोमस्य द्रव्यत्यागरूपत्वेन च प्रधानत्वात्प्रधानायां प्रथमावृत्तौ होमरूपप्रधानसंबन्धो युक्त इति भावः । एतच्चतुर्गृहीतमिति विशिष्टवचनं पञ्चगृहीतस्यापि पक्षे प्राप्तिं ज्ञापयितुम् । हवं म इति मन्त्रान्तः । जुहोतिचोदितत्वात्स्वाहाकारः ।

अपरं चतुर्गृहीतं गृहीत्वा ॥ २ ॥ दर्भमुष्टिं धारयमाणोऽप इष्य होतर्मैत्रावरुणस्य चमसाध्वर्यवाद्रवैकधनिन आद्रवत नेष्टः पत्नीमुदानयोन्नेतर्होतृचमसेन वसतीवरीभिश्च चात्वालं प्रत्युपास्स्वेति संप्रेष्यति ।

अपरवचनं पूर्वेण संबन्धार्थं तेनाभूदुषा इति पूर्वार्धस्य शस्यमानत्वमत्रापि अपेक्षत एवेति सिद्धं भाति । एतस्यामित्यस्य त्वत्र नापेक्षा । पूर्वार्धे द्वयोरसंभवात्, ग्रहणस्य होमापेक्षया गौणत्वाच्च । चतुर्गृहीतवचनं पक्षे प्राप्तस्य पञ्चगृहीतस्य निवृत्त्यर्थम् । मुष्टिग्रहणं दर्भाणां बन्धनं गमयति । इष्यतिर्गतिकर्मा । होतरप इष्यापः प्रति मनसा गच्छेत्यप इष्येत्यस्यार्थः । अथवा हे होतरानतव्या अप उद्दिश्य प्र देवत्रेत्यादिका ऋच इष्य पठेति । अपः प्रति अभीष्टं सम्यक्प्रार्थयेत्यर्थो वा । लोकेऽपीषितमभीष्टं कर्म सम्यक्क्रियते । मैत्रावरुणस्य मैत्रावरुणर्त्विक्संबन्धिन्, चमसहोमार्थोऽध्वर्युश्चमसाध्वर्युस्तत्संबोधनं चमसाध्वर्यो, इति । हे मैत्रावरुणस्य चमसाध्वर्यो स्वेन चमसेन सहाऽऽगच्छ । तथैकधनाः स्थाल्यः सन्ति येषां त एकधनिनः । हे एकधनिन एकधनास्थालीवाहिनः स्वस्वस्थालीसहिता आद्रवताऽऽगच्छतेत्यर्थः । नेष्टः पत्नीं पन्नेजनीं स्थालीं धारयमाणामुदानयेत्यर्थः । स्पष्टमाहामुमर्थमापस्तम्बः—प्रेह्युदेहीति नेष्टा पत्नीमुदानयत्येदुदेहीति वा पन्नेजनीं स्थालीं धारयमाणामिति । उन्नयति चमसेषु सोमरसमृत्विजश्चोदकादिति उन्नेता । हे उन्नेतर्होतृचमसेन वसतीवरीभिश्च सह चात्वालं प्रति चात्वालाभिमुखमुप चात्वालसमीप एवाऽऽस्स्वोपविशेत्यर्थः ।

मैत्रावरुणचमसाध्वर्युश्चमसमादायाऽऽद्रवति ।

अप इष्य होतरिति होतृप्रैषार्थस्य व्याख्यानसापेक्षत्वाभावात्स्पष्टत्वाच्चानुक्तिः । मैत्रावरुणस्य चमसाध्वर्यवाद्रवेति प्रैषे चमसेन सहाऽऽद्रवणस्यानुक्तत्वात्केवलस्याऽऽद्रवणं स्यात्तन्मा भूत्किं तु चमसेन सहैवाऽऽद्रवणं यथा स्यादित्येतादृशार्थविशेषं प्रदर्शयितुमिदं सूत्रम् । मैत्रावरुणस्य चमसाध्वर्युर्मैत्रावरुणचमसाध्वर्युश्चमसं मैत्रावरुणस्य । स्वस्य मैत्रावरुणचमसाध्वर्युत्वान्मैत्रावरुणचमसस्यैवाऽऽदानम् ।

त्र्यवरार्ध्या अयुज एकधनास्थालीरादायाऽऽद्रवन्ति ।

तिस्रोऽवरो न्यूनोऽर्धो भागो यासां तास्त्र्यवरार्ध्याः। अर्धशब्दो भागवाची । अयुजो विषमाः । एकधनास्थालीरिति एकमेव पदम् । एकधनासंज्ञकानामपां स्थालीर्यथा-यथं परिकर्मिण आदायाऽऽद्रवन्ति । बहुकर्तृकत्वाद्बहुवचनम् । एकैकां स्थालीं प्रत्येकं परिकर्मी न त्वेकेन द्वे स्थाल्यौ द्वाभ्यां हस्ताभ्यामादातव्यौ । वामहस्तेन जलाहरणस्य सर्वदाऽपि स्मृतौ निषिद्धत्वस्योक्तत्वात्तदर्थं पुरुषभेद आवश्यक एव । अयुज इत्यनेन समसंख्याव्यावृत्तिः । अयुक्त्वावधिनियम आपस्तम्बेनोक्तः—एतस्यैव हविर्धानस्य पश्चादक्षं त्रीनेकधनान्धटान्पञ्च सप्त नवैकादश वेति । बौधायनोऽपि प्रैषविशेषमेवोक्तवान्—अयुज एकधनाश्त्र्यवमानेकादशपरमानिति । त्रिप्रभृतीनां विषमसंख्यानां संस्थावशाद्विनिवेश उक्थ्ये पञ्च, षोडश्यां सप्त, अतिरात्रे नव, अप्तोर्यामे एकादशेति ।

प्रेषुदेहीति नेष्टा पत्नीमुदानयति ।

प्रैषेणैव नेष्टृकर्तृकत्वे सिद्धे पन्नेजनीग्रहणार्थनयनमेव नेष्टृशब्दार्थ इति प्रदर्शयितुं नेष्टृग्रहणम् । नेष्टा पत्नीमुत्थाप्याऽऽनयति । उच्छब्दादुत्थाप्याऽऽनयति । पूर्वमेव केनचिदपि निमित्तेनोत्थितामपि उपवेश्य मन्त्रेणोत्थाप्यैवाऽऽनयतीत्यर्थः । पन्नेजनीं स्थालीं धारयमाणामित्यापस्तम्बः । यत्तूत्तरेणाऽऽग्नीध्रीयं परीत्य गमनं सर्वत्र यथोत्तरेणान्तर्वेदि संचरो भवतीति, इति संचरणार्थस्यच्छावशेषवचनादिति केचित्, तत्तुच्छम् । वैसर्जनहोमादिषु तद्देशगमनविधानस्य वैयर्थ्यापत्तेः । अतो यत्र विधानं तत्रैव नान्यत्रेति द्रष्टव्यम् । एतेन वैसर्जनमार्गेण पत्न्यानयनमिति प्राचीनोक्तिः परास्ता । पत्न्यनेकत्वे सर्वा अपि पर्यायेणोदानयति । मा मा हिꣳसीरिति मन्त्रान्तः । उन्नेतुः कर्मणः प्रैषेणैव स्पष्टतयाऽर्थावगमादकथनम् । अत्र विशेषमाहाऽऽपस्तम्बः—तीर्थेनाभिप्रव्रजन्तीति । चात्वालोत्करयोरन्तरालं तीर्थं तेन सर्वे गच्छन्तीत्यर्थः ।

यत्र होतुः प्रातरनुवाकमनुब्रुवत उपशृणुयात्तदपोऽध्वर्युर्गृह्णीयात् ।

यत्र यस्मिन्प्रदेशेऽपां ग्रहणार्थं स्थितः सन्प्रातरनुवाकमनुब्रुवतो होतुः प्रातरनुवाकमुपशृणुयात्तत्र तस्मिन्प्रदेशेऽपोऽध्वर्युर्गृह्णीयादित्यर्थः । वहन्तीनामित्यापस्तम्बः । अध्वर्युग्रहणं नेष्टुरनुवृत्तिं वारयितुम् । अपां ग्रहणकाले प्रातरनुवाकाश्रवणे दोषमाह स एव—यदि न शृणोति बधिरो ह भवति वाचो ह विच्छिद्यत इति । वाचो ह विच्छिद्यते मूको भवतीत्यर्थः ।

ननु यदि तावति देश आपो न स्युस्तदा किं कर्तव्यमित्याकाङ्क्षायामुपायमाह—

यदि दूरे स्युरुदु(द्रु)त्य गृह्णीयाद्यत्र होतुः शृणोति ।

यदि प्रातरनुवाकश्रवणं यत्र स्थितस्य न जायते तावति दूरे प्रदेश आपः

स्युस्तदोदू(दु)ह्य यत्र स्थितस्य प्रातरनुवाकश्रवणं जायेत तावत्परिमिते समीपे प्रदेशे ताभ्योऽन्योऽप आनीय तत्र स्थापयित्वा गृह्णीयात्। तथा च श्रवणमेवाऽऽवश्यकम्। मैत्रायणीयब्राह्मणे यन्नोपशृणुयाद्बधिरः स्यादिति दोषश्रवणादिति भावः। सामान्यप्रतिज्ञेयम्।

कथमित्याकाङ्क्षायामाह—

अप्सु तृणं प्रास्य देवीराप इत्येतच्चतुर्गृहीतं जुहोति।

या ग्रहीतव्या आपस्तासु, दर्भानियमार्थं तृणवचनं, प्रास्य प्रक्षिप्य। एकवचनादेकमेव तृणं, जात्यभिप्रायं चैकवचनम्। एतच्छब्दः सुपां सुलुगित्यनेन लुप्तसप्तमीको द्रष्टव्यः। तेनैतस्मिन्नित्यर्थो भवति। तथा च तृणमभिलक्ष्यीकृत्यैव जुहोतीति सिद्धं भवति। अपरं चतुर्गृहीतं गृहीत्वेति पूर्वं गृहीतं चतुर्गृहीतमेव तस्यैवार्थादेव लाभे चतुर्गृहीतवचनमन्यत्रापि राजसूयेऽभिषासितैर्वायव्यैरपां ग्रहान्गृह्णाति देवीरापो अपां नपादाद्राष्ट्रदाः स्थ राष्ट्रं दत्त स्वाहेति सारस्वतीष्वप्सु हुत्वैतेनैव गृह्णात्यर्थेऽतः स्थेति चैवमितराःस्वित्यनेन विहितेऽप्सु होमे चतुर्गृहीतलाभार्थम्। भागः स्थ स्वाहेति मन्त्रान्तः।

शेषं वा करोति।

चतुर्गृहीतं सर्वं जुहोति शेषं वा करोति चतुर्थं भागं हुत्वा भागत्रयमवशेषयतीत्यर्थः। अब्ग्रहणानुकूलत्वाय स्वल्पस्यैव होतव्यत्वात्। सर्वस्य होमेऽपि अञ्जनमात्रार्थं तु अवशेषणीयमेव। तत्सर्वं जुहोतीति वक्ष्यमाणसूत्रे सर्ववचनेन स्वल्पाज्यावशेषः कर्तव्य एवेत्यर्थबोधनात्। अञ्जनपदार्थस्य बिन्दुमात्राज्यसाध्यत्वं सर्वत्रेति जुह्वा ध्रुवां त्रिः समनक्तीत्यस्मिन्सूत्रे प्राचीनैर्व्याख्यातृभिरुक्तं चास्ति। अतोऽत्र कार्यसत्त्वादञ्जनपर्याप्तमवश्यमवशेषणीयमेवेति।

यदि वा पुरा तृणं भवति तस्मिन्नेव जुहोति।

तृणप्रासनात्पुरा पूर्वमेव स्वतस्तृणमुपस्थितं भवति तदा तत्संस्तम्भयित्वा तस्मिन्नेव तज्जुहोति न तु तृणप्रासनमाहुत्यर्थं कर्तव्यमित्यर्थः।

कार्षिरसीति दर्भैराहुतिमपप्लावयति।

दर्भैरिति वचनाद्विस्तसनं मुष्टेः। आहुतिमाहुतिसंबन्धि आज्यमपप्लावयति अपोहति ग्रहणप्रदेशाद्दूरी करोतीति यावत्। मृधमिति मन्त्रान्तः।

समुद्रस्य वोऽक्षित्या उन्नय इत्यघृतलिप्तानां मैत्रावरुणचमसेनोन्नयति।

आहुतेरपप्लावनमदृष्टार्थं न भवति किंतु अघृतलिप्ताग्रहणानुकूलतारूपदृष्टप्रयोजनमिति प्रदर्शयितुमघृतलिप्तानामिति। तेनाऽऽहुतेरपप्लावनेनाघृतलिप्तानां ग्रहणमसंभवि चेत्तदा

पुनर्मन्त्रेणाऽऽहुतेरपप्लावनमिति सिद्धं भवति । मैत्रावरुणचमसेनोन्नयति उद्धरतीत्यर्थः । अत एवावयवषष्ठ्या उपादानम् । तेन मैत्रावरुणचमसेन यावतीनामपामुन्नयनं भवति तावतीरुन्नेया इति सिध्यति । नच मैत्रावरुणचमसेनाम्यस्मिन्पात्रे सर्वासामघृताक्ष्लिप्तानामपामुद्धरणं षष्ठी तु द्वितीयार्थे भविष्यतीति वाच्यम् । एकधनापन्नेजनीग्रहणार्थेऽस्य उपयोगस्य सत्त्वात् । सर्वग्रहणासंभवेन षष्ठ्या द्वितीयार्थकत्वकल्पनाया अत्यन्तविरुद्धत्वात्प्रकृतानुपयोगाच्च । एतावानेव मन्त्रः ।

## एतेनैव मन्त्रेणैकधनासु ।

गृह्णातीत्येव शेषः । समुद्रस्थेत्येतेनैव मन्त्रेणैकधनासु एकधनार्थासु स्थालीषु गृह्णातीत्यर्थः । सप्तमीनिर्देशादन्येन पात्रेण ग्रहणं गम्यते । एवकारः सोमस्य त्वा मूजवतो रसं गृह्णामीत्यापस्तम्बोक्तस्येन्द्राय वो जुष्टान्गृह्णामीतिबौधायनोक्तस्य सूत्रान्तरोक्तानां मन्त्राणां च निरासाय । तेन तदुक्तो विधिस्तु अस्माकमप्यभिमत एवेति दर्शितं भवति । तेन स्थालीभिरपि ग्रहणं पक्षे सिद्धं भवति ।

## वसुभ्यो रुद्रेभ्य आदित्येभ्य इति पत्नी पन्नेजनीर्गृह्णाति ।

अध्वर्युव्यावृत्त्यर्थं पत्नीग्रहणम् । पादौ निज्येते प्रक्षाल्येते याभिस्ताः पन्नेजन्यस्ता वसुभ्य इति मन्त्रेण पान्नेजनीस्थाल्या गृह्णातीत्यर्थः । पन्नेजनं च पत्नीसंस्कारः । तेन सर्वाभिरपि पत्नीभिः स्वस्वस्थाल्या ग्रहणं कर्तव्यम् । प्रत्यङ्तिष्ठन्तीत्यापस्तम्बः । यज्ञाय वः पन्नेजनीर्गृह्णामीत्येव मन्त्रान्तः । तथैव पेठतुर्बौधायनभारद्वाजौ ।

## ये स्थालीराहरन्ति त आनयन्ति ।

यो यो यां यां स्थालीमाहरति स स तां तामानयति न वैपरीत्येन नचान्यो यः कश्चनेति । मैत्रावरुणचमसस्याऽऽनयनं तदीयचमसाध्वर्युत्वात्तत्कर्तृकमित्यर्थत एव सिद्धम् । ये स्थालीराहरन्ति त आनयन्तीति स्थालीविषय एव नियमान्न होतृचमसवसतीवर्याहरणवदुन्नेतृकर्तृकत्वस्याऽऽनयने नियमः । तेन वसतीवर्यानयनं पारिकर्मिककर्तृकं होतृचमसानयनं तदीयचमसाध्वर्युकर्तृकमिति सिद्धं भवति ।

## तेनैव मन्त्रेण नेष्टा पत्नीमुदानयति ।

तेनैवेत्येवकारेणेह्युदेहीति पाक्षिकमापस्तम्बोक्तं पाठान्तरं व्यावर्त्यते । अथवा तेनेत्यनेन मार्गः परामृश्यते । तेन येन मार्गेणाऽऽनीता तेनैव मार्गेणेत्यर्थो भवति । अनेनाऽऽगमनमार्गाधीन एव प्रत्यागमनमार्गो न तु ऐच्छिकत्वमिति प्रदर्श्यते । मन्त्रेणेत्यत्राऽऽगमने दृष्टस्यैव मन्त्रस्य ग्रहणम् । मन्त्रेणेति वचनं तूष्णींत्वव्यावृत्त्यर्थं पन्नेजनीग्रहणार्थानयनविषयकप्रैषवत्प्रत्यागमनविषयकप्रैषाभावेन नेष्टुरप्राप्तौ सत्याम-

ध्वर्योरेव यजुर्वेदेनाध्वर्युः करोतीति परिभाषया प्राप्तिः स्यात्तन्मा भूत्किं तु नेष्टुरेव प्राप्तिर्यथा स्यादित्येतदर्थम् ।

पूर्वेण द्वारेण सदः प्रविश्याग्रेण प्रशास्त्रीयं धिष्णियं परीत्यापरेण नेष्टुर्धिष्णियं वसुभ्यो रुद्रेभ्य आदित्येभ्य इति पत्नी पन्नेजनीः सादयति ।

सदःपर्यन्तं मार्गः स एवानन्तरं तेनैव मार्गेणेत्यनेन प्राग्वंशपर्यन्तो मार्गोऽपि प्राप्तः सोऽनेन निवार्यते । अग्रेणेत्यनेनाऽपरेणेत्यनेन चोभयक्रिययोस्तत्तत्पदार्थाभ्यां सांनिध्यं बोध्यते । ननु अत्र प्रशास्तृधिष्ण्यविषये तद्धितान्तं विशेषणं नेष्टृधिष्ण्यविषये नेष्टृसंबन्धित्वं विशेषणम्, एवं च किमनयोर्वैरूप्यमिति चेत् । उच्यते—प्रशास्तृधिष्ण्यविषये तत्संबन्धित्वेन सांनिध्ये तत्तत्तस्यैव निर्वाहो न तु तस्य सांनिध्यमपि नेष्टृधिष्ण्यविषये तु नेष्टृसांनिध्यमपि आवश्यकमित्येवंरूपं वैरूप्यमस्त्येवेति प्रदर्शयितुमेकत्र तद्धितान्तत्वेनापरत्र संबन्धित्वेन विशेषणोपादानात् । धिष्णियधिष्ण्यशब्दौ पर्यायौ । तेन घटकलशशब्दवल्लाघवगौरवविचारोऽत्र नेति द्रष्टव्यम् । पर्यायशब्दानां गुरुलाघवचर्चा नाऽऽद्रियत इति व्याकरणपरिभाषाऽपि । वसुभ्यो रुद्रेभ्य आदित्येभ्य इति ग्रहणलिङ्गकत्वाद्गृह्णामीत्यन्तो ग्रहणे सादनलिङ्गकत्वाद्यज्ञाय वः पन्नेजनीः सादयामीत्येतावानेव सादन इत्येवं स्यात्तन्मा भूत्किं तु वसुभ्यो रुद्रेभ्य आदित्येभ्य इत्यादिरेवोभयत्र ग्रहणे सादयामीत्यत्र गृह्णामीत्यूहेन सादने गृह्णामीत्यत्र सादयामीत्यूहेनैकस्यैव मन्त्रस्य विनियोगो यथा स्यादित्येवमर्थम् । तथा चैवं द्वयोर्मन्त्रयोः पाठः—वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो वो देवेभ्यः पन्नेजनीर्गृह्णामि यज्ञाय वः पन्नेजनीर्गृह्णामीति ग्रहणमन्त्रपाठः । वसुभ्यो रुद्रेभ्य आदित्येभ्यो विश्वेभ्यो वो देवेभ्यः पन्नेजनीः सादयामि यज्ञाय वः पन्नेजनीः सादयामीति सादनमन्त्रपाठः । पत्नी यथेतमेत्य प्राग्वंशे प्रविशतीति नेष्टा सदस्येवोपविशति ।

वसवो रुद्रा आदित्या एता वः पन्नेजनीस्ता रक्षध्वमिति वा ।

स्पष्टम् ।

चात्वालमितरे यन्ति ॥ १ ॥

पत्नीनेष्ट्रुन्नेतृहोतृचमसाध्वर्युवसतीवरीप्रत्यानयनार्थपरिकर्मिभ्यतिरिक्ता अध्वर्युब्रह्मयजमाना मैत्रावरुणचमसाध्वर्युरेकधनिनश्च ।

सं वो दधातु वरुणः समिन्द्रः सं धाता सं बृहस्पतिः । त्वष्टा विष्णुः प्रजया सꣳ रराणो यजमानाय द्रविणं दधातु यथाधुरं धुरो धूर्भिः कल्प-

**न्तामित्युपरि चात्वाले होतृचमसं मैत्रावरुण-
चमसं च संस्पर्श्य वसतीवरीर्व्यानयति ।**

कल्पन्तामित्यन्तेन मन्त्रेण चात्वालस्योपरि होतृचमसं मैत्रावरुणचमसं च सम्यक्स्पर्शयित्वा वसतीवरीसंज्ञका अपो व्यानयति होतृचमसमैत्रावरुणचमसयोः परस्परं ताभ्यामेवाऽऽनयतीत्यर्थः । विशब्दात्परस्परमानयनम् । संस्पर्श्येत्ययं ल्यप्समानकालिकत्वार्थे मुखं व्यादाय स्वपितीतिवत् । तेन यावत्पर्यन्तं परस्परमानयनं तावत्पर्यन्तं संस्पर्श इति सिध्यति । अयमर्थः स्पष्टः सूत्रान्तरे–उपरिचात्वाले संस्पृष्टयोर्होतृचमसमैत्रावरुणचमसयोर्वसतीवरीरध्वर्युर्व्यानयतीति । संस्पृष्टयोरिति सति सप्तमी । तेन समानकालिकता लभ्यते । णिच्प्रयोगादन्यकर्तृकता संस्पर्शने । असंभवपरिहाराय युक्तैवान्यकर्तृकता । संशब्दाद्दक्षिणहस्तगृहीतस्य होतृचमसस्य प्राग्दण्डस्योत्तराङ्गं वामहस्तगृहीतस्य मैत्रावरुणचमसस्य प्राग्दण्डस्य दक्षिणाङ्गं यथा संश्लिष्टं भवति तथा स्पर्शः कर्तव्य इति बोध्यते । सामान्यप्रतिज्ञेयम् ।

कथमित्याकाङ्क्षायां विशेषमाह––

**होतृचमसे वसतीवरीणां निषिच्य[1] मैत्रावरुण-
चमस आनयति मैत्रावरुणचमसाद्धोतृचमसे ।**

वसतीवरीणामित्यवयवषष्ठी । वसतीवरीणामवयवं होतृचमसपर्याप्तं होतृचमसे निषिच्य स्रावयित्वा तस्मान्मैत्रावरुणचमस आनयति अर्धं तस्मान्मैत्रावरुणचमसादर्धं होतृचमसे । आनयतीत्ययं व्यानयनपदार्थः । पञ्चमीश्रवणात्पात्रान्तरेण व्यानयनं न तु ताभ्यामेव व्यानयनम् । वः संदधात्विति लिङ्गाद्व्यानयने मन्त्रः । होतृचमसान्मैत्रावरुणचमस आनयने मैत्रावरुणचमसाद्धोतृचमस आनयने च मन्त्रः । निषेचने न मन्त्रः । तस्य व्यानयनरूपत्वाभावात् । अत एव धात्वन्तरं प्रयुक्तम् । निशब्दात्पूरणं सूचितं भवति । स्रावणशब्दात्स्वल्पं स्वल्पं निच्छिद्य विच्छिद्याऽऽनयनमस्कन्दनाय । अत्राऽऽस्तम्बो विशेषमाह–समन्या यन्तीत्यभिज्ञाय होतृचमसान्मैत्रावरुणचमस आनयति मैत्रावरुणचमसाद्धोतृचमस एतद्वा विपरीतमिति ।

**होतृचमसं मैत्रावरुणचमसं च प्रचरण्या समनक्ति
सं वोऽनक्तु वरुण इति मन्त्रादिं संनमति ।**

सं वो दधात्वित्येतस्य स्थाने सं वोऽनक्त्वितिमन्त्रादिं प्रयोजयति । दधात्वितिपदस्य स्थानेऽनक्तु इति पदं प्रयुनक्तीति तात्पर्यार्थः । होतृचमसमैत्रावरुणचमसशब्दाभ्यां तद्गता आपो लक्ष्यन्ते । सं वोऽनक्त्वितिमन्त्रलिङ्गात् । तथा चापामेवाञ्जनं न

---

१ ख. ग. ढ. निःषिच्य ।

पात्रयोः । द्रव्यभेदान्मन्त्रावृत्तिः । यस्यां प्रथमतश्चतुर्गृहीतं गृहीतं सैवात्र प्रचरण नान्वेति । तेन या वैसर्जनहोमार्था साऽत्र न भवतीति सिद्धं भवति । मन्त्रादीनिति बहुवचनान्तः पाठोऽपपाठ एव ।

होतुरन्तिकमायन्ति ।

अन्तिकं समीपम् । उत्तरत्राद्यर्थमन्तिकागमनवचनम् । अध्वर्योस्तु प्रश्नविधेः समीपे गमनं सिध्यति । अत्र क्रमविशेषो मानवसूत्रे—हविर्धानमभ्युदानयन्त्यग्रे मैत्रावरुणचमसीया होतृचमसीया वसतीवरीरनुपूर्वं सवनीयकलशानिति ।

अध्वर्योऽवेरपा३ इति होताऽध्वर्युं त्रिः पृच्छति ।

अध्वर्यो किमसि लब्धवानप इति प्रश्नार्थः । प्रश्ने प्लुतिः ।

उतेमनन्नमुरुतेति त्रिः प्रत्याह ।

उतेमनन्नमुरुतेत्यन्तं प्रतीकग्रहणम् । उतेमनन्नमुरित्यन्तमेव प्रत्युत्तरवाक्यम् उतेमाः पश्येति तस्यैव व्याख्यानम् । अत एव वावैतदाहेति विवरणप्रकारः संगच्छते बाह्वृच्येऽप्येवमेव व्यक्तमुक्तम्—यथोतेमनन्नमुरित्यध्वर्युः प्रत्याहोतेमाः पश्येत्येवमे तदाहेति । तथा च श्रुतिद्वयानुरोधेनोतेमाः पश्येत्यस्योतेमनन्नमुरित्येतद्व्याख्यानमेव तु तावदन्तमेकमेव वाक्यमिति निरसितुम् । यत्रेति शब्दद्वयं तत्राऽऽद्यस्य वाक्यस्य द्वितीयं वाक्यं व्याख्यानं न तु वावैतदाहेत्यस्य व्याख्यानपरता । प्रकृत इतिकारद्वया भावात्प्रतिवचनार्थमेकमेव वाक्यम् । वावैतदाहेत्यस्यार्थस्तु बाह्वृच्ये । आद्यवाक्य स्योत्तरं वाक्यं व्याख्यानरूपमेव । तेनोतेमनन्नमुरित्येतावत एव वाक्यस्य प्रयोग इति न किंतु सर्वमेवैतद्वाक्यमाहेति भावः । वावशब्दोऽवधारणे । केवलं लब्धवानस्मीत्येता वदेव न भवति उतापि तु ता अनन्नमुरुपसंप्राप्ता एव । दूरवर्तित्वेऽपि सत्त्वमात्रेण लाभ भवति तदुपसंप्राप्तिर्लाभादतिरिच्यते । हे होतर्न केवलं मद्वचनमात्रेण विश्वसिहि कि त्विमाः पुरोवर्तिनः पश्येत्युतेमनन्नमुरुतेमाः पश्येत्यस्याध्वर्युप्रवक्तव्यस्यार्थः । क्रमेण प्रश्नप्रतिवचने । एकैकप्रश्नोत्तरमेकैकं प्रतिवचनं न तु प्रश्नत्रयानन्तरं प्रतिवचनत्रयमिति

यमग्ने पृत्सु मर्त्यमिति प्रचरण्या क्रतु-
करणं जुहोति यदि शेषो भवति ।

प्रचरणीग्रहणं परिभाषार्थं वैसर्जनहोमव्यतिरिक्तेषु सर्वेषु कर्मस्वपीयमेव प्रचरणी दाक्षिणहोमे तु वैसर्जनहोमीयेति । अस्ति च दाक्षिणहोमे यथा वैसर्जनानीत्यतिदेश स्तेनैव वैसर्जनहोमीयप्रचरणीप्राप्तिः । क्रतुव्या(र्व्या)वृत्तिः क्रियतेऽनेनेति क्रतुकरणम् समाख्या संव्यवहारार्था पञ्चदशच्छदि सदः क्रतुकरण२ हुत्वेत्यादौ । शेषं वा करोतीति पूर्वत्र पक्षान्तरमुक्तं तत्कल्पे शेषः संभवति तदा शिष्टं सर्वमेव जुहोति । शश्वतीरिति इति मन्त्रान्तः । जुहोतिचोदितत्वात्स्वाहाकारः ।

यदि शेषो न भवति तदोपायमाह—

अविद्यमानेऽन्यच्चतुर्गृहीतं गृहीत्वा तत्सर्वं जुहोति ।

आज्यशेषाकरणेन कृतस्य शेषस्य नाशेन वाऽविद्यमाने स्रुचि आज्यं चेत्तदाऽन्यच्चतुर्गृहीतमाज्यं गृहीत्वा तदाज्यं सर्वमेव जुहोति । चतुर्गृहीतवचनं तदीयैकदेशस्य विनियोगेऽपि चतुर्गृहीतमेव ग्राह्यं न तु विनियुक्तावशेषानुसारेणेत्येतदर्थम् । अग्रे प्रयोजनाभावाद्विनियोगाभावाच्च सर्वहोमे सिद्धेऽत्र वचनं बिन्दुमात्रमपि यथा नावशिष्टं भवति तथा सर्वस्य होम इत्यर्थविशेषज्ञापनार्थम् । तच्छब्दोपादानं यदन्यद्गृहीतं तन्निरवशेषमेवात्र होतव्यमित्येतदर्थम् । तेनान्यत्रानियमः सिद्धो भवति ।

दक्षिणस्य हविर्धानस्य प्रधुरे प्रचरणीᳫ सादयति ।

सोमसंबन्धिदशापवित्रद्रव्यान्तरचमसादिकमपि प्रचरणीवदत्रैव संसादनीयमितिज्ञापनार्थं हविर्धानग्रहणम् ।

यं कामयेत क्लीबः स्यादित्यधस्तात्तस्य ।

यो यजमानो यं शत्रुं क्लीबो नपुंसकः स्यादिति कामयेत तस्य यजमानस्य क्रतौ दक्षिणहविर्धानस्याधस्तात्प्रचरणीं सादयेदित्यर्थः । अथवा तस्य प्रधुरस्याधस्तादित्यर्थः ।

पूर्वेण द्वारेण हविर्धानमपः प्रपादयति ।

प्रपादयतीत्यन्तर्भावितो णिच् । तेन परिकर्मिकर्तृकमिदम् । सर्वासामपां सहप्रवेशानुगुण्यासिद्धमेतत् ।

तासु दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्यां
पुरोक्षᳫ होतृचमसमास्पृष्टᳫ सादयति ।

तासु प्रपादितास्वप्सु मध्ये । हविर्धानग्रहणं यथा सोमाख्यं हविर्निधीयते तथैवेदमपि हविरेव समीपे निधीयते, अस्ति च सोमाभिश्रणद्वारा सोमाख्यप्रधानहविःसंबन्धाद्धविष्ट्वं, फलं तु होतृचमसस्थानामपां नाशे वसतीवरीश्चात्वाले नीत्वा सं वो दधात्विति होतृचमसे वसतीवरीणां निषिच्य मैत्रावरुणचमसे किंचिदानीय मैत्रावरुणचमसाद्धोतृचमसे होतृचमसं प्रचरण्या समज्य पुरोक्षᳫ सादयतीत्येवंरीत्योत्पत्तिः, मैत्रावरुणचमसस्थानामपां न समञ्जनं जातत्वादित्येतादृशार्थविशेषं ज्ञापयितुं *हविर्धानग्रहणम् । उत्तरस्यां वर्तन्यामुत्तरवर्तनीसमीपे । उत्तरवर्तनीसमीपप्रदेशोऽक्षस्य पश्चादपि तद्व्यावर्तयितुं पुरोक्षमिति । उत्तरवर्तनीसमीपरहितमक्षपुरोवर्तिनं प्रदेशं व्यावर्तयितुमुत्तरस्यां वर्तन्यामिति । होतृचमसं होतृचमसस्था अपः । चमसद्वारैव स्पृष्टत्वं न तु साक्षात्स्पृष्टत्वमसंभवात्स्कन्दनप्रसङ्गाच्च । आस्पृष्टमत्यन्तं स्पृष्टमीषत्स्पृष्टं वा ।

---

* हविर्धानग्रहणमित्यधिकम् ।

उत्तरस्मिन्हविर्धाने यथावकाशमितराः ।

उत्तरहविर्धानसमीपे यथावकाशमितरा होतृचमसस्थव्यतिरिक्ताः सर्वाः । एकधनानां पश्चादक्षमेवाऽऽसादनं वसतीवरीणां तु पुरोक्षम् । तथा चाऽऽपस्तम्बः—उत्तरस्य हविर्धानस्याधस्तात्पुरोक्षं वसतीवरीः पश्चादक्षमेकधना इति । तत्र पश्चादक्षं तिस्र एकधनास्थालीरितरास्तु यथावकाशमित्यापस्तम्बतो विशेषः ।

निग्राभ्याः स्थ देवश्रुतः शुक्राः शुक्रभृतः पूताः पूतभृत आयुर्मे तर्पयतेति होतृचमसे यजमानं वाचयति ता निग्राभ्या भवन्ति ॥ ४ ॥

इति हिरण्यकेशिसूत्रेऽष्टमप्रश्ने प्रथमः पटलः ।

---

तत्रस्थ एव होतृचमसे होतृचमससमीपे, सामीप्येन प्रेक्षणं लक्ष्यते । तथा च बौधायनः—ताः प्रेक्षमाणं यजमानं वाचयतीति । यजमानग्रहणं पत्नीव्यावृत्त्यर्थम् । अन्यदपि विशेषमाह स एव—उरोर्वोरमिवोपनिगृह्य तासु निग्राभ्यासु यजमानं वाचयतीति । उपनिग्रहणं कृताकृतं यासां निमित्तं होतृचमसे वाचनं कृतं ता आपो निग्राभ्या निग्राभ्याभिधा भवन्तीत्यर्थः । अभिधायाः प्रयोजनं श्वात्राः स्थ वृत्रतुर इति निग्राभ्याभिरुपसृजतीत्यादावेतासां संप्रत्ययः । शुक्राः शुक्रभृतः पूताः पूतभृत इति शाखान्तरोपात्तांशरहितेन स्वशाखास्थेन विकल्पते ।

इत्योकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्निचित्वाजपेययाजिसर्वतोमुखयाजिद्विसाहस्राग्निचित्पौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथदीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसूत्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंतापशामिकायां ज्योत्स्नाख्यायां वृत्तावष्टमप्रश्नस्य प्रथमः पटलः ॥ १ ॥

---

अथाष्टमप्रश्ने द्वितीयः पटलः ।

---

दधिग्रहेण प्रचरति ।

गृह्यत इति ग्रहः । दधिरूपो ग्रहो यस्मिन्कर्मणि तदेतादृशं दधिग्रहनामकं कर्म तेन प्रचरति तदनुतिष्ठतीत्यर्थः । अत्र प्रचारशब्देनानुष्ठानरूप एवार्थो गृह्यते न तु यागः । वषट्कारसद्भावाभावात् । ग्रहशब्देनात्र द्रव्यमुच्यते । सामान्यप्रतिज्ञेयम् ।

उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योति-
ष्मन्तं गृह्णामीति दधिग्रहपात्रे दधिग्रहं गृह्णात्यपेन्द्र द्विषतो
मन इति हरति प्राणाय त्वाऽपानाय त्वेति जुहोति ।

यत्पूर्वस्मिन्दिने कृतं तद्दध्यत्र । दधिग्रहं गृह्णातीत्यत्र दधिग्रहशब्दो द्रव्यपरः । अग्निहोत्रमधिश्रयतीतिवत् । दधि गृह्णातीत्येतावतैव सिद्धौ ग्रहवचनं दशापवित्रकरणकपरिमार्जनस्य प्राप्तये । हरति आहवनीयं प्रति होमार्थम् । दिवे त्वाऽन्तरिक्षाय त्वा पृथिव्यै त्वेति तं जहोति जुहोमीति त्रयाणां मन्त्राणां क्रमेणान्ताः । जुहोतिचोदितत्वादन्तिमस्य होमार्थस्य मन्त्रस्यान्ते स्वाहाकारः । आहवनीयस्य पश्चादुपविश्यैव होमो येन केनचिद्दधिग्रहपात्रकोणेन । अपूर्वत्वान्न दर्विहोमधर्मः । इत आरभ्याऽऽग्रयणात्प्राक्तनान्ग्रहानुपांशुस्वरेण गृह्णीयात् । आग्रयणादूर्ध्वानुपब्दिमत्स्वरेण । तथा च श्रुतिः—यान्प्राचीनमाग्रयणाद्ग्रहान्गृह्णीयात्तानुपांशु गृह्णीयाद्यानूर्ध्वांस्तानुपब्दिमत इति । करणवदशब्दममनःप्रयोग उपांशु सशब्दमुपब्दिमदिति प्रातिशाख्यसूत्रोक्ताभ्यामेताभ्यां स्वराभ्यां यथायथम् । आग्रयणस्य तूत्तम एव स्वरः । अयं दधिग्रहो न नैमित्तिकः । न च देवतान्तराये विधानान्नैमित्तिकत्वमिति वाच्यम् । यदिशब्दाद्यभावेन निमित्तस्याप्रतीतेः । तथा च नित्यः । तथा च चतुर्थाध्याये चतुर्थपादे जैमिनिः—दधिग्रहो नैमित्तिकः श्रुतिसंयोगात्, नित्यश्च ज्येष्ठशब्दत्वात्, सार्वरूप्याच्च नित्यो वा स्यादर्थवादस्तयोः कर्मण्यसंबन्धाद्भक्त्वाद्वान्तरायस्येति । दधिग्रहो नैमित्तिको भवति श्रुतिसंयोगाद्देवतान्तरायनिमित्तश्रुतिसंयोगादिति प्रथमसूत्रार्थः । ज्येष्ठशब्दत्वादित्यत्र शब्दः स्तुतिपरः । ज्येष्ठ इति शब्दः स्तुतिर्यस्य तस्मात् । अथवा ज्येष्ठशब्दत्वाज्ज्येष्ठशब्दवत्त्वादित्यर्थः । अथवा ज्येष्ठशब्दः प्राथम्यवचनः प्रथमं गृह्यमाणत्वात् । तथा च नैमित्तिकत्ववन्नित्यत्वं चेति द्वितीयसूत्रार्थः । सार्वरूप्याच्च प्रजापतिः सर्वा देवता इति सर्वदेवतासारूप्यादपि नित्यत्वमिति तृतीयसूत्रार्थः ।

आज्यग्रहं गृह्णीयात्तेजस्कामस्य सो-
मग्रहं गृह्णीयाद्ब्रह्मवर्चसकामस्येति ।

काम्याविति शेषः ।

तयोर्दधिग्रहेण कल्पो व्याख्यातः ।

तयोराज्यसोमग्रहयोः । दधिग्रहस्य यः कल्पः प्रकारः । औदुम्बरं चतुःस्रक्ति दधिग्रहपात्रमित्यस्यात्र प्राप्तिः । उपयामगृहीतोऽसि प्रजापतये त्वा ज्योतिष्मते ज्योतिष्मन्तं गृह्णामीत्यादिः प्राणाय त्वाऽपानाय त्वेति जुहोतीत्यन्तश्चैवानयोर्भवतीत्यर्थः ।

दधिग्रहं गृह्णीयात्पशुकामस्येति नित्ये काम्ये ।

दधिग्रहं गृह्णीयादिति वाक्येन नित्ये विधौ तस्यैव दधिग्रहं गृह्णीयात्पशुकामस्येति वाक्यान्तरेण फलश्रवणेन काम्ये विधौ च दधिग्रह एव भवति नेतरावित्यर्थः । अथ वा

नित्य इत्यत्र भावप्रधानो निर्देशः। नित्य इत्यनन्तरमपिशब्दोऽध्याहार्यः। तथा चायमर्थो भवति—दधिग्रहस्य नित्यत्वेऽपि दधिग्रहं गृह्णीयात्पशुकामस्येति फलश्रवणात्काम्यत्वेऽपि प्रवर्तत इति। तेन दधिग्रहस्योभयरूपत्वे सिद्ध आज्यग्रहसोमग्रहयोः काम्यत्वमेवेति अर्थादवगम्यते। चकारोऽपभ्रष्टो द्रष्टव्यः। आज्यग्रहसोमग्रहयोः काम्यत्वात्प्रकृतावेव निवेशो न विकृतौ काम्यस्य दधिग्रहस्यापि सति कामे प्रकृतावेव निवेशः। नित्यस्य दधिग्रहस्य तु उभयत्रापि निवेश इति द्रष्टव्यम्। आज्यग्रह आज्यमपूर्वमैष्टिकमेव वा। अपूर्वपक्षे पात्रेणैव ग्रहणम्। ऐष्टिकपक्षे स्रुवेण यावद्दधिग्रहपात्रपूरणमाज्यग्रहणात्पूर्वं ग्रहपात्रसादनान्ते चोदकस्पर्शः। अत्र कमिधातुश्रवणात्सत्यां कामनायां तेजस्काम आज्यग्रहं ग्रहीष्ये ब्रह्मवर्चसकामः सोमग्रहं ग्रहीष्ये पशुकामो दधिग्रहं ग्रहीष्य इति यथाकामं यजमानेन संकल्पः कर्तव्यः। समस्ते क्रतावर्थं श्रूयमाणं यजमानः कामयते तथा नित्येषु यज्ञाङ्गेषु यानि तु कामयतिः श्रावयतीति सूत्रात्।

**सोमग्रहं ग्रहीष्यन्राजानमपादत्ते यावन्तमेकग्रहायाऽऽप्तं मन्यते।**

अपेत्युपसर्गाद्राशीभूताद्राज्ञोऽपादानीभूतादादानं कार्यं न तु कृत्स्नस्य राज्ञ आदानमिति। अप वाऽपेत्युपसर्गो दार्ढ्यमाचष्टे यथा दृढेन मुष्टिनाऽऽदानं भवति तथा ग्रहीतव्यः सोम इति। तत्र ग्रहीतव्यस्य राज्ञः प्रमाणमाह—यावन्तमेकग्रहायाऽऽप्तं मन्यत इत्यनेन। एकग्रहायाऽऽप्तं राजानमपादत्त इत्येतावत्येव लाघवादुक्तव्ये गुरुसूत्रकरणमपात्तेन पर्याप्तिर्न भवति चेत्तदाऽन्योऽपि पर्याप्तो ग्राह्यो न तु प्रथमापादान एव पर्याप्तो ग्राह्य इति नियम इति ज्ञापनार्थम्। गृह्यत इति ग्रहो रसः। एकशब्दः केवलार्थकः केवलं ग्रहाय रसायाऽऽप्तं पर्याप्तं मन्यत एतावता सोमेन रसो लभ्यो भवतीति निश्चीयते। पात्रस्यातीव पूर्णं भवतु वा मा वेति तावत्परिमितः सोमोऽपादातव्य इत्यर्थः। अर्थादेवैकग्रहायाऽऽप्तस्य सोमस्यापादाने सिद्ध एकग्रहायाऽऽप्तं मन्यत इति वचनं वक्ष्यमाणं सर्वान्पूर्णान्वृष्टिकामस्य ग्रहान्गृह्णीयादिति काम्यं ग्रहाणां पूर्णत्वं नात्र भवति किं तु कामाभावे यथोपर्यर्धग्रहणं धाराग्रहाणां तद्वदत्रापीति।

**प्रत्युपनह्येतरं निदधाति।**

इतरमेकग्रहार्थं गृहीतादवशिष्टं प्रत्युपनह्य पुनर्बद्ध्वा स्वस्थाने निदधातीत्यर्थः। प्रत्युपनह्येति वचनाद्बन्धनं विस्रस्यैवापादानमिति। हस्तगृहीतसोमः सन्नेव प्रत्युपनहनं कृत्वा निदधाति। यद्येतादृशः सन्न शक्नुयात्तदाऽन्यस्मै प्रदाय प्रत्युपनह्य निदधाति।

**तमुपरे न्युप्य वसतीवरीभिरुपसृज्याश्रीर्णूर्ध्वं व इत्यभिमन्त्र्य।**

तमपात्तमुपर उपरं प्रविष्टं मध्ये पञ्चमामितिलक्षणलक्षिते न्युप्य निक्षिप्य वसतीवरीभिरुपसृज्य मिश्रयित्वा मिश्रितमश्रीर्णूर्ध्वं व इति मन्त्रेणाभिमन्त्रयेत्यर्थः। सवनाय सोममिति मन्त्रान्तः।

तिस्रो यह्वस्य समिधः परिज्मन्देवा अकृण्वन्नु-
शिजो अमर्त्यवे । तासामेकामदधुर्मर्त्ये भुजं लोकं मु
द्वे उपजामीनं ईयतुरिति प्राणगा यथार्थमभिषुणोति ।

प्राणोपांशुसवनव्यतिरिक्तानामुपात्तानां चतुर्णां मध्ये येन केनचिद्यथार्थं यथाप्रयोजनं यावतो रसस्य प्रयोजनं तावद्रसनिष्पत्तिपर्यन्तमिति यावत्, अभिषुणोति राजानं रसोत्पादानुगुणं शिथिलं कण्डनेन करोतीत्यर्थः ।

आ मा स्कानिति योऽभिषूयमाणस्य प्रथमोंऽशुः
स्कन्दति तमभिमन्त्रयते प्रत्याहरति वा ।

तं स्कन्नम् । प्रथमग्रहणाद्द्वितीयादिस्कन्दने नैतत्प्रायश्चित्तं तत्र तूष्णीमेव स्कन्नस्य प्रत्याहरणमात्रं कर्तव्यम् । निर्वीरिरिति मन्त्रान्तः ।

द्रप्सश्चस्कन्देति विप्रुषोऽनुमन्त्रयते ।

विप्रुषो बिन्दवः । सप्तहोत्रा इति मन्त्रान्तः । विप्रुट्सवन इदमनुमन्त्रणं नासवने ।

सर्वाभिषवाणामेष कल्पः ।

सर्वेषामंशुप्रभृतिग्रहसंबन्धिनामभिषवाणां महाभिषवस्य चैष उपमर्जनादिविप्रुडनुमन्त्रणान्तः कल्पो विधिर्भवतीत्यर्थः ।

एतस्मिन्नेवैषोऽभिषवमन्त्रः ।

सर्वाभिषवाणामेष कल्प इत्यनेन तिस्रो यह्वस्येत्यस्य मन्त्रस्यापि प्राप्तावेतद्व्यतिरिक्तेष्वंशुप्रभृतिग्रहसंबन्ध्यभिषवेषु महाभिषवे चैतस्य मन्त्रस्य निवृत्तिः क्रियते । एष तिस्रो यह्वस्येत्यभिषवमन्त्र एतस्मिन्नेवाभिषवे भवति नान्येष्वभिषवेष्वित्यर्थः ।

अथ परिभाषामाह —

तꣳ सहिरण्येन पाणिना गृहीत्वा सहिरण्येन प्राङ्-
मुखस्तिष्ठन्दक्षिणार्धपूर्वार्धे जुहोत्युत्तरार्धपूर्वार्धे वा ।

तमभिषुतं सोमं गृहीत्वा पात्रे गृहीत्वा, सहिरण्येन पाणिनेति सोमक्रये व्याख्याम् । सहिरण्येन पाणिना गृहीत्वेत्येतस्मात्सूत्रादुत्तरत्रानुवृत्त्यैव लाभे पुनः सहिरण्येनेति वचनं हिरण्यश्रयणार्थम् । तेन सहिरण्येनेति ग्रहविशेषणमेव भवति । हिरण्यसाहित्याद्धिरण्यश्रयणमेव विहितं भवति । सहिरण्येनेति तृतीया साहित्यार्थे । तेन सहिरण्येन ग्रहेण सह तिष्ठन्नित्यर्थो भवति । दक्षिणार्धपूर्वार्धे आग्नेय्याम् । उत्तरार्धपूर्वार्धे ऐशान्याम् ।

---

१ ज. म. यज्ञस्य । २ ङ. भुजमु लो । ३ क. ङ. झ. ञ. ट. °कामिद्वे । ख. ग. °कमिद्वे । ४ ङ. उपजामिमीय° । ५ ख. °जाम ई । ग. °जामीम ई° ।

**यत्रैवं तत्र सर्वसोमाहुतीः ।**

यत्र यासु सोमाहुतिषु एवं प्राङ्मुखस्तिष्ठन्नित्यादिः प्रकारस्तत्र सर्वस्य तत्तद्ग्रह- स्थस्य सोमस्याऽऽहुतयः सर्वसोमाहुतयः सर्वसोमस्य होमः कर्तव्यो न तु शे- स्थापनीय इति । यत्रैवं तत्रेति वचनादेतादृशे प्रकार एवायं सर्वस्य सोमस्य होमा- धिरन्यत्र यथावचनमिति । यत्र यस्मिन्देशे दक्षिणार्धपूर्वार्धरूप उत्तरार्धपूर्वार्धरू- वैवं होमस्तत्र तस्मिन्नेव देशे सर्वाः सोमाहुतयो होतव्या इति वाऽर्थः । सर्वसोमा- तीरित्येतदनन्तरं पूर्वसूत्राज्जुहोतीत्यनुवर्तनीयम् । नचाग्रिमेण हुत्वेतिशब्देनैवान्वयो- स्त्विति वाच्यम् । हुत्वेत्यस्यानन्वयापत्तेः । नचान्वयार्थमुत्तरसूत्रेणैव संबन्धेऽपि तद्धो- तादवस्थ्यमिति वाच्यम् । विशेषविधानार्थानुवादकत्वेनोपपत्तिसंभवेन तद्दोषतादवस्थ्या- भावात् । अनुवादप्रयोजनं तु होम एव मुख्यः शेषकरणं गौणं तस्य भक्षणार्थत्वात् तथा च शेषकरणं स्वल्पस्य सोमस्य भूयसो होम इति ।

**हुत्वा शेषं वा करोति ।**

स्पष्टम् ।

**पूर्वेण द्वारेण सदः प्रविश्याग्रेण होतारं पुरस्तात्प्रत्यङ्ङा- सीनो नृचक्षसं त्वेत्यवेक्ष्य मन्द्राभिभूतिरिति भक्षयति ।**

अनुक्ते कर्तरि यजुर्वेदेनाध्वर्युरिति परिभाषयाऽध्वर्युरेव कर्तेति । सदसि भक्ष- यन्तीति श्रुतेर्भक्षणार्थं सदसि प्रवेशः । अग्रेण होतारमिति विधानाद्धोत्रा स्वधिष्ण्या- पश्चादध्वर्योः सोमभक्षणपर्यन्तमुपवेशनं कर्तव्यम् । अथवा पूर्वेण द्वारेण स- प्रविश्याग्रेण होतारमित्यत्र होत्रशास्त्राविरोधायाग्रेण होतारं पूर्वेण द्वारेण सदः प्रा- श्येत्येवमेवान्वयोऽङ्गीकर्तव्यः । तथा चायमर्थो भवति अग्रेण होतारं सदो गत- पूर्वेण द्वारेण सदः प्रविश्येति । एवं चाग्रेण होतारमित्यस्याऽऽसीन इत्यत्रान्व- स्यैवाभावान्न होतृशास्त्रेण विरोधः । नचैवं पुरस्तात्पदस्य वैयर्थ्यं शङ्क्यम् पुरस्तादित्यस्य सदसः पुरस्ताद्भागपरत्वेन वैयर्थ्याभावात् । इदमेव पुरस्तात् ज्ञापयति सदसो धिष्णियेभ्यो होतुर्वा पश्चान्न गच्छेदिति । अर्थाद्धातृधिष्- ण्यस्यैवावधित्वं सर्वभक्षेषु न तु तत्तद्धिष्णियस्य । आग्नीध्रे सदसि भक्षयन्तीति वि- धापत्त्या तदसंभवात् । अतो होतुर्मुख्यत्वात्प्रथमोपस्थितत्वाच्च तद्धिष्णियस्यैवावधि- युक्तमिति भावः । ननु अग्रेण होतारमितिवचनं व्यर्थं हविर्धाने पूर्वेण प्रविष्ट- हविर्धानस्यापरेण द्वारेण प्रवेशं व्यावर्तयितुमिति चेत्तस्य नासर्ंस्थिते सोमेऽध्वर्युः ... ण द्वारेण हविर्धाने प्रविश्यापरेण निष्क्रामेदित्यनेन [1]निषेधेनैव सिद्धेरिति चेन्न । ह-

---

१ क. ख. °सादिप्र° ।

सामीप्येनैव गमनार्थं तस्याऽऽवश्यकत्वात् । प्रथमः एषोषनित्यन्तः । आयुषे वर्चस इत्यन्तो द्वितीयः । वक्ष्यमाणस्य मन्त्रस्य प्रदर्शनमात्रमत्र क्रियते तेन वसुमद्गणस्येत्ययं मन्त्रोऽत्रापि भवति । अवेक्षणप्रभृतिना भक्षमन्त्रेण प्रतिपद्यत इति वक्ष्यमाणवचनाल्लिङ्गात्सामर्थ्याच्च । वसुमद्गणस्य सोमदेवत इति प्रातःसवने सर्वसोमान्भक्षयन्तीति सर्वशब्दविरोधोऽप्येवं रीत्या परिहृतो भवति । अन्यथौदुम्बरीं स्पृष्ट्वोद्गायेदित्यनेन विरोधं परिहर्तुं सर्वा वेष्टयितव्येति सर्वशब्दसंकोचवत्संकोच आपद्येत ।

अथ परिभाषामाह—

**स्वयमाहरन्भक्षमवेक्षणप्रभृतिना भक्षमन्त्रेण प्रतिपद्यते ।**

यो यो यत्र कुत्रचित्स्वयमेवाऽऽहरन्भक्षमवेक्षणमवेक्षेति विहितं कर्म तत्प्रभृति आदिर्यस्य सोऽवेक्षणप्रभृतिः । एतादृशेन मन्द्राभिभूतिरिति भक्षलिङ्गकेन मन्त्रेण स स प्रतिपद्यते भक्षयतीत्यर्थः । आहरन्प्रतिपद्यत इत्येतादृशसूत्रादाहरणभक्षणयोरेककर्तृकत्वावगमादुत्तरत्रान्येनाऽऽह्रियमाणमिति विशेषविधानाच्चैवात्र स्वयमाहरणसिद्धौ स्वयमितिवचनं यो यो भक्षणकर्ता स स स्वकीयभक्षं स्वयमेवाऽऽहरन्नवेक्षणप्रभृतिना भक्षमन्त्रेण प्रतिपद्यत इत्येतादृशार्थलाभार्थम् । तेन प्रतिप्रस्थात्रादीनामपि स्वस्वभक्षाहरणेऽयमेव विधिरिति सिद्धं भवति । अथ वा स्वयमाहरन्निति भक्षविशेषणम् । स्वयमाहर इति विगृह्य छन्दसीति विचं प्रकृत्यान्येभ्योऽपि दृश्यन्त इत्यनेन हृञ्धातोर्विच् । स च कर्तरि कृदित्यनेन कर्तरि । स्वयमाहर्यत्र स स्वयमा*हरः स्वयमाहरणकर्ता यत्रेति तदर्थः । तं स्वयमाहरं भक्षमवेक्षणप्रभृतिना भक्षमन्त्रेण प्रतिपद्यत इति । नकारश्छान्दसः । अथ वा सुपिङ्ग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङ्गामिति शास्त्रेण च्छान्दसः क्त्वार्थपूर्वकाले शतृप्रत्यय इति ज्ञेयम् । एतेनाऽऽहरणभक्षणयोरेककालता वारिता भवति । स्वकर्तृकाहरणेऽवेक्षणप्रभृतिर्मन्त्रसाध्यविधिरेवान्यकर्तृकाहरणे प्रतीक्षणादिस्तादृश एव । सदः प्रविश्य पुरस्तात्प्रत्यङ्ङासीन इत्येतत्कर्मजातस्य मन्त्रसाध्यत्वाभावादुभयसाधारणत्वमेव । अग्नेण होतारमित्यस्य तु अस्मिन्नेव पक्षे संभवादत्रैव नान्येषु भक्षेषु । भक्षमन्त्रेणेत्यत्र भक्षग्रहणं भक्षयामीत्यन्तस्य विनियोगं प्रदर्शयितुम् । अवेक्षणप्रभृतीति वचनं प्रतीक्षणप्रतिग्रहणाभावेऽपि भक्षेहीत्यादि कृत्वा यत्र क्व च भक्षयेदेवमेवैतान्मन्त्राञ्जपेदिति भारद्वाजोक्तं तन्मन्त्रजपं व्यावर्तयितुम् । अत्रोपह्वानं भवत्येव । नानुपहूतेन सोमः पातव्य इति श्रुतावापस्तम्बसूत्रे च विधानात् । तच्चोपह्वानमध्वर्योरेव । तस्य होमाभिषवकर्तृत्वेन मुख्यत्वात् । प्रतिभक्षमपरत्र उपह्वानं तु अन्योन्यमेतादृश एव विधानं प्रतिप्रस्थातुरध्वर्योरुक्तहेतोरुपह्वानं तं तद्बाधनाय यत्र क्व चैककाले भक्षयेयुरन्योन्यास्मिन्नुपहवमिच्छेरन्निति सूत्रम् ।

---

* अग्निरितियोगविभागात्समासान्तोऽच्प्रत्ययो ज्ञेयः पद्मनाभवत् ।

अन्येनाऽऽहरणे भक्षणे विशेषमाह—

भक्षेहीत्यन्येनाऽऽह्रियमाणं प्रतीक्षतेऽश्विनोस्त्वा बाहुभ्यां सघ्यासमिति प्रतिगृह्य नृचक्षसं त्वेत्यवेक्ष्य मन्द्राभिभूतिरित्यनुद्रुत्य वसुमद्गणस्य सोमदेव त इति ॥ ९ ॥

प्रातःसवने सर्वसोमान्भक्षयन्ति नराशंसपीतस्येति नाराशंसान् ।

आह्रियमाणमिति शानचा समकालिकत्वं प्रतीक्षणस्य बोध्यते । अत्र प्रतिशब्दः संमुखीकरणं तदर्थमीक्षत इत्यर्थः । एहीति लिङ्गात् । प्रतीक्षत इत्येकवचनात्स्वभक्ष प्रतीक्षणकर्ताऽध्वर्युरेव न ब्रह्मादयः स्वस्वभक्षप्रतीक्षणकर्तार इति । अथ वा प्रतीक्षे इति बहुवचनान्त एव पाठो युक्तः । एकवचनान्तः पाठ उत्तरत्र बहुवचनेन विरोधादयुक्त एव । न च वैपरीत्यमेव किं न स्यादिति शङ्क्यम् । भक्षणविधेः सर्वेषामपेक्षितत्वेन वैपरीत्यस्य वक्तुमशक्यत्वात् । प्रतीक्षणक्रियाया अन्यकर्तृकाहरणाधीनत्वाद्भक्षणानासंभवेन ल्यप्प्रत्ययान्तताया अभावः । अथ वाऽऽर्षत्वमेवैकवचनस्य कल्पनीयम् अत्र यद्युक्तं तद्ग्राह्यम् । अवनतः सन्नीक्षितेत्यवेक्ष्येत्यस्यार्थः । अनुद्रवणं पूर्वमेव व्याख्यातम् । सर्वे च ते सोमाश्च सर्वसोमास्तान् । भक्षयन्तीति बहुवचनोपात्ता अध्वर्युप्रतिप्रस्थातृब्रह्मयजमानाः । सदस्यश्चेत्यस्याप्यत्र ग्रहणम् । होत्रादीनामपि अत्रैव मन्त्रश्रवणभक्षणे । तेषां व्याख्यातो भक्षमन्त्र इति वक्ष्यमाणवचनात् । मन्त्रग्रहणादनुद्रवणान्तो विधिः परं नास्तीत्ययं विशेषोऽग्रे वक्ष्यते । अत्र सर्वग्रहणं यत्रैककालिकमेककर्मसंबद्धं बहुकर्तृकानेकसोमभक्षणं तत्रायं विधिरिति कादाचित्कशङ्कानिरासार्थम् हृदेऽसीत्यन्तः प्रथमो मन्त्रः । द्वितीयस्तु तावानेव । तृतीयस्य त्वेषमित्यन्तः । चतुर्थस्य वर्चस इत्यन्तः । पञ्चमस्य पाठस्तु वसुमद्गणस्य सोमदेव ते मतिविदः प्रातःसवनस्य गायत्रच्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति । नराशंसपीतस्य सोमदेव ते मतिविदः प्रातःसवनस्य गायत्रच्छन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति नाराशंसभक्षणमन्त्रपाठः । भक्षस्य स्वयमाहरणेऽन्येनाऽऽहरणे च भक्षणमन्त्र इयान्भेदः—अनुद्रवणराहित्येन स्वयमाहरणे भक्षणमन्त्रपाठ अन्येनाऽऽहरणेऽनुद्रवणसहितः पाठ इति । भक्षेहीत्यनुवाकस्य भक्षसमाख्या साक्षात्परंपरासाधारण्येनैवोपपादनीयेत्येवं तृतीयाध्याये द्वितीयपादे जैमिनिरप्याह—लिङ्गसमाख्यानाभ्यां भक्षार्थताऽनुवाकस्य, तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वादिति सूत्राभ्याम् । लिङ्गं भक्षेहीति भक्षशब्दः समाख्या[नं] भक्षानुवाक इति प्राचीनसमाख्या । एताभ्यां भक्षेहीत्यनुवाकस्य कृत्स्नस्यापि भक्षार्थता स्यादिति प्रथमसूत्रार्थः । तस्य भक्षानुवाकस्य रूपं तत्तन्मन्त्रगतं तत्तत्क्रियाबोधकमसाधारणं लिङ्गम् उपदेशस्तत्तन्मन्त्रस्य विनियोजकं वाक्यं, लिङ्गाभावेऽपि एताभ्यामपकर्षो विभज्य

विनियोगः, अर्थस्य ग्रहणादेरविधानेऽपि चोदितत्वादनुष्ठेयत्वादिति [द्वितीय]सूत्रार्थः तथा च भक्षेहीत्यादीनां हिन्व म इत्यन्तानां संमुखीकरणार्थेक्षणादावेव विनियोगः । मन्द्राभिभूतिरित्येतस्यैव भक्षे विनियोग इति । मन्द्राभिभूतिरित्ययं मन्त्रस्तृप्यत्वित्यन्त एवेति केचित् । तन्न । गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात्तयोरेकार्थसंयोगादिति तृतीयाध्यायद्वितीयपादगतजैमिनिन्यायविरोधापत्तेः । तृप्यत्वित्यनेन भक्षगुणाभिधाना-न्मन्द्रादिरेक एव मन्त्रः स्यात् । तयोस्तृप्तिभक्षयोरेकोऽर्थः कार्यकारणभावरूपः संबन्धस्तस्य संयोगः सत्त्व तस्मादित्यर्थः । भवति च तृप्तेः कार्यत्वं भक्षस्य तृप्तिनिष्पा-दकत्वात्कारणत्वम् । तृप्तेरननुष्ठेयपदार्थत्वात्तृप्तिविशिष्टभक्षप्रकाशन एव विनियोग इति ।

रुद्रवद्गणस्य सोमदेवत इति माध्यंदिने सवने सर्वसोमान्भक्षयन्ति नराशंसपीतस्येति नाराशंसानादित्यवद्गणस्य सोमदेवत इति तृतीयसवने सर्वसोमान्भक्षयन्ति नराशंसपीतस्येति नाराशंसान् ।

रुद्रवद्गणस्य सोमदेवते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति माध्यंदिने सवने सर्वसोमभक्षणमन्त्रपाठः । नराशंसपीतस्य सोमदेवते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति नाराशंसभक्षणमन्त्रपाठः । आदित्यवद्गणस्य सोमदेवते मतिविदस्तृतीयस्य सवनस्य जगतीछन्दस इन्द्रपीतस्य मधुमत उपहूतस्यो-पहूतो भक्षयामीति तृतीयसवने सर्वसोमभक्षणमन्त्रपाठः । नराशंसपीतस्य सोमदेवते मतिविदस्तृतीयस्य सवनस्य जगतीछन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति नाराशंसभक्षणमन्त्रपाठः । सर्वग्रहणयोर्यत्नं पूर्ववद्द्रष्टव्यम् । एवमेव पेठतुर्मन्त्रान्बौधायनभारद्वाजौ ।

यत्प्राग्वसुमद्गणात्तत्सर्वत्रानुषजति ।

वसुमद्गणस्येति मन्त्रात्प्राग्यद्यो मन्द्राभिभूतिरित्यादिरायुषे वर्चस इत्यन्तो मन्त्रस्तत्स मन्त्रः सर्वत्र रुद्रवद्गणादित्यवद्गणयोर्नराशंसमन्त्रयेष्वपि चानुषजति योजयति न तु वसुमद्गणस्यैव शेषभूतोऽयं मन्त्र इत्यर्थः । यदि यत्रं तृप्तां सुलुगित्यनेन सोर्लुक् । एव तदित्यत्रापि । अथवाऽयमर्थः—वसुमद्गणात्प्राग्यत्कर्म भक्षेहीत्युद्रवणान्तं तत्कर्म वसुमद्गणवद्रुद्रवद्गणादित्यवद्गणनराशंसेभ्योऽपि प्रागनुषजति अनुवर्ततीत्यर्थः । एकव-चनं छान्दसम् । अथवा भक्षेहीत्यारभ्य वसुमद्गणात्प्राग्यत्कर्म तत्सर्वत्र सर्वसवनवि-षयेऽपि भवति न तु प्रातःसवनमात्रविषय इत्यर्थः । अत्रानुरप्यर्थकः । षजधा भवती-त्यर्थे । धातूनामनेकार्थत्वमङ्गीकृतं चास्ति वैयाकरणैर्भूषणे । तन्न्यायेनानापत्त्याऽत्रापि स्वीकर्तव्यमेवेति ज्ञेयं सुधीभिः । ऐन्द्रेष्विन्द्रपीतस्येत्यव । ऊहाव त्न.सर्वसोमानि-

त्यनेनानूदितस्यैव भक्षकरणत्वप्रतिपादनाच्च । नचानैन्द्रेषु सोमेष्विन्द्रेण पीतत्वाभावा-द्विरुद्धमेतदिति वाच्यम् । इन्द्रेण पीतः सोमो यस्मिन्सवन इति बहुव्रीहिसमासाश्र-यणेन सवनविशेषणत्वस्यैवाङ्गीकारेण विरोधाभावात् । तथा च तृतीयाध्याये द्वितीय-पादे जैमिनिः सर्वेषां त्वैकमन्त्र्यं त्वैतिशायनस्य भक्तिपावनत्वात्सवनाधिकारो हीति । सर्वेषां भक्षाणामैकमन्त्र्यमेको मन्त्रो येषां त इत्येकमन्त्रास्तेषां भाव ऐकमन्त्र्यमनेकदेव-तानां भक्षाणामपि ऐकमन्त्र्यमेकदेवतामन्त्रवत्त्वमेव सर्वेषां मन्त्राणां भक्तिपूर्वकपानत्वं सोमस्येन्द्रकर्तृकमेव तत्त्वात्सवनाधिकारो हि यस्मात्सवनत्रयमप्यधिकृत्येन्द्रपीतस्येत्येव पाठो यस्मादतो भक्तिपूर्वकपातव्यत्वादेकमन्त्र्यमेव सर्वेषां मन्त्राणामैतिशायनमुनिमत इति सूत्रार्थः । सूत्र ऐतिशायनग्रहणं पूजार्थम् । एनेन जैमिन्युक्तं लिङ्गविशेषनिर्देशा-त्समानविधानेष्वनैन्द्राणाममन्त्रत्वमिति सूत्रेण पाक्षिकममन्त्रकभक्षणं पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं तद्विशेषत्वादिति सूत्रेणोहनं च निरस्यते । ऊहनिरासेन पात्नीवते तु पूर्ववत्, त्वष्टारं तूपलक्षयेत्*पानात्, त्रिशाच्च परार्थत्वात्, वषट्कारश्च कर्तृ(पूर्व)वत्, छन्दःप्रतिषेधात्तु(धस्तु) सर्वगामित्वात्, ऐन्द्राग्ने तु लिङ्गभावात्स्यादितिचतुर्थाध्याय-द्वितीयपादगतसूत्रषट्कविषयास्तु अर्थादेव निरस्ता भवन्ति । अतोऽनैन्द्रानपी-न्द्रपीतस्येत्येव भक्षयतीति सिद्धं भवति । नरस्य होतुराशंसो यासां वेति नरेण कृतो नरकृतो नरकृत आशंसो यासां ता इति वा नराशंसा देवता एता-भिर्देवताभिः पीतः सोमो नराशंसपीतः । तत्रेन्द्राग्नी विश्वे देवा इति प्रातः-सवनसंबन्धिनाराशंसदेवते, इन्द्रो मरुत्वान्महेन्द्र इति माध्यंदिनसवनसंबन्धिनाराशं-सदेवते, विश्वे देवास्तृतीयसवनसंबन्धिनाराशंसदेवता, एता नाराशंससंज्ञका देवताः । एताभिः पीतः सोमो नराशंसपीत एव भवति । एतादृशरीत्यैव नराशंसपीतस्य सोमदेवत इति भक्षमन्त्रोपपत्तिर्नान्यथेति । प्रकमनेनापि यागसिद्धेस्तत्पीतोऽपि भवति। पितृपीतस्येत्यत्र पितृभिः पीतः पितृपीतस्तस्येत्येव व्युत्पत्तिर्न तु पितृभिः पीतः सोमो यस्मिन्नित्येवमिन्द्रपीतशब्दवद्व्युत्पत्तिः । बह्वृचश्रुतौ छन्दोगश्रुतौ च तेषु पितृभिर्भ-क्षितस्येति पठित्वा पितृलिङ्गत्वोपपादनात् । ते बह्वृचश्रुतावुक्ताः—ऊमा वै पितरः प्रातःसवन ऊर्वा माध्यंदिने काव्यास्तृतीयसवने तदेतत्पितॄनेवामृतान्सवनभाजः करो-तीति । सवनभाजः सवने सोमभागिनः करोतीत्यर्थः । छन्दोगश्रुतावपि त्रयो ह नु वै पितरोऽवमा और्वाः काव्या इत्यादिनोक्ताः । बाह्वृच्यरीत्योमा ऊर्वा इत्याद्ययोः सव-नयोः पितरः, छन्दोगरीत्याऽवमा और्वा इति । अत्र विकल्पः । तृतीयसवन उभयम-तेऽपि काव्या एव पितरः । तेनेदमुक्तं भवति पितरश्च नाराशंसदेवता इति । नाराशंस-संज्ञा बाह्वृच्ये द्विनाराशंसं प्रातःसवनं द्विनाराशंसं माध्यंदिनं सवनं सकृन्नाराशंसं

* जैमिनिसूत्रे पानादिति नोपलभ्यते । अत्र प्रमादपतितमिति भाति ।

तृतीयसवनमिति। आपस्तम्बोऽपि द्विनाराशंसे पूर्वे सवने भवत एकनाराशंसं तृतीयसवनमिति। लाट्यायनद्राह्यायणावपि सविशेषमाहतुः—द्वितीयाः सवनेषु नाराशंसाः पूर्वयोश्च तृतीयाविति। पूर्वयोः सवनयोर्द्वितीयतृतीयौ नाराशंसौ तृतीयसवने द्वितीय एवेत्यर्थः (?)। आचार्यस्तु तत्तत्प्रयोगनिरूपण एव वक्ष्यति। प्रातःसवने नाराशंसद्वयं माध्यंदिने सवने नाराशंसद्वयं तृतीयसवने सकृन्नाराशंसं न सोमं भक्षयित्वाऽऽचामेयुः। अनुच्छिष्टत्वात्। यथाऽनाचमनमुक्त्वाऽऽहाऽऽश्वलायनो न सोमेनोच्छिष्टा भवन्तीत्युदाहरन्तीति। पात्रेण चाऽऽस्यस्पृष्टेनैव भक्षणम्। तस्योच्छिष्टत्वमङ्गीकृत्य भक्षितानां मार्जालीये प्रक्षालनमिति प्रक्षालनेन शुद्धिवचनात्। मानवेऽपि यतिपात्रमधिकृत्योक्तं तेषामद्भिः स्मृतं शौचं चमसानामिवाध्वर इति। तथोद्गातृसदस्ययोरेकं चमसमुक्त्वाऽऽहतुर्लाट्यायनद्राह्यायणौ[यदि]बीभत्सेयातां नानाचमसौ स्यातामिति। तथा होतृचमसेन सोमं भक्षयत इत्येव कात्यायनः। तस्मान्नोच्छिष्टत्वेऽपि दोष इति। अन्यत्तु मतं नैकानि पात्रोच्छिष्टत्वे लिङ्गानि भवितुमर्हन्ति। कुतः, क्षालनवचनं तावदाज्यलेपान्प्रक्षाल्येत्यादिवल्लेपापनयनार्थतयाऽप्युपपन्नम्। चमसदृष्टान्तोऽपि तदभिप्राययुक्तो भिक्षापात्राधिकारात्। बीभत्सावचनमपि समानद्रव्यत्वादुपपन्नम्। बीभत्सत एव हि पीतशिष्टात्कमण्डलूदकादाचार्यस्य चमसेनेति चासिद्धमेव तेनैव कमण्डलूदकेनास्यस्पृष्टेनापि भक्षणोपपत्तेः। तथा कमण्डलुसाम्यमेव चमसस्य रूपापितं बौधायनेन—

यथा हि सोमसंयोगाच्चमसो मेध्य इष्यते।
अपां तथैव संयोगान्नित्यं मेध्यः कमण्डलुः॥
ततः शौचं ततः पानं तत आचमनं स्मृतम्। इति।

तस्माद्वाजिनादिवत्पात्राद्गृहीत्वा पात्रेण वाऽनास्यस्पृष्टेन युक्तं भक्षणम्। हन्तैवं सोमश्च पीतो भवति पात्रं चानुच्छिष्टमित्युभयमपि संपद्यत इति। मुख्यपक्षे तु यद्यपि नेदं संमतं तथाऽपि प्रमादादुद्धृत्य पाने किंचिदङ्गहानमात्रं न तु प्रधानबाधः। प्रतिपदोक्तप्रायश्चित्तस्येहाभावात्। सामान्यप्रायश्चित्तमेवेति संक्षेपः। स्यादेतत्। अस्यैव पक्षस्य मुख्यत्वम्। कुत इति चेत्। उच्यते—चमसं भक्षयेदिति वाक्यात्तावदास्यसंस्पर्शो लभ्यते। चमसमित्यस्य तत्स्थे लक्षणा न तु तत उद्धृते। लक्षणायामपि संनिकृष्टार्थपरित्यागेन विप्रकृष्टार्थग्रहणायोगात्। उक्तं हि शंकरभगवत्पादैः—लक्षणायामपि संनिकर्षविप्रकर्षौ स्त एवेति। किं च चमसप्रातिपदिकमात्रादप्युक्तोऽर्थो लभ्यते। अत्यविचमितमिनमिरमिलभिनभितपिपातिपनिपणिमहिभ्योऽसजिति सूत्रे चम्यते भक्ष्यतेऽस्मिन्सोम इति चमसशब्दस्य बहुषूणादिवृत्तिषु व्युत्पादितत्वात्। धातुवृत्तिकारैरपि

---

१ ख. ग. यजति। २ क. °पि न स°।

षमु अदन इति धाताबेवमेवोक्तत्वाच्च । चमसेषु समाख्यानात्संयोगस्य तन्निमित्तत्वा-दित्यत्र समाख्यया भक्षं व्युत्पादयद्भिर्मीमांसकैरप्येवमेवोक्तत्वात् । रुद्रदत्तेनापि एत-देवास्य ब्रह्मचमसत्वं यच्चम्यते तस्मिन्सोमो ब्रह्मणेत्युक्तत्वात् । रामस्वामिग्रन्थेऽप्येव-मभिधानाच्च । अपि च भक्षितानां मार्जालीये प्रक्षालनमिति सूत्रमपीह मानम् । स्कोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्य इत्यधिकरणे क्तविधानात् । किं च भक्षि-तानामुच्छिष्टानां मार्जालीये प्रक्षालनमिति भारद्वाजसूत्र उच्छिष्टानामित्युक्तिरपीह मानम् । अपि च द्राह्यायणलाट्यायनसूत्रयोर्यदि बीभत्सेयातां नानाचमसौ स्यातामिति बीभत्सोक्तिरपीह लिङ्गम् । उद्धृत्यपक्षे बीभत्सायां निर्मूलत्वापत्तेः । किं च दशपेयो भवतीत्यस्य वेदभाष्ये दशभिर्ब्राह्मणैरेकस्मिन्पात्रे पातव्यः सोमोऽस्मिन्नित्यादिग्रन्थोऽ-प्यत्रानुकूलः । उच्छिष्टं चम्वोरित्यादिमन्त्राणामृग्भाष्येऽप्येवम् । अपि चाशुद्धमिति चेन्न शब्दादित्युत्तरमीमांसासूत्रस्य कल्पतरुग्रन्थेऽपि स्पष्टमेवेति दिक् ।

**वाग्देवी सोमस्य पिबत्विति सार्वत्रिकमेके समामनन्ति ।**

सर्वत्र सर्वभक्षणमन्त्रस्थाने भवः सार्वत्रिकः । एतादृशममुं मन्त्रं समामनन्त्याचार्याः । सर्वेषां वसुमद्गणादीनां स्थाने वाग्देवी सोमस्य पिबत्विति मन्त्रो भवतीति निष्कृष्टोऽर्थः । भक्षेहीत्यादीनां सर्वेषामपि भक्षसमाख्यया भक्षत्वेन सजातीयत्वात्सजातीयस्य सजातीयं निवर्तकं भवत्येव, तथा च भक्षेहीत्यादीनां सर्वेषामपि निवृत्तिरिति प्राहुः । तन्न । तेषां मन्त्राणां प्रयोजनस्य भिन्नत्वेन तन्निवर्तकत्वासंभवात् ।

**हिन्व मे गात्राहरिव इति सोमं भक्षयित्वाऽऽत्मानं प्रत्यभिमृशन्ते ।**

सोमं भक्षयित्वेति वचनमेतस्य मन्त्रस्य मा मे वाङ्नाभिमतिगा इति जरणलिङ्गत्वा-त्स्वयमाहृतभक्षणे वाग्देवीतिमन्त्रेण भक्षणे चाप्यात्मप्रत्यभिमर्शनं भवतीति प्रदर्शयितुम् । अन्यथाऽऽन्याहृतभक्षभक्षणे दीर्घमन्त्रकरणकभक्षपक्षे चैव सर्वभक्षमन्त्रविनियोगसत्त्वा-त्तत्रैवायं प्रत्यभिमर्शः स्यादिति द्रष्टव्यम् । आत्मशब्देन हृदयम् ।

दह्रं विपापं परमेऽश्मभूतं यत्पुडरीकं पुरमध्यसंस्थम् ।
तत्रापि दह्रं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम् ॥

इत्युपनिषदि परमात्मनः सर्वव्यापित्वेऽपि उपासनोपयोगित्वेन हृदयस्यैवाधिष्ठान-त्वोपवर्णनात् । नाभिर्वाऽत्र मन्त्रलिङ्गात् । आत्मनः साक्षादभिमर्शासंभवात्प्रतिशब्द आत्मानुसंधानसमकालं हृत्पुण्डरीकावरणत्वगभिमर्शनं विदधाति । अतिगा इति मन्त्रान्तः ।

**मार्जालीये पात्रं प्रक्षाल्याऽऽयतने सादयति ।**

मार्जालीयशब्दः प्रागेव व्याख्यातः । पात्रं भक्षपात्रं, प्रक्षालनं दर्भैर्न तु केवलं हस्तेनैव । न मांसधौतस्य देवा अश्नन्तीत्यग्निहोत्रप्रकरण आपस्तम्बेन निषेधात् ।

प्रशब्दात्समीचीनं क्षालनं, प्रक्षालयेत्यत्रान्तर्भावितो णिच्। तेन प्रक्षालनं परिकर्मिककर्तृकमिति सिद्धं भवति। बौधायनेन तु ऋतुपात्रयोः शुक्रपात्रस्य च प्रक्षालने प्रतिप्रस्थातृकर्तृकतोक्ता सा वैतेष्वङ्गीकर्तव्या। आयतने सादनमध्वर्युकर्तृकमेव। यजुर्वेदेनाध्वर्युरिति परिभाषासूत्रात्। आयतने स्वस्वस्थाने।

## सर्वसोमानामेष कल्पः।

मार्जालीये पात्रं प्रक्षाल्याऽऽयतने सादयन्तीत्येष सर्वसोमानां कल्पः। भवतीति शेषः। पूर्वत्राध्वर्योरेवोपक्रान्तत्वादध्वर्युसंबन्धिसोमानामेव कल्प इति स्यात्तन्मा भूत्किं तु सोमभक्षणकर्तृसर्वर्त्विक्संबन्धिसोमानामप्येष कल्पो यथा स्यादित्येतदर्थं सर्वग्रहणम्। सर्वेषां सोमाः सर्वसोमास्तेषां सर्वसोमानामिति समासः। सोमानामिति बहुवचनं तत्तद्देवतोद्देशेन गृहीतत्वेन भेदात्। सर्वत्रेत्येतावतैव सिद्धे गुरुभूतसूत्रकरणं सुराग्रहव्यावृत्त्यर्थम्। तेन सुराग्रहे पात्रप्रक्षालनमायतने सादनं च न भवति। अथवा सर्वसोमानामेष कल्प इत्यस्यायमर्थः पूर्वेण द्वारेण सदः प्रविश्याग्रेण होतारं पुरस्तात्प्रत्यङ्ङासीनो नृचक्षसं त्वेत्यवेक्ष्य मन्द्राभिभूतिरिति भक्षयतीत्यादिरायतनसादनान्त एष कल्पः प्रकारः सर्वसोमानां भवतीति। सोमभक्षणकर्तृसर्वर्त्विक्संबन्धित्वे कल्पस्य सिद्धेऽर्थात्तत्तदृत्विक्कर्तृकताऽपि सिद्धा भवति।

## ग्रहेषु तु सहिरण्यता।

अत्र तुशब्दोऽवधारणार्थे। भवतीति शेषः। तेनेत्थं वाक्यं भवति ग्रहेष्वेव सहिरण्यता भवतीति। या पूर्वत्र सहिरण्यता सामान्यत उक्ता सा ग्रहेषु सोमग्रहपक्षे सोमग्रहेऽश्वदाभ्यादिषु चैव नान्यत्र चमसेष्वित्यर्थः। तेन सहिरण्येन प्राङ्मुखास्तिष्ठन्निस्येतत्सूत्रोक्तं सहिरण्येनेत्यनेनांशेन प्रापितं हिरण्यश्रयणमात्रं चमसेषु न भवति। अन्यत्प्राङ्मुखास्तिष्ठन्नित्यादि तु चमसेष्वस्त्येवेति सिद्धं भवति। पूर्वसूत्रात्सर्वसोमानामित्यनुवर्तनीयमेव। तेन सुराग्रहेषु न सहिरण्यता।

## होमाभिषवाभ्यां च भक्षो नान्यतरेण कर्मणा।

सर्वसोमानामित्यनुवर्तत एव। चस्त्वर्थे। भक्षस्तु होमाभिषवाभ्यामित्यन्वयः। भवतीति शेषः। तथा च चमससाधारणता सिद्धा भवति। होमश्चाभिषवश्च होमाभिषवौ ताभ्यां होमाभिषवाभ्याम्। प्रत्येकं निमित्तत्वं खण्डयितुं नान्यतरेण कर्मणेति। एतेनाध्वर्युप्रतिप्रस्थातृनेष्टून्नेतृणां होमाभिषवाभ्यां समुच्चिताभ्यामेव भक्षणं लभ्यते नान्यतरेणेति। अभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्तीतिश्रुत्योभयसमानकर्तृकत्वेन भक्षणस्योक्तत्वादिति भावः। तेन प्रातःसवनमाध्यंदिनसवनसंबन्धिनोः

---

१ ख. 'ग्रहांश्च°।

सवनमुखीयचमसयोर्ब्रह्मोद्गातृयजमानचमसेष्वतिग्राह्येषु चाध्वर्योः सत्यप्यभिषवे होमा-भावाद्भक्षनिवृत्तिः । एवं प्रतिप्रस्थातृनेष्टृन्नेतॄणामप्येतेषु होमाभावाद्भक्षनिवृत्तिः । अदाभ्यग्रहांशौ तु सत्यपि होमेऽभिषवाभावान्न भक्षः । तथा चमसेषु चमसाध्वर्यूणा-मित्यादि यथायथं द्रष्टव्यम् । तृतीयसवनसंबन्धिसवनमुखीयचमसे तु होमस्यापि सत्त्वाद्भवत्येव भक्षः ।

दधिग्रहस्यांशोरदाभ्यस्य च समानं पात्रम् ।

समानशब्दस्तुल्यार्थे न तु एकमित्यर्थ इति, तेन पात्रत्रयमेवेति । अमुमर्थं सूच-यितुमेवाऽसमासेन त्रयाणां निर्देशः । उक्तं चांश्वदाभ्यपात्रतः पार्थक्यमापस्तम्बेन— उत्तरेऽक्षे दधिग्रहपात्रमौदुम्बरं चतुःस्रक्त्येवंरूपमेवांश्वदाभ्ययोरिति । तत्राऽऽ-पस्तम्बमत एवं प्रयोगभेदः—दधिग्रहस्यैकं पात्रमंश्वदाभ्ययोरेकमिति पात्रद्वयम् । आचार्यमते दधिग्रहस्यैकमंशोरेकमदाभ्यस्यैकमिति पात्रत्रयमित्येवं प्रयोगभेदः । आपस्तम्बमते यदि सोमग्रहं गृह्णीयादेतदेव विभवेदिति सूत्रात्सोमग्रहपक्षे त्रयाणाम-प्येकमेव पात्रम् । आचार्यमते तु अत्रापि पात्रत्रित्वमेव ज्ञेयमिति त्रयाणां निर्देशः । तुल्यत्वं सजातीयत्वेन तच्च सजातीयत्वमौदुम्बरत्वचतुःस्रक्तित्वाभ्याम् । अंशोः पात्रं दधिग्रहपात्रसमीप एव प्रयुनक्ति । एवमदाभ्यस्य । ते च दधिग्रहपात्रस्योत्तरतः पुरतो योदक्संस्थे प्राक्संस्थे वा प्रयोज्ये । दधिग्रहस्येति सोमग्रहाज्यग्रहोपलक्षणम् । आज्यग्रहपक्षे तत्पात्रस्य प्रतिपत्तिरग्नावनुप्रहरणं तद्धोमान्त एव । सोमग्रहपक्षे तु अवभृथ एव तस्य प्रतिपत्तिः सोमलिप्तत्वात् । वक्ष्यति चावभृथे यत्किंचित्सोमलिप्त-मिति । दधिग्रहपात्रस्यापि असोमलिप्तत्वाद्बौधायनापस्तम्बोक्तरीत्या प्रहरणमेव ।

अंशुना प्रचरति ।

अंशुनांऽशुसाध्येन कर्मणा प्रचरति अंशुसाध्यं कर्मानुतिष्ठतीति यावत् । सामान्य-प्रतिज्ञेयम् । इयं प्रतिज्ञा सूत्रान्तरोक्तपाक्षिकत्वव्यावृत्त्यर्था । अयं चांशुग्रहो न सवनाङ्गं किं तु सोमाङ्गमेव । तेन प्रतिसवनं नाऽऽवृत्तिः । प्रदर्शयिष्यति चाऽऽचा-र्योऽभिषवादिर्माध्यंदिनश्च सवनं तायत इत्यभिषवादिपरेन । जैमिनिरपि ग्रहेष्टकमौपा-नुवाक्यं सवनचितिशेषत्वादिति । औपानुवाक्यमनारभ्याधीतम् ।

राजानमपादत्ते यावन्तमेकग्रहायाऽऽप्तं मन्यते प्रत्युपनह्येतरं निदधाति तमुपरे न्युप्य वसतीवरीभिरुपसृज्य सकृदभिषु-त्तस्य प्राण्यापान्य प्राणान्वामदेव्यं मनसा गायमानो गृह्णाति ।

राजानमपादत्ते तमुपरे न्युप्य वसतीवरीभिरुपसृज्येत्येतद्वचनमवीवृधं व इत्यभि-

---

१ ख. ग. सद्भावाद्भ॰ ।

मन्त्रणानिवृत्त्यर्थम्। यावन्तमेकग्रहायाऽऽप्तं मन्यते प्रत्युपनह्येतरं निदधातीत्यवश्यं वक्तव्यमेव। अन्यथैकग्रहपर्याप्तग्रहणस्यापि निवृत्तिः स्यात्। तथा च काम्यं पूर्णग्रहणमपि कदाचित्स्यात्तद्वारणायेदमवश्यं वक्तव्यमेव। प्रत्युपनह्येतरं निदधातीत्यपि मध्यपतितत्वादवश्यं वक्तव्यमेव। अन्यथैतस्यापि निवृत्तिः स्यात्। राजानमपादत्त इत्यारभ्य वसतीवरीभिरुपसृज्येत्यन्तस्य पुनर्वचनं सप्रयोजनमेव। सकृदभिषुतस्य प्राण्यापान्य प्राणान्वामदेव्यं मनसा गायमानो गृह्णातीत्यत्र सकृदभिषुतस्येत्यस्य गृह्णातीत्यत्रैवान्वयः। सति निमित्त आ मा स्कान्द्रप्स इत्येतावभिषवोत्तरं करोति। सकृदभिषुतस्येति द्वितीयार्थे षष्ठी। षष्ठ्यन्तपाठो ब्राह्मणाभिप्रायेण। षष्ठीस्वीकारे प्रकृतेऽवयवरूपार्थकत्वं विनाऽन्यस्यासंभवेनाभिषुतसोमैकदेशस्यैवैतादृशार्थेन ग्रहणं स्यात्, एकदेशस्योपयोगाभावेन त्याग एव स्यात्स च विरुध्येत्। अतो द्वितीयार्थिकैव षष्ठी। सकृदभिषुतस्येत्येवाऽऽपस्तम्बः। सकृदेकवारं प्राणान्प्राण्य यावच्छ्वासं बहिर्गमयित्वा प्राणानपान्य प्रत्याहृत्य कया न इति वामदेवेन दृष्टं साम वामदेव्यं, मनसेति वचनादोष्ठताल्वादिव्यापारो निवर्त्यते। यद्यपि तृचे गीतं साम तथाऽपि सामप्रतिनिधित्वेन तद्योनिभूताया एकस्या एव ऋचो ग्रहणस्याग्रिमसूत्रे वक्ष्यमाणत्वादेकर्चमेवेदं सामेति गम्यते। यद्यपि अत्रानवानता स्पष्टतया नोक्ता तथाऽपि अनवानं गृह्णातीति अंशुप्रकरणे श्रुतावुक्तत्वाद्यद्यनवानं न शक्नुयाद्गृहीतुमित्यग्रिमवचनेनोक्तप्रायत्वाच्चानवानमेवांशोर्ग्रहणम्। अनवानमनुच्छ्वसन्। यद्यपि सामवेदेनोद्गातेति उद्गातुः सामगानं तथाऽपि ग्रहग्रहणस्याध्वर्युकर्तृकत्वाद्गायमान इति शानचा गायनग्रहग्रहणयोः समानकालिकत्वश्रवणाद्वसतीवरीभिरुपसृज्येति समानकर्तृकत्वश्रवणाच्चाध्वर्योरेव गानम्। नचांशुग्रहग्रहणाङ्गत्वाद्राजोपादानादिवसतीवरीभिरुपसृज्येत्येतदन्तमप्युद्गातुरेवास्त्विति वाच्यम्। यत्र साम्नः संबन्धस्तत्कर्मोद्गातृकर्तृकमित्यस्य नियमस्य परिमाणात्सामकरणकस्तुतिविधायके नवभिरध्वर्युरुद्गायतीति वाक्ये व्यभिचारदर्शनेन यदध्वर्युरंशुं गृह्णन्नार्धयेदुभाभ्यां नर्ध्येताध्वर्यवे च यजमानाय च यदर्धयेदुभाभ्यामृध्येतानवानं गृह्णाति सैवास्यर्धिरिति श्रुतितः स्पष्टतयाऽध्वर्योरेवांशुग्रहणकर्तृत्वावगमेन च केवलसामसंबन्धेन सर्वस्मिन्नंशुग्रहग्रहणकर्मणि अश्रुताप्रसिद्धोद्गातृकर्तृकत्वकल्पनाया अत्यन्ताप्रयोजकत्वात्।

## कया नश्चित्र आभुवदिति वा वामदेव्यस्यर्चा।

कया नश्चित्र आभुवदिति वामदेव्यस्यर्चा वेत्यन्वयः। वामदेव्यस्य कया न इतिऋगुत्पन्नस्यैवेतरवामदेव्यप्रकृतित्वाद्ग्रहणे सिद्धे कया नश्चित्र आभुवदिति प्रतीकग्रहणं

---

१ ख. ग. ंर्वर्तते।

वामदेव्यसाम्नि तयोरन्यां वा तिसृष्वृक्षु यस्याः कस्याश्चिदेकस्या अनियमेन ग्रहणं स्यात्तन्मा भूदिति त्वेतस्या एव ग्रहणं यथा स्यादित्येतदर्थम् । अत्र मनसा गायमान इति शानचो वर्तमानार्थकत्वात्तत्समकालमुपयामगृहीतोऽसीत्यस्योच्चारणस्योपांशुस्वरेण मनसा वाऽप्यसंभवेनार्थादेव निवृत्तिः ।

यद्यनवानं न शक्नुयाद्ग्रहीतुमा नः प्राण एतु परा-
वत इति हिरण्य१ शतमानमभिव्यन्य वरे दत्ते गृह्णाति ।

यदीत्यनेन व्याननाद्यविधानान्तस्य नैमित्तिकत्वं प्रदर्श्यते । अनवानं न शक्नुया-द्ग्रहीतुमित्यनेन निमित्तं प्रदर्श्यते । न शक्नुयान्न समर्थो भवेदित्यर्थः । शतं मानानि यत्र तच्छतमानम् । मानस्वरूपं तु स्मृतौ—

द्विगुञ्जं कथितं मानमेकगुञ्जमथापि वा । इति ।

शक्ताशक्तत्वेनानयोर्व्यवस्था । मीयतेऽनेनेति मानमिति व्युत्पत्त्या यवसर्षपकृष्णलादिपरोऽपि मानशब्दः । अयं पक्षोऽत्यन्ताताढ्यस्य । एतादृशं हिरण्यं सुवर्णं तदपि तदुपरि व्यननं श्वासस्य निर्गमनप्रत्याहरणयोर्मध्यावस्थया धारणम् । अभिव्य-ननोत्तरं वरे दत्ते, यजमानेनेत्येव शेषः । तस्यैव दानेऽधिकारात् । उक्तं चैतत्सूत्र-कृता दर्शपूर्णमासयाजमानसूत्रे—द्रव्यप्रकल्पनं यजमानस्य दक्षिणादानं ब्रह्मचर्यं जपाश्चेति । आश्वलायनेनाप्युक्तं ददातीति यजमानमिति । कात्यायनेनाप्युक्तं दान वाचनान्वारम्भवरवरणव्रतप्रमाणेषु यजमानं प्रतीयादिति । तृतीयाध्यायेऽष्टमे पादे जैमिनिनाऽप्युक्तं स्वामिकर्म परिक्रयः कर्मणस्तदर्थत्वात्, वचनादितरेषां स्यादितिसू-त्राभ्याम् । परिक्रयो दक्षिणादानादिरूप ऋत्विजां स स्वामिनो यजमानस्य कर्म साङ्गस्य कर्मणस्तदर्थत्वात्स्वाम्यर्थत्वात् । परिक्रयस्य स्वामिकर्तृकत्वाभावेऽङ्गानां तत्कर्तृकत्वानुपपत्तेरिति प्रथमसूत्रार्थः । इतरेषामृत्विजां तु वचनात्स्यात्, इतरकर्तृकं दानं तु वचनाद्भवेत् । अनड्वान्होत्रा देय इत्यादिकमुदाहरणं ज्ञेयं स्वकीयं द्रव्यं होत्रा दापनीयं वचनादिति हृदयमिति द्वितीयसूत्रार्थः । वरस्वरूपमापस्तम्बः—गौर्वरोऽतिवरोऽन्यो धेनुर्वरोऽतिवरोऽन्योऽनड्वान्वरोऽतिवरोऽन्य इति । त्रीन्वरान्दद्यादि-त्यत्रैतदुपयुज्यते । सूत्रान्तरे गौर्वरो ब्राह्मणस्य ग्रामो राजन्यस्याजा(ना) वैश्यस्येति । प्रकारान्तरमपि स्मृतौ—

वरोक्तौ गां विजानीयाच्चतुर्वर्षामरोगिणीम् ।
दक्षिणानां वरिष्ठो यो वरं तमपरेऽब्रुवन् ॥ इति ।

दक्षिणानां दक्षिणात्वेन दीयमाना हिरण्यादयस्तेषां मध्ये यो वरिष्ठो बहुमूल्यत्वेन श्रेष्ठस्तं पदार्थं वरशब्दवाच्यमपर आचार्या अब्रुवन्नित्यर्थः । गुञ्जामात्रं सुवर्णं वर इति पैङ्गयः । एतेषां पक्षाणां शक्ताशक्तत्वेन व्यवस्था । गृह्णाति अंशुमिति शेषः ।

तस्यैवोपक्रान्तत्वात् । हिरण्येऽभिव्यानने कृते ग्रहग्रहणकाल उच्छ्वासकृतो दोष आयुर्हीनतारूपः स विनश्यतीत्यर्थः । तथा च श्रुतिः—अनवानं गृह्णाति सैवास्य- र्धिर्हिरण्यमभिव्यनित्यमृतं वै हिरण्यमायुः प्राण आयुषैवामृतमभिधिनोति शतमानं भवति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रतितिष्ठतीति ।

तꣳ सहिरण्येन शतमानेन सꣳस्पर्श्य हिरण्येनापिदधाति ।

तमंशुं हिरण्येन सहितं सहिरण्यमेतादृशं शतमानमन्यद्धिरण्यं तेन संस्पर्श्य सम्यग्घिरण्येन स्पर्शयित्वा हिरण्येनापिदधाति । अत्र सहशब्दोपादानाच्छतमानहि- रण्यसाहित्यार्थमन्यद्धिरण्यं ग्राह्यमिति गम्यते । तच्चात्र रजतरूपमेव न तु सुवर्णरूपम् । बौधायनीयेऽत्र स्पष्टमेव रजतसंबन्धो दृश्यते । शतमानेनेत्यत्रापि तद्विशेष्यत्वेन हिरण्यशब्दोऽन्वेति । इदं च शतमानं हिरण्यं पूर्वशतमानतो भिन्नमेव । पुनः शतमानशब्दोपादानात् । अन्यथा सहिरण्येन तेनेति तच्छब्देन ग्रहणं कृतं स्यात् । न च शतमानशब्दोपादानं रजते शतमानत्वलाभार्थमिति वाच्यम् । शतमानशब्दस्य रजतेऽन्वयासंभवेन तल्लाभासंभवात् । रजते शतमानशब्दस्यान्वयस्तु सशतमानहिरण्ये- नेत्येवंप्रकारकसमासेनैव भवति नान्यथा । न हि प्रकृते तथा समासोऽस्ति । न च विनिगमनाविरहादभिव्याननसंस्पर्शापिधानेषु रजतरूपं गौणं हिरण्यं साहित्यार्थं मुख्यमिति वैपरीत्यमेवास्त्विति वाच्यम् । सुवर्णात्मकहिरण्यस्यैव मुख्यत्वेन तस्यैव मुख्यकार्ये उपयोगः । रजतरूपहिरण्यस्य तु गौणत्वेन साहित्यरूपगौणकार्ये एव तस्योपयोग इत्येवं रीत्या विनिगमकलाभेन वैपरीत्यस्य वक्तुमशक्यत्वात् । न च रजते हिरण्यत्वे किं प्रमाणमिति वाच्यम् । रजतꣳ हिरण्यमभवत्, तद्दुर्वर्णꣳ हिरण्य- मभवत्, तत्सुवर्णꣳ हिरण्यमभवत्, सर्वꣳ हिरण्यꣳ रजतमित्यादिश्रुतीनां रजतꣳ हिरण्यं मध्यमायामिति सूत्रस्य च मानत्वात् । सꣳस्पर्श्येति णिजन्तप्रयोगाद्धिरण्येन संस्पर्शनमन्येन कारणीयं न तु अध्वर्युणा संस्पर्शः कर्तव्य इति बोध्यते । स्वार्थे णिज्वा । अस्मिन्पक्षेऽध्वर्योरेव । संशब्दात्सर्वावयवावच्छेदेन स्पर्शः । पुनर्हिरण्यग्रहणं रजतव्यावृत्त्यर्थम् । अपिदधातीति वचनात्परिमण्डलाकृतित्वं तस्य गम्यते । अंशुहो- मोत्तरं गृहे तन्नियोजयितव्यमेव दानावचनात् । अभिव्यानने मन्त्रः । प्राणाय त्वेति मन्त्रान्तः ।

इन्द्राग्नी मे वर्चः कृणुतामिति हरति ।

इत आरभ्य नित्यो विधिः । हरति आहवनीयं प्रति । अश्विनेति मन्त्रान्तः ।

दधन्वेवा यदीमन्वित्यनवानं जुहोति ।

अनवानमित्युपलक्षणं प्राणनापाननयोः । प्रजापतिरत्र देवता । एतत्सर्वं स्पष्टमा- हाऽऽपस्तम्बः—दधन्वेवा यदीमन्वित्यनिरुक्तया प्राजापत्यया प्राण्यापान्य व्यानञ्जुहो-

तीति । अनिरुक्तया लिङ्गरहितयेत्यर्थः । दृष्टश्चायमर्थः श्रुतौ सौत्रामण्यां कुविदङ्गे-त्यनिरुक्तया प्राजापत्यया गृह्णातीति । व्याननं परमापस्तम्बीयानामेव नास्माकं ग्रहण एव सूत्रकृता तदभिधानात् । अनवानं होमाशक्तौ पूर्वोक्तमेवाभिव्याननाद्येव प्रायश्चि-त्तम् । तथा चाऽऽपस्तम्बः—यदि न शक्नुयाद्गृहीतुं होतुं वा वरे दत्ते गृह्णीयाज्जुहु-याद्वेति । अत्रैतद्व्याख्यातृभिरभिव्याननादिभिः पूर्वोक्तैः समुच्चय एवोक्तः । चक्रमिवा-भवदिति मन्त्रान्तः ।

अद्भिः प्रतिप्रस्थाताऽध्वर्युं प्रत्युक्षति ।

अद्भिरिति वचनं संस्कारनिवृत्त्यर्थम् । अध्वर्युग्रहणं यजमानब्रह्मपत्नीव्यावृत्त्यर्थम् । आभिमुख्येनोक्षणं प्रत्युक्षणम् । इदं नित्यमेव । नैमित्तिकत्वबोधकपदाभावात् । शेषक-रणपक्षे पूर्ववल्लक्षः ।

अदाभ्येन प्रचरति ।

अदाभ्यसंज्ञकेन कर्मणा प्रचरति अदाभ्यसंज्ञकं कर्मानुतिष्ठतीति यावत् । अदाभ्यनिर्वचनं श्रुतौ—यद्वै देवा असुरानदाभ्येनादभ्नुवन्तददाभ्यस्यादाभ्यत्वमिति । सामान्यप्रतिज्ञेयम् । इयं प्रतिज्ञा सूत्रान्तरोक्तपाक्षिकत्वव्यावृत्त्यर्था ।

अथ विशेषविधिमाह—

वसवस्त्वा प्रवृहन्त्वित्येतैरुपनद्धस्य राज्ञस्त्रीनꣳशूनसꣳस्पृष्टान्प्रवृह्यान्य-स्मिन्पात्रे दध्नो निग्राभ्याणां वा निःषिच्य मान्दासु ते शुक्र शुक्रमाधूनोमीति तस्मिन्नेतैरेतानꣳशूꣳस्त्रिः प्रदक्षिणमनुपरिप्लावयति ।

एतैरितिवचनमेकमन्त्रत्वनिरासार्थम् । उशिक्त्वं देव सोमेति येऽदाभ्या अꣳशवस्तेषा-मेकैकमनुसवनमपिसृजतीतिवक्ष्यमाणसूत्रादेव त्रित्वे सिद्धे त्रीनितिवचनमेकैकमंशुमपि-सृजतीत्यस्य पृथक्पृथगपिसर्जनं मन्त्रावृत्त्या प्रतिसवनमित्येतादृशस्यार्थस्यापि संभवेन द्व्यादिसंख्याया अपि संभवात्तद्वारणार्थम् । त्रीणि, ईनि येषां ते त्रियस्तांस्त्रीन् । त्रिश-ब्देनात्र पर्वत्रयं विवक्षितम् । इट किट कटी गतावित्यत्र दीर्घेकारधातोः प्रश्लेष इति पक्षमाश्रित्य तादृशधातोः संपदादित्वात्क्विप् । त्रिशब्देकारदीर्घेकारात्मकधातोरकः सवर्णे दीर्घ इति सवर्णदीर्घः । ह्रस्वस्य पिति कृति तुगिति तुगागमस्तु न भवति ह्रस्वे-काराभावात् । त्रीश्च त्रीश्च त्रीश्च त्रियस्तांस्त्रीन् । ये गत्यर्थास्ते प्राप्त्यर्था इति शास्त्रेण त्रीणि पर्वाणि येषां प्राप्तानीत्यर्थो भवति । तथा च त्रिपर्वांशूनां ग्रहणार्थं वचनमितीदं वा प्रयोजनं द्रष्टव्यम् । अस्ति च सूत्रान्तरमुपष्टम्भकमस्मिन्नर्थे—मान्दासु त इति तस्मिंस्त्रिपर्वणोऽꣳशूꣳस्त्रिः प्रदक्षिणमनुपरिप्लावयतीति । अंशवः काण्डानि । असंस्पर्शो-

---

१ क. ग. निषिच्य ।

पायमाह बौधायनः—अङ्गुल्यवकाशेषु कृत्वेति । अङ्गुल्यन्तरे द्वौ द्वौ कुर्वीतेति कात्यायनः । सव्ये पाणावतिषजति द्वौ द्वावसंश्लिष्टाविति कठश्च । उपेहीति मन्त्रान्तः । प्रवृहणमपकर्षणम् । ननु ग्रहग्रहणस्याग्रे विधास्यमानत्वाद्दधिनिग्राभ्यान्यतरनिषेचनस्या-द्याभ्यपात्रे ग्रहणेऽग्रे ग्रहणासंभवाद्दर्याविवान्यस्मिन्पात्र इतीदं वचनं व्यर्थमिति चेत्स-त्यम् । अन्यस्मिन्यस्मिन्कस्मिंश्चित्पात्रे ग्रहणं न तु वायव्यत्वचमसत्वाद्यन्यतमरूपत्व-नियम इत्यनियमज्ञापनार्थत्वेन वैयर्थ्याभावात् । सामान्यतः पात्रशब्दादाकारस्या-नियमः । दध्यत्र लौकिकमेतदर्थमेव कृतम् । निग्राभ्या होतृचमसस्था यजमानावे-क्षिता निःषिच्य स्रावयित्वा तस्मिन्पात्रे निषिक्ते दधि निग्राभ्यानिषेचनपक्षे तास्विति-वचनलिङ्गव्यत्ययो ज्ञेयः । एतैरिति वचनमेकेनैव मन्त्रेण परिप्लावनमवशिष्टानामेकाद-शानां विकल्पार्थेति स्यात्तद्व्यावर्तयितुम् । एतस्मादेव वचनादेकैकेन मन्त्रेणैकैका क्रियेत्यपि एकमन्त्राणि कर्माणीतिपरिभाषानुरोधेन सिध्यति । एतान्पूर्वगृहीतान् । पारि-भाषयैव प्रादक्षिण्ये सिद्धे प्रदक्षिणवचनमनुकूलत्वार्थम् । यथा दधिहोमानुकूलं द्रवी-भूतं भवति तथा परिप्लावयतीत्यर्थः । अनुशब्द आनुकूल्यमनुलक्ष्यैव परिप्लावनमित्यर्थं बोधयितुम् । परिशब्दः समन्तभावाय । तेन परिभाषासिद्धं प्रादक्षिण्यं सिद्धं भवति ।

चतुः पञ्चकृत्वः सप्तकृत्वो वाऽवशिष्टा विकल्पार्थाः ।

त्रिवारं परिप्लावनेन द्रवीभूतताया असंपन्नत्व एते कल्पाश्चतुश्चतुर्वारं पञ्चकृत्वः पञ्चवारं सप्तकृत्वः सप्तवारम् । आवृत्तिबाधकौ सुच्कृत्वसुच्प्रत्ययौ । त्रिरिति पक्षे त्रिभिर्मन्त्रैः क्रियात्रयम् । चतुरिति पक्षे चतुर्भिर्मन्त्रैश्चतस्रः क्रियाः । एवं पञ्चकृत्वः सप्तकृत्व इति पक्षयोरपि । तत्र त्रिरित्यादिपक्षेषु नवाष्टौ सप्त पञ्चेति क्रमेण मन्त्रावशेषः । येऽवशि-ष्टास्त एतेषु चतुष्पक्षेषु यथायथं विकल्पार्था भवन्ति । अवशिष्टा विकल्पार्था इति वचनं वसवस्त्वा प्रवृहन्तु गायत्रेण छन्दसेत्येतैः प्रतिमन्त्रमित्यनेन सर्वपक्षेष्वपि सर्वमन्त्रविनियोगस्याऽऽपस्तम्बेनोक्तस्य निवृत्त्यर्थम् । एतद्वा अपां नामधेयं गुह्यं यदा-धावा मान्दासु ते शुक्र शुक्रमाधूनोमीत्याहापामेव नामधेयेन गुह्येन दिवो वृष्टिमवरुन्ध इति श्रुतावाधावशब्दस्यापां नामधेयत्वमुक्तम् । बौधायनेनाऽऽधवनलिङ्गकत्वान्मन्त्रा-णामपि आधावसंज्ञा कृता द्वादशभिराधावैराधुनोतीति सूत्रेण । आपस्तम्बेनांशूनाम-प्याधवनसंज्ञा कृता—आधवनानंशून्प्रज्ञातान्निधायोशिक्त्वं देव सोम गायत्रेण छन्द-सेत्येतैः प्रतिमन्त्रमनुसवनमेकैकं महाभिषवेष्वपिसृजतीति ।

ग्रहणमन्त्रानाह—

शुक्रं ते शुक्रेण गृह्णाम्यग्निः प्रातःसवने विश्वे

१ क. ग. कुरुत इति । २ क. ग. निषिच्य ।

**देवा इदं तृतीयꣳ सवनं कवीनामित्येनाभि- गृह्णाति सर्वासामन्तत उपयामा भवन्ति ।**

एताभिर्ऋग्भिरुपयामगृहीतोऽसीत्यन्ताभिः स्वरूपं स्वरूपं गृह्णातीत्यर्थः । शुक्रं त इत्येतस्यापि त्रिष्टुप्छन्दोरूपत्वादन्तत एवोपयामः । सर्वासामित्यनेन शुक्रं ते शुक्रेण गृह्णाम्यह्नो रूपेण सूर्यस्य रश्मिभिरित्येतस्य ऋक्त्वं विना ग्रहणासंभवादवश्यमृक्त्वस्य स्वीकारः । तत्र ऋचः पादबद्धत्वात्कथमत्र पादकल्पना किं वा तस्यां सत्यां छन्दो भवतीति शङ्कायामुच्यते-शुक्रं ते शुक्रेण गृह्णाम्यह्न इत्येकः पादः । रूपेण सूर्यस्य रश्मिभिरिति एकः । तत्राऽऽद्यः पादो यणादेशेनैकयभावं गताभ्यामिकाराकाराभ्या- मेकादशाक्षरः । द्वितीयः पादः सूर्यशब्दान्तर्गतयवर्णे रिय इत्यक्षरद्वित्वभावनया दशाक्षरः । तथा च त्रिष्टुभो रुद्रा इति पिङ्गलसूत्रादेकादशाक्षरा त्रिष्टुबिति श्रुतेश्च त्रिष्टुभो लक्षणं सिध्यति । एकस्याक्षरस्य न्यूनत्वान्निचृत्त्रिष्टुब्भवति । ऊनाधिकेनैकेन निचृद्भुरिजाविति पिङ्गलसूत्रात् । रिय इति द्वित्वभावनायां घृणिरिति द्वे अक्षरे सूर्य इति त्रीणि आदित्य इति त्रीणि एतद्वै सावित्रस्याष्टाक्षरं पदꣳ श्रियाऽभिषिक्तमिति श्रुतिः पाद इयादिपूरण इति पिङ्गलसूत्रे(त्रं) च प्रमाणम् । प्रसिद्धं चैतद्वायव्यां ण्यमित्यस्य णियमिति द्वित्वभावनया द्वित्वम् । स्पष्टं च न्यासादौ । एवं च निचृत्त्रि- ष्टुब्लक्षणाक्रान्तत्वादेतस्यापि मन्त्रस्य ऋक्त्वमस्त्येवेति सिद्धम् । रश्मिभिः सह भक्षाः स्याम सुमतौ स्याम वसीयो नयन्तु इति मन्त्रान्ताः ।

**आऽस्मिन्नुग्रा अचुच्यवुरिति हरति ।**

आहवनीयं प्रति हरति । अस्रश्चतेति मन्त्रान्तः ।

**ककुहꣳ रूपं वृषभस्य रोचते बृहदित्यभिमन्त्रयते ।**

स्पष्टम् ।

**सोमः सोमस्य पुरोगा इति जुहोति प्रज्ञातानꣳशूनिदधाति ॥ ६ ॥**

**इति हिरण्यकेशिसूत्रेऽष्टमप्रश्ने द्वितीयः पटलः ।**

---

येन क्रमेण प्रवृद्धास्तेनैव क्रमेण प्रज्ञातानंशूननुसवनमभिषवार्थं निदधाति । सोमाय स्वाहेति मन्त्रान्तः । अत्र निःशेषमेव होमः । अभिषवाभावेन भक्षणरूपप्रतिपत्तेरसंभ- वात् । अंश्वदाभ्ययोर्विशेषमाहाऽऽपस्तम्बः-भ्रातृव्यवताऽदाभ्यो ग्रहीतव्यो बुभूषतां- शुस्तौ न सर्वत्र ग्रहीतव्यौ वाजपेये राजसूये सत्रे सहस्रे सर्ववेदसे वा योऽस्य सुप्रियः सुविचित इव स्यात्तस्य ग्रहीतव्यावितिति । काम्यत्वे प्रकृतावेव निवेशः । वाजपेयादि-

१ ख. ग. 'न्दोनुरू' ।

ष्वेव विकृतिष्वेव ग्रहीतव्यौ न सर्वासु प्रकृतिविकृतिषु ग्रहीतव्याविति । योऽस्याध्वर्योः सुप्रीतः सुपरीक्षितः स्याद्यजमानः कल्याणगुणो यदि तस्य सर्वास्वेव प्रकृतिविकृतिषु विनाऽपि कामं ग्रहीतव्याविति ।

इत्योकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्नियुक्तवाजपेययाजिसर्वतोमुखया-
जिद्विषाहस्राग्नियुक्तपौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथ-
दीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसू-
त्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंताप-
शामिकायां ज्योत्स्नाख्यायां वृत्तावष्टमप्र-
श्नस्य द्वितीयः पटलः ॥ २ ॥

---

अथाष्टमप्रश्ने तृतीयः पटलः ।

---

देवस्य त्वेत्युपांशुसवनं ग्रावाणमादाय
वाचं यच्छत्याऽऽग्रयणस्य ग्रहणात् ।

ग्रावाणमितिवचनमुपरनिहितग्रावचतुष्टयतो भिन्नत्वेऽपि अत्राप्याकारस्तद्वदेव, एत-द्भेदनेऽपि प्रायश्चित्तमपि तदेवेति प्रदर्शयितुम् । आदायेत्यत्रत्यल्यप्समानकालिकत्वा-र्थको मुखं व्यादाय स्वपितीतिवत् । तमाददानो वाचं यमित्वेत्यापस्तम्बेन स्पष्टमेवाय-मर्थ उक्तः । अत आपस्तम्बसूत्रसमानार्थकत्वोपवर्णनमेव युक्तं न तु तद्विसंवाद्युपव-र्णनं युक्तम् । अत्र वाग्यमनविधानेनान्यत्र मध्ये यावदुपयुक्तव्याकृतवागुच्चारणे न दोषः । अत्र तु तदुच्चारणेऽपि दोष इति विशेषोऽवगम्यते । इदं व्याख्यानं सर्वत्र द्रष्टव्यम् । आदानप्रभृति वाचं यच्छति नियमयति आग्रयणग्रहणपर्यन्तम् । आ, आग्र-यणादिति पदच्छेदः । आदद इत्यन्तो मन्त्रस्य ।

ग्रावाऽसीत्यभिमन्त्रयते ।

वृष्टिवनिमित्यन्तो मन्त्रस्य ।

तमधिषवण ऊर्ध्वसानुं निधायेन्द्राय त्वा वृत्रघ्न इत्ये-
तैर्मन्त्रैः राजानमभिमिमीते यथा क्रयेऽन्यदुपसमूहनात् ।

तमुपांशुसवनम् । अधिषवणे चर्मणि । अधिषवणग्रहणेन सूत्रान्तरोक्त उपरो व्यावर्त्यते । ऊर्ध्वसानुमूर्ध्वाग्रं निधाय स्थापयित्वेन्द्राय त्वा वृत्रघ्न इत्यादिभिः पञ्च-भिर्मन्त्रै राजानमभिमिमीते । एतच्छब्दोपादानप्रयोजनं पूर्ववत् । मन्त्रैरिति वचनं सर्वै-र्मन्त्रैरेकैकं मानमित्यपि पक्षान्तरमस्तीतिज्ञापनार्थम् । श्रुतौ पञ्चकृत्वो यजुषेत्येकवचन-मेवास्मिन्पक्षे प्रमाणम् । अभिशब्द ऊर्ध्वसानोरुपांशुसवनस्योपर्येव मानार्थो यथा क्रय

इति। क्रयातिदेशात्पञ्चकृत्वो यजुषा मिमीते पञ्चकृत्वस्तूष्णीमिति विधिना मानं भवति। अतिदेशाभावे पञ्चभिर्मन्त्रैरेकैकेन मन्त्रेणैकैकमित्येवं पञ्चवारं मीत्वा तैरेव तथैव पुनर्मानं पञ्चवारमित्येवं दशवारं मानं स्यात्तन्मा भूदित्येतदर्थं यथा क्रय इति वचनम्। अन्यदुपसमूहनादिति वचनं क्रयेऽवशिष्टानां पृथग्गृहीतानामत्रापि तेनैव पुनरत्र ग्रहणं स्यात्तन्मा भूत्किं तु दशस्वेव मानेषु निःशेषमंशुक्षेपणं यथा स्यादित्ये-तदर्थम्। तेनायमर्थो भवति मितमवशिष्टं च राजानमेकीकृत्य दश जुटिका बद्ध्वा समन्त्रं पञ्च जुटिका अमन्त्रं च पञ्च जुटिका इत्येवं मिनोतीति। उपसमूहनादन्य-दिति पर्युदासेन सहिरण्येन पाणिनैकैकयाऽङ्गुल्या प्रसारितया सर्वास्वङ्गुष्ठमुप-निगृह्णाति यथा प्रथमं न तथा पञ्चमं तथैव दशममित्येतत्सर्वमतिदिश्यते। वाससा आस्तरणं परं न भवति तमधिषवण ऊर्ध्वसानुं निधायेतिविशेषविधिना तद्बाधात्।

अधिषवणस्यैकदेशे राजानमपोदू(दु)ह्याऽऽदत्ते यावन्तमेकग्रहा-याऽऽप्तं मन्यते मत्युपनह्योत्तरं निदधाति तमुपरे न्युप्य वसतीवरी-भिरुपसृज्य श्वात्राः स्थ वृत्रतुर इति निग्राभ्याभिरुपसृजति।

अधिषवणचर्मण एकदेशे रिक्ते प्रदेशे राजानमपोदू(दु)ह्य मितप्रदेशादपसार्य तस्मादादत्ते। यावन्तमेकग्रहायेत्यादिवसतीवरीभिरुपसृज्येत्यन्तस्य पूर्ववद्व्याख्यानम्। निग्राभ्याः पूर्वं व्याख्याताः। ताभिरुपसृजति मिश्रयति। सोमः पिबत्विति मन्त्रान्तः। निग्राभ्यैकदेशेन यावन्महाभिषवमुपसर्जनम्। उत्तमेऽभिषवे समाप्तिः। आपस्तम्बेन स्पष्टमेवोक्तं—तासामेकदेशेनोपसृज्येति। होतृचमसे निग्राभार्थमवशेषयन्पात्रान्तरे निग्राभ्या अवनीय होतृचमसे त्रिः प्रदक्षिणमनुपरिप्लावयति। यदा यदा निग्राभो-पायनं तदा तदा तदर्थं पात्रान्तरस्थानां निग्राभ्याणां तावत्परिमितानां होतृचमस आनयनम्। होतृचमसस्थानां सर्वासामपि निग्राभोपायने निग्राभ्यासु पुनः पुनर्निग्रा-भ्योपायनमसंगतं स्यात्। निग्राभ्याणां निःशेषत्वे वसतीवरीभिरभिपूरणं तासां तद्योनि-त्वात्। मन्त्रोऽत्र नैव भवति। व्यानयनरूपक्रियाया एवाभावेन तदर्थत्वस्यैवासंभवात्।

यत्ते सोम दिवि ज्योतिरित्यभिमन्त्रयते।

दात्रेऽवोच इति मन्त्रान्तः।

अभिमन्त्रणमेके पूर्वं[१] समामनन्ति।

निग्राभ्योपसर्जनक्रियापेक्षया पूर्वत्वम्। अर्थान्निग्राभ्योपसर्जनक्रियाया आनन्तर्यम्। विपरीतमेके समामनन्तीत्येतावतैव यद्यपि सिध्यति तथाऽपि मन्त्रवैपरीत्यमात्रमत्र शङ्कितं स्यात्तन्मा भूत्, किं तु क्रियावैपरीत्यमपि यथा स्यादित्येतदर्थमावश्यकमे-वेदृशं सूत्रम्।

---

१ ख. ग. 'वेदं सू°।

उपसृष्टस्य राज्ञः षडंशूनसंस्पृष्टान्प्रवृज्य प्रज्ञा-
तान्निधायेतरानादायोपरिष्टाद्ग्रावाणं धारयन्न-
धस्तादंशून्प्रागपागुदगधरागिति होतृचमसे त्रिः
प्रदक्षिणमनुपरिप्लावयति स निग्राभो भवति ।

निग्राभ्याभिरुपसृष्टस्यासंस्पर्शः षण्णामपि प्रज्ञातनिधानं प्रवृद्धक्रमेण। इतरान्प्रवृ-द्धव्यतिरिक्तानन्यान्बहुवचनात्त्रिप्रभृतीन् । उपरिष्टादित्यत्र होतृचमसस्येति शेषः। ग्रावाणमुपांशुसवनम्। अधस्तादुग्राव्णोऽधस्तात्षडंशुव्यतिरिक्तान्पूर्वगृहीतानंशूनुपांशुस-वनसंश्लिष्टान्धारयन्प्रागपागिति मन्त्रेण त्रिवारं प्रदक्षिणमनुपरिप्लावयति। प्रदक्षिणमनु-परिप्लावयतीति कृतव्याख्यानम्। अत्र प्रदक्षिणशब्दबोधितमानुकूल्यं यथा वर्षणेन तेषामंशूनां तासु निग्राभ्यासु रससंबन्धो भवति तथेत्येवंरूपं ज्ञेयम्। ननु अंशूनामेव संनिहितत्वात्तेषामेवोपरिष्टादित्यत्र संबन्धः, तथा च गृहीतानामंशूनामुपरिष्टाद्ग्रावाणं धारयन्नित्यर्थो भवति, एवं च पूर्वत्रानुपात्तस्य होतृचमसस्य शेषोऽसंगत एवेति चेन्न। तथा सति अधस्तादंशूनित्येतस्य वैयर्थ्यापत्तेः। यो निग्राभ्यास्वालोडनेनोत्पन्नो रसः स निग्राभसंज्ञको भवति। अम्ब निष्वरेति मन्त्रान्तः।

तानुपरे न्युप्य वसतीवरीभिरुपसृज्य मा भेर्मा संविक्था इति ग्रावाण-मुद्यम्य धिषणे वीडू सती इत्यधिषवणफलके अभिमन्त्रयते ।

तान्निग्राभसंज्ञकरससहितान्। मा भेर्मा संविक्था इत्येतावानेव मन्त्रः। मा मा हिंसिषमित्यन्तो धिषणे इति मन्त्रः। वसतीवरीभिरुपसर्जनानन्तरं मा भेरिति ग्रावाण-मुद्यम्य धिषणे इत्यधिषवणफलके अभिमन्त्रयते। द्विवचनलिङ्गात्संभवाच्च सकृदेव मन्त्रः।

अनागसस्त्वा वयमिन्द्रेण प्रेषिता उप वायुष्टे
अस्त्वंशभूर्मित्रस्ते अस्त्वंशभूर्वरुणस्ते अ-
स्त्वंशभूरहतः सोमो राजेति यत्र मूलं तृणं
काष्ठं वा पश्यति तस्मिन्देशे समे प्रहरति ।

यत्र यस्मिन्राज्ञो मूलाद्यन्यतमं समुच्चितं वा पश्यति तस्मिन्नेव देशे प्रथमं प्रहरति। सम इति वचनात्समानंशून्कृत्वा प्रहरति। यत्र मूलयुक्ता भूयिष्ठा अंशवो भवन्ति तादृशे देशे प्रहरतीति यावत्। काष्ठं लघुकाष्ठखण्डम्। लोष्टमित्यपपाठः। लोष्टस्य राज्ञि संसर्गस्यायुक्तत्वात्तस्य परित्याज्यत्वात्। यदि वा पुरा तृणं काष्ठं मूलं वा स्यात्तस्मिन्प्रहरेदित्यापस्तम्बसूत्रसंवादात्। यदि मूलं न विन्देत्तृणं दारु वाऽन्तर्दध्या-दितिमानवसूत्रसंवादाच्च। यदि मूलं मूलभागं सोमस्य न विन्देन्न लभेन्न जानीयात्।

---

१ ङ. ज. झ. ञ. ठ. लोष्टं ।

संनिहितस्य सोमस्य मूलालाभो ह्यज्ञाननिबन्धनस्तथा च लभधात्वर्थोऽत्र ज्ञानम् । तथा च न विन्देन्मूलं पश्यति तस्मिन्प्रदेशे प्रथमं प्रहरति(?) । तथा च मानवसूत्रम्— मूलेऽभिषुणोतीति । सोमस्य मूलभागे प्रथमोऽभिषवार्थः प्रहारो नाग्र इत्येतस्यार्थः । यदि सोमस्य मूलं न पश्यति तदा तृणं चेत्पश्यति तत्राभिषुणोति । तृणाभावे काष्ठ- खण्डं वा पश्यति तृणकाष्ठयोरप्यभावे तृणं दारुखण्डं वाऽन्तर्धायाभिषुणोतीत्यर्थः । तत्र प्रहारे मृत्तिका संतता स्यान्न जानीयादित्यर्थः । तर्हि तस्मिन्सोमे तृणं दर्भादि दारु काष्ठखण्डं वाऽन्तर्धायाभिषुणुयादिति मानवसूत्रार्थः ।

**तृणमन्तर्धायाभिषुणोतीत्येकेषाम् ।**

मूलाद्यन्यतमाभावे द्वितीयादिप्रहारे चापि तृणमन्तर्धायैवाभिषुणोतीत्येकेषामाचा- र्याणां मतमित्यर्थः । एकेषामितिश्रवणान्मूलाद्यन्यतमाभावे द्वितीयादिप्रहारे चापि तृणान्तर्धानस्यानियतत्वम् । तृणमित्युपलक्षणं दारुखण्डस्य ।

**अष्टौकृत्वोऽग्रेऽभिषुत्य निग्राभमुपैति यथा पुरस्तात् ।**

अष्टौकृत्वोऽष्टवारम् । अष्टौकृत्व इति संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुजिति कृत्वसुच्प्रत्ययः । छान्दसो विभक्त्यलुक् । अग्र इति वचनं द्वितीयतृतीयपर्याययोर्व- क्ष्यमाणविकल्पापेक्षया । सति निमित्त आ मा स्कान्द्रप्सश्चस्कन्देत्येतयोः कृतयोर्निग्रा- भमुपैति पूर्ववदित्यर्थः ।

**अपात्तानामꣳशूनां द्वाभ्यामुपाꣳशुपात्रम-**
**पिधायोत्तरतः प्रतिप्रस्थातोपयच्छति ।**

अपात्तानां पूर्वगृहीतानां प्रज्ञातक्रमेणासंश्लिष्टतया स्थापितानां षडंशूनां मध्य आद्यौ द्वावंशू ताभ्यामसंश्लिष्टाभ्यां द्वाभ्यां दक्षिणेन हस्तेनोपाꣳशुपात्रमपिधायोत्तरतः पात्रस्योत्तरत आसीनः प्रतिप्रस्थातोपयच्छति तत्पात्रं धारयतीत्यर्थः ।

**वाचस्पतये पवस्व वाजिन्निति तस्मि-**
**न्नञ्जलिनाऽध्वर्युः सोममासिञ्चति ।**

तस्मिन्नंशुद्वयान्तर्हित उपांशुपात्रे प्रतिप्रस्थात्रा धृते । अञ्जलिनेति वचनमेकहस्ते- नाऽऽसेचनं व्यावर्तयितुम् । अध्वर्युग्रहणं प्रतिप्रस्थातृव्यावृत्त्यर्थम् । न चापिधानो- पयमनासेचनक्रियाणामेकेन कर्तुमशक्यत्वादेवाऽऽसेचनस्याध्वर्युकर्तृकत्वं सिध्यत्येवेति किमर्थमध्वर्युग्रहणमिति वाच्यम् । उपयच्छतीत्यन्तर्भावितणिच्कल्पनया क्रियात्रयस्यै- ककर्तृकत्वसंभवेन प्राप्तौ तां वारयितुमध्वर्युग्रहणस्याऽऽवश्यकत्वात् । अत्रोपयामो न भवति वचनाभावात् । पवित्रमपि अन्तर्यामान्तानां ग्रहाणां न भवतीत्यत्र ज्ञापकमग्रे

---

१ क. ग. 'र्थोऽत्राज्ञा' ।

वक्ष्यते । एतस्य सादने निषेधं तु स्वयमेव वक्ष्यति । एतत्स्पष्टमाहाऽऽपस्तम्बः—पवित्रमुपयामः सादनं च न विद्यत इति । गभस्तिपूत इति मन्त्रान्तः ।

एवं विहितो द्वितीयस्तृतीयश्चाभिषवः ।

एवं निग्राभ्योपसर्जनादिना निग्राभोपायनान्तेन प्रकारेण । अन्यत्स्पष्टार्थम् । तत्र वैकल्पिकं विशेषमाह—

अपि वैकादशकृत्वो द्वितीयमभिषुणोति द्वादशकृत्वस्तृतीयम् ।

अष्टावष्टौकृत्वोऽभिषुत्यमितिब्राह्मणानुसारेण सर्वेषु अभिषवेष्वष्टकृत्वोऽभिषव उक्त-स्तस्यायं विकल्पोऽपि वेति ।

अपोद्धृत्य पूर्वावंशू अन्याभ्यां द्वितीये पात्रमपि-धायोपयच्छत्यन्याभ्यां तृतीये देवो देवानामिति द्वितीये सोममासिञ्चति मधुमतीर्न इषस्कृधीति तृतीये ।

अथ द्वितीयतृतीययोरभिषवयोर्नियतो विशेष उच्यतेऽनेन । सूत्रार्थस्तु स्पष्ट एव ।

न सादयति ।

गृहीतं ग्रहं, सर्वग्रहाणां परिमार्जनं यथायोनिसादनं चेत्यैन्द्रवायवग्रहणमुक्त्वा परिभाषाकरणादेव पूर्वेषां ग्रहाणां सादनाभावे ज्ञाते न सादयतीति निषेधोऽप्राप्तस्यापि ग्रहधर्मत्वेन प्राप्तिशङ्कानिरासार्थम् । प्रतिषेधः(ध)संनियोगशिष्टत्वात्परिमार्जनमपि न भवति । न च सोमग्रहपक्षे सोमग्रहेंऽश्वदाभ्ययोश्चापि आसादनस्य निषेध एतद्ग्रहासा-दननिषेधवत्कुतो न कृत इति शङ्कनीयम् । एतेषां ग्रहाणामनारभ्याधीतत्वेनापूर्वत्वा-त्प्राप्तिशङ्काया एवाभावात् । अथवोपांशुव्यतिरिक्तेष्वधाराग्रहेष्वपि पक्षे तूष्णीं सादनमपि भवतीतिज्ञापनार्थम् । तत्संनियोगशिष्टत्वात्परिमार्जनमपि । अन्तर्यामग्रहेऽ-प्येवं द्रष्टव्यम् ।

स्वांकृतोऽसीत्युत्तिष्ठति ।

स्पष्टम् ।

उर्वन्तरिक्षमिति गच्छति ।

अग्निहोति मन्त्रान्तः । अत्र पठित एवाग्निहोत्यन्तः ।

उत्तरेण होतारमतिक्रम्य ॥ ७ ॥ मन-स्स्वाङ्क्तित्युत्तरं परिधिसंधिमन्ववतिष्ठते ।

गत्वेति परित्यज्यातिक्रम्येत्येवं वचनं होतुरुत्तरप्रदेशमदूरमतिक्रम्यैवाग्निदेशं

---

१ ख. ग. °ति । प्रतिप्रस्थातुर्ग्रहमादाय स्वांकृतोऽसीत्युत्तिष्ठति । स्प° ।

गच्छति न तु होतुरुत्तरप्रदेशे गमनवेलायां पादौ निधातव्याविस्यर्थविशेषद्योतनार्थम् । उत्तरं परिधिसंधिमित्यत्र द्वितीयाऽनोः कर्मप्रवचनीयत्वात्तद्योगेन ।

**उत्तरं परिधिसंधिमन्ववहृत्य स्वाहा त्वा सुभवः सूर्यायेति दक्षिणाप्राञ्चमृजुं दीर्घ५ संततं जुहोति ।**

तमेव संधिमन्ववहृत्येत्येतावतैव सिद्धे पुनरुत्तरं परिधिसंधिमितिवचनमन्ववस्थानान्व-वहरणयोः समकालत्वं ज्ञापयति । अवहृत्यावनतः सन्ग्रहं प्रवेश्येत्यर्थः । दक्षिणाप्राञ्च-माग्नेयीदिक्पर्यन्तमित्यर्थः । अर्थादग्नौ वायवीं दिशमारभ्य धाराकरणम् । ऋजुमिति वक्रताव्यावृत्त्यर्थम् । अग्न्यन्तप्रदेशे वायवीं दिशमारभ्याग्न्यन्तप्रदेश एवाऽऽग्नेयी-दिक्पर्यन्तं दीर्घता । अग्नेर्मध्य एव वायवीं दिशमारभ्याग्नेर्मध्य एवाऽऽग्नेयीदिक्पर्यन्तं होमे ह्रस्वता । एतस्या निरासार्थं दीर्घवचनम् । संततवचनं मध्ये विच्छेदव्यावृ-त्त्यर्थम् । स्वाहा त्वा सुभवः सूर्यायेति मन्त्रादौ स्वाहाकारसत्त्वेऽपि अन्तेऽपि भवत्येव स्वाहाकारः । न चास्मिन्मन्त्रे पुरस्तात्स्वाहाकारस्य पठितत्वात्पुरस्तात्स्वाहा-कृतिरेव सूर्यो नोपरिष्टात्स्वाहाकृतिः, न ह्येकस्यैव पुरस्तात्स्वाहाकृतित्वमुपरिष्टात्स्वा-हाकृतित्वं भवति, अतः कथमन्त्रान्ते स्वाहाकार इति वाच्यम् । अनेकपदैर्मध्ये व्यवधानात् । यत्र देवतापदस्वाहापदयोरव्यवधानं तत्परमेवेदं श्रुत्युक्तं पुरस्तात्स्वाहा-कारत्वमुपरिष्टात्स्वाहाकारत्वं व्यवस्थया भविष्यति न सर्वत्रेति । यत्रानेकपदव्यवधानं तत्र पूर्वस्य स्वाहाकारस्य प्रदानार्थकत्वं नेत्येवमेव गम्यते । अन्यथा स्वाहाऽऽधि-माधीताय स्वाहेत्यन्तिमस्वाहाकारस्य वैयर्थ्यापत्तेः । न च स्वाहाऽऽधिमाधीताय स्वाहेत्यादिमन्त्रत्रयस्य प्रत्येकं मन्त्रद्वित्वपरत्वं शङ्क्यम् । एकविꣳशतिं वैश्वदेवानि जुहोतीत्येकविंशतिसंख्याविरोधापत्तेः । अतो मन्त्रास्त्रय एव । इदमेव लिङ्गमादिमः स्वाहाकारो देवतापदाव्यवहितपूर्व एव ग्राह्यो न तु मन्त्रादिर्व्यवहित इति । दिश इति पुरस्तात्प्रतिदिश इति दक्षिणत आदिश इति पश्चाद्विदिश इत्युत्तरत उद्दिश इति मध्ये स्वाहेति सर्वत्रानुषजतीति वसाहोमप्रकरणस्थे सूत्रे सर्वत्रेतिपदेन घृतं घृतपावान इति मध्यस्वाहाकारवति मन्त्रेऽपि तदन्ते स्वाहाकारप्रापणार्थं कृतेनाप्येतादृशार्थः स्पष्टीकृतो भवति । मध्यमे स्वाहाकारे बर्हिरनुप्रहरतीति लिङ्गमप्यत्र भवति ।

**देवेभ्यस्त्वा मरीचिपेभ्य इति मध्यमे परिधावभ्यन्तरं लेपं निमार्ष्टि ।**

स्पष्टम् ।

**यदि कामयेत वर्षुकः पर्जन्यः स्यादिति ब्राह्मणव्याख्यातम् ।**

यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचा हस्तेन निमृज्याद्वृष्टिमेव नियच्छति यदि कामयेतावर्षुकः स्यादित्युत्तानेन निमृज्याद्वृष्टिमेवोद्यच्छतीति ब्राह्मणे व्याख्यात-

मुक्ते निमार्जने कामनाभेदेन हस्तस्य नीचत्वमुत्तानत्वं चेत्यर्थः । एतयोर्नित्यत्वमपि । क्षेपः पात्रबहिर्भागे लग्नः ।

आग्रयणस्थाल्याꣳ संपातमवनयति ।

अवयवार्थिकायाः षष्ठ्या अश्रवणात्सर्वसंपातावनयनम् । आपस्तम्बेन सर्वमाग्रयणस्थाल्याꣳ संपातमवनीयेति स्पष्टमेवोक्तमेतत् ।

एष ते योनिः प्राणाय त्वेति पात्रꣳ सादयति ।

सर्वसंपातावनयनाद्रिक्तमेव पात्रं सादयति । अर्थादायतन एव । स्पष्टमेवोक्तमापस्तम्बेन—एष ते योनिः प्राणाय त्वेति रिक्तं पात्रमायतने सादयति तस्मिन्नंशमवास्य तं तृतीयसवनेऽपिसृज्याभिषुणुयादिति ।

तस्मिन्नꣳशुमवदधाति स परिशेत आतृतीयसवनात् ।

तृतीयसवनार्थ एवायमंशुः । तेन यावानुपात्तस्तृतीयसवनाय पर्याप्तो भवेत्तावानेवोपादातव्य इति । एवं च चतुरधिकपर्वैवायमंशुः । अन्यत्र सामान्यतस्त्रिपर्वाणो द्विपर्वाण एव वांऽशवः । त्रिपर्वाणो द्विपर्वाणो वांऽशवो ग्रहीतव्या इति शास्त्रान्तरे श्रवणादिति सिद्धं भवति । एतद्विनाशेऽन्यो ग्रहीतव्यः । तृतीयसवन आदित्यग्रहोत्तरमेतस्यांशोर्नाशश्चेत्तदाऽन्यस्य सोमस्याभावात्समीपवर्तिनं सोमं येन केनचित्पुरुषेण सोमविक्रयिणा वाऽऽहार्य तस्मै किंचिद्दत्त्वाऽभिषोतव्यः । तदभावे फाल्गुनान्यभिषोतव्यानीत्यादिकं प्रायश्चित्तं च सिद्धं भवति ।

अभिचरतस्तु ग्रहं गृहीत्वाऽमुष्य त्वा प्राणे
सादयामीति सादयेत्तꣳ सावित्रेणाऽऽदा-
यामुं जह्यथ त्वा होष्यामीत्यभिमन्त्र्य महर्षिणो
मदिरस्य मदे मृषाऽसावस्त्विति जुहोति ।

अभिचरतीत्यभिचरंस्तस्याभिचरतो द्वेष्यमुद्दिश्याभिचारं कुर्वतो यजमानस्येत्यर्थः । तुशब्दोऽत आरभ्य वक्ष्ये बाहो वा तं जुहोतीत्यन्तं कर्म नैमित्तिकं भवतीति प्रदर्शयितुम् । ग्रहमुपांशुं देवस्य त्वेत्युपांशुसवनं ग्रावाणमादायेत्यादिना मधुमतीर्न इषस्कृधीत्यन्तेन विधिना गृहीत्वा, अमुष्येत्यस्य स्थाने शर्मान्तं षष्ठ्यन्तं द्वेष्यस्य नाम गृहीत्वा प्राणे सादयामीति आयतन एव सादयेत् । सादननिषेधेऽपि अभिचारार्थं सादनं विधीयते । अमुष्य प्राणे त्वां सादयामीति मन्त्रार्थः । तं सादितमुपांशुं देवस्य त्वा सवितुः प्रसव इति सावित्रस्तेनाऽऽदद इत्यन्तेनाऽऽदायोत्थानाद्यन्ववस्थानान्तं कुर्यात् । अमुं जहीत्यत्रामुमित्यस्य स्थाने शर्मान्तं द्वितीयान्तं द्वेष्यस्य नाम ग्राह्यम् । यथाऽमुकशर्माणं जह्यथ त्वा होष्यामीति । अथशब्दो मन्त्र आनन्तर्यार्थः । सादना-

१ ज. झ. ञ. °श्रेरत ।

व्यवहितोत्तरमनु जहि तस्य हननानन्तरमेव त्वा होष्यामीत्यभिमन्त्रणमन्त्रार्थः । प्रह॰र्षिण इति मन्त्रेऽसावित्यस्य स्थाने शर्मान्तं प्रथमान्तं नाम ग्राह्यम् । यथा प्रहर्षिणो मदिरस्य मदे मृषाऽमुकशर्माऽस्त्विति । स्वाहा त्वा सुभव इत्यस्य स्थानेऽयमभिचारार्थो होममन्त्रः । होमानन्तरं लेपनिमार्जनादि संपातावनयनान्तं कृत्वैष ते योनिः प्राणाय त्वेत्यासादनमन्त्रमपोह्यामुष्य त्वा प्राणे सादयामीति मन्त्रमुक्त्वा तत्पात्रं सादयित्वा तस्मिन्नंशुमपिदधातीति । अत्राऽऽपस्तम्बेन विशेष उक्तः—ततो जुहुयात्प्रहर्षिणो मदिरस्य मदे मृषाऽसावस्त्विति जिह्मस्तिष्ठन्हुत्वाऽमुष्य त्वा प्राणे सादयामीति सादयेदिति ।

आ होतोरप्राणन्नासीत ।

आ होतोः सादनप्रभृति होमपर्यन्तमप्राणञ्श्वासं बहिरनिर्गमयन्नासीतोपविशेदित्यर्थः । भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन्निति सूत्रेण तोसुन्प्रत्ययः । इदं च होमपर्यन्तमुपवेशनं संनिहितद्वेष्यविषयम् । दूरस्थस्याग्रे विशेषान्तरस्याभिधास्यमानत्वात् ।

यदि दूरे स्यादा तमितोस्तिष्ठेत् ।

आ तमितोर्यावद्ग्लम् । अप्राणन्निति अनुवर्तते । दूरे द्वेष्यस्य सत्त्वे होमपर्यन्तमेवाप्राणन्निति न किं तु ततोऽप्यधिकम् । तस्यावधिस्तु यावद्ग्लमप्राणत्वमिव यावद्ग्लं होमदेश एव तिष्ठत्ताऽपि ।

द्वेष्यस्य नाम गृह्णाति ।

अस्मिन्नाभिचारिके कर्मणि अमुष्यामुमसावित्येतेषां स्थाने क्रमेण षष्ठीद्वितीयाप्रथमाभिर्विभक्तिभिर्द्वेष्यस्य नाम गृह्णातीत्यर्थः ।

देवाꣳशो यस्मै त्वेडे तत्सत्यमपरिप्लुता भङ्ग्येन हतोऽसा फडिति योऽस्याꣳशुराश्लिष्ट उरसि वक्षे बाहौ वा तं जुहोति ।

हे देव हेंऽशो यस्मै यदर्थं त्वामहमीडे प्रार्थयामि तत्सत्यमपरिप्लुताऽपरिप्लुतमप्रतिहतमस्तु भङ्ग्येन भङ्गाय शत्रोर्नाशाय हितं कर्म भङ्ग्यं तेन भङ्ग्येनानेन वक्ष्यमाणेन कर्मणा हतोऽमुकशर्माऽस्तु इति मन्त्रार्थः । फडिति फट्कारः स्वाहाकारप्रत्याम्नायः । योऽस्योपांशुग्रहणस्याभिषवदशायामभिहतोऽंशुरुत्प्लुत्याभिषुण्वता, उरसि वक्षे बाहौ वाऽऽश्लिष्टो भवेत्तं हुते ग्रहे सादिते च पात्रेऽनेन मन्त्रेण फडित्यन्तेन जुहोतीत्यर्थः । यदि न श्लिष्टो भवेत्तदा नैष होम इत्यर्थसिद्धम् । तस्मिन्नंशुमवदधाति स परिशेत आतृतीयसवनादित्यन्त आभिचारप्रयुक्तविधिविशिष्टकर्मणि निर्वृत्त एवायमं॰

१ क. ग. °मेरद ।

शुहोम इति ज्ञापयितुमेवैतत्पूर्वं द्वेष्यस्य नाम गृह्णातीतिसूत्रप्रणयनम् । एतदन्तं नैमित्तिकम् ।

अथ प्रकृतमुच्यते—

महाभिषवाय पर्युपविशन्ते पुरस्तादध्वर्युर्दक्षिणतः प्रतिप्रस्थाता पश्चान्नेष्टोत्तरत उन्नेता ।

सवनार्थत्वात्सर्वाध्वर्युकर्तृकत्वाच्च महत्त्वमभिषवस्य । चतुर्थी तादर्थ्ये महाभिषवार्थमित्यर्थः । परि परस्पराभिमुखमित्यर्थो न तु समन्तमिति । तस्य पुरस्तादित्यादिवक्ष्यमाणेनैव सिद्धेः । विदिग्व्यावृत्त्यर्थं पुरस्तादित्यादिकम् । महाभिषवाय पर्युपविशन्ते सर्वेऽध्वर्यवो दिक्षु क्रमेणेत्येतावतैव सेत्स्यति सति गुरुसूत्रकरणं क्रमेणोपवेशनार्थं पुरस्तात्प्रथममध्वर्युरुपविशति ततो दक्षिणतः प्रतिप्रस्थाता ततः पश्चान्नेष्टा तत उत्तरत उन्नेतेति । पुरस्तादित्यादयः प्रदेशा राजानमपेक्ष्य ज्ञेया अभिषवानुकूलत्वाय ।

राजानमपादत्ते यावन्तं प्रातःसवनायाऽऽप्तं मन्यते प्रत्युपनह्येतरं निदधाति तमुपरे न्युप्योशिक्त्वं देव सोमेति येऽऽदाभ्या अंशवस्तेषामेकैकमनुसवनमपिसृजति यत्ते सोमादाभ्यं नाम जागृवीति चोपांशुपावनानां द्वौ द्वौ ।

तमुपरे न्युप्येत्यन्तं कृतव्याख्यानम् । पूर्वत्रैकग्रहायाऽऽप्तमित्युक्तं स्थितं तत्रायं विशेषोऽत्र प्रातःसवनायाऽऽप्तं मन्यत इति । प्रतिग्रहमभिषवशङ्कां दूरीकर्तुं वा यावन्तं प्रातःसवनायाऽऽप्तं मन्यत इति वचनम् । ये, आदाभ्या इति पदच्छेदः । तद्धितामावः पूर्वसवर्णदीर्घो वाऽऽर्षः । आदाभ्या अदाभ्यसंबन्धिनो येंऽशवस्तेषां मध्य एकैकमेकमेकमंशुं सवनं सवनमनु अनुसवनं प्रवृहणक्रमेणापिसृजति प्रातःसवनार्थमपात्तेन राज्ञा संस्पर्शयति । अत्रापिसर्जनं राज्ञि मेलनं न भवति किं तु संस्पर्शनमेव । अन्यथा तानुपरे न्युप्येति उत्तरत्रोक्तस्योपरे निवपनस्यासंगतत्वापत्तेः । अपेहीत्यन्तास्त्रयो मन्त्राः । तेषां मध्ये प्रथमेन मन्त्रेण प्रथममंशुं प्रातःसवनेऽपिसृजति । द्वितीयेन द्वितीयं द्वितीये । तृतीयेन तृतीयं तृतीय इति केचित् । तन्न । वसवस्त्वा प्रवृहन्त्वित्येतैरुपनद्धस्य राज्ञ इतिवदेतैरितिवचनाभावेनैकमन्त्रत्वमेव सूत्रकाराभिमतमित्यवगमात् । यदि सूत्रकारस्य मन्त्रनानात्वमभिमतं भवेत्तदैतैरिति पूर्ववद्ब्रूयादेव । वाधूलेन—उशिक्त्वं देव सोम गायत्रेण छन्दसाऽग्नेः प्रियं पाथो अपीहि वशी त्वं देव सोम त्रैष्टुभेन छन्दसेन्द्रस्य प्रियं पाथो अपीह्यस्मत्सखा त्वं देव सोम जागतेन छन्दसा विश्वेषां देवानां प्रियं पाथो अपीहीत्येतेनैकैकमंशुमनुसवनमपिसृजतीत्येकमन्त्रत्वं स्पष्टमेवोक्तम् । यत्ते सोमादाभ्यमित्ययमपि आदाभ्यांश्वपिसर्जन एव । चकारेण समु-

षयस्यैवावगमान्मन्त्रलिङ्गाच्च । पूञ्पवन इत्यस्माद्धातोः करणाधिकरणयोश्चेति ल्युट् । ततो भावे घञ् । पूयते ग्रहणकाले यैस्ते पवनाः । पवना एव पावनाः । उपांशोः पावना उपांशुपावना उपांशुसंज्ञकस्य ग्रहस्य पावना इत्यर्थः । तेषां मध्ये द्वौ द्वौ प्रवृहणक्रमेणापिसृजति तूष्णीमेव मन्त्रानुपदेशात् । अत्रापि उक्तेन हेतुनाऽपिसर्जनं संस्पर्शनमेव । अथ वा द्वौ द्वावित्यत्र चकारोऽन्वेति । तथा चैवमर्थो भवति—उशिक्त्वमिति आदाभ्यांश्वपिसर्जनमन्त्रः । यत्ते सोमादाभ्यं नाम जागृवीत्युपांशुपावनाख्यांशुद्वयापिसर्जनमन्त्र इति । प्रत्यंशु मन्त्रावृत्तिः ।

तानुपरे न्युप्य वसतीवरीभिरुपसृज्य दक्षिणैः पाणिभिर्ग्रावभिर्यथार्थमभिषुत्य निग्राभमुपयन्ति यथा पुरस्तात् ।

तानादाभ्योपांशुपावनानंशूनुपरे न्युप्योपरस्थराज्ञः समीपे न्युप्य वसतीवरीभिरुपसृज्य, दक्षिणैः पाणिभिरित्यत्र दक्षिणग्रहणं द्वाभ्यां पाणिभ्यामभिषुण्वन्तीतिसूत्रान्तरमतव्युदासार्थम् । नन्विदं सोमग्रहार्थाभिषव एव वक्तव्यं सर्वाभिषवाणामेष कल्प इत्यनेनात्रापि प्राप्नोत्येवेति चेत् । उच्यते—महाभिषवव्यतिरिक्तस्थले दक्षिणपाणिनियमं वारयितुमेवात्र दक्षिणैः पाणिभिरितिसूत्रं कृतमिति ज्ञेयम् । तेनात्र दक्षिणस्य पाणेरसामर्थ्येऽपि विरम्य विरम्य दक्षिणेनैवाभिषोतव्यम् । अन्यत्र दक्षिणस्यासामर्थ्ये वामेनापि सोमग्रहांशूपांशुसवनार्थसोमाभिषवो भवति । इदमपि सिद्धं भवति महाभिषवे सर्वथा दक्षिणस्यासामर्थ्ये वामेनात्रापि भवति परं तु नियमोल्लङ्घननिमित्तं त्रयस्त्रिंशतं यज्ञतनूहोमः प्रायश्चित्तार्थे कर्तव्यः सर्वप्रायश्चित्तं च । महाभिषवव्यतिरिक्तेष्वभिषवेषु नियमाभावात्प्रायश्चित्तहोमो नेति । महाभिषव एव दक्षिणनियम इत्यत्र लिङ्गं नरो यत्ते दुदुहुर्दक्षिणेनेति मन्त्रगतं बहुवचनम् । नृशब्दस्य प्रथमाबहुवचनं नर इति । पाणिवचनं सहिरण्यत्वप्रदर्शनार्थम् । तथा चाऽऽपस्तम्बः—हिरण्यपाणिरभिषुणोति गृह्णाति जुहोतीत्यत्यन्तप्रदेश इति । प्रदेशो विधानम् । अत्यन्ताय प्रदेशोऽत्यन्तप्रदेशः । सोमाभिषवादीन्हिरण्यपाणिः करोतीति सार्वत्रिको विधिरित्यर्थः । ग्रावभिरुपांशुसवनादन्यैश्चतुर्भिर्यथार्थं यथाप्रयोजनं सर्वेऽभिषुत्य निग्राभमुपयन्ति । बहुवचनात्सर्वे । यथा पुरस्तादित्यनेनांश्वादानादिः स निग्राभो भवतीत्यन्तो विधिः प्राप्यते । यदंशुप्रवृहणं नात्र भवति तस्योपांशुमात्रार्थत्वात् । आ मा स्कान्द्रप्स इत्येते अध्वर्योरेवेति केचित् ।

एवं विहितो द्वितीयस्तृतीयश्चाभिषवः ।

एवं वसतीवर्युपसर्जननिग्राभोपयमाभ्यां विहितो द्वितीयस्तृतीयश्चाभिषवो भवतीत्यर्थः । सति निमित्त आ मा स्कान्द्रप्सश्चेति ।

त्रिरभिषुतꣳ राजानमाधवनीये सꣳसिञ्चन्ति।

निष्पीड्य सिञ्चन्तीत्यर्थः। अत्राऽऽपस्तम्बेन विशेष उक्तः—अभिषुतमध्वर्युरञ्जलिना सꣳसिञ्चति तमुन्नेताऽन्तरेणेषे अपोद्धृत्योत्तरत आधवनीयेऽवनयत्येष एवापाꣳ सोमस्य च पन्था इति। अस्यार्थः—एवं त्रिरभिषुतमञ्जलिनोदचने संसिञ्चति गृह्णाति तं गृहीतमुन्नेताऽन्तरेषे यः पन्थास्तेनोद्धृत्योदचनमुत्तरत आधवनीयस्य गत्वा तस्मिन्नवनयति। उपसर्जनार्थानां वसतीवरीणामभिषुतस्य सोमस्य चैष एव पन्था इति। इदमप्यविरोधात्स्वीकर्तव्यमेव। तत्रोदचने संसिञ्चनमात्रमध्वर्युकर्तृकम्। सूत्रविरुद्धत्वादाधवनीयेऽवनयनमापस्तम्बानामिव केवलाध्वर्युकर्तृकं न भवति किं तु सर्वाध्वर्युकर्तृकं संसिञ्चन्तीति बहुवचनात्। अत एव केवलोन्नेतृकर्तृकताऽपि वारिता भवति।

एवं विहितो द्वितीयस्तृतीयश्च पर्यायः।

संसिञ्चनान्तेन विधिना विहितो द्वितीयस्तृतीयश्च पर्यायः। तथा च त्रिपर्यायो महाभिषवो भवतीति। आपस्तम्बोऽपि अमुमर्थं स्पष्टमाह—त्रिपर्याय इति।

उत्तमेऽभिषवे सुसंभृतꣳ राजानं कृत्वा पवित्रेण प्रपीड्योपरे ग्राव्णः संमुखान्कृत्वा तेभ्य ऋजीषं व्यपोहति।

सुष्ठु संभृतं निःशेषं संभृतं राजानमाधवनीये कृत्वा पवित्रेण दशापवित्रेण ऋजीषमाधवनीय एव प्रपीड्योपरे ग्राव्णः पूर्ववत्संमुखान्कृत्वा तेभ्यो ग्रावभ्यो ग्रावार्थं प्रपीडितमृजीषं व्यपोहति विभजतीत्यर्थः। उत्तमेऽभिषवे निग्राभोपायने जाते होतृचमसीयानां निग्राभोपायनार्थैरंशुभिः सह होतृचमसस्थानां निग्राभ्याणां समाप्तिः।

ऋजीषमुखान्करोति।

विभक्तमृजीषं मुखेषु येषां त ऋजीषमुखा एतादृशान्ग्राव्णः करोति। वासमेभ्यः प्रयच्छतीति विज्ञायत इत्यापस्तम्बः। वासो भक्षः।

प्राञ्चमुद्गातारो द्रोणकलशं ग्रावस्वध्यूहन्ति।

प्राञ्चमिति द्रोणकलशविशेषणं छन्दोगोक्तस्योदञ्चं वेति पक्षान्तरस्य व्यावृत्त्यर्थम्। उद्गातार उद्गातृप्रस्तोतृप्रतिहर्तार एव न सुब्रह्मण्योऽपि। छन्दोगसूत्रे बहुवचनेन तेषामेव ग्रहणात्। ग्रावसु संमुखीकृतेषु द्रोणकलशं प्राञ्चमध्यूहन्ति। उपरि प्रतिष्ठापयन्ति ऋतपात्रमसीत्यादिस्वसूत्रोक्तेन विधिना।

अधोक्षमुपकर्षन्ति ॥ ८ ॥

अक्षस्याध इत्यधोक्षम्। अव्ययीभावसमासोऽयम्। अक्षस्याधोभागेन ग्रावसु प्रतिष्ठापयितुमुपकर्षन्ति। उद्गातार इति पूर्वसूत्रादनुवर्तते।

पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि
पर्येषि विश्वतः। अतप्ततनूर्न तदामो

अश्नुते गृतास इद्दहन्तस्तत्समाशतेति तस्मिन्नुदी-
चीनदशं पवित्रमुद्गातारो वितत्य धारयन्ति ।

तस्मिन्कलश उदीचीनदशमुदग्दशं पवित्रं वितत्य विस्तार्य कोणान्धारयन्ति यथाऽ-धस्तादुग्रहा गृह्णेरन्नित्यर्थः । उद्गातृविधिप्रदर्शनमनेकसामशाखाभेदेन पाठान्तरसत्त्वे पक्षे तृचविनियोगसत्त्वे पवित्रस्य प्राग्दशत्वे चापि अयमेव पाठोऽभिप्रेत एकैवर्गाभिप्रे-तोदग्दशत्वमेवाभिप्रेतं पवित्रस्येत्येतदर्थम् ।

एतयैवाध्वर्युरभिमन्त्रयते ।

एतयैव पवित्रं त इत्येतयैवर्चेत्यर्थः । ययोद्गातृभिर्वितत्य धारणं कृतं तयैवेति निष्कृ-ष्टोऽर्थः । अनेन सामशाखान्तर्गतैवात्र विनियुज्यते नाऽऽरण्यकान्तर्गतेति बोध्यते तथा च एवं कर्मस्विति प्रवर्ग्यसूत्रचोदितं शान्तिकरणं न भवति । वितत्यमानमिति शेषः । पवित्रमिति लिङ्गात् ।

तस्य यजमानो नाभिं करोति ।

तस्य दशापवित्रस्य । तां विततनकाले दशापवित्रस्य नाभिं करोतीत्येतस्याध्वर्युकर्तृ-कताऽत एवोक्ता न चेदेतस्यानर्थक्यप्रसङ्गात् । तथा चाध्वर्युर्यजमानो वा नाभिं करो-तीति विकल्पः सिद्धो भवति । अथ वाऽन्तर्भावितो णिच्कार्यः । तथा चाध्वर्युप्रेरणं यजमानकर्तृकं सिद्धं भवति । नाभिशब्दः पूर्वमेव व्याख्यातः ।

होतृचमसेन चास्मिन्संततां धाराꣳ स्रावयति ।

स्रावयतीत्यनन्तरं चकारोऽन्वेति । तथा चायमर्थो भवति—यजमानो नाभिं करोति स एव धारां स्रावयति चेति । चकारस्य मध्ये पाठेन श्रुतिरेवेयमनूदितेत्यनुमीयते । अवधारणार्थो वा चकारः । यजमान इत्यनुवर्तत एवास्मिन्पक्षेऽपि । स्पष्टः सूत्रार्थः ।

आधवनीयादुन्नेतोदञ्चनेन होतृचमस आनयति ।

उन्नेतृग्रहणं परिकर्मिचमसाध्वर्युव्यावृत्त्यर्थं नत्वध्वर्युव्यावृत्त्यर्थं तस्य कार्यान्त-रव्यापृतत्वेनासंभवादेव व्यावृत्तेः । उदञ्चनं नाम सोमग्रहणार्थश्चमस एव । तथा चोद-ञ्चनं चमसमिति बह्वृचाः । आपस्तम्बोऽत्र विशेषमाह—संतता धारा स्रावयितव्या कामो हास्य समर्धुको भवतीति विज्ञायते यं द्विष्यात्तस्य विच्छिन्द्यादिति । अस्य यजमानस्य कामाः समृध्येरन्निति फलार्थवादः ।

*स्रवत्या धाराया ग्रहान्गृह्णाति ।

---

* स्रवन्त्या इति युक्तम् ।

---

१ क. °प्रेता प्राग्द° ।

नाभिदेशेन स्रवत्या धारया इत्यर्थः । स्रवत्या धारया इत्यपादाने पञ्चमी । स्रवत्या धारायाः संकाशाद्ध्रुवान्तान्ग्रहान्गृह्णातीत्यर्थः । अण्व्या धारया ग्रहान्गृह्णातीत्यैन्द्रवायवादिषु धारायामणुत्वविशेषणादन्तर्यामे महत्येव धारा । मीमांसकमते तु अन्तर्यामस्य धाराग्रहत्वं नास्तीति द्रष्टव्यम् । एतदन्ता परिभाषा धाराग्रहाणाम् ।

उपयामगृहीतोऽस्यन्तर्यच्छेत्यन्तर्यामम् ।

मादयस्वेत्यन्तः । गृह्णातीति पूर्वसूत्रादनुवर्तते ।

तस्योपाꣳशुना कल्पो व्याख्यातः ।

उत्थानगमने एव पर्यवसानमेतस्य सूत्रस्य । परं त्वत्रोत्थानमन्त्रस्यान्ते विशेषः स्वांकृतोऽसि मधुमतीर्न इषस्कृधि विश्वेभ्यस्त्वेन्द्रियेभ्यो दिव्येभ्यः पार्थिवेभ्य इति । अन्यथोपांशुदृष्टस्य स्वांकृतोऽसीत्येतावत एव ग्रहणे मधुमतीरित्यस्य प्रकरणपठितस्य वैयर्थ्यापत्तेः ।

उपांशुना कल्पो व्याख्यात इत्यनेन प्राप्तमुत्तरेण होतारमतिक्रम्येत्यादिकं तद्बाधकं विशेषमाह—

दक्षिणेन होतारमतिक्रम्य वाक्त्वाऽष्ट्विति दक्षिणं परिधिसंधिमन्ववतिष्ठते दक्षिणं परिधिसंधिमन्ववहृत्य स्वाहा त्वा सुभवः सूर्यायेति प्राञ्चमुदञ्चमृजुं दीर्घꣳ संततं जुहोति ।

वाक्त्वाऽष्ट्वित्ययं मनस्त्वाऽष्ट्वित्यनेन स्वशाखास्थेन मन्त्रेण विकल्पते । अथ वोत्थानमन्त्रशेष एव मनस्त्वाऽष्ट्वित्ययमंशः । स्वाहा त्वा सुभवः सूर्यायेति पुनर्मन्त्रवचनं पूर्वमन्त्रतोऽन्तकृतवैजात्यं द्योतयति । तथा च देवेभ्यस्त्वा मरीचिपेभ्य इति होममन्त्रस्यैव शेषो विनियोगान्तरासंभवादिति सिद्धं भवति । प्राञ्चमुदञ्चमैशानीदिक्पर्यन्तम् । उपांशुना कल्पो व्याख्यात इत्यनेनैव सिद्ध ऋजुं दीर्घं संततमितिवचनं यं कामयेत प्रमायुकः स्यादिति जिह्मं तस्य जुहुयाद्यं द्विष्यात्तस्य ह्रस्वं विच्छिन्नं जुहुयादितिसूत्रान्तरोक्तकाम्यतानिरासार्थम् ।

न परिधौ लेपं निमार्ष्टि नाऽऽग्रयणस्थाल्याꣳ संपातमवनयति ।

तेन सर्वस्य होमः । सशेषहोमपक्षे संपातावनयनरूपप्रतिपत्तेरभावाद्भक्षणं भवत्येव ।

एष ते योनिरपानाय त्वेति पात्रꣳ सादयति ।

पात्रमन्तर्यामपात्रं, सादनमायतने ।

नाꣳशुमवदधाति ।

स्पष्टम् ।

---

१ ख. °स्थानाग° । २ ख. °त्ययं मन्त्रः । स्वा° ।

ते अन्तरेण व्यानाय त्वेत्युपाꣳशुसवनं ग्रावाणꣳ सꣳस्पृष्टमुपाꣳशुपात्रेण सादयति ।

ते उपांश्वन्तर्यामयोः पात्रे ।

यं कामयेत प्रमायुकः स्यादित्यसꣳस्पृष्टौ तस्य सादयेद्यं कामयेत सर्वमायुरियादिति सꣳस्पृष्टौ तस्य सादयेत् ।

यं यजमानं प्रमायुकोऽल्पायुः स्यादिति कामयेत तस्य यजमानस्य क्रतावसंस्पृष्टा- वुपांशुसवनेनासंस्पृष्टावुपांश्वन्तर्यामावध्वर्युः सादयेत् । यं यजमानं सर्वं पूर्णमायुरिया- दिति कामयेत तस्य क्रतौ संस्पृष्टावध्वर्युः सादयेत् । तत्र न हि निन्दा निन्दितुं प्रवर्ततेऽपि तु स्तुत्यं स्तोतुमिति न्यायेन पूर्वपक्षनिन्दाया उत्तरपक्षस्य प्राशस्त्ये तात्पर्यम् । परिकल्पलब्धोऽध्वर्युः कथमनिष्टं यजमानस्य कामयीत तस्मादर्थवादादु- भयोरसंस्पृष्टतया सादनमप्रशस्तत्वान्नैव कार्यमिति । उत्तरः काम्यः कल्पो नित्योऽपि । अयं पक्षः केवलेनोपांशुपात्रमात्रसंस्पर्शात्मकेन नित्येन कल्पेन विकल्पते । अत्र कमिधातुश्रवणेऽपि न संकल्पः कामनाया यजमानगतत्वाभावात् । यं द्वेष्यं यजमानं यजमानः कामयेतेति यजमानगतैव चेदेवंरीत्या कामना तदा कामनाप्रयुक्तः संकल्पो भवत्येव ।

उभावुदिते जुहोत्यत्वरमाणः ।

तमोपघाते प्रातरनुवाकसमाप्तावपि यस्य कर्मकरणविषये त्वरा नास्ति सोऽत्वरमाण एतादृशोऽध्वर्युरुभावुपांश्वन्तर्यामावुदिते सूर्ये सति जुहोतीत्यर्थः ।

त्वरमाणस्त्वनुदित उपांशुमुदितेऽन्तर्यामम् ।

तुशब्दः पूर्वापेक्षया वैलक्षण्यार्थः । त्वरायां सत्यामपि उदित एवान्तर्यामं गृह्णाति, उभयोरुदिते ग्रहणेऽपि स्वकाले सवनसमापनकरणसामर्थ्यविनाऽपि अनुदित एवोपांशुर्ग्राह्य इति द्विविधोऽत्र नियमः । अनयैव रीत्योभयोरुपादानं सार्थकं नान्यथेति द्रष्टव्यम् ।

उभावनुदित इत्येकेषाम् ॥ ९ ॥

इति हिरण्यकेशिसूत्रेऽष्टमप्रश्ने तृतीयः पटलः ।

---

अस्मिन्पक्षेऽपि ऐन्द्रवायवादीना ग्रहणमुदित एव यथा भवति तदनुरोधेनानुदितेऽ- न्तर्यामग्रहणम् ।

रेखामात्रस्तु दृश्येत रश्मिभिस्तु दिवाकरः ।
उदितं तं विजानीयात्तत्र होमं प्रकल्पयेत् ॥

इत्यग्निहोत्रदृष्ट एवोदितकालोऽत्र । स्पष्टोऽर्थः ।

इत्योकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्निचित्क्रतुवाजपेययाजिसर्वतोमुखया-
जिद्विसाहस्राग्निचित्पौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथ-
दीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसू-
त्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंताप-
शामिकायां ज्योत्स्नाख्यायां वृत्तावष्टमप्र-
श्नस्य तृतीयः पटलः ॥ ३ ॥

---

अथाष्टमप्रश्ने चतुर्थः पटलः ।

---

रथंतरसाम्न्यैन्द्रवायवाग्रान्गृह्णीयात् ।

रथंतरं साम यस्मिन्स सोमो रथंतरसामा तस्मिन्रथंतरसाम्नीन्द्रवायू देवता यस्य ग्रहस्य स ऐन्द्रवायवः । सोऽग्रे प्रथमो ग्रहणे येषां त ऐन्द्रवायवाग्रा एतादृशान्ग्रहान्गृह्णीयादित्यर्थः । प्रथमे प्रयोगे रथंतरसामैवेत्येकेषामाचार्याणां मतम् । तथा चाऽऽपस्तम्बः—न रथंतरसामानमकृत्वा बृहत्सामानमाहरेदित्येक इति । एक इतिवचनान्नायं नियम इति बोध्यते ।

बृहत्साम्नि शुक्राग्रान् ।

शुक्रः शुक्रग्रहोऽग्रे येषां ते शुक्राग्रा एतादृशान्ग्रहान्बृहत्साम्नि सोमे गृह्णातीत्यर्थः । अस्मिन्पक्षेऽन्तर्यामोत्तरमादौ शुक्रमेव गृहीत्वा हिरण्येन श्रीत्वाऽन्यस्य हस्ते तं दत्त्वैन्द्रवायवं गृहीत्वा तं परिमृष्टआयतने सादयित्वा शुक्रं गृहीत्वा तं परिमृष्टमायतने सादयित्वा मैत्रावरुणं गृहीत्वा शृतशीतेन पयसा श्रीत्वा सादयित्वा मन्थिग्रहणादीत्येवं प्रयोगक्रमः । नचात्र ज्योतिष्टोमात्कर्मान्तरविधिः । ज्योतिष्टोमस्य रथंतरसामेतिविशेषणासंभवात्तत्र सामान्तरसत्त्वेन व्यावर्तकत्वाभावात्सकलज्योतिष्टोमव्यापनासंभवाच्च । अतः सामर्थ्याभावान्न ज्योतिष्टोमस्य रथंतरसामनिमित्त ऐन्द्रवायवाग्रताविधिः । नापि बृहत्सामनिमित्ते शुक्राग्रताविधिरिति वाच्यम् । यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान्ग्रहान्गृह्णीयाद्यदि बृहत्सामा शुक्राग्रानिति श्रुतौ यदिशब्दाज्ज्योतिष्टोमप्रकरण एतस्याः श्रुतेः पाठाच्च सोमशब्देन ज्योतिष्टोमस्यैवानुवादात् । विशेषणत्वं तु अयोगव्यवच्छेदेन परस्परविरोधिरथंतरबृहत्सामव्यवच्छेदेन चोपपन्नं द्रष्टव्यम् । तथा च द्वितीयाध्याये तृतीयपादे जैमिनिः—गुणस्तु क्रतुसंयोगात्कर्मान्तरं प्रयोजयेत्संयोगस्याशेषभूतत्वात् । एकस्य तु लिङ्गभेदात्प्रयोजनार्थमुच्येतैकत्वं गुणवाक्यत्वादितिसूत्राभ्याम् । एकस्यैव क्रतोरग्निष्टोमस्य लिङ्गभेदाद्रथंतरसामा बृहत्सामोभयसामेत्येवंरू-

पस्य लिङ्गस्य स्वरूपस्य भेदादग्रताप्रयोजनार्थमुच्येतैकत्वमेकक्रतुपरत्वमेव। एतेषामुदाहृतानां गुणवाक्यत्वाद्गुणा ऐन्द्रवायवाग्रत्वादयस्तदर्थानि वाक्यानि गुणवाक्यानि तस्माद्धेतोरेकक्रतुपरत्वमेवेति द्वितीयसूत्रार्थः। [ प्रथम ] सूत्रार्थस्तु रथंतरसामत्वादिः क्रतुसंयोगात्। पूर्वक्रतुसंबन्धात्कर्मान्तरमेव प्रयोजयेद्बोधयेत्। कुतः संयोगस्य रथंतरसामेति सामसंयोगस्याशेषे कृत्स्ने क्रतौ भूतत्वादवगतत्वात्तस्य च ज्योतिष्टोमे संभवाभावादिति।

उभयसाम्नि याथाकामी।

उभयं साम रथंतरबृहदात्मकं यस्मिन्सोमे स उभयसामा तस्मिन्याथाकामी यथाकामं यथेच्छमैन्द्रवायवाग्रता शुक्राग्रता वा भवतीत्यर्थः। एतस्य प्रकृतावसंभवेन सर्वपृष्ठासोर्यामादौ निवेशः।

ऐन्द्रवायवान्गृह्णीयाद्वैकारिके पृष्ठसंयोगे।

कण्वरथंतराख्यविकारसिद्धे पृष्ठसंयोगे पृष्ठसंबन्धे यस्मिन्सोमे सति यथा सप्तदशप्रश्नान्तर्गतदशमे खण्डेऽग्निष्टोमेन कण्वरथंतरसाम्ना वैश्यः पुष्टिकामो यजेतेत्यादौ यथा वा राजनसाम्नि महाव्रत ऐन्द्रवायवाग्रानेव गृह्णीयादित्यर्थः।

ऐन्द्रवायवाग्राञ्ज्येष्ठबन्धुर्गृह्णीतेति नित्ये काम्ये।

ज्येष्ठबन्धुरित्यनन्तरं कनीयसाऽनतिक्रान्त इति शेषः। वाग्वा एषा यदैन्द्रवायवो यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते वाचमेवानु प्रयन्तीत्युपक्रम्य तस्मादैन्द्रवायवाग्रा ग्रहा गृह्यन्त इत्यैन्द्रवायवाग्रतोपसंहारेणैन्द्रवायवग्रहस्यैव प्रथमपाठेन च नित्ये ज्येष्ठबन्धुर्गृह्णीतेति शाखान्तरे फलश्रवणेन काम्ये विधौ चैन्द्रवायवाग्रतैव भवतीत्यर्थः। ज्येष्ठबन्धुरित्यस्य ज्येष्ठभ्रातेत्यर्थः। अस्मिन्नर्थे श्रुतिरस्ति न ज्यायाꣳसं कनीयानतिक्रामतीति। एतस्य काम्यत्वमैन्द्रवायवाग्रान्गृह्णीयाद्यः कामयेतेत्युपक्रम्य न ज्यायाꣳसं कनीयानतिक्रामतीत्युपसंहारात्। कनीयःकृतातिक्रमपरिहार एवात्र कामना।

ऐन्द्रवायवाग्रान्गृह्णीयादामयाविन इति ब्राह्मणव्याख्यातानि काम्यानि ग्रहणानि तेषां याथाकामी।

आमयावी रोगी। अन्तर्यामस्य धाराग्रहत्वेऽपि न तत्पूर्वमैन्द्रवायवग्रहणं किं तु स्वस्थान एवैन्द्रवायवः। न चैन्द्रवायवाग्रान्गृह्णीयाद्यः कामयेत यथापूर्वं प्रजाः कल्पेरन्निति तदनन्तरं काम्याग्रताविधानमिति सर्वादितः प्रतिकर्ष इति वाच्यम्। प्रस्तुतधाराग्रहाणामेवाग्रताविशिष्टानां फलसंबन्धात्। तदाह दशमाध्याये पञ्चमे पादे जैमिनिः—कामसंयोगे तु वचनादादितः प्रतिकर्षः स्यादिति। शुक्राग्रत्वे तु न स्वस्थानस्थितिः। अप्राप्तशुक्राग्रताया एव फले विधानात्। तस्मादादित एव प्रतिकर्षः। तथा च दश-

माध्याये पञ्चमे पादे जैमिनिः—परेषु चाग्रशब्दः पूर्ववत्स्यात्तदादिष्विति । ऐन्द्रवायवादिधाराग्रहाणां प्रकृतत्वात्तदाश्रितैव शुक्राग्रता फले विधीयत इति न सर्वादितः प्रतिकर्षः । तथा च दशमाध्याये पञ्चमे पादे जैमिनिः—पुरस्तादैन्द्रवायवाग्रस्य कृतदेशत्वादिति । गृह्णीरन्निति बहुवचनात्सत्रपरता मैत्रावरुणाग्रतायाः । आश्विनाग्रत्वे ध्यानाय त्वेत्युपांशुसवनसादनोत्तरमेवाऽऽदौ मैत्रावरुणचमसीयैकधनैकदेशानामाधवनीयेऽवनयनं कृत्वा तिरःपवित्रं पूतभृति तदेकदेशमवनीय द्रोणकलशादुपस्तीर्य पूतभृत उन्नीय द्रोणकलशादभिघारयतीति स्वोक्तप्रकारेण बहिष्पवमानात्पूर्वमेव ग्रहणं वाचनिकम् । अथवाऽन्तर्यामहोमोत्तरमेव मैत्रावरुणचमसीयाश्चैकधनैकदेशांश्चाऽऽधवनीयेऽवनीयेत्यादि आश्विनग्रहग्रहणान्तं कृत्वैन्द्रवायवग्रहणादि ध्रुवग्रहणान्तं कृत्वा धारां विरम्य प्रपीड्य पवित्रं तन्निधाय सवनीयपशूपाकरणादि समानम् । शुक्राग्रतायां प्रकारः प्रागेवोक्तः । मन्थ्यग्रतायामादौ मन्थिनं गृहीत्वैन्द्रवायवं गृहीत्वा तत्सादनानन्तरं मन्थिनं सादयित्वा मैत्रावरुणशुक्रसादनानन्तरमाग्रयणग्रहणसादनादि । आग्रयणाग्रोक्थ्याग्रतयोः प्रथममेतयोर्ग्रहणमनन्तरमैन्द्रवायवादीनाम् । एतेषां पक्षाणामिष्टविषयकत्वात्काम्यत्वम् ।

मैत्रावरुणाश्विनशुक्रमन्थ्याग्रयणोक्थ्याग्रतास्वरूपमाह—

**पुरस्तादैन्द्रवायवाद्गृह्णन्ते सन्ने साद्यन्ते ।**

सन्न ऐन्द्रवायवे सन्ने । सादनं चाविशेषत्वादिति जैमिनिरपि । अवदानवद्ग्रहणस्य न प्रदानोपक्रमत्वं सर्वेषु गृहीतेषु पश्चात्तदनुष्ठानात् । नातः प्रदानापकर्षः । तथा च जैमिनिः—प्रदानं चापि सादनवदिति ।

प्रकृतं प्रयोगमाह—

**ऐन्द्रवायवं गृह्णाति ।**

सामान्यप्रतिज्ञानं काम्यविषयकत्वशङ्कां निवर्तयितुम् ।

**आ वायो भूषेत्यनुद्रुत्य पात्रमुपयच्छत्युपयामगृहीतोऽसि वायवे त्वेति तस्मिन्गृह्णाति ।**

उपयमनं नाम धारायाः समीपे नियमनं धारणमिति यावत् । तस्मिन्धाराया अधस्ताद्धृते पात्रे चतुर्थभागन्यूनं पात्रार्धमितं सोमं गृह्णातीत्यर्थः ।

**पात्रमपयम्येन्द्रवायू इत्यनुद्रुत्य पुनरेवोपयच्छत्युपयामगृहीतोऽसीन्द्रवायुभ्यां त्वेति तस्मिन्पुनर्गृह्णाति ।**

अपयम्य धारातो दूरीकृत्योपर्यर्धं गृह्णाति । पुनरेवोपयच्छतीतिवचनं पात्रभेदशङ्कानिरासार्थम् । पुनरेवोपयच्छतीत्यनेनैव सिद्धे तस्मिन्पुनर्गृह्णातीतिवचनमैन्द्रवायवग्र-

हणकाले पुनरुपयमनमात्रं वायव्यपात्रस्य, ऐन्द्रवायवग्रहणं तु भिन्नपात्र इति पुनः शङ्कायास्तादवस्थ्यं स्यात्तद्वारयितुम्। तस्मिन्पुनर्गृह्णातीत्येतावतैव सिद्धे पुनरेवोपयच्छ-तीतिवचनं धारातो दूरीकृतस्यापि पात्रस्य ग्रहणसमय एव धाराया अधस्तादेव नयनं केवलं स्यात्तन्मा भूत्किं तु मध्ये धारासमीपे मन्त्रपठनकाल एव धारणं यथा स्यादि-त्येतदर्थम्। वायोर्द्विवारग्रहणविषये ब्राह्मणम्—तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत्त-स्मादियं व्याकृता वागुद्यते तस्मात्सकृदिन्द्राय मध्यतो गृह्यते द्विर्वायवे द्वौ हि स वराववृणीतेति।

पदण्यापूतं पवित्रं तेन परिमृज्यैष ते योनिः
सजोषाभ्यां त्वेत्यायतने सादयति।

अण्यापूतमित्यनेन द्रोणकलशोपरि धृतस्य व्यावृत्तिः क्रियते। तेनेति वचनाद्दशा-भिरेव परिमार्जनमापस्तम्बोक्तं मानवसूत्रोक्तं च निवार्यते। आयतने स्वस्थाने। ग्रहेषु तु सहिरण्यतेति पूर्वोक्तया परिभाषया सर्वेषु ग्रहेषु हिरण्यश्रयणम्। एतस्य कृता-कृतत्वमग्रे वक्ष्यते।

परिभाषामाह—

पुरस्तादुपयामा यजुषा गृह्यन्त उपरिष्टादुपयामा ऋचा।

ऐन्द्रवायवग्रहणोत्तरं परिभाषाकरणादैन्द्रवायव एतस्या न प्रवृत्तिः। तथा चोप-यामेनैवैन्द्रवायवग्रहणमुपरिष्टादुपयामत्वेऽपि। अनुद्रुत्येत्यस्यात्र पठित्वेत्येवार्थो न तूप-यामेन सह योजनार्थः। अन्यथा मन्त्रोपयामसंधानसमकालतया ग्रहण एव संभवेन पात्रोपयमनरूपक्रियाया मध्ये विहिताया निरर्थकत्वापत्तेः। अनुद्रुत्येत्यस्य पठित्वेत्य-र्थस्वीकारे पाठसमकालपात्रोपयमने कालभेदसंभवेन निरर्थकत्वाभावात्। ल्यपः सम-कालत्वमेवार्थो न तु आनन्तर्यमर्थः। अन्यथा तद्दोषतादवस्थ्यापत्तेः। पुरस्तादुपयामा येषां ग्रहाणां ते पुरस्तादुपयामाः, येषां ग्रहाणां मन्त्रेषु पुरस्तात्पूर्वमुपयामगृहीतोऽ-सीति पठितस्त इति यावत्। एतादृशा ये ग्रहास्ते यजुषा गृह्यन्ते यजुःकरणकग्रहणा भवन्तीत्यर्थः। उपरिष्टादुपयामा येषां ग्रहाणां त उपरिष्टादुपयामाः, येषां ग्रहाणां मन्त्रेषूपरिष्टादनन्तरमुपयामगृहीतोऽसीति पठितस्त इति यावत्। एतादृशा ये ग्रहास्त ऋचा गृह्यन्त ऋक्करणकग्रहणा भवन्तीत्यर्थः। पुरस्तादुपयामा यजुरन्ते गृह्यन्त उप-रिष्टादुपयामा ऋगन्ते नतूपयामेनेत्यर्थः। एतेन कदाचन प्रयुच्छसीति शृतातङ्क्यं दधि यज्ञो देवानां प्रत्येतीति य आदित्यस्थालग्राः सोमस्तव सर्वे गृह्णातीत्यादित्यग्रहीयद-धिग्रहणसर्वसोमग्रहणयोरुपयामपाठाभावादुपयामेनैव ग्रहणं सिध्यति। षोडशे प्रश्ने षोडशे खण्डे विषुवत्युदु त्यं जातवेदसमिति तेषां मध्ये सौर्यं सप्तमं मध्यमं गृह्णाति

वाचस्पतिं विश्वकर्माणमूतय इति विश्वजिति वैश्वकर्माणं महीमू षु मातरमित्यपरेद्युरा-
दित्यमित्येतत्सूत्रेण विहिते प्रथमे विषुवति गृह्यमाणे सौर्येऽतिग्राह्ये विश्वजिति गृह्यमाणे
वैश्वकर्मणेऽतिग्राह्य उत्तरे विषुवति आदित्येऽतिग्राह्ये चोपयामपाठाभावादुपयामेनैव
ग्रहणम् । उपयाम उपयामगृहीतोऽसीत्यंशः । उपयामशब्देन पात्ररूपा पृथिव्युच्यते ।
तथा च श्रुतिः—उपयामगृहीतोऽसीत्याहेयं वा उपयामस्तस्मादिमां प्रजा अनुप्रजा-
यन्त इति । उपयामेन पृथिव्यैव गृहीतोऽसि हे सोमेति मन्त्रार्थः ।

सर्वग्रहाणां परिमार्जनं यथायोनिसादनं च ।

ग्रहाणामिति बहुवचनेनैव सिद्धे सर्वग्रहणं परिमार्जनार्थम् । तेन धाराग्रहव्यतिरि-
क्तोक्थ्यादिग्रहेष्वपि परिमार्जनं सिद्धं भवति । अत्र परिभाषाकरणात्पूर्वेषु ग्रहेषु न
परिमार्जनम् । ग्रहं संमार्ष्टीत्यत्रैकत्वश्रवणादेकस्यैव ग्रहस्य संमार्ग इति तु न भवति ।
ग्रहमात्रोद्देश्यत्वात्सर्वग्रहेषु संमार्गः । एकत्वस्यापि विधाने तु ग्रहोद्देशेन संमार्गैकत्वो-
भयविधाने वाक्यभेदापत्तेः । तस्मादेकत्वानुवाद एव । तथा च तृतीयाध्याये प्रथमे
पादे जैमिनिः—एकत्वयुक्तमेकस्य श्रुतिसंयोगादिति । न्यायप्रदर्शनार्थं च सर्वग्रहणम् ।
सूत्रार्थस्तु ग्रहं संमार्ष्टीत्यत्रैकत्वश्रवणादेकस्यैव ग्रहस्य संमार्गो न सर्वेषां श्रुतावेकत्व-
स्यैव संबन्धादिति । परिमार्जनं पवित्रेणाद्रिः तेन । पूर्वत्र तस्यैवोक्तत्वात् । ग्रहग्रहणं
चमसव्यावृत्त्यर्थम् । एकत्वाविवक्षावत्स्वरूपाविवक्षा नैव भवति किं तु विवक्षैव स्वरू-
पस्य । उद्देश्यं विना विध्ययोगेन तत्स्वरूपस्याविवक्षायां कारणाभावात् । तथा च
चमसेषु न संमार्ग इति । तथा च तृतीयाध्याये प्रथमे पादे जैमिनिः—संस्काराद्वा
गुणानामव्यवस्था स्यात्, व्यवस्था वाऽर्थस्य श्रुतिसंयोगात्तस्य शब्दप्रमाणत्वादिति
सूत्राभ्याम् । संस्कारात्संमार्गरूपसंस्काराद्गुणानां ग्रहत्वचमसत्वादिगुणानामव्यवस्थैव
यात्र तु ग्रहत्वचमसत्वस्वरूपाव्यवस्थाऽत्र । तेन चमसानामपि संमार्ग इति प्रथमसू-
त्रार्थः । उत्तरसूत्रे वाशब्दः पूर्वपक्षव्यावर्तकः । व्यवस्थैवात्रार्थस्य ग्रहचमसत्त्वधर्मद्व-
यावच्छिन्नार्थद्वयस्य ग्रहचमसात्मकस्य श्रुतिसंयोगाद्ग्रहं संमार्ष्टीत्येव श्रुतिसंबन्धो
न तु चमसं संमार्ष्टीति श्रुतिसंबन्धस्तस्माद्ग्रहश्रुतिसंबन्धात्तस्य ग्रहश्रुतिसंबन्धस्य शब्द-
प्रमाणत्वाच्छब्दैकगम्यत्वादिति द्वितीयसूत्रार्थः । योनिशब्देन कारणभूतमन्त्रायतन-
योर्ग्रहणम् । योनिश्च योनिश्च योनी योनी अनतिक्रम्य यथायोनि । तथा च यथा-
कारणमन्त्रं यथायतनं चेत्यर्थः । योनिशब्दस्य कारणवाचित्वं प्रसिद्धम् । स्थानवा-
चित्वं तु योनिष्ट इन्द्र निषदे अकारीति श्रुतेर्हे इन्द्र तवोपवेशनाय स्थानं मया कृत-
मित्यर्थात् । ग्रहणकाले पूर्वं बुध्नस्योदकेऽवधानं बौधायनेनोक्तं तदपि दृष्टप्रयोजनसं-
भवनायां कर्तव्यं सर्वत्र । अत्र परिभाषाकरणादन्तर्यामान्तेषु ग्रहेषु न परिमार्जनम् ।
चकार ऋगुपयामयोरनुद्रवणसमुच्चयार्थः ।

अयं वां मित्रावरुणेति मैत्रावरुणꣳ राया वयꣳ ससवाꣳसो मदेम हव्येन देवा यवसेन गावः । तां धेनुं मित्रावरुणा युवं नो विश्वाहा धत्तमनपस्फुरन्तीमिति तꣳ शृतशीतेन पयसा श्रीत्वा सादयति।

इत्यनुद्रुय पात्रमुपगच्छतीति सर्वग्रहेष्वनुवर्तते । मैत्रावरुणमित्यनन्तरं गृहीत्वेति शेषः । अयं वां मित्रावरुणेत्यादिषु तत्तत्प्रतीकेन तत्तल्लिङ्गकग्रहणमन्त्रसहिताः सर्वे मन्त्रा गृह्यन्ते । तं मैत्रावरुणं शृतशीतेन शृतं पक्वं सच्छीतं तेन पयसा पूर्वसंपादितदोहेन श्रीत्वा मिश्रयित्वेत्यर्थः । शृतेनेत्येतावत्युच्यमाने पक्वार्थमेव दोहः स्यात्तदर्थं शीतेनेति । शीतेनेत्येतावत्युच्यमाने तापो न स्यात्तदर्थं शृतेनेति । शृतशब्दः पाकपरः शृतं पाक इति पाणिनिस्मरणात् । यथादैवतमन्त्रेण तत्तन्मन्त्रान्ते, तत्तद्देवतालिङ्गकग्रहणमन्त्रस्तत्तद्ग्रहणे तत्तद्देवतालिङ्गकसादनमन्त्रस्तत्तद्ग्रहसादन इति सर्वग्रहोपयोगिविधिः । मैत्रावरुणग्रहेऽयं वां मित्रावरुणेति उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वेति एष ते योनिर्ऋतायुभ्यां त्वेति मैत्रावरुणग्रहे मन्त्राः । एष ते योनिर्ऋतायुभ्यां त्वेति सादनमन्त्रः ।

अयं वेन इति शुक्रꣳ हिरण्येन श्रीणाति ।

शुक्रमित्यनन्तरं गृहीत्वेति शेषः । अत्र हिरण्येन श्रीणातीति पुनर्विधानात्पूर्वत्र हिरण्यश्रयणस्यानित्यता । उपयामगृहीतोऽसि शण्डाय त्वा, एष ते योनिर्वीरतां पाहीति ग्रहणसादनौ मन्त्रौ ।

तं प्रत्नथेति मन्थिनम् ।

गृहीत्वेति शेषः ।

मनो न येषु हवनेषु तिग्मं विपः शच्या वनुथो द्रवन्ता । आ यः शर्याभिस्तुविनृम्णो अस्याश्रीणीताऽऽदिशं गभस्ताविति सक्तुभिर्मन्थिनꣳ श्रीणात्यात्मानमनभिध्वꣳसयन्नितराꣳश्च ग्रहान् ।

उपयामगृहीतोऽसि मर्काय त्वा, एष ते योनिः प्रजाः पाहीति ग्रहणसादनौ । सक्तवो यवपिष्टानि । तत्रैव तस्य रूढः । तद्यत् प्राविशदिति लिङ्गाच्च । अत्र सक्तवः श्रौताग्नौ भर्जनाविधानाद्बहिरेव विहारादुत्पादयितव्याः । बौधायनेन लौकिकसक्तुनिष्पादनमेवोक्तं तच्च पूर्वद्युरेव । तदर्थं पयश्च सक्तूꣳश्च कुरुतेति प्रैष एवोक्तः । आत्मानमनभिध्वंसयन्नविकिरन् । इतरान्ग्रहांश्चानभिध्वंसयन्नविकिरन्नित्यर्थः । आत्मानमनभि-

१ ग. छ. ज. झ. ञ. ससवाꣳ° ।

ध्वंसयाजितरांश्च ग्रहानितिवचनादेवं ज्ञायते प्रयाते देशे प्रायेण सक्तुध्वंसनं स्यादेव तथ सोमस्यान्येषां हविषां च परस्परं संसर्जने दोषावहं स्यादिति । तेनान्यानि हवींषि स्पृष्ट्वा प्रक्षालितपाणिभिरेव राजा स्प्रष्टव्यः । राजानं स्पृष्ट्वाऽन्यानि हवींषि । तथा च बाधूलादिसूत्रे नास्पृष्टोदकाः सोमेनेतराणि हवींष्यालभेरन्निति । कात्यायनसूत्रे च—आज्यमालभ्योपस्पृशेदधः सोममालप्स्यमानस्तथेति । छन्दोगसूत्रे च — न राजानमालभ्यानुपस्पृश्याप आज्यमालभेरंस्तथाऽऽज्यं राजानं सर्वत्रेति । आश्वलायनेनापि तत्र तत्र राजसंस्पर्शोपस्थितेः प्राक्स्पृष्टोदकमिति उदकस्पर्शो विहितः । एवमन्तानामुपांशुस्वरः ।

ये देवा दिव्येकादश स्थेति स्थाल्याग्रयणमा-
ग्रयणोऽसीति वा पुरस्तादुपयामेन यजुषा ।

स्थालीग्रहणं तां विश्वे देवा आग्रयणस्थाल्योर्जमदुहन्नित्याद्यर्थवादबोधितोर्ग्दोहभावत्वाऽऽग्रयणग्रहणकाले कर्तव्येति स्फोरणाय । स्थाल्या गृह्णाति । वायव्येन जुहोति । तस्मादन्येन पात्रेण पशून्दुहन्ति । अन्येन प्रतिगृह्णन्ति । अथो व्यावृतमेव तद्यजमानो गच्छतीतिश्रुतिचोदितस्थालीकरणकग्रहानुकरणाय च । ये देवा दिव्येकादश स्थ पृथिव्यामध्येकादश स्थाप्सुषदो महिनैकादश स्थ ते देवा यज्ञमिमं जुषध्वमुपयामगृहीतोऽसीति प्रथमे पक्षे मन्त्रः । उपयामगृहीतोऽस्याग्रयणोऽसि स्वाग्रयणो जिन्व यज्ञं जिन्व यज्ञपतिमभि सवना पाहि विष्णुस्त्वां पातु विशं त्वं पाहीन्द्रियेणेति द्वितीये पक्षे मन्त्रः । एतेनोपरिष्टादुपयामस्यैवाऽऽग्रयणोऽसीत्ययं शेष इति शङ्का निरस्ता । आग्रयणोऽसीति पुरस्तादुपयामेन यजुषा वेत्यन्वयः । पुरस्तादुपयामेनेति विशेषणात्पूर्वमन्त्रस्यान्त्योपरिष्टादुपयामत्वं सूचितम् । स्पष्टमाहाऽऽपस्तम्बः—ये देवा दिवीत्युपरिष्टादुपयामया पुरस्तादुपयामेन वा यजुषेति । पुरस्तादुपयामा यजुषा गृह्यन्त उपरिष्टादुपयामा ऋचेत्यनेनैव सिद्धेऽत्र पुरस्तादुपयामेनेति वचनमेकस्यैवोपयामस्य मध्यपातिन उभयान्वयित्वादुभयमन्त्रस्यापि सोपयामत्वमिति, तेनोपयामद्वयपाठाभावात्कस्य सोपयामत्वं कस्योपयामरहितत्वं तथा च यस्योपयामरहितत्वं तस्योपयामेनैव ग्रहणं स्यान्नतु ऋग्यजुरन्यतरान्त इति तद्व्यावर्तयितुम् । तेनोभयपक्षेऽपि तत्तन्मन्त्रान्त एव ग्रहणं न त्वेकत्रोपयामेनैकत्र मन्त्रान्त इति सिद्धं भवति ।

द्वाभ्यां धाराभ्यां गृह्णाति ।

सामान्यप्रतिज्ञेयं द्वयोर्धारयोः साहित्यार्था ।

य आग्रयणस्थाल्यां सोमस्तस्यैकदेशमन्य-
स्मिन्पात्रे *निषिच्य द्वितीयां धारां करोति ।

---

* सूत्रपुस्तकेषु निःषिच्येति पाठः ।

अनेन ज्ञायत उपांशुपात्रस्य बिलं विस्तीर्णं निम्नतरं चेति । इदमपि ज्ञायतेऽर्धस्य होमोऽर्धस्य स्थाल्यामवनयनमिति । एकदेशश्चतुर्थांशरूपः । अन्यस्मिन्नस्मिन्कस्मिंश्चित्पात्रे निषिच्य स्रावयित्वा तेन द्वितीयां धारां करोतीत्यर्थः ।

विदद्यती सरमा रुग्णमद्रेर्महि पाथः पूर्व्यꣳ सध्रियक्कः । अग्रं नयत्सुपद्यक्षराणामच्छा रवं प्रथमा जानती गादिति पुरोरुचमभिचरतः कुर्यात् ।

उपयामग्रहणात्प्रागुच्यते यर्क्तस्याः पुरोरुगिति संज्ञा । यत्राभिचारनिमित्ते ग्रहग्रहणे विशेषभूताया ऋचो ग्रहणं क्रियते तत्र पुरोरुगिति संज्ञयोपादानम् । दृष्टं चैतच्छ्रुतावभिचर्यमाणस्योक्थ्याग्रतायाम्—उक्थ्याग्रान्गृह्णीताभिचर्यमाणः सर्वेषां वा एतत्पात्राणामिन्द्रियं यदुक्थ्यपात्रꣳ सर्वेणैवैनमिन्द्रियेणातिप्रयुङ्क्ते सरस्वत्यभिनोनेषिवस्य इति पुरोरुचं कुर्याद्वाग्वै सरस्वती वाचैवैनमतिप्रयुङ्क्ते मा त्वत्क्षेत्राण्यरणानि गन्मेत्याह मृत्योर्वै क्षेत्राण्यरणानि तेनैव मृत्योः क्षेत्राणि न गच्छतीति । अभिचरतीत्यभिचरंस्तस्याभिचरतो द्वेष्यमुद्दिश्याभिचारं कुर्वतः । एतादृशस्य यजमानस्येमां पुरोरुचं कुर्यात् । रुग्णवत्पदघटितत्वादिति भावः । अत्र श्रुतावुपयामपाठाभावादुपयामेनैव ग्रहणं नर्गन्त इति द्रष्टव्यम् ।

त्रिꣳशत्त्रयश्चेति भ्रातृव्यवतः ।

भ्रातृव्यः शत्रुस्तद्वतः । पूर्वः कल्पस्तस्यैवापकाराय । अयं तु तत्कृतापकारप्रतीकारायेति भेदः । अत्राऽऽग्रयणोऽसीत्ययमुपरिष्टादुपयामस्यैव शेषः । पूर्ववद्विकल्पबोधकपदाभावात् । आग्रयणोऽसीत्यस्मिन्मन्त्रे भ्रातृव्यकर्तृकापकारप्रतीकारबोधकपदाभावेन तदुपयोगासंभवाच्च । सादनमन्त्रः पूर्ववदेव ।

आग्रयणं गृहीत्वा हिमिति त्रिर्हिं करोति शनैरग्रेऽथोच्चैरथ सूच्चैः सोमः पवत इति त्रिराह शनैरग्रेऽथोच्चैरथ सूच्चैः ॥ १० ॥

आग्रयणं गृहीत्वेतिवचनं नैमित्तिक आग्रयणग्रहण एव वक्ष्यमाणमभिमन्त्रणान्तमिति शङ्कां व्यावर्तयितुम् । तेन नित्येऽपि आग्रयणग्रहण इदं भवत्येवेति सिद्धं भवति । हिंकारस्य हिं हुं हामितिनानारूपत्वादिष्टाग्रिग्रहार्थः पाठो हिमिति । अग्र उच्चैरितिश्रवणाच्छनैःशब्द स्वरे वर्तते । शनैरुच्चैः सूच्चैरितिशब्दैर्मन्द्रमध्यमकुष्टस्वरा उच्यन्ते । शनैरुच्चैः सूच्चैरित्येतावतैव हिंकारत्रयस्य स्वरत्रये लब्धेऽग्रशब्दोऽथशब्दद्वयं चेदं ज्ञापयति प्रथमं त्रिः शनैरनन्तरमेवोच्चैस्तदनन्तरमेव सूच्चैरिति न तु एकवारं शनैस्तत उच्चैस्ततः सूच्चैरित्येतादृशक्रमेणेति । एतेनार्थात्प्रतिस्वरं त्रिरावृत्तिरपि सिद्धा भवति । सुष्ठुच्चैः सूच्चैरुच्चैरपेक्षया सुप्लुता । सोमः पवत इत्यत्राप्येवमेव द्रष्टव्यम् ।

अस्मै ब्रह्मणे पवतेऽस्मै क्षत्राय पवतेऽस्मै सुन्वते यजमानाय पवत इष ऊर्जे पवतेऽद्भ्य ओषधीभ्यः पवते वनस्पतिभ्यः पवते द्यावापृथिवीभ्यां पवते सुभूताय पवते ब्रह्मवर्चसाय पवते यजमानाय पवते मह्यं ज्यैष्ठ्याय पवत इति सोममभिमन्त्र्य वाचं विसृजते ।

सोमं गृहीतम् । अभिमन्त्रणाद्व्यवहितोत्तरमेव वाचं विसृजते । तत एष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादनम् । वाचं विसृजत इत्यनेन वाग्विसृष्टा मयेति भावना कर्तव्येति बोध्यते न तु वाग्विसर्गार्थं सर्वथा भाषणं मध्ये कर्तव्यमिति । आग्रयणनिर्वचनं श्रुतौ—वाग्वै देवेभ्योऽपाक्रामद्यज्ञायातिष्ठमाना ते देवा वाच्यपक्रान्तायां तूष्णीं ग्रहानगृह्णत साऽमन्यत वागन्तर्यन्ति वै मेति साऽऽग्रयणं प्रत्यागच्छत्तदाग्रयणस्याऽऽग्रयणत्वमिति ।

अतिग्राह्यान्गृह्णाति ।

अतिग्राह्यसंज्ञकान्ग्रहान्गृह्णातीत्यर्थः । सामान्यप्रतिज्ञेयम् । इयं च प्रतिज्ञा सूत्रान्तरोक्तपाक्षिकत्वव्यावृत्त्यर्था । न चोक्थ्ये गृह्णीयाद्विश्वजिति सर्वपृष्ठे ग्रहीतव्या इति विशेषवचनं तद्विषये तत्रैव नान्यासु विकृतिष्वतिदेशः, अन्यथोक्थ्ये गृह्णीयाद्विश्वजिति सर्वपृष्ठे ग्रहीतव्या इत्युभयत्रैवातिदेशः कृतो व्यर्थः स्यात् । अग्निष्टोमे तु ग्रहीतव्या इति वाक्यं तु नियतत्वार्थमपेक्षत एवेति वाच्यम् । गुणकामप्रवृत्त्यर्थं समानविधानस्याऽऽवश्यकतया पुनःश्रवणस्य समानविधानार्थत्वेनान्यत्रातिदेशनिवृत्त्यभावात् । तथा चैकादशाध्याये प्रथमे पादे जैमिनिः—अभ्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः स्यादिति ।

अग्न आयूꣳषि पवस इत्याग्नेयमुत्तिष्ठन्नोजसा सहेत्यैन्द्रं तरणिर्विश्वदर्शत इति सौर्यम् ।

उपयामगृहीतोऽस्यग्नये त्वा तेजस्वते । एष ते योनिरग्नये त्वा तेजस्वत इत्याग्नेयस्य ग्रहणसादने । उपयामगृहीतोऽसीन्द्राय त्वौजस्वते, एष ते योनिरिन्द्राय त्वौजस्वत इत्यैन्द्रस्य । उपयामगृहीतोऽसि सूर्याय त्वा भ्राजस्वते, एष ते योनिः सूर्याय त्वा भ्राजस्वत इति सौर्यस्य । ऋगन्ते ग्रहणम् ।

ओजस्तदस्य तित्विष उभे यत्समवर्तयत् । इन्द्रश्चर्मेव रोदसी । अदृश्रमस्य केतवो वि रश्मयो जनाꣳ अनु । भ्राजन्तो अग्नयो यथेति वैताभ्याम् ।

---

१ क. ग. वाक्ये.।

ऐन्द्रपौर्णयोर्वैकल्पिकौ शाखान्तरीयौ मन्त्रौ । ग्रहणसादनमन्त्रौ तु पूर्ववेव तयोः । आग्रयणातिग्राह्यस्य तूक्त एव मन्त्रः । अतिग्राह्यनिर्वचनं श्रुतौ—देवा वा इन्द्रियं वीर्य१ व्यभजन्त ततो यदत्यशिष्यत तदतिग्राह्या अभवन्तदतिग्राह्याणामतिग्राह्यत्वमिति ।

उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वते वय-
स्वत उक्थ्यायुव इति स्थाल्योक्थ्यम् ।

स्थालीग्रहणं तामिन्द्र उक्थ्यस्थाल्येन्द्रियमदुहदित्यर्थवादबोधितदोहभावनास्फोरणाय श्रुत्यनुकरणाय च । विष्णवे त्वेत्यन्तो मन्त्रः । यजुरन्तेऽत्र ग्रहणम् । एष ते योनिरिन्द्राय त्वोक्थ्यायुव इति सादनमन्त्रः ।

मूर्धानं दिवो अरतिं पृथिव्या इति स्थाल्या ध्रुवम् ।

स्थालीग्रहणं तां मनुष्या ध्रुवस्थाल्याऽऽयुरदुह्रन्नित्यर्थवादबोधितायुर्दोहभावनास्फोरणाय श्रुत्यनुकरणाय च । अत्रर्गन्ते ग्रहणम् । उपयामगृहीतोऽस्यग्नये त्वा वैश्वानरायेति उपयाममन्त्रः ।

ध्रुवोऽसीति वा पुरस्तादुपयामेन यजुषा ।

उपयामगृहीतोऽस्यग्नये त्वा वैश्वानराय ध्रुवोऽसि ध्रुवक्षितिर्ध्रुवाणां ध्रुवतमोऽच्युतानामच्युतक्षित्तम इति मन्त्रपाठः । यजुरन्तेऽत्र ग्रहणम् । पूर्ववद्व्याख्यानम् । एष ते योनिरग्नये त्वा वैश्वानरायेति सादनमुभयत्रापि ।

पूर्णम् ।

एतेन ज्ञायत इतरे ग्रहा नित्यमुपर्यर्धे ग्रहीतव्याः । ध्रुवस्तु पूर्ण एव नित्यं ग्राह्यः ।

द्वेष्यस्योनम् ।

द्वेष्यस्य यजमानद्वेष्यस्य नाशायोनम् । तथा चाऽऽपस्तम्बः—अल्पं गृह्णीयाद्यः कामयेत प्रमायुकः स्यादित्युपर्यर्धे यः कामयेतोत्तरमायुरियामिति । अल्पं न्यूनम् । अर्धादधिकमुपर्यर्धम् । उत्तरमायुः पञ्चाशत ऊर्ध्वं वयः ।

हिरण्ये सादयत्यायुष्कामस्य ।

आयतन एव हिरण्ये सादनम् । स्पष्टमेतदुक्तमापस्तम्बेन—एष ते योनिरग्नये त्वा वैश्वानरायेत्यायतने हिरण्ये सादयेदायुष्कामस्येति । हिरण्यसादनस्य काम्यत्वाद्विकृतौ निवृत्तिः । आयुष्कामो हिरण्ये सादयिष्य इति संकल्पो यजमानेन कार्यः ।

तं दक्षिणे हविर्धान आसीनो राजपुत्रो गोपायति ।

तं ध्रुवम् । दक्षिणे हविर्धान इति समीपसप्तमी । तथा च दक्षिणहविर्धानसमीप

१ ख. ङ. ज. झ. ञ. °त इ° ।

आसीन इत्यर्थो भवति । दक्षिणग्रहणमुत्तरस्यावृत्त्यर्थम् । आसीनग्रहणं दक्षिणे हविर्धान इति सप्तम्यन्तस्याऽऽकाङ्क्षापूरणार्थमनुवादः । अथ वा दक्षिण इति प्रदेशविशेषणं न तु हविर्धानविशेषणम् । तथा चायमर्थो भवति—हविर्धानमण्डपे दक्षिणे प्रदेश आसीन इति । दक्षिणे प्रदेश इति सामान्योक्त्या यत्र कुत्रचिद्दक्षिणे प्रदेश उपवेशनं सिद्धं भवति । उपवेशनाय हविर्धानरूपं स्थलविशेषं विधातुमनुवादो वा । दक्षिणेनेति पाठ एनबन्तो दक्षिणशब्दो ध्रुवसमीप एवोपवेशनं विदधाति । हविर्धान आसीन इत्यनेन बहिरुपवेशनं व्यावर्त्यते । राज्ञः पुत्रो राजपुत्र इत्येव समासो न तु राजा चासौ पुत्रश्चेति । पुत्रपदवैयर्थ्यापत्तेः । राज्ञः पुत्र इत्येतादृशे समासे तु राजा भिन्नः पुत्रो भिन्न इति न पुत्रपदवैयर्थ्यम् । राजसंबन्ध्यभिन्नः पुत्र इति समासार्थः । निपातातिरिक्तनामार्थयोरभेदान्वयस्यैव व्युत्पन्नत्वात् । गोपायति रक्षति । गुपू रक्षण इत्यस्माद्धातोर्गुपूधूपविच्छिपणिपनिभ्य आय इत्यायप्रत्यये गुणे च सति रूपम् । अवनयनपर्यन्तं रक्षणमर्थात् । आऽवनयनादित्यापस्तम्बः स्पष्टमेवाऽऽह । राजपुत्रविधानेन बौधायनोक्तो ध्रुवगोपाख्यः सदस्यो व्यावर्त्यते । अत एव सदस्यपुरुषावन्यौ द्वौ सदस्यावपि व्यावर्त्येते । न च राजपुत्रस्यैव सदस्यत्वमस्त्विति वाच्यम् । सदस्येऽपि ऋत्विक्त्वसत्त्वेन राजपुत्रस्य क्षत्रियत्वेन तत्राऽऽर्त्विज्याधिकारस्यासत्त्वेन ऋत्विक्त्वाभावात् । अत्रावेष्ट्यधिकरणन्यायेन राजशब्दः क्षत्रियपरो नैव भवति । किं तु अभिषिक्तक्षत्रियपर एव । अन्यथा पुत्रशब्दवैयर्थ्यापत्तेः ।

सर्वान्पूर्णान्वृष्टिकामस्य ग्रहान्गृह्णीयात् ।

सर्वग्रहणं धाराग्रहव्यतिरिक्तोक्थ्यपर्यायादिसंग्रहार्थम् । इदं च काम्यत्वात्प्रकृतावेव निविशते । पूर्णान्ग्रहान्गृह्णीयाद्यर्हि पर्जन्यो न वर्षेत्प्राणान्वा एतर्हि प्रजानाᳪं शुगृच्छति यर्हि पर्जन्यो न वर्षति प्राणा ग्रहाः प्राणानेव प्रजानाᳪं शुचो मुञ्चति ताजक्प्रवर्षतीति ब्राह्मणम् । आमयाविनोऽपि पूर्णग्रहग्रहणम् । तथा च ब्राह्मणम्—पूर्णान्ग्रहान्गृह्णीयादामयाविनः प्राणान्वा एतस्य शुगृच्छति यस्याऽऽमयति प्राणा ग्रहाः प्राणानेवास्य शुचो मुञ्चत्युत यदीतासुर्भवति जीवत्येवेति । सूत्रे वृष्टिकामग्रहणमामयाविन उपलक्षणम् ।

यदि कामयेत यो ग्रामे तं ग्रामान्निरूह्येयं यो बहिर्ग्रामात्तं
ग्रामे कुर्यामितीदमहममुमामुष्यायणममुष्याः पुत्रममुष्या
विश उत्खिदामीति ध्रुवमुत्खिद्येदमहममुमामुष्यायणम-
मुष्याः पुत्रममुष्यां विशि सादयामीति तं पुनः सादयेद्य
एव ग्रामे तं ग्रामान्निरू(रु)ह्य यो बहिर्ग्रामात्तं ग्रामे करोति ।

यदीत्यनेन कामनाया यजमानगतत्वं प्रदर्श्यते । कामयेतेत्यनेन काम्यत्वम् । यो ग्रामे शत्रुस्तं ग्रामाद्बहिः पर्यासयेयं यो बहिर्ग्रामात्सुहृत्तं ग्रामे तस्य स्थाने कुर्यामिति

यदि यजमानः कामयीत तदाऽध्वर्युरिदमहममुमामुष्यायणममुष्याः पुत्रममुष्या विश उत्खिदामीति मन्त्रेण ध्रुवमुत्खिद्य तस्मात्स्थानादपनीयेदमहममुमामुष्यायणममुष्याः पुत्रममुष्यां विशि सादयामीति मन्त्रेण तं ध्रुवं पुनस्तत्रैव सादयेत्। य एव शत्रुर्ग्रामे तं ग्रामान्निरू(रु)ह्य पर्यस्य यः सुहृद्बहिर्ग्रामात्तं ग्रामे शत्रोः स्थानेऽनेन विधिना करोति। उत्खेदनमूर्ध्वग्रहणम्। उत्खेदनार्थे मन्त्रेऽमुमित्यस्य स्थाने शत्रोर्नामग्रहणम्। आमुष्यायण इति तस्य गोत्रप्रयुक्तं नाम। आमुष्यायण इति पितुर्नामधेयेनेत्युक्तमेव प्राक्। अमुष्य पुत्रमित्यत्रत्यामुष्यशब्देन तस्य पितुर्नाम्नो ग्रहणम्। अमुष्या विश इत्यत्रामुष्यशब्देन ग्रामनाम्नो ग्रहणम्। विट्शब्दो ग्रामवाची। सूत्र इदानीमिदमहममुष्याऽऽमुष्यायणममुष्याः पुत्रममुष्या विश उत्खिदामीति पाठो दृश्यते सोऽपपाठ एवेति भाति। कथमिति चेत्। उच्यते—अमुष्येति षष्ठ्यन्तस्यान्वयासंभवाच्छत्रोर्नाम्नोऽसंग्रहात्पितुर्नामग्रहणं विना केवलमातृनामग्रहणस्यासमञ्जसत्वाच्चेति द्रष्टव्यम्। तत्र विश इत्यन्तस्याऽऽपस्तम्बपाठानुसारेणैव पाठो युक्त इदमहममुमामुष्यायणममुष्य पुत्रममुष्या विश इति। तथा चैतादृशो मन्त्रो भवति—इदमहं विष्णुगुप्तं वैन्यं चित्रसेनस्य पुत्रं काश्या विश उत्खिदामीति। आपस्तम्बपाठस्तूदूहामीति। अत्र विरोधाभावान्नाऽऽदर्तव्य उदूहामीति पाठः। अथवेदमहममुष्येत्यस्मिन्मन्त्रे षष्ठी द्वितीयार्थे द्रष्टव्या। इदमहममुमामुष्यायणममुष्याः पुत्रममुष्यां विशि सादयामीत्ययमपि पाठः पूर्वमन्त्रवदपपाठ एव पूर्वोक्तहेतुभिः। अत्रापि पाठ आपस्तम्बपाठानुसारेणैव कृत्स्नस्यैव मन्त्रस्य भेदाभावात्। तथा चैवं मन्त्रो भवति—इदमहं मित्रगुप्तं सैन्यं शूरसेनस्य पुत्रं काश्यां विशि सादयामीति। इदंशब्देन पात्रं निर्दिश्यते। अमुमामुष्यायणममुष्याः पुत्रममुष्या विश उत्खिदन्तु इदं पात्रमहमुत्खिदामीति मन्त्रार्थः संपन्नो भवति। उत्तरमन्त्रस्य तु अमुमामुष्यायणममुष्य पुत्रममुष्यां विशि सादयितुमिदं पात्रमहं सादयामीति। अत्रापि षष्ठी द्वितीयार्थे वा द्रष्टव्या। पुनःशब्दः प्रथमसादनदेश एवेदं सादनमिति प्रदर्शयितुं न तु नित्यसादनस्यैतत्पूर्वत्र सद्भावं सूचयितुमुत्खेदनविधिबलादेव तस्य सिद्धेः। य एव ग्राम इत्यादिना फलं प्रदर्श्यते। अत्राऽऽपस्तम्बेन विशेष उक्तः—यद्येवं कुर्यादायुः प्रजानां विचालयेत्तृणमेतेन मन्त्रेणोपर्युपर्यतिहरेदिति। एतेनेदमहमित्येतेन। उपर्युपरि ध्रुवस्थाल्या बुध्नमारभ्याऽऽबिलं तृणमवगमयेदित्यर्थः।

**ध्रुव९ सादयित्वा राजानमतिपावयति यावन्तं प्रातःसवनायाऽऽप्तं मन्यते।**

ननु ध्रुव९ सादयित्वेति वचनं व्यर्थम्। नैमित्तिककर्माधिकारनिवृत्त्यर्थमिति चेत्कामनावाक्येनैव फलसिद्धौ तदन्तमेव नैमित्तिकमित्येतादृशार्थप्रदर्शनस्यैव पुनःफलप्रदर्शनप्रयोजनत्वेनावश्यं वक्तव्यतया तेनैव तत्सिद्धेरिति चेत्सत्यम्। व्यापत्तौ माध्यंदिने

सवने यदि ध्रुवः स्कन्नेदायुर्दा असि ध्रुवायुर्मे धेहीत्यादि प्रायश्चित्तं कृत्वा तं सादन-मन्त्रेण सादयित्वैव राजातिपावनादि करोतीति। एवमेव तृतीयसवने। राजानमतिपा-वयति। द्रोणकलश इति शेषः। तस्यैवोपस्थितत्वात्प्रयोजनसद्भावाच्च। अथ वा कालाव्यवधानार्थमिदं वचनम्। अतिपावयतीत्यत्रातिराधिक्यार्थः। यावन्तं प्रातःसव-नायाऽऽप्तं मन्यत इत्येतत्साहचर्यात्। पावयतीति शब्दाद्दशापवित्रेण धारास्रुतस्यैव यावत्प्रयोजनमवनयनं न धारास्रुततो भिन्नस्य। अत एवाग्रे वक्ष्यति विरमति धारा प्रपीड्य पवित्रं निदधातीति। द्रोणकलशेऽधिकसोमानयने प्रमाणविशेष उक्तः कात्यायनेन—अत्रार्धपूर्णं द्रोणकलशं कृत्वेति। बौधायनेन तु द्रोणकलशमुपर्यर्धं कृत्वेत्युक्तम्। राजानमपादत्ते यावन्तमेकग्रहायाऽऽप्तं मन्यत इतिवद्गुरुसूत्रकरणप्र-योजनं द्रष्टव्यम्।

विरमति धारा प्रपीड्य पवित्रं निदधाति।

विरमति धारेत्यनेन तदन्तं सांतत्यं बोध्यते। तेन ग्रहग्रहणव्यतिरिक्तकालेऽपि धाराकरणं सिद्धं भवति। पवित्रं दशापवित्रं प्रपीड्य द्रोणकलश एव प्रपीड्य पवित्र-निधानं दक्षिणहविर्धान एवेत्यत्र ज्ञापकमुक्तमेव।

मैत्रावरुणचमसीयाश्चैकधनैकदेशाश्चाऽऽधवनी-
येऽवनीय तिरःपवित्रं पूतभृत्येकदेशमवनयति।

मैत्रावरुणचमसीया इत्यत्र चकारो मैत्रावरुणचमसीयानामेकधनैकदेशानां च सहै-वावनयनार्थः। मैत्रावरुणचमसीयानां सर्वासामेवावनयनम्। एकधनैकदेशावनयनं यथा-र्थम्। तथा चाऽऽपस्तम्बः—एकधनानां यथार्थं सर्वाश्च मैत्रावरुणचमसीया आध-वनीयेऽवनीयेति। यावतीभिर्वर्धितं रसं प्रातःसवनाय पर्याप्तं मन्यते तावतीरवनयतीत्यर्थः। तिरोऽन्तर्हितं पवित्रं यस्यां क्रियायां यथा भवति तथा पूतभृति आधवनीयैकदेश-मवनयति अवनतो भूत्वा प्रापयति पवमानग्रहार्थम्। एकदेश आश्विनग्रहग्रहणपर्याप्तः। शुक्रामन्थिसहचारिचमसगणप्रभृतीनामुन्नयननिर्वाहार्थमेवाऽऽधवनीयं पूतभृत्यवनीय दशाभिः कलशं मृष्ट्वा न्युब्जतीति चमसगणोन्नयनात्पूर्वं विहितमवनयनं सूत्रकृता। आश्विनग्रहग्रहणस्य स्वल्पप्रयोजनत्वात्स्वल्पमेवावनयनम्। चमसोन्नयनात्पूर्वमेवाऽऽ-धवनीयावनयस्य विधास्यमानत्वात्केवलमाश्विनग्रहग्रहणमात्रार्थता गम्यते।

अत ऊर्ध्वं पूतभृति तिरःपवित्रमेवावनीयते।

आधवनीयं पूतभृत्यवनीय दशाभिः कलशं मृष्ट्वा न्युब्जतीत्यत्र। नन्वेवं तावता-प्यत्रापि तिरःपवित्रमित्येव वक्तव्यमेतावतैवार्थसिद्धौ किमर्थं स्वल्पप्रयोजनार्थं गुरुसूत्र-करणम्। माध्यंदिनसवनतृतीयसवनार्थमिति चेत्तस्य प्रातःसवनेन कल्पो व्याख्यात

इत्यतिदेशादेव माध्यंदिनसवनसिद्धेस्तृतीयसवने तस्य माध्यंदिनसवनेन कल्पो व्याख्यात इति प्रातःसवनातिदेशवन्माध्यंदिनसवनातिदेशात्सिद्धेरिति चेन्न । पूतभृति आधवनीयैकदेशावनयने तिरःपवित्रतायां अनावश्यकताद्योतनार्थत्वेन सार्थक्यात् । तर्हि पूतभृतः पूतभृत्त्वसंज्ञाया अनुपपत्तिरिति चेत् । उच्यते—न हि वयमपूतसोमाव-नयनं ब्रूमो येनेयमनुपपत्तिर्भवेत्किं तु आधवनीयस्थसोमैकदेशं तिरःपवित्रं पात्रान्तरेऽ-वनीय तं पूतं सोमं तेन पात्रेणानन्तर्हितपवित्र एव पूतभृत्यवनयतीत्येवं ब्रूम इति अवेहि । एवं च सूत्रं सप्रयोजनं पूतभृत्त्वसंज्ञाया अपि नानुपपत्तिरिति सुस्थम् ।

पवमानग्रहान्गृह्णाति ।

पवमानस्य ग्रहाः पवमानग्रहाः । ते चोत्तरसूत्रे वक्ष्यन्ते तान्गृह्णातीत्यर्थः । इयं च संज्ञा पवमानग्रहान्कलशाञ्छुक्रामन्थिनावाग्रयणमुक्थ्यं च ग्रहावकाशैरुपस्थायेत्यादौ संप्रत्ययार्था । पवमानस्य ग्रहाः पवमानग्रहा इत्येतादृश एव समासः । पवमानग्रहान-गृहीत्वा पवमानोपाकरणे दोषश्च ब्राह्मणे प्रदर्शितः—पवमानस्य ग्रहा गृह्यन्तेऽथ वा अस्यै ते गृहीता द्रोणकलश आधवनीयः पूतभृत्तान्यदगृहीत्वोपाकुर्यात्पवमानं विच्छि-न्द्यात्तं विच्छिद्यमानमध्वर्योः प्राणोऽनु विच्छिद्येतेति ।

उपयामगृहीतोऽसि प्रजापतये त्वेति द्रोण-
कलशमभिमृशेदिन्द्राय त्वेत्याधवनीयं वि-
श्वेभ्यस्त्वा देवेभ्य इति पूतभृतम् ।

उत्तरयोरप्युपयामगृहीतोऽसीत्यनुवर्तते । तथा चाऽऽपस्तम्बः स्पष्टमाह-पुरस्ता-दुपयामाः सर्व इति । प्रथमवदुत्तरयोरप्युपयामानुषङ्ग इति भावः । एतैर्मन्त्रैरभिमर्शन-मेवात्र ग्रहणम् । अत एव सादनमपि न । एतैरभिमर्शने पूर्वोक्तदोषौ न भवतः पशु-प्रजालाभश्च परं भवतीति । तथा च ब्राह्मणम्-उपयामगृहीतोऽसि प्रजापतये त्वेति द्रोणकलशमभिमृशेदिन्द्राय त्वेत्याधवनीयं विश्वेभ्यस्त्वा देवेभ्य इति पूतभृतं पवमानमेव तत्संतनोति सर्वमायुरेति न पुराऽऽयुषः प्रमीयते पशुमान्भवति विन्दते प्रजामिति । अत्र न परिमार्जनमध्रुवाग्रहत्वादिति केचित् । तन्न । सर्वग्रहाणां परिमार्जनमिति सर्व-ग्रहणविरोधापत्तेः ।

निःसर्पन्तः समन्वारभन्ते ॥ ११ ॥

निरित्युपसर्गोऽत्र बहिरर्थे । तथा च बहिःसर्पन्त इत्यर्थो भवति अर्थाद्धविर्धानात् । निःसर्पन्त इति शतृप्रत्ययाद्बहिःसर्पणसमकालं समन्वारम्भः । क्रमेणायमन्वारम्भो न त्वेकदाऽसंभवात् । निःसर्पन्त इति प्रस्तोत्रादीनां विशेषणम् । अध्वर्योऽस्तु न समन्वारम्भस्यान्यस्यैवाभावात् । संशब्दोऽन्वारम्भे दार्ढ्यमाचष्टे यथा सर्पतां समन्व

रब्धानां मध्येऽपच्छेदो न भवेत् । समन्वारब्धानां सर्पतामुद्गाताऽपच्छिद्येत यज्ञेन यजमानो व्यृध्येतादक्षिणः स यज्ञक्रतुः संस्थाप्योऽथान्य आहृत्यस्तत्र तद्द्याद्यत्पूर्वस्मिन्दास्यन्स्यात्त एनमृत्विजो याजयेयुरित्यादिप्रायश्चित्तश्रवणात् । ब्रह्मयजमानापच्छेदे विशेषप्रायश्चित्तस्यानुक्तेरनुद्रवणविशिष्टयज्ञतनूहोमात्मकसामान्यप्रायश्चित्तमेव । तथा चैतयोरपि सम्यगन्वारम्भः ।

अध्वर्युं प्रस्तोताऽन्वारभते प्रस्तोतारं प्रति-
हर्ता प्रतिहर्तारमुद्गातोद्गातारं ब्रह्मा ब्र-
ह्माणं यजमानो यजमानं ब्रह्मेत्येकेषाम् ।

पूर्वसूत्रे सामान्यतः समन्वारभन्त इत्युक्तं तत्र के समन्वारभन्त इत्याकाङ्क्षायामिदं सूत्रम् । ननु अध्वर्युं प्रस्तोताऽन्वारभते तं प्रतिहर्ता तमुद्गाता तं ब्रह्मा तं यजमानो यजमानं ब्रह्मेत्येकेषामिति तस्य तस्य तच्छब्देनैव ग्रहणसिद्धौ पुनर्निर्देशो व्यर्थः । नायं व्यर्थः । एवमुच्यमाने तच्छब्दस्य सर्वनामत्वेन मुख्यपरामर्शित्वान्मुखतःप्रवृत्तस्वरूपमुख्यत्वमादायाध्वर्योरेव परामर्श इत्यपि स्यात्तद्व्यवच्छेदाय पुनर्निर्देश आवश्यक इति चेदध्वर्युं प्रस्तोतृप्रतिहर्त्रुद्गातृब्रह्मयजमाना अन्वारभन्त इत्येतावतैव लघुसूत्रेणैवाध्वर्युपरामर्शसिद्धौ पुनर्निर्देशस्यानावश्यकत्वस्यैव सिद्धत्वेन वैयर्थ्यस्य तदवस्थत्वादिति चेत्सत्यम् । तथा सत्येककालेऽपि अन्वारम्भः स्यात्तद्वारणार्थमवश्यमपेक्षितत्वेन वैयर्थ्याभावात् । एवं चाध्वर्युपरामर्शवारणार्थं पुनर्निर्देश आवश्यक एवेति सुस्थम् । अध्वर्युं निष्क्रामन्तं प्रस्तोता संतनुयात्तमुद्गानोद्गातारं प्रतिहर्ता तं ब्रह्मा ब्रह्माणं यजमान इति च्छन्दोगोक्तः क्रमः । अन्वक्छन्दोगान्मैत्रावरुणो ब्रह्मा च नित्याविति आश्वलायनोक्तः प्रशास्ता चापि निवारितो भवति । पुनरन्वारभत इति वचनमनुवादः । अथ वा निःसर्पन्तः समन्वारभन्त इति स्वतन्त्रो विधिरितिज्ञापनायैतद्वचनम् । के समन्वारभन्त इति आकाङ्क्षापूरणाय पवमानसंबन्धिन इति शेषः । तथा च च्छन्दोगोक्तः क्रम आश्वलायनोक्तः प्रशास्ताऽपि सर्पणे लभ्यो भवति । स च च्छन्दोगेभ्यः पश्चात् । अन्वक्छन्दोगान्मैत्रावरुणो ब्रह्मा च नित्यावित्याश्वलायनसूत्रात् । उत्तरसूत्रोक्तः क्रमस्तु स्वतन्त्रतया पक्षान्तराभिप्रायक एव । अत एव केवलमन्वारभत इति शब्दान्तरं प्रयुक्तम् । अस्मिन्कल्पेऽपि अन्वारम्भे दृढत्वमस्त्येव । अपच्छेदे प्रायश्चित्तश्रवणात् । उभयकल्पेऽप्यन्वारम्भो दक्षिणहस्तेनैव । अन्वारम्भस्यैव प्रथमोपस्थितत्वेन मुख्यत्वात् । मुख्ये मुख्यदक्षिणहस्तसंबन्धस्यैव युक्तत्वात् । यस्मिन्नन्वारम्भे दार्ढ्यं स द्विविधो विशिष्टः केवलो वा । दक्षिणहस्तकृत एव चेदन्वारम्भो विवक्षितस्तदा विशिष्टान्वारम्भः । एतदन्वारम्भस्वीकारे सव्यहस्तेनैव सर्पणार्थहोमः ।

केवलान्वारम्भस्वीकार आदौ प्रथमं सर्पणार्थान्वारम्भस्यैवोपस्थितत्वेन मुख्यत्वान्मुख्येन दक्षिणेन हस्तेनैवान्वारम्भमात्रं कृत्वा होमकाले दक्षिणहस्तकृतान्वारम्भे सत्येव सव्यहस्तेन दृढमन्वारम्भं कृत्वा दक्षिणहस्तकृतान्वारम्भं विसृज्य दक्षिणहस्तेनैव सर्पणार्थं होमं कृत्वा सव्यहस्तकृतान्वारम्भे सत्येव दक्षिणहस्तेन दृढमन्वारम्भं कृत्वा सव्यहस्तान्वारम्भं विसृज्य गायत्रः पन्था इत्यादि । प्रथमपक्ष एव सुगमः । उभयप-क्षेऽपि अपच्छेदो नैव यथा भवति तथा सावधानेन कर्तव्यम् । तत्र दक्षिणहस्तस्य मुख्यत्वमेकाङ्गवचने दक्षिणं प्रतीयादनादेश इत्याश्वलायनवचनात् ।

यत्रोपदिश्यते कर्म कर्तुरङ्गं न तूच्यते ।
दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥

इतिच्छन्दोगपरिशिष्टाच्च । ब्रह्माणं यजमानो विपरीतं वेत्येवमुच्यमाने सर्वेषां वैपरीत्यं स्यात्तन्मा भूदित्येतदर्थं यजमानं ब्रह्मेत्येकेषामित्येवं वचनम् ।

**निःसृप्य यस्ते द्रप्सः स्कन्दतीति तिस्रो यस्ते द्रप्सः स्कन्दति यस्ते अꣳशुः स्वः परश्च यो दिवः पुरः । अयं देवो बृहस्पतिः सं तत्सिञ्चतु राधसेति वैप्रुषान्सप्त-होतारं च हुत्वोदञ्चः प्रह्वा बहिष्पवमानाय सर्पन्ति ।**

निःसृप्येतिवचनं कालाव्यवधानार्थम् । तेनोद्गातृभिः स्वसूत्रोक्तो होमः पूर्वमेव कर्तव्यो नतु मध्य इति । समानकर्तृ[क]त्वार्थं च । तेन ये निःसर्पणकर्तारस्ते वैप्रुषसप्त-होतृहोमकर्तारस्त एव च बहिष्पवमानार्थकसर्पणकर्तार इति । मन्त्रत्रयग्रहणार्थं तिस्र इति । ऋक्त्वज्ञानाय स्त्रीलिङ्गनिर्देशः । जुहोम्यन्तास्त्रयो मन्त्राः । चतुर्थः सौत्रः । वैप्रुषानित्यनन्तरं होमानिति शेषः । स्कन्नानां विप्रुषां देवत्राकरणार्था वैप्रुषा नामैते होमाश्चत्वारः । सप्तहोताऽत्र होमार्थत्वात्सग्रहः । मनसाऽनुद्रुत्येतिवचनाभावात्सवन-स्वर एवात्र । आपस्तम्बस्तु मनसाऽनुद्रुत्येत्यत्रापि पठितवान् । सप्तहोतारमित्यत्र चकारोऽपभ्रष्टो द्रष्टव्यः । हुत्वा सर्पन्तीत्यन्वयात्सर्प्स्यतां सर्वेषामेव होमः । एतेन वैप्रुषान्होमाञ्जुहोत्यध्वर्युर्वेति कात्यायनोक्तं पक्षान्तरं निरस्तं द्रष्टव्यम् । मैत्रावरुणस्य सर्पणपक्षे तस्याप्येवमेव । सामशाखिनि यजमान उद्गातृभिर्ब्रह्मणा च स्वसूत्रोक्तरीत्यैव होमः कर्तव्यो न त्वध्वर्युसूत्रोक्तरीत्याऽपि । ऋक्शाखिनि यजमाने ब्रह्मणोद्गातृभिश्च स्वसूत्रोक्तरीत्यैव होमः कर्तव्यः । मैत्रावरुणसर्पणपक्षे तेनाप्येवमेव नत्वध्वर्युसूत्रो-क्तरीत्याऽपि । सामशाखिनर्क्शाखिना वाऽपि यजमानेन सत्याषाढसूत्रानुसारेणानुष्ठाने क्रियमाणे होमद्वयमुद्गातृब्रह्मयजमानैर्मैत्रावरुणेन च कर्तव्यम् । अध्वर्युणा तु सर्वत्रा-

---

१ क. ख. ग. °तारश्च हु° ।

ध्वर्युसूत्रोक्तरीत्यैवेति ज्ञेयम्। उदञ्च उदङ्मुखाः। प्रह्वा इत्यनेन सर्पणे ऋजुता व्यावर्त्यते। बहिष्पवमानायेति प्रयोजनप्रदर्शनाय। तेन बहिष्पवमानार्थोपवेशनपर्यन्तमन्वारम्भ इति अवगतं भवति। बहिः स्तूयमानं यत्पवमानं तद्बहिष्पवमानं बहिर्बहिर्भावं गतानपि पुनातीति बहिष्पवमानमिति वा। सर्पणे विशेषमाहाऽऽपस्तम्बः—त्सरन्त इव रेहाणा इव न्यङ्क्त्वि शीर्षाणि कृत्वा सर्पन्ति मृगमिव दिदृक्षवो व्याधा मृग इव हि यज्ञ इति। त्सरन्तश्छद्मना गच्छन्त इव गच्छन्ति। तथा रेहाणा हिंसन्त इव तथाऽवनताशिरसश्च मृगं दिदृक्षवो द्रष्टुमिच्छन्त इव यथा व्याधाः। व्याधा अत्रोपमानमृत्विज उपमेयाः। तथा मृग उपमानं यज्ञ उपमेयः। मृगरूपत्वं यज्ञस्य ब्राह्मण आम्नातम्—यज्ञो देवेभ्यो निलायत कृष्णो रूपं कृत्वेति। कृष्णो मृगः।

गायत्रः पन्था वसवो देवता वृकेणापरिपरेण
पथा स्वस्ति वसूनशीय। वागग्रेगा अग्र एत्वृजुगा
इत्यध्वर्युः पूर्वो बर्हिर्मुष्टिमीषदिव विधून्वन्सर्पति।

मन्त्रद्वयस्य करणत्वं वाचनिकम्। पूर्वः पूर्वस्मिन्निति पूर्वः सुपां[सु]लुगित्यनेन सप्तम्याः सुः। प्रदेश इति योग्यतया विशेष्यमत्र द्रष्टव्यम्। मुष्टिग्रहणाद्दर्भाणां बन्धनम्। ईषदिवेत्यस्येषत्सदृशामित्यर्थः। तेन धूनने मध्यमावस्था बोधिता भवति। विधून्वन्निति शतृप्रत्ययेन धूननसर्पणयोः समकालता। मन्त्रोऽप्यध्वर्योरेव। तत्राध्वर्युग्रहणम् "अध्वर्युर्वा ऋत्विजां प्रथमो युज्यते तेन स्तोमो योक्तव्य इत्याहुर्वागग्रेगा अग्र एत्वृजुगा देवेभ्यो यशो मयि दधती प्राणान्पशुषु प्रजां मयि च यजमाने चेत्याह वाचमेव तद्यज्ञमुखे युनक्ति वास्तु वा एतद्यज्ञस्य क्रियते यद्ग्रहान्गृहीत्वा बहिष्पवमानः सर्पन्ति" इत्यर्थवादस्फोरणाय। पूर्व इत्यनेनान्वारम्भाविच्छेदानुरोधेन त्रिचतुष्पदानि पुरतः पूर्वमादौ गच्छति। एतत्सर्पणमेकवचनादध्वर्योरेव। मन्त्रोऽपि सर्पणार्थत्वात्तस्यैव। ततः सर्वे उदञ्च. प्रह्वा गच्छन्ति। यजमाने चेति मन्त्रान्तः।

दक्षिणेन चात्वालमुपविश्यान्तर्वेदि चात्वालमवेक्षमाणा बहिष्पवमानेन स्तुवते।

दक्षिणेन चात्वालं चात्वालस्य दक्षिणेऽदूरे। अन्तर्वेदीत्यनन्तरं भवेयुरिति शेषः। तथा चायमर्थो भवति—आदौ चात्वालसामीप्यानुरोधेनैवोपविश्य पश्चादन्तर्वेदि सर्वे भवेयुरित्यर्थः। उत्तरवेद्यंसस्योत्तरतः प्रक्रमास्त्रिपदात्मको यदि तदैतत्सप्रयोजनं द्रष्टव्यम्। न च दक्षिणेन चात्वालमन्तर्वेद्युपविश्य चात्वालमवेक्षमाणा बहिष्पवमानेन स्तुवत इत्येवमेवान्वयः कुतो न स्वी क्रियत इति वाच्यम्। त्काप्रत्ययस्योत्तरेण वाक्येनानन्वयापत्तेः। तथा हि उपवेशनं सर्वविषयकं स्तवनं तूद्गातृमात्रविषयकं तथा चोप-

विष्टानां सर्वेषां स्तवनकर्तृत्वाभावेनानन्वय इति । न चोपवेशनस्योद्गातृमात्रविषयकत्व-मस्त्विति वाच्यम् । इतरेषामुपवेशनाभावापत्तेः । अत उक्तरीतिरेव सम्यक् । चात्वा-लमवेक्षमाणा इति वर्तमानशानचा चात्वालावेक्षणबहिष्पवमानस्तवनयोः समकालता । अनेन द्यावापृथिव्योः संधिमीक्षमाणा इति च्छन्दोगोक्तं व्यावर्त्यते । स्तुवत इत्यनन्तर-मुद्गातार इति शेषः । उपवेशनोत्तरमन्वारम्भो न । सत्रे सर्वेषां यजमानत्वात्सर्वेषां होत्रादीनामपि सर्पणम् । अत्र यजमानं ब्रह्मेत्ययमेव पक्ष आश्रयणीयोऽन्वक्छन्दो-गान्मैत्रावरुणो ब्रह्मा च नित्यौ तावन्तरेणेतरे दीक्षिता इत्याश्वलायनसूत्रैकवाक्यत्वाय । न च सर्वे याजमानमार्त्विज्येनाविप्रतिषिद्धं कुर्युरिति द्वादशाहीयसूत्राद्धोतुः सर्पणं न भवति, तस्य हविर्धानोपवेशनात्मकेनाऽऽर्त्विज्यकर्मणा विरोधादिति वाच्यम् । यद्यु वै स्वयं होता यजमानः स्यात्सर्पेद्वेवोपगात्रं ह्यस्येति बहृचब्राह्मणं भवतीति आपस्तम्बो-क्तेन विशेषणैतस्य सामान्यस्य बाधात् । विबाधमान आर्त्विज्यं बलीय इति आपस्त-म्बीयं द्वादशाहस्थमेतस्य विशेषविधायकस्य सामान्यसूत्रं द्रष्टव्यम् । तत्रेतरेषां छन्दोगब्रह्मणोर्मध्य एव समावेशः । अन्वक्छन्दोगान्मैत्रावरुणो ब्रह्मा च नित्यौ ताव-न्तरेणेतरे दीक्षिता इत्याश्वलायनसूत्रात् । तत्रेतरेषु मुख्यगौणत्वानुरोधेन क्रमः । तत्रापि मैत्रावरुणस्य होतुरपेक्षया गौणत्वेऽपि च्छन्दोगपश्चाद्भावित्वं तस्यैव । अन्व-क्छन्दोगान्मैत्रावरुणो ब्रह्मा च नित्यौ तावन्तरेणेतरे दीक्षिता इत्याश्वलायनसूत्रात् । मैत्रावरुणस्य पश्चाद्भाविन इतरे । तेषां क्रमः—मैत्रावरुणं होता होतारं प्रतिप्रस्थाता प्रतिप्रस्थातारं ब्राह्मणाच्छंसी ब्राह्मणाच्छंसिनमच्छावाकोऽच्छावाकं नेष्टा नेष्टारमाग्नीध्र आग्नीध्रं ग्रावस्तुद्ग्रावस्तुतमुन्नेतोन्नेतारं पोता पोतारं सुब्रह्मण्यः सुब्रह्मण्यं गृहपतिर्यज-मानो गृहपतिं यजमानं ब्रह्मेति । मैत्रावरुणं गृहपतिर्यजमानो गृहपतिं यजमानं होते-त्येवं वा । सूत्रे सत्रे सदस्यस्य परिसंख्यातत्वाभात्र स भवतीति द्रष्टव्यम् ।

**वायुर्हिं कर्तेति प्रस्तोत्रे बर्हिर्मुष्टिं प्रयच्छ-न्स्तोत्रमुपाकरोत्यसर्ज्यसर्जि वागसर्ज्यैन्द्र९ सहोऽसर्ज्युपावर्तध्वमभिसर्प यजमानेति ।**

हस्तस्थितमुष्टिं प्रस्तोत्रे प्रयच्छति । प्रयच्छन्नेव स्तोत्रमुपाकरोति । प्रयच्छन्निति शतृप्रत्ययाद्बर्हिर्मुष्टिप्रदानस्तोत्रोपाकरणयोः समकालता । उपाकरोति उपक्रमयति । वायुर्हिं कर्तेति बर्हिर्मुष्टिप्रदानमन्त्रः । बर्हिर्मुष्टिप्रदानसमकालमेवासर्ज्यसर्जीतिस्तोत्रोपा-करणम् । अथ वा वायुर्हिं कर्तेति स्तोत्रोपाकरणस्यैव मन्त्रः । बर्हिर्मुष्टिप्रदानं तूष्णीमेव । तद्दानसमकालमेव वायुर्हिं कर्तेति स्तोत्रोपाकरणम् । असर्ज्य-सर्जीति उपाकरणस्यैव द्वितीयो मन्त्रः । तेन मन्त्रद्वयकरणकमुपाकरणमिति सिद्धं भवति । उपावर्तध्वमित्ययमपि मन्त्र उपाकरणार्थः सर्वेषु पवमानेषु अधिकः ।

उपावर्तध्वमित्यनन्तरमितिशब्दाध्याहारः । अभिसर्प यजमानेतीत्येतदनन्तरं संप्रेष्यतीत्यध्याहारः । अथ वा स्तोत्रोपाकरणार्थः प्रैष एवायमुपावर्तध्वमित्येतदन्त उद्गातॄणाम् । अभिसर्प यजमानेति यजमानं प्रति प्रैषः । उपावर्तध्वं स्तवनायोप समीपमावर्तध्वं संमुखा भवतेत्यर्थः । उप समीप उपविष्टाः सन्तो बहिष्पवमानमारभध्वमिति वाऽर्थः । हे यजमानाभि उद्गातॄणां संमुखं प्रणवोपगानार्थं सर्पाऽऽगच्छेत्यर्थः । एतेन ज्ञायतेऽन्वारम्भविसर्गोत्तरमपि यत्रान्वारम्भविसर्गः कृतस्तं यजमानः प्रैषपर्यन्तं तत्रैवोपविष्टो भवेदिति ।

सर्वान्पवमानानेवम् ।

सर्वान्पवमानानेवं वायुर्हिं कर्तेत्यादिनाऽभिसर्प यजमानेत्यन्तेन प्रकारेणेत्यर्थः । एतेनेदं ज्ञायत इतरेषु स्तोत्रेषु यजमानेन स्वायतन आसीनेनैवोपगानं कर्तव्यमिति ।

उपावर्तध्वमिति बर्हिर्भ्यामितराणि स्तोत्राणि ।

उपार्तध्वमित्यन्तप्रदर्शनम् । तेन वायुर्हिं कर्तेत्यादि सर्वं भवति । एतेनाभिसर्प यजमानेत्येतद्व्यावृत्तिः सिध्यति । अथ वोपावर्तध्वमित्येतावतैवोपाकरणम् । अस्मिन्पक्षे वायुर्हिं कर्तेत्यस्यासर्ज्यसार्जि वागसर्ज्यैन्द्रं सहोऽसर्जीत्येतदन्तस्यांशस्य च निवृत्तिः । अभिसर्प यजमानेत्यस्य निवृत्तिस्त्वत्राप्यस्त्येव । बर्हिर्भ्यामिति बर्हिर्मुष्टिबाधनार्थम् । इतराणि आज्यानि पृष्ठानि अग्निष्टोमसामषोडश्यादीनि च स्तोत्राणि उपाकरोतीति शेषः । बहिष्पवमानस्तवन उद्गातृभिः क्रियमाण उपगातृभिरुपगानं कार्यम् । तथा च श्रुतिः—नाध्वर्युरुपगायेद्वाग्वीर्यो वा अध्वर्युर्यदध्वर्युरुपगायेदुद्गात्रे वाचं संप्रयच्छेदुपदासुकाऽस्य वाक्स्यादिति । अध्वर्योरुपगाननिषेधादुपगानमस्ति तच्च ऋत्विक्कर्तृकमेवेति । स्पष्टमेतत्सर्वमुपगातृसंख्यां चाऽऽहाऽऽपस्तम्बः—स्तूयमानं यजमान उपगायति चत्वारोऽवरार्ध्या उपगातारो नाध्वर्युरिति । अस्यार्थः—स्तूयमानं बहिष्पवमानं यजमानस्तावदुपगायति ऋत्विजोऽपि चतुरवरा उपगायन्तीति । ऋत्विजामुपगातृत्वेऽध्वर्योरप्यविशेषादुपगानकर्तृत्वप्राप्तौ नाध्वर्युरिति निषेधः । उपगानप्रकारमप्याह भरद्वाजः—यजमानपञ्चमा उपगायन्ति हो इत्यृत्विज उपगायन्त्योमिति यजमान इति । तृतीयाध्याये सप्तमे पादे जैमिनिरपि उपगाश्च लिङ्गदर्शनादिति । नाध्वर्युरुपगायेदिति निषेधः प्राप्त्यभावेऽनुपपन्न इत्यध्वर्युभिन्नानामुपगातृत्वाल्लिङ्गदर्शनादिति सूत्रार्थः । चशब्दोऽन्ये न भवन्तीत्यस्यार्थस्यानुकर्षणार्थः । के चन च्छन्दोगा वैपरीत्येनाऽऽहुर्हो इति यजमान ओमित्यृत्विज इति । सूत्रान्तरे नाध्वर्यव उपगायेयुरिति निषेधादध्वर्युवर्गव्यतिरिक्ता उपगातारः । उत्तरमीमांसायां तु गुणोपसंहारपाद ऋत्विज उपगायन्तीति वचनमेवोदाहृतम् । उपगानप्रकारश्छन्दोगसूत्रे—अपरेणोद्गातॄंश्चतुरवरार्ध्या उप*गातारश्चतुरवरार्ध्यानेके षट्परार्ध्या(र्ध्या)स्त एतेनाक्षरेणोपगायेयुर्हो इति मन्द्रस्वरेण

---

* अभिप्रमार्थानुरोधेनोपगातार इत्यत्रोपगा इत्यपेक्षितम् ।

संततꣳ सहवाच्येष्वारमन्त इति । अस्यार्थः—उद्गातॄनपरेणोद्गातॄणां पश्चिमे प्रदेशे समीप एव। त्रयोऽवरोऽर्धो भागो येषां ते त्र्यवरार्धाः। उपगा उपगातारः। एक आचार्या उपगांश्चतुरवरार्धान्मन्यन्ते। षट्परार्धा इत्यनेन बहुत्वसंख्यावधिः प्रदर्श्यते। ते यदि त्र्यवरार्धाश्चतुरवरार्धा वा षट्परार्धास्त इत्यर्थः । एतेन वक्ष्यमाणेनाक्षरेण। तदक्षरमाह हो इति। मन्द्रस्वरेण संततमविच्छिन्नं हो इत्यक्षरेणोपगायेयुः । सहवाच्यानि निधनानि तेष्वारमन्तः। अन्तर्निधनेष्वपि आरमणम् । एतेनाक्षरेण प्रस्तावादिभक्त्यन्तरालानि च्छान्दयन्त उपगायेयुरिति निष्कृष्टोऽर्थः । ओमिति यजमानस्योपगानमप्येवमेव। निधनात्पूर्वं नोपगानं विच्छेदाभावात्। एवं सर्वस्तोत्रेषु।

स्तूयमानं बहिष्पवमानं ब्राह्मणाः सम-
भिसर्पन्ति द्वेष्यं परिबाधन्ते ॥ १२ ॥

इति हिरण्यकेशिसूत्रेऽष्टमप्रश्ने चतुर्थः पटलः ।

---

स्तूयमानं बहिष्पवमानं सन्तं ब्राह्मणाः सं संगम्याभिमुखाः सर्पन्ति बहिष्पवमानगातृसमीप उपविशन्तीत्यर्थः । इदं सर्पणं पावित्र्याय । तथा च श्रुतिः—तस्मादेवं विदुषा बहिष्पवमान उपसद्यः पवित्रं वै बहिष्पवमान आत्मानमेव पवयत इति। स्तूयमानमिति वर्तमानशानचा समकालिकत्वं बोध्यते। तेन स्तवनसमकालं गातृसमीप उपवेशनमिति सिद्धं भवति। तच्च प्रथमर्चि प्रथमकर्प्रस्तावानन्तरं वा उपस्थितत्वात्। तावत्पर्यन्तं तु समीप उपवेशनाभावेऽपि श्रवणं यत्रोपविष्टानां जायेत तावत्येव दूर उपवेशनं न तु श्रवणं यत्रोपविष्टानां न जायेत तावति दूरे। अन्यथा कृत्स्नबहिष्पवमानश्रवणजन्यं श्रुतिबोधितं पावित्र्यरूपं फलं न स्यादिति द्रष्टव्यम् । उद्गातृभिर्निनीतेनोदकेन सर्वपापक्षयार्थं मार्जनं कुर्युस्तदश्वमेधावभृथतुल्यमित्यभियुक्ताः केचन प्राहुः । केवलं पापक्षयार्थत्वमेवेति न।किं तु द्वेष्यपरिबाधनमपि फलमित्याह द्वेष्यं परिबाधन्ते द्वेष्यः शत्रुस्तस्य परिबाधनं परिपीडनम् ।

इत्योकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्निचित्वाजपेययाजिसर्वतोमुखयाजिद्विषाहस्राग्निचित्पौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथदीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसूत्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंतापशामिकायां ज्योत्स्नाख्यायां वृत्तावष्टमप्रश्नस्य चतुर्थः पटलः ॥ ४ ॥

---

१ ख. 'ते। य'। २ क. ख. 'पदेश'।

अथाष्टमप्रश्ने पञ्चमः पटलः ।

अग्नीदग्नीन्विहर बर्हिः स्तृणाहि पुरोडाशाॅं अलं
कुरु प्रतिप्रस्थातः पशुनेहीति स्तुत उत्तिष्ठन्संप्रेष्यति ।

अलं कुर्वित्यन्त आग्नीध्रं प्रति प्रैषः । प्रतिप्रस्थातः पशुना सह, आ, इहि आगच्छेति । पशुनेहीत्यत्रोमाङोश्चेति पररूपम् । स्तुत इत्यनेन प्रैषकालः प्रदर्श्यते । उत्तिष्ठन्निति शत्रोत्थानप्रैषयोः समकालत्वं न त्वङ्गाङ्गिभाव उत्थानमन्त्रयोः । तेन मन्त्रान्ते कर्मसंनिपातो न भवतीति बोध्यते । तथा जैमिनिरपि तृतीयाध्याये द्वितीये पादे तथोत्थानविसर्जने इति नवमेन सूत्रेणाऽऽह । सूत्रार्थस्तु—उत्तिष्ठन्नग्नीदग्नीन्विहरेति व्रतं कृणुतेति वाचं विसृजतीत्युभयत्र कालार्थ एव संयोगो नाङ्गाङ्गीभाव इति । तथाशब्दस्तथाऽऽह्वानमपीति चेत्पूर्वाधिकरणताकालार्थसंयोगार्थकत्वानुवृत्त्यर्थः[२] ।

हविर्धाने प्रविश्य विष्णो त्वं नो अन्तम
इति ग्रहानुपतिष्ठते पात्राणि च संमृशति ।

पूर्वेणापरेण वेतिविशेषानुक्तेरन्यतरेण द्वारेण प्रवेश इति । येन प्रवेशस्तेनैव निर्गमनम् । द्वारसमीपेऽतिसंमर्दे वातायनेनापि अत्र प्रवेशः । द्वारेणेत्यनुक्तेः । ग्रहा ऐन्द्रवायवाद्यर्थं गृहीताः सोमरसास्तान् । पवमानग्रहाणामप्यत्र ग्रहणम् । पात्राणि सोमवन्ति तेषामेवारिक्तानि चेति कश्चित्तन्न । यदेवास्य शयानस्योपशुष्यतीति वाक्यशेषविरोधात् । चकारो मन्त्रानुकर्षणार्थः । संशब्दाद्धस्ततलेन स्पर्शः पात्रबिलेषु मन्त्रावृत्त्या । अक्षितमिति मन्त्रान्तः । एतत्फलं ब्राह्मणे—पराञ्चो हि यन्ति पराचीभिः स्तुवते वैष्णव्यर्चा पुनरेत्योपतिष्ठते यज्ञो वै विष्णुर्यज्ञमेवाकर्विष्णो त्वं नो अन्तमः[१] शर्म यच्छ सहन्त्य प्र ते धारा मधुश्चुत उत्सं दुह्रे अक्षितमित्याह यदेवास्य शयानस्योपशुष्यति तदेवास्यैतेनाऽऽप्याययतीति । चिरकालं पात्रस्थितः सोमः शयान इत्युच्यते ।

आग्नीध्रीयादाग्नीध्रोऽङ्गारानाहृत्य तैरेव
मन्त्रैर्यथान्युप्तं धिष्णियान्विहरति ।

अङ्गारा धूमरहिता अन्यवयवा अर्थात्सर्वधिष्णियविहरणपर्याप्तास्तान्पात्रे गृहीत्वाऽऽहृत्य तैरेव मन्त्रैर्धिष्णियनिवपनार्थैरेव मन्त्रैः । यथा*न्युप्तं नितरामुप्तं न्युप्तं न्युप्तमनतिक्रम्य यथान्युप्तं यथा निवपने नितरामिति तथैव विहरणेऽपीति बोधयितुम् ।

* अत्र यथान्युप्तमितिवचनमिति अपेक्षितम् ।

१ क. ग. °मान्तक° । २ क. ग. °र्थकृत्वा° ।

तेन प्रतिधिष्ण्यमङ्गारात्रित्वं सिद्धं भवति । अनेनैच्छिकत्वं व्याख्यायते । धिष्णियानग्नीन्विहरति तत्र तत्र स्थापयति । आहवनीयेऽग्निसंसर्गदोषापत्तेर्न विहरणम् । आग्नीध्रीयात्तूष्णीमेवाऽऽग्नीध्रोऽङ्गारानाहृत्य विभूरसीति मन्त्रेणाऽऽग्नीध्रीय एकमङ्गारं निक्षिप्य वह्निरसीति मन्त्रेण होत्रीये निक्षिप्य व्यवायदोषपरिहारार्थमङ्गारैः सहैवोत्तरेणाऽऽग्नीध्रीयं परीत्यान्तरा यूपमङ्गारान्हरन्नग्रेण यूपं गत्वा दक्षिणेन मार्जालीयं धिष्ण्यं प्रशास्तृधिष्ण्यसमीपमागत्य श्वात्रोऽसीति निक्षिप्य यथेतं प्रत्येत्य ब्राह्मणाच्छंसिधिष्ण्यादिष्वच्छावाकधिष्ण्यान्तेषु तत्तन्मन्त्रेण निक्षिप्य यथेतं पूर्ववन्मार्जालीयं धिष्णियं गत्वा शुन्ध्यूरसीति मार्जालीये सर्वान्निक्षिपेत् । प्रत्यङ्मुखोदङ्मुखत्वयोर्विकल्पो निवपनवत् । धिष्णियानामग्नीनां सर्वेषां प्रज्वलनं व्याघारणार्थम् । धारयन्ति धिष्णियानिति तृतीयसवने धारणावचनादितरयोः सवनयोर्व्याघारणोत्तरं नाशेऽपि न दोष इति गम्यते । यथान्युप्तमित्यनेनेदमपि गम्यते पांसुधिष्णियेष्वेव विहरणं न त्वनुद्देश्येषु बहिष्पवमानास्तावादिष्वपि । तथा चाऽऽपस्तम्बः— पांसुधिष्णियेषु निवपति तेनाऽऽनुपूर्व्येण यथान्युप्ता भवन्तीति । तैरेव मन्त्रैरिति वचनं तूष्णींत्वनिवृत्त्यर्थम् । आग्नीध्रग्रहणमध्वर्युव्यावृत्त्यर्थम् । अत्र रौद्रानीकवन्मन्त्रानुषङ्गः कृताकृतः । वचनाभावात् ।

अध्वर्युश्चतुश्चमसे राजानं गृहीत्वा पञ्चगृहीतं चाऽऽज्यं पुरस्तात्प्रत्यङ्ङासीनस्तैरेव मन्त्रैर्यथान्युप्तं धिष्णियान्व्याघारयति ।

अध्वर्युग्रहणमाग्नीध्रव्यावृत्त्यर्थम् । चतुश्चतुर्वारम् । चमस एकादशचमसव्यतिरिक्ते । अदनसाधनत्वाच्चमसत्वम् । पञ्चगृहीतं चाऽऽज्यमित्यत्र चकारः साहित्यार्थः । तेनाध्वर्युणैवोभयोराहरणं कर्तव्यमिति सिद्धं भवति । आज्यमित्यनन्तरं गृहीत्वेत्यनुवर्तते । चमसे राज्ञो ग्रहणं परिप्लवया । आज्यग्रहणं प्रचरण्यां यया क्रतुकरणं हुतं तस्यां न दक्षिणहोमार्थायाम् । अत्र ज्ञापकमुक्तमेव प्रचरणीं प्रथमा[१] स्रुचं प्रयुनक्तीत्यस्मिन्सूत्रे । पुरस्ताद्धिष्ण्यपुरोभागे प्रत्यङ्प्रत्यङ्मुख आसीन उपविष्टस्तैरेव मन्त्रैर्निवपनक्रमेणैव धिष्णियानग्नीन्व्याघारयति । अत्राऽऽसीनवचनाद्विहरणे तिष्ठताऽपि पक्षे गम्यते । पुरस्तादितिवचनं धिष्ण्यदक्षिणपार्श्वे प्राङ्मुखोपवेशनं व्यावर्तयितुम् । प्रत्यङ्ङिति वचनं विहरणे प्रत्यङ्मुखताया अनियमं व्यावर्तयितुम् । तेनोदङ्मुखताऽपि पक्षे विहरणे भवति । तैरेव मन्त्रैरिति वचनमापस्तम्बोक्ततूष्णींत्वपक्षव्यावृत्त्यर्थम् । अत्रापि रौद्रानीकवन्मन्त्रानुषङ्गः कृताकृतो वचनाभावात् । अन्त्यमन्त्रे तु भवत्येव श्रुतौ पठितत्वात् । द्विविधोऽत्र नियमः—तैरेव मन्त्रैरिति तैर्मन्त्रैरेवेति । प्रथमनियमे विभवे प्रवाहणाय स्वाहेत्यादिबौधायनोक्तपाक्षिकमन्त्रान्तरनिवृत्तिः फलम् ।

---

१ ख 'वतीत्यर्थः । अ° ।

द्वितीय आपस्तम्बोक्ततूष्णींत्वनिवृत्तिः फलम्। व्याघारणशब्दचोदितत्वाच्च द्विहो-मधर्मः। अत्र राजा परिप्लवया द्रोणकलशाधवनीयपूतभृदन्यतरस्थो ग्राह्यो विशेषवच-नाभावात्। यदि द्रोणकलशस्थस्यैव ग्रहणमिष्टमभविष्यत्तदाऽध्वरो यज्ञोऽयमस्तु देवा इति वक्ष्यमाणाघारार्थद्रोणकलशादानकपरिप्लवाकरणकसोमग्रहणवद्द्रोणकलशाच्च परिप्लवया राजानमित्यत्राप्यवक्ष्यत्। अतोऽत्रानियम एवेति। आपस्तम्बस्तु अत्र द्रोणकलशादेव व्याघारणार्थं सोमस्य ग्रहणमाह।

सोमेनाऽऽहवनीयमाग्नीध्रीय१ होत्रीयं मार्जालीयं चाऽऽज्येनेतरान्।

सोमेन व्याघार्याणामयं विवेको न तु व्याघारणक्रमनियमः। यथान्युप्तं धिष्णिया-न्व्याघारयतीत्यनेनैव क्रमस्य सिद्धत्वात्। तस्मान्निवपनक्रमेणाऽऽहवनीयाग्नीध्रीयहोत्री-यानन्तरं प्रशास्त्रीयादिमार्जालीयान्तान्व्याघारयति। उत्तरवेदिराहवनीयायतनं तस्याः प्रथमं न्युप्तत्वात्प्रथममाहवनीयव्याघारणमेव। आज्येन प्रचरणीगताज्येन। प्रचरण्यैवेत-रान्प्रशास्त्रीयादीनच्छावाकीयान्तान्धिष्णियानित्यर्थः।

अतिहाय वषट्करोति।

मार्जालीयधिष्ण्यमतिहाय ततः किंचिदुपसृत्य वषट्करोति वषडित्येके समामनन्ति वौषडित्येके वाषडित्येके वषाडित्येक इति याजुर्होत्रे वक्ष्यमाणानां चतुर्विधानां वषट्काराणां मध्येऽन्यतरेण वषट्कारेण वषट्करोतीत्यर्थः। अथवा तं तं धिष्ण्यमति-हाय वषट्करोतीत्यर्थः।

व्याख्यातः सोमस्य भक्षः।

पूर्वेण द्वारेण सदः प्रविश्याग्रेण होतारं पुरस्तात्प्रत्यङ्ङासीनो नृचक्षसं त्वेत्यवेक्ष्य मन्द्राभिभूरिति भक्षयतीत्यनेनोक्तमित्यर्थः। अत्रापि भवत्येवोपह्वानं प्रतिभक्षितुरभा-वेऽपि। नानुपहूतेन सोमः पातव्य इति निषेधात्। हिन्व म इत्यात्माभिमर्शनं मार्जालीये पात्रं प्रक्षाल्याऽऽयतने सादयति। व्याघारणशब्देन विहितत्वात्तस्य च होमत्वाभावात्तन्निमित्तकस्य भक्षस्याप्राप्तिः स्यात्तां वारयितुमिदं सूत्रम्।

संततमनुपृष्ठ्यं बर्हिः स्तीर्त्वाऽऽग्नीध्रः पुरोडाशानलं करोति।

मध्यमणिन्यायेनाऽऽग्नीध्रशब्दस्योभयोरन्वयः। अथवाऽऽग्नीध्रशब्दस्य संततमित्ये-तस्मात्प्रागन्वयः। अत्राऽऽग्नीध्रग्रहणं पृष्ठ्यास्तरणपुरोडाशालंकरणयोः प्रकृतावध्वर्यु-कर्तृकताया एव दृष्टत्वेन तदनुरोधेनात्रापि स्यात्प्रैषस्याऽऽत्मार्थत्वमादायोपपत्तेरिति शङ्कां निरसितुम्। संततवचनं विच्छेदनिवृत्त्यर्थम्। अनुपृष्ठ्यं पृष्ठ्यायामेवेत्यर्थः।

---

१ ख. °यं। अस्मिन्पक्षे होमानामनेकेषां मध्ये वषट्कारैर्व्यवधानात्प्रत्येकं होमस्य निमि-त्तत्वम्। तेन प्रतिहोममेवं प्रतिग्रहणं च भक्ष इति सूत्रादिति द्रष्टव्यम्। ज्यो°।

तेन तूष्णीं दक्षिणां तूष्णीमुत्तरामिति निवर्तते । बर्हिर्वचनं शुष्कदर्भवाच्योलपस्तरण-निवृत्त्यर्थम् । यज्ञस्येति मन्त्रेण गार्हपत्यादुपक्रम्याऽऽहवनीयायतनपर्यन्तम् । तथा चाऽऽपस्तम्बः—यज्ञस्य संततिरसि यज्ञस्य त्वा संतत्यै स्तृणामि संतत्यै त्वा यज्ञस्येति गार्हपत्यात्प्रक्रम्य संततमनुपृष्ठ्यं बर्हिः स्तृणात्याहवनीयादिति । अत्र धानादिष्वपि पुरोडाशशब्दप्रवृत्तिर्बहुवचनात् । बर्हिरास्तरणात्पूर्वं केचित्कर्मणे वामिति पाणिप्रक्षालनमिच्छन्ति । देवो वः सविता मध्वाऽनक्तु इति धानालंकरण ऊहः । प्रकृतिवदितरेषाम् । आमिक्षावाजिनयोर्नालंकरणम् । अलंकरणं कृत्वाऽऽग्नीध्रो विरमति । अत्र विशेषमाह बौधायनः—अथैष आग्नीध्रो जघनेन गार्हपत्यमुपविश्य पात्र्यां पञ्चधोपस्तृणीते मध्यतः पुरोडाशमुपस्तीर्णाभिघारितमुद्वासयति पुरस्ताद्धाना दक्षिणतः करम्भं पश्चात्परिवापमामिक्षामुत्तरत इति । ,

एति पशुना ।

सवनीयपशुना सहेति आगच्छति प्रतिप्रस्थातेति शेषः । तं प्रत्येव प्रैषात् ।

या वां कशा मधुमतीत्याश्विनं ग्रहमध्वर्युर्गृह्णाति ।

उपयामगृहीतोऽस्याश्विभ्यां त्वेति ग्रहणमन्त्रः । ऐन्द्रवायवादिवद्धाराग्रहत्वाभावेऽपि ग्रहत्वमस्त्येवेति दर्शयितुं ग्रहवचनम् । तेन ग्रहं संमार्ष्टीति संमार्गोऽत्रापि सिद्धो भवति । अध्वर्युग्रहणं प्रतिप्रस्थातृव्यावृत्त्यर्थम् ।

ग्रहणप्रकारमाह—

परिप्लवया द्रोणकलशादुपस्तीर्य पूतभृत उन्नीय द्रोणकलशादभिघारयति ।

परिप्लवयेत्युत्तरत्राप्यनुवर्तते । तेन परिप्लवयैवोन्नयनमभिघारणं च भवति । उदंचनव्यावृत्तये परिप्लवयेति वचनम् । द्रोणकलशवचनमाधवनीयव्यावृत्तये । द्रोणकलशादित्यनन्तरं सोमं गृहीत्वेति शेषः । उच्छब्द आधिक्यार्थकः । यद्यपि मन्त्रपाठक्रम आश्विनस्तृतीयस्तथाऽपि तस्माद्बहिष्पवमाने स्तुत आश्विनो गृह्यत इति श्रौतक्रमस्य मन्त्रपाठक्रमापेक्षया प्रबलत्वाद्दशैतानध्वर्युः प्रातःसवने ग्रहान्गृह्णाति यदाश्विनो दशमो गृह्यते तं तृतीयं जुहोतीति श्रुतेश्चात्राऽऽश्विनग्रहणमिति । जैमिनिरपि—क्रमकोपोऽर्थशब्दाभ्यां श्रुतिविशेषादर्थपरत्वाच्चेति । उपांश्वादिग्रहाणां मध्ये दशमस्थान आश्विनग्रहणं तृतीयस्थाने होम इति यदाश्विनो दशमो गृह्यते तं तृतीयं जुहोतीतिश्रुतिगतदशमतृतीयशब्दयोरर्थो ज्ञेयः । उपस्तरणाभिघारणशब्दाभ्यामिदं ज्ञायत उन्नयनं मुख्यमेतेअङ्गे । मुख्यमुन्नयनमुपर्यर्धपर्यन्तम् । वृष्टिकामामयाविनोः पूरणपर्यन्तम् । उपस्तरणाभिघारणे स्वल्पसोमेनेति ।

---

१ ख. ग. ङ. ज. ञ. एति । २ ख. °दश्चन° ।

इमं विधिमन्यत्राप्यतिदिशति—

सर्वग्रहाणामेष कल्पः।

ऋतुग्रहव्यापन्नपुनर्ग्रहसोमातिरेकग्रहषोडशिप्राजापत्यादीनामित्यर्थः। एष उक्त एव कल्पः प्रकारो भवतीत्यर्थः। ग्रहाणामिति बहुवचनादेव सर्वग्रहलाभे सर्वग्रहणमाश्विनग्रहस्याध्वर्युग्राह्यत्वात्तत्र परिभाषाकरणादध्वर्युमात्रग्राह्यग्रहविषयत्वं शङ्क्येत तन्मावर्तयितुं *सर्वग्रहणम्।

तꣳ सादयित्वा त्रिवृता यूपं परिवीयाऽऽग्नेयं पशुꣳ सवनीयमुपाकरोति।

यथायोनिसादनं चेति परिभाषयैव सिद्धे सादने तꣳ सादयित्वेतिवचनं सादनयूपपरिव्ययणयोः कालाव्यवधानार्थम्। एष ते योनिर्माध्वीभ्यां त्वेति सादनमन्त्रः। प्रातर्युजौ विमुच्येथामित्ययं या वा कशेत्यनेन विकल्पते। प्रातर्युजौ विमुच्येथामित्यनेन ग्रहण एष ते योनिरश्विभ्यां त्वेत्येष एव सादनमन्त्रः। पूर्वां रशनामुदू(दु)ह्य त्रिवृता त्रिगुणया रशनया निरूढपशुबन्धोक्तकल्पेन देवस्य त्वेतिरशनादानादिना नाभिदघ्ने यूपं परिवीयाऽऽग्नेयं पशुं सवनीयमुपाकरोतीत्यर्थः। न चैतस्या रशनायाः पश्वङ्गतैवास्तु यूपाङ्गत्वे त्वदृष्टार्थत्वापत्तेरिति वाच्यम्। यूपाङ्गत्वेऽपि दार्ढ्यरूपदृष्टसंभवात्। द्वितीयाश्रुतेश्च यूपार्थत्वस्यैव रशनापरिव्ययणस्य युक्तत्वात्। तथा च चतुर्थाध्याये चतुर्थपादे जैमिनिः—पश्वङ्गं रशना स्यात्त तदङ्गमविधानादिति। केचित्पूर्वामेव रशनामादाय परिव्ययन्ति। तन्न। पुनस्त्रिवृद्वचनवैयर्थ्यापत्तेः। पूर्वामुदू(दु)ह्येत्येव कात्यायनबौधायनाभ्यां स्पष्टतयोक्तेश्च। सा च सवनीयबहुत्वेऽपि नाऽऽवर्तते यूपसंस्कारत्वात्। स्वरुस्तु पूर्व एव मन्त्रेणाऽऽदायावगूह्यः। प्रतियूपं स्वरव इति वचनाल्लिङ्गात्समानो यूपः स्वरुरिति अग्निष्टोम एव स्पष्टवचनाच्च। देवस्य त्वेत्यादि स्वर्वगूहनान्तमुन्मार्जनाग्रप्रेक्षणवर्जं वा। पशुरजोऽभिप्रेतः। जात्यन्तरावचनादाग्नेयमजमग्निष्टोम आलभन्त इति श्रुत्यन्तराच्च।

तस्य रूपनियमो न विद्यते।

तस्य सवनीयपशो रूपनियमो लोहितत्वादिरूपनियमो न विद्यते नास्त्यत्रेत्यर्थः। इदमपि अग्नीषोमीयप्रकृतित्वे लिङ्गम्।

हुतायां वपायां प्रसृप्स्यन्तो ग्रहावकाशैरुपस्थाय संप्रसर्पन्ति।

उत्तरपरिवप्यहोमश्चात्वाले मार्जनं च भवत्येव। तयोर्वपाहोमाङ्गत्वात्। वरदानमपि भवति। पश्वे(श्चे)कादशिनीसूत्रे वरदानस्य तन्त्रत्वविधानाल्लिङ्गात्। सुब्रह्मण्या-

---

* सर्वग्रहणमित्यधिकम्।

ह्वानं नात्र । अवचनात् । प्रसृप्स्यन्तः सदसि स्वस्थानं प्रति उपवेशनार्थं गमनं प्रसर्पणं तत्करिष्यन्तः । अवकाशयन्तेऽर्थं प्रकाशयन्त इत्यवकाशा मन्त्राः । ग्रहाणामवकाशा ग्रहावकाशा ग्रहाणामवकाशः प्रकाशो येष्विति वा । द्वौ समुद्राविस्त्यारभ्य स्पृथः स्वस्तिरित्यतःप्राग्ग्रहावकाश इति संज्ञा मन्त्राणां तैर्द्रोणकलशप्रभृतीनुपस्थाय संप्रसर्पन्ति समेताः सदः प्रविशन्तीत्यर्थः । सामान्यप्रतिज्ञेयम् । प्रसृप्स्यन्त इति वचनात्सोमातिरेकनिमित्तके.क्थ्यग्रहणे प्रसर्पणाभावादग्रहावकाशोपस्थाननिवृत्तिः । बहुवचनादध्वर्युप्रतिप्रस्थातृयजमाना आध्वर्यवेण विधानेनोपस्थानसर्पणे कुर्वन्ति । उन्नेतुरप्याध्वर्यवेण विधानेनोपस्थानसर्पणे । उपवेशनं सदस्येनैतस्यापि । सदस्यस्याप्येवमेव । नेष्टाग्नीध्रयोरुभयान्वितयोर्होत्रेणाऽऽध्वर्यवेण वा । प्रसृप्स्यन्त इत्यनेन ये ये प्रसर्पणकर्तारस्तेषामिदमुपस्थानं, तेन ब्रह्मणोऽपि प्रसर्पणकर्तृत्वादुपस्थानं, होत्रादीनामुद्गात्रादीनां च कर्म शाखानुसारेणेति यथावथं द्रष्टव्यम् ।

द्वौ समुद्राविति द्रोणकलशाधवनीयौ ।

सकृदुक्तेन मन्त्रेण द्वौ युगपदुपतिष्ठन्त इत्यर्थः । सेतुनाऽतियन्त्यन्यमिति मन्त्रान्तः ।

द्वे द्रधसी इति पूतभृतम् ।

उपतिष्ठन्त इति शेषः । जार्या इति मन्त्रान्तः ।

परिभूरग्निमिति सर्वसोमम् ।

उपतिष्ठन्त इत्येव शेषः । तस्य त इदमुन्मृज इति मन्त्रान्तः । सर्वश्चासौ सोमश्च सर्वसोमस्तम् । अत्र सर्वशब्दः प्रकारकात्स्न्र्यमाचष्टे सर्वान्नं भक्षयतीतिवत् । सर्वसोम इति द्रव्यैकत्वात्सकृन्मन्त्रमुक्त्वा सर्वस्य सोमस्योपस्थानम् । सर्वग्रहणं ग्रहद्रोणकलशाधवनीयपूतभृत्स्थसोमोपस्थानार्थम् ।

प्राणाय म इत्युपांशुपात्रमपानाय म इत्यन्तर्यामं व्यानाय म इत्युपांशुसवनं ग्रावाणं वाचे म इत्यैन्द्रवायवं दक्षक्रतुभ्यां म इति मैत्रावरुणं चक्षुर्भ्यां म इति शुक्रामन्थिनौ श्रोत्राय म इत्याश्विनमात्मने म इत्याग्रयणमङ्गेभ्यो म इत्युक्थ्यमायुषे म इति ध्रुवं वीर्याय म इत्यतिग्राह्यास्तेजसे म ओजसे मे वर्चसे म इति वैतैर्यथारूपं वर्चोदा वर्चसे पवस्वेति सर्वत्रानुषजति ॥ १३ ॥

यथारूपमित्यस्यानन्तरमुपतिष्ठन्त इत्येव शेषः । अन्तर्यामशब्दे पात्रलक्षणा । हुतत्वाद्ग्रहाय । आदिवृद्ध्यभावश्छान्दस इति वा । तेनान्तर्याममिति रूपं भवति ।

१ ख. 'द्ग्रहस्येति । आ' ।

पात्रमित्यध्याहारो योग्यतया । चक्षुर्भ्यां म इत्यत्रापि वर्चोदा वर्चसे पवस्वेत्येव । वर्चोदा वर्चसे पवस्वेति सर्वत्रानुषजतीति सूत्रे सर्वत्रेति पदेनात्राप्येकवचनपाठस्यैव प्रापणात् । द्रव्यपृथक्त्वान्मन्त्रावृत्तिः । चक्षुर्भ्यामिति परस्परापेक्षं द्विवचनमस्मिन्कल्पे द्रष्टव्यम् । सूत्रस्वरससिद्धमिदं व्याख्यानम् । वर्चोदौ वर्चसे पवेथामिति श्रुत्युक्तो द्विवचनयुक्तः पाठोऽनेन विकल्पते । अस्मिन्कल्पे द्विवचनालिङ्गत्वात्सकृदेव मन्त्रः । वीर्याय मे वर्चोदा वर्चसे पवस्वेतिमन्त्रावृत्त्याऽतिग्राह्यान् । तेजसे मे वर्चोदा वर्चसे पवस्व । ओजसे मे वर्चोदा वर्चसे पवस्व । वर्चसे मे वर्चोदा वर्चसे पवस्वेति क्रमेणातिग्राह्याणां त्रयाणामेते त्रयो मन्त्रा वीर्याय म इत्यनेन विकल्पिताः । एतैरितिवचनमेकमन्त्रत्वनिरासार्थम् । अर्थादेव क्रमे सिद्धे यथारूपमितिवचनं वाजपेय ऐन्द्रातिग्राह्यस्थानीयपञ्चैन्द्रातिग्राह्येषु द्वितीयमन्त्रस्यैवाऽऽवृत्तिर्न त्वन्तिमस्यैवेतिप्रदर्शनार्थम् । अस्मच्छब्दादेशभूतान्म इति शब्दादनन्तरं वर्चोदा वर्चसे पवस्वेत्ययमंशः सर्वत्र सर्वेषु मन्त्रेषु अनुषजति अनुषक्तो भवतीत्यर्थः ।

विष्णोर्जठरमसीति द्रोणकलशमिन्द्रस्य जठरमसीत्याधवनीयं विश्वेषां देवानां जठरमसीति पूतभृतं वर्चोदा मे वर्चसे पवस्वेति सर्वत्रानुषजति ।

स्पष्टम् ।

कोऽसि को नामेति सर्वं राजानमविशेषेण ।

उपतिष्ठन्त इत्येव । तस्य त इदमुन्मृज इति मन्त्रान्तः । सर्वग्रहणप्रयोजनं पूर्ववत् । न विद्यत ऐन्द्रवायवत्वादिधर्मभेदनिमित्तकावृत्तिरूपो ग्रहत्वकलशस्थत्वधर्मभेदनिमित्तकावृत्तिरूपो वा विशेष उपस्थाने यस्मिन्मन्त्रे स मन्त्रोऽविशेषस्तेनेत्यर्थः । तेनेदं सिद्धं भवति सकृदुक्तेनैव मन्त्रेण सर्वराज्ञ उपस्थानं न प्रत्येकधर्ममादाय भेदेनोपस्थानमिति । एतेन पूर्वस्मिन्सर्वराजोपस्थान आवृत्तिरवगता भवति ।

बुभूषन्ब्रह्मवर्चसकाम आमयाव्यन्नाद्यकामोऽभिचरन्वाऽवेक्षेत ।

बुभूषन्नवेक्षेत ब्रह्मवर्चसकामोऽवेक्षेत, आमयाव्यवेक्षेत, अभिचरन्नवेक्षेतेति स्वशाखागता एते कल्पाः । अन्नाद्यकामोऽवेक्षेतेति कल्पः शाखान्तरीयः । अत्र काम्यकल्पप्रदर्शनात्पूर्वत्रोपस्थाने काम्यत्वं न । इदमित्येतस्य स्थाने तत्तत्कामोल्लेखः कार्यः—तस्य ते भूतिमुन्मृजे तस्य ते ब्रह्मवर्चसमुन्मृजे तस्य त आयुरुन्मृजे तस्य तेऽन्नाद्यमुन्मृजे तस्य तेऽमुष्य प्राणानुन्मृज इति । बौधायनोऽप्यन्नाद्यकामनां विना भूत्यादिकामनाप्रयुक्तमन्त्रविकारान्स्पष्टमेव प्रदर्शितवान् । कामाभावे त्वविकृतो मन्त्रः । अत्र काम-

---

१ ख. ग. °दत इ° ।

नायां सत्यामवेक्षणमपि कार्यं कामनाया अभाव उपस्थानमात्रं नावेक्षणमित्ययं विशेषः। अयमर्थः शब्दान्तरप्रयोगादेकवचनाच्च प्रतीयते। इदमवेक्षणं यजमानस्यैव, सामान्यतः फलस्य यजमानगतत्वमेवेति सर्वमतसिद्धत्वात्समस्ते क्रतावर्थे श्रूयमाणं यजमानः कामयते यानि तु कामयतिः श्रावयतीति सूत्राच्च। यदि ऋत्विग्गतमपि स्यात्तदाऽवेक्षेरन्निति ब्रूयात्। एतेनाध्वर्युपरत्वमपि निरस्तम्। अत्र पाठोऽवसरप्रदर्शनार्थः। तत्तत्कामनोद्देशेन संकल्पं कृत्वाऽवेक्षणं यजमानेन कार्यम्। यजमानः कामयते यानि तु कामयतिः श्रावयतीति सूत्रात्।

एतदन्ता महावकाशसंज्ञका मन्त्रा इत ऊर्ध्वं ये मन्त्रास्ते प्रसर्पणार्थास्तेषां विनियोगमाह—

**स्फ्यः स्वस्तिरित्युत्करे वेदिकरणानि संन्यस्तानि यथारूपम्।**

यैः स्फ्यादिभिर्वेदिः कृता तानि वेदिकरणानि सम्यङ्न्यस्तानि संन्यस्तानि एतादृशानि यथारूपं यथालिङ्गमुपतिष्ठन्त इत्यर्थः। स्फ्यः स्वस्तिरित्यनेन स्फ्यम्। विघनः स्वस्तिरित्यनेन विघनम्। पर्शुर्वेदिरित्यनेन पर्शुम्। परशुर्नः स्वस्तिरित्यनेन परशुमिति यथारूपशब्दार्थः। संशब्दः पृथग्भावेन न्यासार्थः। न्यस्तानीति शब्दो निधानव्यावृत्त्यर्थः। नीत्युपसर्गोऽसंसर्गार्थः। उत्करे स्फ्यादीनां न्यसनं परिकर्मिकर्तृकम्। संन्यस्तानीतिशब्दस्वरसात्। अन्यथा संन्यस्येति ब्रूयात्। इत आरभ्य प्रसर्पणमोपवेशनं, तेन माध्यंदिनसवनतृतीयसवनयोः प्रसर्पणाभावाद्वेदिकरणोपस्थानादि सदसो दक्षिणार्थस्य प्रेक्षणं यावत्तावन्न भवति प्रातःसवनप्रसर्पणेनैव कार्यसिद्धेरिति भावः। महावकाशोपस्थानं तूत्तरयोः सवनयोर्वचनाद्ग्रहसंस्कारत्वाच्च भवत्येव।

**यज्ञिया यज्ञकृतः स्थेति सर्वाणि।**

उपतिष्ठन्त इत्येव। ह्वयध्वमित्यन्तः। पूर्वं व्यष्टिरूपतयोपस्थानमिदं समष्टिरूपतयेति भेदोऽनयोः। सर्वाणि स्फ्यादीनि चत्वारि।

**उप मा द्यावापृथिवी इति द्यावापृथिवी।**

उपतिष्ठन्त इति शेषः सर्वत्र। द्यावापृथिव्यावभिसंधायोपतिष्ठन्त इत्यर्थः।

**उपास्ताव इति यत्र बहिष्पवमानेन स्तुवते।**

यत्र बहिष्पवमानेन स्तुवत इत्यास्तावशब्दार्थप्रदर्शनार्थम्। तमुपतिष्ठन्त इति शेषः।

**उपकलश इति द्रोणकलशमुपसोम इति सोममुपाग्निरित्यग्निमुपदेवा इति देवानुपयज्ञ इति यज्ञमुपमा होत्रा उपहवे ह्वयन्तामिति होत्रकान्।**

उपतिष्ठन्त इत्येव। सोमोऽभिषुत एव प्रकृतत्वात्। स चैकादशग्रहकलशात्रयस्थः। अग्निरत्रोत्तरवेदिक एव। तस्यैव सौत्ययागाधिकरणत्वेन प्रधानत्वात्। देवा अत्र

त्रयस्त्रिंशत् । ते चैकादश प्रयाजा एकादशानुयाजा एकादशोपयाजाः प्रजापतिश्च वषट्कारश्चेति । प्रकृतग्रहादीनामप्यत्र देवता विवक्षिताः । यज्ञशब्देन यज्ञसाधनानि हविराज्यादीनि । होत्रका मैत्रावरुणादयः । द्रोणकलशसांनिध्यात्सर्वाण्यपि कर्मोपयुक्त- पदार्थानामेवोपस्थानान्येतानि । माशब्दनिवृत्त्यर्थं तत्र तत्रोपेत्यस्य पाठः । अविकृतेन बुद्धिस्थेनापि तेनाऽऽकाङ्क्षानिवृत्तेरुपदेवा उपयज्ञ इति लिङ्गाच्च । न चायं समावि- रुपसर्गस्य संभवति । उपसृष्टस्यैवाऽऽख्यातस्य धातोरर्थविशेषसमर्पकत्वादिति भावः । एतेन यदाद्यन्तयोः श्रुतत्वान्माशब्दमप्यनुषजन्ति केचित्तन्निरस्तम् ।

**ह्वयता९ ह्वयेता९ ह्वयन्तामिति यथारूप९ सर्वत्रानुषजति ।**

ह्वयतेः संनिहितस्यापि वचनस्य वैरूप्यात्क्वचित्क्वचिद्योग्यान्वयः स्यादतः कथम- नुषङ्गः सेत्स्यतीति शङ्का न कार्या सामर्थ्याद्विपरिणतान्वयस्यैवाङ्गीकारादिति भावः । उक्तश्च विपरिणतान्वयः शाब्दिकैरर्थाद्विभक्तिविपरिणाम इत्यनया परिभाषया । सर्वत्र सर्वेषु मन्त्रेषु यथारूपं देवतागतैकत्वाद्यनुरूपं क्रियापदमनुषजति अनुषक्तं भवतीत्यर्थः । आस्तावकलशसोमाग्नियज्ञानामेकवचनप्रतिपाद्यत्वाद्ध्वयतामिति । द्यावापृथिव्योर्द्विवच- नप्रतिपाद्यत्वाद्ध्वयेतामिति । देवानां बहुवचनप्रतिपाद्यत्वाद्ध्वयन्तामिति । यद्यपि उपस्थेयक्रमानुसारेण ह्वयेतां ह्वयतां ह्वयन्तामिति पठितुं शक्यं तथाऽपि वचनक्रमानु- सारेणापि पाठे बाधकाभावात्तथोक्तिः । अन्तिममन्त्र उपहव इत्येतस्य शब्दस्याधि- कत्वात्तदनुरोधेन ह्वयतेः पुनः पाठः ।

**नमोऽग्नये मखघ्ने मखस्य मा यशोऽर्यादित्याहवनीयमुपतिष्ठते ।**

ब्राह्मणानुकरणार्थमुपतिष्ठत इत्यस्यात्रोपस्थानमर्थो न भवति किं तु नमस्कार एव नमःपदघटितत्वान्मन्त्रस्य । तथा च नमःपदस्य मन्त्रादावेव सत्त्वात्तदारभ्यैव नमस्कारार्थं नतिमुद्राकरणं तच्च मन्त्रसमाप्त्यन्तम् । तथा च नमस्कारस्य बाह्यचेष्टा- त्वेन मन्त्रान्ते क्रियां वारयितुमेव चैतस्य वक्ष्यमाणमन्त्रयोश्च कृत्स्नः पाठः । अनेन तेभ्य एव नमस्कृत्य सदः प्रसर्पत्यात्मनोऽनार्त्यै इति श्रुत्यर्थः सिद्धो भवति । चतुर्थो मन्त्रस्तु सौत्र एव । पुनरुपतिष्ठत इति वचनादेवं ज्ञायते स्फ्यप्रभृतिहोत्रकान्तानामुप- स्थानमेकं कर्मेतिद्योतनार्थम् । तेन हविर्धानपूर्वद्वारस्थितैरेवोपस्थानं कार्यं न तु तत्तत्स- मीपं गत्वोपस्थानमिति सिध्यति ।

**नमो रुद्राय मखघ्ने नमस्कृत्या मा पाहीत्याग्नीध्रम् ।**

आग्नीध्रमग्निमाहवनीयसांनिध्यात्[1] । उदकस्पर्शः । उपतिष्ठत इत्येव शेषः । पूर्ववद- त्रापि व्याख्यानं द्रष्टव्यम् ।

---

१ ग. 'पि द्वेधा व्या' ।

नम इन्द्राय मखघ्न इन्द्रियं मे वीर्यं मा निर्वधीरिति होत्रीयम् ।

होत्रीयशब्दोऽत्र तत्स्थलक्षणयाऽग्निपर एव । आग्नीध्रसांनिध्यात् । स्थानोप-स्थानापेक्षयाऽग्न्युपस्थानस्यैव युक्तत्वात् । तथा च होत्रीयाग्नेरेतावत्पर्यन्तं धारणं सिद्धं भवति । एवं मार्जालीयाग्नेरपि द्रष्टव्यम् । धिष्ण्यपर एव वा । तयोरप्युपस्थान-दर्शनात् । अस्मिन्कल्पे न धारणम् ।

नमो यमाय मखघ्ने नमस्कृत्या मा पाहीति मार्जालीयम् ।

गतम् ।

दृढे स्थः शिथिरे इत्याधिषवणफलके ।

उपतिष्ठत इत्येव । अꣳहसस्पातमिति मन्त्रान्तः ।

द्यावापृथिवी समीक्षत इत्येकेषाम् ।

स्पष्टम् ।

सूर्यो मा देवो दिव्यादꣳहसस्पात्विति सूर्यं वायुरन्तरिक्षा-दिति वायुमग्निः पृथिव्या इत्यग्निं यमः पितृभ्य इति यमं सर-स्वती मनुष्येभ्य इति सरस्वतीं पातु पात्विति सर्वत्रानुषजति ।

सरस्वतीमित्यनन्तरमुपतिष्ठत इत्येव । सर्वत्र वायुरन्तरिक्षादित्यादिषु मन्त्रेष्वित्यर्थः । वीप्साऽर्थाध्याहारनिरासार्था । अꣳहस इत्येतस्य शब्दस्यानुवृत्तिं वारयितुमनुषङ्गव-चनम् । यमः पितृभ्य इत्यत्र नोदकस्पर्शः । पितृणामप्रधानत्वात् । अत एव न प्राचीनावीतमपि । पात्विति क्रियापदमनुषजति अनुषक्तं भवतीत्यर्थः ।

देवी द्वाराविति द्वार्यौ नमः सदस इति सदो नमः सदसस्पतय इति सदसस्पतिं नमः सखीनां पुरोगाणां चक्षुष इत्यृत्विजो नमो दिव इति दिवं नमः पृथिव्या इति पृथिवीम् ।

द्वार्यौ सदसो द्वारस्थूणे । मा मा संताप्तमिति मन्त्रान्तः । सदसस्पतिशब्देन ब्रह्मोच्यते । तथा चाऽऽपस्तम्बः स्पष्टमेव पठितवान्—नमः सदसस्पतय इति ब्रह्मा-णमिति । ऋत्विजः स्वस्वव्यतिरिक्ताः पञ्चदश । सदस्यपक्षे षोडश ।

अहे दैधिषव्येति यत्र निषत्स्यन्भवति ततस्तृणं लोष्टं वा निरस्याप उपस्पृश्यो-न्नेवत उदुद्रतश्च गेषमित्युपविशति ।

यत्र यस्मिन्स्थले निषत्स्यन्नुपवेशनं करिष्यन्भवति ततस्तस्मात्प्रदेशात्तृणं यत्किं-चिल्लोष्टं क्षुद्रमृत्पिण्डस्तं वाऽहे दैधिषव्येति निरस्य । परिभाषयोत्तरतः । अङ्गुष्ठोप-

कनिष्ठिकाभ्यामित्याश्वलायनः। उन्नेत उद्धुतश्च गेषमिति तत्रोपविशति। तत्राध्वर्युप्रतिप्रस्थात्रोः स्थाननियमः सूत्रान्तरे प्रदर्शितः—दक्षिणमेवाध्वर्युर्द्वारबाहुं मिश्रयमाण उपविशत्युत्तरं प्रतिप्रस्थातेति। सदस्येवोपवेशनम्। उन्नेतुः प्रतिप्रस्थातुरुत्तरत एव। उन्नेतुर्हविर्धान एवोपवेशनमिति पक्षे होत्रकोपस्थानान्तमेव कृत्वाऽहे दैधिषव्येति तृणं लोष्टं वा यत्र निषत्स्यन्भवति ततो निरस्याप उपस्पृश्योन्नेवत इत्युपविशतीत्येतावानेवोन्नेतुर्विधिः। मध्यतनमाहवनीयोपस्थानादि पृथिव्युपस्थानान्तं तस्य न भवति। एतेषां सदःप्रसर्पण एव संभवात्। यजमानस्य स्थानं याजमानसूत्रे प्रदर्शयिष्यति सूत्रकारः। ब्रह्मसूत्रे ब्रह्मणः स्थानं प्रदर्शयिष्यति। सदस्यस्थानं सूत्रान्तर उक्तं दक्षिणेनौदुम्बरीं सदस्य इति। बौधायनोऽपि—दक्षिणत उदङ्मुखो ब्रह्मा च सदस्य इत्युपविशत इति। औदुम्बरीमेवोदोद्गातारः पर्युपविशन्तीति पूर्वसूत्रादौदुम्बरीशब्दोऽत्रानुवर्तते। पाकतर इति पूर्वस्यान्तः। अद्याह्न इत्युत्तरस्यान्तः।

**सदः प्रसृप्य दक्षिणार्धं परेक्षेताऽऽगन्त पितर इति।**

अत्र पूर्वं क्रियाप्रदर्शनमनन्तरं मन्त्रप्रदर्शनमित्येवं वैपरीत्यं ब्राह्मणानुसारेण। परेक्षणं कृत्स्नमन्त्रसमाप्तिपर्यन्तं न तु मन्त्रान्तेन संनिपातोऽत्रेतिप्रदर्शनार्थं वा। सदः प्रसृप्य सदसि उपवेशनान्तां प्रसर्पणक्रियां संपाद्य प्राचीनावीत्युपवीती वा बद्धाञ्जलिः परेक्षेत तत्रैव तिष्ठन्निति परेत्युपसर्गार्थः। पितॄणां पूजार्थत्वाद्बद्धाञ्जलिता। तथा च ब्राह्मणम्—तेभ्य एव नमस्कृत्य सदः प्रसर्पत्यात्मनोऽनार्त्यै इति। भूयास्तेति मन्त्रान्तः। प्राचीनावीतपक्षे यज्ञोपवीत्यप उपस्पृशेत्। प्रसृप्स्यन्तो ग्रहावकाशैरुपस्थाय संप्रसर्पन्तीत्युपक्रमे बहुवचनम्। उत्तरत्रानुषजति उपतिष्ठते समीक्षते यत्र निषत्स्यन्भवति उपविशतीत्येतेष्वेकवचनम्। एताभ्यां पक्षद्वयं ज्ञाप्यते बहुवचनात्सर्वेषामुपस्थानकर्तृत्वमेकवचनादध्वर्योरेवोपस्थानकर्तृतेति। अस्मिन्पक्षे फलं तु ऋत्विग्गामित्वेनानुष्ठानोपयोगितया यजमानस्येष्टमित्यृत्विग्गाम्येव युक्तम्। तथा च तृतीयाध्यायेऽष्टमे पादे जैमिनिः—कर्मार्थं तु फलं तेषां स्वामिनं प्रत्यर्थवत्त्वात्स्यादिति। फलं मा मा संताप्समित्यसंतापनादिकं फलं कर्मार्थं कर्मानुष्ठानौपयिकं स्वामिनं प्रति यजमानं प्रति आत्मीयकर्माविघातरूपार्थवत्त्वात्स्वेष्टानुगुणत्वरूपप्रयोजनवत्त्वात्तेषामृत्विजां भवति ऋत्विग्गामित्वेनैव स्वेष्टं भवति। एवं चाऽऽत्मनेपदानुगुण्यादृत्विग्गामीत्येव युक्तम्। ऋत्विक्फलं करणेष्वर्थवत्त्वादिति पूर्वाधिकरणे ममाग्ने वर्च इत्यादिकरणमन्त्रगतं वर्चआदिकं फलं तद्यजमानगाम्येवेति सिद्धान्तितं तद्वैलक्षण्यद्योतनाय तुशब्द इति सूत्रार्थः। असहितेनैवाध्वर्युणाऽऽहवनीयाद्युपस्थानं द्यावापृथिव्योः समीक्षणमिति पक्षे समीक्षणं लोष्टनिरसनमपामुपस्पर्शनमुपवेशनं दक्षिणार्धपरेक्षणं च कर्तव्यमितरैस्तु सहितैरवेतिप्रदर्शनार्थं वा।

**अत्र पशुं विशास्ति ।**

अन्तर्भावितो णिजत्र ज्ञेयः । तेन शमितारं पशुं विशासयतीत्यर्थो भवति । एतेन शमितः पशुं विशाधीत्ययं प्रैषोऽप्यत्रैवाध्वर्युणा वक्तव्य इत्यपि सिद्धं भवति । तेन हविष्कृता वाचं विसृज्य पशुं विशास्तीतिपशुसूत्रोक्तविशसनकालो बाध्यते । अस्मिन्काल एव पशुं विशास्ति न तु पशुपुरोडाशसंबन्धिहविष्कृदेहीतिप्रैषकरणकवाग्विसर्गोत्तरकाल इति ।

**श्रप्यमाणः सर्वाणि सवनानि परिशेते तृतीयसवने वा श्रप्यते ॥ १४ ॥**

श्रप्यमाण इति पशोर्विशेषणम् । सर्वाणि सवनानि परिशेत इत्यनेन मन्दज्वालपाऽऽङ्गयागकालपर्यन्तं यथा सुशृतो भवति दग्धो विशीर्णो वा न भवति तथा परिशेते श्रप्यमाण एव स्थितो भवतीति बोध्यते । परिशेरत इति पाठे बहुवचनस्य छान्दसतैव ज्ञेया, श्रप्यमाण इत्येकवचनेन विरोधात् । तृतीयसवने वा श्रप्यत इत्यस्मिन्पक्षेऽपि विशसनमत्रैव श्रपणमात्रं तृतीयसवनारम्भकाल आरम्भणीयमिति ।

इत्योकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्निचित्वाजपेययाजिसर्वतोमुखयाजिद्विसाहस्राग्निचित्पौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथदीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसूत्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंतापशामिकायां ज्योत्स्नाख्यायां वृत्तावष्टमप्रश्नस्य पञ्चमः पटलः ॥ ५ ॥

---

अथाष्टमप्रश्ने षष्ठः पटलः ।

---

**पुरोडाशानासाद्य तैः समवदाय प्रचरति ।**

प्रतिप्रस्थात्रा हुतान्पुरोडाशानध्वर्युरासाद्य तैः पुरोडाशैः सहैवावदाय प्रचरति । आसाद्येत्यत्रान्तर्भावितो णिजत्र ज्ञेयः । तथा च प्रतिप्रस्थात्राऽऽसादनं कारयितव्यमिति सिध्यति । तथा चाऽऽपस्तम्बः—अत्र प्रतिप्रस्थाता सवनीयानासादयतीति । तद्धावदानांश एव विधिः । प्रचरतिस्त्वनुवादः । प्रचरणस्यानेककर्तृसाध्यत्वेऽपि समवदानस्याध्वर्युमात्रकर्तृकत्वेन प्रचरणसमवदानयोर्लब्धोभितानेककर्तृसामानाधिकरण्यासंभवादनुपपन्नं वाक्यं स्यात्तामनुपपत्तिं वारयितुमेकवचनम् । प्रतिप्रस्थात्रा हरणे कारणं नासश्यिते सोमेऽध्वर्युः प्रत्यङ्सदोऽतीयादिति निषेध एव । आग्नीध्रो

१ अ. म. °शेरते ।

चाऽऽसादयति । तथा च बौधायनः—अथैतानि संपरिगृह्य पूर्वया द्वारोपनिर्हृत्योत्तरेण सदः परीत्योत्तरेणाऽऽग्नीध्रीयं धिष्ण्यं पर्याहृत्यान्तर्वेद्यासादयतीति । अथैष आग्नीध्रो ऽपरेण गार्हपत्यमुपविश्य पात्र्यां पञ्चधोपस्तृणीत इत्यादेरुद्वासनप्रतिपादकात्पूर्वसूत्रा-दस्मिन्सूत्र आग्नीध्रानुवृत्तेराग्नीध्रकर्तृकता द्रष्टव्या । तूष्णीमेवात्र सर्वेषां सादनम् । तूष्णीमेवाऽऽमिक्षावाजिने मध्ये वेदेरानाय दक्षिणस्यां वेदिश्रोण्यामासादयति । ततस्तूष्णीमेवोत्करे वाजिनमासादयति । समवदाय प्रचरतीत्यनेन प्रत्येकयागो व्यावर्त्यते ।

तत्प्रकारमाह—

**जुहूपभृतोरुपस्तीर्यावदायाभिघार्य प्रातः प्रातः साव-स्येन्द्राय पुरोडाशानामनुब्रूहि प्रातः प्रातः साव-स्येन्द्राय पुरोडाशान्प्रस्थितान्प्रेष्येति संप्रेष्यति ।**

जुह्वामवदायोपभृत्यवद्यतीत्येतावतैवोपस्तरणाभिघारणयोः सिद्धौ जुहूपभृतोरुपस्ती-र्यावदायाभिघार्येत्येवं सूत्रकरणं प्रत्यभिघारणं प्रस्तरबर्हिःसमञ्जनं च परिसंख्यातुम् । यत्र प्रधानार्थस्विष्टकृदर्थावदानयोर्मध्ये प्रधानयागकृतकालव्यवधानं तत्रैव स्विष्टकृद्या-गार्थद्रव्यस्य प्रत्यभिघारणम् । यत्र न तथा तत्र न प्रत्यभिघारणमिति ज्ञापकबला-त्कल्प्यते । जुह्वामुपभृति चोपस्तीर्यावदायाभिघार्येत्येवमुच्यमान उपस्तरणावदानाभि-घारणानि जुह्वां कृत्वोपभृति कर्तव्यानीत्येवं काण्डानुसमयोऽपि स्यात्स मा भूदिति पदार्थानुसमय एव यथा स्यात्तदर्थं जुहूपभृतोः समासेन निर्देशः । तथा च जुह्वा-मुपस्तीर्योपभृत्यनन्तरमेवोपस्तीर्य जुह्वां धानाकरम्भपरिवापपुरोडाशामिक्षाभ्यः क्रमेण चतुरवत्तिनां द्विर्द्विः पञ्चावत्तिनां त्रिस्त्रिः प्रकृतिवदवदायानन्तरमेवोपभृति सर्वेभ्य उत्त-रार्धेभ्यश्चतुरवत्तिनां सकृत्सकृत्पञ्चावत्तिनां द्विर्द्विः स्विष्टकृते तथैवावदाय जुहूस्थं सकृ-दुपभृत्स्थं द्विरित्येवमभिघारयतीत्येवं प्रयोगः सिद्धो भवति । अभिघार्येति ल्यपाऽऽश्रावते संप्रेष्यतीत्ययमेक एव पक्षो न तु आश्रावयत्यवद्यतीत्येतावपि पक्षाविति बोध्यते । ततः प्रातः प्रातः सावस्येति पुरोनुवाक्यासंप्रैषं दत्त्वाऽस्याक्रम्याऽऽश्राव्य प्रत्याश्राविते प्रातः प्रातः सावस्येति याज्यासंप्रैषं ददाति । यागः प्रकृतिवत् । अवदाने प्रत्यभिघारणे च धानासु यथार्थमूहः । इन्द्रदेवतोद्देशेन यागेऽपि निर्वापकालिकं देवतानां भेदमादाय तत्तद्द्रव्य-यागेषु अनुमन्त्रणमन्त्रगता आशिषः समुच्चीयन्ते । तथा च सवनीयान्प्रकृत्य भरद्वाजः—सर्वं देवताग्रहणमाशिषस्तु समुच्चीयेरन्संसृष्टे च नानाद्रव्यत्वादिति । चकारोऽप्यर्थे । स च पदार्थसंभावनायाम् । संसृष्ट इत्यनन्तरं याग इति शेषः । नानाद्रव्यत्वादिति हेतुराशीःसमुच्चये । नानाद्रव्यत्वान्नानादेवतद्रव्यत्वादित्यर्थः । निर्वाप इति शेषः । इदं वरुणप्रघासादौ प्रधानयोराशीःसमुच्चयसिद्ध्यर्थम् । अत्र तूभयनिमित्तम् । तत्रानुमन्त्रणपाठ एवं सिध्यति—इन्द्रस्याहं देवयज्ययेन्द्रियाव्यन्नाद इन्द्रियाव्यन्नादोऽ-

स्माद् इन्द्रियाऽव्यस्माद् इन्द्रियावी भूयासमितीन्द्रयाजिनः । जेमानमिति महेन्द्रयाजिनः । जेमानं महिमानं गमेयमिति । सर्वं ऐन्द्रा एवेति पक्षे तु पञ्चस्वपीन्द्रियावीतीन्द्रयाजिनः सकृदेव । महेन्द्रयाजिनस्तु पञ्चमस्येन्द्रियावीत्यस्य स्थाने जेमानमिति । सकृत्पक्षे सकृदिन्द्रियावीत्युक्त्वा जेमानमिति ।

औपभृतं जुह्वां पर्यस्याग्नयेऽनुब्रूह्य-
ग्नये प्रेष्येति स्विष्टकृति संप्रेष्यति ।

स्विष्टकृत्पदराहित्यं प्रैषयोः प्रदर्शयितुं प्रैषपाठः । स्विष्टकृतीति वचनमेतस्य यागस्यापि प्रधानत्वं स्यात्स्विष्टकृत्पदसंघटितप्रैषाभावात्तन्निवर्तयितुम् । तथा च सकृदवदानद्विरभिघारणे अग्नेरहं देवयज्ययाऽऽयुष्मान्यज्ञेन प्रतिष्ठां गमेयमित्यनुमन्त्रणं च स्विष्टकृद्वद्भवति । प्रयोजनाभावान्न प्रत्याक्रमणं मध्य औपभृतमुपभृति भवमौपभृतम् । अत्र भवनं सत्ता विद्यमानत्वमिति यावत् । जुह्वां पर्यस्योपभृतैव निक्षिप्येत्यर्थः । पर्यस्येत्यस्य ल्यप आनन्तर्यमर्थः । तेन पर्यसनानन्तरमेव प्रैषो न तु आपस्तम्बोक्तवत्पर्यसनसमकालमिति द्रष्टव्यम् । ब्रू प्रे, इत्यनयोः प्लावनम् । ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेरिति पाणिनिसूत्रात् । एवं सर्वत्र ज्ञेयम् ।

प्राशित्रमिडा च क्रियेते प्राशित्रमवदाय नेडामवद्यति ।

ननु अत्र प्राशित्रं क्रियत इत्येतावदेव वक्तव्यं निरवदाय होत्र इडामादधातीति वक्ष्यमाणसूत्रादिडावदानं सेत्स्यत्येव तथा चैतावतैव कार्यद्वयसिद्धौ किमर्थमिडावदानविधानं तन्निषेधश्च क्रियत इति चेत्सत्यम् । यजमानभागपरिसंख्यार्थं तत्करणात् । न च न यजमानभागमवद्यतीतिसूत्रेणैव निषेधः सिध्यत्येव तथा च दोषनादवस्थ्यमिति वाच्यम् । कृत्स्नतन्त्रे तस्य न यजमानभागमवद्यतीत्यनेनाप्रवृत्तेर्बोधनेन सवनीयपुरोडाशयागस्य पाशुकतन्त्रमध्ये प्रवृत्तस्य तत्तन्त्रोपजीव्यत्वेन कृत्स्नतन्त्रत्वादत्रापि न यजमानभागमवद्यतीत्यस्य निषेधस्याप्रवृत्त्या यजमानभागावदानप्राप्तौ तत्परिसंख्यार्थमेतस्याऽऽवश्यकत्वेन तद्दोषनादवस्थ्याभावात् । वैश्वानरे हविरिनि आग्नेयात्प्राशित्रावदानमिति पक्षे परिवापस्यैव विरुज्य प्राशित्रावदानमन्येषामविरुज्यैव । आग्नेयात्प्राशित्रमवद्यतीत्येकेषामित्यस्मिन्पक्षे परिवापादेव प्राशित्रं नान्येभ्यः । आज्यादिहवींष्याच्छाय गोहारं कल्पयित्वाऽऽज्यलिप्तौ पाणी प्रक्षाल्य सौमिकं कर्म प्रतिपद्यत इति सर्वत्र ।

द्विदेवत्येषु मरुत्वतीययोरादित्यग्रहे सा-
वित्रे हारियोजने च याज्यानुवाक्ये ।

चकारः प्रत्येकं संयाज्यानुवाक्ये इति प्रतियागं द्वयं द्वयमित्यभिप्रायेण । याज्यानुवाक्यावतां ज्ञातिीयत्तापरिज्ञानार्थमिदं सूत्रम् ।

---

१ ख. °दानं द्विं । २ ग. ङ. क्रियते ।

**याज्यैवेतरासु सोमाहुतिषु ।**

स्पष्टोऽर्थः ।

**उभयीष्वाश्रुतप्रत्याश्रुते याज्यासंप्रैषश्च व्याख्यातः ।**

उभयीषु याज्यापुरोनुवाक्यायुक्तासु केवलासु च । आश्रुतमाश्रावणं प्रत्याश्रुं प्रत्याश्रावणं याज्यायाः संप्रैषो याज्यासंप्रैषश्च व्याख्यात आश्रुतप्रत्याश्रुतयाज्यासंप्रैषात्मकसमुदायो व्याख्यातो दार्शपौर्णमासिकपरिभाषयोक्त इत्यर्थः ।

**पुरोनुवाक्यावतीषु पुरोनुवाक्यासंप्रैषः ।**

व्याख्यात इत्यनुवर्तते । अमुष्मा अनुब्रूहीति यथादेवतमिति दार्शपौर्णमासिकप्रकरणस्थसूत्रेणोक्त इति तदर्थः ।

**ग्रहं चमसं वाऽऽदायाऽऽश्रावयति यथा दर्शपूर्णमासयोः ।**

यद्ग्राव्यं वा चमसं वाऽनन्वारभ्याऽऽश्रावयेत्स्वादियात्तस्मादन्वारभ्याऽऽश्राव्यश्स्वादेव नैतीतिश्रुतावन्वारम्भशब्दार्थ आदानमेव न त्वन्वारम्भमात्रमिति भावः । यथा दर्शपूर्णमासयोरित्यनेनाऽऽश्रावयौश्रावयोमाश्रावयेतिवैकल्पिकाश्रावणत्रयस्य संग्रहः क्रियते । अन्यथा प्रजापतिर्देवासुरानसृजत तदनु यज्ञोऽसृज्यतेत्यस्मिन्ननुवाके सोमप्रकरणसंबन्धिनि आश्रावयेत्येवंरूपस्यैवाऽऽश्रावणस्योक्तत्वेन तस्यैव प्राप्तिरापद्येत तन्निवारणार्थमतिदेशवचनमावश्यकम् । अत्र ब्राह्मणे विशेषः—यो वा अध्वर्योः प्रतिष्ठां वेद प्रत्येव तिष्ठति यतो मन्येतानभिक्रम्य होष्यामीति तत्तिष्ठन्नाश्रावयेदेषा वा अध्वर्योः प्रतिष्ठा य एवं वेद प्रत्येव तिष्ठति यदभिक्रम्य जुहुयात्प्रतिष्ठाया इयात्तस्मात्समानत्र तिष्ठता होतव्यं प्रतिष्ठित्यै यो वा अध्वर्योः स्वं वेद स्ववानेव भवति स्रुग्वा अस्य स्वं वायव्यमस्य स्वं चमसोऽस्य स्वं यद्ग्राव्यं वा चमसं वाऽनन्वारभ्याऽऽश्रावयेत्स्वादियात्तस्मादन्वारभ्याऽऽश्राव्यश्स्वादेव नैतीति ।

**आग्नीध्रागारे दक्षिणामुखस्तिष्ठन्नाग्नीध्रः**
**स्फ्यं धारयन्प्रत्याश्रावयति तद्व्याख्यातम् ।**

आग्नीध्रागारे प्रत्याश्रावणं यथा दर्शपूर्णमासयोरित्येतावतैव सिद्धौ सत्यां पुनर्गुरुभूतवचनमाश्रावणप्रत्याश्रावणादिविषये विधेरन्यथा करणं चेत्तदा प्रायश्चित्तं सोमतन्त्रसंबन्ध्येव भवति न तु दार्शपौर्णमासिकं सामान्यं सर्वप्रायश्चित्तमितिज्ञापनार्थम् । दक्षिणामुखतातिष्ठत्तास्फ्यधारणकतानां सर्वासां विधानमपूर्वत्वार्थम् । तेनात्रेध्मसंनहननिवृत्तिः । आग्नीध्रग्रहणं तूभयप्रायश्चित्तप्राप्त्यर्थम् । अध्वर्युर्ग्रहं चमसं वाऽऽश्रावयति तद्व्याख्यातम् । अध्वर्युग्रहणमुत्तरसूत्रार्थं तच्च विपरिणामेन ।

संप्रैषास्त्वेकधना याज्याः ।

एकं प्रधानमेव धनं स्वरूपं भेदकमिति यावत्तद्येषां ते ह्येकधनाः । धनशब्दस्य स्वरूपपरत्वं सूत्रार्थानुगुण्यात्स्वी क्रियते । अथ वा धीयते वर्तते स्वरूपं भेदकं येषु इत्यर्थः । पृषोदरादित्वात्साधुत्वम् । तेनात्र स्वरूपभेदाद्भिन्नाभिन्ना एव नत्वेकरूपा इति । यजेरिमे यज्या यजिसंबन्धिन इत्यर्थः । यागसंबन्धिनः प्रैषा इति यावत् । यज्या इत्यत्र दिगादित्वाद्यत्प्रत्ययः । यज्या एव याज्याः स्वार्थेऽण्प्रत्ययः । याज्यासंप्रैषास्तु एकधना इत्यन्वयः ।

तत्राध्वर्युराश्राव्य प्रत्याश्राविते मुष्मै प्रेष्येति मैत्रावरुणं प्रेष्यति स होतारं चोदयति ।

पूर्वत्राध्वर्युग्रहणं प्रतिप्रस्थात्रुपलक्षणार्थम् । याज्याविषयकप्रैषेषु इदं सूत्रम् । अमुष्मा इत्यत्र चतुर्थ्यन्तदेवतापदमुच्चारणीयम् । अमुष्मै प्रेष्येति एतत्प्रैषवचनमुपलक्षणं प्रातः प्रातः सावस्य शुक्रवतो मन्थिवतो मधुश्चुत इत्यस्य प्रैषस्याऽऽश्रावणसहितस्य । स मैत्रावरुणो होतारं चोदयति याज्यां वक्तुं प्रेरयतीत्यर्थः । एतदन्तः प्रपञ्चः सोमतन्त्रस्य साक्षाद्दर्शपूर्णमासापेक्षत्वं नास्तीति प्रदर्शयितुम् । एतदभिप्रेत्यैव प्रजापतिर्देवासुरानसृजत तदनु यज्ञोऽसृज्यतेत्यस्मिन्ननुवाके पुनराश्रावणादिप्रपञ्चः ।

वषट्कृते जुहोत्यनुवषट्कृते हुत्वा हरति भक्षम् ।

स्पष्टम् ।

सर्वसोमानामेष कल्पः ।

सर्वे सोमा ऐन्द्रवायवादयस्तेषामित्यर्थः ।

वषट्कृते जुहोत्यनुवषट्कृते हुत्वा हरति भक्षं सर्वसोमानामेष कल्प इत्यनेन सर्वत्रानुवषट्कारप्राप्तौ केषुचिदपवादमाह—

द्विदेवत्यर्तुग्रहेष्वादित्यग्रहसावित्रयोश्च नानुवषट्कारो विद्यते कृताकृतः शुक्रामन्थिनोः पात्नीवते च ।

अनुवषट्कारस्य शुक्रामन्थिमात्रविषय एवैतत्कृताकृतत्वम् । मध्यतःकारिचमसार्थं तु स नित्य एव भवतीत्यर्थात् । किमर्थमिदं सूत्रे सामान्यतो ज्ञानाय । कर्मकाले एतत्सूत्रपठनमावश्यकम् । एतदकरणे यजुर्भ्रेषप्रायश्चित्तम् । दक्षिणाग्नौ फलं स्पष्टमेवात्र । वषट्कारसाध्यप्रक्षेपावसरसंगत्याऽत्र परिभाषानिरूपणम् ।

द्विदेवत्यैः प्रचरतः ।

प्रासङ्गिकं परिसमाप्तमित उत्तरमनुष्ठेयं कर्मोच्यत इत्यवधानार्थमिदं प्रतिज्ञासूत्रम् । द्विदेवत्यर्तुग्रहेष्वादित्यग्रहसावित्रयोश्च नानुवषट्कारो विद्यत इत्यत्र द्विदेवत्यान्भक्षयन्तीत्यादौ च संज्ञायाः प्रयोजनम् । अर्थः स्पष्टः ।

कथमित्याकाङ्क्षायामाह—

उपयामगृहीतोऽसि वायव इन्द्रवायुभ्यां त्वेत्यैन्द्रवायवस्यै-
कदेशमादित्यपात्रेण प्रतिप्रस्थाता प्रतिनि*र्ग्राह्यं गृह्णाति।

आदित्यपात्रेणेति तृतीया सप्तम्यर्थे। आदित्यपात्रेणैन्द्रवायवपात्रगतसोमैकदेशग्रहणासंभवेन करणार्थकत्वासंभवात्। पूर्वस्य प्रतिरूपतया निकृष्य गृह्यत इति प्रतिनिग्राह्यस्तं गृह्णातीत्यर्थः। प्रतिनिर्ग्राह्यमिति पाठेऽपि अर्थः स एव।

उपयामगृहीतोऽसि वाऽक्षसदसीति च द्रोणकलशाद्द्वितीयम्।

उपयामगृहीतोऽसि वाऽक्षसदसीति मन्त्रेण तस्मिन्नेव द्रोणकलशाद्द्वितीयं प्रतिनिग्राह्यं निगृह्य निगृह्य गृह्णातीत्यर्थः। चस्त्वर्थे वा। प्रतिरूपतया नितरां गृह्यत इत्यत्र प्रतिनिग्राह्यशब्दार्थो ज्ञेयः सर्वत्र प्रतिनिग्राह्यशब्दो णमुलन्तो ज्ञेयः। तेन यथासंभवं पौनःपुन्यं ग्रहणे सिद्धम्। परिप्लवया ग्रहणम्। अध्यक्षाभ्यां गृह्णामीति मन्त्रान्तः।

ऐन्द्रवायवमध्वर्युरादत्ते द्रोणकलशाच्च परि-
प्लवया राजानं प्रतिनिग्राह्यं प्रतिप्रस्थाता।

द्रोणकलशात्परिप्लवया राजानं चेत्यन्वयः। चः समुच्चये। प्रतिनिग्राह्यग्रहणोत्तरमादानवचनादेवं ज्ञायते स्वस्थानस्थितस्यैवैन्द्रवायवस्यैकदेशग्रहणमिति। द्रोणकलशाच्च परिप्लवया राजानमित्यत्राऽऽदत्त इत्यनुवर्तते। प्रतिनिग्राह्यं प्रतिप्रस्थातेत्यत्राप्यादत्त इत्येतस्यानुवृत्तिः। आदानवचनबलादासादनमप्यस्तीति गम्यते। तच्च मन्त्राभावात्तूष्णीमेव। दशापवित्रेण संमार्गोऽपि भवति। सर्वग्रहाणां परिमार्जनमिति सूत्रात्।

उपनिष्क्रम्याध्वरो यज्ञोऽयमस्तु देवा इति
परिप्लवयाऽऽघारयति यथोपांशुर्हुतो भवति।

उपनिष्क्रम्येत्यत्र हविर्धानादिति शेषः। उपनिष्क्रम्येति वचनमुपनिष्क्रमणाव्यवधानेनाऽऽघारसिद्ध्यर्थम्। परिप्लवयाऽऽघारयतीत्यत्राध्वर्युरित्येव शेषः। आधारार्थराज्ञोऽध्वर्युणैवाऽऽत्तत्वेनार्थादेवाध्वर्योः प्राप्तत्वात्। एतेन प्रतिप्रस्थातुः संनिहितत्वेनानुवृत्तिर्वारिता भवति। परिप्लवयाऽऽघारयतीति वचनं परिप्लवया राज्ञो ग्रहणं त्वाघारणार्थचमसे तेन चमसेनाऽऽघारणमिति स्यात्तन्मा भूदित्येतदर्थम्। यथा येन प्रकारेणोपांशुरुपांशुग्रहो हुतो भवति तेन प्रकारेणाऽऽत्रारयतीत्यर्थः। स च प्रकार उत्तरपरिधिसंधिमन्ववहृत्येत्यादिः संततं जुहोतीत्यन्तः। स्वाहा त्वा सुभवः सूर्यायेति मन्त्रस्तु वैशेषिकेणाध्वरो यज्ञ इति मन्त्रेण बाध्यते।

---

* प्रतिनिग्राह्यमिति पाठो ज्ञेयः।

---

१ ग. निष्कृष्य। २ ख. क. ज. झ. ग. ढ. °निर्ग्राह्यं।

**वायव इन्द्रवायुभ्यामनुब्रूहि वायव इन्द्रवायुभ्यां प्रेष्येति संप्रेष्यति ।**

पृष्ठ्याया उत्तरत एव पुरोनुवाक्याप्रैषः । स चाध्वर्योरेव, एकवचनात् । सहिरण्येन प्राङ्मुखस्तिष्ठन्दक्षिणार्धपूर्वार्धे जुहोत्युत्तरार्धपूर्वार्धे वेतिपरिभाषया प्राङ्मुखता तिष्ठत्ता चोभयोः । तेन पृष्ठ्यादक्षिणतोऽपरेणाग्निं तिष्ठद्भ्यां प्राङ्मुखाभ्यां होमः कर्तव्य इति सिद्धं भवति । दक्षिणतोऽध्वर्युरुत्तरतः प्रतिप्रस्थाता पृष्ठ्याया दक्षिणत एव ।

**वषट्कृते जुहुतः पुनर्वषट्कृते जुहुतः ।**

स्पष्टम् ।

**अध्वर्योः पात्रे प्रतिप्रस्थाता संपातमवनयति तस्यैकदेशमध्वर्युः प्रतिप्रस्थातुः पात्रे ।**

संपातमवनयतीति वचनात्प्रतिप्रस्थात्रा स्वल्पमवनयनं कर्तव्यम् । एकदेशमवनयतीति वचनादध्वर्युणाऽधिकमवनयनं कर्तव्यम् । प्रतिप्रस्थातुः स्वल्पावनयनमादित्यस्थाल्यां सोमस्य कार्यबाहुल्यानुरोधेन । अध्वर्योरधिकावनयनं भक्षकार्यस्य स्वल्पत्वानुरोधेनेति द्रष्टव्यम् ।

**देवेभ्यस्त्वेत्यादित्यस्थाल्यां प्रतिप्रस्थाता संपातमवनयति ॥ १९ ॥**

अत्र संपातशब्दस्य स्वल्पशेषपरत्वे प्रतिप्रस्थातुः पात्रे भूयसोऽवशिष्टत्वेन संपातशब्दप्रवृत्त्यसंगतत्वापत्तेः । अतोऽयमर्थः—संपात्य संपात्यावनयनं कर्तव्यमिति । फलमन्त्रादृष्टमेव ।

**विष्णवुरुक्रमेत्यपिदधाति ।**

पूर्वसूत्रात्प्रतिप्रस्थातृशब्दो वचनविपरिणामेनाऽऽदित्यस्थालीशब्दश्चानुवर्तते । उपस्थितत्वादादित्यपात्रेणैवापिधानम् । एतत्सर्वमापस्तम्बेन स्पष्टमुक्तं विष्णवुरुक्रमैष ते सोमस्त२ रक्षस्वेत्यादित्यपात्रेण प्रतिप्रस्थाताऽऽदित्यस्थालीमपिदधातीति । अयं मन्त्र आपस्तम्बेनान्तिमेऽपिधाने विनियुक्तो यथा तथा नास्माकम् । अस्माकं तु सर्वेष्वपिधानेषु सूत्रकृता विनियुक्त इत्येतावान्विशेषः । माऽवरुत्यदिति मन्त्रान्तः ।

**मयि वसुः पुरो वसुरित्यध्वर्युर्होत्रे भक्षं प्रयच्छति ।**

ग्रहपात्रस्थावशिष्टसोम[स्य] भक्षणीयत्वाद्भक्षसंज्ञा । अध्वर्युग्रहणं प्रतिप्रस्थातृनिवृत्त्यर्थम् । वाचं मे पाहीति मन्त्रान्तः । अत्र विशेषमाहाऽऽपस्तम्बः—ग्रहमध्वर्युरादाय क्षिप्र२ होतारमतिद्रुत्य मयि वसुः पुरो वसुरिति ग्रह२ होत्रे प्रयच्छतीति ।

**तेनैव होता प्रतिगृह्णाति ।**

एतच्च याजुषहौत्रे ज्ञेयम् ।

**एवमुत्तराभ्यां यथादैवतं प्रचरतः।**

उत्तराभ्यामित्यनन्तरं ग्रहाभ्यामिति शेषः। उत्तरौ मैत्रावरुणाश्विनौ। यथादैवतमिति वचनमतिदेशान्मित्रावरुणाभ्यामनुब्रूहि मित्रावरुणाभ्यां प्रेष्येति प्रैषयोः प्राप्तिः स्यात्तां वारयितुम्।

**नोत्तरयोर्द्रोणकलशाद्गृह्णाति नोत्तरयोराघारो विद्यते।**

नोत्तरयोर्द्रोणकलशाद्गृह्णातीत्यनेन प्रतिनिग्राह्यग्रहणं व्यावर्त्यते। आघारोऽध्वरो यज्ञोऽयमस्तु देवा इतीतरयोर्ग्रहयोर्न विद्यत इत्यर्थः।

**उत्तरेणोत्तरेण मन्त्रेण सकृद्गृह्णाति सकृज्जुहुतः।**

सकृद्ग्रहण उत्तरोत्तरो मन्त्र उपयामगृहीतोऽस्यृतसदसि। उपयामगृहीतोसि श्रुतसदसीति। सकृज्जुहुत इति वचनमेवमुत्तराभ्यामित्यनेन पुनर्वषट्कारे होमस्य प्राप्तस्य निवृत्त्यर्थम्।

**उत्तरेणोत्तरेणाऽऽदित्यस्थाल्यां प्रतिप्रस्थाता**
**संपातमवनयति तेनैव सर्वत्रापिदधाति।**

संपातावनयन उत्तरोत्तरो मन्त्रो विश्वेदेवेभ्यस्त्वा विश्वेभ्यस्त्वा देवेभ्य इति। विष्णवुरुक्रमेत्येतेनैवापिदधाति। आपस्तम्बेनान्तिमेऽपिधानेऽयं मन्त्रस्तद्व्यावृत्त्यर्थमेवकारः। सर्वत्रोभयत्रेत्यर्थः।

**उत्तरेणोत्तरेणाध्वर्युर्होत्रे भक्षं प्रयच्छत्येतेनैव होता प्रतिगृह्णाति।**

भक्षप्रदान उत्तरोत्तरो मन्त्रो मयि वसुर्विदद्वसुरिति मयि वसुः संयद्वसुरिति।

**दितेः पुत्राणामदितेरकारिषमुरुशर्मणां बृहतां वरूथिनाम्। येषां धामानि निहितानि[1] धामशश्चित्रैर्यजन्ति भुवनानि विश्वेति वा सर्वत्रापिदधाति।**

स्पष्टम्।

काम्यं कल्पमाह—

**यदि कामयेत पापमस्य संस्स्यादिति प्रतिप्रस्थानेन**
**पूर्वो गृहीत्वा पूर्वस्तिष्ठञ्जुहुयात्पूर्वो हुत्वा सादयेत्।**

यदिशब्दाद्यजमानगतेयं कामना। अस्य देवदत्तस्य द्वेष्यस्य पापं सम्यक्स्यादिति यदि यजमानः कामयेत तदा प्रतिप्रस्थानं प्रतिप्रस्थातुः पात्रं तेन तानि त्रीणि वायव्यानि पात्रसादनकाले खरे प्रयुज्यन्ते तैर्द्विदेवत्यग्रहणकाले पूर्वः पूर्वोऽध्वर्योर्द्रोणकलशात्प्रतिनिग्राह्यमन्त्रेणैव गृहीत्वा पूर्वस्तिष्ठञ्जुहुयात्ततो होमानन्तरं संपातमवनीय

1 ख. ज. ञ. ड. विहितानि।

पूर्वः सादयेत् । स्वेन धारणे क्रियमाणेऽग्निमकार्यकरणासंभवेनान्यहस्ते प्रदानं यावद्धोममिति । वषट्कारसाध्यत्वादेव तिष्ठत्त्वासिद्धौ तिष्ठन्निति वचनमुत्तरार्थम् । तेनाऽऽसादनमपि तिष्ठन्नेव कुर्यादिति सिद्धम् । जुहुयाच्चमेनेनेत्यर्थः । पूर्वो गृहीत्वा पूर्वस्तिष्ठन्हुत्वा सादयेदित्येवं लाघवाद्वक्तव्ये पूर्वस्तिष्ठञ्जुहुयादिति पृथग्वचनं संपातावनयनापिधानयोः सत्त्वं गमयति । पूर्वस्तिष्ठन्हुत्वा सादयेदित्येवमुच्यमाने क्त्वाप्रत्ययेनाव्यवहितत्वबोधनेनैतयोर्निवृत्तिः स्यादतः पृथग्वचनम् । होमोत्तरमासादनमेवाऽऽदौ कृत्वा पुनरादाय संपातावनयनादीति बोध्यते । अत्राऽऽसादनं नामोत्तरवेद्यां निधानमात्रं न तु स्वायतने निधानम् । हविर्धानप्रवेशं विना तदसंभवात् । हविर्धानप्रवेशकल्पनां विना विवाहे तस्या अनुचितत्वात् । तत्र तत्र पूर्वः पूर्व इति वचनादध्वर्योरप्यनन्तरमेष विधिरिति गम्यते ।

**यदि कामयेत समावद्वीर्यो भ्रातृव्येण स्यादिति युगपद्गृहीतो युगपज्जुहुतो युगपत्सादयतः ।**

भ्रातृव्येण द्वेष्येण सह समावद्वीर्यस्तुल्यवीर्यः । युगपत्सहैव ।

**धाराग्रहकाले गृह्णातीत्येकेषाम् ।**

संदंशपतितत्वात्काम्ये विधावेव पक्षान्तरमिदम् । धाराग्रहकाले द्विदेवत्यानां धारया ग्रहणकाल एव तेभ्यः पूर्वमनन्तरं वा प्रतिनिग्राह्यान्प्रतिप्रस्थाता गृह्णातीत्येकेषामाचार्याणां मतमित्यर्थः ।

**अत्र पात्राण्युत्सादयति ।**

अत्रास्मिन्काम्ये विधावित्यर्थः । अस्मिन्काल इत्यर्थो वा । पूर्वकल्पे नित्यविधिव्यावृत्तिः । द्वितीयकल्पेऽवभृथकालव्यावृत्तिः । पात्राणि प्रतिनिग्राह्याणाम् । उत्सादयति विनाशयतीत्यर्थः । जामदग्न्येन रामेण क्षत्रमुत्सादितं पुरेत्यत्र दृष्ट उत्सादनशब्दो विनाशार्थकः । पात्राण्युत्सादयतीति विधानादेव पूर्वत्र प्रतिनिग्राह्यार्थं पात्राणि भिन्नानि सन्तीति गम्यते । उत्सादयतीति वचनात्काम्यविधावेवायं प्रकार इति गम्यत ।

**यदि कामयेत यो ग्रामे तं ग्रामान्निरू(रु)ह्य यो बहिर्ग्रामात्तं ग्रामे कुर्यादितीदमहममुमामुष्यायणममुष्य पुत्रममुष्यै विशो निरूहामीत्यध्वर्युः पात्रं निरू(रु)ह्येदमहममुमामुष्यायणममुष्य पुत्रममुष्यां विशि सादयामीति प्रतिप्रस्थान[२]ं सादयेदयज्ञसंयुक्तः कल्पः ।**

अध्वर्युग्रहणं प्रतिप्रस्थातृव्यावृत्त्यर्थम् । प्रतिप्रस्थातुः पात्रं प्रतिप्रस्थानम् । मन्त्रपाठप्रकारस्तु पूर्ववदत्रापि द्रष्टव्यः । अयज्ञसंयुक्तः कल्प इति सूत्रं कृतव्याख्यानम् ।

१ ङ. ज. झ. ञ. ढ. °मुष्याऽऽमु° । २ ङ. ज. घ. ञ. ढ. °मुष्याऽऽमु° ।

आधवनीयं पूतभृत्यवनीय दशाभिः कलशं मृष्ट्वा न्युब्जति ।

कलश आधवनीयाख्यस्तं दशाभिः पवित्रस्य दशाभिर्मृष्ट्वा प्रोक्ष्य न्युब्जति न्युब्जं करोतीत्यर्थः । दशाभिस्तं मृष्ट्वा न्युब्जतीति परामर्शेनैवाऽऽधवनीयग्रहणे सिद्धे कलशवचनं पवमानग्रहान्कलशानित्यत्रत्यबहुवचनान्तकलशशब्देनेतरयोरपि संप्रत्ययो यथा स्यादित्येतदर्थम् ।

होता ब्रह्मोद्गाता यजमानः सदस्यश्चेति
मध्यतःकारिणो मैत्रावरुणो ब्राह्मणाच्छंसी
पोता नेष्टाऽच्छावाक आग्नीध्रश्च होत्रकाः ।

मध्यतः कारिण इति आत्मनोऽर्धिप्रभृतिषु ऋत्विक्षु गमनागमनयोः प्राधान्यान्मध्येऽन्तरा कर्तुं शीलं येषां ते मध्यतःकारिण इत्यर्थः । प्रधानानां मध्ये निवेशो गुणभूतानां पार्श्वत इति लोकसिद्धमेव । अथ वा मैत्रावरुणादिहोत्रकं मध्यतः कारिणां चमसाध्वर्यवो वषट्कृतानुवषट्कृताञ्जुहुतेत्यत्रैव संप्रत्ययार्थो मध्यतःकारिसंज्ञा । होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्धुत्वेत्यादौ संव्यवहारार्थो होत्रका इति संज्ञा ।

उभये चमसिनो भवन्ति सर्वेषां प्रतिपुरुषं चमसाध्वर्यवः ॥ १६ ॥

इति हिरण्यकेशिसूत्रेऽष्टमप्रश्ने षष्ठः पटलः ।

---

उभये मध्यतःकारिणो होत्रकाश्चेत्यर्थः । सर्वेषां चमसिनां प्रतिपुरुषं पुरुषं पुरुषं प्रतीति प्रतिपुरुषं, प्रतिपुरुषमेकैकश्चमसाध्वर्युरेवमेकादश चमसाध्वर्यवो भवन्तीत्यर्थः । सदस्याभावपक्षे दशैव चमसाध्वर्यवो भवन्ति चमसस्यैवाभावात् । द्वाभ्यां हस्ताभ्यां चमसद्वयहोमस्य संभवात्पञ्चभिरेव चमसाध्वर्युभिः सदस्यपक्षे षड्भिरपि कार्यसंभवात्पञ्चषट्संख्याव्यावर्तनार्थं प्रतिपुरुषं चमसाध्वर्यव इति वचनम् । अस्ति चात्र शाखान्तरश्रुतिः—मा हौषींदेक एव द्वाभ्यां हस्ताभ्यां द्वौ चमसाविति । जैमिनिरपि उत्पत्तौ तु बहुत्वश्रुतेरिति, दशत्वं लिङ्गदर्शनादिति सूत्राभ्याममुमर्थमाह । अर्थस्त्वग्रे वक्ष्यते ।

इत्यपोकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्नियुक्तवाजपेययाजिसर्वतोमुखयाजिद्विसाहस्राग्नियुक्तपौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथदीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसूत्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंतापशामिकायां ज्योत्स्नाख्यायां वृत्तावष्टमप्रश्नस्य षष्ठः पटलः ॥ ६ ॥

---

अथाऽष्टमप्रश्ने सप्तमः पटलः ।

---

उन्नीयमानेभ्योऽनुब्रूहि होतुश्चमसमनून्नयध्वमुभय-
तःशुक्रान्कुरुध्वमच्छावाकस्य चमसाध्वर्यो मा
त्वमुन्नेष्ठाः प्रतिप्रस्थातः प्रोक्षिताप्रोक्षिताञ्छकला-
नुपकल्पयोन्नेतः सोमं प्रभावयेति संप्रेष्यति ।

उन्नीयमानेभ्योऽनुब्रूहीत्ययं प्रैषः प्रशास्तारं प्रत्येव । हौत्रशास्त्रानुरोधात् । उन्नीयमा-नेभ्य इति चमसानां विशेषणम् । तादर्थ्ये चतुर्थी । उन्नीयमानेभ्य इति विशेषणादुन्न-यननिमित्तकोऽयं प्रैषः । चमसोन्नयननिमित्तमुन्नीयमानसूक्तं ब्रूहीत्यर्थः । होतुश्चमस-मनून्नयध्वं हे ब्रह्मादिचमसाध्वर्यव उन्नेतृसहायभूता होतृचमसमुन्नेतृसहायभूततदीयचम-साऽध्वर्युणोन्नीतमनु पश्चात्स्वं स्वं चमसमुन्नयध्वमित्यर्थः । ब्रह्मोद्गाता यजमानः सदस्यो मैत्रावरुणो ब्राह्मणाच्छंसी पोता नेष्टाऽऽग्नीध्र इत्येवं क्रमोऽत्र । उन्नयने विशेषमाह—उभयतःशुक्रान्कुरुध्वमिति । उभयत आद्यन्तयोः शुक्रो येषु त उभयतःशुक्रा एतादृशा-न्कुरुध्वमिति । शुक्रो द्रोणकलशस्थः सोमः । अच्छावाकस्याच्छावाकसंबन्धिचमसा-ध्वर्यो तच्चमसं त्वं मोन्नेष्ठाः । माङ्निषेधे । अच्छावाकचमसोन्नयनं मा कुर्वित्यर्थः । प्रोक्षितौ चाप्रोक्षितौ च प्रोक्षिताप्रोक्षितानेतादृशाञ्शकलान्यज्ञियवृक्षशकलानिपिधानोप-यमनसमर्थानुप समीपे कल्पय । उन्नेतः सोमं प्रभावय प्रातःसवनपर्याप्तमकथनामिश्र-णेन कुर्विति प्रैषार्थः ।

होतृचमसमुख्यान्दश चमसानु-
न्नयत्यन्यानच्छावाकचमसात् ।

होतृचमसो मुख्यो येषां ते होतृचमसमुख्यास्तान् । होतृचमसमनून्नयध्वमित्यत्रत्यानु-शब्दार्थोऽनेन प्रदर्शितो भवति । होतृचमसं प्रथममुन्नीयानन्तरमितरान्दश चमसानुन्न-यति सर्वत्रेत्यर्थः । दशेति सदस्यपक्षे । अत्र दशेत्यनेन परिसंख्यानात्कस्य चमसस्यो-न्नयनं वर्जनीयमित्याकाङ्क्षायामन्यानच्छावाकचमसादिति । अच्छावाकचमसादन्यानु-न्नयति प्रातःसवनेच्छावाकचमसं नोन्नयतीत्यर्थः । अच्छावाकस्य चमसाध्वर्यो मा त्वमुन्नेष्ठा इत्यस्यार्थोऽनेन दर्शितो भवति ।

परिप्लवयोन्नेता द्रोणकलशादुपस्तीर्य पूत-
भृत उन्नीय द्रोणकलशादभिघारयति ।

उभयतःशुक्रान्कुरुध्वमित्यस्यार्थोऽनेन दर्शितो भवति । आश्विनग्रहणवदुपस्तरणो-न्नयनाभिघारणानीत्येव वक्तव्ये पुनः कृत्स्नं वचनं काण्डानुसमय एवात्र नियत इति-

ज्ञापनार्थम् । परिप्लवयेति वचनमुदञ्चनव्यावृत्त्यर्थम् । नचात्र द्रोणकलशग्रहणं व्यर्थम् । आधवनीयमानस्योत्तानवचनसमकालिकसर्वचमसोपस्तरणाभिघारणोत्तरमपि पूतभृत्यव-नयनकाल आधवनीयस्यास्तीतिज्ञापनार्थत्वेन सार्थक्यात् । ननु होतृचमसमनून्नयध्व-मितिबहुवचनबोधितचमसाध्वर्युकर्तृकत्वकेवलोन्नेतृकर्तृकत्वयोः परस्परं विरोध इति चेत्सत्यम् । चमसाध्वर्यूणां सहायत्वमादायैव बहुवचननोपपत्तेः । चमसोन्नयनानन्तरं प्रतिप्रस्थाता प्रोक्षिताप्रोक्षिताञ्छकलानुपकल्पयति । केवलेन हस्तेनैव प्रोक्षणं पवित्रकर-णावचनात् । तच्चोत्तानेन हस्तेन ।

उत्तानेन तु हस्तेन कर्तव्यं प्रोक्षणं भवेत् । इति स्मृतेः ।

**सर्वचमसानामेष कल्पः ।**

सर्वेषां चमसानामेष एवोन्नयनकल्प इत्यर्थः ।

**प्रस्थितेष्वेवोन्नीयमाने सूक्ते तस्मिन्प-रिहिते सावित्रेण ग्रहावाददाते ।**

प्रस्थानं नामोत्तरवेद्यां सादनम् । उक्तं च बौधायनेन—समुन्नीयोत्तरवेद्यां साद-यतीति । प्रस्थिते[ष्वे]वोन्नीयमाने सूक्त इत्यनन्तरं समापिते सतीति शेषः । अथ वा द्वितीयार्थे सप्तमी । छान्दसत्वात् । तथा चायमर्थो भवति—प्रस्थितेषु सोमेषु सत्स्वेवो-न्नीयमानं सूक्तं समापयतीत्यर्थः । समापयतीत्यध्याहार्यं पदमन्वयसिद्धये । उन्नयन-मारभ्य यावत्सादनं सूक्तस्य यथा समाप्तिर्भवति तथा प्रशास्त्रा सूक्तं वक्तव्यमिति । तस्मिन्परिहित इति वचनं परिधानोत्तरमेव ग्रहयोरादानं न तु परिधानसमकालमित्ये-तदर्थम् । तस्मिन्निति तच्छब्देनोन्नीयमानं सूक्तं परामृश्यते । सावित्रो देवस्य त्वेति आदानकरणत्वादादद इत्यन्तो मन्त्रः । ग्रहौ शुक्रामन्थिनौ । आददाते इति द्विवचनम् । अध्वर्युप्रतिप्रस्थातारावितिशेषः ।

कथमित्याकाङ्क्षायामाह—

**शुक्रमध्वर्युर्मन्थिनं प्रतिप्रस्थाता ।**

स्पष्टम् ।

**आददते चमसांश्चमसाध्वर्यवः ।**

उत्तरवेद्यां सादितांश्चमसांश्चमसाध्वर्यव आददत इत्यर्थः ।

**प्रोक्षिताभ्याꣳ शकलाभ्याꣳ शुक्रामन्थिनावपिधत्तोऽ-पनुत्तौ शण्डामर्कौ सह तेन यं द्विष्म इत्यप्रोक्षिताभ्या-मधस्तात्पाꣳसूनपध्वꣳसयतस्ताभ्यां चैवोपयच्छतः ।**

प्रोक्षितौ शकलौ द्वावेव । अप्रोक्षितावपि द्वावेव । अन्यथा प्रैषे प्रोक्षिताप्रोक्षिता-

---

१ ख. नसूक्तान° ।

नित्यस्मिन्समस्ते पदे बहुत्वस्यापि संभावनायां द्विविधयोः शकलयोर्द्वित्वमेव नियतमि-त्येतादृशमर्थं प्रदर्शयितुमुपकल्पितशकलानां विनियोगं प्रदर्शयितुं च प्रोक्षिताभ्यामिति वचनम्। शकलवचनमसंदेहार्थम्। शुक्रामन्थिनौ ग्रहौ। अपिधत्त इत्यनेन शकलयो-रपिधानयोग्ययोरुपकल्पनं द्योत्यते। अप्रोक्षिताभ्यामितिवचनप्रयोजनं प्रोक्षितवचनव-ज्ज्ञेयम्। अपनुत्तौ शण्डामर्कौ सह तेन यं द्विष्म इत्येष एव मन्त्रः प्रतिप्रस्थातुरपि। अप्रोक्षिताभ्यां शकलाभ्यां पात्राधस्तादग्रभागगतान्पांसूनपध्वंसयतोऽपगमयतः। अध्वर्यु-प्रतिप्रस्थातारावितिं शेषः सर्वत्रात्र द्विवचनेषु। ताभ्यामप्रोक्षिताभ्यामेवोपयच्छतः। उपयमनं शुक्रामन्थिपात्रयोः कुरुतः। चकारो मन्त्रानुवृत्त्यर्थः। अथवाऽयमर्थः—ताभ्यां प्रोक्षिताभ्यामुपयच्छतः। चकारो हस्तसमुच्चयार्थ इति। अस्ति चापिगृह्य प्राञ्चौ निष्क्रामत इत्यस्यां श्रुतौ ग्रहधातुर्लिङ्गम्। तथा च दक्षिणेन हस्तेनोपरिष्टाद्वामेनाधस्तादित्येवं परिगृह्य प्राञ्चौ प्राङ्मुखौ निष्क्रामत इत्यर्थः सिद्धो भवति। अस्मिन्मन्त्रे सामान्यरू-पेणैव द्वेष्यस्य निर्देशो न नाम्ना। असःशब्दाभावात्। अपनुत्तौ प्रतिहतौ।

**स्तुतोऽसि जनधा देवास्त्वा शुक्रपाः प्रणयन्त्विति शुक्रमध्वर्युर्हरति स्तुतोऽसि जनधा देवास्त्वा मन्थिपाः प्रणयन्त्विति मन्थिनं प्रतिप्रस्थाता।**

हविर्धानद्वयाग्रभागं प्रति हरणं संप्रधानस्य तत्रैव करिष्यमाणत्वात्। मन्त्रभेदा-त्पृथङ्निर्देशः।

**तावादानावेके समामनन्त्युर्वन्तरिक्षमिति गच्छतः।**

तौ स्तुतोऽसि जनधा इति मन्त्रावादानावादानक्रियार्थाविति एके शाखिनः समामनन्ति वदन्तीत्यर्थः। अस्मिन्पक्षे सावित्रस्य निवृत्तिः। आहरणमन्त्रोऽस्मिन्पक्ष उर्वन्तरिक्ष-मिति। गच्छतः शुक्रामन्थिभ्यां सह गच्छत इत्यर्थः। प्रसिद्धत्वादन्विहीति मन्त्रान्तः। आपस्तम्बोऽपि स्पष्टमाह—उर्वन्तरिक्षमन्विहीत्यभिप्रव्रजत इति।

**आयुः संधत्तं तं मे जिन्वतं प्राणꣳ संधत्तं तं मे जिन्वतमपानꣳ संधत्तं तं मे जिन्वतं व्यानꣳ संधत्तं तं मे जिन्वतं चक्षुः संधत्तं तन्मे जिन्वतꣳ श्रोत्रꣳ संधत्तं तन्मे जिन्वतं मनः संधत्तं तन्मे जिन्वतं वाचꣳ संधत्तं तां मे जिन्वतमित्यग्रेण हविर्धाने अरत्नी पात्रे वा संधत्तः।**

अग्रेण हविर्धाने हविर्धानयोरग्रतः समीप इत्यर्थः। हविर्धानशब्दस्य द्विवचनान्त-त्वेन शकटे एव गृह्येते न तु मण्डपः। दक्षिणहविर्धानाग्रतः समीपेऽध्वर्युरुत्तरहवि-र्धानाग्रतः समीपे प्रतिप्रस्थाता स्थित्वाऽरत्नी पात्रे वोभौ संधत्तो योजयतः संश्लेषयत इत्यर्थः। अरत्नी हस्तौ पात्रे शुक्रामन्थिनोः। ब्रह्म संधत्तमित्येतेन ब्राह्मणोक्तेनायं विकल्पते।

अनाधृष्टाऽसीत्यङ्गुष्ठाभ्यामुत्तरवेदिमाक्रमेते ।

अङ्गुष्ठावत्र पादयोरेव । आक्रमणक्रियासाहचर्यात् । तावानेव मन्त्रः । व्यत्ययेनाऽऽत्मनेपदम् । अर्थादेवोत्तरवेदिं प्रति गमनसिद्धिः ।

तां विपरिहन्तौ विपरिक्रामतः ।

तामुत्तरवेदिं विपरिहन्तौ विपीडयन्तौ विलिखन्ताविति यावत् । विपरिहन्ताविति आर्षः शब्दः । विशेषेण परितोऽर्थादुत्तरवेदेर्विलिखन्तावङ्गुष्ठाभ्याम् । एतादृशावुभावुत्तरवेदिं विपरिक्रामतः । विशेषोऽत्र सांतत्यरूपः । विपरिक्रमणमुत्तरवेदेः सकाशादवतरणम् ।

सुवीराः प्रजाः प्रजनयन्परीहि शुक्रः शुक्रशोचिषेति दक्षिणेनाध्वर्युर्हरति सुप्रजाः प्रजाः प्रजनयन्परीहि मन्थी मन्थिशोचिषेत्युत्तरेण प्रतिप्रस्थाता ।

दक्षिणेनोत्तरेणेत्यत्रोत्तरवेदिमिति पूर्वसूत्रादनुवर्तते ।

जिन्वेथा॑ सुपथ्या मध्वा वीतमिति यजमानोऽनुमन्त्रयतेऽग्रेणाऽऽहवनीयम् ।

प्रहावित्येव शेषः । प्रकरणाद्द्विवचनलिङ्गाच्च । अवसरज्ञापनार्थमत्र याजमानविधानम् । अग्रेणाऽऽहवनीयमिति यजमानपरमेव । अन्यथा पुरस्तात्पदवैयर्थ्यापत्तेः ।

अभितो यूपं पुरस्तात्प्रत्यञ्चाववतिष्ठेते ।

पुरस्तादित्यत्र यूपस्य संनिहितत्वात्तस्यैव वचनविपरिणामेनान्वयः । आहवनीयपान्वये पुरस्तात्पदवैयर्थ्यतादवस्थ्यापत्तेः । प्रत्यञ्चौ प्रत्यङ्मुखाववतिष्ठेते अवनतौ किंचित्प्रह्वाविव तिष्ठेते इत्यर्थः ।

पश्चात्प्राञ्चश्चमसाध्वर्यवः ।

पश्चादित्यत्रोत्तरवेदेरिति शेषः । सामर्थ्यात्प्राञ्चः प्राङ्मुखाः । केषांचिदुदङ्नानि वेतिसूत्रादुदङ्मुखताऽपि कदाचित्स्यात्तां वारयितुं प्राञ्च इति । अवतिष्ठन्त इति शेषः । परिभाषयोदक्संस्थतयाऽवस्थानमेतेषाम् ।

संजग्मानौ दिव आ पृथिव्याः शुक्रः शुक्रशोचिषेत्यध्वर्युः संजग्मानौ दिव आ पृथिव्या मन्थी मन्थिशोचिषेति प्रतिप्रस्थाताऽरत्नी पात्रे वा संधत्तः ॥ १७ ॥

ब्राह्मणोक्तौ विसर्गरहितौ संजग्मानौ दिव आ पृथिव्येत्येतदन्तावेव मन्त्रावनैताभ्यां विकल्प्येते । अर्थः स्पष्टः ।

---

१ ख. 'तु' एता' ।

आयुः स्थ आयुर्मे धत्तमायुर्यज्ञाय धत्तमायुर्यज्ञपतये धत्तं प्राणः स्थः प्राणं मे धत्तं प्राणं यज्ञाय धत्तं प्राणं यज्ञपतये धत्तं चक्षुः स्थश्चक्षुर्मे धत्तं चक्षुर्यज्ञाय धत्तं चक्षुर्यज्ञपतये धत्तꣳ श्रोत्रꣳ स्थः श्रोत्रं मे धत्तꣳ श्रोत्रं यज्ञाय धत्तꣳ श्रोत्रं यज्ञपतये धत्तं तौ देवौ शुक्रामन्थिनौ कल्पयतं दैवीर्विशः कल्पयतं मानुषीरिषमूर्जमस्मासु धत्तं प्राणान्पशुषु प्रजां मयि च यजमाने चेत्यभिमन्त्रयेते ।

तो देवौ शुक्रामन्थिनाविति लिङ्गाद्ग्रहयोरेवाभिमन्त्रणं नारत्न्योः । तेनारत्निर्निर्वेषा-नेऽप्यभिमन्त्रणं ग्रहयोरेव ।

प्रोक्षितौ शकलावभ्याधत्तः शुक्रस्याधिष्ठानमसि शुक्रैषा ते समित्तया समिध्यस्वेत्यध्वर्युर्मन्थिनोऽधिष्ठानमसि मन्थिन्नेषा ते समित्तया समिध्यस्वेति प्रतिप्रस्थाता ।

जुहोतिचोदनाभावानात्र स्वाहाकारत्यागौ । मन्त्रे समिच्छब्द इन्धनमात्रवाची तथा त्वमग्ने समिधा समिध्यस इति मन्त्रगत समिच्छब्दवत् । तथा च नोहो न मन्त्रलोपः । शकलाभ्याधानमन्त्रयोः शुक्रस्य समिदसि मन्थिनः समिदसीति ब्राह्मणो-क्तमन्त्राभ्यां विकल्पेते ।

निरस्तः शण्डो निरस्तो मर्कोऽपनुत्तौ शण्डामर्कौ सह तेन यं द्विष्म इत्यप्रोक्षितौ बहिर्वेदि निरस्यतोऽप उपस्पृश्य ।

निरस्तः शण्डः, निरस्तो मर्कः, अपनुत्तौ शण्डामर्कौ सहामुनेति ब्राह्मणोक्तेन विकल्पते । ब्राह्मणोक्तमन्त्रेऽमुनेत्यस्य स्थाने तृतीयान्तं द्वेष्यनाम्नो ग्रहणम् । वेदे-र्महावेदेर्बहिरिति बहिर्वेदि उत्तरस्यां दिशि अप्रोक्षितौ शकलौ निरस्यतः । अप उपस्पृश्येत्यनन्तरं तिष्ठत इत्यध्याहार्यम् । अथवोपस्पृश्येत्यनेनापूर्वमन्यदुपस्पर्शनं विधीयते । छेदनभेदननिरासात्माभिमर्शनेष्वप उपस्पृशेदिति स्मृतितः सिद्धमेवोपस्पर्श-नम् । इदं तु निरसननिमित्तकमत्र विधीयते । तेनाध्वर्योरेकं स्मृतिसिद्धं कर्माङ्गत्वे-नान्यदिति । तथा च समानकर्तृकत्वानुपपत्तिरपि परिहृता भवति । अप उपस्पृश्य ।

१ ख. °संनिधा° । २ ख. यथा । ग. त्वया ।

**प्रातः प्रातःसावस्य शुक्रवतो मन्थिवतो मधु-श्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्य मध्यतः—कारिणां चमसाध्वर्यवो वषट्कृतानुवषट्कृता-ञ्जुहुत होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्-धुत्वा शुक्रस्याभ्युन्नीयोपावर्तध्वमिति संप्रेष्यति।**

प्रत्याश्रावणोत्तरमयमुदकस्पर्शः। एकवचनादेकेनैव प्रैषो वक्तव्यः स चाध्वर्युणैवातश्चा-ध्वर्युराश्राव्य प्रत्याश्राविते ऽमुष्मै प्रेष्येति मैत्रावरुणं प्रेष्यतीतिपरिभाषासूत्रात्। ग्रहं चमसं वाऽऽदायाऽऽश्रावयति यथा दर्शपूर्णमासयोराग्नीध्रागारे दक्षिणामुखस्तिष्ठन्नाग्नीध्रः स्फ्यं धारयन्प्रत्याश्रावयति तद्व्याख्यातमितिसूत्रादाश्रावणप्रत्याश्रावणे सर्वत्र। हे प्रशास्तः प्रातः प्रातरेव प्रातःसावस्य प्रातःसंबन्धिनः शुक्रग्रहो मन्थिग्रहश्च येषां ते मधु क्षर-न्तीति मधुश्चुतः। एवंभूतानिन्द्रायेन्द्रार्थं सोमान्प्रस्थितानुन्नयनदेशाद्धविर्धानादुत्तरवेदिं प्रतिप्रस्थितान्याज्यया यागे विनियोक्तुं होतारं प्रेष्येत्यर्थः। एवं चोत्तरवेदिं प्रापितेषु चमसेषु मैत्रावरुणः प्रैषं वदेदिति सिद्धं भवति। अमुष्मै प्रेष्येति मैत्रावरुण प्रेष्यतीति सूत्रान्मैत्रावरुणं प्रत्येव प्रैषः। पश्चान्मैत्रावरुणो होतारं याज्यां वक्तुं प्रेरयति। स होतारं चोदयतीति सूत्रात्। चोदनं प्रेरणम्। एवं सर्वत्र सामान्यतो ज्ञेयम्। मध्यतः कारिणो होतृब्रह्मोद्गातृयजमानसदस्यास्तेषां चमसाध्वर्यवो वषट्कारानुवषट्कारयोर्जु-हुत मैत्रावरुणादय आग्नीध्रान्ता होत्रकशब्दवाच्यास्तेषां चमसाध्वर्यवः प्रथमवषट्कार एव हुत्वा शुक्रो द्रोणकलशस्थः सोमस्तस्मादेकदेशं स्वल्पं होत्रकचमसेष्वभि आभि-मुख्येनोन्नीयाऽऽनीयोपं मत्समीप आवर्तध्वमागच्छध्वमिति संप्रैषार्थः।

**वषट्कृते सर्वे युगपज्जुह्वति ।**

सर्वेऽध्वर्युप्रतिप्रस्थातारौ मध्यतःकारिचमसाध्वर्यवो होत्रकचमसाध्वर्यवश्च युगपत्स-हैव वषट्कृते होत्रा वषट्कृते सति जुह्वतीत्यर्थः।

**स प्रथमः संकृतिर्विश्वकर्मा स प्रथमो मित्रो वरुणो अग्निः। स प्रथमो बृहस्पतिश्चिकित्वाꣳ-स्तस्मा इन्द्राय सुतमाजुहोमि स्वाहेत्यध्वर्युस्तस्मै मित्राय सुतमाजुहोमि स्वाहेति प्रतिप्रस्थाता ।**

मित्रायेति शाखान्तरीयः पाठः। पारक्षुद्र एव बोभयोरपि। मन्थिहोमे यद्यपि मित्रसंबन्धोऽवगम्यते तथाऽपि तौ देवा अपनुद्याऽऽत्मन इन्द्रायाजुहवुरिति वाक्यशे-षाद्याज्याया इन्द्रलिङ्गत्वादिन्द्राय सोमान्प्रस्थितान्प्रेष्येति प्रैष इन्द्रदेवतार्थत्वावगमा-

१ ख. 'प तत्स'।

चेन्द्र एव देवता भवति । मित्र इतीन्द्रस्यैव विशेषणम् । देवानामधिपत्वेन मित्रत्वात् । तथा चात्र गुणविशिष्टस्येन्द्रस्यैव देवतात्वम् । तेनात्र मित्रायेन्द्रायेदमिति मन्त्रगतदे- वतोद्देशेन त्यागो भवति । विशिष्टस्य देवतात्वेऽपि विशिष्टं शुद्धानतिरिक्तमिति- पक्षमनुसृत्यैव विशेष्यस्येन्द्रस्य देवतात्वानपायेनं न तौ देवा अपनुद्याऽऽत्मन इन्द्राया- जुहवुरितिवाक्यशेषेणेन्द्रलिङ्गकयाज्ययेन्द्राय सोमान्प्रस्थितान्प्रेष्येतिप्रैषेण च विरोधः । शुक्रामन्थिनोर्याज्यावत्तोरपि वचनान्मन्त्रवद्धोमौ । तथा चाऽऽपस्तम्बः—शुक्रामन्थिनोः प्रतिनिगद्य होम इति । शुक्रामन्थिनोर्याज्यावत्तोरपि मन्त्रवद्धोम इत्यर्थः । वषट्कारो- ऽस्तीति कृत्वा न कुर्युरपि स्वाहाकारमिति शङ्कानिवृत्तये स्वाहाकारपाठः । वषट्कारस्वा- हाकारयोर्यथा समकालता भवति तथा मन्त्रपाठः ।

**सानुवषट्कारावेके समामनन्त्यननुवषट्- कारावेकेऽन्यतरꣳ सानुवषट्कारमेके ।**

वषट्कृते जुहुतः पुनर्वषट्कृते जुहुत इत्येतेनैवोभयोः सानुवषट्कारत्वे सिद्धे सानुव- षट्कारावेके समामनन्तीति पुनर्वचनं बह्वाचार्यसंमतोऽयमेव पक्ष इतिप्रदर्शनार्थम् । अननुवषट्कारावननुवषट्काररहितावुभावपीत्येक आचार्याः । अन्यतरं शुक्रामन्थिनो- रन्यतरमेव ग्रहमनुवषट्कारसहितमेक आचार्याः । एवं च पक्षत्रयमेव सिद्धं भवति ।

**उत्तरतःपुरस्ताद्बहिष्परिध्याहवनीयादङ्गारं निर्वर्त्यैष ते रुद्र भाग इति तस्मिन्नेतं मन्थिनः सꣳस्रावं प्रतिप्रस्थाता सर्वहुतं जुहोति ।**

उत्तरत पुरस्तादी(दै)शान्यां दिशि । रुद्रसंबन्धित्वात् । रुद्रस्येशानदिगधिपतित्वा- दिति भावः । बहिष्परिध्यन्तर्वेद्यवाङ्गारनिर्वर्तनम् । स्पष्टमेतत्सूत्रान्तरे—बहिष्परिध्यन्तर्वे- द्याहवनीयादङ्गारं निरू(रु)ह्य तस्मिन्नेष ते रुद्र भाग इति प्रतिप्रस्थाता मन्थिनः संस्रावं सर्वहुतं जुहोतीति । आहवनीयादित्यपादाने पञ्चमी । अङ्गार आहुतिधारणस- मर्थोऽर्थाद्यथा घटमानयेति सामान्यत उक्तेऽच्छिद्र एव घट आनीयते तथेति द्रष्टव्यम् । निर्वर्त्य निरू(रु)ह्य । बहिष्परिधीवि परिधिसमभिव्याहाराद्धोमसंबन्धित्वाच्चाऽऽहवनी- यस्य ग्रहणे सिद्ध आहवनीयवचनं यत्र मन्थिनो होमः कृतस्तत्समीपस्थ एवाङ्गारो ग्राह्य इत्यर्थविशेषज्ञापनार्थम् । तस्मिन्निरूढेऽङ्गारे । तस्मिन्नितिवचनमाहुतिधारणसमर्थ- त्वद्योतनार्थम्, अथ वाऽदृष्टार्थमङ्गारनिरूहणं होमस्त्वाहवनीय एवेतिशङ्काव्यावृत्त्य- र्थम् । एतमितिवचनमवशेषितस्य कृत्स्नस्यैव संप्रत्ययार्थम् । तथा चावशेषितस्यैकदेश- नाशे नायं होम इति सिद्धं भवति । मन्थिग्रहणं शुक्रव्यावृत्त्यर्थम् । सूदवच्छुक्रपात्रꣳ सादयतीति वचनादेव शुक्रसंस्रावहोमव्यावृत्तौ सत्यां मन्थिग्रहणं किमर्थमिति चेत् । न । तस्य पक्षान्तरत्वेनोपपत्तिसंभवेनात्र सर्वहोमोऽपि संभाव्येत तं वारयितुं मन्थि-

ग्रहणस्याऽऽवश्यकत्वात् । संस्राव्य संस्राव्येति संस्रावम् । णमुलन्तमिदम् । प्रति-प्रस्थातृग्रहणमध्वर्युव्यावृत्तये । सर्वहुतमितिवचनं बिन्दुमात्रमपि यथा नावशिष्टं भवति तथा सर्वस्य होमः कर्तव्य इत्येतदर्थम् । सर्वः सोमो हुतो यस्यां क्रियायां यथा भवति तथेति क्रियाविशेषणम् । जुहोतिचोदितत्वात्स्वाहाकारः । सोमस्यापूर्वत्वान्न दर्विहोमधर्माः । प्रतिपत्तिकर्मैतत् । होमस्य रुद्रदेवत्यत्वादुदकस्पर्शः । रुद्रदेवत्यत्व-मेष ते रुद्र भाग इति मन्त्रवर्णात् । न तत्र रुद्रः पशूनभिमन्यत इति ब्राह्मणाच्च । आपस्तम्बोऽत्र विशेषमाह—आर्तपात्रमेतद्यन्मन्थिपात्रं यमृत्विजां द्विष्यात्तस्मै हरेदा-र्छतीहैवेति विज्ञायत इति । आर्तिकरमेतत्पात्रमतो न तानृत्विजां सकाशं नयेदायतन एव सादयेदिति भावः । ब्राह्मणेऽपि—ब्रह्मवादिनो वदन्ति कस्मात्सत्यान्मन्थिपात्रꣳ सदो नाश्नुत इत्यार्तपात्रꣳ हीति ब्रूयाद्यदश्नुवीतान्धोऽध्वर्युः स्यादार्तिमार्छेत्तस्मा-न्नाश्नुत इति ।

मध्यतःकारिणां चमसाध्वर्यवोऽनुवषट्कृते जुह्वति ।

स्पष्टम् ।

प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातुः प्र
यजमानस्य प्र सदस्यस्येति संप्रेष्यति ।

प्रैतु प्रकर्षेण गच्छत्वित्यर्थः । तत्तद्धोमानन्तर्यमेव गमने प्रकर्षः । उद्गातृचमसे प्रस्तोतृप्रतिहर्त्रोः संबन्धेऽपि जैमिनिमते सुब्रह्मण्यसंबन्धेऽपि उद्गातुरेव मुख्यत्वादेक-वचनम् । सदस्यपक्षे प्रसदस्यस्येति । प्रब्रह्मण इत्यादिषु प्रशब्दोत्तरमैतु इत्यस्या-न्वयः । ब्रह्मण इत्याद्यनन्तरं चमसशब्दस्यान्वयः । तथा चायमर्थो निष्पन्नो भवति—प्रैतु ब्रह्मणश्चमसः प्रैतूद्गातुश्चमसः प्रैतु यजमानस्य चमसः प्रैतु सदस्यस्य चमस इति । प्रैषपाठस्तु यथापठित एव ।

प्रैषार्थं विवृणोति—

सदो भक्षान्हरन्ति ।

सद इति द्वितीयैकवचनम् । सदः प्रति होत्रादिसदस्यान्तचमसस्थाः सोमा भक्षा-स्तान्हरन्ति चमसाध्वर्यव इत्यर्थः ।

सूदवच्छुक्रपात्रꣳ सादयति ।

सूदशब्दः शेषवाची, तद्वच्छुक्रग्रहस्य पात्रं सादयति । अध्वर्युरेवेति शेषः । शुक्रपात्रस्याध्वर्युसंबन्धित्वात् । आयतन एव । तथा चाऽऽपस्तम्बः—सूदवच्छुक्रपात्र-मायतने सादयित्वेति ।

होत्रकाणां चमसाध्वर्यवः सकृत्सकृ-
द्धुत्वा शुक्रस्याभ्युन्नीयोपावर्तन्ते ।

मैत्रावरुणादीनां होत्रकाणां चमसाध्वर्यवः स्वं स्वं चमसं सकृत्सकृदेव हुत्वा

शुक्रो द्रोणकलशस्थः सोमस्तस्यैकदेशं स्वल्पं स्वल्पमाभिमुख्येन स्वे स्वे चमस आनी-याध्वर्युसमीपमागच्छन्तीत्यर्थः ।

तैरध्वर्युः प्रचरति ।

तैः पुनरभ्युन्नीतैः । चमससंबन्धि यद्यत्कार्यं तत्तेषां चमसाध्वर्युसंज्ञया प्राप्तं तद्वा-रणार्थमध्वर्युग्रहणम् । अध्वर्युशब्दस्य तेषु गौणत्वान्मुख्यासंभव एव तेषां कर्तृत्व-मिति भावः । अयमर्थ उक्तो जैमिनिनाऽपि चमसांश्चमसाध्वर्यवः समाख्यानादिति सूत्रेण ।

मैत्रावरुणचमसमादाय प्रशास्तर्यजेति संप्रे-
ष्यति वषट्कृतानुवषट्कृते हुत्वा चमसाध्व-
र्यवे प्रयच्छति सदो भक्षः हरति ।

अत्र चमसमन्वारभ्याऽऽश्रावणम् । प्रत्याश्राविते तमादाय प्रैष इति विशेषोऽत्र । चमसाध्वर्यवे प्रयच्छतीतिविधानादेवार्थादध्वर्योरत्र कर्तृतायां सिद्धायां पूर्वत्राध्वर्युवचनं मैत्रावरुणचमसाध्वर्युर्होमं कृत्वाऽन्यस्मै यस्मै कस्मै चमसाध्वर्यवे प्रयच्छतीत्ययमप्यर्थः संभाव्येत तं व्यावर्तयितुम् ।

एवमुत्तरैः प्रचरति ॥ १८ ॥

एवमित्यनेन तं तं चमसमन्वारभ्याऽऽश्रावणं प्रत्याश्राविते तं तमादाय प्रैषो वषट्-कारानुवषट्कारयोर्होमश्चमसाध्वर्यवे तस्य तस्य प्रदानं तस्य सदः प्रति हरणं चातिदिश्यते ।

तत्र प्रैषेषु विशेषमाह—

ब्रह्मन्यजेति ब्राह्मणाच्छंसिनं पोतर्यजेति
पोतारं नेष्टर्यजेति नेष्टारमग्नीद्यजेत्याग्नीध्रम् ।

मैत्रावरुण यज, ब्राह्मणाच्छंसिन्यज, आग्नीध्र यजेत्येवं रूपाः प्रैषा अपि संभा-वितास्ते व्यावृत्ता भवन्ति । पोतर्यज नेष्टर्यजेत्यनयोः क्रमप्राप्तत्वाद्ग्रहणम् । अर्थः स्पष्टः । संप्रेष्यतीति शेषः सर्वत्र ।

तस्य चमसमादाय सदो गच्छति स होतुराचष्टेऽयाडग्नीदिति ।

तस्याऽऽग्नीध्रस्य । तस्य चमसमादायेतिवचनं स्वयंहरणार्थम् । सः, अध्वर्युः । तच्छ-ब्दश्चमसहस्तस्याध्वर्योः परामर्शाय । तेन प्रश्नोत्तरयोर्जातयोरेवाऽऽग्नीध्रचमसनिधानं न तु तत्पूर्वमिति सिद्धं भवति होतृग्रहणं कं प्रत्याख्यानमितिसंशयनिवृत्त्यर्थम् । षष्ठी-निर्देशः प्रश्नापेक्षतां गमयति । तेन होत्रा पृष्टः सन्नेवायाडग्नीदिति आचष्टे प्रश्नोत्तरं ब्रूयादिति अर्थः सिद्धो भवति । अयाडिष्टवानग्नीदाग्नीध्र इति वाक्यार्थः ।

---

१ ख. ङ ज. छ. ञ. कृतस्नु° ।

स भद्रमकर्यो नः सोमं पाययिष्यतीति होता प्रत्याह ।

इदं याजुषहौत्रपरम् । भक्षप्रसङ्गादादौ तदुपयोगिनीं परिभाषामाह—

होमाभिषवाभ्यामध्वर्योर्भक्षो वषट्काराच्च
वषट्कर्तॄणाꣳ समाख्यानाच्चमसिनाम् ।

अनेन भक्षनिमित्तान्युच्यन्ते । होमाभिषवाभ्यां समुच्चिताभ्यां भक्षोऽध्वर्योः । अध्वर्युग्रहणं प्रदर्शनार्थम् । तेन प्रतिप्रस्थात्रादीनामपि होमाभिषवाभ्यां समुच्चिताभ्यामेव भक्षणम् । ननु होमाभिषवाभ्यां च भक्षो नान्यतरेण कर्मणेत्येतावतैव सिद्धेऽत्र वचनं दूरत्वात्तत्परमेव समुच्चितयोर्होमाभिषवयोर्निमित्तत्वमत्र तु न स्यादिति शङ्का स्यात्तन्निवृत्त्यर्थम् । एवं चमसा येषां सन्ति ते चमसिनस्ते[षां] समाख्यानात् , होतृचमसो ब्रह्मचमस उद्गातृचमसो यजमानचमसः सदस्यचमसः प्रशास्तृचमसो ब्राह्मणाच्छंसिचमसः पोतृचमसो नेष्टृचमसोऽच्छावाकचमस आग्नीध्रचमस इति यत्तच्चमसाख्यानं कपिञ्जलचमसशब्दवत्तन्निमित्तकश्चमसिभक्ष इति । एतदेवास्य ब्रह्मचमसत्वं यच्चम्यतेऽस्मिन्सोमो ब्रह्मणेतिसंबन्धान्तरानपगमात् । यथोक्तं सूत्रान्तरे—का च तच्चमसिता स्यान्न चान्यः संबन्ध इति । वषट्काराच्च वषट्कर्तॄणामित्यत्र चकारोऽनुवषट्कारसंग्रहणार्थः । तेनानुवषट्कारोऽपि भक्षणे पृथङ्निमित्तम् । अनुवषट्कारस्यापि पृथग्भक्षणनिमित्तत्वमाश्वलायन आह—प्रतिवषट्कारं भक्षस्तूष्णीमुत्तरमिति ।

होमाभिषवकर्त्रोरध्वर्युप्रतिप्रस्थात्रोर्वषट्कारनिमित्तकभक्षणकर्तृवषट्कर्तॄणां समाख्यानिमित्तकभक्षणकर्तॄणां चमसिनां च भक्षणे क्रमविशेषमाह—

वषट्कर्ता पूर्वो भक्षयति ततोऽध्वर्युर्जघन्यश्चमसी ।

वषट्कारस्य वक्ता पूर्वः प्रथमो भक्षयति । ततस्तत्कर्तृकभक्षणानन्तरमध्वर्युः । अध्वर्युग्रहणं होमाभिषवकर्त्रुपलक्षणम् । जघने भवो जघन्यः, भक्षणे चमसी जघन्यो भवतीत्यर्थः । यत्रैकस्मिन्पात्रे वषट्कारादिनिमित्तसमवायाद्बहवो भक्षणसमवेतास्तेषु वषट्कर्ता पूर्वः प्रथमं भक्षयति नाध्वर्यवादयः । वषट्कर्तुः प्रथमभक्ष इति श्रुतेः । तस्माद्वषट्कर्ता प्रथमः सर्वभक्षान्भक्षयतीति श्रुतेर्होतुश्चित्पूर्वे हविरद्य माऽशतेति लिङ्गाच्च । निमित्तक्रमादपि वषट्कर्तुरेव प्राथम्यम् । होमाद्वषट्कारस्य पूर्वभावित्वात् । न चाभिषवस्य वषट्कारतः पूर्वभावित्वादध्वर्युप्राथम्यं कुतो नास्तीति शङ्कनीयम् । तन्मात्रस्यानिमित्तत्वात् । सर्वान्ते तु समाख्याभक्षस्तस्य समाख्यानुमेयत्वेन भक्षान्तरतो दुर्बलत्वात् । होतृप्रशास्तृब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकाग्नीधाणां स्वयं निपद्य यजतेत्यस्मिन्पक्षेऽध्वर्युप्रतिप्रस्थात्रोर्वषट्कारप्रयुक्तोऽस्ति भक्षः । यजमानस्य वषट्कारनिमित्तक एव । अतिग्राह्यहोमे प्रतिप्रस्थातृनेष्टृन्नेतॄणां होमाभिषवनिमित्तक एव ।

होतृप्रशास्तृब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकाग्नीध्राणां समाख्यानिमित्तकोऽपि । ब्रह्मोद्गातृयजमानसदस्यानां तु समाख्यानिमित्तक एव । निमित्तान्तरस्याभावात् । हारियोजने वषनान्निमित्ताभावेऽपि सर्वेषामेव भक्षः । ततोऽध्वर्युस्ततश्चमसीति लाघवाद्वक्तव्ये जघन्यशब्दग्रहणं होमाभिषवनिमित्तकाध्वर्युकर्तृकभक्षणानन्तरंकाल एव समाख्यानिमित्तः स्वस्वचमसे भक्षो न तु अध्वर्युणा कृततत्तच्चमसभक्षानन्तरमेव तत्तच्चमसिकर्तृकस्वस्वचमससंबन्धिसमाख्याभक्ष इतिज्ञापनार्थम् ।

होमयोर्वषट्कारव्यवाये भक्षव्यवाये वषट्कारयोश्च होमव्यवाये प्रतिशेषं प्रतिग्रहणं च भक्षः ।

होमयोर्मध्ये वषट्कारव्यवायो नाम होमतमकालं वषट्कारोच्चारणाभावः । भक्षव्यवायो भक्षकाले मन्त्रोच्चारणाभावः । वषट्कारयोर्मध्ये होमव्यवायो नाम वषट्कारोच्चारणकाले होमाभावः । तत्रोभयत्राप्युभयोः शेषं शेषं प्रतीति प्रतिशेषम् । ग्रहणं ग्रहणं प्रतीति प्रतिग्रहणम् । चकारः प्रतिशेषमित्येतेन समुच्चयार्थः । होमयोर्वषट्कारयोरित्युभयत्रापि द्विवचनं द्विदेवत्यहोमावसराभिप्रायम् । तेन बहुत्वेऽपीदं भवति । होमशब्देन याग एवोच्यते । वषट्कारसांनिध्यात् । व्यवायशब्दग्रहणान्नैमित्तिकमेवेदं प्रतिशेषप्रतिग्रहणभक्षणम् ।

नानागृहीतयोश्च समवाये ।

अत्र चकारोऽप्यर्थकः । नानागृहीतयोः पृथक्पृथग्गृहीतयोर्ग्रहयोरेकत्रैकस्मिन्काले गृहीतयोरपि होमयोर्वषट्कारव्यवाये भक्षव्यवाये वषट्कारयोश्च होमव्यवाये प्रतिशेषं प्रतिग्रहणं च भक्ष इत्ययं विधिर्भवतीत्यर्थः । यथा प्रतिनिग्राह्यद्विदेवत्यमरुत्वतीयादिषु । एतत्प्रदर्शयितुमेव प्रायश्चित्तप्रकरणं परित्यज्यात्र वचनं सांनिध्याद्विदेवत्यमात्रविषयकम् ।

न वैश्यराजन्ययोः सोमभक्षणं विद्यते ।

अल्पाच्तरत्वाद्वैश्यशब्दस्य पूर्वनिपातः ।

राजन्यवैश्ययोः सोमभक्षणाभावे प्रकारान्तरमाह—

यद्यब्राह्मणः सोमं पिपासेन्न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य यदन्यांश्चमसानुन्नयत्यथैतं यजमानचमसमत उन्नयति यदन्यांश्चमसाञ्जुहृत्यथैतस्य दर्भतरुणेनोपहत्यान्तःपरिध्याहवनीयादङ्गारं निर्वर्त्याहं त्वदस्मीति जुहोति यदन्यांश्चमसान्भक्षयत्यथैतस्य चमसस्य यजमानो भक्षयति ।

यदि पिपासेदित्यनेन मुख्यः पक्षो भक्षणाभाव एव राजन्यवैश्ययोः । पानेच्छा

१ ख. 'रमेकका°' । २ ख 'निर्भक्ष्य' ।

चेत्तदाऽयं प्रकारः। पानानिच्छायां नेति त्वर्थात्। यदि राजन्यं वैश्यं वा याजयेत्स यदि सोमं बिभक्षयिषेदित्यापस्तम्बः। एतच्च सूत्रकारेण यजमानशब्देन सूचितमेव। अब्राह्मणो ब्राह्मणभिन्नः क्षत्रियो वैश्यो वा। यद्यपि अब्राह्मणः शूद्रोऽपि तथाऽपि तस्याध्ययने तद्विहितकर्मसु चाधिकाराभावादेव व्यावृत्तिः। अशूद्राणामदुष्टकर्मणामुपनयनमाध्यायेयं फलवन्ति च कर्माणीति धर्मसूत्रे शूद्रव्यतिरिक्तानामेवाधिकारस्योक्त्या तस्माच्छूद्रो यज्ञेऽनवक्लृप्त इति श्रुतेश्च शूद्रस्य यागनिषेधात्। जैमिनिनाऽपि चातुर्वर्ण्यमविशेषादिति सूत्रेण निषेध उक्तः। निषादरथकारयोस्तु वचनादधिकारः। किमिति वचनं न कुर्यान्नास्ति वचनस्यातिभार इति। न्यग्रोधो वटस्तस्य स्तिभिन्यः फलानि अङ्कुरा वा तान्क्रयकाले क्रयधर्मेणाऽऽहृत्याऽऽप्यायनकाल आप्यायप्रणयनकाले प्रणीयोपावहरणकाल उपावहृत्य राजाभिषवोत्तरमभिषवधर्मेण सम्यगन्यस्मिश्चर्मणि अन्यस्मिन्नपरेऽन्यैर्ग्रावभिः पिष्ट्वा दधन्यालोऽड्य सोमवद्दधन्यालोडितं सोमरसं तदर्थककलशेषु अन्येन दशापवित्रेण संपीड्य संभृत्योन्नयनकाले दधन्युन्मृष्टात्पात्रे संभृतात्सोमरसाद्यजमानचमसमुन्नीय वषट्कारे हुतेषु सर्वेषु चमसेषु सव्यहस्ते ग्रहं गृहीत्वाऽनन्तरमुन्नीतस्य चमसस्यैकदेशं दर्भतरुणेन गृहीत्वाऽन्तःपरिध्याहवनीयादुत्तरतो होमाय समर्थमङ्गारं निरू(रु)ह्याहं त्वदस्मि मदसि त्वमेतदित्यनेन मन्त्रेण जुहोति। लोककृज्जातवेद इति मन्त्रान्तः। कृत्स्नपाठाभावाद्वाक्यशः पठितैवेयमाहुतिः। जुहोतिचोदितत्वात्स्वाहाकारो मन्त्रान्ते। जातवेदा अग्निर्देवता लिङ्गात्। भक्षणकाले सर्वैर्भक्षेषु भक्षितेषु अनन्तरं यजमानो भक्षयतीत्यर्थः। बाह्वृच्ये केषांचित्सोमधर्माणां प्रत्यक्षाम्नानात्कलशग्रावचर्मदशापवित्रादीनां पात्राणां चोक्तत्वाच्च सोमधर्माणां लाभः। तेन क्रयकाले क्रयधर्माः। ओहनं न भवति। एतस्य केवलादृष्टार्थत्वात्। आप्यायनकाल आप्यायनं तु भवत्येव। एतस्य दृष्टार्थत्वात्। प्रणयनोपावहरणयोरपि सांनिध्यावस्थानाभिषवानुकूलत्वरूपदृष्टार्थत्वादेते अपि भवत एव। अभिषवकालेऽभिषवधर्माश्च भवन्तीति याज्ञिकाः। मीमांसकास्तु—अभिषवादिसंस्कारा नैमित्तकस्यापि फलचमसस्य समानविधाना ज्योतिष्टोमापूर्वसाधनत्वाविशेषादिति प्राप्ते नित्यसंस्काराणामनित्यफलचमसद्वारत्वायोगान्नैमित्तिकस्य तत्कालेऽनुपस्थितत्वाच्च न समानविधानत्वम्। तथा च जैमिनिः—नैमित्तिकमतुल्यत्वादसमानविधानं स्यादिति,[इति]प्राहुः। यद्यदेत्यर्थः। तेन यस्मिकाल इत्यर्थो भवति। यदाऽन्यांश्चमसानुन्नयतीति पाठस्तु सरल एव। एवमुत्तरयोरपि पाठद्वयं द्रष्टव्यम्। अथशब्द आनन्तर्यार्थः। तेन सर्वचमसोन्नयनानन्तरमेवोन्नयनं न स्वस्थाने न च तत्पूर्वमिति सिद्धं भवति। एतच्छब्देन फलचमसः परामृश्यते। नियमार्थोऽयं परामर्शः। फलरससंबन्धवान्यजमानचमसस्तमेवानन्तरमुन्नयति न नित्यं यजमानचमसमिति। अतोऽस्मात्फलरसात्। उत्तरयोरप्येतच्छब्दयोरिदमेव प्रयोजनम्। तरुणशब्दोऽग्रवाची। दर्भतरुणाभ्यां प्रत्यस्ये-

स्यत्र तथैव प्रसिद्धेः। एकवचनादेक एव दर्भः। साहित्ये तृतीयेयम्। तथा चाय- मर्थो भवति—दर्भतरुणसहितेन दर्व्याकारपात्रेण जुहोतीति। अथवा तरुणशब्दो दार्ढ्यार्थकः। तेन दृढेन दर्भेणेत्यर्थो भवति। अस्मिन्पक्षे न दर्व्याकारं पात्रं होमसाधनं किं तु दृढदर्भ एव। अस्मिन्पक्षे होमे स्रावणमात्रम्। अथवा तरुणशब्दः स्तम्बवाची। तथा च दर्भस्तम्बेन जुहोतीत्यर्थो भवति। अस्मिन्पक्षेऽपि स्रावणमात्रमेव। यत्र यत्र वषट्कृते यागस्तत्र तत्र तत्स्थान इयमाहुतिः। कम्पने तु नेयमाहुतिः किंतु कम्पनमेव। एतस्येति षष्ठी सशेषनाराशंसमसाभिप्रायिका द्रष्टव्या। तेन यत्र सोमस्य सर्वभक्षणमितरेषां तत्रैतस्यापि सर्वभक्षणमेव। तत्र सोमलिङ्गानां मन्त्राणामूहः प्रकृतावपि नित्यविकारत्वात्। नैमित्तिकानामनूहो बाह्वृच्ये यदत्र शिष्टमित्यादिभिः सोमलिङ्गकैर्मन्त्रैर्भक्षणादिविधानात्। परोक्षमिव वा एष सोमो राजा यन्न्यग्रोध इति सोमशब्देन वटरसस्य स्तवनाच्च।

द्विदेवत्यान्भक्षयन्ति।

प्रकृतप्रयोगाधिकारार्थमिदं सूत्रम्।

बहुवचनग्राह्याः क इत्याकाङ्क्षायामाह—

होताऽध्वर्युः प्रतिप्रस्थाता च।

प्रतिप्रस्थातुः संपातद्वारकः संबन्ध इति भावः।

क्रमं प्रदर्शयितुमाह—

एवमनुपूर्वाः।

एवमेवानुपूर्वः क्रमो यत्र त एवमनुपूर्वाः। अयमेव क्रमः सार्वत्रिको भवति नत्वे- तदर्थ एवेति परिभाषैवेयम्। उपह्वाने भक्षणे चायमेव क्रमः सर्वत्रेत्यर्थः।

अन्योन्यस्मिन्नुपहवमिच्छन्ते।

अन्योन्यमित्यव्ययत्वेनापेक्षितेऽन्योन्यस्मिन्निति सप्तम्यन्तः प्रयोगश्छान्दसः। अन्यो- न्यं परस्परमुपह्वानमिच्छन्त इच्छेयुः कुर्युरित्यर्थः। नानुपहूतेन सोमः पातवै सोमपीथेन ह व्यर्धुको भवतीति निषेधादिति श्रुतिर्हेतुरत्र ज्ञेया। परस्परानुज्ञापनमुपहवस्तमकृत्वा न सोमः पातव्य उपहवरहितेन सोमपीथेन सोमपानेन व्यर्धुको विगतार्धिशीलो भवतीत्यर्थः।

उपहवमन्त्रस्वरूपमाह—

उपह्वयस्वेत्यामन्त्रणः।

मन्त्र इति शेषः पुंलिङ्गात्। आमन्त्र्यते संमुखो क्रियते प्रतिभक्षिता येन स मन्त्र आमन्त्रण इत्यर्थः। यस्योपह्वानं तस्य कर्मप्रयुक्तनामग्रहणं कर्तव्यमित्यर्थात्। अन्यथा

१ ख. ज्ञेयः।

कस्योपह्वानं क्रियतेऽनेनेति न ज्ञायेत। स्पष्टमेतदुक्तमापस्तम्बेन—अमावमावुपहूय- स्वेति कर्मनामधेयेनाऽऽमन्त्रयत इति। तत्र प्रशास्तरुपह्वयस्व ब्रह्मन्नुपह्वयस्वेत्येवाऽऽ- मन्त्रणम्। प्रशास्तर्यज ब्रह्मन्यजेति लिङ्गात्।

प्रतिवचनमन्त्रस्वरूपमाह—

उपहूत इति प्रतिवचनः।

प्रत्युच्यतेऽनेनेति प्रतिवचनः पूर्ववन्मन्त्र इत्येव शेषः।

यत्र क्व चैककाले भक्षयेयुरन्योन्यस्मिन्नुपहवमिच्छेरन्।

एकः कालः समानकालः। तथा चाऽऽपस्तम्बः—ये समाने प्राये भक्षयन्ति तेषू- पहवमिच्छन्त इति। प्रकर्षेणेतीति व्युत्पत्त्या प्रायशब्दः कालपरः। यत्र क्व चैक- काल इति वचनात्। द्विदेवत्यादिषु भिन्नमेव निमित्तमुपहवस्यास्तीति गम्यते। तच्चैक- पात्रत्वरूपत्वम्। तथा चाऽऽपस्तम्बः—ये चैकपात्रमिति। पात्रशब्देन तत्स्थः सोमो व(ल)क्ष्यते। एकं पात्रं यस्येति बहुव्रीहिर्वा। एकपात्रस्थं सोममित्यर्थः। समा- ख्याभक्षणमतिग्राह्यभक्षणं च कालोदाहरणम्। एकपात्रोदाहरणानि द्विदेवत्यादीनि यथायथं द्रष्टव्यानि। अत्राऽऽचारशेषभक्षणम्। प्रतिभक्षितुरभावेऽप्युपहवोऽत्र। नानुपहूतेन सोमः पातव्य इति निषेधात्। स च सांनिध्याद्धोतुः।

द्विरैन्द्रवायवं भक्षयति सकृत्सकृदितरौ।

अनुप्रस्तुवन्तौ पात्रमित्यापस्तम्बः। द्विर्वषट्कारद्विर्होमाच्च। सकृत्सकृदितरौ मैत्रा- वरुणाश्विनौ। सकृद्वषट्कारात्सकृद्धोमाच्चेति भावः। अत्राऽऽपस्तम्बेन द्विरैन्द्रवायवं भक्षयतो भक्षयन्ति भक्षयतीति वा सकृत्सकृदितरावित्युक्त्वा विकल्पितपक्षत्र(द्व(?)) यस्य तद्येषां भक्षयत इत्यध्वर्युर्होता चेत्यर्थो भक्षयन्तीति स म इत्यर्थ इति स्वयमेव व्याख्यानं *कृतम्। तेन यो योऽत्र भक्षयिता स स भक्षयतीत्येकवचनार्थः सिद्धो भवति। भक्षयन्तीति पाठे तु प्रतिप्रस्थातुर्द्विर्भक्षणमप्याप्तमपि। एतस्मादेव बहुवचन- बलात्। द्विवचनान्तपाठस्य तस्मत्सूत्रे नैव शङ्काऽस्ति। सकृत्सकृदिति वीप्सा ग्रह- द्वित्वानुसारेण।

पुरस्तादैन्द्रवायवं प्राणेषूपनिग्राहं पुरस्ता-
न्मैत्रावरुणं चक्षुषोरुपनिग्राहं सर्वतः-
परिहारमाश्विनं श्रोत्रयोरुपनिग्राहम्।

भक्षयति भक्षयन्तीति वा पूर्वपाठानुसारेणात्राप्यनुवर्तते। सर्वतःपरिहारमित्याश्विने विशेषविधित्सया पूर्वयोर्ग्रहयोः पुरस्तादित्यनूदितं ब्राह्मणे। तस्यैवानुकरणं करोति

---

* अत्र सर्वपुस्तकेषु कृतवानिति पाठो विद्यते स प्रामादिक इति ज्ञेयम्।

---

१ क. 'स्य तस्मात्मू'। ख. 'स्य तत्सू'।

सूत्रकारः पुरस्तादैन्द्रवायवमित्यादिना । प्राणेष्विति बहुवचनान्नासिकाद्वयस्य मुखस्य च ग्रहणम् । नासिकाद्वयनिरोधे स्पष्टवागुच्चारणं नैव जायत इति प्रसिद्धम् । अतस्तयोरपि वागुच्चारणानुकूलत्वाद्ग्रहणम् । न च तस्मात्पुरस्ताद्वाचा वदतीति श्रुतेः प्राणशब्देन मुखस्यैव ग्रहणं बहुवचनं तु पूजार्थं तेनाप्युपपद्यत एवेति वाच्यम् । अगतिकगतिकां पूजार्थतां विना निर्वाहे तत्कल्पनाया अनुचितत्वात् । णमुल्निर्देशादेकैकस्य ग्रहणम् । तच्चोर्ध्वमुपहवादित्युक्तमाश्वलायनेन । यथाऽऽहर्य उपहूयस्वेत्युक्त्वाऽवघ्राय नासिकाभ्यामिति । सर्वतःपरिहारं सर्वं शिरः परिहृत्य परिहृत्येति । इदमपि णमुलन्तम् । तेनात्रापि वारद्वयं परिहरणक्रिया भवति ।

सर्वान्भक्षयित्वा नानुत्सृजन्त्याऽवनयनात् ।

सर्वानित्यनन्तरं स्वस्वकाल इति शेषः । नानुत्सृजन्त्यावनयनादित्यत्र पूर्वोऽवभिभक्षणं सर्वेषु । तथा चाऽऽपस्तम्बः—अनुत्सृजन्तौ पात्रं द्विरैन्द्रवायवं भक्षयतो भक्षयन्ति भक्षयति वा सकृत्सकृदितराविति ।

सर्वेषाꣳ संपातान्होतृचमसेऽवनीय पुरोडाशशकलमैन्द्रवायवस्य पात्रेऽवदधाति पयस्यां मैत्रावरुणस्य धाना आश्विनस्य तानि दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्याꣳ सादयत्यातृतीयसवनात्परिशेरते ।

अवधानं निक्षेपणम् । पयस्याऽऽमिक्षा । मैत्रावरुणस्याऽऽश्विनस्येत्युभयत्र पात्रेऽवदधातीत्यनुवर्तते । वर्तनी शकटचक्रमार्गः । प्राक्चक्रमेवाऽऽसादनमत्र । चक्रमार्गसादनानुगुणत्वात् । आतृतीयसवनादित्यत्राऽऽङभिविधौ । अत्र तृतीयसवनशब्देनैकया च दशभिश्च स्वभूत इत्येतस्याꣳ शस्यमानायां प्रायुजो विमुञ्चेनामिति प्रतिप्रस्थाता द्विदेवत्यपात्राणि विमुच्यापरया द्वारोपनिर्हृत्य मार्जालीये प्रक्षाल्य पूर्वया द्वारा प्रपाद्याऽऽयतनेषु सादयतीतिवक्ष्यमाणप्रतिपत्त्यनन्तर्नीयसवनपदार्थोऽत्र । परिशेरत इति बहुवचनं हविर्विशिष्टपात्रत्रित्वात् । पात्रेष्वप्रक्षालितेष्वेव हविस्त्रिनिधानं प्रक्षालनावचनात् । तान्येवमरिक्तान्येव परिशेरते सादितानि भवेयुः । यज्ञस्य संतत्या इति ब्राह्मणम् ।

निरवदाय होत्र इडामादधाति ।

निरवदानं ग्रहणम् । आधाति प्रयच्छतीत्यर्थः ।

उपहूयमानामुपोद्यच्छन्ते चमसाश्चमसाध्वर्यवः ।

उपहूयमानामिडाम् । उप समीप इडायाः समीप उद्ध्वं यच्छन्ते नियमयन्ति चमसांस्तं तं चमसं स स चमसाध्वर्युः ।

१ ख. पूर्ववद्भिर्म° ।

होतृचमसमास्पृष्टं धारयति ।

आस्पृष्टमीषत्स्पृष्टं तदीयचमसमाध्वर्युः । पूर्वत्र चमसेषूर्ध्वधारणमात्रं न तु स्पर्शः । होतृचमसे तु स्पर्श इति विशेषः ।

उपहूतां प्राश्नन्ति ये प्रकृतौ ।

ये प्रकृतावित्यनेन प्राशननिवृत्तिः क्रियते प्रतिप्रस्थातृमैत्रावरुणयोः संबन्धसत्त्वेऽपि ।

इडाशकलमच्छावाकाय निदधाति प्राशितायां मार्जयित्वा ।

प्राशितायामिति वचनमिडाशकलस्याच्छावाकार्थनिधानं प्राशनात्पूर्वमेव कर्तव्यमितिक्रमबोधनार्थम् । पूर्वसूत्रं क्रमबोधकं न भवति किंतु सामान्यप्रतिज्ञामात्रमनेन क्रियते । यजमानपञ्चमा इडां प्राश्नन्ति मार्जनादित्यनेनैवाङ्गत्वसिद्धौ पुनरत्र वचनमिडाप्राशनोत्तरमेव मार्जनं न तु मध्येऽन्यस्य प्राशनप्राप्तौ तदुत्तरम् । एतेन ज्ञायते मध्येऽन्यस्य प्राशनमप्यस्तीति । तच्च हविरुच्छिष्टस्य । तच्चोक्तमाश्वलायनेन—हविरुच्छिष्टं सर्वे प्राश्नन्तीति । परं तु तच्चतुर्णां प्राकृतानामेवर्त्विजां न त्वन्येषाम् । आश्वलायनसंबन्धिनां तु भवत्येव तत्सूत्रानुरोधात् ।

वाजिनेन चरति यथा वैश्वदेवे ॥ १९ ॥

अध्वर्योर्मुख्यत्वादेकवचनं न त्वेतत्संबन्धीतरर्त्विजां निवृत्तिः । यथा वैश्वदेव इत्यतिदेशात् । चरन्तीति पठन्त्यनुजुरेव । अत्रोत्कर्षो न भवति । तथा चाऽऽपस्तम्बः—न ह्येषां प्रासङ्गिकं वैशेषिकमुत्कर्षतीति । एतेषां पुरोडाशानां प्रासङ्गिकं प्रसङ्गोपजीव्यं पशुप्रयुक्तमनूयाजादि तदुत्कृष्यमाणं नैषां वैशेषिकं वाजिनचर्यायुत्कर्षति । कुतः, पाशुकैरनूयाजादिभिः पुरोडाशविशेषधर्माणां वाजिनचर्यादीनामसंबन्धादसति च संबन्धे तैः क्रमक्लृप्त्ययोगाच्च । उक्तं जैमिनिनाऽपि—प्रासङ्गिकं नोत्कर्षेदसंयोगादिति । असंबन्धाद्वाजिनचर्यादीनामसंबन्धादित्यर्थः ।

सवनीयानां मार्जनप्रभृतीनि कर्माणि प्रतिपद्यते यथा निरूढपशुबन्धे पशुपुरोडाशस्य ।

सवनीयानां पिष्टलेपफलीकरणप्रभृतीनि कर्माणि प्रतिपद्यत इत्येतावतैव सिद्धे मार्जनप्रभृतीनि कर्माणि प्रतिपद्यत इति पुनर्मार्जनग्रहणं वाजिनप्रचारानन्तरमपि पक्षे मार्जनकल्पोऽस्तीतिज्ञापनार्थम् ।

यथाचमसं चमसिनो भक्षयन्ति तेषां व्याख्यातो भक्षमन्त्रः ।

चमसमनतिक्रम्येति यथाचमसम् । तत्र चमसः स्वस्य स्वस्य । तेषां चमसिनां व्याख्यातो भक्षे होत्रादिना सार्वत्रिकमेके समामनन्तीत्यन्तेन सूत्रेणोक्तः । व्याख्यातो

भक्ष इति वक्तव्ये मन्त्रग्रहणं वैकल्पिकयोर्मन्त्रयोर्यो मन्त्रोऽध्वर्युणा परिगृहीतः स एव होत्राऽपि परिग्रहीतव्य इत्येतदर्थम् ।

सर्वेषां प्रथमो होता सकृत्सकृद्भक्षयति द्विः स्वे चमसे पुनः ।

सर्वेषां भक्षकर्तॄणां मध्ये प्रथमः पूर्वं होता सर्वचमसानां सकृत्सकृद्भक्षणं करोति स्वचमसे द्विः । पुनःशब्दोऽवधारणे द्विः स्वे चमस एवेत्यर्थः । अनुवषट्कारस्य चमसगतसोमसंस्कारकत्वात्तस्य चानुवषट्कारनिमित्तभक्षणस्य स्वसत्ताकचमसभक्षण एव प्रवृत्तेरुचितत्वादिति भावः । प्रातःसवनमाध्यंदिनसवनयोर्होतृचमसे प्रतिभक्षितुरभावात्तन्त्रेण समाख्याभक्षस्य सिद्धिः ।

अध्युन्नीतानामध्वर्युर्द्विर्भक्षितानां सकृत्सकृद्भक्षयति ।

द्विर्भक्षितानामित्यत्र प्रशास्त्रादिभिश्चमसिभिर्वषट्कारनिमित्तमनुवषट्कारनिमित्तं च द्विवारं भक्षितानां चमसस्थरसानां सतामध्वर्यु(र्यो)र्होमाभिषवोभयनिमित्तकं सकृत्सकृद्भक्षणमित्यर्थः ।

तृतीयं होत्रका अन्ततः ।

होमाभिषवाभ्यामध्वर्योर्भक्षो वषट्काराच्च वषट्कर्तॄणां समाख्यानाच्चमसिनां वषट्कर्ता पूर्वो भक्षयति ततोऽध्वर्युर्नेतश्चमसीत्यनेन भक्षयतःकारिणां होत्रकाणां च समाख्याभक्षः प्राप्यते । तृतीयं होत्रका इत्यत्र तृतीयग्रहणं यदि मध्ये प्रतिभक्षिता तदा समाख्याभक्षः पृथग्भवति अन्यथा तन्त्रं वषट्कारनिमित्तकभक्षसमाख्याभक्षयोर्होत्रकाविषय इतिज्ञापनार्थम् । होत्रकाणामत्र पृथग्भवति प्रतिभक्षितृभवत्वात्तन्त्रमेतेषाम् । होतुस्तु नात्र समाख्याभक्षः पृथक्प्रतिभक्षितुरभावात्तस्य तु आद्ययोः सवनयोः प्रतिभक्षितुरभावात्समाख्याभक्षस्तन्त्रेणैव । यत्र यत्र प्रतिभक्षितुरभावस्तत्रोपहूयैव भक्षणम् । अन्ततोऽन्ते ।

असभक्षयित्वाऽऽप्यायस्व समेतु त इत्याप्याययन्ति ते नाराशंसा भवन्ति ।

चमसिन इति शेषः । सोमेन वसतीवरीभिर्वा वर्धनमाप्यायनम् । आप्याययतीति लिङ्गात् । मन्त्रेणाभिमर्शनमित्यन्ये । तथाऽभिमृशेरन्नित्याश्वलायनः । कात्यायनस्त्वाह— आप्यायस्व समेतु त इति द्वाभ्यां चमसानालभन्ते सोमं वा सिञ्चतीति । बौधायनस्तु वसतीवरीः प्रकृत्याऽऽहृताभिराप्याययेत्ताभिरभिषुणुयादिति । ते नाराशंसा भवन्ति । एवमाप्यायिताश्चमसा नराशंसदेवतात्वान्नाराशंससंज्ञां लभन्त इत्यर्थः ।

---

१ क. ग. प्रथमं° । २ क. °क्तव्रात्मप° ।

तान्दक्षिणस्य हविर्धानस्य पश्चादक्षमुद्गायतान्सा-
दयत्यन्तरा नेष्टुराग्नीध्रस्य च चमसौ सादयति ।

तान्नाराशंसान् । अन्यत्स्पष्टम् । नेष्टुराग्नीध्रस्य च चमसावन्तरा सादयति । अत्रान्तराशब्दोऽन्तरालवि.शिष्टपरो लक्षणया । इदं च वैशिष्ट्यं नेष्ट्राग्नीध्रचमससंनिष्टम् । अन्तरान्तरेणयुक्त इति द्वितीया ।

उपविशत्यच्छावाकोऽग्रेण स्वं धिष्णियं बहिःसदसम् ।

अग्रेण स्वं धिष्णियं बहिःसदसमित्यनेनैनवर्थः सदोबहि.प्रदेशपर्यन्तमेवात्र वचनादूह्यते ।

तस्मै पुरोडाशशकलमादद्दाहाच्छावाक वदस्व यत्ते वाद्यमिति ।

आददिदित्यत्र पाठः । आदधदिति प्रमादपाठः । प्रयच्छन्निति तदर्थः । अच्छावाक यत्ते वाद्यं वक्तुं योग्यं तद्वदस्वेति ।

उपो अस्मान्ब्राह्मणान्ब्राह्मणा ह्वयध्वमित्य-
च्छावाकेनोच्यमानेऽच्छावाको वा अयमुपह-
वमिच्छते तं होतरुपह्वयस्वेति संप्रेष्यति ।

होतारं संप्रेष्यति । प्रैषे होतृशब्दश्रवणात् । अत्रप्रैषशब्देनाऽऽवेदनमुच्यते ।

यत्रैनं होत्रोपहूयमानं जानाति तस्मिन्कालेऽच्छा-
वाकचमसमादायोन्नीयमानायानुब्रूहीति संप्रेष्यति ।

यत्र यस्मिन्काल एनमच्छावाकं होत्रोत नो गाव उपहूता उपहूत इत्यनेन मन्त्रेणोपहूयमानमध्वर्युर्जानाति तस्मिन्कालेऽच्छावाकचमसं गृहीत्वोन्नीयमानायानुब्रूहीत्यच्छावाकं संप्रेष्यति । अत्रान्नयनकर्ता तदीयचमसाध्वर्युरेव नोन्नेता । उक्तं चाऽऽपस्तम्बेनोन्नीयमानायानुब्रूह्यच्छावाकस्य चमसाध्वर्यो उन्नयस्वोभयतःशुक्रं कुरुष्वेति प्रैषमुखेनै( णै )व । तेनोन्नेतुरुन्नयनकर्तृत्वमत्र न भवति । परिप्लवया द्रोणकलशादुपस्तीर्य घृतमुत उन्नीय द्रोणकलशादभिघारयति सर्वचमसानामेष कल्प इतिसूत्रादयं विधिरस्मिंश्चमसेऽपि ।

तस्मिन्परिहितेऽच्छावाक यजेति संप्रेष्यति वष-
ट्कृते जुहोत्यनुवषट्कृते हुत्वा हरति भक्षम् ।

अच्छावाकेन तस्मिन्नुन्नीयमानसूक्ते परिहिते सति । आश्रावणप्रत्याश्रावणादिकं सौमिकपरिभाषासूत्रतः । अन्यत्स्पष्टम् ।

---

१ क. ज. ञ. भ. ढ. °दधदा° ।

तेन न समं भक्षयति।

भक्षनिमित्ते सत्यपि वचनादध्वर्योर्भक्षनिवृत्तिः।

नास्मिन्नुपहवमिच्छते ।

अस्मिन्नध्वर्यावच्छावाक उपहवं नेच्छते।

यद्यस्मिन्नुपहवमिच्छेत भक्षयेत्येव ब्रूयात्।

यदि अस्मिन्नध्वर्यावच्छावाक उपहवमिच्छेत तदाऽध्वर्युर्भक्षयेत्येव ब्रूयान्नोप-हूत इति।

भक्षिताप्यायितमन्तरा नेष्टुराग्नी-ध्रस्य च चमसौ सादयति ।

उपहवनिषेधादुपहवाभावेऽनुपहूतेन सोमो न पातव्य इति निषेधेन भक्षस्यैवा-भावप्रसक्तौ तत्संबन्धित्वेनाऽऽप्यायनस्याप्यभावप्रसक्तौ तन्निवारणार्थमिदं भक्षिता-प्यायितवचनम्। भक्षिताप्यायितमच्छावाकेन स्वचमसं नेष्टुराग्नीध्रस्य च चमसावन्त-रैतयोश्चमसयोमध्ये सादयति। क्रमप्राप्तं तस्य तदेव स्थानमिति भावः।

एतदेवात ऊर्ध्वमच्छावाकचमसस्य स्थानम् ॥ २० ॥

इति हिरण्यकेशिसूत्रेऽष्टमप्रश्ने सप्तमः पटलः ।

---

एतदेव स्थानमत ऊर्ध्वमित आरभ्य तृतीयसवनान्तम्। अन्यत्स्पष्टम्। अयम-च्छावाको बह्वृच एव कार्यः। तथा चैतरेयब्राह्मणे– यो ब्राह्मणो बह्वृचो वीर्यवान्स्या-त्सोऽच्छावाकीयां कुर्यादिति।

इत्येकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्नियुक्तवाजपेययाजिसर्वतोमुखया-जिद्विसाहस्राग्नियुक्तपौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथ-दीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसू-त्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंताप-शामिकायां ज्योत्स्नाख्यायां वृत्तावष्टमप्र-श्नस्य सप्तमः पटलः ॥ ७ ॥

---

अथाष्टमप्रश्नेऽष्टमः पटलः।

---

ऋतुग्रहैः प्रचरतो द्वादशभिस्त्रयोदशभिश्चतुर्द-शभिर्वा द्वादशसु सर्वानाना जुहुतस्त्रयोदशस्वन्त्य-तरौ सह चतुर्दशसु सह प्रथमौ सहोत्तमौ।

---

१ क. ख. ङ. भक्षयन्ति। २ क. ग. ङ. °यितामन्त°।

अथोदशस्वन्यतरसावित्यनेन सहशब्दस्यान्वयः। सहग्रहणे पारिप्लवयाऽध्वर्युकर्तृकं ग्रहणम्। उदञ्चनेन प्रतिप्रस्थातृकर्तृकं यद्यध्वर्युः प्रतिग्रहीता। पारिप्लवाद्द्वयस्याभावात्। इतरथा विपरीतम्। अन्यत्स्पष्टम्। तत्र पक्षत्रयप्रयोगास्त्वित्थम्—तत्राऽऽद्यपक्षे मधुश्चेत्यध्वर्युर्माधवश्चेति प्रतिप्रस्थाता शुक्रश्चेत्यध्वर्युः शुचिश्चेति प्रतिप्रस्थाता नभश्चेत्यध्वर्युर्नभस्यश्चेति प्रतिप्रस्थाता। एतेषु षट्सु ऋतुना प्रेष्येति प्रैषः। पात्रमुखविपर्यासः। तत इषश्चेत्यध्वर्यु, ऊर्जश्चेति प्रतिप्रस्थाता, सहश्चेत्यध्वर्युः, सहस्यश्चेति प्रतिप्रस्थाता। एतेषु चतुर्षु ऋतुभिः प्रेष्यति प्रैषः। पात्रमुखविपर्यासः। ततस्तपश्चेत्यध्वर्युस्तपस्यश्चेति प्रतिप्रस्थाता। एतयोर्ऋतुना प्रेष्येति प्रैषः। एतदनन्तरमत्र सहग्रहणं सहहोमश्च कुत्रापि नास्ति। भक्षक्रमस्तु होत्रासहाध्वर्युरेव न प्रतिप्रस्थाता पोत्रा सह प्रतिप्रस्थाता नेष्ट्रा सहाध्वर्युः, आग्नीध्रेण सह प्रतिप्रस्थाता ब्राह्मणाच्छंसिना सहाध्वर्युः प्रशास्त्रा सह प्रतिप्रस्थाता। एतदनन्तरं पात्रमुखविपर्यासः। होत्रा सहाध्वर्युः पोत्रा सह प्रतिप्रस्थाता नेष्ट्रा सहाध्वर्युः, अच्छावाकेन सह प्रतिप्रस्थाता पोत्रा[1] सहाध्वर्युः पृथगेव। ततो होत्रा सह हविर्धान एव प्रतिप्रस्थाता पृथगेव। अस्मिन्नेव पक्षे स्वयं वा निषद्य यजत इत्येतत्पक्षस्वीकारश्चेत्तदाऽन्तिमे याज्ये होतुर्न भवतः। तत्प्रयुक्तो भक्षश्च नास्ति। अध्वर्योर्होतरेतद्यजेत्यस्य लोपः। अध्वर्युप्रतिप्रस्थातारौ हविर्धानयोर्मध्ये प्राङ्मुखावुपविश्य ग्रहावन्यहस्ते दत्त्वोभावाश्वलायनोक्तरीत्या याज्यामुक्त्वाऽध्वर्युरुत्तिष्ठेत्ततः प्रतिप्रस्थाता तु तत्रैवोपविष्टो भवेत्। अध्वर्युरेव ग्रहहोमार्थमुत्तरवेदिं गत्वा ग्रहं वषट्कृते हुत्वा सदस्युपविशेत्। एवं प्रतिप्रस्थाताऽपि सदस्युपविशेत्। अत्राध्वर्युप्रतिप्रस्थात्रोरध्वर्युपात्रे वषट्कारनिमित्तं परस्परं भक्षः परस्परोपाह्वानेन। होमाभिषवोभयरूपनिमित्तप्रयुक्तो भक्षस्त्वध्वर्योरेव न प्रतिप्रस्थातुः। तत्र पूर्वमध्वर्योरेव भक्षः। तस्यैव ग्रहग्रहणकर्तृत्वात्। अध्वर्युकर्तृको होमाभिषवोभयरूपनिमित्तप्रयुक्तो भक्षस्तु सदस्येव। तस्माद्धविर्धाने चमसाध्वर्युभिरभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्तीति श्रुतेः। स्वयं वा निषद्य यजत इत्येतस्मिन्पक्षे यजमानस्य प्रयोगस्त्वित्थम्—होतरेतद्यजेत्यस्य लोपः। यजमानः प्राङ्मुखो भूत्वा स्वासनोपविष्ट एव याज्यां ब्रूयात्। हविर्धान एव वषट्कारान्ते प्रतिप्रस्थातारमेवोपहूय वषट्कारप्रयुक्तं भक्षं कुर्यात्। ततः प्रतिप्रस्थाता होमाभिषवोभयरूपनिमित्तकं यजमानमुपहूय सदसि भक्षयति। स्वयं वा निषद्य यजत इत्येतस्मिन्पक्षे होतुर्बाधः। अथ द्वितीयपक्षः—तत्र यद्यन्तिमयोः सहहोमस्तस्य प्रयोगः—मधुश्चेत्यादि सहस्यश्चेत्यन्त पूर्ववत्। ततस्तपश्चेत्यध्वर्युर्गृहीत्वा वषट्कृते हुत्वा हविर्धानमागत्य तत्रैवोप-

---

१ ख. होत्रा।

विष्टेऽध्वर्यौ तपस्यश्चेति प्रतिप्रस्थाता । उपयामगृहीतोऽसि संसर्पोऽस्यंहस्पत्याय त्वेत्येताभ्यां मन्त्राभ्यां सहैव गृहीत्वा प्रतिप्रस्थातैव प्रथमतः प्रवृत्तत्वात्प्रैषं दत्त्वोभौ सहवषट्कृते हुत्वा संपातावनयनं कुरुतः । अथ भक्षः—तत्राच्छावाकभक्षान्तो भक्ष-क्रमः पूर्ववत् । ततः प्रथमे भक्षे होत्राध्वर्योरेव सह न प्रतिप्रस्थातुः । द्वितीये भक्षे होतृ-प्रतिप्रस्थात्रध्वर्यूणां भक्षः । स्वयं वा निषद्य यजत इत्येतस्मिन्पक्ष एकादशे भक्षे पूर्व-वदध्वर्युप्रतिप्रस्थात्रोरेव भक्षो न होतुः स्वकर्तृकयाज्याथाम् । यजमानसंबन्धियाज्यायां तु प्रतिप्रस्थात्रध्वर्योरेव यजमानेन सह भक्षः । प्रतिप्रस्थातुः प्रथमतः प्रवृत्तत्वात्पूर्वं तस्य पश्चादध्वर्योः । यदि त्वाद्ययोः सहहोम इति पक्षस्तदा मधुश्चेति मन्त्रेणाध्वर्युर्माधवश्चेति मन्त्रेण प्रतिप्रस्थाता सहैवोभौ गृहीत्वा सहैव वषट्कृते हुत्वा संपातावनयनं कुरुतः । ऋतुना प्रेष्येति प्रैषोऽध्वर्योरेव । शुक्रश्चेत्यध्वर्युर्ऋतुना प्रेष्येति प्रैषः शुचिश्चेति प्रति-प्रस्थाता, ऋतुना प्रेष्येति प्रैषः । नभश्चेत्यध्वर्युर्ऋतुना प्रेष्येति प्रैषः । नभस्यश्चेति प्रतिप्रस्थाता, ऋतुना प्रेष्येति प्रैषः । इषश्चेत्यध्वर्युर्ऋतुना प्रेष्येति प्रैषः । ततः पात्र-मुखविपर्यासः । ऊर्जश्चेति प्रतिप्रस्थाता । ऋतुभिः प्रेष्येति प्रैषः । सहश्चेत्यध्वर्युर्ऋ-तुभिः प्रेष्येति प्रैषः । सहस्यश्चेति प्रतिप्रस्थाता, ऋतुभिः प्रेष्येति प्रैषः । तपश्चेत्य-ध्वर्युर्ऋतुभिः प्रेष्येति प्रैषः । ततः पात्रमुखविपर्यासः । तपस्यश्चेति प्रतिप्रस्थाता, ऋतुना प्रेष्येति प्रैषः पृथगेव जुहोति न सह । नात्र संपातावनयनं सहहोमाभावात् । उपयामगृहीतोऽसि संसर्पोऽस्यंहस्पत्याय त्वेत्यध्वर्युः पृथगेव गृह्णाति पृथग् जुहोति च । नात्रापि संपातावनयनं सहहोमाभावात् । भक्षस्तु होत्रा सहाऽऽ भक्षोऽध्वर्युप्रतिप्रस्थात्रोः । तत्र मुख्यः प्रवृत्तत्वादध्वर्योः पूर्वम् । पश्चात्प्रतिप्रस्थातुः ततः पोत्रा सहाध्वर्युः । नेष्ट्रा सह प्रतिप्रस्थाता । आग्नीध्रेण सहाध्वर्युः । ब्राह्मणाच्छं सिना सह प्रतिप्रस्थाता । प्रशास्त्रा सहाध्वर्युः । होत्रा सह प्रतिप्रस्थाता । ततः पा मुखविपर्यासः । ततः पोत्रा सहाध्वर्युः । नेष्ट्रा सह प्रतिप्रस्थाता । अच्छावाकेन सह ध्वर्युः । ततो होत्रा सहाध्वर्युः पृथगेव भक्षयति । एवं प्रतिप्रस्थाताऽपि होत्रा स पृथगेव भक्षयति । अत्रोभयोरपि प्रतिभक्षितृत्वोपाह्वानमिति विशेषः । याज्यास्तु प्र मद्वितीयर्तुग्रहमन्त्रकरणकग्रहणयोर्होतुर्याज्या । तृतीये तु पोतुः । चतुर्थे नेष्टुः । पञ्च आग्नीध्रस्य । षष्ठे ब्राह्मणाच्छंसिनः । सप्तमे प्रशास्तुः । अष्टमे होतुः । नवमे पोतुः दशमे नेष्टुः । एकादशेऽच्छावाकस्य । द्वादशे होतुः प्रथमा याज्या । त्रयोदशे होतु द्वितीया याज्या । स्वयं वा निषद्य यजत इत्येतस्मिन्पक्षेऽन्तिमयोर्याज्ययोर्होतृकर्तृकता बाधः । भक्षस्य बाधः । एतत्पक्षानुसारिप्रयोगस्तु अनन्तरमुक्त एव । चतुर्दशपक्षे विनिवे शस्तु त्रयोदशग्रहग्रहणपक्षीयाद्यग्रहसहहोमपक्षवत् । अत्र त्रयोदशचतुर्दशयोर्होतुर्द्वि तीया याज्येति विशेषः । अथ भक्षः—तत्राऽऽद्ये भक्षे होत्रध्वर्युप्रतिप्रस्थातारं निमित्तक्रमानुसारेण परस्परमुपहूय भक्षयन्ति । द्वितीये भक्षे पोत्रा सहाध्वर्युः

तृतीये भक्षे नेष्ट्रा सह प्रतिप्रस्थाता। चतुर्थ आग्नीध्रेण महाध्वर्युः। पञ्चमे ब्राह्मणाच्छंसिना प्रतिप्रस्थाता। षष्ठे प्रशास्त्रा महाध्वर्युः। सप्तमे होत्रा सह प्रतिप्रस्थाता। अष्टमे पोत्रा महाध्वर्युः। नवमे नेष्ट्रा सह प्रतिप्रस्थाता। दशमेऽच्छावाकेन सहाध्वर्युः। एकादशे होत्रा सहाध्वर्युर्होतारमेवोपहूय पृथगेव भक्षयति। द्वादशत्रयोदशयोरन्तिमे भक्षे होत्रा सहाध्वर्युप्रतिप्रस्थातारौ क्रमेण परस्परमुपहूय भक्षयतः। अत्र प्रैषोऽध्वर्योरेवोभयत्रापि। संपातावनयनमप्युभयत्र। चतुर्दशत्वपक्षे मन्त्रन्यूनता तु अन्तालोपो विवृद्धिर्वेति न्यायेन परिहरणीया। एतेन न्यायेनान्तिममन्त्रस्याऽऽवृत्तिः। एतत्त्रितयपक्षसाधारण्यार्थमेव सूत्रे यस्य यस्य वषट्कारे जुहुतस्तं तं प्रति भक्षयत इति साधारण्येनोक्तिः। तेन परस्परभक्षवैपरीत्येऽपि न बाधः। अथ त्यागाः—इन्द्राय मघवे माधवाय चेदं० इति प्रथमयोस्त्यागः। मरुद्भ्यः शुक्राय इदं० त्वष्ट्रे शुचय इदं० अग्नये नभस इदं० इन्द्राय नभस्यायेदं० मित्रावरुणाभ्यामिषायेदं० देवाय द्रविणोद ऊर्जायेदं० देवाय द्रविणोदे सहस इदं० देवाय द्रविणोदे सहस्यायेदं० देवाय द्रविणोदे तपस इदं० देवाय द्रविणोदे तपस्यायेदं० अग्नये गृहपतये संसर्पायांहस्पत्यायेदं० इति क्रमेण त्यागाः।

असन्ना हूयन्ते।

अनासादिता एव हूयन्त इत्यर्थः। ऋतुग्रहा इति शेषः।

पूर्वस्य पूर्वस्य शेष उत्तरमुत्तरमभिगृह्णीतः।

एतेनैव ज्ञातं भवति सशेषा हूयन्त इति। अभि अभिमुखो भूत्वा गृह्णातीत्यर्थः।

उपयामगृहीतोऽसि मधवे त्वेति स्वेन पात्रेणाध्वर्युः पूर्वं गृह्णात्युपयामगृहीतोऽसि माधवाय त्वेति स्वेन पात्रेण प्रतिप्रस्थातोत्तरम्।

स्पष्टम्।

व्यतिषङ्गं गृह्णीतः।

व्यतिषज्य व्यतिषज्येति व्यतिषङ्गम्। णमुल्प्रयुक्ताया वृद्धेरभावश्छान्दसः। अध्वर्यौ होमार्थं गते द्वारि प्रतिप्रस्थाता भवति। एवं प्रतिप्रस्थातरि गतेऽध्वर्युर्द्वारि भवतीति व्यतिषङ्गशब्दार्थः। आपस्तम्बोऽपि स्पष्टमिदमाह—द्वार्येव व्यतीत इति। द्वार्येव व्यतीतो व्यतिगच्छतो मिथः संगतौ भवतः। अन्यत्र त्वेकैकावेव चरत इत्यर्थः। अस्मिन्विषये हेतुर[पि] प्रदर्शयिष्यते सूत्रकृता।

१ ख ज्ञापितं।

**पूर्वोऽध्वर्युरपरः प्रतिप्रस्थाता ।**

गृह्णातीति शेषः ।

**पूर्वेण पूर्वेण प्रक्षेणाध्वर्युरुत्तरेणोत्तरेण प्रतिप्रस्थाता ।**

स्पष्टम् ।

**दक्षिणेनाध्वर्युः संचरत्युत्तरेण प्रतिप्रस्थाता ।**

आहवनीयसंलग्नदेशेनोभयोः संचरणम् । उभयत्रैनप्प्रत्ययश्रवणात् । अत्र हेतुः श्रुतावुक्तः--प्रसिद्धमेवाध्वर्युर्दक्षिणेन प्रपद्यते प्रसिद्धं प्रतिप्रस्थातोत्तरेणेति ।

**नान्योन्यमनुप्रपद्येत ।**

अन्योन्यस्य पृष्ठमनुगच्छतः । द्वारि भवन इदं हेतुभूतं सूत्रम् ।

**प्रविशन्तमध्वर्युं ग्रहेणं परिगृह्णाति निष्क्रामन्तं पात्रेण ।**

परीत्यनेन ग्रहेणाध्वर्युं स्वेनान्तर्हितं करोतीति परिग्रहशब्दार्थः । निष्क्रामन्तं केवलेन पात्रेण परिगृह्णाति । अत्रापि पूर्ववदेव परिग्रहशब्दार्थः । अथ वाऽध्वर्युर्ग्रहस्योत्तरतो यथा भवति तथा करोति । अयं वा परिग्रहशब्दार्थ उभयत्र । यद्यप्यत्र शेषो वर्तते तथाऽपि प्रदेययागद्रव्यस्य तस्मिन्नभावात्पात्रव्यवहारः । शेषस्तु प्रतिपत्त्यर्थः ।

**ऋतुना प्रेष्येति त्रिरध्वर्युराह त्रिः प्रतिप्रस्थाता ।**

ऋतुग्रहाणां चतुर्दशत्वपक्ष एतस्य बाधः ।

**पात्रयोर्मुखे विपर्यस्यर्तुभिः प्रेष्येति द्विरध्वर्युराह द्विः प्रतिप्रस्थाता ।**

स्पष्टम् । एतयोः पात्रयोरुभयतोमुखत्वं श्रुतावुक्तम्—उभयतोमुखमृतुपात्रं भवतीति । तत्र येन मुखेन पूर्वं हुतं ततो मुखान्तरेण होम इत्यर्थः ।

**पुनर्मुखे विपर्यस्यर्तुना प्रेष्येति सकृदध्वर्युराह सकृत्प्रतिप्रस्थाता ।**

स्पष्टम् ।

**अध्वर्यू यजतमित्युच्यमाने होतरेतद्यजेति संप्रेष्यति ।**

संप्रेष्यतीत्येकवचनाद्यजुर्वेदेनाध्वर्युरितिपरिभाषासूत्राच्चाध्वर्योरेव प्रैषो न प्रतिप्रस्थातुः ।

**स्वयं वा निषद्य यजतः ।**

अध्वर्यू यजतमिति प्रैषे द्विवचनोपक्रमादत्रापि यजत इति द्विवचनान्त एव पाठः । एकवचनान्तपाठे प्रैषेण सह विरोधापत्तेः । अस्मिन्पक्षे होतरेतद्यजेत्यस्य लोपः । अध्वर्युप्रतिप्रस्थातारौ हविर्धानयोर्मध्ये पृष्ठ्याया दक्षिणतोऽध्वर्युः पृष्ठ्याया उत्तरतः

१ क. ज. झ. ञ. °ण प्रतिगृ° । २ ङ. ज. झ.ञ. यजते ।

प्रतिप्रस्थातेत्येवं प्राङ्मुखावुपविश्य ग्रहावन्यहस्ते प्रज्ञातौ दस्वोमावाश्वलायनधर्मेण याज्यां वदतः । प्रतिप्रस्थाता हविर्धान एवोपविष्टो भवेदध्वर्युरेव ग्रहहोमार्थमुत्तरवेदिं गत्वा ग्रहं वषट्कृते हुत्वा सदस्युपविशेत् । अत्राध्वर्युप्रतिप्रस्थात्रारध्वर्युपात्रे वषट्कारनिमित्तं परस्परोपाह्वानेन परस्परं भक्षः । तत्र होमाभिषवोभयरूपनिमित्तप्रयुक्तो भक्षस्तु अध्वर्योरेव न प्रतिप्रस्थातुः । तत्र पूर्वमध्वर्योरेव भक्षः । तस्यैव मुखतः प्रवृत्तत्वात् । होमाभिषवोभयरूपनिमित्तप्रयुक्ताध्वर्युकर्तृकभक्षस्तु सदस्येव । तस्माद्धविर्धाने चर्मन्नधि ग्रावभिरभिषुत्याऽऽहवनीये हुत्वा प्रत्यञ्चः परेत्य सदसि भक्षयन्तीति श्रुतेः । प्रतिप्रस्थातुस्तु वषट्कारप्रयुक्तभक्षकर्तृत्वाद्धविर्धान एव भक्षो न सदसि ।

अध्वर्योः पात्रे प्रतिप्रस्थाता संपातमवनयति तस्यैकदेशमध्वर्युः प्रतिप्रस्थातुः पात्रे ।

स्पष्टम् ।

प्रतिप्रस्थानेन भक्षयन्ति ।

प्रतिप्रस्थानेन प्रतिप्रस्थातृपात्रेण भक्षयन्ति अध्वर्युप्रतिप्रस्थातारौ होत्रादयश्च ।

द्विर्होता सकृत्सकृ*दितरे ।

प्रथममुखे द्विर्भक्षणं वषट्कारप्रयुक्तं होतुरेव नेतरेषां, स्वयं वा निषद्य यजत इत्येतत्पक्षाभाव इदं सूत्रं नान्यथा । सकृत्सकृदितरे । इतरेऽध्वर्युप्रतिप्रस्थातारौ प्रशास्त्रादयश्च । यजमानकर्तृकः स्वयंयजनपक्षस्तु याजमानसूत्रे वक्ष्यति ।

यस्य यस्य वषट्कारे जुहुतस्तं तं प्रति भक्षयतः ।

ऋतुग्रहविषयकप्रयोगत्रयप्रदर्शनावसरे पक्षत्रयसाधारण्यायेदं सूत्रमित्येतत्सूत्रस्य दर्शितं प्रयोजनम् । अर्थस्तु स्पष्ट एव ।

मार्जालीये पात्रं प्रक्षाल्याऽऽयतने सादयति ॥ २१ ॥

पात्रं प्रतिप्रस्थानपात्रमायतने स्वस्थाने ।

इन्द्राग्नी आगतꣳ सुतमिति स्वेन पात्रेणाभक्षितेनैन्द्राग्नं कलशाच्छस्त्रवन्तं गृह्णाति ।

धियेषितेत्यन्तं मन्त्रमुक्त्वोपरिष्टादुपयामा ऋचेतिपरिभाषासूत्रादुपयामगृहीतोऽसीत्युक्त्वा तदन्ते ग्रहग्रहणम् । होमाभिषवाभ्यामध्वर्योर्भक्ष इति परिभाषातः स्वपात्रेऽध्वर्योर्भक्षस्य प्राप्तौ तस्मिन्नेव पात्रे भक्षश्चेत्तद्गतसोमस्योच्छिष्टत्वेन तस्मिन्ग्रहणायोग्यात्पात्रान्तरे तत्स्थं सोममादायापि भक्षः स्यात्तदर्थमभक्षितेनेतिवचनम् । स्वेन पात्रेण पात्रगतसोमेनेत्यर्थः । पात्रस्य भक्षणासंभवात् । तृतीया साहित्ये । तेन पात्रस्थसोमेन

---

* मूलपुस्तकेषु इतराविति पाठो विद्यते ।

सहैन्द्राग्नं ग्रहं गृह्णातीत्यर्थः। शस्त्रस्योत्तरत्र विधानादेव शस्त्रवत्त्वे सिद्ध इदं वचनं ग्रहग्रहणकाले ज्ञानावश्यकत्वार्थम्। एतदभावे यजुर्भ्रेषप्रायश्चित्तं भुवः स्वाहेति दक्षिणाग्नौ होतव्यम्।

**तꣳ सादयित्वाऽग्रेण होतारं प्राङ्मुख उपविश्येडा देवहूरिति शस्त्रमुपाकरोति।**

तं ग्रहम्। मन्त्रपठनमेव शस्त्रोपाकरणम्।

**यत्रैनꣳ होताऽभ्याह्वयते तस्मिन्काले शोꣳसामोद इवेति प्रत्याह्वयते शोꣳसामोद इवोथामोद इवेति वा।**

यत्र यस्मिन्काल इत्यर्थः। उत्तरत्र तस्मिन्काल इत्युपादानात्। एनमध्वर्युं होता शौंसावोमित्यभिमुखीकरणार्थं यस्मिन्काले आह्वयते तस्मिन्नवसरे शोꣳसामोद इवेति होतारं प्रत्याह्वयतेऽध्वर्युः। प्रत्याह्वानं प्रत्युत्तरदानम्। शाꣳसामोद इवोथामोद इवेति विशिष्टं वा प्रत्याह्वानवाक्यम्।

**उत्तिष्ठन्प्रदक्षिणं पर्यावर्तमानः प्रथमं प्रतिगरं प्रतिगृह्णात्यभिमुखोऽत *ऊर्ध्वस्तिष्ठन्प्रह्वो वा।**

उत्तिष्ठन्निति शत्रन्तेन प्रदक्षिणं पर्यावर्तमान इति शानजन्तेन चोत्थानप्रभृतिप्रदक्षिणपर्यावर्तनसमकालता प्रथमप्रतिगरस्य भवतीत्यर्थः। अत ऊर्ध्वमभिमुखस्तिष्ठन्प्रह्वो वा,+सर्वे प्रतिगरा वक्तव्या इत्यर्थः।

**सर्वेषु विरामेषु प्रणवे च।**

सर्वे ये विरामास्तेषु। सर्वग्रहणाद्गता निगदगताश्चैते सर्वे गृह्यन्ते प्रणवे चाऽऽश्वलायनसूत्रप्रसिद्धा एव सर्वे प्रतिगरा गृह्यन्त इत्यर्थः। तथाऽऽश्वलायनसूत्रमित्थम्—अनभिहिंकृत्य शौंसावोमित्युच्चैराहूय तूष्णीं शंसं शंसेद्भूयांश सप्रणवमसंतन्वन्नेष आहावः प्रातःसवने शस्त्रादिषु पर्यायप्रभृतीनां च सर्वत्र चान्तःशस्त्रं तेन चोपसंतानः शस्त्रस्वरः प्रतिगर ओथामोद इवेति शौंसामोद इवेत्याहावे प्लुतादिः प्रणवेऽप्लुतादिरवसाने प्रणवे प्रणव आहावोत्तरेऽवसाने च प्रणवान्तो वा यत्र यत्र चान्तःशस्त्रं प्रणवेनावस्यति प्रणवान्त एव तत्र प्रतिगरः शस्त्रान्ते तु प्रणव इति। शस्त्रस्य स्वर इव स्वरो यस्य स शस्त्रस्वरः। उत्तरपदलोपोऽत्र द्रष्टव्यः। स शस्त्रस्वर इत्यर्थः। सवनस्वरस्याविधेयत्वादन्योऽपि योऽनुब्राह्मणपक्षे निष्केवल्यस्य विशिष्टस्वरो विहितः शस्त्रस्य तस्य प्रापणार्थं वचनम्। ओथामोद इवेत्ययं प्रतिगरसंज्ञो भवति शस्त्रस्वरश्च

---

* ऊर्ध्वं तिष्ठन्निति पाठो युक्तः। + अस्य वाक्यस्य पूर्ववाक्येनासंबद्धत्वादत्र किंचित्त्रुटितं स्यादिति प्रतिभाति।

भवति । प्रतिगीर्यते प्रत्युच्चार्यत इति प्रतिगरः । वक्ष्यमाणविशेषविशिष्टतया सकृदेव विधातुं शक्येऽपि सामान्यस्य पृथग्विधानं प्रतिगरशब्दव्यवहारेऽपि सामान्येनास्य ग्रहणार्थम् । शोंसामोद इवेत्याहाव इत्यत्र प्रतिगरो भवतीति शेषः । यत्पुनरयं प्रतिगरान्तरविधिमध्ये विधीयते तज्ज्ञापयति प्रतिगरान्तरमप्यस्ति मध्यवर्तिन्याहावेऽयं नियम्यते तेन शस्त्रमध्येऽयमेव स्याच्छस्त्रादावयं वा स्यात् । ब्राह्मणोक्तः शंसामोदै-वोमिति वेति । प्लुतादिः प्रणवेऽप्लुतादिरवसाने व्यवहितस्येमौ विशेषविधी अनन्तरस्य प्रणवावसानरूपेण विषयभेदासंभवात् । प्रणवे प्रणव आहावोत्तर इति सूत्रं प्लुतादेरप-वादकम् । आहावोत्तरे प्रणवे प्रणव एव प्रतिगरो भवति । आहाव उत्तरो यस्मात्स आहावोत्तरस्तस्मिन्नाहावोत्तरे प्रणवे प्रणवः प्रतिगरो भवति । अवसाने चेत्यस्मिन्सूत्रे प्रणवः प्रतिगरो भवतीति शेषः । शस्त्रान्ते शस्त्रमध्ये वाऽवसानेऽयं विधिर्भवति । प्रणवान्तो वेत्यनेन सूत्रेण विषयद्वयविकल्प उच्यते । यत्र यत्र चान्तःशस्त्रं प्रणवेना-वस्यति प्रणवान्त एव तत्र प्रतिगरः । शस्त्रान्ते तु प्रणव इत्यनेन पूर्वोक्तप्रतिगरद्वयस्य विषयव्यवस्थापनमात्रं क्रियते । विस्तरस्तु तदीयव्याख्याग्रन्थादितो द्रष्टव्यः ।

नार्धर्चाल्लुप्यते ।

अर्धर्चावसानकाल एव तस्य प्रतिगरस्य मुख्यः कालः । तत्पूर्वमुत्तरं वा प्रतिगरे लोपः ।

नाभि प्रतिगृणाति ।

अर्धर्चसमाप्तिः प्रतिगरस्य कालः । तस्यापि स्वकालादुत्तरो गौण इति न्यायमनु-सृत्याभि तत्पूर्वं तदुत्तरं वा न प्रतिगृणीयादित्यर्थः । एतत्प्रायश्चित्तमापस्तम्बेनोक्तम्-यदर्धर्चाल्लुप्येताभिप्रतिगृणीयाद्वा त्वं नो अग्ने स त्वं नो अग्ने त्वमग्ने अयासि प्रजापत इति चतस्र आहुतीर्जुहुयाद्व्याहृतीश्चेति । अर्धर्चे प्रतिगरस्यावचनमर्धर्चाल्लोपः । यथोक्त-कालातिरिक्तकालिकं वचनमभिप्रतिगरः ।

उभयं व्याहावे करोति शोंसामोद इवोथामोद इवेति ।

संततक्रमपठितर्गतमध्यतन आहावः । तदन्तगतो व्याहावः । तत्रायं प्रतिगरः । आश्वलायनसूत्रोक्तप्रतिगरं बाधित्वा सूत्रकृद्विहितो विशेषः प्रतिगरो याजुषहौत्रविषये द्रष्टव्यः[1] यथा स्वादुष्किलीयासु । अत्र पाठो लोपेऽभिप्रतिगरणे च यद्विहितमापस्त-म्बेन प्रायश्चित्तं तस्य प्राप्त्यर्थः ।

यत्र क्व च होता विरमेदोथामोद इवेति प्रब्रूयात् ।

इदमपि नार्धर्चाल्लुप्यते नाभिप्रतिगृणातीत्येतादृशापराधे सति एतत्प्रायश्चित्तप्राप्त्य-

---

१ ग. म. प्रतिष्ठ॰ ।

र्थम् । अथवा विरामेषु प्रणवरहित एव प्रतिगर ओथामोद इवेति । अन्यत्र तु शाखान्तरसिद्ध इत्यर्थतः । नन्वयमपि शाखान्तरसिद्धः । किमिदं वचनं लोपादौ स्वमूर्नोक्तमार्मि नर इत्यादिकं सौमिकप्रायश्चित्तमेतत्प्रतिगरविषय एव, अन्यत्राऽऽपस्तम्बोक्तमित्येतदर्थम् ।

सर्वशस्त्राणामेष कल्पः ।

सर्वग्रहणं होतृशस्त्रविषयका एवेमे प्रतिगरा इतिशङ्काव्यावृत्त्यर्थम् ।

उक्थशा इति शस्त्रं प्रतिगीर्य सर्वत्र प्रातःसवने जपति ।

स्पष्टम् ।

शस्त्रं प्रतिगीर्य ग्रहमादत्ते चमसाꣳश्चमसाध्वर्यव उक्थशा यज सोमस्येति संप्रेष्यति ।

शस्त्रप्रतिगरग्रहादानयोरेककाले सर्वथैवासंभवेनार्थादेव शस्त्रप्रतिगरणोत्तरत्वे ग्रहादानस्य सिद्ध इदं वचनमेतच्छस्त्राङ्गभूताभिहिंकाराभाव आश्वलायनसूत्रसिद्ध एव प्रकृत्यविनियुक्तत्वेऽप्यस्माकमिष्ट इति ज्ञापयितुम् । गृहीतं ग्रहम् । अन्यत्स्पष्टम् ।

वषट्कारानुवषट्कारौ नाराशꣳसाननुप्रकम्पयन्ति ।

चमसाध्वर्यवो वषट्कारमनुवषट्कारं चानु नाराशंससंज्ञकांश्चमसान्प्रकम्पयन्ति ।

व्याख्यातो ग्रहनाराशꣳसानां भक्षः ।

ग्रहश्च नाराशꣳसाश्च ग्रहनाराशꣳपास्तेषां ग्रहनाराशꣳसानां भक्षो व्याख्यातो यथाचमसं चमसिनो भक्षयन्ति तेषां व्याख्यातो भक्षमन्त्रः सर्वेषां प्रथमो होता सकृद्भक्षयतीत्यादिना तृतीयꣳ होत्रका अन्तत इत्यन्तेन सूत्रेणोक्त इत्यर्थः ।

आप्यायनसादने च नाराशꣳसानाम् ॥ २२ ॥

व्याख्याते इति शेषः । अप्रवीन्भक्षयित्वाऽऽप्यायस्व समेतु त इत्याप्याययन्तीत्यादिना पश्चादक्षमुद्गायतान्सादयतीत्यन्तेनसूत्रेणोक्ते इत्यर्थः ।

ओमासश्चर्षणीधृत इति शुक्रपात्रेण वैश्वदेवं कलशात्स्तुतशस्त्रवन्तं गृह्णाति ।

सूदवच्छुक्रपात्रꣳ सादयतीति विधानादेव भक्षणप्राप्तिशङ्काया वारितत्वाद्भक्षितेनेतिवचनाभावः । स्तुतशस्त्रवन्तमितिवचनं ग्रहग्रहणकाले ज्ञानावश्यकत्वार्थम् । एतज्ज्ञानाभावे यजुर्भ्रेषप्रायश्चित्तं भुवः स्वाहेति दक्षिणाग्नौ ।

तꣳ सादयित्वा स्तोत्रमुपाकरोति तद्व्याख्यातम् ।

तत्स्तोत्रोपाकरणं व्याख्यातमुपावर्तध्वमितीतराणि स्तोत्राणीत्यनेन सूत्रेणोक्तमित्यर्थः ।

अपवृत्ते स्तोत्रे शस्त्रमुपाकरोति तद्व्याख्यातम् ।

अपवृत्ते समाप्ते स्तोत्रे शस्त्रमुपाकरोति । तच्छस्त्रोपाकरणमग्रेण होतारं प्राङ्मुख उपविश्येडा देवहूरिति शस्त्रमुपाकरोतीत्यनेन व्याख्यातमुक्तमित्यर्थः ।

शस्त्रं प्रतिगीर्य ग्रहमादत्ते चमसांश्चमसाध्वर्यव उक्थशा यज सोमस्येति संप्रेष्यति व्याख्यातमनुप्रकम्पनं ग्रहनाराशंसानां भक्षः सर्वभक्षाः ।

शस्त्रं प्रतिगीर्येतिवचनमित आरभ्य यो यः शस्त्रसंबन्धिप्रतिहिंकारकृत आश्वलायनसूत्रकृतो विशेषः स एवास्माकमिष्टः प्रकृत्यनुपयुक्तत्वेऽपि । कालाव्यवधानार्थताऽपि एतयोः । षोडश्यादिषु वक्ष्यमाणेषु तु कालार्थतैव प्रयोजनम् । सर्वभक्षा इत्यनन्तरं चमसा इति शेषः ।

नाऽऽप्यायनसादने भवतः ।

सर्वभक्षा एव भवन्ति न त्वाप्यायनसादने अपि भवत इत्यर्थः ।

त्रिभिरुक्थ्यविग्रहैः प्रचरतः ।

उक्थ्यविग्रह इति संज्ञा वक्ष्यमाणग्रहाणां त्रयाणाम् । प्रचरतोऽध्वर्युप्रतिप्रस्थातारौ ।

उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वेत्युक्थ्यस्थाल्या उक्थ्यपात्रेण तृतीयं मैत्रावरुणं गृह्णाति ।

मैत्रावरुणं मित्रावरुणदेवताकं ग्रहमुद्दिश्योक्थ्यस्थालीगतस्य सोमस्य तृतीयमंशं गृह्णाति ।

एष ते योनिर्मित्रावरुणाभ्यां त्वेत्यायतने सादयति ।

आयतने स्वस्थाने । अन्यत्स्पष्टम् ।

पुनर्हविरसीति स्थालीं प्रत्यभिमृशति ।

स्थाली, उक्थ्यस्थाली । भूतभाव्युपयोगं हि द्रव्यं संस्कारमर्हतीतिन्यायाद्भाव्युपयोगस्योक्थ्यस्थालीगतस्य सोमस्य संस्कारायेदम् । तेनान्तिमग्रहग्रहणेऽग्रे ग्रहणाभावेन भाव्युपयोगत्वाभावान्न संस्कारः । प्रत्यभिमर्शो नाम यस्माद्द्रव्यं गृहीतं तस्याभिमर्शः प्रत्यभिमर्शः । एतदभिप्रेत्यैव सूत्रकारोऽपि निषेधं करिष्यति ।

मैत्रावरुणचमसमुख्यावेकादश चमसानुन्नयति ।

एकादशेति सदस्यसत्त्वेऽन्यथा दशैव ।

अत्र विशेषमाह—

पुरस्तादाग्नीध्रचमसादच्छावाकचमसमुन्नयति स्तुतशस्त्रे भवतः ।

स्पष्टम् ।

शस्त्रं प्रतिगीर्य ग्रहमादत्ते चमसाꣳश्चमसाध्वर्यव
उक्थशा यज सोमानामिति संप्रेष्यति ॥ २३ ॥

अत्र शस्त्रं प्रतिगीर्येति मैत्रावरुणशस्त्रार्थं, पूर्वं तु होतृशस्त्रविषय इति विषयभेदः। द्विदेवत्यर्तुग्रहेष्वादित्यग्रहसावित्रयोश्च नानुवषट्कारो विद्यत इत्यनेनेतरेषु ग्रहेषु वषट्कारानुवषट्कारयोः प्रापितत्वेनात्रापि वषट्कारानुवषट्कारौ ।

हुत्वा देवेभ्यस्त्वा देवा युवं पूर्णाज्म यज्ञस्याऽऽ-
युषे जुष्टमिति मैत्रावरुणचमसे ग्रहसंपातमवनयति।

हुत्वेतिवचनं सदसि भक्षहरणानन्तरं यदापस्तम्बेन संपातावनयनमुक्तं तद्व्यवच्छेदार्थम्। संपातमवनयतीत्यनेन संपातशब्देन मैत्रावरुणचमसे स्वल्पावनयनं सूच्यते।

बाह्यतः सद आलभ्य ।

सदसो बाह्यतो बहिः स्थितः सन्सदोभूमिं स्पृष्ट्वा संपातमवनयतीति पूर्वेणान्वयः ।

यदि कामयेताध्वर्युरात्मानं यज्ञयशसेनार्पयेयमिति
ब्राह्मणव्याख्यातान्यवनयनानि तेषां याथाकामी।

यज्ञकर्मकौशलं यज्ञयशसं तेन यज्ञयशसा निमित्तेनाऽऽत्मानं योजयितुमिच्छति तदाऽन्तराऽऽहवनीयं च हविर्धानं च तिष्ठन्नवनयेत् । यदि यजमानं तथेच्छति तदाऽन्तरा सदोहविर्धाने। यदि सदस्यांस्तदा सदसि स्थित्वाऽवनयेदित्येतादृशान्यवनयनानि ब्राह्मण उक्तानि तेषां मध्ये यथेच्छा तथा काम्यमनुष्ठेयमित्यर्थः।

सर्वेषां प्रथमो मैत्रावरुणः सकृत्सकृद्भक्षयति द्विः स्वे चमसे
तस्याध्वर्युर्द्विर्भक्षितस्य सकृद्भक्षयति तृतीयं मैत्रावरुणः ।

मैत्रावरुणस्य प्रतिभक्षितृमद्धावात्तृतीयो भक्षः समाख्याभक्षस्तस्य पृथगेव भवति। इतरेषां तु समाख्याभक्षमात्रं प्रशास्तृरत्रोपह्वानं तस्य वषट्कर्तृत्वात् ।

ततः प्रतिप्रस्थातोत्तराभ्यामुक्थ्यविग्रहाभ्याꣳ
स्तुतशस्त्रवद्भ्यां प्रचरत्येतेनैव कल्पेन ।

एतेनैव कल्पेनेत्यनेनैव स्तुतशस्त्रवत्त्वे सिद्धे स्तुतशस्त्रवद्भ्यामितिवचनमस्मिञ्छस्त्रेऽपि शस्त्रं प्रतिगीर्येत्येतत्सूत्रज्ञापितधर्मप्राप्त्यर्थम् । स्तुतशस्त्राभ्यामित्युभयवचनं ज्ञानावश्यकत्वार्थमेव । अन्यत्स्पष्टम् ।

तत्र विशेषमाह—

इन्द्राय त्वेति द्वितीये ग्रहणसादनौ संन-
मति पुनर्हविरसीति स्थालीं प्रत्यभिमृशति ।

गृह्यतेऽनेनेति ग्रहणः। उपयामगृहीतोऽसीन्द्राय त्वेति ग्रहणो मन्त्रः। साद्यतेऽ-

१ क. ज. झ. म. °तानि काम्यान्य° । २ घ. च. °स्मिञ्छास्त्रे° ।

नेनेति सादनः। एष ते योनिरिन्द्राय त्वेति सादनः। एतौ संनमति। अनयोरूहः कर्तव्य इत्यर्थः।

ब्राह्मणाच्छꣳसिचमसमुख्याꣳश्चमसानुन्नयन्ने-
कस्मै चमसगणाय राजानमतिरेचयति।

अच्छावाकसंबन्धिस्तुतशस्त्रप्रयुक्तचमससमूहाय यावानुपयुज्यते सोमस्तावदेवाति-रेचयति न न्यूनं नातिरिक्तमतिरेचयति। सर्वथाऽतिरेको यथा न भवति तथा प्रयत्नेन यतितव्यमतिरेके प्रायश्चित्तस्य श्रवणात्।

ब्राह्मणाच्छꣳसिचमसे ग्रहसंपातमव-
नयति न प्रतिप्रस्थाता भक्षयति।

तस्य चमसे संपातेऽवनीतेऽपि होमाभिषवाभ्यां भक्ष इति प्राप्तस्य भक्षस्यायं निषेधः। ब्राह्मणाच्छंसिनः समाख्याभक्षस्तत्रैव प्रतिभक्षितुरभावात्। नोपहवो यद्युपहूतः स्याद्भक्षयेत्येव ब्रूयादिति वदेदच्छावाकचमसे तथा दर्शनात्।

इन्द्राग्निभ्यां त्वेति तृतीये ग्रहणसादनौ संनमति।

तृतीय उक्थ्यविग्रहे।

न स्थालीं प्रत्यभिमृशति।

तस्याः स्थाल्या रिक्तत्वात्।

अच्छावाकचमसमुख्याꣳश्चमसानुन्नय सर्वꣳ राजानमुन्नय
माऽतिरीरिचो दशाभिः कलशौ मृष्ट्वा न्युब्जेति संप्रेष्यति।

पूतभृतो बिलं उदीचीनदशं पवित्रं वितत्य तस्मिन्द्रोणकलशस्थं राजानं सर्वं पूतभृत्यवनीय दशाभिः कलशौ पूतभृद्द्रोणकलशौ दशापवित्रेण शुष्कौ कृत्वा न्युब्जन्यञ्चौ कुरु इति प्रैषार्थः। उन्नेताऽत्र प्रेष्य एकवचनात्। सर्वꣳ राजानमुन्नयेत्येता-वतैव सिद्धे माऽतिरीरिच इतिवचनमत्रातीव कठिनमतिविस्तृतं प्रायश्चित्तमस्तीत्यतः सावधानताऽत्राऽऽवश्यकीतिज्ञापनार्थम्।

प्रैषार्थं स्पष्टयति—

अच्छावाकचमसमुख्याꣳश्चमसानुन्नयति
सर्वꣳ राजानमुन्नयति नातिरेचयति।

स्पष्टोऽर्थः।

दशाभिः कलशौ मृष्ट्वा न्युब्जति।

दशाभिः पवित्रदशाभिः कलशौ पूतभृद्द्रोणकलशौ मृष्ट्वा शुष्कौ कृत्वा न्युब्जति न्यग्बिलौ करोति।

अच्छावाकचमसे ग्रहसंपातमवनयति न प्रतिप्रस्थाता भक्षयति ।

गतव्याख्यानं पूर्वत्र ।

अग्निः प्रातःसवने पात्वस्मानिति सꣳस्थिते जुहोति ।

सवनाहुतिमित्यापस्तम्बः । सवनसंस्थाप्रयुक्तेयमाहुतिरिति संस्थाप्रयुक्तत्वमेतदाहुतेर्दर्शयति । तेन सोमातिरेके सति तत्प्रायश्चित्तान्ते जुहोति । प्रायश्चित्तान्यपि अग्निं नर इत्यादीनि सोमस्कन्दनप्रायश्चित्तानि च प्राक्सवनाहुतेः कार्याणि ।

प्रशास्तः प्रसुवेति संप्रेष्यति ।

प्रसुव सदोबहिर्निःसरणार्थं सर्वेभ्योऽनुज्ञां देहीत्यर्थः ।

सर्पतेत्याह प्रशास्ता ।

स सर्पतेत्याहेति तच्छब्देनैव प्रशास्तृपरामर्शे सिद्धेऽध्वर्योरनुज्ञायाचनार्थकप्रैषे प्रशास्तृग्रहणं विना प्रसुवेत्येतावदुच्यमानेऽपि प्रशास्तारं जानीयादित्येवमिति पक्षान्तरं गमयति । अत्राऽऽपस्तम्बः—येन प्रसर्पन्ति तेन निःसर्पन्तीति । ते येन पथा पूर्वं प्रसृप्ता ऋत्विजस्तेनैव गच्छन्तीत्यर्थः ।

संतिष्ठते प्रातःसवनं प्रातःसवनम् ॥ २४ ॥

इति हिरण्यकेशिसूत्रेऽष्टमप्रश्नेऽष्टमः पटलः ।

---

स्पष्टम् । द्विरुक्तिः प्रश्नसमाप्तिद्योतनार्था ।

इत्योकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्निचित्वाजपेययाजिमहादेवसोमयाजिद्विसाहस्राग्निचित्पौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथदीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसूत्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंतापशामिकायां ज्योत्स्नाख्यायां वृत्तावष्टमप्रश्नस्याष्टमः पटलः ॥ ८ ॥

---

संपूर्णोऽयमष्टमः प्रश्नः ।

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ५३

# सत्याषाढविरचितं श्रौतसूत्रं

गोपीनाथभट्टकृतज्योत्स्नाव्याख्यासमेतम् ।

तत्र

## नवमदशमप्रश्नद्वयात्मको द्वितीयो भागः ।

एतत्पुस्तकं

वे० शा० सं० रा० रा० काशीनाथशास्त्री आगाशे

इत्येतैः संशोधितम् ।






तच्च

हरि नारायण आपटे

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८३०

खिस्ताब्दाः १९०८



मूल्यमाणकद्वयाधिकं रूपकद्वयम् ( २।८ )

अथ नवमः प्रश्नः ।

तत्र प्रथमः पटलः ।

अभिषवादि माध्यंदिनꣳ सवनं तायते ।

अभिषवो महाभिषवः स आदिर्यस्य तदभिषवादि माध्यंदिनं सवनं तायत आरभ्यते क्रियत इति यावत् ।

तस्य प्रातःसवनेन कल्पो व्याख्यातः ।

तस्य माध्यंदिनस्य सवनस्य प्रातःसवनेन कल्पः प्रकारो व्याख्यात उक्त इत्यर्थः ।

द्विदेवत्यर्तुग्रहैन्द्राग्नवैश्वदेवा दर्विहोमाश्च न विद्यन्ते ।

प्रातःसवनिकत्वेनैतेषां प्राप्तौ निषेधोऽनेन क्रियते । दधिग्रहादयोऽन्तर्यामान्ता दर्विहोमास्ते च न विद्यन्ते ।

वसतीवरीभ्यो निषिच्य निग्राभ्याः करोति ।

वसतीवरीभ्यो होतृचमसे निषिच्य नितरां सिक्त्वा वसतीवरीभ्यो होतृचमसेनापो गृहीत्वा निग्राभ्याः स्थेत्यनेन निग्राभ्याः करोतीत्यर्थः ।

सर्वꣳ राजानꣳ*मभिषुण्वन्ति ।

तृतीयसवन ऋजीषमभिषुण्वन्तीति श्रुतेस्तृतीयसवने सोमाभिषव एव नास्तीति भावः ।

ग्रावस्तुते सोमोष्णीषं प्रयच्छति ।

विस्रस्य राजानमिति शेषः । विस्रस्य राजानं ग्रावस्तुते सोमोष्णीषं प्रयच्छतीति । तथैवापठदापस्तम्बः—राजानमुपनद्धं तूष्णीं ग्रावस्तूपावरोह्य बन्धनाद्विस्रस्य ऋजीषमधस्ताच्चर्मणो न्युप्य तच्चर्म परिमृज्य सर्वं राजानमुपरे न्युप्य सोमोपहननं वासो ग्रावस्तुते प्रयच्छतीति । इदं च न दानं किं तु पुनस्तस्मात्प्रत्यादेयमेव तस्य प्रज्ञातं निधानम् । सोमोपहननं वासो यजमानः परिधत्त इत्यग्रे प्रतिपत्तिदर्शनात् । सोमपरिश्रयणवाससोऽपि प्रज्ञातं निधानम् । सोमपरिश्रयणं पत्नीत्येतस्याप्यग्रे प्रतिपत्तिदर्शनात् । असंप्रेषितो ग्रावस्तोत्रीया अन्वाहेत्यापस्तम्बः । ग्रावस्तोतेति शेषः । न ग्रावस्तुते सोमाभिषवे प्रैषोऽस्तीत्यर्थः । प्रातःसवनेन कल्पो व्याख्यात इत्यनेन महाभिषवोऽपि तद्वत् ।

तत्र विशेषमाह—

इहाइहेति सꣳश्रावयन्तोऽभिषुण्वन्ति ।

इहाइहेति उच्चैर्वदन्त इत्यर्थः । संशब्दात्पुनःपुनराम्रेडितमेतस्य शब्दस्य यावदभिषवं न तु द्विवारमेव पठनम् ।

---

* उभयतीति अ. ञ. पुस्तकयोः पाठः ।

उत्तमस्य पर्यायस्य मध्यमेऽभिषवे बृहद्बृहदित्यभिषुण्वन्ति ।

अत्राभिषुण्वन्तीत्यस्य पुनर्वचनमत्र बृहद्बृहदित्यभिषवमन्त्र एवायं न तु संराधनमात्रम् । तेनात्र मन्त्रान्ते क्रियेति सिध्यति पूर्वत्र तूच्चारणसमकालोऽभिषव इति भेदः ।

उत्तमेऽभिषवे सुसंभृते राजनि ।

उत्तमेऽभिषवे सुसंभृते राजनीत्यनेनोत्तमेऽभिषवे सर्वस्मिन्सोमरसे निर्गते पूतभृति सुसंभृते राजनीत्यर्थः । उत्तमेऽभिषव इत्यनुक्ते प्रत्यभिषवं यत्सुसंभरणं तत्र सर्वत्रापि स्यात्तन्निवृत्त्यर्थम् । सुसंभृते राजनीत्यनुक्तेऽभिषवोत्तरं सुसंभरणात्पूर्वमेव स्यात्तन्निवृत्त्यर्थम् ।

देवा ग्रावाण इन्दुरिन्द्र इत्यवादिषुरेन्द्रमचुच्यवुः परमस्याः परावत आऽस्मात्सधस्थादोरोरन्तरिक्षादासुभूतमसुषवुर्ब्रह्मवर्चसं म आसुषवुः समरे रक्षा᳚ꣳस्यवधिषुरपहतं ब्रह्मज्यस्येति प्रतिप्रस्थाता ग्राव्णोऽनुमोदते ।

अनुमोदनं क्रीडारूपेण लालनं क्रीडाभावनयुक्तमन्त्रपठनम् । तच्च चतुर्णामपि पृथक्पृथक् । सकृदेव मन्त्रः । बहुवचनलिङ्गात् । तत उपरे ग्राव्णः संमुखान्कृत्वेत्यादि ग्रावस्वध्यूहनान्तं करोति ।

अत्र सवनीयानां निर्वपणमेके समामनन्ति ।

अत्रास्मिन्काले । अत्रेति वचनान्नोत्तरत्र विहितकाले न च पूर्वत्रापि तेन पूर्वोऽपि कालोऽस्तीति गम्यते । स चोक्तो बौधायनेन—प्रातःसवन एव सर्वसवनीयान्निर्वपेत्कृतान्तात्पौरोडाशिकं कर्म प्रत्याददीतोत्तरयोः सवनयोरनुसवनमध्यूहनेनैव कपालेषु प्रतिपद्येत सिद्धमत ऊर्ध्वमिति तथा नु खलु माध्यंदिनीयाः सवनीया निरुप्यन्त इति क्षुल्लकवैश्वदेवस्य स्तोत्र इति ब्रूयात्तृतीयसवने सवनीया इति माहेन्द्रस्य स्तोत्र इत्येव ब्रूयादिति । अनुसवनमङ्गाराध्यूहनेनैव प्रतिपद्यते । प्रातःसवनोपहितेष्वेव कपालेषूत्तरयोर्द्वयोः सवनीययोरधिश्रयणमित्यर्थः । क्षुल्लकवैश्वदेवस्य स्तोत्र इत्याज्यानामादिमे स्तोत्र इत्यर्थः । तृतीयसवनसंबन्धिसवनीयाः केत्याशङ्कायां माहेन्द्रस्तोत्र इति माहेन्द्रस्तोत्रस्य काल इति तदर्थः । एतावता कालत्रयसत्त्वं सिध्यति ।

धाराग्रहकाले शुक्रामन्थिनावेवाग्रे गृहीत्वाऽऽग्रयणं तिसृभ्यो धाराभ्यो गृह्णात्याधवनीयात्तृतीयां धारां करोत्युक्थ्यं गृहीत्वा ।

उक्थ्यं गृहीत्वेत्यनन्तरं प्रतिप्रस्थातारं मरुत्वतीयग्रहग्रहणे सहत्वार्थं संनिहितं करोतीति शेषो ह्यठबोधितसमानकर्तृकतानिर्वाहाय । आधवनीयात्तृतीयधाराकरणमुदचनेन । अत्र

१ ख. तत्सर्वं ।

पूर्वोत्तरत्वं मन्त्रक्रमापेक्षया । शुक्रामन्थिनावेवाग्रे गृहीत्वेत्यनेनात्रैव कालः । तस्य प्रातः-सवनेन कल्पो व्याख्यात इत्यनेनातिदेशेन रथंतरसामैन्द्रवायवाग्रान्गृह्णीयाद्बृहत्सामिशुक्राग्रानिति व्यवस्था माध्यंदिने सवनेऽपि स्यात्तन्निवृत्त्यर्थम् । अग्रग्रहणमग्रता-विषयकत्वप्रदर्शनार्थम् ।

ऋतुपात्राभ्यां मरुत्वतीयौ गृह्णीतो मरुत्वन्तं वृषभं वावृधानमिति स्वेन पात्रेणाध्वर्युः पूर्वं गृह्णाति मरुत्वा२ इन्द्र वृषभो रणायेति स्वेन पात्रेण प्रतिप्रस्थातोत्तरम् ।

अत्र पूर्वोत्तरत्वं मन्त्रक्रमापेक्षया । मरुत्वद्देवताको ग्रहो मरुत्वतीयः । इन्द्रस्येदं विशेषणम् । द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ चेति पाणिनिसूत्राच्छप्रत्ययः ।

गृहीत्वा राजानमतिपावयति यावन्तं माध्यंदिनाय सवनायाऽऽप्तं मन्यते ।

व्याख्यातं प्रातःसवने । अत्रापि गृहीत्वेत्यनुवाद उत्तरत्रान्वयी । गृहीत्वेत्य-नन्तरमध्वर्युरिति शेषो ग्रहणातिपावनयोरध्वर्युकर्तृकताया निर्वाहाय ।

विरमति धारा मपीड्य पवित्रं निदधाति ।

इदमपि प्रातःसवने व्याख्यातम् ।

व्याख्यातमेकधनानामाधवनीयेऽवनयनम् ।

एकधनानामित्युक्तिर्मैत्रावरुणचमसाभावोऽत्रेतिसूचनाय । एकधनैकदेशानाधवनी-येऽवनीय तिरःपवित्रं पूतभृत्येकदेशमवनयतीत्यनेन सूत्रेण व्याख्यातमुक्तमित्यर्थः ।

पवमानग्रहान्कलशाञ्छुक्रामन्थिनावाग्रयणमुक्थ्यं च ग्रहावकाशैरुपस्थाय निःसर्पन्तः समन्वारभन्ते ।

अत्र ल्यपा निःसर्पणाङ्गतैवोपस्थानस्य न तु प्रसर्पणाङ्गता । तेनाध्वर्युब्रह्मयजमा-नानामेवोपस्थानमत्र न तु प्रतिप्रस्थातुः । तस्य निःसर्पणाभावात् । पवमानग्रहाणामु-पस्थानं कलशोपस्थानं शुक्रामन्थ्यादीनामुपस्थानमात्रमत्र न तु पदार्थक्रमोऽपि विव-क्षितः । किं तु मन्त्रक्रम एवात्र भवति । तेन प्रथमं पवमानग्रहोपस्थानं कृत्वा शुक्रा-मन्थ्यादीनामुपस्थानं च कृत्वा कलशानामुपस्थानम् । द्वौ समुद्राविति द्रोणकलशाध-वनीययोः पवमानग्रहयोः । द्वे द्रधसी इति पूतभृतः पवमानग्रहस्य । चक्षुष्मां म इति शुक्रामन्थिनोर्ग्रहयोः । आत्मने म इत्याग्रयणस्य ग्रहस्य । अङ्गेभ्यो म इत्यु-क्थ्यस्य ग्रहस्य । विष्णोर्जठरमिन्द्रस्य जठरं विश्वेषां देवानां जठरमित्येतैः क्रमेण कलशानामुपस्थानम् । उप कलशो ह्वयतामित्यादि षट्कमपि भवति । अनुक्तसमुच्चयार्थ-

चकारेण संगृहीतत्वात् । एतेनैव मरुत्वतीयोपस्थानार्थं परिभूरग्निमिति कोऽसि को नामेत्येतदुपस्थानमपि संगृहीतं भवति । नाऽऽहवनीयमुखातिग्राह्यादीनामुपस्थानं प्रातःसवन उपस्थितत्वात् ।

वैप्रुषान्सप्तहोतारं च हुत्वा माध्यंदिनं पवमानꣳ सर्पन्ति तस्य बहिष्पवमानेन कल्पो व्याख्यातः ॥ १ ॥

वैप्रुषान्सप्तहोतारं च हुत्वेति प्रातःसवने व्याख्यातम् । माध्यंदिनं पवमानं माध्यंदिनपवमानार्थं सर्पन्ति सदः सर्पन्ति । तस्य माध्यंदिनस्य पवमानस्य ।

अत्र मन्त्रविशेषमाह—

त्रैष्टुभः पन्था रुद्रा देवता द्रुकेणापरिपरेण पथा स्वस्ति रुद्रानशीयेति मन्त्रꣳ संनमति ।

स्पष्टम् ।

उत्तरेण हविर्धानं गत्वोत्तरेणाऽऽग्नीध्रीयं धिष्णियं परीत्य दक्षिणेन वा मार्जालीयमन्तरेण वा ।

उत्तरेणाऽऽग्नीध्रीयं धिष्णियं परीत्यान्तरेण सदोहविर्धाने गत्वा दक्षिणेन मार्जालीयं वेत्यर्थः । अन्तरेण वेत्यत्रान्तरेण हविर्धानमार्जालीयावित्यध्याहार्यं सामर्थ्यात् । अत्र वाकारद्वयं द्वावपि पक्षौ मुख्याविति द्योतनार्थम् ।

पूर्वेण द्वारेण सदः प्रविश्याध्वर्युर्यजमानो ब्रह्मा चावतिष्ठन्तेऽग्रेण प्रशास्त्रीयं धिष्णियं परीत्योद्गातारो माध्यंदिनेन पवमानेन स्तुवते ।

पूर्वेण द्वारेण सदः प्रविश्याग्रेण प्रशास्त्रीयं धिष्णियं परीत्याध्वर्युर्यजमानो ब्रह्मा चावतिष्ठन्त इत्येवं वाऽन्वयः । अत्रावस्थानं नामोपवेशनमेव । अथवाऽग्रेण प्रशास्त्रीयं धिष्णियं परीत्येत्यस्योत्तरसूत्रेऽन्वयः । दक्षिणेनौदुम्बरीमिति सूत्रान्तरेऽस्मिन्पक्षेऽधिकमुक्तं तदप्यविरोधात्कर्तव्यम् ।

यदन्यत्पश्वानयनात्तत्संप्रेष्यति प्रतिप्रस्थातर्दधिघर्मेण चरेति संप्रैषस्यान्तꣳ संनमति ।

प्रतिप्रस्थातः पशुनेहीति पश्वानयनं तस्मादन्यद्यत्प्रैषणं तत्संप्रेष्यति । तर्हि एतावदेव प्रेषणं नेत्याह प्रतिप्रस्थातर्दधिघर्मेण चरेति संप्रैषस्यान्तं संनमति ऊहतीत्यर्थः । संप्रेष्यतीति वचनाद्यजुर्वेदेनाध्वर्युरिति परिभाषासूत्राद्विशेषावचनाच्चाध्वर्युः प्रैषवक्ता ।

विहृतेषु व्याघारितेषु धिष्णियेषु ।

विभूरसीत्यादिभिर्मन्त्रैराग्नीध्रेण विहृतेषु अध्वर्युणा चतुर्गृहीतेन सोमेन व्या-

गृहीतेनाऽऽज्येन च यथापूर्वं व्याघारितेषु शेषे च मार्क्षिते सति । अत्र विहरणात्पूर्वं हविर्धानं प्रविश्य विष्णो त्वं न इति ग्रहोपस्थानमेतेनैव मन्त्रेण पात्रसंमर्शश्च भवति ।

**स्तीर्णे बर्हिषि ।**

आग्नीध्रेण स्तीर्णे बर्हिषीत्यर्थः ।

**प्रतिप्रस्थाता पशुपुरोडाशं निरु(रु)प्य सवनीयान्निर्वपति ।**

पूर्वत्र सवनीयनिर्वापपक्ष आग्नीध्रोऽत्र पुरोडाशालंकरणमपि करोति । पूर्वत्र सवनीयनिर्वापपक्षे पशुपुरोडाशस्यैव निर्वापोऽत्र ।

**एकादशकपालोऽत्र पुरोडाशः ।**

पशुपुरोडाशस्य त्वाग्नेयविकारत्वात्प्रकृतिप्राप्तानयष्टावेव । अत्र माध्यंदिने सवने ।

**नाऽऽमिक्षा विद्यते ।**

तस्य प्रातःसवनेन कल्पो व्याख्यात इत्यनेनाऽऽमिक्षाया अपि प्राप्तिः स्यात्तां वारयितुं निषेधः । अर्थः स्पष्टः ।

**अलंकृतेषु प्रतिप्रस्थाता दधिघर्मेण चरति ।**

अत्र निर्वापपक्षेऽत्रैवालंकरणं सवनीयानाम् । चरतीत्येकवचनं प्रतिप्रस्थात्रभिप्रायं तस्यैव मुख्यत्वात् । बहुवचनान्तपाठस्त्वशुद्धः ।

**यावती द्यावापृथिवी इत्याग्नीध्रागार**
**औदुम्बर्या९ स्रुचि दधि गृह्णाति ।**

अगारग्रहणं धिष्ण्यसमीपोपविष्टस्य मण्डपबहिष्ठस्यापि दधिघर्मग्रहणं स्यात्तद्व्यावृत्त्यर्थम् । स्रुग्ग्रहणं तूष्णीं जुहूवत्संमार्गः कार्य इत्येतदर्थम् ।

**वाक्च त्वा मनश्च श्रीणीतां प्राणश्च त्वाऽपानश्च श्रीणीतां**
**चक्षुश्च त्वा श्रोत्रं च श्रीणीतां दक्षश्च त्वा बलं**
**च श्रीणीतामोजश्च त्वा सहश्च श्रीणीतामायुश्च त्वा जरा**
**च श्रीणीतामात्मा च त्वा तनूश्च श्रीणीता९ शृतोऽसि**
**शृतं कृतः शृताय त्वा शृतेभ्यस्त्वेत्याग्नीध्रीयेऽधिश्रित्य ।**

अत्रोपस्तरणाभिघारणे न भवतः । अवचनात् ।

**होतर्वदस्व यत्ते वाद्यमिति संप्रेष्यति ।**

स्पष्टम् ।

**यदि श्रातो जुहोतन यद्यश्रातो ममत्तने-**
**त्युच्यमाने श्रात९ हविरिति प्रत्याह ।**

उच्यमान इत्यत्र होत्रेति शेषः ।

तमादायाऽऽहवनीयं गत्वाऽऽश्राव्य प्रत्या-
श्राविते दधिघर्मस्य यजेति संप्रेष्यति ।

आहवनीयं गत्वेतिवचनं गमनाव्यवहितोत्तरकालमेवाऽऽश्रावणं न तु मध्ये कालव्य-
वधानं कार्यम् । एतदर्थमेवाऽऽश्रावणप्रत्याश्रावणवचनम् । दधिघर्मस्य यजेति संप्रे-
ष्यति । प्रतिप्रस्थातेति शेषः । अधिकारात् ।

यमिन्द्रमाहुर्वरुणं यमाहुर्यं मित्रमाहुर्यमु सत्य-
माहुः । यो देवानां देवतमस्तपोजास्तस्मै
त्वा तेभ्यस्त्वा स्वाहेति वषट्कृते जुहोति ।

स्पष्टम् ।

अनुवषट्कृते हुत्वा हरति भक्षम् ।

होतारं प्रतीति शेषः ।

तं भक्षयन्ति ये प्रवर्ग्ये ।

ये प्रवर्ग्ये नियुक्ता ऋत्विजस्ते तं दधिघर्मं भक्षयन्तीत्यर्थः । भक्षिणामयं नियमः ।
न तु भक्षणधर्मातिदेशः । यथाप्रवर्ग्यमित्यवचनात् । न च घर्मधर्माः । दधिघर्मस्य
कृत्स्नविधानात् । अतो नोपह्वयाचनम् ।

तस्याऽऽरण्येऽनुवाक्यो भक्षमन्त्रः ॥ २ ॥

इति हिरण्यकेशिसूत्रे नवमप्रश्ने प्रथमः पटलः ।

---

तस्य दधिघर्मस्य दधिभक्षमन्त्र आरण्य आरण्यग्रन्थे पठितोऽनुवाक्योऽनुवाका-
त्मकः । उक्तो भवतीति शेषः । कोऽसौ । भूर्भुवः सुवर्मयि त्यदित्यनुवाकः । वक्ष्यति
च प्रवर्ग्यसूत्रे—भूर्भुवः सुवरित्यनुवाकेन दधिघर्मं भक्षयन्तीति । अस्मिन्भक्षमन्त्रे पूर्वो-
त्तरे शान्ती । तथा च प्रवर्ग्यसूत्रम्—मद्न्तीरुपस्पृश्य प्रथमेनानुवाकेन शान्तिं कृत्वाऽ-
धीयीताधीत्य चोत्तमेनैवं कर्मस्विति । एवमित्यतिदेशादत्रापि मद्न्त्युपस्पर्शः । अयं
मन्त्रो ब्राह्मणोक्तेन मन्त्रेण विकल्पते । स च मयि त्यदिन्द्रियं महदित्यारभ्य वाग्जु-
षाणा सोमस्य तृप्यत्वित्यन्तः । अस्मिन्पक्षे न शान्ती । अत्राऽऽपस्तम्बेन विशेष
उक्तः—मित्रो जनान्प्रसमित्रेति भक्षयित्वा नाभिदेशमभिमृशन्त इति । अविरोधान्म-
न्त्रविनियोगस्य सूत्रकृतोऽपीष्टत्वाच्चेदमप्यङ्गीकर्तव्यम् । अप्रवर्ग्ये क्रतौ न दधिघर्मः ।

---

१ ग. ङ. च. ज. झ. ञ. ट. प्रवर्ग्यम् ।

दधिघर्मं प्रकृत्याऽऽश्वलायनः—प्रवर्ग्यवांश्चेदिति । आपस्तम्बेन तु विकल्प उक्तो दधिघर्ममुक्त्वा माप्रवर्ग्ये स्यादित्यपरमित्यनेन सूत्रेण । अप्रवर्ग्ये क्रतौ न स्याद्द दधिघर्म इति तदर्थः ।

इत्यौखेयोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्निचित्वाजपेययाजिसर्वतोमुखया-
जिद्विसाहस्राग्निचित्पौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथ-
दीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसू-
त्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंताप-
शामिकायां ज्योत्स्नाख्यायां वृत्तौ नवमप्र-
श्नस्य प्रथमः पटलः ॥ १ ॥

---

अथ नवमप्रश्ने द्वितीयः पटलः ।

---

पुरोडाशानासाद्य तैः समवदाय प्रचरति
माध्यंदिनस्य सवनस्येति संप्रेष्यति ।

प्रतिप्रस्थात्रा हुतान्पुरोडाशानासाद्य तैः पुरोडाशैः समवदाय प्रचरति । समवदानस्वरूपं तु प्रातःसवन एवोक्तम् । प्रचरतीत्येकवचनमध्वर्योर्मुख्यत्वाभिप्रायेण । प्रातः प्रातःसावस्येत्येतस्य स्थाने माध्यंदिनस्य सवनस्येति । एवमूहितेन प्रैषमन्त्रेण प्रेष्यति । प्रशास्तारं प्रत्ययं प्रैषः ।

पशुपुरोडाशेन प्रचर्य समवदाय सवनीयैः प्रचरति ।

पशुपुरोडाशेन प्रचर्येतिवचनान्नित्य एव पशुपुरोडाशः । अनेनाऽऽपस्तम्बोक्तमनित्यत्वं निवर्त्यते । नित्यत्वे लिङ्गमप्यस्ति । वपया प्रातःसवने चरन्ति पुरोडाशेन माध्यंदिने सवनेऽङ्गैस्तृतीयसवन इति । बह्वृचानामप्येष एव सिद्धान्तः ।

पशुपुरोडाशस्य सवनीयानां च समानः स्विष्टकृदिडम् ।

गतार्थं प्रातःसवने ।

आधवनीयं पूतभृत्यवनीय दशाभिः कलशं मृष्ट्वा न्युब्जति ।

इदमपि गतार्थं तत्रैव ।

उन्नीयमानेभ्योऽनुब्रूहि होतुश्चमसमनून्नयध्वमुभयतः शुक्रान्कुरुध्व-
मच्छावाकस्य चमसाध्वर्योऽपि त्वमुन्नयस्व प्रतिप्रस्थातः प्रोक्षि-
ताप्रोक्षिताञ्छकलानुपकल्पयोन्नेतः सोमं प्रभावयेति संप्रेष्यति ।

प्रैषमध्ये विशेषस्य सत्त्वात्तत्परिज्ञानाय प्रैषस्य कृत्स्नः पाठः ।

होतृचमसमुख्यानेकादश चमसानुन्नयति पुर- स्तादाग्नीध्रचमसादच्छावाकचमसमुन्नयति ।

पुरस्तादाग्नीध्रचमसादच्छावाकचमसमुन्नयतीत्येतावान्विशेषोऽत्र । अन्यत्समानम् । एकादशेति सदस्याभिप्रायम् ।

माध्यंदिनस्य सवनस्य निष्केवल्यस्य भागस्य शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्य मध्यतः- कारिणां चमसाध्वर्यवो वषट्कृतानुवषट्कृताञ्जुहुत होत्र- काणां चमसाध्वर्यवः सकृत्सकृद्धुत्वा शुक्रस्याभ्युन्नीयोपाव- र्तध्वमिति संप्रेष्यति यत्प्राकुनरभ्युन्नीतेभ्यस्तस्मिन्कृते प्रसर्पणमन्त्रैर्होत्रकाः प्रसृप्य पुनरभ्युन्नीतानां यजन्ति ।

पुनःशब्दोऽवधारणे । अभ्युन्नीतेभ्यः प्रागेव यत्कर्म तस्मिन्कृते नमोऽग्नये मखघ्न इत्यादयो मन्त्राः प्रसर्पणमन्त्रास्तैर्होत्रकाः सदः प्रसृप्य । दक्षिणार्धपरेक्षणा- न्तं सदःप्रसर्पणम् । अत्रापि पुनःशब्दोऽवधारणार्थक एव । यत्र कुनरभ्युन्नीते भ्यस्तस्मिन्कृत इत्येतस्यायमर्थः—यत्प्रागेवाभ्युन्नीतेभ्यः प्रेषणं तस्मिन्कृते तस्मिन्नुच्चा रिते सति । अस्मिन्नवसरे प्रसर्पणमन्त्रैर्होत्रकाणां प्रसर्पणम् । एतदर्थमेव कृत्स्नप्रै- षस्य पाठः । प्रथमत आश्वलायनसूत्रोक्तरीत्योपविष्टेषु सत्स्वपीदं याजुषहौत्रविषयकं पुनःप्रसर्पणं वाचनिकम् ।

अयाडग्नीदिति होतुराख्याय निरवदाय होत्र इडामा- दधात्युपहूयमानामुपोद्यच्छन्ते चमसांश्चमसाध्वर्यवः ।

होतुराख्यायेतीदमाख्यानग्रहणात्समंद्रमकरित्येतदुच्चारणकाल एव निरवदानं न तु तदनन्तरम् ।

नेडाशकलमच्छावाकाय निदधाति ।

एतादृशविशेषविधानार्थ एवायमनुवादः । अर्थस्तु स्पष्टः । प्रातःसवनेन कल्पो व्याख्यात इत्यनेनेडाशकलनिधानं प्राप्तं तदनेन निवार्यते ।

यथाचमसं चमसिनो भक्षयन्ति तेषां व्याख्यातो भक्षमन्त्रः ।

चमसमनतिक्रम्येति यथाचमसम् । कृतव्याख्यानं प्रातःसवने ।

सन्नेषु नाराशंसेषु दक्षिणेन वेदिमवस्थितासु दक्षिणासु दाक्षिणानि जुहोति यथा वैसर्जनानि ।

दक्षिणेनेत्यनेना वेदिसंलग्नप्रदेशे दक्षिणानामवस्थानम् । वेदिर्महावेदिः । दक्षिणा- प्रयुक्तानि होमात्मकानि कर्माणि दाक्षिणानि । यथा वैसर्जनानीत्यनेनामात्यान्वार- म्भोऽतिदिश्यते ।

**प्रच्छादनार्थस्य वाससो दशायाꣳ हिरण्यं बद्ध्वाऽऽज्येऽवधाय स्रुग्दण्डे वाससोऽन्तमुपनियम्योदु त्यं चित्रमिति द्वाभ्याꣳ शालामुखीये जुहोति शेषमाज्यस्य करोति ।**

मतार्थमेतत् ।

**नीयमानासु पूर्वः प्रतिपद्याग्ने नयेति नयवत्यर्चाऽऽग्नीध्रे जुहोति ।**

परिकर्मिभिराग्नीध्रीयमण्डपं प्रति नीयमानासु सतीषु पूर्वः प्रथमं प्रतिपद्य गत्वा, अग्ने नयेत्यृङ्नयवती । नयपदघटितत्वात् । यथा वैसर्जनानीत्येतावतैव प्रच्छादनार्थस्य वाससो दशायाꣳ हिरण्यं बद्ध्वाऽऽज्येऽवधाय स्रुग्दण्डे वाससोऽन्तमुपनियम्येत्येतदन्तेषु पदार्थेषु सिद्धेषु । अत्र पुनर्वचनमेते पदार्थाः पूर्वाहुत्योरेव न नयवत्यां दाक्षिणहोम एव न वैसर्जनहोम इतिविशेषबोधनार्थम् । तेन वैसर्जनहोमे नयवत्यामपि भवति । अत एवाऽऽपस्तम्बेन तथैव समन्वारब्धेषु वाऽग्ने नयेत्याग्नीध्रीये जुहोतीति पाक्षिकत्वमन्वारम्भस्योक्तम् ।

**शेषमाज्यस्य करोति ।**

स्पष्टम् ।

**दिवं गच्छ सुवः पतेति हिरण्यꣳ हुत्वोद्गृह्णाति ।**

हुत्वोद्गृह्णाति हिरण्यमित्यन्वयः । स्रुक्त ऊर्ध्वं हिरण्यं गृह्णातीत्यर्थः ।

**वनेषु व्यन्तरिक्षं ततानेति द्वितीयां यद्यनो रथोऽधीवासो वा दीयते ।**

यदि यजमानेनानः शकटं दीयते रथो वा दीयतेऽधीवासश्चर्मपटो वा दीयते तदेयं द्वितीयाहुतिः ।

**प्रजापते न त्वदेतानीति तृतीयां यद्यश्वः पुरुषो हस्ती वा दीयते ।**

यदि यजमानेनाश्वः पुरुषो दासो हस्ती वा दीयते तदेयं तृतीयाहुतिः ।

**नीतासु दक्षिणासु यज्ञपतिमृषय एनसाऽऽहुरिति ॥ ३ ॥ पञ्चभिराग्नीध्रीये वैश्वकर्मणानि जुहोति ।**

नीतासु दक्षिणासु तेन तेनर्त्विजा नीतासु दक्षिणासु सतीषु यज्ञपतिमृषय एनसाऽऽहुरिति पञ्चभिर्मन्त्रैराग्नीध्रीये वैश्वकर्मणानि जुहोति । पञ्चम्यामाहुतौ वैश्वकर्मणत्वं सृष्टिन्यायेन । यज्ञपतिं० घोरा ऋषयः० अनन्यान्सोमपान्० ये भक्षयन्तः० नमः पितृभ्य इति पञ्चेति भरद्वाजः स्पष्टमाह । एतदाहुत्यात्मकानि कर्माणि वैश्वकर्मणानि विश्वकर्मण इमानि वैश्वकर्मणानि । एतान्याग्नीध्रीये जुहोति । आग्नीध्रीयग्रहणमाहवनीयव्यावृत्त्यर्थम् । यथापाठमवसानं त्यज्यतेऽत्र[1] । यत्र विश्वकर्मपदं यावति भाग आयाति तदनुरोधेनावसानानि कल्प्यन्ते भरद्वाजेन स्पष्टतयोक्तत्वात् ।

---

१ ग. तत्र ।

**यथागृहीतं मरुत्वतीयावादायेन्द्राय मरुत्व-
तेऽनुब्रूहीन्द्राय मरुत्वते प्रेष्येति संप्रेष्यति ।**

गृहीतौ ग्रहावनतिक्रम्येति यथागृहीतम् । मरुत्वतीयौ ग्रहावध्वर्युप्रतिप्रस्थातारा-
वादायेत्यर्थः । यजुर्वेदेनाध्वर्युरितिपरिभाषासूत्रादध्वर्युरेव ।

**हुत्वा व्यवनयेते ।**

वषट्कारानुवषट्कारयोर्हुत्वा व्यवनयेते । अध्वर्योः पात्रे प्रतिप्रस्थाता संपातमवन-
यति तस्यैकदेशमध्वर्युः प्रतिप्रस्थातुः पात्र इति संपातावनयनं कुरुत इत्यर्थः ।
व्यवनयेते इत्यत्र विशब्दः प्रातःसवनिकसंपातावनयनतोऽत्र वैलक्षण्यद्योतनार्थः । तच्च
वैलक्षण्यमुभयोरप्यैकरूप्येण न तु संपातावनयनमध्वर्योरेकदेशावनयनं प्रतिप्रस्थातुरि-
त्येवंरूपोऽत्र भेद इत्येवंरूपं वैलक्षण्यम् ।

**यथर्तुग्रहेषु प्रतिप्रस्थानेन भक्षयन्ति ।**

यथर्तुग्रहेषु प्रतिप्रस्थातृपात्रेण प्रथममुखेन भक्षणं तथाऽत्रापीत्यर्थः ।

**द्विर्होता सकृत्सकृदितरौ ।**

होतुर्द्विवारभक्षणं वषट्कारानुवषट्कारनिमित्तमितरयोरध्वर्युप्रतिप्रस्थात्रोर्होमाभिषव-
निमित्तं सकृत्सकृत् । तत्राध्वर्योर्मुख्यतः प्रवृत्तत्वात्तस्यैव प्रथमो भक्षोऽनन्तरं प्रति-
प्रस्थातुः ।

**मार्जालीये पात्रं प्रक्षाल्य होतुः सकाशे निदधाति ।**

सकाशे समीपे ।

**जनिष्ठा उग्रः सहसे तुराय मन्द्र ओजिष्ठो बहुलाभि-
मानः । अवर्धन्निन्द्रं मरुतश्चिदत्र माता यद्वीरं दधनद्ध-
निष्ठा । इन्द्र मरुत्व इह पाहीत्यन्यतरेण स्वेन पात्रेणा-
भक्षितेन तृतीयं मरुत्वतीयं कलशाच्छुक्रवन्तं गृह्णाति ।**

वाशब्देनैव विकल्पे सिद्धेऽन्यतरवचनं व्यवस्थार्थं विकृतिषु जनिष्ठा इति मन्त्रः
प्रकृताविन्द्र मरुत्व इति । स्वेन पात्रेणाभक्षितेनेति प्रातःसवने दर्शितप्रयोजनम् ।
द्वौ मरुत्वतीयौ गृहीतौ । अयं तृतीयो मरुत्वतीयो ग्रहग्रहणकालेऽयं शुक्रवान्ग्रह
इतिज्ञानावश्यकत्वार्थम् । एतज्ज्ञानाभावे यजुर्भ्रेषप्रायश्चित्तं दक्षिणाग्नौ ।

**ऋतुपात्रमारभ्य प्रतिगृणाति ।**

आरभ्याऽऽलभ्य । अत्राऽऽलम्भशब्दार्थो हस्ते ग्रहणमेव । तिष्ठतोऽध्वर्योर्मुख्याल-
म्भशब्दार्थस्य यावत्प्रतिगरं कर्तुमसंभवात् । ऋतुपात्रं दक्षिणहस्ते गृहीत्वा शस्त्रं
प्रतिगृणातीत्यर्थः ।

---

१ ग. 'स्त्रं ।

उक्थं वाचीति शस्त्रं प्रतिगीर्य सर्वत्र माध्यंदिने सवने जपति।

स्पष्टम्।

शस्त्रं प्रतिगीर्य ग्रहमादत्ते चमसाꣳश्चमसाध्वर्यव उक्थशा यज सोमस्येति संप्रेष्यति। व्याख्यातमनुप्रकम्पनं ग्रहनाराशꣳसानां भक्ष आप्यायनसादने च नाराशꣳसानाम्।

ऐन्द्राग्नवच्छस्त्रप्रतिग्रहनाराशंस्याश्चेत्येव लाघवात्सूत्रे कर्तव्ये गुरुसूत्रकरणं(!) शस्त्रप्रतिगरोत्तरमेतत्सूत्रपाठ आवश्यकः। एतदकरणे यजुर्भ्रेषप्रायश्चित्तं भुवः स्वाहेति दक्षिणाग्नौ। अदृष्टमेवैतत्फलं दृष्टासंभवात्।

महाꣳ इन्द्रो य ओजसा महाꣳ इन्द्रो नृवदित्यन्यतरेण शुक्रपात्रेण माहेन्द्रं कलशात्स्तुतशस्त्रवन्तं गृह्णाति।

वाकारेणैव विकल्पे सिद्धेऽन्यतरग्रहणं विनिवेशविकल्पार्थम्। रथंतरे पूर्वया ग्रहणं बृहत्युत्तरया। एतदुक्तं बौधायनेन— बृहत्पृष्ठे महाꣳ इन्द्रो नृवदित्येतयेति। उभयसाम्नि तु ग्रहाग्रवत्। वैराजादिष्वनियमः। विनिवेशविकल्पे द्विबर्हा इति बृहतो लिङ्गमिदमप्यस्ति। एतेन यत्तुल्यविकल्प इति यैरुक्तं तन्निरस्तम्। तृतीयसवनेऽत्र सवनीयानां निर्वपणमेके समामनन्तीति वक्ष्यमाणसूत्रेऽत्रग्रहणेन ज्ञापितो माहेन्द्रग्रहग्रहणोत्तरमपि सवनीयनिर्वपणकालः। तेनात्र पक्षे सवनीयनिर्वपणम्। बौधायनेनाप्यत्र तार्तीयसवनीयानां निर्वाप उक्तः। तच्च दर्शितमेव प्राक्। भारद्वाजादयश्चाऽऽहुः— अत्र तार्तीयसवनिकमभिषवमभिषुणुयान्स(त्स)वनीयान्सौम्यमिति निर्वपेदाशिरमवनयेदित्येकं तृतीयसवनमित्यपरमिति। स्तुतशस्त्रवन्तमिति दर्शितप्रयोजनं प्रातःसवने।

तꣳ सादयित्वा स्तोत्रमुपाकरोति तद्व्याख्यातमपवृत्ते स्तोत्रे शस्त्रमुपाकरोति तद्व्याख्यातम्।

व्याख्यातमेतत्प्रातःसवने।

शस्त्रं प्रतिगीर्य ग्रहमादत्ते चमसाꣳश्चमसाध्वर्यवः।

स्तुते वैश्वदेववच्छस्त्रग्रहनाराशंस्या इति लाघवाद्वक्तव्ये गुरुसूत्रकरणप्रयोजनं सूत्रपाठावश्यकत्वार्थम्। सूत्रं कृतव्याख्यानम्। शस्त्रं प्रतिगीर्येत्यपि दर्शितप्रयोजनम्।

अतिग्राह्यानितरेऽध्वर्यव आग्नेयं प्रतिप्रस्थातैन्द्रं नेष्टा सौर्यमुन्नेता।

अध्वर्युशब्देन प्रतिप्रस्थातृनेष्टून्नेतारः। अध्वर्युः प्रतिप्रस्थाता नेष्टोन्नेतेत्यध्वर्यव इति सूत्रात्। एतेषां ग्रहाणामादानावसरस्तु आपस्तम्बेन प्रदर्शितः—माहेन्द्रं त्वतिग्राह्या अनु गृह्णन्त इति। आग्नेयमतिग्राह्यं प्रतिप्रस्थाता, ऐन्द्रमतिग्राह्यं नेष्टा सौर्यमतिग्राह्यमुन्नेतेत्यर्थः।

**उक्थशा यज सोमस्येति संप्रेष्यत्यग्ने तेज-**
**स्विन्तेजस्वीत्येतैर्यथारूपमतिग्राह्याञ्जुहोति ।**

अग्ने तेजस्विन्नित्ययं मन्त्रः प्रतिप्रस्थातुराग्नेयातिग्राह्यहोमे । इन्द्रौजस्विन्नित्ययं मन्त्रो नेष्टुरैन्द्रातिग्राह्यहोमे । सूर्य भ्राजस्विन्नित्ययं मन्त्र उन्नेतुः सौर्यातिग्राह्यहोम इत्ययं यथारूपशब्दार्थः । एतद्धोमावसरस्त्वापस्तम्बेन स्पष्टमुक्तः—हुते माहेन्द्रे पश्चाद्दर्विहोमधर्मेण हूयन्त इति । न त्वस्य वषट्कारो । कुतः । आपस्तम्बसूत्रेऽनुहूयन्त इति वचनात् । उक्थशा यज सोमस्येत्येकवचनाद्देवताभेदाच्च । ततो माहेन्द्रस्यानुवषट्कारः ।

**मयि मेधां मयि प्रजामित्येतैर्यथारूपमतिग्राह्यान्भक्षयन्ति ।**

मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु इत्याग्नेयं प्रतिप्रस्थाता भक्षयति । मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु इत्यैन्द्रं नेष्टा भक्षयति । मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधात्विति सौर्यमुन्नेता भक्षयतीति यथारूपशब्दार्थः । मन्द्राभिभूतिर्वाग्वेवीत्युभयोर्बाधः । अध्वर्योर्होमाभिषवनिमित्तकभक्षकर्तृत्वादुपह्वानं त्रिभिः कार्यम् ।

**सर्वभक्षा नाऽऽप्यायनसादने भवतः ।**

स्पष्टम् ।

**त्रिभिरुक्थ्यविग्रहैः प्रचरतो यथा पुरस्तात् ।**

यथा पुरस्तादित्यनेनोक्थ्यस्थाल्या उक्थ्यपात्रेण तृतीयांशस्य ग्रहणमायतने सादनं स्थालीप्रत्यभिमर्शनं त्रिषु ग्रहेषु यथाक्रमं तत्तच्छस्त्रिप्रमुखैकादशे चमसोन्नयनं पुरस्तादाग्नीध्रचमसादच्छावाकचमसस्योन्नयनं स्तुतशस्त्रोपाकरणं शस्त्रप्रतिगरादिभक्षान्तानि कर्माणि च प्राप्यन्ते ।

तत्र विशेषमाह—

**इन्द्राय त्वेति सर्वत्र ग्रहणसादनौ संनमतः ।**

मित्रावरुणौ, इन्द्र इन्द्राग्नी इत्येता देवता बाधित्वेन्द्रदेवता विधीयते । इन्द्रशब्दवानेव मन्त्रः सर्वत्रेतरयोरपि भवति । तत्र ग्रहणमन्त्र उपयामगृहीतोऽसीति । एष ते योनिरिन्द्राय त्वेति सादनः । गृह्यतेऽनेनेति ग्रहणः । साद्यतेऽनेनेति सादनः । मन्त्रयोर्विशेषणे एते ।

**विश्वे देवा मरुत इन्द्रो अस्मानिति सꣳस्थिते जुहोति ।**

व्याख्यातं प्रातःसवने ।

---

१ ग. च. °रौ कुरुतः ।

प्रशास्तः प्रसुवेति संप्रेष्यति सर्पतेत्याह
प्रशास्ता संतिष्ठते माध्यंदिनꣳ सवनम्॥४॥
इति हिरण्यकेशिसूत्रे नवमप्रश्ने द्वितीयः पटलः।

---

गतम्।

इत्योकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्नियुक्तवाजपेययाजिसर्वतोमुखया-
जिद्विसाहस्राग्नियुक्तपौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथ-
दीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसू-
त्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंताप-
शामिकायां ज्योत्स्नाख्यायां वृत्तौ नवम-
प्रश्नस्य द्वितीयः पटलः॥ २॥

---

अथ नवमप्रश्ने तृतीयः पटलः।

---

आदित्यारम्भणं तृतीयसवनं तायते।

प्रथमत आदित्यग्रहविधानादेव सिद्ध इदं वचनं भ्रान्त्याऽऽदित्यग्रहं विस्मृत्य वसतीवरीभ्यो निषिञ्चेत्याद्येव करोति तदाऽऽदित्यग्रहप्रयुक्तं विधिं सूदवत्पात्रꣳ साद-यतीत्यन्तं कृत्वा पुनर्वसतीवरीभ्यो निषिञ्चेत्यादि कृतमपि करोति न तु विपर्यासप्र-युक्तप्रायश्चित्तेन चारितार्थ्यमितिज्ञापनार्थम्।

तस्य माध्यंदिनेन सवनेन कल्पो व्याख्यातः।

स्पष्टम्।

अपिधाय हविर्धानस्य द्वारे यदा बहवोऽन्तर्वेदि।

अपिधायाऽऽच्छाद्य। यदा बहवोऽन्तर्वेदि उपविष्टाः स्युस्तदा द्वारापिधानं नान्यदेति। बहव इत्यनेन ये कर्मानभिज्ञा बहुजनास्तेऽत्र बहुवचनेन गृह्यन्ते। तथा चाऽऽप-स्तम्बः—हविर्धानस्योभे द्वारौ संवृत्य बहुजनायां वेद्यामिति।

यदा वाऽस्य भ्रातृव्यः।

यदाऽस्य यजमानस्य भ्रातृव्यः शत्रुरन्तर्वेद्युपविष्टो भवति तदाऽपि द्वारापिधानम्।

अन्तर्वेदि यजमानः पत्नी च भवतोऽथाऽऽदित्यं गृह्णाति।

अन्तर्वेदि यजमानस्य सत्त्वे सिद्धेऽप्यत्र वचनं वेदिमध्यभागे हविर्धानात्मक उप-वेशनविधानार्थं तच्चोभयोः। समासाभावात्साहित्यं न विवक्षितम्। अथशब्दोऽन्तर्वेद्यु-भयकर्तृकोपवेशनानन्तर्यार्थः।

**यस्य भ्रातृव्यः सोमेन यजेत याव-
दादित्यं गृह्णीयात्तावद्बहिर्वेदि तिष्ठेत् ।**

यदा बहूनां मध्ये भ्रातृव्योऽपि अन्तर्वेदि प्रविष्ट एव यजमानो भवेत् । भ्रातृव्य-कर्तृके सोम आदित्ये गृह्यमाणे तस्य यज्ञे तावत्पर्यन्तं बहिर्वेदि तिष्ठेदित्यर्थः । अमु-मर्थं स्पष्टमाहाऽऽपस्तम्बः—भ्रातृव्ययज्ञे तु गृह्यमाण आदित्ये बहिर्वेदि तिष्ठेदिति । भ्रातृव्ययज्ञे स्वयंगतस्त्वादित्यग्रहणकाले तत्र बहिर्वेद्येव तिष्ठेदित्यापस्तम्बसूत्रार्थः ।

**कदाचन स्तरीरसीति य आदित्यस्था-
ल्याꣳ सोमस्तस्यैकदेशमादित्यपात्रेण गृह्णाति ।**

सोमोऽत्राऽऽदित्यस्थालीगतो द्विदेवत्यग्रहसंपातात्मकः ।

**कदाचन प्रयुच्छसीति शृतातङ्क्यं दधि ।**

यदादित्यग्रहार्थं पूर्वं कृतं दधि तद्गृह्णाति ।

**यज्ञो देवानां प्रत्येतीति य आदित्यस्थाल्याꣳ सोमस्तꣳ सर्वं गृह्णाति ।**

द्विदेवत्यसंपातात्मकसोमावशेषः सोमस्तं सर्वं गृह्णाति । उपरिष्टादुपयामा ऋचेति-परिभाषात एतेषु मन्त्रेष्वन्त उपयामगृहीतोऽसीति भवति ।

**विवस्व आदित्येत्युपाꣳशुसवनेनाऽऽदित्यं मेलयति ।**

आदित्यग्रहार्थं तत्पात्रे गृहीतं सोमं दधि च मेलयत्यालोडयतीत्यर्थः ।

**या दिव्या वृष्टिस्तया त्वा श्रीणामीत्यादित्यं
पयसा दध्ना वोपरिष्टाद्वृष्टिकामस्य श्रीणीयात् ।**

उपरिष्टादन्तिमसोमग्रहणानन्तरम् । अत्र यजमानेन वृष्टिकामेन पयसा दध्ना वाऽ-न्तिमसोमग्रहणानन्तरं श्रयणं करिष्य इति संकल्पः कार्यः । यानि तु कामयतिः श्रावयतीति दर्शपूर्णमासयाजमानसूत्रात् ।

**न मध्यतो दधि गृह्णातीत्येकेषाम् ।**

एकेषामाचार्याणां मते कदाचन प्रयुच्छसीति शृतातङ्क्यदधिग्रहणस्य लोपः ।

**तस्मिन्नुपाꣳशुसवनं ग्रावाणमवदधाति ।**

तस्मिन्गृहीत आदित्यग्रह उपांशुसवनाख्यो यो ग्रावा तमुपरि दधाति । अत्र ग्रावपदं न पठन्त्युदीच्यास्तद्युक्तिसहमेव ।

**तमुद्यम्य विज्ञानमुपैति ।**

तमुपांशुसवनमूर्ध्वं गृहीत्वा तस्मादादित्यग्रहाद्विज्ञानं भाविवृष्टेश्चिह्नं जानीयात् । तदेवाऽऽह—

यद्युद्द्रुतस्य क्षिप्रꣳ स्तोकः प्रस्कन्दे-
द्वर्षुकः पर्जन्यः स्याद्यदि चिरमवर्षुकः।

यदि उद्द्रुतस्योच्छलितस्य सोमरसस्य क्षिप्रं शीघ्रं स्तोको बिन्दुः प्रस्कन्देद्बहिः पतेत्तदा वर्षुको वर्षणशीलः पर्जन्यो भवेद्यदि चिरं विलम्बेन तदाऽवर्षणशील इत्येव विज्ञानशब्दार्थः। यदि चिरं प्रस्कन्देदित्यन्वयः।

न सादयति।

ग्रहमित्येव शेषः। सर्वग्रहाणां परिमार्जनं यथायोनि सादनं चेति परिभाषातः प्राप्तं सादनमनेन निषिध्यते। परिमार्जनं तु भवत्येव तस्य निषेधकवचनाभावात्। ग्रावाणं तु सादयत्येव कार्यानुरोधात्तथोपांशुप्रवनं ग्रावस्वपिसृजनीति बौधायनोक्तेश्च।

आसमुद्रादान्तरिक्षादिति दर्भैराच्यावयति।

परिभोजनीयदर्भैरादित्यमाच्यावयति विलोडयति।

अहं परस्तादहमवस्तादिति दर्भैर्हस्तेन वाऽपिदधाति।

पुनर्दर्भग्रहणादत्रान्ये दर्भा न तु पूर्वगृहीता एव। हस्तेन दक्षिणेनापिदधाति आच्छादयत्यादित्यग्रहम्।

सूर्यो मा देवो देवेभ्यः पात्वित्युत्तिष्ठति।

स्पष्टम्।

कविर्यज्ञस्य वितनोति पन्थामिति हरति।

उत्तरवेदिं प्रति नयतीत्यर्थः।

आदित्येभ्यः प्रियेभ्यः प्रियधामभ्यः प्रियव्र-
तेभ्यो महस्व सरस्वपतिभ्य उरोरन्तरिक्षस्याध्यक्षे-
भ्योऽनुब्रूह्यादित्येभ्यः प्रियेभ्यः प्रियधामभ्यः
प्रियव्रतेभ्यो महस्व सरस्वपतिभ्य उरोरन्तरि-
क्षस्याध्यक्षेभ्यः प्रेष्येति संप्रेष्यति ॥ ९ ॥

स्पष्टम्।

यास्ते विश्वाः समिधः सन्त्यग्न इति दर्भा-
नाहवनीये प्रास्यान्यत्प्रेक्षमाणो जुहोति।

अयं मन्त्रः प्रधानीभूतायां होमक्रियायामेवान्वेति न तु दर्भप्रासने। यत्तु मन्त्रेण दर्भप्रासनं तूष्णीं होम इति केचिद्वदन्ति तत्तुच्छम्। आहुतिं घृतस्येतिलिङ्गविरोधात्प्रधानीभूतहोमक्रियायामेवान्वयस्य युक्तत्वाच्च।

उन्नम्भय पृथिवीमिति वृष्टिकामस्य जुहुयात् ।

अनेन मन्त्रेण यास्ते विश्वा इत्यस्य बाधः । तत्स्थानापन्नत्वात्प्रधानीभूतहोमक्रिया-विनियोगवदेतस्यापि विनियोगो लिङ्गाभावेऽपि । अत्र यजमानेन वृष्टिकामेन संकल्पः कार्यो वृष्टिकाम उन्नम्भय पृथिवीमित्यनेन मन्त्रेणाऽऽदित्यग्रहं होष्यामीति ।

न हुत्वाऽन्वीक्षेत ।

हुतमपि सादनपर्यन्तं न वीक्षेत कुतो होमकाले ।

नानुवषट्करोति न भक्षयति सूदवत्पात्र९ सादयति ।

सूदः शेषः । अवधानार्थो निषेधो नानुवषट्करोतीति । होमाभिषवनिमित्तको भक्षः प्राप्तस्तद्बाधनार्थं न भक्षयतीति । भक्षणाभावेऽपि शेषस्थापनं न स्यात्तदर्थं सूदवदिति। उत्तरत्र विनियोगादेव शेषस्थापने सिद्ध इदं वचनमवधानार्थम् ।

वसतीवरीभ्यो निषिच्य निग्राभ्याः करोति।

होतृचमसे वसतीवरीभ्यो निषिच्य निग्राभ्याः स्थेति निग्राभ्याः करोतीत्यनेन विधिनेत्यर्थः ।

य उपा९शुपात्रेऽ९शुस्तमृजीषेऽपिसृज्यादाभ्या९-
शुमुपा९शुपावनौ चर्जीषं तूष्णीमभिषुण्वन्ति ।

एतान्पदार्थानृजीषेऽपिसृज्य प्रक्षिप्यैतैः सहर्जीषं तूष्णीमेवाभिषुण्वन्ति । इहाइहेत्य-त्रापि भवति । तस्य माध्यंदिनेन सवनेन कल्पो व्याख्यात इति सूत्रात् । नच तूष्णीमभिषुण्वन्तीति वचनेन विरोधः शङ्क्यः । इहाइहेत्यस्याभिषवकरणत्वाभावात् । बृहद्बृहदिति तु न भवति । एतस्याभिषवकरणत्वेन तूष्णीमितिवचनेनैतस्य बाधात् ।

न ग्रावस्तुते सोमोष्णीषं प्रयच्छति ।

माध्यंदिनसवनातिदेशतः प्राप्तस्य निषेधः ।

न प्रतिप्रस्थाता ग्राव्णोऽनुमोदते ।

अस्यापि माध्यंदिनसवनातिदेशतः प्राप्तस्य निषेधः ।

अत्र सवनीयानां निर्वपणमेके समामनन्ति ।

अत्रास्मिन्काले न माध्यंदिने सवने माहेन्द्रग्रहग्रहणोत्तरं नोत्तरत्र विहिते च काल इत्यर्थः ।

धाराग्रहणकाल आग्रयणं चतसृभ्यो धाराभ्यो
गृह्णात्यादित्यपात्राच्चतुर्थीं धारां करोति ।

उक्तास्तिस्रो धारा माध्यंदिने सवने । सूदवदादित्यपात्राच्चतुर्थी धारेत्यत्र विशेषः । आदित्यपात्रादादित्यपात्रस्थेन सोमेन ।

तं गृहीत्वा राजानमतिपावयति यावन्तं तृतीयसवनायाऽऽप्तं मन्यते विरमति धारा प्रपीड्य पवित्रं निदधाति ।

क्रियाङ्गत्वेन पाठार्थमिदं सूत्रम् । एतत्पाठाभावे यजुर्भ्रेषप्रायश्चित्तं दक्षिणाग्नौ ।

यत्प्राक्पवमानग्रहेभ्यस्तस्मिन्कृत आग्नीध्रागारे पत्न्याशिरं मथित्वाऽपरेण द्वारेण हविर्धाने प्रविश्यास्मे देवासो वपुषे चिकित्सतेति चतसृभिराशिरं यजमानः पत्नी च तिरःपवित्रं पूतभृत्यवनयतः ।

पवमानग्रहेभ्यः प्राग्य एकधनैकदेशाश्चाऽऽधवनीयेऽवनीय तिरःपवित्रं पूतभृत्यवनयतीति यत्कर्म तस्मिन्कृते सति आग्नीध्रागार आग्नीध्रमण्डपे । पत्नीबहुत्वे मुख्यैव मथनं पूतभृत्यवनयनं च करोति न तु सर्वाः । चतसृभिरिति वचनात्सर्वमन्त्रान्तेऽवनयनम् । एकमन्त्राणि कर्माणीतिपरिभाषाया बाधः । हविर्धाने प्रविश्येत्येतदनन्तरं तिष्ठतीतिक्रियाया अध्याहारः । तेनात्रैका पत्नी कर्त्री, उत्तरत्रोभयोः कर्तृत्वम् । एवं च समानकर्तृकत्वमनुपपन्नमिति पूर्वोत्तरविरोधः प्राप्तः सोऽनेनाध्याहारेणोपपन्नो भवति । उत्तरत्र यदाशिरग्रहणं तदुत्तरं विभज्येति शेषः । तथा च विभागार्थमुत्तरत्राऽऽशिरग्रहणं सप्रयोजनं भवति पवित्रशब्देन दशापवित्रम् ।

पवमानग्रहान्कलशानाग्रयणं च ग्रहावकाशैरुपस्थाय निःसर्पन्तः समन्वारभन्ते ।

माध्यंदिनसवनवद्व्याख्येयम् ।

वैप्रुषान्सप्तहोतारं च हुत्वाऽऽर्भवं पवमानꣳ सर्पन्ति तस्य माध्यंदिनेन सवनेन कल्पो व्याख्यातः ॥ ६ ॥

तृतीयसवनस्यर्भुदेवतासंबन्धादार्भवत्वं, तृतीयसवनस्य तदीयसंबन्धित्वेनाऽऽर्भवमिति तार्तीयसवनिकपवमानस्यापि संज्ञा । माध्यंदिनपवमानातिदेशेनोत्तरेणाऽऽग्नीध्रीयं धिष्णियं परीत्य दक्षिणेन वा मार्जालीयमन्तरेण वेत्येतत्प्राप्यते ।

जागतः पन्था आदित्या देवता द्वकेणापरिपरेण पथा स्वस्त्यादित्यानशीयेति मन्त्रꣳ संनमति ।

संनाम ऊहः ।

यदन्यद्धिष्णियविहरणात्तत्संप्रेष्यति प्रतिप्रस्थातः पशौ संवदस्वेति संप्रैषस्यान्तꣳ संनमति ।

अग्नीद्बर्हिः स्तृणाहि पुरोडाशाꣳ अलं कुरु प्रतिप्रस्थातः पशौ संवदस्वेत्येतावान्प्रैषोऽत्र सूत्रात्सिद्धो भवति । प्रतिप्रस्थातः पशौ संवदस्वेत्यनुच्यमाने धिष्णिय-

विहरणादन्यद्यत्प्रैषजातं तत्संप्रेष्यतीत्यर्थे सिद्धे माध्यंदिनसवनातिदेशात्प्रतिप्रस्थात-र्दधिघर्मेण चरेति प्रैषान्तः प्राप्नुयात्तद्व्यावृत्त्यर्थमिदं वचनम् ।

अविहृतेष्वव्याघारितेषु धिष्णियेषु स्तीर्णे बर्हिषि प्रतिप्रस्थाता सवनीयान्निर्वपति ।

आग्नीध्रेण स्तीर्णे बर्हिषि सति प्रतिप्रस्थाता सवनीयान्निर्वपति । अयमप्येकः सव-नीयनिर्वापकालः ।

द्वादशकपालोऽत्र पुरोडाशः ।

अत्र तृतीयसवने माध्यंदिनेन सवनेन कल्पो व्याख्यात इत्यतिदेशात्साऽऽमिक्षा विद्यत इत्यामिक्षानिषेधोऽप्यत्र सिद्धो भवति ।

न पशुपुरोडाशो विद्यते ।

माध्यंदिनसवनातिदेशात्पशुपुरोडाशस्यापि प्राप्तत्वान्निषेधः क्रियते ।

अष्टाकपालान्सर्वत्र सवनीयानेके समाम-नन्त्येकादशकपालानेके द्वादशकपालानेके ।

अत्र मध्यमः पक्ष एकादशकपालानेव प्रातःसवने कुर्यादेकादशकपालान्माध्यंदिने सवने, एकादशकपालांस्तृतीयसवने यज्ञस्य सलोमत्वायेति स्वशाखागत एव । इतरौ पक्षौ शाखान्तरीयौ ।

अलंकृतेषु प्रतिप्रस्थाता संवाद-प्रभृतिना पशुतन्त्रेण प्रतिपद्यते ।

पूर्वत्र निर्वापेऽपि अत्रैवालंकरणं प्रैषानुरोधात् । जुह्वां पञ्चगृहीतं गृहीत्वा पृषदाज्य-स्रुवं चाऽऽदायेत्यादि हृदयशूलं प्रज्ञातं निदधातीत्यन्तं यत्पशुतन्त्रं तेन प्रतिपद्यते तत्करोतीत्यर्थः । पञ्चहोत्रासादनादिरङ्गैः प्रचारोऽध्वर्योः सामर्थ्यात् ।

तस्य दक्षिणेन हविर्धानमुत्तरेण वा समवत्तं परिहरति ।

तस्य पशोः, दक्षिणेन हविर्धानमुत्तरेण वा समवत्तं स्रुग्गतमिडागतं च परिहरति परितो हरन्ति ।

न यजमानो भक्षान्भक्षयति भक्षणमेके समामनन्ति ।

भक्षानिति बहुवचनादिडाहविःशेषयजमानभागानां निषेधः । भक्षणपक्ष एतेषां सर्वेषामपि भक्षणमस्ति ।

पुरोडाशानासाद्य तैः समवदाय प्रच-रति तृतीयस्य सवनस्येति संप्रेष्यति ।

प्रतिप्रस्थात्रा हृतान्पुरोडाशानासाद्य तैः पुरोडाशैः समवदार्थं सहावदाय प्रचरति ।

आधवनीयं पूतभृत्यवनीय दशाभिः कलशं मृष्ट्वा न्युब्जत्युन्नीयमानेभ्योऽनुब्रूहि होतुश्चमसमनून्नयध्वं तीव्रा२ आशीर्वतः कुरुध्वमच्छावाकस्य चमसाध्वर्योऽपि त्वमुन्नयस्वोन्नेतः सोमं प्रभावयेति संप्रेष्यति ।

प्रैषमध्ये विशेषस्य सत्त्वात्कृत्स्नः पाठः । तीव्रशब्देनातिकद्रम्लवन्तः सोमा उच्यन्ते । आशीर्वत इत्यनेनाऽऽशिरवन्त उच्यन्ते ।

होतृचमसमुख्यानेकादश चमसानुन्नयति ।

गतम् ।

प्रचरणकाले प्रस्थितैरेव प्रचरति ।

प्रचरणकाले प्रस्थितैरुत्तरवेदिं प्रति प्रस्थानं प्राप्तैः । एतादृशैश्चमसैः सद्भिरेव प्रचरति न तु पूर्वमित्यर्थः ।

तृतीयस्य सवनस्यर्भुमतो विभुमतः प्रभुमतो वाजवतः सवितृवतो बृहस्पतिवतो विश्वदेव्यावतस्तीव्रा१ आशीर्वत इन्द्राय सोमान्प्रस्थितान्प्रेष्य मध्यतःकारिणां चमसाध्वर्यवो वषट्कृतानुवषट्कृताञ्जुहुत होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्धुत्वा तीव्रस्याऽऽशीर्वतोऽभ्युन्नीयोपावर्तध्वमिति संप्रेष्यति ।

प्रैषमध्ये विशेषस्य सत्त्वात्कृत्स्नः पाठः प्रैषस्य । अत्र होत्रकचमसानां सकृत्सकृद्धोमे चमसाध्वर्यवो दक्षिणामुखा एव न प्राङ्मुखाः । प्राचीरन्या आहुतयो हूयन्ते प्रत्यञ्चौ शुक्रामन्थिनाविति शुक्रामन्थिसंयोगवचनात् । उन्नीयमानसूक्ते परिहिते चमसाध्वर्युभिरितरेष्वाप्तेषु चमसेषु अध्वर्योर्होतृचमसमादायैव प्रैषो ग्रहयोरभावात् ।

श्येनाय पत्वने स्वाहेति ॥ ७ ॥ एतैः पुनरभ्युन्नीताञ्जुहोति वट्स्वयमभिगूर्ताय नम इत्यनुवषट्कारान् ।

एतैः पुनरित्यत्र पुनःशब्दोऽप्यर्थकः स चाभ्युन्नीतशब्दानन्तरमन्वेतव्यः । तथा चैतैर्मन्त्रैरभ्युन्नीतानपि जुहोतीत्यर्थो भवति । एतस्मादर्थकरणाद्धोतृचमसस्यापि संग्रहो भवति । तेन प्रथमो मन्त्रः श्येनाय पत्वने स्वाहेति । अनेन होतृचमसस्य होमः । अन्ये षण्मन्त्राः प्रशास्त्रादीनां चमसेषु क्रमेण ज्ञेयाः । साम्यादयमर्थो लभ्यते । तच्च साम्यं कथमित्याकाङ्क्षायां सप्त मन्त्राः सप्त कर्तारश्च । तथा च सप्त मन्त्राः सप्तसु चमसेषु संबद्धा भवन्ति । मन्त्रसमुदायविनियोगे षड्भिरित्येवं विनियोगो न कृतः । अवशिष्टो विकल्पार्थ इत्यपि नोक्तम् । एवं चाऽऽचार्येणैतादृशस्वशैलीपरित्यागेन यत एवमेव सूत्रि-

---

१ ग. च. °तैः षड्भिरे° । २ ग. च. °माने सू° ।

तमतः सप्त मन्त्राः सप्तसु संबद्धा भवन्तीत्ययमर्थ एव सूचितो भवति। तथा च जैमिनिः- समं स्यादश्रुतत्वादिति। विशेषस्याश्रवणात्साम्यमेव भवतीत्यर्थः। आश्वलायनेनापीयं परिभाषोक्ता-बहुषु बहूनामनुदेश आनन्तर्ययोग इति। पाणिनिरपि स्वशास्त्र उपयोगित्वात्परिभाषां कृतवान्-यथासंख्यमनुदेशः समानामिति। तथा चैवमेवात्र व्याख्यानं समीचीनं नान्यदिति। वट्स्वयमभिगूर्ताय नम इत्यनुवषट्कारान्। अनुवषट्कारप्रयुक्तान्होमान्।

तृम्पन्तां होत्रा मधोर्घृतस्येति हुताननुमन्त्रयते।

हुतान्प्रत्येकमनुलक्षीकृत्य मन्त्रयत इत्यर्थः।

यथाचमसं चमसिनो भक्षयन्ति तेषां व्याख्यातो भक्षमन्त्रः।

व्याख्यातमेतन्माध्यंदिने सवने। अस्मिन्सवने होतृचमसेऽध्वर्योर्होमाभिषवप्रयुक्तस्य [illegible]स्य सत्त्वेन प्रतिभक्षितुः सत्त्वाद्धोतुः समाख्याभक्षः पृथगेव भवति न तु तन्त्रेण सिद्धिः। तीव्रस्याऽऽशीर्वतोऽभ्युन्नीयोपावर्तध्वमित्यनेन सकृत्पूर्णभूत एवोन्नयनं कर्तव्यमिति बोध्यते।

सन्नेषु नाराशंसेषु स्वं स्वं चमसं न्यन्ते त्रींस्त्रीन्पुरोडाशशकलान्दक्षिणत उपास्यन्ति।

स्वं स्वं चमसमित्यनन्तरमनुरध्याहार्यः। अपभ्रष्टो वा सूत्रे। तथा च द्वितीया युक्तैव। आपस्तम्बेनैवमेव पठितम्—स्वं स्वं चमसमनु न्यन्त इति। त्रींस्त्रीनिति वीप्सा सर्वचमसिव्यापिकर्तृत्वार्था। हविःशेषपुरोडाशसंबन्धिशकलान्स्वस्वचमसाद्दक्षिणतः पितृतीर्थेनोपास्यन्ति निक्षिपन्ति। निक्षेपणं तूष्णीमेव। दानप्रभृतिमन्त्राणां जपस्यैव विधास्यमानत्वात्। निक्षेपणे यज्ञोपवीत्येव। अग्रे प्राचीनावीतविधानात्। अन्यथा प्राचीनावीतं विधायोपासनविधानं कृतं भवेन्न कृतं च तथा। तस्मात्पुरोडाशशकलोपासने यज्ञोपवीत्येव। प्राचीनावीतानि कृत्वोपास्यन्तीत्येवमन्वयः कदाचित्स्यात्तथा चोपासनेऽपि प्राचीनावीतं स्यादितिशङ्कानिरसनार्थं तत्कृत्वेत्युपासनानुवादः। तदुपासनं कृत्वा। तादित्यस्य तानीत्यर्थः। तानि उपासनानि। सुपां सुलुगित्यनेन बहुवचनविभक्तेर्लुक्। कर्तृबहुत्वाभिप्रायं बहुवचनम्।

तत्कृत्वा प्राचीनावीतानि कृत्वा षड्ढोतारं व्याख्याय दानप्रभृतीन्मत्यायनान्तान्पिण्डपितृयज्ञमन्त्राञ्जपन्ति।

पुरोडाशशकलोपासनकर्तारः सर्वे प्राचीनावीतानि कृत्वा सूर्यं ते चक्षुरिति षड्ढोतारं व्याख्याय वाक्यशः पठित्वा न वाग्घोतेति। एतस्य प्रायश्चित्त एव श्रुतौ

१ ग. च. °न्तत इ°।

सूत्रे च विनियोगात् । अहोमार्थत्वादग्रहोऽत्र । पितृयज्ञे षड्ढोतारमिति श्रुतिरपि । चमससमीप एव षड्ढोतृव्याख्यानम् । एतत्ते ततामुकशर्मन्ये च त्वामनु । एतत्ते पितामहामुकशर्मन्ये च त्वामनु । एतत्ते प्रपितामहामुकशर्मन्ये च त्वामनु । आपो देवीः० । अत्र पितरो यथा० स्वाहोष्म० अमीमदन्त पि० आङ्क्ष्व ततामुकशर्मन् । आङ्क्ष्व पितामहामुकशर्मन् । आङ्क्ष्व प्रपितामहामुकशर्मन् । अभ्यङ्क्ष्व ततामुकशर्मन् । अभ्यङ्क्ष्व पितामहामुकशर्मन् । अभ्यङ्क्ष्व प्रपितामहामुकशर्मन् । एतानि वः पितरो० नमो वः पितरो रसाय पितरो नमो वो० नमो वः पितरः शुष्माय पित० नमो वः पितरो जीवाय पि० नमो वः पितरः स्वधायै पित० नमो वः पितरो मन्यवे पित० नमो वः पितरोऽघोराय पित० ऊर्जस्वतीः स्व० उत्तिष्ठत पितरः प्रे० परेत पितरः सो० यन्तु पित० मनो न्वाहु० आ न एतु० पुनर्नः पित० अक्षन्न० प्रजापते न० दानप्रभृतिप्रत्यायनान्ता एते पिण्डपितृयज्ञमन्त्रा एताञ्जन्त्येव न कर्मापि । वासोदानोदपात्रानिनयनयोस्तु सकृदेव मन्त्रः । यजमानस्य स्वपितॄणामुपलक्षणं सिद्धमेव । इतरेषां चमसिनां तु स्वस्वपितॄणामेव । स्वेभ्यः पितृभ्य उपास्येयुरित्याश्वलायनोक्तेः । कात्यायनमते तु यजमानपितॄणामुपलक्षणं सर्वेषाम् । तथा च तत्सूत्रम्—यजमानस्य पितृभ्यो वा तस्याधिकारादिति । यजमानस्य फलार्थित्वात्फलार्थेषु कर्मसु तस्यैवाधिकारः । वाशब्दः स्वपितॄणामुपलक्षणं कार्यमिति पूर्वपक्षव्यावर्तक इति कात्यायनसूत्रार्थः । अस्मिन्पक्षे यजमानस्य ततामुकशर्मन्, यजमानस्य पितामहामुकशर्मन्, यजमानस्य प्रपितामहामुकशर्मन्, यजमानस्य तताङ्क्ष्वामुकशर्मन्यजमानस्य पितामहाङ्क्ष्वामुकशर्मन्यजमानस्य प्रपितामहाङ्क्ष्वामुकशर्मन्यजमानस्य ताताभ्यङ्क्ष्वामुकशर्मन्यजमानस्य पितामहाभ्यङ्क्ष्वामुकशर्मन्यजमानस्य प्रपितामहाभ्यङ्क्ष्वामुकशर्मन्, इत्येवं मन्त्राणां प्रयोगः । असावितिवचनाभावेऽपि पिण्डपितृयज्ञमन्त्रेषु असावित्येतस्य शब्दस्य सत्त्वात्तत्स्थानिको नामनिर्देशोऽत्रापि भवति । पिण्डपितृयज्ञमन्त्राञ्जपन्तीतिवचनात् । अत्र यजमानः सर्वे वा पुरोडाशशकलोपासनादिकर्मकर्तारो जीवत्पितृकाः स्युस्तदाऽपि शकलोपासनादिकर्म पितामहप्रपितामहवृद्धप्रपितामहोद्देशेनैव कर्तव्यम् ।

> वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति ।
> येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ॥ इति वचनात् ।
> उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे ।
> तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः ॥

इतिमैत्रायणीयपरिशिष्टवचनाच्च ।

सौमिके मख इत्यनेन सोममखान्तर्गतं पित्रुद्देश्यकं कर्मोच्यते तत्रेत्यर्थः । एवं च जीवत्पितृकैरपि स्वस्य यजमानस्य वाऽपि पितामहप्रपितामहवृद्धप्रपितामहोद्देशेनेदं

कार्यमेव । यदि पुरोडाशशकलनाशो देवात्तदा लोपः । पिण्डदानलोपनिमित्तकं सर्व-प्रायश्चित्तं होतव्यम् । यदा तु पितृपितामहौ जीवतस्तदा प्रपितामहवृद्धप्रपितामहा-तिवृद्धप्रपितामहानुद्दिश्य कर्तव्यम् । यदि त्रयाणामपि जीवनं तदा लोप एव । नात्र सर्वप्रायश्चित्तमपराधाभावात् ।

तस्मिन्कृते चाममप सवितरित्येतेषामेके-नान्तर्यामपात्रेण सावित्रमाग्रयणाद्गृह्णाति ।

शकलोपासनप्रभृतिप्रत्यायनमन्त्रजपान्तसमुदायरूपे कर्मणि कृते सतीत्यर्थः । तस्मि-न्कृत इत्यनेनाध्वर्योर्नेदं कर्मेति सूचितमचममसित्वादिति भावः । इदं सर्वेषामचमसिना-मुपलक्षणम् । इत्येतेषामेकेनेतिवचनान्मन्त्रत्रयमत्र श्रुतौ पठितमस्ति तत्र येन केनचि-न्मन्त्रेण ग्रहणं कर्तव्यमित्यवगतं भवति । सावित्रं सवितृदेवताकं ग्रहमाग्रयणात्परि-प्लवया ।

न सादयत्युपनिष्क्रम्य देवाय सवित्रेऽनु-ब्रूहि देवाय सवित्रे प्रेष्येति संप्रेष्यति ।

अत्रोपनिष्क्रम्येति वचनादन्यप्रैषेषु विशेषवचनाभावे हविर्धाने स्थित्वाऽपि प्रैषा भवन्तीति गम्यते । अत्रोपनिष्क्रमणोत्तरमेवेति नियमः । एवमन्यत्रापि । अन्यत्स्पष्टम् ।

हुत्वा नानुवषट्करोति न भक्षयति सुरद्वत्पात्रे सादयति ।

द्विदेवत्येष्वृग्रहेष्वादित्यग्रहसावित्रयोश्च नानुवषट्कारो विद्यत इत्येतत्सूत्रादेव निषेधे सिद्धे प्रयोगे झटित्यवगमार्थम् । होमाभिषवनिमित्तभक्षस्य प्राप्तत्वान्निषेधः । सुरद्व-त्पात्रे सादयतीतिवचनं सर्वहोमव्यावृत्त्यर्थम् ।

उपयामगृहीतोऽसि सुशर्माऽसि सुप्रतिष्ठान इत्येतेनैव पात्रेणाभक्षितेन वैश्वदेवं कलशाच्छुक्रवन्तं गृह्णाति ।

न भक्षयतीति निषेधेनैव सिद्धेऽत्राभक्षितेनेतिवचनं ग्रहग्रहणकालेऽयं सावित्र-ग्रहो न भक्षितस्तस्मिन्नेव वैश्वदेवो गृह्यत इतिज्ञानावश्यकत्वार्थम् । एतदभावे यजुर्वेद-प्रायश्चित्तं भुवः स्वाहेति दक्षिणाग्नौ होतव्यम् । शुक्रवन्तमित्येतस्य प्रयोजनं प्रातःस-वन ऐन्द्राग्नग्रहे प्रदर्शितमेव ।

एकया च दशभिश्च स्वभूत इत्येतस्यामृचि शस्यमानायां प्रातर्युजौ विमुच्येथामिति प्रतिप्रस्थाता द्विदेवत्यपात्राणि विमुच्या-परया द्वारा निर्हृत्य मार्जालीये प्रक्षाल्य पूर्वया द्वारा प्रपाद्याऽऽयतनेषु सादयति ।

एतस्यामृचि शस्यमानायां प्रातर्युजौ विमुच्येथामिति मन्त्रेणोत्तरवर्तनीतो द्विदेव-त्यपात्राणि विमुच्य हविर्धानमण्डपस्यापरया द्वारोपनिर्हृत्य मार्जालीये प्रक्षाल्य हवि-

धानस्य पूर्वया द्वारा नीत्वा तत्तदायतने सादयति । प्रतिप्रस्थातृग्रहणमध्वर्युव्यावृत्त्य-र्थम् । उपेत्यनेन स्वमुखसमीपे धृत्वा निर्हरणम् । स्पष्टं च सूत्रान्तरे—मुखसमीपे द्विदेवत्यपात्राणि धृत्वा निर्हरतीति । निःशब्दो निर्गमनोत्तरं झटितिहरणार्थ इति उपसर्गबलादयमर्थो गम्यते ।

प्र द्यावा यज्ञैः पृथिवी ऋतावृधेत्येत-
स्याः४ शस्यमानायामन्यतरतोमोदं प्रति-
गृणाति मोदामोद इवोथामोद इवेति ।

एतदृक्संबन्धिनि प्रथमे विरामे मोदामोद इवेति प्रणव ओथामोद इवेति । अयम-न्यतरतोमोदः । यत्रैकस्मिन्प्रतिगरे मोदा, इति शब्दः सोऽन्यतरतोमोद इत्युच्यते ।

विपरीतमेके समामनन्ति ।

प्रथम ओथामोद इवेति प्रणवे मोदामोद इवेति । स एष प्रतिगरोऽनन्तराद्याहावादे-तस्या ऋच आरभ्येत्यर्थः । सप्तमी पञ्चम्यर्थे । ततः परं तु यथापूर्वमेव प्रतिगरः । एष याजुषहौत्रविषये विशेषः ।

उक्थं वाचीन्द्रायेति शस्त्रं प्रतिगीर्य सर्वत्र तृतीयसवने जपति ।

उक्थ्यादिष्वपि ।

शस्त्रं प्रतिगीर्य ग्रहमादत्ते चमसा५श्चमसाध्वर्यवः ।

वैश्वदेववद्ग्रहनाराशंस्या इति लाघवादुक्तत्वे शस्त्रं प्रतिगीर्येतिवचनं तृतीयसवन आश्वलायनसूत्रोक्तो यः शस्त्रधर्मोऽभिहिंकारादिः स एवात्र भवति प्रकृत्यविनियुक्त-त्वेऽपीतिज्ञापनार्थम् । ग्रहमादत्ते चमसा५श्चमसाध्वर्यव इत्येतत्सूत्रपाठावश्यकत्वमेवैत-त्प्रयोजनं नान्यल्लभ्यते । यथा प्रातःसवने वैश्वदेवेनेत्यनन्तरं वक्ष्यमाणेनैव ग्रहादा-नचमसादानसिद्धेः ।

तेन प्रचरति यथा प्रातःसवने वैश्वदेवेन ॥ ८ ॥

इति हिरण्यकेशिसूत्रे नवमप्रश्ने तृतीयः पटलः ।

---

तेन वैश्वदेवग्रहेण । यथा प्रातःसवने वैश्वदेवग्रहेण प्रचरति तथाऽनेन वैश्वदेवग्र-हेणापि प्रचरतीत्यर्थः । प्रैषयोरप्यत्र तुल्यत्वात्कृत्स्नोऽतिदेशः कृतः । एतच्च नाराशं-

सधर्मातिदेशार्थम् । तेन सर्वमन्त्रास्त्रमन्ता भवन्तीति सिद्धं भवति । सकृन्मारार्थं तृतीयसवनमिति वचनात् ।

इत्यौकोपाह्वश्रीमदग्निष्टोमयाजिमाहस्राग्निचित्कवाजपेययाजिसर्वतोमुखयाजिद्विमाहस्राग्निचित्पौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथदीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसूत्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंतापशामिकायां ज्योत्स्नाख्यायां वृत्तौ नवमप्रश्नस्य तृतीयः पटलः ॥ ३ ॥

---

अथ नवमप्रश्ने चतुर्थः पटलः ।

---

सौम्यस्य पात्रसंसादनप्रभृतीनि कर्माणि प्रतिपद्यते ।

पात्रसंसादनप्रभृतीनीत्यनेनान्वाधानादि ब्रह्मयजमानवदनकरणान्तं निवर्त्यते । अत्र यजुर्वेदेनाध्वर्युरिति सूत्राद्ध्वर्युः कर्मसु वेदयोगादिति कात्यायनसूत्राच्चाध्वर्युः कर्ता । पक्षे प्रतिप्रस्थातृकर्तृकताऽपि । अत्र ज्ञापकं प्रतिप्रस्थाता हवनीयानां पात्रसंसादनप्रभृतीनि कर्माणि प्रतिपद्यत इति सूत्रे दर्शितमस्ति । सौम्यविषये सूत्रकृता विशेषानुपदेशाद्विजातीयशेलीस्वीकाराच्च समन्त्रकममन्त्रकं वा सौम्यत्रमिति पक्षद्वयं प्रदर्शितं भवति । तथा च द्वैधसूत्रम् - सौम्यस्य मन्त्र इति मन्त्रवान्स्यादिति बौधायनस्तूष्णीक इति शालिकिरिति । पात्रासादनप्रभृतीनि कर्माणि प्रतिपद्यत इति उक्तं तत्र पात्राण्येतानि चरुस्थालीशूर्पकृष्णाजिनोलूखलमुसलानि प्रस्कन्दनसंवपनार्थं पात्री । प्रणीताप्रणयनपात्रमप्यासादयति हविःसंयवनरूपदृष्टप्रयोजनसत्त्वात् प्रणीताः प्रणयतीतिनिषेधकवचनाभावाद्यजुरुत्पूताभिः संयौतीतिविशेषवचनाभावाच्च । मदन्तीपात्रमपि श्रपणानुगुणत्वात् । कुटरुदृषदुपलानामभावः प्रयोजनाभावात् । असति द्रव्ये कर्मलोपो यथा चरौ समाहननमाप्येभ्यो निनयनमिति भरद्वाजोक्तेश्च । शम्यया समाहननपक्षे तस्या अप्यभावः । स्फ्याग्निहोत्रहवण्योः पिष्टसंयवनार्थमेक्षणवेदप्राशित्रहरणेडापात्रान्वाहार्यस्थालीयोक्त्रचतुर्धाकरणपात्रोपवेषादीनां निवृत्तिः । पात्रासादनेनैव प्रसङ्गसिद्धेः । अत एव यथार्थमिति नोक्तम् । पवित्रे कृत्वा प्रणीताप्रणयनं समन्त्रपक्षे समन्त्रममन्त्रपक्षे मन्त्ररहितं कुर्यात् ।

सौम्यं चरुं निर्वपति ।

निर्वापः समन्त्रक एव तूष्णींपक्षेऽपि अग्निहोत्रहवण्यासादनादिः परिहानान्तः । निर्वापमात्रं वा देवतासंबन्धाय स्वस्थकेष्टिवत् । निष्कलीकरणान्तं कर्म समन्त्रकपक्षे

समन्त्रममन्त्रकपक्षे मन्त्ररहितम् । धृष्ट्यादानादि समन्त्रपक्षे समन्त्रममन्त्रपक्षे मन्त्ररहितम् । पवित्रे वेदामुभयपक्षेऽपि तूष्णीमेवाधिद्रुजति । यजमाने प्राणापानौ दधामीति-लिङ्गविरोधात् । यजमानो वै प्रस्तरः प्राणापानौ पवित्रे यजमान एव प्राणापानौ दधातीत्यर्थवादाच्च । श्रवणमर्थसिद्धम् । समन्त्रपक्षे सूर्य ज्योतिरित्यादि तूष्णीमेवाभिधारणं समन्त्रपक्षेऽपि अग्नीषोमीयविकारत्वात् ।

समासाद्य ।

तं परुमासाद्य । आसादनं विना यागस्यासंभवादर्थादासादने सिद्ध इदं वचनमासादनोत्तरसामिधेनीप्रयाजाज्यभागाभावबोधनार्थम् । आसादनोत्तरं घृतयाग एवानन्यदिति ।

आज्यस्यावदाय घृतस्य यजेति संप्रेष्यति वषट्कृते हुत्वा ।

आज्यस्याऽऽज्यादित्यर्थः । अवयवषष्ठी वा । आज्यस्यैकदेशं यागपर्याप्तमित्यर्थः । तत्र ध्रौवं चतुरवत्तिपञ्चावत्तिव्यवस्थया चतुर्गृहीतं पञ्चगृहीतं वा गृहीत्वा दक्षिणाऽतिक्रम्याऽऽश्राव्य प्रत्याश्राविते घृतस्य यजेति वषट्कृते जुहोतीत्यर्थः । आज्यद्रव्यकत्वादुपांशुत्वम् । आपस्तम्बोऽपि स्पष्टमुपांशुत्वमाह—आज्येनोपांशूभयतः सौम्यं परियजत्यन्यतरतो वेति । उपांशुधर्मकत्वादेवोपांशुत्वे सिद्धे पुनर्वचनं सर्वोपांशुत्वार्थमिति तद्व्याख्यातृभिर्व्याख्यातम् । तेन सवनस्वरो बाध्यते । परप्रत्यायनार्थत्वाद्यजेत्युच्चैः, आश्रावणप्रत्याश्रावणे च । अन्यत्र प्रवरसंवादाश्रावणसंप्रैषेभ्य इतिसूत्रात् । घृतस्येति पदस्योपांशुत्वमेवानया रीत्या । देवतानिर्गमस्तु याज्यातो ज्ञेयः । तत्र याज्ये आश्वलायनेनोक्ते— त्वं सोम पितृभिः संविदान इति सौम्यस्य याज्या तं घृतयाज्याभ्यामुपांशूभयतः परियजन्ति घृताहवनो घृतपृष्ठो अग्निर्घृते श्रितो घृतमस्य धाम । घृतप्रुषस्त्वा हरितो वहन्तु घृतं पिबन्यजसि देवदेवानिति पुरस्तादुरु विष्णो विक्रमस्वोरुक्षयाय नस्कृधि । घृतं घृतयोने पिब प्र प्र यज्ञपतिं तिरेत्युपरिष्टादन्यतर[त]श्चेदग्नाविष्णू महि धाम प्रियं वामुपांश्वेति । घृताहवन इति याज्ययाऽग्निर्देवताऽऽद्यस्य घृतयागस्य । उरु विष्णो विक्रमस्वेति याज्यया विष्णुर्देवतोत्तरस्य घृतयागस्य । अन्यतरतःपरीज्यापक्षेऽग्नाविष्ण्वोर्देवतात्वम् ।

अत्रैव तिष्ठन्सौम्यस्य हस्तेन पूर्वमवदानमवद्यति मेक्षणेनोत्तरमुद‍ङ्ङतिक्रम्याऽऽश्राव्य प्रत्याश्राविते सौम्यस्य यजेति संप्रेष्यति वषट्कृते दक्षिणामुखस्तिष्ठन्दक्षिणार्धपूर्वार्धे जुहोति ।

सूत्रकारेण प्राचीनावीत्य(ता)विधानादनियमोऽन्यत्रेतिसूत्राद्विकल्पः । आपस्तम्बस्तु

१ ग. घ. 'चोभीत्य' । २ क. ग. घ. डुत्वेति ।

प्राचीनावीती सौम्येन प्रचरतीति प्राचीनावीतित्वमेवात्राऽऽह । मेक्षणेन चरूणामिति सूत्रादुभयावदानमपि मेक्षणेनैव प्राप्तं तत्र पूर्वावदाने मेक्षणं बाधित्वा हस्तो विधीयते । अनियमशङ्काव्यावृत्त्यर्थं मेक्षणेनोत्तरमिति । उदङ्ङतिक्रम्येतिवचनमुदग्दिशि स्थित्वा याग इत्येतदर्थम् । आश्राव्य प्रत्याश्रावित इति वचनमाश्रावणविषय आश्रावयेति- प्रकारत्रयमध्य आश्रवयेति प्रथम एव प्रकारोऽत्र भवतीतिज्ञापनार्थम् । प्रत्याश्राव- णस्याऽऽश्रावणसंबद्धत्वाद्वचनम् । वषट्कृत इति वचनं वषट्कारसमकालं दानमिति यः पक्षस्तद्वारणार्थम् । उदग्दिशि स्थित्वा यागेऽपि प्राङ्मुखः स्थित्वा यागं कुर्यादिति स्यात्प्राङ्न्यायादितिसूत्रात् , एतद्बाधनार्थं दक्षिणामुख इति । अर्धा- दाग्नीध्र उत्तरामुखः समुदाय । अर्धादेव तिष्ठतायां प्राप्तायां तिष्ठन्निति वचनं घृतयागे प्रह्वताऽपि पक्षे भवतीति गमयितुम् । दक्षिणार्धपूर्वार्धे जुहोतीति वचनमाघा- रमनु जुहोतीति प्रकृतिप्राप्तस्य स्थानस्य बाधनार्थम् ।

घृतस्य यजेति यथा पुरस्तात् ।

घृतयाग इति शेषः ।

अन्यतरतः परीज्यामेके समामनन्ति ।

आद्यावन्ते वेत्यर्थः । सौम्यस्य न स्विष्टकृदादि । अत एवाऽऽपस्तम्बेन वषट्कृते प्रत्याक्रम्याऽऽज्येन चरुमभिघार्योद्गातृभ्यो हरन्तीति सूत्रे प्रत्याक्रम्याऽऽज्येन चरुम- भिघार्येत्यनेन स्विष्टकृदादीनां निवृत्तेर्दर्शितत्वात् ।

तमाज्येनाभिपूर्योद्गातृभ्यो हरन्ति ।

तं सौम्यम् । आज्येन स्थाल्याज्येन । उद्गातृभ्य इति वचनात्सर्वैः सहैव स सौम्य- श्चरुर्ग्राह्य इत्यर्थात्सिध्यति । हरन्ति प्रयच्छन्ति । बहुवचनं परिकर्म्यध्वर्युगणान्यतम- प्राप्त्यर्थम् ।

सत्रोऽत एतद्यदुत इहेत्यवेक्षन्ते ।

उद्गातार इत्येव शेषः । बहुवचनसामर्थ्यात्तेषामेव सांनिध्याच्च । स्पष्टमेतदाहाऽऽ- पस्तम्बः—तमुद्गातारोऽवेक्षन्ते सत्रो एतद्यदुत इहेतीति । केचित्तु कल्पान्तरकारास्त- दवेक्षणमाध्वर्यव आम्नातमित्यध्वर्यूणामपीच्छन्ति तन्निरासार्थमुद्गातृग्रहणम् । यत्तु श्रुतावीक्षन्ते पवित्रं वै सौम्येति तदप्युद्गातृकर्मैव प्रसङ्गादुक्तमिति भावः ।

तस्मिन्ह्यात्मानं *परिपश्यन्ति ।

उद्गातार इत्येव । तस्मिंश्चरुगत आज्ये । हिरवधारणे । परिरत्रावनामार्थकः । अवनता भूत्वा पश्यन्तीत्यर्थः ।

---

* सूत्रपुस्तकेषु परिपश्यन्त इति पाठः ।

य आत्मानं न परिपश्येदितासुः स्यादभि-
दर्दि कृत्वा यन्मे मनः परागतमित्यवेक्षेत ।

यस्तस्मिन्नाज्ये प्रतिबिम्बितमात्मानमभिपूरणार्थाज्यस्याल्पत्ववशेन न परिपश्येदन्तर्न पश्येदितासुर्गतासुर्गतप्राणोऽल्पायुः स्यादेतद्दोषपरिहारायाभिदर्दि कृत्वा यन्मे मनः परागतं यद्वा मे अपरागतम् । राज्ञा सोमेन तद्वयमस्मासु धारयामसीति मन्त्रेण तस्मिन्नवेक्षेतावनतो भूत्वेक्षेत । अभिदर्दिर्नाम दृदिर्दानमुपरिदानमभिदृदिः । तदुक्तं बौधायनेन—अभिदर्दि कृत्वाऽवेक्षेत तस्मिन्भूय आज्यमानीयावेक्षेतेति । एवं कृते हि आज्यस्य भूयस्त्वाद्दृश्यते हि च्छायेति । श्रुतावन्यदपि उक्तमवेक्षणस्य प्रयोजनम्—यो गतमनाः स्यात्सोऽवेक्षेत यन्मे मनः परागतं यद्वा मे अपरागतम् । राज्ञा सोमेन तद्वयमस्मासु धारयामसीति मन एवाऽऽत्मन्दाधार न गतमना भवतीति । आपस्तम्बेनापि यो गतमनाः स्यात्सोऽवेक्षेत यन्मे मनः परागतमिति न गतमना भवतीति । योऽन्योऽपि कश्चिद्गतमनाः शून्यहृदय इव भवति सोऽप्यवेक्षेतेत्यस्यार्थः ।

आमयाव्यन्नाद्यकामो वा प्राश्नीयात् ।

आमयो रोगस्तद्वानामयावी, अन्नाद्यकामनावान्वा चेत्तं सौम्यं चरुं प्राश्नीयात् । कमिधातुश्रवणाद्यजमानेन संकल्पः कार्योऽन्नाद्यकामः सौम्यचरुप्राशनं करिष्य इति । आमयावित्वनिमित्तकप्राशने कामपदाभावान्न संकल्पः ।

यो वाऽलमन्नाद्याय सन्नान्नमद्यात्तेन +प्राश्यः ।

यः कश्चन पुरुषोऽन्नाद्यायान्नभक्षणायालं समर्थः सन्केनचित्प्रतिबन्धेन नान्नमद्यात्तेन कर्मबहिर्भूतेनापि पुरुषेण प्राश्यः । सौम्यश्चरुरिति शेषः । नैमित्तिकमिदम् । विसर्गरहितः पाठः प्रामादिकः ।

शलाकाभिर्धिष्णियानाग्नीध्रो ज्वलतो विहरति ।

दर्भाणां तृणानां च मूलानि शलाकास्ताभिः सहाऽऽग्नीध्रीयाद्वह्निःशलाकाभिर्ज्वलतो विहरति । विहरणं नाम तत्तद्धिष्णियेषु स्थापनम् ।

नवगृहीतमाज्यमध्वर्युर्गृहीत्वा ज्वलतो व्याघारयति ।

आहवनीयाग्नीध्रीयहोत्रीयमार्जालीयानामप्याज्येनैव व्याघारणं न सोमेन । अत एव नवगृहीतमित्युक्तम् । पुनर्ज्वलत इति वचनं व्याघारणकालेऽपि ज्वलत्तार्थम् । सोमाभावाद्ग्रहाभावः ।

---

+ सूत्रपुस्तकेषु प्राश्येति पाठः ।

शेषमाज्यस्य करोति धारयन्ति धिष्णियान् ।

धिष्णियानग्नीन् ।

उपयामगृहीतोऽसि बृहस्पतिसुतस्य त इत्यु-
पा९शुपात्रेण पात्नीवतमाग्रयणाद्गृह्णाति ।

पत्नीवन्तं ग्रहं गृह्णामीत्यन्तो मन्त्रस्य ।

तं धिष्णियव्याघारणसंपातेनाऽऽज्येन श्रीत्वा न सादयति ।

तं गृहीतं पात्नीवतं ग्रहम् । पत्नीवान्देवता यस्य स पात्नीवतस्तं पात्नीवतम् । अग्निरत्र विशेष्यः । पत्नीवानिति विशेषणम् । एभिरग्न इति याज्यालिङ्गात । आज्यवचनं यद्घृतेन पात्नीवत९ श्रीणाति वज्रेणैवैनं वशे कृत्वा गृह्णातीतिश्रुतिगतो घृतशब्द आज्यमेव व्याचष्टे न घनीभूताज्यमिति प्रदर्शयितुम्*आज्यशब्दः ।

उपनिष्क्रम्याग्नीत्पात्नीवतस्य यजेति संप्रेष्यति ।

उपनिष्क्रम्येत्येतस्य प्रयोजनं प्राग्दर्शितमेव ।

अग्ना३ इ पत्नीवा३ इति वषट्कृते जुहोति ।

त्वष्ट्रा सोमं पिब स्वाहेत्यन्तो मन्त्रस्य ।

कृताकृतोऽनुवषट्कारः ।

कृताकृतो वैकल्पिकः । पात्नीवतशब्दस्य सूत्रकृतोपांशुत्वानभिधानादुच्चैष्ट्वमेव ।

उपा९श्वनुवषट्करोतीत्येकेषाम् ।

अनुवषट्कारस्योपांशुत्वेऽपि सोमस्याग्ने वीहीत्यन्तमेवोपांशु, वौषडिति तूच्चैरेव ।

अग्नीन्नेष्टुरुपस्थमासीद नेष्टः पत्नीमुदानयोद्गात्रा पत्नी९
संख्यापयोन्नेतर्होतृचमसमुख्या९श्चमसानुन्नयन्होतृचमसे
ध्रुवायावकाशं कुरु सर्व९ राजानमुन्नय माऽतिरीरिचो
दशाभिः कलशौ मृष्ट्वा न्युब्जेति संप्रेष्यति ॥ ९ ॥

उपस्थोऽङ्कस्तमासीद तत्र निषीद सोमभक्षणार्थं, नेष्टः पत्नीमुदानयोद्गातृसमीपे संख्यापनार्थम् । उद्गात्रा पत्नीं प्रति हिंकारं हिंकारं प्रति संख्यापय पत्नीमीक्षयेति हिंकारोच्चारणकालेऽन्वीक्षयेक्षणं कारयेत्यर्थः । लाट्यायनद्राह्यायणाभ्यामप्येवमेवोक्तम्— यज्ञायज्ञीयस्य हिंकारं प्रति पत्नीमुद्गातेक्षेत निधनं प्रति पत्नीदक्षिणमूरुमभिषिञ्चेत्तृतीयायां स्तोत्रीयायां प्रस्तुतायां९ सर्वं तदुदकं निनयेदिति । यदि क्रत्वन्तरे यज्ञायज्ञीयसाम नास्ति तदा हिंकाराभावात्कदा पत्नीमुद्गातेक्षेतेत्याशङ्क्याऽऽह— अहिंकारे तु प्रतिहारवेलायां पत्नीमुद्गातेक्षेतेति । उन्नेतर्होतृचमसमुख्यांश्चमसानुन्नयन्होतृचमसे ध्रुवाय ध्रुवावनयनार्थमवकाशं कुरु इत्यर्थः । अवशिष्टप्रैषः कृतव्याख्यानः ।

* आज्यशब्द इत्यधिकमिति क्वचित् ।

अग्नीध्रेष्टुरुपस्थमासीदेत्यस्यार्थमाह—

**अन्तरा नेष्टारं धिष्णियं चाऽऽग्नीध्रो ऽपवसृप्य भक्षयत्युपस्थे वा नेष्टुरासीनो नोपस्थ आसीत यद्युपस्थ आसीत क्लीबः स्यात् ।**

ऽपवसृप्य प्रविश्योपविश्य भक्षयति उपस्थ आसीनो वा । नेष्टुरुपस्थ आसीनो वा भक्षयति । ननु पूर्वं नेष्टुरुपस्थमासीदेत्युक्तमिदानीं तु नोपस्थ आसीतेत्युच्यते तत्कथमेतत्पूर्वविरुद्धमुच्यते । सत्यमुभयं दुर्घटम् । अत एव विरोधाद्विकल्पः कृतः सूत्रकृता । अग्नीध्रेष्टुरुपस्थमासीदेत्यत्रोपस्थमिति द्वितीया सप्तम्यर्थे । इदं च सूत्रकृतैव प्रदर्शितमुपस्थे वेतिसप्तम्यन्तनिर्देशेन । अन्तरा नेष्टारं धिष्णियं चाऽऽग्नीध्रो ऽपवसृप्येत्यनेन सामीप्यमुच्यते । अग्नीध्रेष्टुरुपस्थमासीदेत्यत्र यदा नोपस्थ आसीत तदाऽग्नीध्रेष्टुरुपस्थमासीदेति संप्रैषांशस्य लोप इति केचित् । सामीप्यार्थकत्वमादायापि सप्तम्युपपद्यत एवेति न लोप इत्यन्ये । क्लीबः षण्ढः ।

**होतृचमसमुख्यांश्चमसाननुभक्षयति ।**

स्पष्टम् ।

**स्तुतशस्त्रे भवतः ।**

स्पष्टम् ।

**प्रज्वलयित्वा धिष्णियानग्निष्टोमस्तोत्रमुपाकरोति ।**

अग्निष्टोमग्रहणमग्निष्टोमसंस्थाप्रयुक्तं मुख्यं स्तोत्रमिदमितिप्रदर्शनार्थम् ।

**अविस्रस्य नीवीराविरिव नाभीः कुर्वाणाः सर्वे सकर्णप्रावृता भवन्ति ।**

नीवीविस्रंसनमकृत्वैव । आविः प्रकटा इवेषन्नाभीः कुर्वाणाः मन्तः सकर्णं यच्छिरो मुखरहितं तत्प्रावृत्यैव तिष्ठन्ति । सर्वग्रहणं कर्मासंबद्धानां सदः प्रविष्टानामपि प्रावृतशिरस्कत्वप्राप्त्यर्थम् ।

तानेवाऽऽह—

**ये सदस्याः सदसः ।**

सदसः सदःसंबन्धिनो ये सदस्याः सभासदस्तेऽपि सकर्णप्रावृता भवन्ति । सदःसंबन्धित्वं सदःप्रविष्टत्वमेव । षष्ठ्यर्थः संबन्धित्वम् ।

**ऋत्विजो यजमानश्चेत्येकेषाम् ।**

ऋत्विजोऽपि सर्वे सकर्णप्रावृता भवन्ति न तु स्तोत्रसंबन्धिन एवर्त्विज इत्येतदर्थमत्रापि सर्वग्रहणमनुवर्तनीयम् । यजमानस्य स्तोत्रसंबन्धित्वान्नियमेन प्राप्तौ विकल्पः । एकेषामित्यनेन यजमानस्य विकल्पः । एकेषामितिवचनं मङ्गलकरणार्थमिति प्रथमपाठक उक्तमेव प्राक् ।

विश्वस्य ते विश्वावतो वृष्णियावत इत्युद्गात्रा पत्नीꣳ संख्यापयति ।

प्रैषान्नेष्टाऽत्र कर्ता ।

अगन्देवान्यज्ञ इति पत्नी दक्षिणमूरुं नग्नंकृत्य वङ्क्षणानाविष्कृत्य ।

दक्षिणमूरुं नग्नंकृत्यापोढवसनं कृत्वेत्यर्थः। ऊरुसंधिर्वङ्क्षणं ते च संधयोऽत्र बहवः। अतो बहुवचनम् । आविष्करणं प्रकटीकरणम् । अत्राऽऽपस्तम्बेनेतरेषामप्र एतस्या-प्राकट्यायोपाय उक्तः—उपरि दूरमुदूहेद्वा वङ्क्षणानामाविष्कर्तोरह्रीतमुख्यस्याः प्रजा जायत इति विज्ञायत इति । यथोरुसंधिर्नाऽऽविष्कृतः स्यात्तथोद्धरेद्वासस्तथा कृते सति अह्रीतमुखी, अम्लानमुखी, अस्याः पत्न्याः प्रजा जायत एवं कृते सतीत्यर्थः ।

स्वाहाकृताः समुद्रेष्ठा इत्यभ्यन्तरमूरोरु-
दीची पत्नी पन्नेजनीरूरुणोपप्रवर्तयति ।

उदीची, उदङ्मुखी, ऊरुणा दक्षिणेनापोढवसनेन पन्नेजनीरप उपप्रवर्तयति अभ्य-न्तरं गमयति । अत्र पक्षान्तरमाहाऽऽपस्तम्बः—ऊर्वोरुपप्रवर्तयेदित्येक इति । ऊर्वोरेव वा हस्तेन प्रवर्तयति न तु नाभ्यामन्तरतो गमयतीत्यर्थः ।

संख्यापनमुपप्रवर्तनं चाऽऽ तृतीयस्याः स्तोत्रीयायाः क्रियते ।

तृतीया स्तोत्रीया प्रथमपर्यायसंबन्धिन्येव । अत्र उत्तमायां स्तोत्रीयायामिति उत्तमवचनादत्र प्रथमपर्यायसंबन्धिन्येव तृतीया स्तोत्रीया छन्दोगसूत्रे द्रष्टव्या । अत्राऽऽङभिविधौ । तृतीयस्तोत्रपर्यन्तमित्यर्थः । अर्थः स्पष्टः । इदं पत्नीसंस्कारत्वा-त्प्रतिपत्न्यावर्तते । एकस्यां पत्न्यां रजस्वलायां पन्नेजनीग्रहणस्य तत्संबद्धकर्मणां च लोपः । आग्निमारुतशस्त्रे विशेषमाहाऽऽपस्तम्बः—अभ्यग्रमाग्निमारुतं प्रतिगृणातीति । अभ्यग्रं त्वरितम् । आश्वलायनेऽपि स्वभ्यग्रमाग्निमारुतमिति । सुशब्दादतित्वरितम् । आपस्तम्बेनान्योऽपि विशेषोऽत्रोक्तः—आपो हि ष्ठा मयोभुव इत्यभिज्ञायापो विषि-ञ्चन्प्रतिगृणातीति । अपोऽवस्कन्दयन्प्रतिगृणात्यापोहिष्ठीये तृचे इत्यर्थः । आश्वला-यनः—आपो हि ष्ठेति तिस्रो वियतमप उपस्पृशन्ननारब्धेऽवपावृतशिरस्क इति ।

स्वादुष्किलायं मधुमाꣳ उतायमित्येतस्याꣳ शस्यमाना-
यामुभयतोमोदं प्रतिगृणाति मदामोद इव मोदा-
मोद इवेत्याहावादूर्ध्वं व्याहावात्सिद्धः प्रतिगरः ।

एतस्यां शस्यमानायामिति सप्तमी पञ्चम्यर्थे । तेनैतस्याः शस्यमानाया ऋच आरभ्येत्यर्थो भवति । एतस्या ऋच आरभ्योभयतोमोदः प्रतिगरः । मदामोद इव मोदामोद इवेत्युभयरूपप्रतिगरेऽपि मोदशब्दादुभयतोमोदत्वं प्रतिगरस्य । अयमुभयतोमोदः प्रतिगर आ, आहावात्स्वादुष्किलीयासंबन्धिमध्यतनाहावपर्यन्तम् । स्वादुष्किलीयान्तिमाहावो व्याहाव उच्यते । व्याहावादित्यनन्तरं पूर्वतनस्योर्ध्वशब्द-

स्यानुवृत्तिः । ऊर्ध्वमित्यनन्तरं चकारोऽध्याहर्तव्यः । आहावादूर्ध्वमपि उभयतोमोद एव प्रतिगरः । व्याहावात्सिद्धः प्रतिगरः । व्याहावादारभ्य सिद्धः प्रसिद्ध एव प्रतिगरो भवतीत्यर्थः ।

**भूतमसि भूते मा धा इति प्रतिप्रस्थाता ध्रुवमभिमन्त्रयते ।**

नेष्ट्रुन्नेतृव्यावृत्त्यर्थं प्रतिप्रस्थातृग्रहणम् । एतयोरप्यध्वर्युत्वाविशेषात् । अध्वर्योर्व्यावृत्तिस्तु तस्य व्यापृतत्वादेव भविष्यति । भूयासमित्यन्तो मन्त्रस्य ।

**द्यावापृथिवीभ्यां त्वा परिगृह्णामीति परिगृह्णाति ।**

अञ्जलिना ध्रुवं परिगृह्णाति । अञ्जलिना परिगृह्याऽऽस्त इत्यत्र दर्शनात्स्पष्टतयाऽञ्जलिना परिगृह्णातीत्यापस्तम्बेनोक्तत्वाच्च ।

**विश्वे त्वा देवा वैश्वानराः प्रच्याव-**
**यन्त्विति ध्रुवꣳ स्थानात्प्रच्यावयति ।**

प्रच्यावयति स्वस्थानाच्चालयति । प्रशब्दो झटितिचालनार्थः । प्रच्यावयन्त्वित्यन्तो मन्त्रस्य ।

**दिवि देवान्दृꣳहान्तरिक्षे वयाꣳसीति हरति ।**

होतृचमससमीपं हरतीत्यर्थः । पार्थिवानित्यन्तो मन्त्रस्य ।

**ध्रुवं ध्रुवेण हविषाऽव सोमं नयामसीति होतृचमसे ध्रुवम-**
**वनयति परिधानीयायाꣳ शस्यमानायाꣳ सकृच्छ-**
**स्तायामादितो वा शस्त्रस्य ॥ १० ॥ मध्यदेशेऽन्ततो वा ।**

शस्यमानायामित्यत्राऽऽदित आरभ्याऽऽन्तम् । सकृच्छस्तायामित्यनेन मध्यमे पर्याये । शस्त्रादौ शस्त्रमध्ये शस्त्रान्ते वेति पञ्च पक्षाः सिद्धा भवन्ति ।

**शस्त्रं प्रतिगीर्य होतृचमसमध्वर्युरादत्ते चमसाꣳश्चमसा-**
**ध्वर्यव उक्थशा यज सोमानामिति संप्रेष्यति ।**

शस्त्रं प्रतिगीर्येति दर्शितप्रयोजनम् । अवशिष्टं सूत्रमपि दर्शितप्रयोजनम् ।

**व्याख्यातश्चमसानां भक्षः ।**

यथाचमसं चमसिनो भक्षयन्तीत्यारभ्य तृतीयꣳ होत्रका इत्यन्तेन सूत्रेण व्याख्यात इत्यर्थः ।

**सर्वभक्षा नाऽऽप्यायनसादने भवतः ।**

अनाराशंसत्वादिति भावः ।

**अग्नीदौपयजानङ्गारानाहरेत्येतत्प्रभृति पाशुकं कर्म प्रतिपद्यते ।**

स्पष्टम् ।

---

१ ग. ङ. च. अ. ञ. ठ. नान्च्याव ।

**नानूयाजान्ते स्वरुं जुहोति न हृदय-
शूलेन चरन्ति यद्यनूबन्ध्या भवति ।**

इदं बह्वनूबन्ध्योपलक्षणम् ।

**प्रहृतेषु परिधिषु संस्रावेणाभिहुत्य हारियोजनेन चरन्ति ।**

संस्रावेणाभिहुत्येतिवचनं परिधिप्रहरणाङ्गं संस्रावहोम इतिबोधनार्थम् । सोमाङ्ग-त्वात्पुनर्वचनम् । हरिरस्मिन्युज्यते स्वस्थानं प्रति गमनायेन्द्रस्येति हरियोजन इन्द्रस्तत्संबन्धिग्रहो हारियोजनस्तं संस्रावाभिहोमान्ते परिधिप्रहरणाख्यकर्मणि कृते गृह्णातीत्यर्थः ।

**उपयामगृहीतोऽसि हरिरसि हारियोजन इत्युन्नेता
द्रोणकलशेन हारियोजनꣳ सर्वमाग्रयणं गृह्णाति ।**

अत्र तृतीया सप्तम्यर्थे । आग्रयणस्थालीस्थसोमस्य स्थाल्या अल्पपात्रत्वेन द्रोणक-लशस्य महत्पा(हापा)त्रत्वेन तस्माद्ग्रहीतुमशक्यत्वात् । सर्वमाग्रयणमाग्रयणस्थालीस्थं सर्वं सोमं द्रोणकलशे हारियोजनं ग्रहं गृह्णाति ।

**तं बह्वीभिर्धानाभिः श्रीत्वा न सादयति ।**

धाना अत्र लौकिक्य एव । भर्जिता यवा धानाः । बौधायनेनाप्युक्तं प्रैष एव—धाना हारियोजनीः कुरुतेति ।

**शीर्षन्नधि निधायोपनिष्क्रम्येन्द्राय हरिवतेऽनुब्रूहीन्द्राय हरिवते प्रेष्येति संप्रेष्यति धानासोमेभ्योऽनुब्रूहि धानासोमान्प्रस्थितान्प्रेष्येति वा ।**

शीर्षन्, शीर्ष्णि । विभाषा ङिश्योरिति लोपः सप्तम्याः । शीर्षन्नधि शीर्ष्णि उपरीत्यर्थः । उपनिष्क्रम्येत्यनेन हविर्धानाद्बहिर्गत्वैवायं प्रैषः ।

**हरीः स्थ हर्योर्धाना इति विक्रम्य वषट्कृते
जुहोत्यनुवषट्कृते हुत्वा हरति भक्षम् ।**

विक्रम्येति विविधं क्रमणं विक्रमणमग्रतः पृष्ठतश्च पादयोः करणं पुनः पुनः । अत्र हेतुः श्रुतौ विक्रम्य हीन्द्रो वृत्रमहन्समृध्या इति । वषट्कारोत्तरं तूष्णीमेव विक्रमणम् । मन्त्रेण होमः । इन्द्राय स्वाहेति स्वाहाकारलिङ्गात् । हरति भक्षं सदः प्रति हरति भक्षम् ।

**तꣳ सर्वे समशः प्रतिविभज्योन्नेतर्युपहवमिष्ट्वेष्टयजु-
षस्ते देवसोमेति चिश्चिषाकारं धाना भक्षयन्ति ।**

वाचनिकोऽत्र भक्षलाभो होत्रुन्नेतृव्यतिरिक्तानामपि निमित्ताभावेऽपि । होतुर्वषट्-कारप्रयुक्तो भक्षः । उन्नेतुर्होमाभिषवप्रयुक्तो भक्षः । इतरेषां वाचनिकः । तं हारियो-

१ ग. चरति ।

जनं होता, उन्नेता, अन्ये च। एते सर्वेऽपि हारियोजनगतस्य सोमस्य पात्रान्तरे धानाभिः सह समानभागान्कृत्वेत्यर्थः । प्रतिः सांमुख्यार्थः । उन्नेतरुपह्वयस्वेति सर्वेऽप्युन्नेतारमुपहूयेष्टयजुषस्ते देवसोमेति मन्त्रेण चिश्चिषाकारं चिश्चिषां कृत्वा कृत्वेत्यर्थः । चिश्चिषेति शब्दानुकारस्तथा शब्दं कृत्वा धानाभ्यो रसं हृदयं गमयन्ति रसमात्रं निगिरन्ति ।

संदश्यासंभिन्दन्तो धानानां निम्नानि कुर्वन्तो निरवधयन्तः ।

संदं(द)श्य धाना असंभिन्दन्तश्च धाना भेदनं तासामकुर्वन्तः । दन्तैर्धानासु चिपिटाकारतामात्रं कृत्वा निम्नानि धानानां स्थूलप्रदेशे निम्नानि कुर्वन्तः। स्थूलप्रदेशे निम्ना धानाः कुर्वन्त इति यावत् । निरवधयन्तस्ताभ्यो रसं निष्कृष्य पिबन्त इत्यर्थः ।

आपूर्याः स्थाऽऽमा पूरयतेत्युत्तरवेद्यां धाना
निष्ठीव्योपवपन्ति रय्यै त्वा पोषाय त्वेति वा ।

निष्कृष्टरसा धाना उत्तरवेदिसमीपे निष्ठीव्य थूत्कृत्य वपन्तीत्यर्थः । आपूर्या इत्यनेन रय्यै त्वेति विकल्पते । अत्राऽऽपस्तम्बेनाऽऽचमनमुक्तम्—तत आचामन्तीति । धानाभक्षणेनोच्छिष्टत्वादिति भावः ।

दधिक्राव्णो अकारिषमित्याग्नीध्रागारे दधिद्रप्सान्भक्षयन्ति ।

द्रप्सशब्देन दध्न उपरितनो घनीभूतोऽश उच्यते ।

एकधनपरिशेषान्यथाचमसं व्यासिच्य हरिणीर्दूर्वाः संप्रोप्साय तीव्रीकृत्य रसं जनयित्वाऽप्सु धौतस्य सोमदेवत इति रसमवघ्रेण भक्षयित्वा चात्वालेऽवनयन्ति ।

एकधनानां ये परिशेषास्तान्सर्वांश्चमसेषु क्रमेण निक्षिप्य तेषु हरिणीर्हरिता दूर्वाः संप्रोप्साय्य मर्दयित्वा तीव्रीकृत्य दूर्वारसेनापां श्लक्ष्णीकरणं तीव्रीकरणं रसं दूर्वारसं जनयित्वोत्पादयित्वा तं रसमप्सु धौतस्येति मन्त्रेणावघ्रेणावजिघ्रन्भक्षयित्वा चात्वालेऽवनयन्ति चमसिनः । यथाचमसं व्यासिच्येत्यनेन चमसिनामेवेदं कर्म नान्येषामचमसिनामध्वर्य्वादीनामिति गम्यते । अपरेण चात्वालमास्तावे वेति भक्षणदेश आपस्तम्बेनोक्तः ।

यन्म आत्मनो मिन्दाऽभूदिति मिन्दयाऽऽहवनीयमुपतिष्ठन्ते ॥ ११ ॥

चमसिनोऽचमसिनश्च । एकैवात्र मिन्दा । एकवचनात् ।

१ क. ग. ङ च. ज. झ. ञ. संदश्या' । २ क. ज. झ. ञ. ढ. मिरिव° । ३ ग. ङ. च. ज. झ. ञ. ढ. °णीदूर्वाः । ४ ङ. च. ज. झ. ञ. 'प्साय ती' । ५ ग. च. 'वेनेति ।

**देवकृतस्यैनसोऽवयजनमसि मनुष्यकृतस्यैनसोऽवयजन-मसि पितृकृतस्यैनसोऽवयजनमस्यात्मकृतस्यैनसोऽवयज-नमसि परकृतस्यैनसोऽवयजनमस्येनस एनसोऽवयजन-मसि यच्चाहमेनो विद्वाꣳश्चकार यच्चाविद्वाꣳस्तस्यैनसोऽ-वयजनमसीति प्रतिमन्त्रमाहवनीये शकलानभ्यादधाति ।**

प्रतिमन्त्रमितिवचनमेकेतिकरणादेक एव मन्त्रस्तदन्ते शकलानामभ्याधानमिति स्यात्तन्मा भूदित्येतदर्थम् ।

**उभा कवी युवाना सत्यादा धर्मणस्पती । सत्यस्य धर्मण-स्पते वि सख्यानि सृजामह इति सख्यानि विसृजन्ते ।**

सख्यविसर्गोऽत्राद्रोहविसर्गः । तत ऊर्ध्वमद्रोहो द्रोहो वा न तु नियमेन द्रोह एव कर्तव्य इति विधिः ।

**अभिमृष्टे वेदे पत्नीः संयाजयन्ति ।**

यजमानेनाभिमृष्टे वेदे सति पत्नीः संयाजयन्ति । परिधिषु संस्रावहोमानन्तरं हविः-शेषप्राशनं ततो वेदाभिमर्शस्ततः पत्नीसंयाजा इत्येतावानेवात्र क्रम इति प्रकृतितोऽत्र विशेषः ।

**स्तीर्णे वेदे नवगृहीतमाज्यमध्वर्युर्गृहीत्वा धातारातिरित्यन्त-र्वेद्यूर्ध्वस्तिष्ठञ्जुह्वाहऽऽवनीये नव समिष्टयजूꣳषि जुहोति ।**

स्तीर्णे वेद इत्यनेन समिष्टयजुर्होमात्पूर्वं सर्वप्रायश्चित्तहोमोत्तरमत्र वेदस्तरणकाल इति प्रकृतितोऽत्र विशेषः । अध्वर्युग्रहणं नियमार्थमध्वर्युरेव जुहोति न यजमानोऽपि अन्वारम्भद्वारा । सूत्रान्तरेऽत्रान्वारम्भ उक्तो यजमानस्य तद्व्यावृत्त्यर्थमिदं वचनम् । अन्तर्वेदिवचनं दर्विहोमधर्मव्यावृत्त्यर्थम् । ऊर्ध्वत्वस्य प्रकृतितः प्राप्तत्वेऽपीदं वचनम-न्यदर्विहोमात्मकेषु होमेषु पक्षे प्रह्वताऽपि भवतीतिज्ञापनार्थम् । जुहूग्रहणं प्रकृति-प्राप्तध्रुवाव्यावृत्तये । आहवनीयग्रहणप्रयोजनं यद्यप्यत्र नास्ति तथाऽप्याहवनीये नवा-नामपि समिष्टयजुषामयं होम इति प्रयोगकाले स्मरणार्थमित्यदृष्टमेव प्रयोजनं कल्प्यम् । एतत्स्मरणाभावे यजुर्भ्रेषप्रायश्चित्तं भुवः स्वाहेति दक्षिणाग्नौ होतव्यम् । नव समिष्ट-यजूꣳषि जुहोति नवभिर्मन्त्रैर्नव समिष्टयजूꣳषि जुहोतीत्यर्थः । तत्राऽऽद्याः षण्मन्त्रा ऋचः । अवशिष्टा यजूꣳषि । षड्ऋग्मियाणि जुहोति त्रीणि यजूꣳषीति श्रुतिरपि । ऋग्मियाणि ऋग्रूपाणि । ऋङ्मयाणीत्यपेक्षित ऋग्मियाणीति च्छान्दसः पाठः । एतास्वृक्षु स्वाहाकारः परिभाषासिद्धः । यजुःषु तु पठित एव स्वाहाकारोऽस्ति ।

अथोऽत्र एवाञ्जलौ पूर्णपात्रानयनं सोमस्य फलीकरणहोमः सारस्वतहोमादि । उक्तश्चायमर्थो भरद्वाजेन—समानमा समिष्टयजुष इति ।

**यं कामयेत प्रमायुकः स्यादिति स्रुवेण**
**तस्य जिह्मस्तिष्ठꣳस्तूष्णीं प्रह्वो वा ।**

समिष्टयजुर्होमे यं द्वेष्यं प्रमायुकः सद्योमरणशीलः स्यादिति यो यजमानः कामयेत तस्यैतादृशकामवतो यजमानस्य प्रयोगे स्रुवेण जिह्मः कुटिलाङ्गस्तिष्ठन्नित्यर्थः । कामनाविषये स्रुवो जिह्मता च विधीयते । तूष्णीमित्यनेन मन्त्रेषु मानसिकत्वं विधीयत उपांशुतां बाधित्वा । प्रह्वो वेत्यनेन पक्षे प्रह्वता विधीयते । जिह्म इत्यनेन तिर्यग्वक्रता प्रह्व इत्यनेन पृष्ठवक्रतेत्यनयोर्भेदः । अन्यत्स्पष्टम् । अत्र बर्हिषो नानुप्रहरणम् । वेदिमुपोषतीत्यनेन विशेषप्रतिपत्तेरग्रे विधास्यमानत्वात्, हृदयशूलचर्यातः प्राक्पशुवत् । अध्वर्योर्यज्ञविमोकः । यां घर्मे स्थालीमिति सौम्यस्थालीविमोकमत्र केचिदिच्छन्ति तन्न विमुक्तत्वात्तस्याः पूर्वमेव । प्रासङ्गिकं च नोत्कर्षेदसंयोगादिति न्यायात् ।

**इदं तृतीयꣳ सवनं कवीनामिति सꣳस्थिते जुहोति ।**

संस्थितवचनात्समिष्टयजुषः परमपि कर्मशेषः समापनीय एव । अनूबन्ध्याभावे हृदयशूलोद्वासनादि यूपोपस्थानान्तं समानं ब्राह्मणतर्पणम् । ततः सोमप्रायश्चित्तानि सोमस्कन्दनप्रयुक्तानि प्रायश्चित्तानि अन्यान्यपि यथानिमित्तं शास्त्रान्तरोक्तानि प्रायश्चित्तानि चात्र कर्तव्यानि सवनाहुतेः पूर्वम् । व्याख्या तु प्रातःसवनवदेवात्रापि ।

**प्रशास्तः प्रसुवेति संप्रेष्यति सर्पतेत्याह**
**प्रशास्ता संतिष्ठते तृतीयसवनम् ॥ १२ ॥**
**इति हिरण्यकेशिसूत्रे नवमप्रश्ने चतुर्थः पटलः ।**

---

इदमपि व्याख्यातं प्रातःसवन एव ।

**इत्योकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्नियुक्तवाजपेययाजिसर्वतोमुखयाजिद्विसाहस्राग्नियुक्तपौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथदीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसूत्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंतापशामिकायां ज्योत्स्नाख्यायां वृत्तौ नवमप्रश्नस्य चतुर्थः पटलः ॥ ४ ॥**

---

अथ नवमप्रश्ने पञ्चमः पटलः ।

---

**अवभृथस्य तन्त्रं प्रक्रमयति ।**

अथावभृथस्तत्र यावत्क्रियते तद्व्याख्यास्याम इत्येतावतैव सिद्धेऽवभृथस्य तन्त्रं प्रक्रमयतीत्येवं गुरुसूत्रकरणमध्वर्युतन्त्रविषय एव तत्र यावत्क्रियते तद्व्याख्यास्याम इत्येतस्य प्रवृत्तिर्न हौत्रतन्त्रविषय इति । तेन देवा यो अप्सु महिम इत्यत्र भवत्येव । भूः प्रपद्य इत्यादि तु न भवति वेदेरभावात् ।

**तत्र यावत्क्रियते तद्व्याख्यास्यामः ।**

गृहमेधीयायां प्रायणीयायां च गतार्थम् ।

**अग्नीनन्वाधाय वेदं कृत्वाऽग्नीन्परिस्तीर्य पाणी प्रक्षाल्योलपराजीः स्तीर्त्वा यथार्थं पात्राणि प्रयुनक्ति ।**

अग्न्यन्वाधानवचनमेतद्वचनाभावे तत्र यावत्क्रियते तद्व्याख्यास्याम इतिसूत्राद्प्राप्तिः स्यात्तस्य प्राप्त्यर्थम् । कृतव्याख्यानं प्रायणीयायाम् । कालतस्तन्त्रम् । पौर्णमासतन्त्रत्वे ज्योतिरुत्तमं यज्ञायेति, इमामूर्जं ये प्रविष्टा इति च । आमावास्यतन्त्रत्वे ज्योतिरुत्तममद्य यज्ञाय०इमामूर्जं यथातिथीति । उभयत्रापि आवभृथः हविरिति विशेषः समान एव । न व्रतग्रहणं पूर्वगृहीतव्रतस्याद्याप्यमुक्तत्वात् । अर्थलोपात् । नेध्माबर्हिराहरणम् । तूष्णीमसिदमादाय निष्टप्य परिभोजनीयांश्छित्त्वाऽऽहृत्य परिभोजनीयदर्भेभ्यो वेदार्थं दर्भान्गृहीत्वा तेन वेदं कृत्वा परिस्तृणीत नोमावग्नी कर्मणे वामिति पाणी प्रक्षाल्योलपराजीं यज्ञस्य संततिरसीति मन्त्रेण स्तीर्त्वा यथार्थं यथाप्रयोजनं पात्राणि दर्भेषु प्रक्षालितानि न्यग्बिलानि प्रयुनक्ति । उलपराजीमित्येकवचनप्रयोजनं प्रायणीयायां दर्शितमेव । अत्र क्त्वाप्रत्ययादुलपराजीस्तरणानन्तरमेव पात्राणां प्रयोगः । अवभृथस्य सर्वशेषत्वान्न ब्रह्मयजमानसदनकरणम् । सुगर्थं कृताभ्यामेव सदनाभ्यां सिद्धेः । स्फ्यं कपालमेकं महत्सामर्थ्यात् । अग्निहोत्रहवणीं शूर्पं कृष्णाजिनं शम्यामुलूखलं मुसलं दृषदमुपलां स्रुवं जुहूमुपभृतं ध्रुवामाज्यस्थालीं कुटरुं पात्रीं मेक्षणं वेदं मदन्तीपात्रमुपवेषं निषेचनपात्रं वेदाग्राणि वस्त्रयुग्ममुदुम्बरशाखां चेत्येतावन्ति पात्राणि । न ब्रह्मवरणं प्रधानार्थवरणेनैव सिद्धेः । यजमानोपवेशनम् । ततो वाचस्पत इत्याद्येव ब्रह्मणः पवित्रकरणम् ।

**न प्रणीताः प्रणयति ।**

ब्रह्मन्नपः प्रणेष्यामीति नास्ति न प्रणीताः प्रणयतीति प्रणयनस्य निषेधात् । यजमान वाचं यच्छेत्येतावानेवात्र प्रैषः ।

निर्वपणकाले वारुणमेककपालं निर्वपति ।

संविशन्तां० दक्षाय वा० वेषाय० प्रत्युष्टं० यजमान हविर्निर्वप्स्यामीत्यादि स्रुच्योप्येत्यन्तं भवति । निर्वपणकाल इत्यनेन संविशन्तामित्यादिसत्त्वं सूचितम् । वरुणाय जुष्टं निर्वपामीति वारुणमेककपालं निर्वपति । वरुण हव्यꣳ रक्षस्व । वरुणाय वो जुष्टं प्रोक्षामीति । शुन्धध्वमिति पात्रप्रोक्षणं कृष्णाजिनादानादि अवहन्तीति प्रैषान्तं कर्म प्राकृतं तन्त्रं वचनाभावेऽपि प्राप्यते । अन्यथतद्विना हविष एवासिद्धेः । मदन्त्यधिश्रयणम् । प्रथमेन मन्त्रेणैव पुरोडाशार्थैककपालोपधानम् । निर्दग्धं० भृगूणामङ्गिरसां तपसा तप्यस्व । अङ्गाराध्यूहनं पात्रीनिष्टपनादि पिष्टोत्पवनान्तम् ।

यजुरुत्पूताभिः संयौति ।

यस्मिन्कस्मिंश्चित्पात्रे शुद्धा अपो गृहीत्वा देवो वः सवितेति पच्छः पठितगायत्र्यात्मकेन मन्त्रेण सकृन्मन्त्रेण द्विस्तूष्णीमित्येवंरीत्योत्पूय ताभ्यः स्रुवेण गृहीत्वा समाप इति पिष्टं मिश्रयतीत्यर्थः । अद्भ्यः परिप्रजाताः स्थेत्यादि । न विभागो न निर्देशः । अर्थलोपात् । यजुरुत्पूतत्वविधानप्रयोजनं सवनीयनिर्वापप्रकरणे प्रदर्शितमेव ततो द्रष्टव्यम् ।

अभिवासित आप्यलेपं निनीय संप्रैषेण प्रतिपद्यते ।

अभिवासितशब्देन वेदेन साङ्गारं भस्माध्यूहनमभिवासनमुच्यते । अविदहन्तः श्रपयतेतिप्रैषनिवृत्तिरनेन क्रियते । प्रैषं विनैवात्राविदाहविशिष्टश्रपणं कर्तव्यम् । आप्यलेपं निनीयेतिवचनं महावेदेरास्तृतत्वान्निवृत्तिराशङ्किता स्यात्तन्निवृत्त्यर्थम् । तूष्णीमेव स्फ्यमादाय संप्रैषेण प्रतिपद्यते । आप्यलेपनिनयनोत्तरं संप्रैष एव नाऽऽपस्तम्बोक्ता वेदिरितिप्रदर्शनार्थो ल्यप्प्रत्ययः ।

यदन्यदिध्माबर्हिषः पत्नीसंहनाच्च तत्संप्रेष्यति ।

यत्र स्तम्बयजुर्हरणं तत्रैव स्फ्यादानं समन्त्रकं नान्यत्र तस्य तदङ्गत्वात् । तत्र प्रैष एतत्सूत्रात्प्रोक्षणीरासादय स्रुवं च स्रुचश्च संमृड्ढ्याज्येनोदेहीत्येतावान्प्रैषोऽत्र भवति । यद्यपि प्रोक्षण्यासादनस्य दृष्टार्थता नात्र तथाऽप्यदृष्टार्थं सादनं कर्तव्यमेव । इध्माबर्हिषः पत्नीसंनहनाच्चान्यत्वात् । ततोऽग्निहोत्रहवण्यां पवित्रान्तर्हितायामप आनीयेत्यादिनाऽग्रं परिमृशतीत्यन्ते निशिताः स्थेत्यादि दिवः शिल्पमित्यन्तं करोति । परिभोजनीयदर्भानुदुम्बरशाखां चाऽऽदाय तूष्णीं निष्टप्य तूष्णीं जुहूवत्संमृज्य पुनर्निष्टप्य प्रोक्ष्य स्रुचां समीपे निदधाति । तूष्णीं संमार्गानग्नौ प्रहरति । वक्ष्यमाणसूत्रादिदं प्राप्यते । न प्राशित्रसंमार्गः । तस्यैवाभावात् ।

यत्प्रागाज्यग्रहणात्तत्कृत्वा प्रतिहृत्य
गार्हपत्य आज्यानि गृह्णाति ।

पूषा ते बिलं विष्यत्वित्यादि यत्प्रागाज्यग्रहणात्कर्म तत्कृत्वाऽऽज्यं गार्हपत्य-

समीपे प्रतिहृत्य। प्रतिहरणं नाम पर्यावृत्य हरणं प्रतिहरणम्। गार्हपत्यस्योत्तरत आज्यानि गृह्णाति।

सर्वाणि चतुर्गृहीतानि द्विर्वोपभृति।

उपभृत्यपि चतुर्गृहीतं द्विर्वेति लाघवादुक्तव्य एवं वचनं जुह्वादिषु प्रकृतितः पक्षे प्राप्तस्य पञ्चगृहीतस्य निवृत्त्यर्थम्। उपभृति ब्रह्मणस्त्वेत्यादिचतुर्भिः। नोपभृतꣳ समानयत इति वक्ष्यमाणनिषेधाद्बर्हिरर्थमेव समानयनं न स्वाहाकारार्थमित्यवगम्यते। अत औपभृदाज्यस्य प्रयाजसंबन्धाभावात्प्रथमस्य चतुर्गृहीतस्य प्रयाजार्थस्य निवृत्तिः। द्विर्वोपभृतीत्यस्मिन्पक्षे विशे त्वा सुवीर्याय त्वेति द्वाभ्यां द्विवारं ग्रहणम्। प्रकृतिवदभ्रुवायाम्। अपोद्धृत्याऽऽज्यस्थालीं स्रुववेदाभ्यां सह। अन्यत्र कार्यानुरोधेनापोद्धरणमर्थप्राप्तम्। स्वधा पितृभ्य ऊ० आसादितानां प्रोक्षणीनां प्रतिपत्तेरावश्यकत्वादिदम्। पवित्रापिसर्जनं तूष्णीमेव वेद्यामेव। प्रस्तराभावात्। प्रस्तरापिसर्जन एव मन्त्रः। यजमानो वै प्रस्तरः प्राणापानौ पवित्रे यजमान एव प्राणापानौ दधातीत्यर्थवादात्।

अलंकृत्य पुरोडाशमुत्तरेऽꣳसेऽवभृथꣳ सꣳसादयति।

अलंकृत्य पुरोडाशमित्यनेनेदमहꣳ सेनाया इत्यादिविधिः प्राप्यते। अत्राभिपूरणं न विद्यते। कृत्स्नस्य प्रधानकर्मण्यप्रदेयत्वात्। स्विष्टकृद्वचनाच्च। उत्तरवेदेरुत्तरेऽꣳसेऽवभृथे प्रक्षेपणीयं द्रव्यसमुदायं संसादयति एकत्र करोति।

तमेवाऽऽह—

पुरोडाशमाज्यान्यौदुम्बरीमधिषवणफलके स्वरꣳ पाꣳसूनृजीषं च यत्किंच सोमालिप्तमन्यत्र चतसृभ्यः सोमस्थालीभ्य आग्रयणस्थाल्या उक्थ्यस्थाल्या आदित्यस्थाल्या ध्रुवस्थाल्याः।

यत्किंच सोमलिप्तमित्यनेनाधिषवणचर्मादि गृह्यते। नास्मिन्पुरोडाशसादने याजमानमपूर्वत्वात्। चतसृभ्यः सोमस्थालीभ्य इत्येतावतैव चतसृणां प्रसिद्धत्वाद्ग्रहणे सिद्धे निर्देशो देविकाहविर्निर्वापपक्षे चतस्रः स्थाल्योऽन्यत्र तस्मात्स्थलादपसार्य प्रज्ञाता अन्यत्र स्थाप्यास्ताश्च प्रथमत आग्रयणस्थाली स्थाप्या तत उक्थ्यस्थाली तत आदित्यस्थाली ततो ध्रुवस्थालीत्येवं क्रमेणैव स्थाप्या इत्येतादृशक्रमप्राप्त्यर्थम्।

आयुर्दा अग्ने हविषो जुषाण इति जुहोति यतरस्मिन्नग्नौ श्रपयति।

अत्रावभृथनिचङ्कुणेति मन्त्रेण द्वितीयाऽऽहुतिः। नमो रुद्राय वास्तोष्पतय इति तृतीयाऽऽहुतिः। उक्तं चाऽऽपस्तम्बेन—आयुर्दा अग्ने हविषो जुषाण इत्यवभृथमवैष्यञ्जुहुयादवभृथनिचङ्कुणेति च। नमो रुद्राय वास्तोष्पतये। आयने विद्रवणे।

उद्याने यत्परायणे । आवर्तने विवर्तने । यो गोपायति तं हुव इति चेति । तत्राव-भृथमिचङ्कुणोति मन्त्रस्य सूत्रकृताऽन्यत्र विनियुक्तत्वान्नाऽऽहुतौ विनियोगः । नमो रुद्रायेत्यस्य च मन्त्रस्याविनियुक्तत्वादत्र सामान्यपरिभाषया विनियोगः । जपे वा विनियोगः । स च होमोत्तरम् । यत्तरस्मिन्नग्नौ श्रपयन्तीत्यत्राऽऽवृश्च्यते वा एतद्यज-मानोऽग्निभ्यामिति श्रुतिलिङ्गं मूलम् । यदि गार्हपत्ये श्रपणं तदा गार्हपत्य इयमा-हुतिर्यद्याहवनीये श्रपणं तदाऽऽहवनीय इति ।

समुप्तेऽवभृथे ।

समुप्त औदुम्बर्यामासन्द्यां स्थापिते । आसन्द्यत्रोपस्थितत्वाद्राजासन्द्येव ।

प्रस्तोतः सामानि गायेति संप्रेष्यति सह पत्न्या त्रिः सर्वे साम्नो निधनमुपयन्ति ।

निधनं साम्नोऽन्त्या भक्तिः । त्रिःशब्दस्योपयन्तीत्यनेनान्वयः । तथा च त्रिरुप-यन्तीत्यन्वयो भवति । त्रिरुपयन्तीत्यस्य त्रिराहुरित्यर्थः । प्रैषे सामानीति बहुवचनं देशत्रयकर्तव्यसामगानाभिप्रायेण । तेन सकृदेव प्रैषः सिद्धो भवति ।

उरुꣳ हि राजा वरुणश्चकारेति चात्वालं गत्वा वदन्ति चात्वालाद्वा प्रयान्तो वदन्ति ।

चात्वालं गत्वा च त्वालसमीपे स्थित्वा वदन्तीति प्रथमपक्षार्थः । चात्वालं त्यक्त्वा तदग्रे प्रयान्तो निर्गच्छन्तो वा वदन्तीति द्वितीयपक्षार्थः ।

अन्तरेण चात्वालोत्करावुदञ्चो निष्क्रामन्ति ।

उभयपक्षेऽपि चात्वालोत्करावन्तरेण निष्क्रामन्ति । उदञ्च उदङ्मुखाः ।

सर्वा दिशोऽवभृथगमनमाम्नातम् ।

अत्र यां दिशं व्रजन्ति सैव प्राची तदनुरोधेन तत्तदृत्विक्स्थानानि कल्पयित-व्यानि । सर्वेषां मन्त्रः । पत्न्या अपि । सह पत्न्येति पूर्वसूत्रानुवृत्तेरिदं लभ्यते ।

नोदीचेन संचरितव्या इत्येकेषाम् ।

उदीचेनोदग्दिग्गतेन । इदं पथो विशेषणम् । उदीचेन पथा न संचरेदित्ये-केषामाचार्याणां मतमित्यर्थः ।

मध्यदेशे द्वितीयꣳ साम्नो निधनमुपयन्त्युदकान्ते तृतीयम् ।

स्पष्टोऽर्थः ।

शतं ते राजन्भिषजः सहस्रमित्यपो दृष्ट्वा जपन्ति ।

सर्वेषां बहुवचनाज्जपः । एकवचनपाठेऽध्वर्योरेव जपः । बहुवचनपाठे पत्न्या अपि ।

---

१ ग. °मे निव° । २ ग. च. °त्रस्य वि° । ३ ग. च. °हुतिरि° ।

**अभिष्ठितो वरुणस्य पाश इत्युदकान्तमभितिष्ठन्ति ।**

उदकान्तं गत्वोदकाभिमुखास्तिष्ठन्ति सर्वे ।

**अपः प्रगाह्य तिष्ठन्तोऽवभृथेन चरन्ति ।**

अपः प्रगाह्यापो विलोड्य । तिष्ठन्तोऽवभृथेन चरन्तीत्यनेनाऽऽघारादावाक्रमण-प्रत्याक्रमणयोर्निवृत्तिः क्रियते । दक्षिणतो ब्रह्मा यजमानः पत्नी च । उत्तरत आग्नीध्रः पश्चाद्धोता मध्ये हवींष्यपि पात्रान्तरस्थानि केनचिद्धृतानि उच्चे मञ्चे वाऽऽसन्द्यां वा स्थापयेत् । अपामवलोडनं सर्वेषाम् । होताऽनामन्त्रित एव बहिस्तूष्णीमाचम्य निवीती भूत्वा देवा यमे अप्सु माहिम इत्याचम्य यज्ञोपवीती भूत्वा पुनराचम्य, अभिष्ठितो वरुणस्य पाशः, उदकान्तमभितिष्ठति । ततोऽपोऽवलोड्य तिष्ठन्नवभृथे न चरति ।

**ओढासु देवतासूदकमुपवाज्य स्रुवाघार-माघार्याग्नीदुदकं त्रिः संमृड्ढीति संप्रेष्यति ।**

ओढासु आवाहितासु देवतासु सतीषु । इदं याजुषहौत्रे । ओढासु देवतास्विति-सूत्राद्धोत्रा देवतावाहनं कर्तव्यम् । अग्निमग्न आ१० सोममा १० वरुणमा १० देवा२ आज्यपा२ आ० अग्नीवरुणौ स्विष्टकृतावा १० । ओढासु देवतास्वितिसूत्रा-द्यावत्यो देवतास्तासां केवलावाहनमात्रं कार्यं न तु निगदशेषपठनम् । उदकं वेदे-नोपवाज्य । अदृष्टार्थमिदमुपवाजनम् । स्रुवाघारमाघार्य ध्रुवामाप्याययति । इदं ध्रुवाप्यायनं ध्रुवां वै रिच्यमानामितिनिषेधस्य प्राबल्यात् । अग्नीदुदकं त्रिः समृड्ढीति संप्रेष्यत्यध्वर्युः । ततः संप्रेषित आग्नीध्र ऊहितेन मन्त्रेणोदकं प्राक्संस्थं त्रिः संमार्ष्टि । स चोह इत्थम्—उदक वाजजिद्वाजं त्वा सरिष्यद्वाजं जेष्यद्वाजि वाजजिद्वाजजित्यायै संमाजर्म्युदकमन्नादमन्नाद्यायेति ।

**संमृष्टेऽप्सु तृणं प्रास्य ।**

संमृष्ट इत्यनेन संमार्गः सूच्यते । संमृष्ट इति भूतनिर्देशात्संमार्गोत्तरमप्सु प्रासनं संमृष्टे विहितेनोहितेनाऽऽग्नीध्रेण संमृष्ट उदक इत्यर्थः । अत्राग्निसंमार्जनानामभावात्त-त्स्थाने परिभोजनीयदर्भान्स्पयेन सह गृहीत्वा तैः सह स्पयेन संमार्ष्टि करोति । अत्र भरद्वाजेनोक्तम्—चोद्यमाने कर्मणि द्रव्यमुत्पादयेद्यथा गृहमेधीयेऽग्निसंमार्जनानीति । गृहमेधीय इत्यवभृथोपसदादीनामग्निसंमार्जनाभाववतामुपलक्षणम् । आग्नीध्रेण संमा-र्गे कृत आहवनीयदेशं संलक्ष्याप्सु तृणं प्रास्यति । अस्मिंस्तृणे सर्वा आहुतयो होतव्याः । बर्हिरभिजुहोत्याहुतीनां प्रतिष्ठित्या अथो अग्निवत्येव जुहोतीति श्रुतेः । भुवनमसि विप्रथस्वोदक यष्टृदं नम इत्यग्निशब्दस्थान उदकशब्दस्योहः । अत्र-त्याग्निशब्दस्याऽऽहवनीयपरत्वादत्राऽऽहवनीयाभावादुदकस्य तत्स्थानीयत्वात् । यष्टृ-शब्दस्य तद्विशेषणत्वादुदकशब्दस्य नपुंसकलिङ्गत्वादेतदनुरोधेन विशेषणीभूतो यष्टृ-

ब्दोऽपि नपुंसकलिङ्गः कार्यः । सप्रथा नमो देवेभ्य इति मन्त्रपक्षे तु सप्रथो नमो वेभ्य इत्यूहः । सप्रथ इति शब्दः सान्तः । तस्योदकविशेषणत्वे सप्रथ इति नपुंकलिङ्गकत्वम् । स्वधा पितृभ्यः । सुहु अग्निस्त्वा० उपभृदेहि देवस्त्वा० सुयमे मे० अग्नाविष्णू इति नास्ति । वेदेरभावेन तत्प्रयुक्तस्याऽऽक्रमणस्य तत्संबन्धिमन्त्रस्य चाभावः । विष्णोः स्थानमसीति नास्ति । अतिक्रमणाभावात् । अवस्थानस्य तत्संबन्धिमन्त्रस्य चाभावः । अन्तर्वेदि दक्षिणं पादमित्यादि लुप्यते वेदेरभावात् ।

अग्नेरनीकमप आविवेशेति स्रुच्यमाघारयति ।

स्रुच्यं स्रुक्साध्यम् । अत्रत्याग्निशब्दस्येज्यमानदेवप्रकाशकत्वान्नोहः । हुत्वाऽनुप्राणिति । बृहद्भा इति स्रुचमुद्गृह्णाति । पाहि माऽग्न इति नास्ति प्रत्याक्रमणाभावात् । अग्नय इदमिति त्यागः । वागस्याऽऽग्नेयीत्यूहः । समक्तम० उन्नीतꣳ रायः सुवीराय स्वाहा । यज्ञेन० सादयित्वा स्रुचौ । इध्मसंनहनस्थाने संमार्गतृणानि स्पृष्ट्वा उपसंगृह्य क इदमध्व० क इदमग्नी० ब्रह्मन्प्रवरायाऽऽश्रावयिष्यामि । वाचस्प० ओ ३ श्रा ३ ० आ ३ श्रा ३ ० अस्तु० तिष्ठ होतस्तिति प्रयोगक्रमः ।

यथोपसत्स्वेवं प्रवरं प्रवृणीते ॥ १३ ॥ तिष्ठेत्येतावान्प्रवरः ।

सीद होतरित्युपसत्सु इति तस्यात्र बाधितत्वात्तिष्ठेति विशेषः । अग्निर्देवो होतेत्यादिमानुष इत्यन्तस्य लोपः । नच प्रवरलोपे प्रवरार्थस्यावस्थानादेर्लोपः स्यादिति वाच्यम् । तिष्ठेत्येतावान्प्रवर इत्यनेनैतादृशप्रवरसत्त्वबोधनेन तदङ्गभूतानामवस्थानादीनामपि बोधनात् । देवाः पितर इत्यारभ्य मां देवेष्वाश्रावयाऽऽयुषे वर्चस इत्येतस्माद्याम्यो मन्त्रभागस्तस्य यस्यर्षेरहमस्मि तं नान्तरेमीत्यर्थकाद्यस्यास्मि न तमन्तरेमीतिलिङ्गाद्दृष्युत्कीर्तनविशिष्टप्रवरसंबन्धित्वं प्रतीयते । प्रकृते तादृशप्रवराभावादेतस्य मन्त्रभागस्य लोपो युक्त एव । तिष्ठेत्येतावत एव शब्दस्य सूत्रकृता प्रवरत्वव्यवहारात्प्रवरत्वं सिद्धं, सिद्धे च प्रवरत्वे तस्य फलजनकत्वमपि । एवं च प्रवरसंबन्धिफलयाचनार्थो यावान्मन्त्रभागोऽत्राबाधितस्तावत एव जपो मां देवेष्वाश्रावयाऽऽयुषे वर्चस इत्येतस्य कर्तव्य एव । होताऽग्निर्होता वेत्व० देवता । घृतव० यान् ।

अपबर्हिषः प्रयाजान्यजति ।

अध्वर्युर्घृतवतीमध्वर्यो स्रुचमास्यस्वेत्युच्यमाने जुहूपभृतावादायापबर्हिषः प्रयाजान् यजति । प्रयाजाङ्गत्वात्स्रुगादापनम् । यज० पृथिवी होता० वक्ता । अपगतो बर्हिः प्रयाजो येभ्यस्ते प्रयाजा अपबर्हिषः । बर्हिर्वर्जं चत्वारः प्रयाजा भवन्तीत्यर्थः ।

नोपभृतꣳ समानयते ।

प्रयाजेषु नोपभृतꣳ समानयते । एतस्य बर्हिरर्थत्वात्प्रकृते तस्याभावात् । एतस्मादेव ज्ञायते बर्हिरर्थमेव समानयनं न स्वाहाकारार्थमपि । अतः स्वाहाकारार्थं

प्रकृतावाज्यमवशेषणीयमित्यवगम्यते । अत्र प्रयाजशेषेण ध्रुवां वारुणं पुरोडाशमौपभृतं चाभिघारयति । शेषप्रतिपत्तेरावश्यकत्वादेतस्य प्राप्तिः ।

अप्सुमन्तावाज्यभागौ ।

अप्सु इति शब्दो ययोस्तावप्सुमन्तौ । तौ च अप्स्वग्ने सधिष्टव, अप्सु मे सोमो अब्रवीदिति ।

ताभ्यां प्रचर्य पुरोडाशाद्वरुणं यजति ।

ताभ्यां प्रचर्येतिवचनमप्सुशब्दवद्भ्यामेव प्रचारो न तु चातुर्मास्यप्रकरणगतश्रुतिपठितया वृषा सोम द्युमा२ असीतिद्वितीयाज्यभागसंबन्धिवैकल्पिकपुरोनुवाक्ययेत्येतदर्थम्, मध्ये नैमित्तिकयागाश्रितानुष्ठानार्थं वा । तर्हीदं कुत्र कर्तव्यमिति चेदनूयाजान्ते कर्तव्यमित्यर्थात् । अग्निर्होतेति यजमानं पुरोडाशाद्वरुणं यजति । अत्र न कृत्स्नावदानं तस्य स्विष्टकृत्येव विधास्यमानत्वात् । जुह्वामुपस्तीर्य ध्रुवामाप्यायय मा भैरित्यभिमृश्य द्विरवदायाभिघार्य ध्रुवां नाऽऽप्याययति । यदवदानानीति प्रत्यभिघार्य वरुणायानुब्रूहि । आश्राव्य प्रत्याश्राविते वरुणं यजेति प्रयोगो वरुणयागस्य, इमं मे वरुण श्रुधी० तत्त्वा यामि ब्रह्मणा० मोपीरो० इति याज्यानुवाक्ये वरुणायेदं० वरुणस्याहं देवयज्ययाऽन्नादो भूयासमिति ।

कृत्स्नं पुरोडाशमवदायाग्नीवरुणौ स्विष्टकृतौ यजति ।

तस्य प्रयोगः– जुह्वामुपस्तीर्य ध्रुवां नाऽऽप्याययति । कृत्स्नं पुरोडाशमवदाय द्विरभिघारयति । उभयत्रापि ध्रुवां नाऽऽप्याययति । एताभ्यामभिघारणाभ्यां ध्रौवसमाप्तिः । अग्नीवरुणाभ्या२ स्विष्टकृद्भ्यामनुब्रूहि । आश्राव्य प्रत्याश्राविनेऽग्नीवरुणौ स्विष्टकृतौ यजेति । उत्तरपूर्वार्धस्थानं संलक्ष्य यागः स्विष्टकृत इति प्रयोगः । त्वं नो अग्ने वरु० मुमुग्ध्यस्मो३म् । ये३ यजामहेऽग्नीवरुणौ स्विष्टकृतौ भू० वरयाडग्निरग्नेः प्रिया धामान्ययाट्सोमस्य प्रिया धामान्ययाड्वरुणस्य प्रिया धामान्ययाड्देवानामाज्यपानां प्रिया धामानि यक्षदग्नीवरुणयोः स्विष्टकृतोर्होत्रोः प्रिया धामानि यक्षत्स्वं महि० जुषता२ हविः स त्वं नो अग्नेऽवमो० एधी२ वौ० इति होतुर्विशेषः । यज० अग्नीवरुणाभ्या२ स्विष्टकृद्भ्यामिदम् । अग्नीवरुणयोः स्विष्टकृतोरहं देवयज्ययाऽऽयुष्मान्यज्ञेन प्रतिष्ठां गमेयम् । अग्नीवरुणौ मे दुरिष्टात्पात२ सविताऽवशा२साद्यो मेऽन्ति दूरेऽरातीयति तावेतेन जेषमिति । वैश्वानरे हवि० परिधिदेशं संलक्ष्य प्रक्षालनं निनयति ।

अग्नीदुदक२ सकृत्संमृड्ढीति संप्रेष्यति ।

संमार्गोऽत्रापि अर्थात्सिद्धः संमृड्ढ इतिवचनाभावेऽपि । आग्नीध्रः स्फ्यवर्जितैस्तैरेव परिभोजनीयदर्भैरुदक२ संमार्ष्टि उदक वाजजिह्वाजं त्वा ससृवद्वाजं जिगिवद्वाजि

वाजजिद्वाजजित्यायै संमार्ज्मीत्युत्क्रमन्नादमन्नाद्यायेति । तूष्णीमेव संमार्गदर्भानप्सु प्रक्षिपति । नात्र यो भूतानामधिपतिरिति । हुतं तत्र स्वाहेतिलिङ्गविरोधात् । नास्ति वेदिर्बर्हिर्लिङ्गविरोधात् ।

अपबर्हिषावनूयाजौ यजति देवौ यज
यजेति पूर्वमनूयाजं संप्रेष्यति यजेत्युत्तरम् ।

महाहविर्होता• उद्गाता । यद्युपभृत्याज्यं तज्जुह्वामानीय तेनापबर्हिषावनूयाजौ यजति । अपगतं बर्हिर्ययोस्तौ बर्हिर्व्यतिरिक्तावनूयाजौ यजति । देवौ यज यजेति पूर्वं प्रथममनूयाजं संप्रेष्यति । यज इत्युत्तरमनूयाजम् । प्रथमस्यानूयाजस्य द्वियजित्वाद्य-जिद्वयम् । उत्तरस्यैकयजित्वादेक एव यजि । अङ्गिरसो माऽस्य यज्ञस्य प्रातरनुवाकै-रहौषुरिति नाराशंसानूयाजे जपः ।

एतावत्क्रियते ।

नान्यदुत्तरं कर्मेत्यर्थः ।

यत्ते ग्राव्णा चिच्छिदुः सोम राजन्प्रियाण्यङ्गानि स्वधिता परूꣳषि । तत्संधत्स्वाऽऽज्येनोत वर्ध-यस्वानागसो अधमित्संक्षयेम । यत्ते ग्रावा बाहुच्युतो अचुच्यवुर्नरो यत्ते दुदुहुर्दक्षिणेन । तत्त आप्यायतां तत्ते निष्ट्यायतां देव सोम । यत्ते त्वचं बिभिदुर्यच्च योनिं यदा स्थानात्प्र-च्युतो वेनसि त्मना । त्वया तत्सोम गुप्तमस्तु नः सा नः संधासत्परमे व्योमन् । अहाच्छरीरं पयसा समेत्यान्योऽन्यो भवति वर्णो अस्य । तस्मिन्वय-मुपहूतास्तव स्म आ नो भज सदसि विश्वरूप इति चतसृभिरुदुम्बरशाखया दध्नर्जीषमभिजुहोति पञ्चभिः सप्तभिर्नवभिरेकादशभिस्त्रयोदशभिर्वा ।

जुहोतिचोदितत्वात्स्वाहाकारस्तत्तदृगन्तेषु । चतसृभिर्ऋग्भिः स्रुक्संमार्गानन्तरं नासंमृष्टेन पात्रेण जुहुयाच्छास्त्रान्तरप्रापितसंमार्गयौदुम्बरशाखया लौकिकेन दध्नर्जी-षमभि ऋजीषस्योपरि जुहोति । पञ्चभिः सप्तभिर्नवभिरेकादशभिस्त्रयोदशभिर्वेति पृथ-क्पृथगुपादानं समसंख्याव्यावृत्त्यर्थम् । आज्येनेति केचित्तत्संधत्स्वाऽऽज्येनोति लिङ्गात् । तदयुक्तम् । दध्नेतिवचनविरोधापत्तेः । प्रोक्षणशब्दवदेवाऽऽज्यशब्दस्य दध्न्युपपत्तेश्च ।

---

१ क. °र्बर्हिः । लिङ्ग° ।

ऋजीषस्य स्रुचं पूरयित्वा समुद्रे ते हृदयमित्यप्सूपमारयति ।

ऋजीषस्येति षष्ठ्यवयवे । तेनर्जीषैकदेशेन स्रुक्पूरणम् । स्रुचं प्रचरणीम् । तस्या एव सोमसंबन्धित्वात् । अन्यां वा लौकिकीम् । लौकिकस्रुग्ग्रहणपक्षेऽवभृथप्रयोग एतस्या अपि प्रयोगः । प्रोक्षणं संमार्गश्च तूष्णीं जुहूवत् । ऋजीषैकदेशेन पूरितां स्रुचमप्सूपमारयति अप्सु निमज्जयतीत्यर्थः ।

अप्सु धौतस्य सोमदेवत इति यो बिन्दुना-
मुच्चरति तमवघ्रेण भक्षयत्युपस्पृशति वा ।

यो बिन्दूनामुच्चरति उच्छलति रलयोः सावर्ण्यात्, बिन्दूनां बिन्दूनां मध्ये यो महत्त्वाद्धेतोर्बिन्दुरुत्प्लवते तमवघ्रेणावघ्राणेन भक्षयति उपस्पृशति वा तं बिन्दुमवघ्राणपर्यन्तं तस्य स्थातुमशक्यत्व उपस्पर्शः ।

अवभृथनिचङ्कुणेत्यवभृथꣳ संप्रविध्यन्ति ।

बहुवचनादध्वर्युप्रतिप्रस्थातुन्नेतारो यजमानश्च संप्रविध्यन्ति अवभृथमवभृथद्रव्यसमुदायं सम्यक्प्रक्षिपन्ति उदक इत्यर्थः ।

देवीराप इत्युपतिष्ठन्ते ।

बहुवचनात्सर्वे याजुषाः ।

सुमित्रा न इति मार्जयन्ते ॥ १४ ॥

पूर्ववत्सर्वे याजुषाः ।

उन्नेतर्वसीयो न उन्नयाभ्युद्गु त्ये मधुमत्तमा गिरः
स्तोमास ईरते सत्राजितो धनसा अक्षितोतयो
वाजयन्तो रथा इव कण्वा इव भृगवः सूर्या
इव विश्वमिद्धीतमानशुरित्युन्नेतारꣳ संप्रेष्यति ।

वसीय इत्युन्नेतृविशेषणम् । अभि उदकतीराभिमुखं नोऽस्मानुन्नयोत्तारयेति । मधुमत्तमा इत्यादिनोत्तार्यविशेषणानि तन्माहात्म्यार्थकानि ।

उदेत प्रजामुत वर्चो दधाना युष्मान्राय उत यज्ञा
असश्चत । गायत्रं छन्दोऽनुसꣳरभध्वमथा स्याम सुरभयो

गृहेष्वित्युन्नेता होतृप्रथमान्यजमानप्रथमान्वोन्नयति ।

सर्वानृत्विजः । यजमानं पत्नी च । सकृदेव मन्त्रः । उदेतेति बहुवचनलिङ्गात् ।

प्रतियुतो वरुणस्य पाश इत्युदकान्तं प्रतियौति ।

अन्तिमसीमास्थमुदकं प्रतिलोडयति ।

---

१ अ. ब. ड. 'बञिप्रे' ।

प्रत्यस्तो वरुणस्य पाश इत्युदकान्तं प्रत्यस्य ।

अन्तिमसीमास्थमुदकं पादाग्रेण प्रत्यस्येत्यर्थः । अमुमर्थमाह बौधायनः—पराङा-वृत्तः प्रपदेनोदकान्तं प्रत्यस्यतीत्यर्थः (स्येति) । प्रत्यस्येति ल्यपोऽप्रतीक्षमायन्तीत्यत्रा-न्वयः । बहुवचनात्सर्वैककर्तृकता प्रत्यसनेऽनवेक्षमाणाः प्रत्यायन्तीत्यत्र च ।

औदुम्बरीः समिधो धारयन्तः ।

सर्व ऋत्विजो यजमानः पत्नी चेत्येकैकामौदुम्बरीं समिधं धारयन्ति । समिध इति बहुवचनमनेककर्त्रभिप्रायम् ।

अपाम सोममृता अभूमेति महीयां जपन्तः ।

अपाम सोममित्यस्या ऋचः समाख्या महीयेति । संज्ञायाः प्रयोजनं व्याख्यात-मुन्नयनं महीयेत्यत्रैतस्याः संप्रत्ययार्थम् । बहुवचनात्सर्वेषां जपः ।

उन्नेतारं पुरस्कृत्वाऽप्रतीक्षमायन्ति ।

पुरस्कृत्वा सर्वेषामग्रे कृत्वाऽवभृथदेशमप्रतीक्षमप्रतीक्षमाणा आयन्ति विहारं प्रति आगच्छन्तीत्यर्थः ।

परोगोष्ठे मार्जयन्ते ।

गोष्ठो गवां वसतिस्थानं तस्य परः पुरोवर्ती यो देशस्तत्र मार्जयन्ते सर्व ऋत्विजो यजमानः पत्नी च । अत्र सुमित्रा न इति मन्त्रमाह भरद्वाजः ।

एधोऽस्येधिषीमहीत्याहवनीये समिधोऽभ्यादधाति ।

तत औत्तरवेदिकेऽग्नौ गृहीतां स्वां स्वामौदुम्बरीं समिधमभ्यादधाति । आदौ यजमानः । ततः सर्व ऋत्विजः । तेनैव मन्त्रेणौत्तरवेदिकेऽग्नावेव ।

अथो अन्वचारिषमित्युपतिष्ठन्ते ।

समिदाधानक्रमेणोपतिष्ठन्ते ।

एवं पत्नी गार्हपत्येऽभ्याधायोपतिष्ठते ॥ १९ ॥

अनन्तरं पाठात्सर्वेषामन्ते पत्नीकर्तृकाभ्याधानमुपस्थानं च । एवमिति यथा सर्वैर्मन्त्रे-णाभ्याधानोपस्थाने कृते तथाऽनयाऽपि कर्तव्ये इत्येतदर्थम् । औत्तरवेदिकाग्नेरति-देशतः प्राप्तस्य बाधनार्थं गार्हपत्यग्रहणम् । तत्र पयस्वत्यग्न आगमं तां मा सꣳसृज वर्चसेति मन्त्र ऊहः ।

इत्योखोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्नियुक्तवाजपेययाजिसर्वतोमुखया-जिद्विसाहस्राग्नियुक्तपौण्डरीकयाजिगणेशदीक्षिततनुजगोपीनाथ-दीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसू-त्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंताप-शामिकायां ज्योत्स्नाख्यायां वृत्तौ नवमप्र-श्नस्य पञ्चमः पटलः ॥ ५ ॥

---

१ ग. च. °हीयामित्य° ।

अथ नवमप्रश्ने षष्ठः पटलः ।

---

प्राग्वꣳश उदयनीयायास्तन्त्रं प्रक्रमयति ।

प्राग्वंशमात्रांशे विधानम् । तन्त्रं प्रक्रमयतीत्यनुवादः । प्राग्वंशविधानम् । एषोऽ-ग्निराऽऽहवनीयो यतः प्रणीयते स गार्हपत्य इति शालामुखीयं गार्हपत्यकर्मभ्योऽन्व-वस्यन्ति तत्र गार्हपत्यकर्माणि क्रियन्त इत्येताभ्यां सूत्राभ्यामौत्तरवेदिकाग्निराहवनीयः शालामुखीयो गार्हपत्य इति प्राप्तं तयोरर्थावृत्तिः क्रियतेऽनेन । तेन प्राक्तनेष्वेवाग्नि-षूदयनीयेति सिद्धं भवति । तन्त्रं प्रक्रमयतीत्यनुवादोऽस्यामिष्टावपि हौत्रविषये नास्त्यपूर्वता किंत्वाध्वर्यवविषय एवेत्येतदर्थमेव तन्त्रं प्रक्रमयतीतिवचनम् ।

तस्याः प्रायणीयया कल्पो व्याख्यातः ।

तस्या उदयनीयायाः प्रायणीयया कल्पः प्रकारोऽग्न्यन्वाधानादिको व्याख्यात उक्तः ।

अनूयाजसमिधमुपसंनह्यति ।

अत्रैतावान्विशेषः प्रायणीयातः । अर्थः स्पष्टः ।

यस्याꣳ स्थाल्यां प्रायणीयꣳ श्रपयति तस्याꣳ सनिष्कासायां तेन मेक्षणेन श्रपयति ।

सनिष्कासायामित्यस्यायमर्थः—निष्कासमभि निरुप्तहविष्कायामिति । तेन न श्रुति-विरोधः ।

पत्नीꣳ संनह्यति ।

योक्त्रस्यावभृथे त्यक्तत्वादिति भावः ।

न जुह्वामाज्यं गृह्णाति यदि प्रयाजा न भवन्ति ।

स्पष्टम् ।

कृताकृताः प्रयाजाः ।

एतस्या इष्टेः कृत्स्नत्वेऽपि प्रयाजानूयाजानां कृताकृतत्वमेवेतिज्ञापनार्थं यदि प्रयाजा न भवन्तीत्येतावतैव पाक्षिकत्वेऽवगते कृताकृताः प्रयाजा इति वचनम्[1] ।

अत्र देवताक्रमे विशेषमाह—

पथ्याꣳ स्वस्तिमुत्तमामाज्येन देवतां[2] यजति ।

अग्निः सोमः सविता पथ्या स्वस्तिरदितिरित्येवं देवताक्रमोऽत्रेत्ययं विशेषः । देशक्रमस्तु तत्तद्देवतानुरोधेनैव । तथा चाऽऽपस्तम्बः—तेष्वेव देशेष्वग्निमाज्यभागानां

---

१ ख. °चनं स्पष्टार्थम् । २ ङ. ज. झ. ञ. ठ. देवता ।

प्रथमं यजति पथ्यां स्वस्तिमुत्तमामिति । यत्र देशे या देवता प्रागिष्टा तत्रैव तां यजतीत्यापस्तम्बसूत्रार्थः । अन्यश्च विशेष उक्त आपस्तम्बसूत्रे—याः प्रायणीयस्य याज्या इत्युक्तमिति । याज्यानुवाक्यानां विपर्यासोऽपि ब्राह्मणोक्तोऽनुसंधेय इत्याप-स्तम्बसूत्रार्थः ।

न स्थालीं निष्कासं मेक्षणं च निदधाति ।

अग्रे प्रयोजनाभावादिति भावः ।

न ध्रुवायाः शेषं करोति ।

प्रयोजनाभावात् ।

कृत्वा संतिष्ठते ।

शंय्वन्तत्वव्यावृत्त्यर्थमिदं वचनम् ।

अनूबन्ध्यायास्तन्त्रं प्रक्रमयति ।

अत्र तन्त्रं प्रक्रमयतीतिवचनमुदयनीयासमाप्त्यव्यवहितोत्तरमेव तन्त्रप्रक्रमः कर्तव्य इत्येतदर्थम् ।

तस्या निरूढपशुबन्धेन कल्पो व्याख्यातः ।

तस्या अनूबन्ध्याया निरूढपशुबन्धेनैन्द्राग्नेन सौर्येण प्राजापत्येन वा कल्पः प्रकारो व्याख्यात उक्तः । यज्ञमनु यज्ञसमाप्तिमनु बध्यत इत्यनूबन्ध्या दीर्घ आर्षः । षड्ढोता पश्विष्टिश्चाङ्गभूते न विद्येते इतिसूत्रात्षड्ढोतृपश्विष्टी न स्तः ।

मैत्रावरुणीं वशामुपाकरोति ।

वशा वन्ध्या । सा च गौः । तथा चाऽऽपस्तम्बेन गोपदघटितावेव प्रैषावुक्तौ—मित्रावरुणाभ्यां गोर्वपाया मेदसोऽनुब्रूहि मित्रावरुणाभ्यां गोर्वपाया मेदसः प्रेष्येति संप्रैषाविति । उभयोर्वशागोशब्दयोरपि वा प्रयोगः । वशाशब्देनेदमपि ज्ञायते गोशब्देन स्त्रीजातिरत्र गृह्यत इति । हविरवदानप्रैषविषयेऽप्यापस्तम्बः—एवमवदा-नेषु हविष इत्यन्तौ नमतीति । वपाया मेदस इत्येतस्य स्थाने हविष इत्यूह इत्यर्थः । पञ्चपशूनां मध्ये त्र्यक्षरोर्ध्वसंख्यकाक्षरत्वादग्नीषोमीय एवैतस्याः प्रकृतिः । तेनाग्नीषो-मीये तद्विकारेषु चाऽऽश्वलः प्रस्तर ऐक्षवी विधृती कार्ष्मर्यमयोऽधि(?) काःपौतुदारवे-ष्योऽमुष्मा अमुष्य वपाया मेदसः प्रेष्यामुष्मै पुरोडाशस्य प्रेष्यामुष्मा अमुष्य हविषः प्रेष्येत्येतत्सूत्रोपात्ता धर्मा अत्र भवन्ति । अत्र स्त्रीपशुत्वादमुष्मा इत्येतस्य स्थानेऽ-मुष्या इत्यूह इति विशेषः ।

तिस्रो वा द्विरूपां मैत्रावरुणीं बहुरूपां
वैश्वदेवी९ शितिपृष्ठां बार्हस्पत्यामिति ।

द्विरूपा द्विवर्णा मैत्रावरुणी । बहुरूपाऽनेकवर्णा वैश्वदेवी । शितिपृष्ठा श्वेतपृष्ठा बार्हस्पत्या एवं तिस्रः । शितिपृष्ठायां द्विरूपत्वेऽपि पृष्ठे श्वेतवर्णसत्त्वं नियतमिति द्विरूपवशातो विशेष । इतिशब्दो बार्हस्पत्यानूबन्ध्याविषये प्रकारान्तरमप्यस्तीति-ज्ञापनार्थम् । तनाऽऽपस्तम्बोक्तो रोहिणी बार्हस्पत्येति रोहितवर्णोऽपि पक्षे सिद्धो भवति ।

उपांशु मध्यतो वैश्वदेव्या प्रचरत्याश्रुतप्र-
त्याश्रुते अप्युपांशु भवत उच्चैरितराभ्याम् ।

यदि मध्यतस्तदैव वैश्वदेव्या उपांशुत्वं नाऽऽदावन्ततो वा । तेनाऽऽदावन्ते वाऽपि यागपक्षोऽस्तीति अवगम्यते । अन्यत्र प्रवरसंवादाश्रावणप्रैषेभ्य इति सूत्रा-त्प्राप्तस्याऽऽश्रावणस्योच्चैष्ट्वस्यानेन बाधः । आश्रावणग्रहणमस्मिन्सूत्रे प्रत्याश्रावणोप-लक्षणम् । अपिशब्दात्संप्रैषा अप्युपांशु भवन्तीतिसूचनार्थम् । परप्रत्यायनं तु हस्ताङ्गुलिस्फोटनाद्युपायेन सूत्रकृद्विधानबलादनन्यगतिकत्वाच्चेदं कल्प्यते । इतराभ्यां मैत्रावरुणीबार्हस्पत्याभ्याम् । अनियमशङ्काव्यावृत्त्यर्थमिदं वचनम् । अनूबन्ध्यात्रि-त्वपक्ष एव विकृतिविशेष एव समावेश इत्याहाऽऽपस्तम्बः—ता न सर्वत्राऽऽलभन्ते वाजपेये राजसूये सत्रे सहस्रे सर्ववेदसे वेति । अन्यश्च विशेषोऽस्मिन्पक्षे तत्रैवोक्तः—यः कामयेत सर्वो मे यज्ञः स्यात्सरस इति स एतास्तिस्रोऽनूबन्ध्या आलभेतेति । अनेन तु कामेन सर्वत्राऽऽलम्भः । सरसो वीर्यवान् । प्रस्तरस्यैवाऽऽहरणं बर्हिषः कल्पनात्र । यूपरशनास्वरुहृदयशूलानां प्रयोगाभावः । उत्तरवेदिदेश एव पाशुकाज्यग्रहणम् । अग्नेः नयनाभावात् । पुंलिङ्गशब्देषु स्त्रीलिङ्गेनोहः सर्वमन्त्रेषु । मित्रावरुणाभ्यां गोर्वपाया मेदसोऽनुब्रूहि । मित्रावरुणाभ्यां गोर्वपाया मेदसः प्रेष्येत्यूहः । मित्रावरुणाभ्यां गोः पुरोडाशस्यानुब्रूहि । मित्रावरुणाभ्यां गोः पुरोडाशस्य प्रेष्य । मित्रावरुणाभ्यां गोर्हविषोऽनुब्रूहि । मित्रावरुणाभ्यां गोर्हविषः प्रेष्येति प्रैषाः । गोशब्दानन्तरं सर्वत्र वशाशब्दो वा प्रैषेषु ।

अनूबन्ध्यायाः पशुपुरोडाशं निरु(रू)-
प्य दैविकानि हवीꣳष्यनुनिर्वपति ।

देविकानामिमानि दैविकानि देविकाख्यदेवतासंबन्धीनीत्यर्थः ।

धात्रे पुरोडाशं द्वादशकपालं निर्वपतीति यथा समाम्नातम् ।

धात्रे पुरोडाशं द्वादशकपालं निर्वपत्यनुमत्यै चरु९ राकायै चरु९ सिनीवाल्यै चरुं कुह्वै चरुमित्येतानि पञ्च । पञ्चेति स्पष्टमेवापठदापस्तम्बः । धात्रे पुरोडाशं द्वादश-

कपालं निर्वपत्यनुमत्यै चरु॰ राकायै चरु॰ सिनीवाल्यै चरुं कुह्वै चरुमित्यत्र यथा समाम्नातं तथेत्यर्थः ।

सोमस्थालीष्वेते चरवः पयसि श्रप्यन्ते ।

पात्रे द्वादशकपालः पुरोडाशः । आग्रयणस्थाल्यामनुमत्यै चरुः । उक्थ्यस्थाल्यां राकायै चरुः । आदित्यस्थाल्यां सिनीवाल्यै चरुः । ध्रुवस्थाल्यां कुह्वै चरुरित्यर्थः ।

अनूबन्ध्यायाः पशुपुरोडाशस्य देविका-
हविषां च समान॰ स्विष्टकृदिडम् ।

स्पष्टम् ।

मैत्रावरुणीं पुरोनुवाक्यामन्वाह ।

स्पष्टम् । मैत्रावरुणीं पुरोनुवाक्यामन्वाहेतिवचनं प्रकृतावेकैवानूबन्ध्या त्रित्वप-क्षस्तु अनन्तरप्रदर्शितविकृतिविषय एवेतिज्ञापनार्थम् ।

संप्रैषश्च भवति ।

अग्नीषोमीयविकृतित्वमेव न तु स्त्रीत्वसामान्यमादाय सरस्वतीविकृतित्वमितिज्ञाप-नायेदं सूत्रम् । सौरीर्नव श्वेता वशा अनूबन्ध्या भवन्ति पञ्चदश वेत्यश्वमेधे या अनूबन्ध्यास्तास्वपि अनूबन्ध्यानामातिदेशात्तास्वप्यतोऽतिदेशात्तत्रापि संप्रैषो भवति । एवं सर्वास्वप्यनूबन्ध्यासु ।

अनूयाजान्ते स्वरुं जुहोति हृदयशूलेन चरति यथा पुरस्तात् ।

परिधिप्रहरणोपलक्षणमिदम् ।

मैत्रावरुणीमामिक्षामेकेऽनूबन्ध्यायाः स्थाने समामनन्ति
हविराहुतिप्रभृति ॥ १६ ॥ इडान्ता संतिष्ठते ।

स्थान इत्यनेनानूबन्ध्याकार्यंसंपादनमामिक्षया क्रियतेऽतस्तेऽप्येतस्याऽऽमिक्षाकर्मण इति सूच्यते । कलौ गवालम्भस्य—

अग्निहोत्रं गवालम्भं संन्यासं पलपैतृकम् ।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥

इति गवालम्भनस्य निषेधनादामिक्षायाग एव । स्थानशब्दस्वारस्यादेतस्याः प्रतिनिधित्वं नास्ति । हविराहुतिप्रभृति प्रधानप्रभृतीडान्ता भवतीत्यर्थः । इडयाऽन्तः समाप्तिर्यस्याः सेडान्ता । इडान्तेत्यनेनैव संस्थायां सिद्धायां पुनः संतिष्ठत इतिवचनं प्रतिपत्तिकर्मणाऽपि संस्थाऽऽवश्यकीतिद्योतनार्थम् । तेन वाजिनयागस्य निष्पन्नद्रव्य-प्रतिपत्तिरूपत्वात्कर्तव्यता सिद्धा भवति । तथा च भरद्वाजः—निष्पन्ने द्रव्ये न कर्मलोप इति । आश्वलायनोऽपि आज्यभागप्रभृति वाजिनान्तेति । हविराहुतिप्रभृती-

स्यनेन द्रव्योत्पादकानि यावन्ति कर्माणि तावन्त्येव कर्तव्यानि नाग्न्यन्वाधानादितन्त्रमिति सूच्यते । लौकिकेन दध्नैवाऽऽमिक्षाऽत्र । सायंदोहाभावनात् । खण्डेष्टिरामिक्षा समाख्याता । ततो देविकाहविषा यागः । अग्न्यन्वाधानादिब्राह्मणतर्पणान्तकर्मकलापेन(?) । उभयोस्तन्त्रं तु न भवति । स्वरूपविरोधात् । आपस्तम्बस्त्वत्राप्येतेषामनुनिर्वापमिच्छति तामनु देविकाहवींष्यपि निर्वपतीति । बौधायनोऽत्रानुग्रहमाह—आज्येन देविका यजेदित्याङ्गीगविरिति । भरद्वाजोऽप्याह—आमिक्षां करिष्यन्नाज्येन देविका इति । आज्यपक्ष उपांशुयाजधर्मेण यागः । निर्वापपक्षेऽत्रापि समानं स्विष्टकृदिडम् । यथा चाऽऽपस्तम्ब आमिक्षायागं प्रकृत्य समानं तु स्विष्टकृदिडमिति । इदमपि स्वीकार्यमशक्तौ । एवकाराश्रवणात् ।

सदोहविर्धानानां प्रथमकृतान्ग्रन्थीन्विस्रस्योदीची हविर्धाने बहिर्वेदि निर्वर्त्य ।

सदश्च हविर्धाने च सदोहविर्धानानि तेषां सदोहविर्धानानां हविर्धानयोर्दक्षिणमग्रेणाऽऽहवनीयमुदङ्नीत्वा बहिर्वेदि निर्गमयति अव्यवायार्थम् । प्रथमं कृताः सदसो हविर्धानस्य हविर्धानयोश्च ये ग्रन्थयस्तान्विस्रस्य । एतेन ज्ञायते प्रथमग्रन्थयः प्रज्ञाता भवन्तीति । यं प्रथमं ग्रन्थिं ग्रथ्नीयात्तं न विस्रंसयेदमेहेनाध्वर्युः प्रमीयेत तस्मात्स विस्रस्य इति श्रुतौ दोषश्रवणादावश्यकं ग्रन्थिविस्रंसनम् । अमेहेन मूत्रनिरोधेनेत्यर्थः । उदीची उदगग्रे निर्वर्त्याव्यवायेन निष्काश्य ।

यत्कुसीदमप्रतीत्तमित्याहवनीयाद्वेदिमुपोषति ।

वेदिमुपोषतीत्यत्र स्तृतबर्हिषा वेदेर्दाहेन स्वरूपनाशासंभवाल्लक्षणया तत्स्थं बर्हिर्लक्ष्यते । तेन वेद्यां स्तीर्णस्य बर्हिषो दाहः सिध्यति । न च्छर्दिष्यपि । यदोषधीभिर्वेदिꣳ स्तृणाति यदनुपोष्य प्रयायादिति ब्राह्मणेन स्तीर्णस्य बर्हिष एव दाहविधानात् ।

प्राग्वꣳशे गार्हपत्यात्पत्नी ।

एतस्मादेव सूत्राज्ज्ञायते—उदयनीयेष्टिबर्हिषः प्रहरणं नैव समिष्टयजुर्होमे । अप्रहृतस्योदयनीयेष्टिबर्हिष उपोषणं पत्न्या कार्यमिति । उप प्लुष दाह इति धातुर्दाहेऽर्थे वर्तते । उपशब्दः समीपेऽवस्थानार्थः ।

एतꣳ सधस्थ परि ते ददामीति तिसृभिर्धूममुद्यन्तमनुमन्त्रयते ।

बर्हिर्दाहजन्यं धूममुद्यन्तमुपूर्ध्वं यन्तमनुमन्त्रयत इत्यर्थः ।

विश्वलोप विश्वदावस्य त्वा सञ्जुहोमीत्यञ्जलिना सक्तून्मदाव्ये जुहुयाद्यदि भिक्षमिव चरित्वा मन्यते ।

सक्तुशब्दो यवपिष्टेषु रूढो नित्यं बहुवचनान्तः शब्दस्तत्राभाव्याम् । अत्र भि-

तानामेव यवानां सक्तवो ग्राह्याः । होमे विनियोक्ष्यमाणत्वात् । यदि साध्वसाधु मिश्रमिव यज्ञे चरितवानिति मन्यते तदा प्रदाव्ये वेधुपोषणेऽग्नौ सक्तूँल्लौकिकाञ्जुहुयात् । श्रुतिरपि—यदि मिश्रमिव चरेदञ्जलिना सक्तून्प्रदाव्ये जुहुयादेष वा अग्निर्वैश्वानरो यत्प्रदाव्यः स एवैनं स्वदयतीति । अत्राऽऽपस्तम्बेन विशेष उक्तः—अह्नां विधान्यामित्युक्तमिति । योऽर्वाक्संवत्सरादात्मनः शुभाशुभे जिज्ञासते तस्यायमयज्ञसंयुक्तः कल्पः क्रमप्राप्तो ब्राह्मणस्थः प्रदर्श्यत इत्येतस्याऽऽपस्तम्बसूत्रस्यार्थः । उक्तं ब्राह्मण इति शेषः । तच्च ब्राह्मणम्—अह्नां विधान्यामेकाष्टकायामपूपं चतुःशरावं पक्त्वा प्रातरेतेन कक्षमुपोषेद्यदि दहति पुण्यसमं भवति यदि न दहति पापसममेतेन ह स्म वा ऋषयः पुरा विज्ञानेन दीर्घसत्त्रमुपयन्तीति । तत्रैकाष्टकां स्वयमेव गृह्ये वक्ष्यति—अष्टकां व्याख्यास्यामो माध्याः पौर्णमास्या योऽपरपक्षस्तस्याष्टमीमेकाष्टकेत्याचक्षत इति । अष्टका नाम नित्यः पितृकार्यसमुदायस्तं व्याख्यास्यामः । मघाभिः प्रायेणोपयुज्यते सा माघी पौर्णमासी माघमासस्य पौर्णमासीत्यर्थः । तस्याः समीपे योऽपरपक्षस्तस्याष्टमीमेकाष्टकेत्याचक्षत आचार्याः । एकशब्दः प्रधानवाची । एका प्रधानाऽष्टका । यथैकपुरुष इत्यत्र प्रधानपुरुष उच्यते । किमपेक्ष्य प्राधान्यमिति चेदुच्यते—हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणां याश्चतस्रोऽष्टम्यस्ताः सर्वा इष्टकास्ता अपेक्ष्य । किमर्थमेतद्वचनं तस्याः पूर्वेद्युरुत्तरेद्युश्च कर्मविधानार्थम् । यद्येवं तस्य सप्तम्यामनूराधैरित्येव वक्तव्यम् । एवं तर्हि कालसंयोगादष्टकाशब्दः कर्मणीदमेव चाष्टकादीनां प्राधान्यमिति ज्ञापनार्थम् । किमेतस्य ज्ञापने प्रयोजनं समाख्यासामर्थ्यात्सर्वास्वप्यष्टकास्विच्छातः क्रिया स्यादस्यास्तु प्राधान्यान्नियतता च । एकाष्टकायां दीक्षेरन्निति एकाष्टकायां क्रयः संपद्यत इति च । अत्राप्यस्याः संप्रत्यय इत्येतदर्थमेतस्य एकाष्टकाया एव विशेषणमह्नां विधान्यामिति । सा हि संवत्सरस्याहानि विदधाति प्रकमयति । कथं संवत्सराय दीक्षिष्यमाणा एकाष्टकायां दीक्षेरन्निति श्रुतेः । तस्यां प्रातश्चतुःशरावव्रीहिपिष्टसंमितमपूपं पक्त्वाऽङ्गारसात्कृत्वा तेनारण्ये कक्षं संदहेत्स चेदपूपः प्रदीप्तो दहति कथं तदा पुण्यसमं शुभं भविष्यतीति विद्यात् । विपर्यये त्वशुभमिति । एवमृषयः पुरा परीक्ष्य दीर्घसत्त्रेष्वेव दीक्षयन्तीति ।

पृथगरणीष्वग्नीन्समारोपयते माजिहितं गार्हपत्यं
दक्षिणाग्निं[१] शालामुखीयं गतश्रियस्तृतीयम् ।

गतश्रियस्तृतीयमित्यनेनाऽऽहवनीयाजस्रत्व एवेदमिति बोध्यते । समारोपयत इत्यनेनाऽऽत्मसमारोपोऽप्यत्राभिमतः । आपस्तम्बोक्तिवदुत्तरत्र निर्मथ्येत्यवचनात् ।

१ ग. च "मैन्द्रोप" ।

प्राचीनमुदीचीनं वोदवसाय विहार* साधयित्वोदव-
सानीयामिष्टिं निर्वपत्याग्नेयमष्टाकपालं पञ्चकपालं वा ।

उदवसानार्थेष्टिरुदवसानीया तां निर्वपतीत्यर्थः। अन्वन्वाधानादिब्राह्मणतर्पणान्ते-
यमिष्टिः। अष्टाकपालपक्षः शाखान्तरीयः पञ्चकपालपक्षः स्वशाखागतः ।

अत्र विशेषमाह—

तस्योपांशु सर्वं क्रियत ओत्तमादनूयाजात् ।

तस्याष्टाकपालस्य पञ्चकपालस्य वा। सर्वमित्यनेन तन्त्रसहितस्य सर्वस्य प्रधान-
स्याऽऽश्रावणप्रत्याश्रावणसंप्रैषादिसहितस्योपांशुता विधीयते । परप्रत्यायनं संज्ञया ।
आ, उत्तमादनूयाजात् । अत्राऽऽङ्मर्यादायाम् । तेनोत्तमादनूयाजात्प्रागित्ययमर्थो
भवति। उत्तमानूयाजप्रभृति प्राकृत एव स्वर इत्यर्थात् । अत्राऽऽपस्तम्बो हौत्रे
विशेषमाह—यदि पञ्चकपालो गायत्र्यौ संयाज्ये यद्यष्टाकपालः पङ्क्त्या'विति । दक्षि-
णाविशेषोऽपि तेनोक्तः— अनड्वान्दक्षिणाऽनडुद्दहं वा हिरण्यमिति । आश्वलायने-
नापि पौनराधेयिक्या धर्मा उक्ताः—पौनराधेयिक्यविकृतेति ।

उरु विष्णो विक्रमस्वेति पूर्णाहुतिमेक
उदवसानीयायाः स्थाने समामनन्ति ।

द्वादशगृहीतेन स्रुचं पूरयित्वाऽन्तर्वेद्यूर्ध्वस्तिष्ठन्नित्यापस्तम्बः ।

सा यावद्रात्रौ कियद्रात्रेण वा संतिष्ठते तदैव
सायमग्निहोत्रं जुहुयात्काल एव प्रातर्होमः ।

सेष्टिरुदवसानीया । यावती चासौ रात्रिश्च यावद्रात्रिः । तत्र रात्रिर्द्विविधा
महती, अल्पा च । एतयोरुभयोरपि रात्र्योः कियद्रात्रेण वा संतिष्ठते । कियदित्यनेन
कालानियमः सूच्यते । कियद्रात्रिर्यत्र स कियद्रात्रः कालः। यदा संतिष्ठते तदैव सायम-
ग्निहोत्रमतिपन्नकालमपि जुहुयात्। गौणकालानतिपातात्। प्रातर्होमं स्वागामिनं स्वकाल
एव जुहोति । नन्वस्मिन्काले कः प्रसङ्गः। अस्ति प्रसङ्गः। उदवसानीयान्ते सायंप्रात-
राहुतिरिति श्रुतेः। सूत्रकारमताच्च। यथाऽऽह बौधायनः—सायंप्रातरग्निहोत्रे प्रतिजुहो-
तीति। सूत्रकाराभिप्रायस्तु सायमाहुतिश्रुतिस्तावन्नित्याया एव सायमाहुतेरतीतका-
लाया गौणकालानुज्ञार्था । प्रातराहुतिश्रुतिरपि प्रसङ्गाद्भाविन्याः प्रातराहुतेरनुवा-
दिका नत्वपूर्वाग्निहोत्रविधायिकेति। अत एवोक्तं काले प्रातर्होम इति। केचित्तु अग्नि-
होत्रद्वयमिदं सोमाङ्गं संतिष्ठतेऽग्निष्टोम इत्युत्तरत्र वचनादिति प्राहुः। तथा चोदव-
सानीयं प्रकृत्याऽऽह कात्यायनः—तदन्ते सायमाहुतिः सोमाङ्गं संनिध्यविरोधाभ्यां
नित्या वा प्रातराहुतेरिति श्रुतेरिति । एतेषां मतेऽनारब्धेऽग्निहोत्रेऽपि कर्तव्यमग्निहो-

त्रम्। अनन्तरे काले दशहोत्रादिधर्मेण यावज्जीवसंकल्पेनाऽऽरब्धव्यमिति। जैमिनिनाऽपि उक्तं षष्ठाध्याये सप्तमे पादे दीक्षाकालस्य शिष्टत्वादतिक्रमे नियतानामनुत्कर्षः प्राप्तकालत्वात्। उत्कर्षो वा दीक्षितत्वादविशिष्टं हि कारणमिति। दैवादवभृथोत्कर्षे दीक्षाकालस्य शिष्टत्वादसमाप्तत्वान्नियतानामतिक्रमेऽप्यनुत्कर्षः प्राप्तकालत्वादिति पूर्वसूत्रार्थः। वाशब्दः पूर्वपक्षव्यावर्तकः। दीक्षितत्वाद्दीक्षाया अनुन्मुक्तत्वादुत्कर्ष एव हि यस्मादविशिष्टं पूर्वेण तुल्यमेव कारणमत इत्यर्थो द्वितीयसूत्रस्य। स एव तत्र प्रतिहोमो न विद्यते यथा पूर्वेषाम्। कालप्राधान्याच्च। तत्र दैवादुदवसानीयेष्ट्युत्कर्षे यथा पूर्वेषां यथाऽवभृथेष्टेः पूर्वतना होमास्तेषां प्रतिहोमो न विद्यते तथा दैवादुत्कृष्टाया उदवसानीयाया उत्तरेषामपीति प्रथमसूत्रार्थः। कालप्राधान्यात्। सा यावद्रात्रौ कियद्रात्रेण वा संतिष्ठते तदैव सायमग्निहोत्रं जुहुयादिति कालप्राधान्यादपि प्रतिहोमो न विद्यत इति द्वितीयसूत्रार्थः। अन्यच्च जैमिनिः—प्रतिषेध ऊर्ध्वमवभृथादिष्टेरिति। अवभृथेष्टेरूर्ध्वमिष्टेः प्रकृतिभूतायाः प्रतिषेध इत्यर्थः। अन्यच्च स एवाऽऽह प्रतिहोमाश्चेत्सायमग्निहोत्रप्रभृतीनि हूयेरन्निति। प्रातस्तु षोडशिनीति च। दैवान्मानुषाद्वा विलम्बादुत्तरेद्युरुत्कृष्टा यद्युदवसानीया तदोत्तरस्यैवाह्नः सायं होमः कर्तव्यो न पूर्वस्य। अर्वागुदवसानीयेष्टेरग्निहोत्रेऽनधिकारात्। अयमर्थ एताभ्यां जैमिनिसूत्राभ्यां लभ्यते। श्रुतिरपि—एतया पुनराधेयसंमितयेष्ट्वाऽग्निहोत्रं जुहुयादिति। सर्वप्रायश्चित्तं तु होतव्यम्। उदवसानीयोत्कर्षात्। यत्र तु क्रतुवशादुत्कर्षस्तत्र न प्रायश्चित्तम्। यथाऽतिरात्रे। भारद्वाजस्तत्राऽऽह—सुत्यावदग्निहोत्रप्रत्यग्निहोत्राण्यतिपन्नानि प्रतिजुहुयान्न वा प्रतिजुहुयादिति।

संतिष्ठतेऽग्निष्टोमः ॥ १७ ॥

इति हिरण्यकेशिसूत्रे नवमप्रश्ने षष्ठः पटलः।

---

संतिष्ठतेऽग्निष्टोम इति वचनमग्निहोत्रद्वयस्य सोमाङ्गत्वं वक्तुम्। अर्थः स्पष्टः।

इत्योकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्नियुक्तवाजपेययाजिसर्वतोमुखयाजिद्विसाहस्राग्नियुक्तपौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथदीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसूत्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंतापशामिकायां ज्योत्स्नाख्यायां वृत्तौ नवमप्रश्नस्य षष्ठः पटलः ॥ ६ ॥

---

अथ नवमप्रश्ने सप्तमः पटलः ।

---

उक्थ्यः षोडश्यतिरात्रोऽप्तोर्यामश्चा-
ग्निष्टोमस्य गुणविकारा भवन्ति ।

एवं तावत्सर्वैर्ज्योतिष्टोम इति सूत्रकृत्प्रदर्शितज्योतिष्टोमत्वरूपव्यापकधर्मावच्छिन्न ज्योतिष्टोमावान्तरगताग्निष्टोमत्वरूपव्याप्यधर्मावच्छिन्नाक्रान्ता सर्वकामोऽग्निष्टोम इत्यादिना सूत्रकारेणाग्निष्टोमशब्देन व्यवहृतसर्वैकाहाहीनसत्रमूलप्रकृतिभूताग्निष्टोमसंस्था व्याख्याता । इदानीं संस्थान्तराणि व्याख्यायन्ते । तत्रेदं तावद्वक्तव्यं कियत्योऽस्य संस्था इति । तिस्र इत्येकः पक्षश्चतस्र इत्यपरः पक्षः । तत्र त्रित्वे तावल्लिङ्गानि यद्यग्निष्टोमो जुहोति यद्युक्थ्यः परिधौ निमार्ष्टि यद्यतिरात्रो यजुर्वदन्प्रपद्यत इति यद्यग्निष्टोमः सोमः परस्तात्स्यादुक्थ्यं कुर्वीत यद्युक्थ्यः स्यादतिरात्रं कुर्वीतेति, यावदग्निष्टोमेनोपाप्नोति तावदुपाप्नोति यावदुक्थ्येनोपाप्नोति तावदुपाप्नोति यावदतिरात्रेणोपाप्नोति तावदुपाप्नोतीत्यादि द्रष्टव्यम् । अथ चतुष्ट्वेऽपि नाग्निष्टोमो नोक्थ्यो न षोडशी नातिरात्र इति एतद्वा अग्निष्टोमं प्रथममुपयन्त्यथोक्थ्यमथ षोडशिनमथातिरात्रमिति । तानग्निष्टोमेन नाऽऽप्नोत्तानुक्थ्येन नाऽऽप्नोत्तान्षोडशिना नाऽऽप्नोत्तानतिरात्रेण नाऽऽप्नोदित्यादि । द्रष्टव्यम् । तत्र कैश्चित्कल्पकारैस्त्रित्वकल्प आश्रितः यथा लाट्यायनद्राह्यायणादिभिरुक्तं—स्वतन्त्रस्य ज्योतिष्टोमस्य संस्थाकल्पा अग्निष्टोमुक्थ्यमतिरात्रमित्यादि अन्यैराचार्यैस्तु चतस्र एताः संस्थाः प्रकृत्यधिकारेऽनुक्रान्ता यथाऽऽश्वलायनादिभिः । एवं मतभेदे संप्लवमाने स्वमतेनाऽऽचार्यः प्रकृतिसंस्था दर्शयति उक्थ्यः षोडश्यतिरात्रोऽप्तोर्यामश्चाग्निष्टोमस्य गुणविकारा भवन्तीत्यनेन सूत्रेण । आपस्तम्बेनाप्येवम् । तत्रायमभिप्रायः सूत्रकारस्य—अग्निष्टोम एव तावत्सर्वसोमानां मौलिकी प्रकृतिः । यथा च वक्ष्यति सप्तदशप्रश्ने प्रथमे खण्डे सर्वक्रतूनां प्रकृतिरग्निष्टोम इति । संस्थान्तराणि तु दाक्षायणयज्ञादय इव दर्शपूर्णमासयोस्तस्यैव गुणविकारमात्राणि भवन्ति न तु त्रिकद्रुकादिव क्रत्वन्तराणि अग्निष्टोमो ज्योतिरादेरग्निष्टोमस्य प्रकृतिः । उक्थ्यो मनादेरुक्थ्यस्य । षोडशी च वाजपेयादिषोडशिनः । अतिरात्रो विश्वजिदादेरतिरात्रस्य । अप्तोर्यामः सप्तदशे प्रश्ने द्वादशे खण्डे—अप्तोर्यामेण पशुकामो यस्मात्पशवः प्रप्रेव प्रश्वेरात्तिस्थैकादशिनाः पशवो भवन्तीति । एतस्यैव सत्रात्मकत्वं वक्ष्यति त्रयोदशे प्रश्ने त्रयोदशे खण्डे सत्रप्रकरणे व्याख्यातोऽप्तोर्याम इत्यनेन सूत्रेण । सत्रप्रकरणात्सत्रात्मकत्वमप्येतस्य । नामातिदेशमात्रमत्र । एवं च ये सर्वपृष्ठाः सर्वस्तोमा विश्वजित्प्रकृतेरप्तोर्यामनाम्नो वैकृतातिरात्रविशेष एव । अतो नाप्तोर्यामो

नाम ज्योतिष्टोमः प्रकृतिभूतोऽस्तीति संगिरन्ते ते प्रत्युक्ता भवन्ति । तस्यापीह ज्योतिष्टोमसंस्थाधिकारवचनात्प्रकृत्यधिकाराच्चास्त्येव प्रकृतिभूतत्वम् । भरद्वाजेनाप्यत्र ज्योतिष्टोमं प्रकृत्य पञ्चैताः प्रकृतिसंस्था अग्निष्टोम उक्थ्यः षोडश्यतिरात्रोऽप्तोर्याम इत्युक्त्वा यज्ञपुच्छमभिधायान्तत उपसंहृतं संतिष्ठते ज्योतिष्टोम इति । अतोऽप्यस्त्येव प्रकृतिभूतो ज्योतिष्टोमोऽप्तोर्याम इति । ननु गौतमाद्या आचार्याः सप्त संस्थाः सोमस्योपदिशन्ति अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमयज्ञसंस्था इति । तासु चोत्तराः षडप्याद्यस्याग्निष्टोमस्य गुणविकारा एतत्केन विशेषणात्यग्निष्टोमवाजपेययोरनुपादानमिति चेन्न । प्रकृतिभूतानामेव ज्योतिष्टोमसंस्थानामत्रानुक्रमणस्याभिप्रेतत्वात् । न तु सोमसंस्थामात्रस्याग्निष्टोमगुणविकारमात्रस्य वा । तत्र न तावदत्यग्निष्टोमः कस्यचित्क्रतोः प्रकृतिः । वाजपेयस्तु न प्रकृतिः । नापि ज्योतिष्टोमः सर्वसप्तदशत्वाद्वाजपेयस्य । अतो युक्तमेवानयोरनुपादानम् । तस्मादेवं सिद्धं पञ्चशाखोऽग्निष्टोमो ज्योतिष्टोम एव सर्वसोमानां प्रकृतिरिति । तथा सर्वक्रतूनां प्रकृतिरग्निष्टोम इत्येतदभिप्रायं द्रष्टव्यम् । न चाग्निं व्याख्यास्यामः स उत्तरक्रत्वर्थ इति सूत्रादुत्तरक्रत्वर्थत्वस्याग्निविषये विधानेनार्थादग्निष्टोम उत्तरवेदिसिद्धेः, आपस्तम्बेन परिभाषासूत्रेऽग्निष्टोम उत्तरवेदिरुत्तरेषु क्रतुष्वग्निरिति स्पष्टवचनाच्चोक्थ्यादीनामग्निष्टोमविकारत्वादुक्थ्यादिष्वप्यग्निचित्यानिषेधोऽस्त्विति वाच्यम् । गुणविकृतेन रूपेण तेषामनग्निष्टोमत्वादुत्तरक्रतुत्वाच्च । न चाग्निष्टोम उत्तरवेदिरित्यापस्तम्बसूत्रमपि पञ्चशाखप्रकृत्यभिप्रायमुत्तरेषु क्रतुष्विति तु तद्विकाराभिप्रायमिति वाच्यम् । अन्यत्र साद्यस्केभ्यो वाजपेयात्षोडशिन इति षोडशिपर्युदासानुपपत्तेः । न च षोडशिविकाराद्वाजपेयादिति वाजपेयविशेषणतया षोडशीयोज्य(?) इति वाच्यम् । व्यभिचाराभावेन विशेषणवैयर्थ्यात् । संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवदित्यभियुक्तोक्तेः । न ह्यषोडशिविकारोऽपि वाजपेयोऽस्ति येन तद्व्यवच्छेदाद्विशेषणमर्थवद्भवेत् । किमिदानीमुक्थ्यादिषु लभ्यत एवोत्तरवेदिः । नैवम् । सर्वास्वेव विकृतिषु लभ्यते विकल्पेन । सप्तदशे प्रश्न एकादशे खण्डेऽपचितिकामोऽपचितिभ्यामुभयसामानौ भवतः पक्षिभ्यां साग्निचित्याभ्यामित्यत्र नियमदर्शनात् । अनग्निकान्वा यज्ञक्रतूनाहरेदिति बौधायनोक्तेश्च । तस्मात्सिद्धमुक्थ्यादिष्वपि भवत्येव पक्षेऽग्निचित्येति । उक्थ्यपर्यायैः सह संस्था यस्य स उक्थ्यः । षोडशेन स्तुतेन शस्त्रेण च संस्था यस्य स षोडशी । रात्रिमतीत्य संस्था यस्य सोऽतिरात्रः । यदाप्नोत्तदप्तोर्यामस्याप्तोर्यामत्वमित्युक्तमप्तोर्यामस्य निर्वचनम् । अथवाऽप्तुः सोमः, आग्रयणादप्तुं प्रस्कन्दयतीति बौधायनीये दर्शनात्तस्यातिरिक्तयापनमस्मिन्नित्यप्तोर्याम इति । एतदुदाहृतं बौधायनेन—सोमो वा अयमतिरिच्यमानमनूपायन्तो देवा

अप्तुवन्नप्तोर्वा अथमतिरेचितः को याम इति तदप्तोर्यामस्याप्तोर्यामत्वं तस्मा एतानि स्तोत्राण्यवकल्पयांचक्रुरितीति। नित्यानां कर्मणां संस्थानां च भेदः संस्थाशब्दार्थश्च मत्कृतसंस्काररत्नमालायां मत्कृतश्रौतोपयोग्युपोद्धातप्रकरणे च द्रष्टव्यः।

उक्थ्येन पशुकामो यजेत।

गुणविकारास्ते ते कामास्तेन सत्सु कामेष्वेव भवन्ति नासत्सु कामेषु। गौतमेन तु गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनानि चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणीसंयोगः पञ्च महायज्ञा अष्टकाः पार्वणः श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्था अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टिर्निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्था अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमयज्ञसंस्था इत्येते चत्वारिंशत्संस्कारा अष्टावात्मगुणा दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो माङ्गल्यमकार्पण्यमस्पृहेति यस्यैते चत्वारिंशत्संस्कारा अष्टावात्मगुणाश्च स ब्रह्मणः सायुज्यमाप्नोतीति फलश्रवणात्काम्यता, यो ह्येतान्संस्कारान्न करोति स पापीयान्भवतीति दोषश्रवणान्नित्यताऽप्येषामुक्ता। तेनैतेषां काम्यत्वं नित्यत्वं च।

तस्याग्निष्टोमेन कल्पो व्याख्यातः।

तस्योक्थ्यस्य।

तत्र विशेषमाह—

पञ्चदशछदि सदः।

नियमविधिरयम्।

क्रतुकरणꣳ हुत्वैतेनैव मन्त्रेण मध्यमे
परिधावभ्यन्तरं लेपं निमार्ष्टि।

यमग्ने पृत्सु मर्त्यमितिमन्त्रसाध्यो होमः क्रतुकरणसंज्ञकस्तं हुत्वा। एतेनैव यमग्ने पृत्सु मर्त्यमिति मन्त्रेणैव।

ऐन्द्राग्नमुक्थ्ये द्वितीयꣳ सवनीयमालभते।

द्वितीयवचनात्समभ्युच्चयः सवनीयपश्वोरवगम्यते। उक्थ्याधिकारे पुनरुक्थ्यग्रहणमसमभ्युच्चयपक्षोऽप्यस्तीतिज्ञापनार्थम्। अत एवोक्तमापस्तम्बेन समभ्युच्चयवदेके समामनन्तीति। अयं च शाखान्तरीयः पक्षः। स्वशाखायां तु वाजपेयप्रकरणे श्रुतावेकैकेन पशुनैकैकसंस्था प्रदर्शिता।

तृतीयसवने धाराग्रहकाल आग्रयणं गृहीत्वोक्थ्यं गृह्णाति।

स्पष्टम्।

अत्र विशेषमाह—

अग्निष्टोमचमसानुन्नयꣳस्त्रिभ्यश्चम-
सगणेभ्यो राजानमतिरेचयति ।

अग्निष्टोमचमसोन्नयनकाले त्रिभ्यश्चमसगणेभ्यश्चमसगणत्रयार्थं राजानमतिरेचयति अतिरिक्तं करोति ।

सर्वꣳ राजानमुन्नय माऽतिरीरिचो दशा-
भिः कलशौ मृष्ट्वा न्युब्जेति च लुप्यते ।

चस्त्वर्थेऽत्र ।

अथैतदुपयोगिपरिभाषामारचयति—

एतदग्निष्टोमचमसानाꣳ संप्रैषस्य यो य
उत्तमः सꣳस्थानचमसगणस्तमुन्नयन्नेतत्संप्रेष्यति ।

एतत्सर्वꣳ राजानमुन्नय माऽतिरीरिचो दशाभिः कलशौ मृष्ट्वा न्युब्जेत्येतत्संप्रैषस्य षोडशो यो य उत्तमः संस्थानचमसगणः संस्थासमापनभूतश्चमसगणस्तानुन्नयंस्तत्र वक्तव्य इत्यर्थः । यो य इति वीप्सा सर्वक्रतुसंस्थानचमसगणविषयत्वं बोध-यितुम् ।

अग्निष्टोमचमसैः प्रचर्य त्रिभिरुक्थ्यविग्रहैः प्रचरतो यथा पुरस्तात् ।

यथा पुरस्तादित्यनेन सर्वोऽपि प्रातःसवनिको विधिः प्राप्यते ।

अत्र विशेषमाह—

इन्द्रावरुणाभ्यां त्वेति प्रथमे ग्रहणसादनौ संनमतीन्द्राबृह-
स्पतिभ्यां त्वेति द्वितीय इन्द्राविष्णुभ्यां त्वेति तृतीये ।

स्पष्टम् ।

षोडशिना वीर्यकामः ।

वीर्यं बलम् ।

तस्योक्थ्येन कल्पो व्याख्यातः ।

तस्य षोडशिनः ।

तस्य शुण्ठ्याऽधीलोधकर्ण्या सोमं क्रीणाति ।

अधिकारादेव षोडशिनः प्राप्तौ तस्येतिवचनं काम्यत्वपक्ष एवैतादृशसोमक्रयो न नित्यत्वपक्षे । एतस्माज्ज्ञापकादपि नित्यत्वमप्यवगम्यते । शुण्ठाऽल्पकाया ह्रस्वेति यावत् । अधीलोधकर्णा चक्षुषोरधि उपरि लम्बमानकर्णा कर्णस्योपरि वर्णान्तरं यस्याः इति वा ।

सप्तदशछदि सदः ।

नियमविधिरयम् ।

पात्रसꣳसादनकाल उत्तरेऽꣳसे खा-
दिरं चतुःस्रक्ति षोडशिपात्रं प्रयुनक्ति ।

अग्निष्टोमिकपात्रसंसादनकाले सर्वपात्रासादनानन्तरमागन्तूनामन्ते निवेश इति न्यायेनान्ते यथावकाशं कस्त्वेति मन्त्रेण प्रयुनक्ति । तेषां यान्यनादिष्टवृक्षाणि विकङ्कतस्य तान्यहोमार्थानि तु वारणस्येत्यनेन होमार्थत्वाद्वैकङ्कते प्राप्ते तद्बाधनाय खादिरमिति । उलूखलाकारता प्रकृतितः प्राप्ता सा चतुःस्रक्तीत्यनेन बाध्यते ।

ऋतुकरणꣳ हुत्वैतेनैव मन्त्रेण द्रोणकलशꣳ रराटीं वोपस्पृशति ।

स्पष्टम् ।

ऐन्द्रं वृष्णिꣳ षोडशिनि तृतीयꣳ सवनीयमालभते ।

वृष्णिर्मेषः । षोडशिग्रहणप्रयोजनं तृतीयग्रहणप्रयोजनवत् ।

आतिष्ठ वृत्रहन्नित्येतेषामेकेन षोडशिनं गृह्णाति ।

एतेषां षण्णां मन्त्राणामेकेनान्यतमेन मन्त्रेण ।

पुरस्तादुत्तमादुक्थ्यपर्यायात्पूर्वयोः सवनयोर्द्रोणकलशाद्गृह्णाति सर्वैरुक्थ्यपर्यायैः प्रचरित आग्रयणात्तृतीयसवने ॥ १८ ॥

पूर्वयोः सवनयोः प्रातःसवने माध्यंदिने सवने च । अन्यत्स्पष्टम् ।

यस्मान्न जातः परो अन्यो अस्ति य आविवेश
भुवनानि विश्वा । प्रजापतिः प्रजया संविदान-
स्त्रीणि ज्योतीꣳषि सचते स षोडशी । एष ब्रह्मा
य ऋत्विय इन्द्रो नाम श्रुतो गणे प्र ते महे विदथे
शꣳसिषꣳ हरी । य ऋत्वियः प्र ते वन्वे वनुषो
हर्यतं मदम् । इन्द्रो नाम घृतं न यो हरिभिश्चारु
सेचते । श्रुतो गण आ त्वा विशन्तु हरिवर्पसं गिर
इति सर्वेषु ग्रहणेषु षोडशिनमभिमन्त्रयते ।

सर्वेषु ग्रहणेष्वित्यनेन ग्रहणं ग्रहणं प्रत्यभिमन्त्रणम् ।

अच्छावाकचमसमुख्याꣳश्चमसानुन्नयन्ने-
कस्मै चमसगणाय राजानमतिरेचयति ।

व्याख्यानं गतार्थम् ।

---

१ क. म. सेवते ।

तैः प्रचर्य षोडशिना प्रचरति।

अच्छावाकचमसमुख्यैश्चमसैः प्रचरतीत्येकवचनमध्वर्युमुख्यत्वाभिप्रायेण। बहुवचनपाठस्त्वृजुरेव। ननु तैः प्रचर्य षोडशिना प्रचरतीतिल्यब्बोधितसमानकर्तृकत्वमनुपपन्नम्। अच्छावाकचमसमुख्यानां चमसानां प्रचरणस्य प्रतिप्रस्थातृकर्तृकत्वात्षोडशिप्रचारस्याध्वर्युकर्तृकत्वादिति चेत्सत्यम्। तैः प्रचर्येत्यनन्तरं प्रतिप्रस्थातरि स्थित इति समानकर्तृकत्वनिर्वाहायाध्याहार आवश्यकः। अन्यथा समानकर्तृकत्वमनुपपन्नं स्यात्। बौधायनमतात्तु सवने सवने गृह्णातीति पक्षे प्रथमे त्रयः क्रमात्तत्र तत्र सवने सवनग्रहणार्था उत्तरे तु त्रयस्तैरेव विकल्पन्ते।

समयाविषिते सूर्ये हिरण्येन बर्हिर्भ्यां
च षोडशिनः स्तोत्रमुपाकरोति।

समयाविषित आदित्येऽस्तं गच्छति सति स्तोत्रोपाकरणमित्यर्थः।

श्वेतमश्वं पुरस्ताद्धारयत्यरुणपिशङ्गं कृष्णं वा।

पुरस्ताच्छब्देन समीपप्रदेश उच्यते। उद्गातुरस्य इति शेषः। अरुणो लोहितवर्णः। पिशङ्गो गोरोचनवर्णः। एतदुभयवर्णवानित्यर्थः। अश्वधारणप्रदेशनियमो लाट्यायनद्राह्यायणाभ्यामुक्तः—अश्वः कृष्णः पूर्वस्या[१] सदसो द्वारि प्रत्यङ्मुखस्तिष्ठेदिति धानंजय्योऽपरस्यां प्राङ्मुख इति शाण्डिल्य इति। सर्वथा विहितवर्णाश्वस्याभावस्तद्दोषाय उक्तस्ताभ्यामेव—तदभावे यः कश्चनेति। उक्तवर्णाश्वस्याभावे यः कश्चन नास्मिन्वर्णनियमः। यदि तु सर्वथाऽश्वस्यैवाभावस्तदा प्रतिनिधिरुक्तस्ताभ्यामेव गौर्वाऽजो वाऽश्वाभाव इति। गौरत्र बलीवर्द एव स्त्रीत्वसाजात्यात्।

हिरण्य[२] संप्रदाय[२] स्तुवते।

अध्वर्युणा दत्तं हिरण्यं संप्रदाय संप्रदाय स्वस्वभक्तिगानकाले परस्परं संप्रदाय संप्रदाय स्तुवते। उद्गातार इति शेषः सामर्थ्यात्। लाट्यायनद्राह्यायणाभ्यामपि उक्तम्—यो यः सामाङ्गं ब्रूयात्स हिरण्यं धारयेदुद्गाता निधनमुपयन्तु सर्वे वाऽभिमृशेयुरिति।

हरिवच्छस्त्रम्।

भवतीति शेषः। हरिपदकसमुदायघटितं शस्त्रं भवतीत्यर्थः।

उपरिष्टात्स्तोत्रियानुरूपाभ्यामोथामोद इव मदेमदामोद इवोमथेति व्यत्यासं प्रतिगृणाति।

यासूद्गातृभिर्गानं कृतं ता ऋचः स्तोत्रिया उच्यन्ते। तदुत्तरभूता ऋचोऽनुरूपा उच्यन्ते। एताभ्य उभयीभ्य ऋग्भ्योऽनन्तरमोथामोद इव मदेमदामोद इवोमथेति।

---

१ ङ. ज. झ. ञ. °यन्त्सद°। २ क. ग. च. ठ. °दाय्य[?]।

आ त्वा वहन्तु हरय इत्यारभ्यावसानप्रणवक्रमेण व्यत्यासमवसान ओथामोद इव मद इति प्रणवे मोदामोद इवोमथेति एवं क्रमेणानुष्टुब्भ्यः । अयमर्थविरनुष्टुप्सु सिद्धः प्रतिगर इति सूत्राल्लभ्यते ।

अनुष्टुप्सु सिद्धः प्रतिगरः ।

प्रप्रवस्त्रिष्टुभमिषमित्यनुष्टुभ आरभ्य प्रसिद्धः प्रतिगर ओथामोद इव, ओ३थामोद इवेति प्रतिगर इत्यर्थः । एकवचनं जात्यभिप्रायं प्रतिगर इति ।

शस्त्रं प्रतिगीर्य ग्रहमादत्ते चमसाꣳश्चमसाध्वर्यव उक्थशा यज सोमानामिति संप्रेष्यति ॥ १९ ॥

शस्त्रं प्रतिगीर्येति वचनं दर्शितप्रयोजनम् । अव्यवधानार्थता वाऽप्यत्र । अदृष्टार्थताऽप्यत्र सूत्रपाठस्य ।

इन्द्राधिपतेऽधिपतिस्त्वं देवानामस्यधिपतिं मामायुष्मन्तं वर्चस्वन्तं मनुष्येषु कुर्विति षोडशिनं जुहोति ।

वषट्कृतेऽनेन मन्त्रेण जुहोति । तूष्णीमेव होमोऽनुवषट्कारे ।

इन्द्रश्च सम्राड्वरुणश्च राजा तौ ते भक्षं चक्रतुरग्र एतं तयोरनुभक्षं भक्षयामि वाग्जुषाणा सोमस्य तृप्यत्विति ग्रहस्य भक्षयति ।

ग्रहस्य षोडशिनो ग्रहस्य । ग्रहस्येति षष्ठी द्वितीयार्थे । होत्रा वषट्कारनिमित्तकृतभक्षं होमाभिषवनिमित्तं षोडशिनं ग्रहं भक्षयतीत्यर्थः ।

आदित्यवद्गणेन चमसानाम् ।

षोडशिनस्त्विन्द्रश्च सम्राडित्येव नित्यं भक्षमन्त्रः प्राकृतं भक्षणमन्त्रं बाधित्वा । चमसांस्तु प्राकृतैरेव मन्त्रैर्भक्षयन्ति भक्षेहीत्यादिभिर्यजमानादयः ।

अनुष्टुप्छन्दस इति भक्षमन्त्रे संनमति ।

अनुष्टुप्छन्दस इति शब्दं जगतीछन्दस इत्येतस्य स्थाने योजयतीत्यर्थः । यथाऽऽदित्यवद्गणस्य सोमदेवते मतिविदस्तृतीयस्य सवनस्यानुष्टुप्छन्दस इन्द्रपीतस्येति मन्त्रो भवति ।

अतिरात्रेण ब्रह्मवर्चसकामः ।

स्पष्टम् ।

तस्य षोडशिना कल्पो व्याख्यातः ।

तस्यातिरात्रस्य ।

एकविंशतिछादि सदः ।

नियमार्थमिदम् ।

न क्रतुकरणं जुहोति न द्रोणकलशं रराटीं वोपस्पृश-
त्येतदेव यजुर्वेदन्हविर्धाने प्रपद्यत एतावान्क्रतुकरणः ।

एतावान्यजुर्वेदन्हविर्धानप्रपदनमेवेत्यर्थः । होम उपस्पर्शनं चेत्येतदुभयरूपाऽत्र न बाह्या क्रियेत्यर्थः । यथोक्थ्ये समुच्चयस्तथाऽत्र समुच्चयव्यावृत्तिरनेन क्रियते ।

सारस्वतीं मेषीमतिरात्रे चतुर्थीं
सवनीयामालभते मेषमित्येकेषाम् ।

सारस्वतः प्रचरणकल्पोऽत्र, ऐन्द्रे सारस्वत्यां च दार्शपौर्णमासिकः प्रचरणकल्प इति सूत्रात् । सर्वे यजप्रैषाः प्रधानेषु मैत्रावरुणव्यापाराभाव इत्यर्थः ।

षोडशिनश्चमसानुन्नयंस्त्रयोदशभ्यश्च-
मसगणेभ्यो राजानमतिरेचयति ।

षोडशिनः षोडशसंबन्धींश्चमसानुन्नयन्पर्यायत्रयं मिलित्वा द्वादश चमसगणा आश्विनसंबन्धी त्रयोदशश्चमसगण एवं त्रयोदश चमसगणास्तेभ्यस्तदर्थं राजानमतिरेचयति अतिरिक्तं करोति षोडशिनश्चमसानुन्नयन्निति पूर्वसूत्रे च नित्यवदनुवादान्नित्यः षोडशी प्रदर्श्यते । पूर्वं तु काम्यतयोक्तः कथमिदमुभयं घटिष्यत इति चेत् । नात्र किंचिद्दुर्घटम् । दधिग्रहवन्नित्यस्यापि काम्यत्वाविरोधात् । केचित्तु पुनरत्र विरोधाच्छास्त्रान्तरदर्शनाच्च षोडशिनो वैकल्पिकत्वमातस्थिरे ।

तैः प्रचर्य रात्रिपर्यायैः प्रचरति ।

ननु तैः प्रचर्येत्यत्र समानकर्तृकत्वमनुपपन्नं षोडशिप्रचारस्याध्वर्युमात्रकर्तृकत्वाद्रात्रिपर्यायाणामुभयकर्तृकत्वादिति चेत्सत्यम् । स्वसूत्रे सर्वेषां पर्यायाणामप्यध्वर्युकर्तृकताया एवोक्तत्वेन समानकर्तृकत्वानुपपत्त्यभावात् । उभयकर्तृकत्वे हि समानकर्तृकत्वानुपपत्तिः । सूत्र उत्तरयोः पर्याययोः प्रतिप्रस्थातुर्विधानाभावान्नास्ति सा ।

उपयामगृहीतोऽसीन्द्राय त्वाऽपि शर्व-
रायेति मुख्यं मुख्यं चमसमुन्नयति ।

वीप्सा सर्वचमसगणार्था । उन्नेतेति शेषः सामर्थ्यात् ।

स्तुतशस्त्रे भवतः ।

स्पष्टम् ।

१ ब. 'नरेतद्विरो' ।

होतृचमसमुख्यान्प्रथमानुन्नयति मैत्रावरुणचमसमुख्यान्द्वितीयान्ब्राह्मणाच्छꣳसिचमसमुख्याꣳस्तृतीयानच्छावाकचमसमुख्याꣳश्चतुर्थान् ।

प्रथमान्प्रथमगणान् । एवं द्वितीयतृतीयचतुर्थगणान् ।

स प्रथमो रात्रिपर्यायः ।

रात्रिसंबन्धी पर्यायः । आवर्त्यानि स्तुतशस्त्राणि पर्यायशब्देनोच्यन्ते ।

एवं विहितो द्वितीयस्तृतीयश्च रात्रिपर्यायः ।

स्पष्टम् ।

तैः प्रचर्याऽऽश्विनस्य पात्रसꣳसादनप्रभृतीनि कर्माणि प्रतिपद्यत आश्विनं द्विकपालं निर्वपति ।

अत्रापि समानकर्तृकत्वान्यथानुपपत्त्या प्रतिप्रस्थातुर्वचनाभावाच्चाऽऽश्विनपात्रसंसादनादिकमध्वर्योरेव । पात्राणि कपालद्वयशूर्पकृष्णाजिनोलूखलमुसलदृषदुपलपात्रीमेक्षणात्मकानि पात्राणि । द्वंद्वसंपत्तिस्त्वित्थं कपालाभ्यां सह द्वंद्वत्वार्थं तूष्णं शूर्पकृष्णाजिने द्वंद्वम् । उलूखलमुसले द्वंद्वं दृषदुपले द्वंद्वं [1]कुटरुणा सह द्वंद्वत्वार्थं तूष्णं पात्रीमेक्षणे द्वंद्वं मदन्तीपात्रेण सह द्वंद्वत्वार्थं तूष्णं सोमार्थाज्यस्थाल्याः सत्त्वात्सैवाऽऽज्यस्थाली तदेव चाऽऽज्यम् । संयवनरूपप्रयोजनसत्त्वात्प्रणीताप्रणयनं कर्तव्यमेव । प्राशित्रहरणेडापात्रचतुर्धाकरणपिष्टलेपपात्रफलीकरणपात्राणि न सन्ति अकृत्स्नत्वात्प्रयोजनाभावाच्च । समन्त्रं निर्वापः पवित्रकरणादिनिर्वपणकालेऽश्विभ्यां जुष्टं निर्वपामीति । अश्विनौ हव्यꣳ रक्षेथां वो जुष्टं प्रोक्षाम्यश्विभ्याम् । पात्रप्रोक्षणादि यवाग्रयणोत्तरमेतदनुष्ठाने यवमय एव पुरोडाशः । व्रीहिमयं पुरोडाशं निर्वपतीत्येतादृशवचनस्यात्राभावात् । त्रिष्फलीकरणान्ते मदन्तीरधिश्रित्य कपालद्वयमुपदधाति आद्याभ्यां मन्त्राभ्यामाप्यनिनयनान्ते ।

तमासाद्य ।

तमाश्विनं पुरोडाशमुद्वासनविधिना वेद्यां प्रियेण नाम्ना प्रियꣳ सद आसीदेत्यासाद्य । त्र्यक्षरनामत्वादैन्द्राग्नविकारः । अत एव तूष्णीमभिघारणम् ।

होतृचमसमुख्यान्संधिचमसानुन्नयति ।

अहोरात्रयोः संधौ जायन्त इति संधिचमसास्तानुन्नयति उभेतैव सामर्थ्यात् ।

स्तुतशस्त्रे भवतः ॥ २० ॥

स्पष्टम् ।

---

१ ग. च. °त्विन्युद्वास्य । स्य° ।

त्रिवृद्राथन्तरꣳ संधिस्तोत्रम् ।

त्रिवृच्छब्देन नवसंख्योच्यते । राथंतरमिति स्वार्थेऽण्प्रत्ययः । नवस्वृक्षु रथंतरे गातव्यमुद्गातृभिरित्यर्थः ।

आश्विनꣳ शस्त्रम् ।

अश्विनौ देवता यस्य तदाश्विनम् । अश्विदेवताकं शस्त्रं होता शंसतीत्यर्थः । तच्च परःसहस्रमित्यापस्तम्बाश्वलायनादयः ।

उदित आदित्य आश्विनं परिधाय होतृचम-
समध्वर्युरादत्ते पुरोडाशं प्रतिप्रस्थाता च ।

उदिते सौर्याणि प्रतिपद्यत इत्याश्वलायनः । आश्विनं परिधायाऽऽश्विनशस्त्रस्य परिधानोत्तरं होतृचमसमध्वर्युरादत्ते पुरोडाशमाश्विनं पुरोडाशं प्रतिप्रस्थाता । अत्र चस्त्वर्थे । प्रतिप्रस्थाता चेत्युत्तरत्र प्रतिप्रस्थातृविधानेनाध्वर्योः प्राप्तेरर्थात्सिद्धा-वत्र वचनं पक्षे पर्यायत्रये सर्वपर्यायसंबन्ध्यन्तिमगणद्वयसंबन्धिस्तोत्रशस्त्रोपाकर-णादाश्विननिर्वापादिसादनात्प्राक्तनकर्मणि च प्रतिप्रस्थातृकर्तृकताऽप्यस्तीतिज्ञापना-र्थम् । तेनाऽऽपस्तम्बबौधायनभरद्वाजसूत्रैः सहाविरोधः सिद्धो भवति । परिधायेत्यत्रा-न्तर्भावितणिजर्थो विवक्षणीयः समानकर्तृकत्वनिर्वाहाय । अत्रैव प्रतिप्रस्थातृविधाना-त्पूर्वत्र प्रतिप्रस्थातुर्व्यापारो नैवास्तीत्यवगम्यते । तेन पक्षद्वयमत्र सिद्धं भवति ।

आददते चमसांश्चमसाध्वर्यवः ।

होतृचमसव्यतिरिक्तांश्चमसांस्तत्तच्चमसाध्वर्यव आददते होतृचमसस्याध्वर्युणाऽऽ-त्तत्वात् । तस्य चमसाध्वर्युर्विरमति । गतम् ।

अश्विभ्यां तिरोअह्नियानाꣳ सोमानामनुब्रूह्यश्विभ्यां
तिरोअह्नियान्सोमान्प्रस्थितान्प्रेष्येति संप्रेष्यति ।

संधिना तिरोहितेनाह्ना तायन्त इति तिरोअह्नियाः । इदं च सोमविशेषणम् ।

सह सोमैः पुरोडाशं प्रतिप्रस्थाता सर्वहुतं जुहोति ।

सर्वहुतं कृत्स्नम् । जुहूपभृतावादाय प्रत्याक्रम्येत्यादि सर्वं वर्तते । अपर्यावर्तनादयो धर्मा नात्र भवन्ति । एककपालत्वाभावात् । वाचनिकं कृत्स्नावदानम् ।

पङ्क्तिच्छन्दस इति भक्षमन्त्रꣳ संनमति ।

आदित्यवद्गणस्य सोमदेवते मतिविदस्तृतीयस्य सवनस्य पङ्क्तिच्छन्दस इन्द्रपी-तस्येति मन्त्रे संनाम ऊहः कार्य इत्यर्थः ।

---

१ च. °ता चेत्यु° । २ च. °णा गृहीतत्वा° ।

अप्तोर्यामेण पशुकामः ।

पशवो गवाश्वादयः ।

तस्यातिरात्रेण कल्पो व्याख्यातः ।

तस्याप्तोर्यामस्य कल्पः प्रकारो व्याख्यात उक्तः ।

संधिचमसानुन्नयꣳश्चतुर्भ्यश्चमसगणेभ्यो राजानमतिरेचयति ।

गतार्थम् ।

चत्वारश्चमसगणाः स्तुतशस्त्रवन्तो होतुर्मैत्रावरुणस्य ब्राह्मणाच्छꣳसिनोऽच्छावाकस्य च ।

चतुर्भ्यश्चमसगणेभ्यो राजानमतिरेचयतीत्येतावतैव गणचतुष्टे सिद्धे चत्वारश्चमसगणाः स्तुतशस्त्रवन्तो होतुर्मैत्रावरुणस्य ब्राह्मणाच्छꣳसिनोऽच्छावाकस्य चेतिवचनं राजातिरेककाले चत्वारश्चमसगणाः स्तुतशस्त्रवन्त एको गणो होतुर्द्वितीयो मैत्रावरुणस्य तृतीयो ब्राह्मणाच्छंसिनश्चतुर्थोऽच्छावाकस्येतिस्मरणावश्यकत्वार्थम् । अन्यस्य प्रयोजनस्याभावात् ।

तेषाꣳ संधिचमसैः प्रचरणकल्पो व्याख्यातः ।

स्पष्टम् । अत्राऽऽपस्तम्बेन विशेष उक्तः—आग्नेयान्प्रथमानुन्नयत्यैन्द्रान्द्वितीयान्वैश्वदेवाꣳस्तृतीयान्वैष्णवाꣳश्चतुर्थानिति । चमसगणानामेतानि विशेषणानि । तानाग्निं त्रिवृता स्तोमेन नाऽऽग्नेरित्याद्यर्थवादोक्ता अग्न्यादय एव तस्य तस्य चमसगणस्य देवता इति भावः । अन्योऽपि विशेषस्तेनैवोक्तः—तेषाꣳ संधिचमसवत्प्रचरणकल्प इत्येक इति । अथवा संधिचमसवदेवाऽऽश्विनान्येव सर्वेषां स्तुतशस्त्राणि भवन्ति । संधिचमसविकारत्वादुत्तरेषां गणानामिति भावः । तदुक्तं बौधायनेन—तदु वा आहुः सर्वाण्येवाऽऽश्विनानि स्तुतशस्त्राणि स्युः परारात्रमतिरिच्यते यत्सर्वं तदाश्विनमिति चैकमथापरं त्रिवृत्पञ्चदशं सप्तदशमेकविंशमथैतेषां देवता अग्निरिन्द्रो विश्वे देवा विष्णुरितीति । भरद्वाजश्चाऽऽह—तत्र चत्वारि स्तोत्राणि शस्त्राण्याश्विनानि सयाज्यान्याम्नातानि भवन्तीति । आश्वलायनेनापि शस्त्रसूक्तानि सयाज्यान्याश्विनान्येवोक्तानि स्तोत्रियानुरूपास्त्वाग्नेय्यादयः कृता यथोभयमनुगृहीतं स्यादिति । तत्र संधिचमसवत्कल्पोऽश्विभ्याꣳ सोमानामनुब्रूह्यश्विभ्याꣳ सोमानां प्रेष्येति संप्रैषौ नन्वथशायज सोमानामिति । नच तिरोअह्नियानामिति भवति संधितिरोधानाभावादेषां सोमानामिति द्रष्टव्यम् ।

अतिच्छन्दाश्छन्दस इति भक्षमन्त्रꣳ संनमति ।

आदित्यवद्गणस्य सोमदेवते मतिविदस्तृतीयस्य सवनस्यातिच्छन्दाश्छन्द इन्द्रपीतस्येति मन्त्र ऊहः कर्तव्य इत्यर्थः ।

अग्नीदौपयजानङ्गारानाहरेत्येतत्प्रभृतीनि पाशुकानि कर्माणि सर्वासु सꣳस्थासु समानानि क्रियन्त आ प्रातरग्निहोत्रात् ॥ २१ ॥

इति हिरण्यकेशिसूत्रे नवमप्रश्ने सप्तमः पटलः ।

---

अग्नीदौपयजानङ्गारानाहरेत्येतदादीनि पशुसंबन्धिकर्माणि प्रातरग्निहोत्रपर्यन्तानि सर्वासु संस्थासु समानानि क्रियन्ते भवन्तीत्यर्थः । प्रातरग्निहोत्रस्याप्यङ्गत्वे इदमपि लिङ्गम् ।

इत्योकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्नियुक्तवाजपेययाजिसर्वतोमुखयाजिद्विसाहस्राग्नियुक्तपौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथदीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसूत्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंतापशामिकायां ज्योत्स्नाख्यायां वृत्तौ नवमप्रश्नस्य सप्तमः पटलः ॥ ७ ॥

---

अथ नवमप्रश्नेऽष्टमः पटलः ।

---

क्रतुपशव ऐकादशिनाश्च विकल्पन्ते ।

एवं सर्वसोमप्रकृतिभूता अग्निष्टोमादिसंस्थारूपा ज्योतिष्टोमा व्याख्याताः । इदानीं सर्वपशुगणप्रकृतिभूता ऐकादशिना व्याख्यायन्ते । एकादशास्यां पशव इत्येकादशिनीज्या तत्र भवा ऐकादशिनाः । के पुनस्ते, आग्नेयः कृष्णग्रीवः सारस्वती मेषी बभ्रुः सौम्यः पौष्णः श्यामः शितिपृष्ठो बार्हस्पत्यः शिल्पो वैश्वदेव ऐन्द्रोऽरुणो मारुतः कल्माष ऐन्द्राग्नः सꣳहितोऽधोरामः सावित्रो वारुणः पेत्व इत्यनुवाक उपात्ताः । क्रतुपशवस्तु प्रागेव तत्तत्संस्थासु दर्शिताः । उभये चैते प्रकृतावेव पृथक्शाखास्वाम्नातास्तुल्यार्थत्वाद्विकल्पन्ते ।

तेषाꣳ समवाये विभवन्ति तन्त्रमङ्गान्यविभवन्ति प्रत्यक्षार्थानि प्रतिसंस्कारमभ्यावर्तन्ते ।

तेषामैकादशिनानां समवाये सह प्रयोगे यान्यङ्गानि अदृष्टार्थानि सकृत्कृतान्येव सर्वेषामुपकर्तुं प्रभवन्ति तान्यङ्गानि तन्त्रं भवन्ति सकृदेव क्रियन्ते यथाऽऽरादुपकारकाणि प्रयाजादीनि । अविभवन्ति तन्त्रासंभवीनि यानि प्रत्यक्षं दृष्टोऽर्थः प्रयोजनं येषां तानि प्रत्यक्षार्थानि प्रत्यक्षोपकारकसंनिपातीनि तान्यावर्तन्ते । आवर्तमानानि च तानि संस्कारं संस्कारमभ्यावर्तन्ते । एतावता किमुक्तं भवति पदार्थानुसमयेनैकैकः

संस्कारः सर्वेषां कार्यः, न तु काण्डानुसमयेनैकैक इत्यर्थः । तद्यथा सर्वानुपाकृत्य सर्वान्नियुनक्ति ततः सर्वान्प्रोक्षतीत्यादिप्रोक्षणस्यादृष्टार्थत्वे(त्व) संभवे तन्त्रमपि क्रमस्तेषां यः पशूनां क्रमः स एवोपाकरणनियोजनादीनां क्रम इत्यर्थसिद्धम् । स्पष्टमुक्तमापस्तम्बेन—यथाचोदितꣳ संस्कारा इति ।

यथार्थमूहः ।

विकृतौ यथार्थमूह इति परिभाषणात्प्रकृतावूहनिवृत्तिं मा शङ्कीति पुनरूहवचनम् । तेन पशुभिरेहि पशुषु संवदस्व पशवो मायूनक्षतेत्याद्यूह्यत एव ।

यूपाहुतिꣳ हुत्वाऽग्निष्ठप्रथमानेकादश यूपानुपशयपात्नीवतौ च च्छिनत्ति ।

पुनर्यूपाहुतिवचनाद्दीक्षितस्यापि हूयते यूपाहुतिर्निषेधे सत्यपि । सा चैकैवाऽऽरादुपकारित्वादुपशयस्यापि ।

एकयूपेन विकल्पते[1] ।

एकयूपेनेयं यूपैकादशिनी प्रकृतिविकृतिसाधारण्येन विकल्पते । यूपसंस्कारविषय आपस्तम्बः—सर्वेषाꣳ शकलाहरणाञ्जनहोमा इति । उपशयपात्नीवतौ च च्छिनत्तीत्युक्तं तत्र च्छेदनार्था धर्मा आज्यशेषꣳ स्रुवं चाऽऽदत्त इत्यादयोऽत्यन्यानगामित्याद्यश्चाच्छेदनान्ता एकैकस्य यूपस्याऽऽवर्तन्त । विभवन्ति तन्त्रमङ्गान्यविभवन्ति प्रत्यक्षार्थानि प्रतिसंस्कारमभ्यावर्तन्त इति परिभाषासूत्रात् । मानं तक्षणं चैकैकस्य सर्वेषां प्रथमशकलपाताहरणमवटार्थत्वान्नोपशयस्यावटाभावात्तस्य सर्वत्र स्थाण्वाहुतिः । स्पष्टमप्येतदुक्तमापस्तम्बेन—सर्वेषाꣳ शकलाहरणाञ्जनहोमा इति । शकलस्यावटसंस्कारार्थत्वादनवटस्योपशयस्य न शकल उपशयस्यावटनिक्षेपणाभावात्सर्वस्यैव तक्षणं नोपरार्थमवशेषणमित्यर्थसिद्धमिति सूत्रकृता नोक्तम् । आपस्तम्बेन स्पष्टमेतदुक्तं सर्वमुपशयं तक्षतीति । उपशयशब्दार्थस्तु तत्तद्यूपस्योप समीपे शेत एव नावटं स्थास्यत इति । पात्नीवतमपि तथैव च्छिनत्ति । तस्यास्त्येवोपरः । अधोनाभिमित्यग्रे वक्ष्यमाणत्वादधोनाभिसंमितो यथा भविष्यति तावत्परिमाणं छिनत्ति । अचषालमित्यग्रे वक्ष्यमाणत्वाच्चषालरहितः ।

दशरथाक्षामेकादशोपराꣳ रज्जुं मीत्वा तस्याश्चतुर्विꣳशेन भागेन वेदिं विमिमीते प्रक्रमस्थानीया भवति ।

वेदिमानकाले चतुरधिकशताङ्गुलां रज्जुं दशकृत्वोऽभ्यस्तां कृत्वैकादशोपरां रज्जुं तस्यामुपसमस्यति यावति देश एकादशयूपमूलानि स्थास्यन्ति तावती रज्जुरेकादशो-

---

१ क. ज. झ. म. विकल्पन्ते ।

परा दशरथाक्षा, एकादशोपरमितायास्तस्याश्चतुर्विंशो भागः पञ्चतिलोनैकोनपञ्चाशदङ्गुलात्मकस्तत्प्रमाणेन दण्डेन वेदिं विमिमीत इत्यर्थः। इयं चतुर्विंशभागसंमिता रज्जुः प्रक्रमस्थानीया भवति। इयमेव रज्जुरत्र प्रक्रमो भवति न तु द्विपदस्त्रिपदो वा प्रक्रम इतिशुल्बसूत्रोक्तोऽत्रेत्यर्थः।

अग्निष्ठं द्वाभ्याꣳ रशनाभ्यां परिवीयैकादशिनीरशना अग्निष्ठे परिवीय वासयति।

अग्निसमीपे तिष्ठतीत्यग्निष्ठस्तं संमाय तं द्वाभ्यां रशनाभ्यां युगपत्परिव्ययति। तत्र रशनादाने द्विवद्ूहः। परिवीरसीति नोह्यते यूपाभिधानात्। ततोऽन्या एकादशिनीरशना एकादशीनीसंबन्धिरशना एकादशिनीरशना अवशिष्टा दशाग्निष्ठे परिवीय परिवेष्ट्य वासयति। अवशिष्टा एकादशिनीरशना अग्निष्ठ एव यावत्पर्यन्तं यथा यथाऽऽसां विनियोगस्तावत्पर्यन्तं तदहरेव परिवेष्टिता एव स्थापिता भवन्तीत्यर्थः

श्वोभूत आश्विनं गृहीत्वा यूपान्संमिनोति।

गतम्।

पूर्वेद्युः संमानमेके समामनन्ति।

पूर्वेद्युरग्निष्ठेन सहैवोपस्थापयतीत्येक आचार्या वदन्तीत्यर्थः। नास्मिन्पक्षेऽग्निष्ठे रशना वासयति। परिवीता एव तु यूपास्तिष्ठन्ति। अन्यथाऽञ्जनाद्यपरिव्ययणाद्यजमानस्य यूपानुत्सर्गविरोधात्।

तन्त्रमभ्रेरादानं परिलेखनोऽभ्यावर्तते।

विभवन्ति तन्त्रमङ्गानीत्युक्तस्यैव न्यायस्य दर्शनार्थमिदं वचनम्। परिलेखनो विधिरभ्यावर्तते। अविभवन्ति प्रत्यक्षार्थान्यभ्यावर्तन्त इत्यस्य न्यायस्य दर्शनार्थमिदं वचनम्।

परिलेखने क्रमविशेषमाह—

दक्षिणमग्निष्ठात्परिलिख्योत्तरं परिलिखत्येवं व्यत्यासमुदगपवर्गान्।

उदङ्न्यायानीतिपरिभाषाप्राप्तोदगपवर्गत्वबाधनायायं क्रमविशेषः। अग्निष्ठायूपावटाद्दक्षिणं यूपावटं परिलिख्योत्तरं यूपावटं परिलिखति। ततो दक्षिणयूपावटाद्दक्षिणं यूपावटं तत उत्तरयूपावटादुत्तरं यूपावटं ततस्ततोऽपि दक्षिणं ततस्ततोऽप्युत्तरम्। एवं रीत्या यावद्दश यूपावटाः स्युस्तावतः पञ्च दक्षिणतः पञ्चोत्तरतः परिलिखति। उदगपवर्गवचनं दक्षिणस्य कृत्वोत्तरस्य क्रिययोदगपवर्गान्संमिनोति न तूपक्रमानुसारेण दक्षिणापवर्गानिति भावः।

रथाक्षमात्राणि यूपान्तरालानि भवन्ति ।

रथाक्षश्चतुरधिकशताङ्गुलः । तिर्यगक्षश्चतुःशतमिति शुल्बसूत्रात् । चतुःशतं चतुरधिकशतं चतुःशतम् । चतुरधिकशताङ्गुलो रथाक्ष इत्यर्थो भवति ।

वेदिसंमितां वा मिनोति ।

यावत्प्रमाणा वेदिश्चतुर्विंशतिः पुरस्तात्तिरश्चीति प्राकृतप्रमाणसिद्धा वेदिस्तस्यामेवैकादश यूपावटान्परिलिखति न तु दशरथाक्षामेकादशोपरा१ रज्जुं मीत्वा तस्याश्चतुर्विंशेन भागेन वेदिं विमिमीते प्रक्रमस्थानीया भवतीत्येवंप्रमाणां वेदिं मीत्वा तस्यामेकादश यूपावटान्परिलिखतीति विधिर्भवति ।

समानजातीयेनैकैकमनुसमेति कृत्स्नमेकैकमाञ्जनप्रभृति द्विरशनमपवर्जयति ।

एकविधिविहितमेकप्रकारं कर्मैका कर्मव्यक्तिः समानार्थसंबन्धिनी क्रियमाणप्रकारत्वात्समानजातीया व्यक्तिर्न तु सैव व्यक्तिः । नहि पूर्वपदार्थे कृतानष्टोत्तरत्र संबद्धा कर्तुं शक्या तस्माद्व्यक्तिभेदे जातिरवश्यं वाच्या । तस्या अभिव्यञ्जकं तु तत्तद्विधिविहितत्वमात्रम् । तेन संस्कार्येषु पदार्थेषु मध्य एकमेकमेव पदार्थमनुक्रमेण सजातीयेनैकेनैककर्मणाऽनुसमेत्यनन्तरं तथैव विजातीयेनापीति । समेति संबध्नाति । सोऽयं पदार्थानुसमय इति व्यपदिश्यते क्रमविशेषः । तत्रैवं कर्मक्रमः परिलेखनक्रमेणैवावटखननयूपप्रक्षालनप्रोक्षणाद्येकैकस्य करोति । ततः प्रोक्षणीशेषनिनयनादिशकलाभिहोमान्तमप्येकैकस्य करोति । अवटसंस्कारार्थत्वेनैककर्मत्वात् । कृत्स्नं समुदायीभूतं कर्माञ्जनादि परिव्ययणान्तमपि कर्म काण्डानुसमयेनैकैकस्य करोति । मध्ये यूपोत्सर्गविरोधाद्यजमानस्य व्यक्तवचनाच्चेत्यभिप्रेत्यानेन काण्डानुसमयमाह—कृत्स्नमेकैकमित्यादिनाऽपवर्जयतीत्यन्तेन सूत्रेण । आञ्जनप्रभृतियूपाञ्जनप्रभृति द्विरशनं द्वाभ्यां द्वाभ्यां रशनाभ्यां परिव्ययतीत्यन्तेन स्थविमद्र्णीयासि प्रवयतीति विधिनाऽपवर्जयति । अपवर्गः समाप्तिस्तं गमयतीत्यर्थः । मीमांसकाश्चाऽऽहुः—वचनात्तु परिव्ययणान्तमञ्जनादीति । तत्रोपशयस्य निखननाभावादवटसंस्कारा निवर्तन्ते । पात्नीवतस्य तु सर्वेऽप्युत्तरत्र भविष्यन्ति ।

प्रतियूपं स्वरवः ।

यूपः स्वरोः प्रयोजको न तु पश्वञ्जनमतो न प्रतिपशु भवन्तीति भावः । दिवः सूनवः स्थेति तन्त्रेण स्वरूणामासन्नानामादानं तेषां विभवन्ति तन्त्रमङ्गानीति सूत्रादन्तरिक्षस्य त्वेत्यनूहेनावगूहनं यूपभेदान्नोपशयस्य ।

---

१ क. ग. °दणिमति प्र° ।

उपरसंमितां मिनुयात्पितृलोककामस्य ।

यस्यामुपरा एव समानाः सोपरसंमितेत्युच्यते । पितृलोकं कामयतोयजमानस्ये॰
त्यर्थः ।

रशनसंमितां मध्ये च संमितां मनुष्यलोककामस्य ।

यस्यां रशना एव समाना यूपानां मध्यभागाश्च समानास्ताम् । अस्मिन्मनुष्यलोक
इतरेणातुलतां बुभूषुर्मनुष्यलोककाम इत्युच्यते ।

चषालसंमितामिन्द्रियकामस्य ।

यस्यां चषालाः समानास्तामिन्द्रियकामस्य, इन्द्रियं सर्वेन्द्रियपाटवं तत्काम इन्द्रिय॰
काम इत्युच्यते ।

सर्वान्समान्प्रतिष्ठाकामस्य ।

मिनुयादिति सर्वत्र शेषः । उपरसंमितामित्यत्रोपराणामायामसाम्यमवगन्तव्यम् ।
यन्मध्यसंमितत्वं रशनासंमितत्वं च तद्यूपमध्यानां रशनानां च तिर्यक्त्वस्याप्येतत्सा॰
म्यम् । यच्चषालसंमितत्वं तच्चषालपृथुत्वसाम्यम् । एतदर्थे प्रमाणीभूतं सूत्रमायामत
उपराणीत्येतदारभ्य प्रथिम्नश्चषालानीत्येतदन्तमग्रे वक्ष्यते ।

ये त्रयो मध्यमास्तान्समान्पशुकामस्य व्यति॰
षजेदितरान्प्रजयैवैनं पशुभिर्व्यतिषजति ।

मध्यमा मध्यतना ये त्रयो यूपास्तान्समान्कुर्यात्पशुकामस्य । मध्यतनेभ्य इतरान्व्य॰
तिषजेत् । एकैकान्तरिता मध्यमेभ्य इतरे ये ते न समा भवन्ति किं तु विषमा एवाऽऽ॰
भवन्ति । एतेन व्यतिषङ्गेणैनं यजमानं प्रजया पशुभिश्च व्यतिषिक्तं विशेषेणातिषिक्तं
समृद्धं करोतीत्यर्थः । उभयोः पार्श्वयोरग्निष्ठादेकैकान्तरितास्ते न समा भवन्ती॰
तरे विषमा एष व्यतिषङ्ग इत्यापस्तम्बः ।

यं कामयेत प्रमायुकः स्यादिति गर्तमितं तस्य
मिनुयादुत्तरार्ध्यं वर्षिष्ठमथेतरान्ह्रसीयसः ।

यं यजमानं प्रमायुको झटिति मरणशाली स्यादिति यः कामयेत तस्य यजमा॰
नस्य गर्तमितमेकादशिनयूपानां गर्तेन मितं परिमाणं मिनुयात् । गर्तमितस्वरूपमाह—
उत्तरार्ध्यं वर्षिष्ठमथेतरान्ह्रसीयस इत्यनेन । इयं पारिभाषिकी संज्ञा । उत्तरार्धे भव
उत्तरार्ध्यस्तमुत्तरार्ध्यं वर्षिष्ठं स्थविष्ठम् । अथशब्दः क्रमार्थः । उत्तरार्ध्यस्य वर्षि॰
ष्ठत्वसंपादनोत्तरमितरेषु ह्रसीयस्त्वसंपादनमिति ।

दक्षिणार्ध्यं वर्षिष्ठं मिनुयात्स्वर्गका॰
मस्याथेतरान्ह्रसीयसो ह्रसीयसः ।

अत्र वर्षिष्ठता दैर्घ्येण । ह्रसीयसो ह्रसीयस इति वीप्साश्रवणादितरेषां किंचित्किं॰

१ ग. च. झ. °त्सुवर्ग° ।

चिदुत्तरोत्तरं ह्रसीयस्त्वमितिज्ञापनार्थं पूर्वत्र वीप्साया अश्रवणादुत्तरोत्तरं ह्रसीयस्त्वं नास्ति किंतु तुल्यं ह्रसीयस्त्वमिति ।

आराग्रामभिचरतस्तेषामग्निष्ठं वर्षि-
ष्ठमथेतरान्ह्रसीयसो ह्रसीयसः ।

आराग्रास्वरूपं तेषामग्निष्ठं वर्षिष्ठमथेतरान्ह्रसीयसो ह्रसीयस इत्येतेन सूत्रेणोच्यते । अत्रापि वर्षिष्ठता दैर्घ्येण । पूर्ववद्वीप्साश्रवणादितरेषां किंचित्किंचिदुत्तरोत्तरं ह्रसीयस्त्वम् । आराग्रास्वरूपं स्पष्टमाहाऽऽपस्तम्बः—मध्य उन्नता भवत्यनुपूर्वमन्तौ निनताविति । अग्निष्ठ उन्नतो भवति ततः प्रभृति क्रमेणान्ता निनता भवन्ति दक्षिणत उत्तरतश्चैषाऽऽराग्रेत्यर्थः । आरमिवाग्रं मध्यभागो यस्याः साऽऽराग्रेति । आरशब्देनोच्चतोच्यते ।

समवस्राविण्यां वृष्टिकामस्य तेषामग्निष्ठं
ह्रसिष्ठमथेतरान्वर्षीयसो वर्षीयसः ।

तेषां यूपानां मध्येऽग्निष्ठं ह्रसिष्ठमितरान्वर्षीयसो वर्षीयसः । वर्षीयसो वर्षीयस इति वीप्सया क्रमेणोत्तरोत्तरमग्निष्ठव्यतिरिक्तानां वर्षीयसः । अथशब्दः क्रमार्थोऽग्निष्ठस्य ह्रसीयस्त्वसंपादनोत्तरमितरेषु क्रमाद्वर्षीयस्त्वसंपादनमिति । सम्यगवस्रावणमुच्चप्रदेशादाकाशात् । निनतायां पृथिव्यां सम्यक्स्रावणमिव यस्यां सा समवस्राविणीति । वृष्टिर्वर्षणम् ।

व्यत्यस्तं भ्रातृव्यवतो ह्रस्वं दीर्घं च व्यतिषजेत् ।

ह्रस्वं दीर्घं च व्यत्यस्तमेकैकान्तरितं व्यतिषजेद्योजयेदित्यर्थः । स्पष्टममुमर्थमाहाऽऽपस्तम्बः—व्यतिषक्तां भ्रातृव्यवत उभयोः पार्श्वयोरग्निष्ठादेकैकान्तरितास्तेन समा भवन्तीतरे विषमा एष व्यतिषङ्ग इति ।

यदि कामयेत विट्क्षत्त्रादोजीयसी स्यादिति येऽ-
ग्निष्ठाद्दक्षिणे तान्वर्षीयसो वर्षीयसो मिनुयात् ।

यदि यजमानः क्षत्त्रात्क्षत्त्रियजातेर्विड्वैश्यजातिरोजीयसी बलीयसी स्यादिति कामयेत तदा येऽग्निष्ठाद्दक्षिणतो यूपास्तान्वर्षीयसो वर्षीयस उत्तरोत्तरं क्रमेण मिनुयादध्वर्युरित्यर्थः ।

यदि कामयेत क्षत्त्रं विश ओजीयः स्यादिति येऽग्निष्ठा-
दुत्तरे तान्वर्षीयसो वर्षीयसो मिनुयात् ॥ २२ ॥

क्षत्त्रं क्षत्त्रियजातिर्विशो वैश्यजातेरोजीयो बलिष्ठं स्यादिति यदि यजमानः कामयेत तदा येऽग्निष्ठादुत्तरे तान्वर्षीयसो वर्षीयस उत्तरोत्तरं क्रमेण मिनुयादित्यर्थः । अर्थादुभयत्रावशिष्टानां ह्रसीयस्त्वम् ।

आयामत उपराणि समानानि स्युस्तिर्यक्तो
मध्यानि रशनाश्च प्रथिम्नश्चषालानि ।

आयामतो दैर्घ्येण समानान्युपराणि भवन्ति । मध्यानि रशनाश्च तिर्यक्तस्तिर्यक्त्वेन समानानि भवन्ति । प्रथिम्नः स्थौल्येन चषालानि समानानि भवन्ति । उपरसंमितां मिनुयात्, रशनसंमितां मध्येन संमितां मिनुयाच्चषालसंमितां मिनुयादित्येतेषूपयुज्यत इदं सूत्रम् ।

उपशयमङ्क्त्वा द्वाभ्यां रशनाभ्यां परि-
वीयाग्रेण दक्षिणार्ध्यं यूपं निदध्यात् ।

दक्षिणार्धे भवो दक्षिणार्ध्यस्तं दक्षिणार्ध्यं यूपमग्रेणोपशयं निदध्यात् । दक्षिणेन वेत्यापस्तम्बः ।

यद्यभिचरेदिदमहममुमामुष्यायणमिन्द्रस्य वज्रे-
णाभिनिदधामीति प्राञ्चमुपशयं निदध्यात् ।

अभिचार एव प्रागग्रयूपनिधानं न तु नित्यतया निधाने सूत्रकृता प्राक्त्वस्यानेन विधानात् । तेनाऽऽपस्तम्बोक्तं प्राक्त्वं न नित्यतया निधाने भवति । अमुमित्यत्र द्वितीयाविभक्त्येकवचनान्तव्यावहारिकनाम्नो ग्रहणम् । तच्च शर्मान्तं ब्राह्मणस्य येन व्यवह्रियत इति वासिष्ठसूत्रात् । आमुष्यायणमित्यनेन गोत्रप्रयुक्तनामनिर्देशः । यथा वासिष्ठमिति । येन व्यवह्रियत इति वासिष्ठसूत्राच्छर्मान्तता व्यावहारिकनामविषय एव नान्यनामसु ।

पशुकाल आग्नेयमसितशीर्षमग्निष्ठ उपाकरोति सार-
स्वतीं मेषीमुत्तरतः सौम्यं बभ्रुं दक्षिणत एवं व्यत्यासं
दक्षिणापवर्गान्पौष्णꣳ श्यामꣳ शितिपृष्ठं बार्ह-
स्पत्यꣳ शिल्पं वैश्वदेवमैन्द्रारुणं मारुतं कल्माषमैन्द्रा-
ग्नꣳ सꣳहितमधोरामꣳ सावित्रं वारुणं पेत्वमुत्तमम् ।

असितं कृष्णं शिरो यस्य सोऽसितशीर्षः । शीर्ष(शीर्ष)शब्देन मुखमप्युपलक्ष्यते । मेषी प्रसिद्धा । बभ्रुः कपिलः । श्यामः कृष्णः सर्वोऽपि । शितिपृष्ठः श्वेतपृष्ठः । शिल्पो लवणवर्णः । अरुणो लोहितवर्णः । कल्माषः कृष्णबिन्दुयुक्तवर्णान्तरः । संहितोऽन्यवर्णमिश्रितवर्णः । अधोराम उदरप्रदेशे कृष्णवर्णः । पेत्वोऽपगतपुंस्को मेषः । अग्निष्ठेऽग्निष्ठयूपसमीप आग्नेयमसितशीर्षमुपाकरोति । सारस्वतीं मेषीमुत्तरयूपे सौम्यं बभ्रुं दक्षिणयूपे पौष्णं श्यामं तदुत्तरयूपे बार्हस्पत्यं शितिपृष्ठं दक्षिणयूपे

---

१ ख. ज. ठ. शीर्षमि ।

वैश्वदेवं शिल्पमुत्तरयूपे, ऐन्द्रमरुणं दक्षिणयूपे मारुतं कल्माषमुत्तरयूपे, ऐन्द्राग्नं संहितं दक्षिणयूपे सावित्रमघोराममुत्तरयूपे वारुणं पेत्वं दक्षिणयूपे। एवं व्यत्यासं व्यत्यस्य व्यत्यस्य दक्षिणापवर्गानेतान्पशूनुपाकरोति। एवमुत्तरमुत्तरमुपाकृत्य दक्षिणं दक्षिणमुपकुर्वन्नितरान्पौष्णादीनपि पशूनुपाकरोति। तत्र व्यत्यासक्रमादर्थसिद्धे दक्षिणापवर्गत्वे पुनर्वचनं यत्राप्येकयूपे पश्वेकादशिनी तत्राप्येवमपवर्गार्थम्। नैतेषां पशूनामुपाकरणकाले प्राच्यादिदिगभिमुखत्वनियमः। अर्थादेवोत्तमत्वे सिद्ध उत्तमवचनं वक्ष्यमाण ऐन्द्रस्य लोके वारुणमालभेत वारुणस्य लोक ऐन्द्रमित्यनेन सूत्रेण विहिते स्थानव्यत्यासेऽपि वारुण एवोत्तम इत्येतदर्थम्।

यदि कामयेत योऽवगतः सोऽपरुध्यतां योऽपरुद्धः सोऽवगच्छत्विवत्यैन्द्रस्य लोके वारुणमालभेत वारुणस्य लोक ऐन्द्रं य एवावगतः सोऽपरुध्यते योऽपरुद्धः सोऽवगच्छति।

यदि यजमानो योऽवगतो द्वेष्यः किंचिदपरुध्य प्राप्तराज्यः स्यात्सोऽपरुध्यतामैश्वर्याद्भ्रष्टो भवतु। यस्तु तेनापरुद्धोऽवरुद्धः सोऽवगच्छतु प्राप्तैश्वर्यो भवतु इति यो यजमानः कामयेत तदाऽध्वर्युरेतादृशयजमानकर्तृके कर्मणि ऐन्द्रस्य लोके स्थाने वारुणं पशुमालभेत वारुणस्य पशोर्लोक ऐन्द्रं पशुमालभेत। एतत्फलं य एवावगतः सोऽपरुध्यते योऽपरुद्धः सोऽवगच्छति। गतार्थं कामनावाक्येनैवेदम्।

यदि कामयेत प्रजा मुह्येयुरिति पशून्व्यतिषजेदिति प्रजा एव मोहयति।

प्रजा मुह्येयुः प्रजा मोहं गच्छेयुरिति यदि यजमानः कामयेत तदैकैकान्तरितान्पशूनुपाकुर्यादेष व्यतिषङ्गो नाम। यथाऽग्निष्ठ आग्नेयमुपाकृत्य सौम्यमुत्तर आलभेत ततः सारस्वतीं मेषीं दक्षिणे बार्हस्पत्यमुत्तरे पौष्णं दक्षिण ऐन्द्रमुत्तरे वैश्वदेवं दक्षिण ऐन्द्राग्नमुत्तरे मारुतं दक्षिणे वारुणमुत्तरे सावित्रं दक्षिणे। एष पशूनां व्यतिषङ्गः। अस्मिन्कल्पे वारुणं पेत्वमुत्तममित्यस्य बाधः। स्थानव्यतिषङ्गमात्रं वाऽत्र। पशवस्तु क्रमेणैवोपाकरणीया इति पक्षे दक्षिणापवर्गानित्यस्य बाधः। एतत्फलमाह प्रजा एव मोहयतीत्यनेन।

यदभि वा हतोऽपां वारुणमालभेत प्रजा वरुणो गृह्णीयाद्दक्षिणत उदञ्चमालभतेऽप वा हतः।

यदि यजमानः, अपामिति षष्ठी द्वितीयार्थे। संमुखं समीपं स्वगृहसमीपं नद्या-

---

१ ग. न. एवं।

दिगता अप आगच्छेयुरिति यो यजमानः कामयेत तदा प्राञ्चं वारुणमालभेत तत्तदा प्रजा वरुणो गृह्णीयात् । प्रजा वरुणो गृह्णीयादितिदोषश्रवणात्प्रत्यङ्मुखमेवोपाकुर्यात् । एतावता नैष दोषोऽभिवाहतो ( ? ) भवति । दक्षिणत उदञ्चमालभतेऽप वा हतः ।

आरण्यं पशुमाखुं वोपशये निर्दिशत्यसौ ते पशुरिति निर्दिशेद्यं द्विष्याद्यदि न द्विष्यादाखुस्ते पशुरिति ब्रूयात् ।

उपशय आरण्यं पशुं गवयाद्यन्यतममाखुं वा पशुत्वेन बुद्ध्या निर्दिशेद्यथा गवयस्ते पशुराखुस्ते पशुरिति । अथ वा यं द्विष्यात्तमेव द्वेष्यं पशुत्वेन निर्दिशेदमुकस्ते-पशुरिति । यदि न द्विष्याद्द्वेष्यो नास्त्येव तदाऽऽखुस्ते पशुरिति ब्रूयात् । यस्तु संत*मपि द्वेष्यन्नपि न द्विषते तस्याऽऽखुस्ते पशुरित्येव निर्देशो न गवयाद्यन्यतमो विकल्पते । केवलं द्वेष्टैव न स्वयं द्विष्यमाणस्तदा पूर्व एव विधिः । सति द्वेष्ये द्विष्यमाणे च पूर्वेतरो विधिर्विकल्पते । सत्यपि तस्मिन्नद्विष्यमाणे त्वयमेव विधिरिति ।

सर्वेषां प्रतिपशु बर्हींषि वपाश्रपण्यः कुम्भ्यो हृदयशूलाः[3] प्लक्षशाखाश्च ।

पशुसमुदायापेक्षं बर्हिरादिषु बहुवचनम् । बर्हिरादीनि यथाविहितानि प्रतिपशु भवन्तीत्यर्थः ।

तत्रमग्नेर्हरणमधिगुरुत्तमः प्रयाजस्तथा पूर्वः परिवप्योऽन्ततः संज्ञप्तहोमो रशनानामुदसनमुत्तरः परिवप्यो वपाश्रपणीनामनुप्रहरणमभिहोमो मार्जनं वरदानं च ॥ २३ ॥

एतान्यङ्गानि सर्वेषां पशूनां तन्त्रेण भवन्ति । प्रतिप्रधानं गुणावृत्तिरिति न्यायेन द्रव्यपृथक्त्वेऽभ्यावर्तते यथाऽऽज्यग्रहणे लवने स्तरणे चेति सूत्रस्याऽऽज्यग्रहणादि-बहुपशूनामपि द्रव्यभेदादत्रापि प्रवृत्तेश्च । अग्निहरणादीनां प्रतिपश्वावृत्तौ प्राप्तायामेतेषु तन्त्रविधानम् । तत्रायं कर्मक्रमः—सर्वान्पशून्स्नापयित्वेषे त्वेतिमन्त्रावृत्त्या बर्हींषी आदायोपवीरसीति प्लक्षशाखामग्नये त्वा जुष्टमुपाकरोम्युपो देवानित्याग्नेयमग्निष्ठसमीपमसितशीर्षमुपाकरोति । प्रज्ञाते बर्हिषी निदधाति । पुनरिषे त्वेत्यादि सरस्वत्यै त्वा जुष्टामुपाकरोमीत्यादि अग्निष्ठस्योत्तरस्मिन्यूपे मेषीमुपाकरोति । निधाय प्रज्ञाते बर्हिषी पुनरिषे त्वेत्यादि सोमाय त्वाजुष्टमुपाकरोमीत्याग्निष्ठस्य दक्षिणे यूपे बभ्रुं सौम्यमुपाकरोति । प्रज्ञाते बर्हिषी निधाय पुनरिषे त्वेत्यादि पूष्णे

---

* अत्र 'सन्तमपि द्वेष्यं न द्विष्टे' इत्यपेक्षितम् ।

---

१ क. ग. अप । २ ख. पूर्वोत्तरो । ३ क. ग. °शू᳘ᳶ प्ल° । ङ. च. °शूलाप्लक्ष° । ४ ख. जुष्टम्° ।

त्वा जुष्टमुपाकरोमीत्यग्निष्ठस्योत्तरस्मिन्यूपे पौष्णं श्याममुपाकरोति प्रज्ञाते बर्हिषी निधाय पुनरिषे त्वेत्यादि बृहस्पतये त्वा जुष्टमुपाकरोमीत्यग्निष्ठस्य दक्षिणे शितिपृष्ठं बार्हस्पत्यमुपाकरोति । प्रज्ञाते बर्हिषी निधाय पुनरिषे त्वेत्यादि विश्वेभ्यो देवेभ्यस्त्वा जुष्टमुपाकरोमीत्यग्निष्ठस्योत्तरस्मिञ्शिल्पं वैश्वदेवमुपाकरोति । प्रज्ञाते बर्हिषी निधाय पुनरिषे त्वेत्यादीन्द्राय त्वा जुष्टमुपाकरोमीत्यादि अग्निष्ठस्य दक्षिणेऽरुणमैन्द्रमुपाकरोति । प्रज्ञाते बर्हिषी निधाय पुनरिषे त्वेत्यादि मरुद्भ्यस्त्वा जुष्टमुपाकरोमीत्यग्निष्ठस्योत्तरस्मिन्कल्माषं मारुतमुपाकरोति । प्रज्ञाते बर्हिषी निधाय पुनरिषे त्वेत्यादीन्द्राग्निभ्यां त्वा जुष्टमुपाकरोमीत्यग्निष्ठस्य दक्षिणे संहितमैन्द्राग्नमुपाकरोति । प्रज्ञाते बर्हिषी निधाय पुनरिषे त्वेत्यादि सवित्रे त्वा जुष्टमुपाकरोमीत्यादि अग्निष्ठस्योत्तरस्मिन्नधोरामं सावित्रमुपाकरोति । प्रज्ञाते बर्हिषी निधाय पुनरिषे त्वेत्यादि वरुणाय त्वा जुष्टमुपाकरोमीत्यग्निष्ठस्य दक्षिणे पेत्वं वारुणमुपाकरोति । तत उपाकृतेषु पशुषु आरण्यपशुनिर्देशं द्रव्यनिर्देशं चोपशयायूपे कृत्वोपाकृत्य पञ्च जुहोति । एतस्य होमस्य विभवन्ति तन्त्रमङ्गानीति सूत्रात्तन्त्रेणैव होमः । तत्र पशूनां बहुत्वात्पश्वभिधानशब्देषु बहुवचनान्त ऊहः सर्वत्र । सुवर्गं यात० प्रतितिष्ठत० निष्क्रीता इमे० यन्तु० बध्यमानान्० उपाकृताञ्छशमानान्यद्० अपियन्तु पाथः० जीवशब्देऽप्यूहं केचिदिच्छन्ति । ततो मन्थनं तन्त्रेण विभवन्ति तन्त्रमङ्गानीति सूत्राददृष्टार्थत्वस्य प्रत्यक्षतःसिद्धत्वात् । सावित्रेण रशनादानादि नियोजनान्तमेकैकस्य । अविभवन्ति प्रत्यक्षार्थानि प्रतिसंस्कारमभ्यावर्तन्त इति सूत्रात् । संयुक्तानि त्वेकापवर्गाणीति परिभाषया कृत्स्नमेकैकमपवर्जयतीति सूत्रात्काण्डानुसमयः । यूपस्य दक्षिणतः पशुनियोजनं पूर्वोक्तक्रमेण । प्रोक्षणाद्यधस्तादुपोक्षणान्तमेकैकस्य क्रमेण करोति । सर्वेषां मेध्यकरणत्वरूपप्रयोजनैक्यात्संयुक्तत्वं संयुक्तत्वादधस्तादुपोक्षणान्तानां पदार्थानामेव कर्मत्वम् । कृत्स्नमेकैकमपवर्जयतीतिसूत्रात्संयुक्तानि त्वेकापवर्गाणीति सूत्राच्च । स्वदस्वैनामिति मेध्यां मन्त्र ऊहः । स्रुच्यघाघार्य प्रत्याक्रम्य सं ते प्राण इत्यादि सं यज्ञपतिराशिषेत्यन्तं क्रमेण सर्वेषाम् । अञ्जनरूपपदार्थस्यैकत्वात् । ततो ध्रुवासमञ्जनादि दश प्रयाजास्तेषां तन्त्रमेव । विभवन्ति तन्त्रमङ्गानीति सूत्रात् । नचोत्तमप्रयाजस्य तन्त्रविधानादेतेषां तन्त्रं न भवतीति वाच्यम् । अन्तिमप्रयाजस्य निष्पन्नवपारूपद्रव्यसंस्कारकत्वेन संनिहितत्वेन च साक्षादुपकारकत्वात्प्रतिवपं प्राप्तिः शङ्किता स्यात्तन्निवृत्त्यर्थं वचनस्याऽऽवश्यकत्वात् । इतरेषां प्रयाजानां तु वपारूपद्रव्याधारसंस्कारकत्वेन संनिहितत्वाभावेन च साक्षादुपकारकत्वाभावादर्थादेवाऽऽवृत्तेरप्राप्तेर्न तन्त्रविधाने सूत्रं कृतमाचार्येण । दशप्रयाजेज्यानन्तरं जुह्वां प्रथमं स्वरुमक्त्वा स्वधितिं चाक्त्वाऽऽग्नेयपशोः शिरोऽञ्जनादि श्रोणी यञ्जनान्तं करोति । स्वधितिरेक एव । तस्य न पुनः पुनरञ्जनं पूर्वकृताञ्जनानुगमस्य पूर्वपशौ विनियुक्तत्वात् । एवंरीत्या

सर्वेषां पशूनां तत्तत्स्वर्वञ्जनादि कृत्वा शिरोञ्जनादि श्रोण्यञ्जनान्तमेकैकस्य क्रमेण करोति। शमित्रे स्वधितिप्रदानान्ते तस्य तस्य स्वरोः क्रमेण तत्तत्स्वस्वस्थान उपगूहनं शमित्रे स्वधितिं प्रयच्छति यथास्थानꣳ स्वरुमवगूह्येति पशुसूत्रे शमित्रे स्वधितेः प्रदानानन्तरं स्वर्ववगूहनस्य विहितत्वात्। अवगूहनपर्यन्तं क्रमेण प्रज्ञाताः स्वरवो भूमावेव स्थापिता भवेयुः। पर्यग्निकरणं तन्त्रेण विभवन्ति तन्त्रमङ्गानीतिसूत्रात्। पर्यग्निभ्यः क्रियमाणेभ्योऽनुब्रूहीति प्रैष ऊहः। यत्तु केचित्परितो ह्रियमाणो योऽग्निरित्यग्न्यभिधानादनूह इति वदन्ति तदयुक्तम्। पर्यग्नि करोति पर्यग्नि कृत्वेत्यादौ नपुंसकलिङ्गानुपपत्तेः। ननु तवापि गर्भिण्यां पशौ पर्यग्नौ क्रियमाणे जुहोतीति श्रुतौ पुंलिङ्गानुपपत्तिः पर्यग्नौ क्रियमाणायामिति तदा स्यात्। नायमस्ति दोषः। तत्र पशोर्विशेष्यत्वेन पुंलिङ्गाविरोधात्। तस्म द्युक्त एवोहः। पर्यग्निकरणं सकृद्गृहीतेनैवोल्मुकेन। तत्र प्रतिपशु पर्यग्निकरणम्। द्रव्यपृथक्त्वेऽभ्यावर्तेत इति सूत्रात्। तत्राप्याज्यहोमः प्रथमषष्ठैकादशसंख्याविशिष्टपशूनां पर्यग्निकरणे प्रथमे प्रथमाप्याज्यहोमः। षष्ठे द्वितीयाप्याज्यहोमः। एकादशे तृतीयाप्याज्यहोमः। पर्यग्नौ क्रियमाण इतिवर्तमानार्थकशानच्प्रयोगात्। ततः प्राकृतान्धशमानान्यदस्थाज्जीवं देवानामपियन्तु पाथ इति पूर्ववदूहः। क्रमेण पशून्नमुच्यऽऽश्राव्य प्रत्याश्रावित उप प्रेष्य होतर्हव्या देवेभ्य इति प्रैषः सकृदेव। विभवन्ति तन्त्रमङ्गानीति सूत्रात्। रेवतीर्यज्ञपतिं प्रियधा विशतेति मन्त्रेण बर्हिर्भ्यां वपाश्रपणीभ्यां प्लक्षशाखया च पश्वारम्भः पशुसंस्कारकत्वात्प्रतिपशु। यत्तु मुख्यस्यैव पशोरन्वारम्भं केचिदिच्छन्ति तदसत्। विभवन्ति तन्त्रमङ्गानीतिसूत्रविरोधाद्बर्हिर्वपश्रपणीप्लक्षशाखानां भेदेन प्रतिपश्वारम्भस्यार्थादेव सिद्धेश्च। न हि अन्यदीयबर्हिर्वपाश्रपणीप्लक्षशाखाभिरन्यस्य पशोरारम्भः संस्कारोपयोगी भवति। एतेन यावतां पशूनामन्वारम्भस्तन्त्रेण संभवति तावत्सु तन्त्रमित्यपि निरस्तम्। यजमानाभिमन्त्रणं तन्त्रेण विभवन्ति तन्त्रमङ्गानीतिसूत्रात्। अत्र नानाप्राणो यजमानस्य पशुभिर्यज्ञामिति विशेषो मन्त्रे। अग्नेर्हरणं तन्त्रं तन्त्रमग्नेर्हरणमितिसूत्रात्। एतस्याग्नेः पाकप्रयोजनत्वेन प्रत्यक्षार्थत्वाद्द्रव्यपृथक्त्वेऽभ्यावर्तेत इति सूत्राच्च प्रतिपशु प्राप्तौ तन्त्रमग्नेर्हरणमितिवचनम्। एकस्यैवाग्नेः पुरस्तान्नयने पाकरूपदृष्टप्रयोजनबलवत्त्वानुरोधेन रक्षोपहननरूपादृष्टफलस्यापि सिद्धेरिति भावः। यावच्छामित्रदेशनयनं तावत्पर्यन्तमन्वारम्भ इति नियमाभावः। एतादृशवचनाभावात्। पशूनां नयनेऽनुग्रहमाह बौधायनः—यथाऽऽग्नेयमेवाध्वर्युर्वपाश्रपणीभ्यामन्वारभते पृथगितरान्परिकर्मिण उदञ्चो नयन्त्यनुपूर्वमप्यातिषजन्त इति। अन्वारम्भः पृथक्पृथगेव भवति न शमितृकर्तृकं परिकर्मिकर्तृकं वा। अध्रिगुस्तन्त्रेण। द्रव्यपृथक्त्वेऽभ्यावर्तेत इति प्राप्ताविदं वचनम्। तत्रेत्थं याजुर्हौत्रानुसारिप्रयोगः—दैव्याः शमितार उत० मेधपतिभ्यां मेधान्प्रेभ्यो आग्निं० रन्वेनान्माता० उदीचीनानेषां० पृथिव्यै शरीराणि एकधे-

कधैषां त्वच आच्छ्यतात्पुरा पुरा नाभ्या अपिशसो वपा उत्खिदत,दन्तरन्तरेवोष्माणं वारयतात् । श्येनमेषां वक्षाꣳसि कृणुतात्प्रशसा बाहूञ्छला[1]दोषाणि कश्यपेवाꣳसान- च्छिद्राः श्रोणीः कवषोरूस्रेकपर्णाष्ठीवतः षड्विꣳशतिः षड्विꣳशतिरेषां वङ्क्रयस्ता अनु० गात्रं गात्रमेषामनू० वनिष्टूनेषां मारा० ताविमान्पशूञ्छ्रपयतो० नाभिरुप मा मेदो हविरित्यनूह्यानीति । आश्वलायनः पुरातारिति चैक इति च । स एव मुख्यक्रमेण पशूञ्छमिता नयति क्रमेण शामित्रं कण्ठे बद्ध्वा नयतीति वाजसनेयिश्रुतेः । उत्तरेण चात्वालं शामित्रदेशस्तस्मिन्नाग्नीध्रेणोल्मुकनिधाने कृते तत्तद्धार्हिः समस्य तनुवा भवे- स्युदक्संस्थं प्राक्संस्थं वा न्यस्यति । संज्ञपनप्रैषस्तन्त्रेण विभवन्ति तन्त्रमङ्गानीति सूत्रात् । अमायून्कृण्वतः संज्ञपयताच्छङ्क्यान्प्रब्रूतादिति । शक्यशब्दस्यानूहो वा क्रियाविशेषत्वात् । यजमानजपस्तन्त्रेण विभवन्ति तन्त्रमङ्गानीति सूत्रात् । स्वर्विदः स्थ स्वर्वित्त्वा स्वरित० लोकविदः स्थ लोकं वित्त्वा लोकमित० गातुविदः स्थ गातुं वित्त्वा गातुमित० नाथविदः स्थ नाथं वित्त्वा नाथमित० न वा उवेतान्म्रियध्वे न रिष्यथ देवाꣳ इदिथ० दुष्कृतस्तत्र वो दे० आशानां व आशा० यजमानाभिमन्त्रणं पूर्ववत् । पृषदाज्यावेक्षणं तन्त्रम् । पृषदाज्यस्यैवैकत्वात्, एतस्य तु पृषदाज्यसंस्कारत्वात् । नैमित्तिककरणाभिमन्त्रणमपि तन्त्रम् । विभवन्ति[3] तन्त्रमङ्गानीति सूत्रात् । यो नो द्वेष्टचनु तꣳ रभध्वमनागस इत्यूहः । पूर्व इति विशेषणं पूर्वः परिवप्यः स्वाहा देवेभ्य इति उत्तमप्रयाजस्य पूर्वपरिवप्यहोमात्प्राक्सत्त्वात्पूर्वमुत्तमप्रयाजग्र- हणं पूर्वपरिवप्यहोमस्यानन्तरं ग्रहणम् । एतच्चतुष्टयमपि क्रमप्राप्तं संज्ञप्तहोमर- शनोदसनयोरनन्तरमुत्तमप्रयाजपूर्वपरिवप्यहोमयोर्ग्रहणे कर्मक्रमानुरोधात्कर्तव्ये व्यत्या- सेन विधानमाद्यपदार्थस्य संनिधिकर्तव्या अग्निहरणाग्निगूत्तमप्रयाजास्तथा पूर्वः परि- वप्य इतिप्रदर्शनार्थम् । तेनाग्नेर्हरणाग्निगूत्तमप्रयाजा आदावेव भवन्ति । अथ वैवं योजना—अग्रे तथाशब्दस्य दर्शनात्पूर्वत्र दृष्टान्तार्थको यथाशब्दोऽध्याहा- रस्तु सिद्ध एव । स चाऽऽद्यपदार्थद्वय[4] एव न तूत्तमप्रयाजेऽपि । प्रयाजस्य प्रधानात्पू- र्वतायाः सर्वमतप्रसिद्धत्वात् । अग्रिमतथाशब्दस्तु देहलीदीपन्यायेनोभयत्रान्वेति यथै- तत्पदार्थद्वयं तथोत्तमः प्रयाजस्तथा पूर्वः परिवप्यहोम इत्यर्थः । अथवा संनिधिपदार्थ एव यथा शब्दाध्याहारो यथोत्तमः प्रयाजस्तथा पूर्वपरिवप्यहोम इति । अन्ते कर्तव्यं कर्म संज्ञप्तहोमो रशनानामुदसनरूपचात्वालनिधानकर्म चेति प्रदर्शनाय व्यत्यासेनो- भयोरेतयोः कर्मणोर्ग्रहणम् । पूर्वपरिवप्योत्तरपरिवप्यवपाश्रपण्यनुप्रहरणसंस्रावाभिहोम- मार्जनवरदानानां प्रतिप्रधानं गुणावृत्तिरिति न्यायेन द्रव्यपृथक्त्वेऽभ्यावर्तेत इति परि- भाषासूत्राच्च तत्तद्वपायागान्ते प्राप्ताविदं सूत्रम् । वेपिद्वं ततो नो अभयं कृत ।

१ क. °दोषाणि । २ ग. °षणन्वा° । ३ च. °वेवच्छूतिवि° । ४ क. ग. °र्थद्वयद्व° ।

प्रजाभ्यः सर्वाभ्यो मृडत० न्यषदत० कृत० मृडत० वाशिद्वं० कृत० मृडत० समु० त्क्रमिद्वं० कृत० मृडत० निमेहथ० कृत० मृडत० शकृत्कुरुथ० कृत० मृडत० एत० त्प्रायश्चित्तद्वयं सूत्रान्तरीयम् । एतद्द्वयमुपलक्षणपरत्वेनाऽऽनेयम् । समज्ञाध्वं० कृत० मृडत० एतत्प्रायश्चित्तमकामसंज्ञपननिमित्तम् । अकामसंज्ञपनं स्वतःसिद्धं मरणम् । पलायिद्वं० कृत० मृडत० निषण्णस्योत्थापने मन्त्रावृत्तिः । संज्ञप्तहोममन्त्रे यत्पशवो मायुमकृषतोरो वा पद्भिराहत इति ऊहः । शमितार उप० पाशेभ्यः पशून्प्रमुञ्चत० अरातीयन्तमधरं कृणोमि यं द्विष्मस्तस्मिन्प्रतिमुञ्चामि पाशानिति । तत्तदेकशूलया तां तां रशनामुपसृज्य तन्त्रेण चात्वाले न्यासस्तासां पूर्णपात्रानयनादिमार्जनान्तं तन्त्रम् । विभवन्ति तन्त्रमङ्गानीति सूत्रात् । वाक्त आप्यायतामित्याप्यायनं प्रतिपश्वावर्तते । अविभवन्त्यावर्तन्ते प्रत्यक्षार्थानीति सूत्रात् । अवशेषनिनयनं तन्त्रम् । विभवन्ति तन्त्रमङ्गानीति । पशौ तृणान्तर्धानादि उत्कृन्तनान्तमेकैकस्याऽऽवर्तते । ओषधे त्राय-स्वैनामिति मेध्यामूहः । यथादैवतं वपोत्कृन्तनम् । अग्नये त्वा जुष्टामुत्कृन्तामि सर० स्वत्यै त्वा जुष्टामु० सोमाय त्वा जुष्टामु० पूष्णे त्वा जुष्टामु० बृहस्पतये त्वा जुष्टामु० विश्वेभ्यो देवेभ्यस्त्वा जुष्टामु० इन्द्राय त्वा जुष्टामु० मरुद्भ्यस्त्वा जुष्टामु० इन्द्राग्निभ्यां त्वा जुष्टामु० सवित्रे त्वा जुष्टामु० वरुणाय त्वा जुष्टामु० अच्छिन्न इति वा सर्वेषाम् । सर्वाण्यग्राणि पाणौ कृत्वा सर्वाणि स्थविमन्ति लोहितेनाङ्क्त्वा प्रज्ञातानि निधाय युगपदन्ते निरस्यति । विभवन्ति तन्त्रमङ्गानीति सूत्रात् । तत्राग्राणां पाकार्थं विभागेन प्रतिनपनं पृथक्पृथक् । उल्मुकहरणस्य पूर्ववदेव तन्त्रम् । तन्त्रमग्नेर्हरणमि-तिवचनात् । विभागपक्षे सर्वेषामग्नीनामेकीभावं कृत्वा तस्योल्मुकस्याऽऽहरणं तन्त्रेणैव । अनन्तरप्रदर्शितहेतोः । उर्वन्तरिक्षमन्विहीत्यस्मिन्मन्त्रे केचिदूहन्ति तत्खण्डितमेव सवनीयबर्हिराहरणे । पुनरन्वारम्भणं पूर्ववत् । उपायनं तन्त्रेणैव । विभवन्ति तन्त्रम० ङ्गानीति सूत्रात् । उल्मुकविसर्जनं तन्त्रेणैव । अनन्तरप्रदर्शितहेतोः । वपानिग्रहणमग्र-प्रासनं च । सह प्रतिप्रस्थाता श्रपयति । तत्तद्बर्हिरग्रस्य तस्यास्तस्या वपाया अध-स्तादपासनम् । अभिहोमस्तन्त्रेण । एतस्य तन्त्रसाध्यकर्मसु परिगणनात् । प्रादुर्भूतेषु तन्त्रं स्तोकसंप्रैषः । शृताभिघारणं तन्त्रेण । ये व आत्मानः पशुषु० आत्मन्वन्तः सोमघृतवन्तो हि भूत्वा देवान्गच्छत सुवर्विन्दत यजमानाय मह्यमिति । अनूहो वा । उद्वासनमपि तन्त्रेणैव । दृꣳहत गा० दक्षिणस्यां वेदिश्रोण्यां तत्तत्प्लक्षशाखायां तां तां निदधाति । प्लक्षशाखाभेदाद्भेदेन निधानं मन्त्रभेदश्च । वपाश्रपणीप्रवृहणमाव-र्तते । अविभवन्त्यावर्तन्त इति सूत्रात् । याजमानं तन्त्रम् । इमा इन्द्रिय० माभिरि० ताभिर्देवा० सनेय२ शृता मयि श्रयन्ताम् । अयं य० अग्निर्होता, इति वपां वपां प्रत्यभिमर्शः । स्रुगादानाद्याज्यभागान्तं प्रकृतिवत्कृत्वा प्रयाजशेषेण यथाक्रमं द्विरभि-

धारयति। प्रचरणकालेऽग्नये छागस्य वपाया मेदसोऽनुब्रूहि। आश्राव्य प्रत्याश्राविते अग्नये छागस्य वपाया मेदसः प्रेष्य स्वाहा देवेभ्यः प्रथमवपायामेवात्रैव पूर्वः परिवप्यहोमः। तथा पूर्वः परिवप्य इति सूत्रात्। सरस्वत्यै मेष्या वपाया मेदसोऽनु० सरस्वत्यै मेष्या वपाया मेदसः प्रेष्य। पञ्चपशुप्रकृतित्वपक्ष ऐन्द्रे सारस्वत्यां तद्विकारेषु च दार्शपौर्णमासिकः प्रचरणकल्प इतिसूत्राद्यजिप्रैषा एव सर्वे। मैत्रावरुणव्यापारः प्रधानहविःषु नास्ति। अग्नीषोमीयविकारपक्षे प्रकृतिवत्। अस्मिन्पक्षेऽग्नीषोमीये तद्विकारेषु चाऽऽश्वालः प्रस्तर ऐक्षवी विधृती इत्यारभ्यामुष्मा अमुष्य हविषः प्रेष्येत्येतदन्तात्सूत्रादेतेषामग्नीषोमीयधर्माणां पक्षे सर्वेषु पशुषु प्राप्तिः। सरस्वत्या अहं देवयज्यया वाचमन्नाद्यं पुषेयं सोमाय च्छा० सोमस्याहं देवयज्ययेन्द्रियावी भू० पूष्णे छा० पूष्णोऽहं देवयज्यया पुष्टिमान्पशुमान्भू० बृहस्पतये छा० बृहस्पतेरहं दे० येन्द्रियावी भू० विश्वेभ्यो देवेभ्यश्छा० विश्वेषां देवानामहं देवा दे० या प्राणैः सा० इन्द्राय छा० अत्र दार्शपौर्णमासिकः पक्षे प्रचरणकल्पः पक्षेऽग्नीषोमीयस्य, इन्द्रस्याहं दे० येन्द्रियावी भू० मरुद्भ्यश्छा० मरुतामहं दे० येन्द्रियावी भू० इन्द्राग्निभ्यां छा० इन्द्राग्निभ्यारहं दे० येन्द्रियावी भू० सवित्र उपांशु। अथोवैः, छाग० सर्वत्रोपांशु सावित्रैककपालयोर्देवता यजतीति चातुर्मास्यसूत्रात्सर्वत्र सवितृशब्द उपांशु। देवतावाचिनां पदानामन्येषामप्युपांशुत्वमाश्वलायनेनोक्तम्—आरद्धसज्जुपत्करदग्नमीदिति देवतानामिति। एतत्प्रयोगस्तु मैत्रावरुणप्रयोगे स्पष्टो भविष्यति। सवितुरहं दे० येन्द्रियावी भू० वरुणाय मेषस्य व०। अत्रोत्तरपरिवप्यहोमः। वरुणस्याहं दे०येन्द्रियावी भू० वपाश्रपणीनां प्रहरणं तन्त्रेण। स्वाहोर्ध्वनभसं मारुतं गच्छतेति ऊहः। संस्रावणं च। चात्वाले मार्जनं तन्त्रेण। विभवन्ति तन्त्रमङ्गानीति सूत्रात्। ततः पशुपुरोडाशप्रचारः। आग्नेयादिवरुणान्तानां निर्वापः। व्रीहिमयाः पशुपुरोडाशाः सर्वेऽप्येकादशकपाला द्वादशकपाला वा। एतेषामुपधानं तत्तद्विकारधर्मेण। तत्राऽऽग्नेयस्य प्रकृतिवत्। सारस्वतपौष्णबार्हस्पत्यसावित्रवारुणानामप्याग्नेयविकारत्वादाग्नेयाष्टाकपालधर्मेण कपालोपधानम्। सौम्यवैश्वदेवयोरग्नीषोमीयवत्। ऐन्द्रमारुतैन्द्राग्नानामैन्द्राग्नवत्। शमितः पशून्विशाधि गुदान्मा निर्वृत्ताः क्लोमः प्लीहः पुरीततानि मेदांसि समवधातवा इति। पशुश्रपणार्थं तन्त्रं धृष्ट्यादानं क्रमेण कुम्भीनामधिश्रयणमङ्गारैः परीन्धनमावपनं च क्रमेण। अथ पशुपुरोडाशयागानामनुमन्त्रणानि क्रमेण—अन्नादः१ वाचमन्नाद्यं पुषेयम्२ वृत्रहा३ पुष्टिमान्पशुमान्४ अन्नादः५ प्राणैः सायुज्यं गमेयम्६ इन्द्रियाव्यन्नादः७ इन्द्रियाव्यन्नादः८ इन्द्रियाव्यन्नादः९ अन्नादः१० अन्नादः११ इति क्रमेणानुमन्त्रणानि पशुषु संवदस्वेति संवादप्रयुक्तप्रैषऊहः। जुह्वामेकं पञ्चगृहीतं गृहीत्वा पृषदाज्यस्तुवं चाऽऽदाय शृतं९ हवी३ः शमि-

तरित्यनूहः। नाभिरुप मा मेदो हविरित्यमूह्यानीत्याश्वलायनेन हविःशब्देऽनूहस्योक्तेर्हविष इत्यन्तो नमतीत्यनूबन्ध्याप्रकरणस्थापस्तम्बसूत्रोक्ताल्लिङ्गाच्च। प्रथमहृदयं तदीयहृदयशूलात्प्रवृह्य प्रथमकुम्भ्यामवधाय सं ते मनसा मन इति पृषदाज्येन हृदयमभिघार्य स्वाहोष्मणोऽव्यथिष्या इत्यूष्माणमुद्यन्तमनुमन्त्र्य यस्त आत्मेति कुम्भीगतं पशुमभिघारयति। ततः प्रत्यावृत्य पुनः पञ्चगृहीतं पृषदाज्यस्रुवं च पूर्ववदादाय तूष्णीमेवाभिप्रव्रजति न संवादः। केचित्तु अन्यः पञ्चगृहीताज्यपृषदाज्यस्रुवावानयतीति वदन्ति। पूर्ववद्धृदयस्य हृदयशूलात्प्रवृहणादि यस्त आत्मेत्यभिघारणान्तम्। एवं तृतीयादीनां पशूनामेकैकां कुम्भीमुद्रास्यैकैकां पञ्चहोत्रा क्रमेण तत्तत्प्लक्षशाखायां निदधाति। दृꣳह गा दृꣳहेत्यस्मिन्मन्त्रे नोहः किंत्वावृत्तिरेव। अविभवन्त्यावर्तन्त इति सूत्रात्। यस्त आत्मेति मन्त्रे वपावदूहः। इमानीन्द्रियाण्यमृतानि वीर्याण्येभिरिन्द्राय पशवोऽचिकित्सन्। तैर्देवा० शृतानि मयि श्रयन्ताम्। अयं यज्ञः पञ्चहोता। एतयोरप्यत्र संभवे तन्त्रमविभव आवृत्तिः।

तस्य तस्याभ्यावर्तते मनोता वा।

तस्य तस्य पशोरभ्यावर्तते जुहूपभृतोर्वसाहोमहवन्याꣳ समवत्तधान्यां चोपस्तृणीत इत्यादीज्यान्तमेकैकस्याऽऽवर्तते। अविभवन्त्यावर्तन्त इति सूत्रात्। मनोता वेत्यनेन मनोतासूक्तस्याप्यावृत्तिनियमेन प्राप्तौ विकल्पमाह मनोतासूक्तस्य। अथवैवं सूत्रान्वयः–तस्य तस्य पशोरवदानकाले मनोता वाऽऽवर्तत इति मनोताविकल्पार्थमेव सूत्रकरणम्। जुहूपभृद्वसाहोमहवनीसमवत्तधान्युपस्तरणादीनां स्वर्थादेव प्राप्तिः। अवदानसमकाला तावन्मनोता हविषोऽवदीयमानस्येति लिङ्गात्। तत इज्याकालेन व्यवायात्प्रतिपश्वावर्तनमित्यावृत्तिरर्थत एव सिद्धा। उक्तं चाऽऽपस्तम्बेन स्पष्टं परिभाषासूत्रे मनोतस्या(ताया आ)वृत्तिर्भिन्नकालेष्विति। अत्र वर्तमानकालभेदादावृत्तिरिति भावः। अनावृत्तिपक्षोऽप्यापस्तम्बेनोक्तः–तन्त्रं वेति। एवं च सूत्रकृतः पक्षद्वयस्यापीष्टत्वाद्विकल्पः कृतः सूत्रकृताऽपि। तन्त्रपक्षे कथं समकालत्वमिति चेत्सत्यम्। आग्नेयीयं मनोता, इतरपश्ववदानकाले तु नान्यहविषो देवतायाः संस्काराय प्रभवति आग्नेयपश्ववदानसमकाल एवाऽऽग्नेयहविषो देवताया एकदेवतत्वात्संस्काराय प्रभवत्येवेति भावः।

सर्वेषां त्र्यङ्गाणि समवत्तं च।

इदं सूत्रं प्रधानार्थतत्तत्पश्ववदानोत्तरकालमेव त्र्यङ्गाणां स्विष्टकृदर्थमवदानं न तु अन्ते यागेऽपि तदेत्येतद्बोधनार्थम्। उपभृति हिरण्यशकलावधानमन्तेऽभिघारणं च। दैवतार्थस्य तु तत्तदनन्तरमेव। समवत्तशब्देनेडावदानमपि तदा तदैव। अभिघारणं त्वन्ते। इज्यान्तमेकैकस्य क्रमेण।

तस्य तस्यार्धर्चे वसाहोमं जुहोति ।

दिग्घोमार्थं शेषं पात्रान्तरे स्थापयेद्दिग्यागस्यादृष्टार्थत्वाद्भिद्यन्ते तन्त्रमङ्गानीति सूत्रादेव सूत्रकृता प्रदर्शितमेव भवति । आपस्तम्बः स्पष्टमेवेदमाह—उद्रेकान्समवनीय दिशः प्रति यजतीति । निहितं शेषमेकीकृत्य तन्त्रेणैव दिग्घोमः । उद्रेकसमवनयनं दिग्घोमतन्त्रतासिद्ध्यर्थमेव । अन्यथैतस्य व्यर्थत्वापत्तेः । सर्वेषां त्र्यङ्गाणि समवत्तं चेत्यनेनोत्तमे पशौ स्विष्टकृद्याग इति ज्ञापितमेवार्थात् । वनस्पतेरपि स्विष्टकृद्विकारत्वात्तस्यापि स्विष्टकृत्समीपस्थान एव याग इत्यपि दर्शितप्रायमेवार्थात् । आपस्तम्बेन स्पष्टमेवोक्तम्—उत्तमे पशौ वनस्पतिं स्विष्टकृतं चेति ।

सर्वेषां गुदैरुपयज उपयजति ।

उपयड्ढोमस्यानूयाजानुनिपातित्वात्प्रथमपशोरुपस्थितत्वेन तदीयगुदैरेवोपयाज इति शङ्कामपाकर्तुं सर्वेषामितिवचनं प्रतिपत्त्यर्थमिति भावः । प्रत्येकहोमस्यार्थादेव निवृत्तत्वात्तन्त्रमेव । समुद्रं गच्छत स्वाहेत्येवमूहः सर्वेषु मन्त्रेषु । स्वरुहोमे द्यां वो धूं पृणध्वमित्यूहः । अनूबन्ध्यापक्षेऽग्निष्ठयूपस्वरुहोमो न ।

जाघनीभिश्च पत्नीः संयाजयन्ति ।

प्रतिपत्त्यर्थमिति भावः ।

अनूबन्ध्यावपायाᳩ हुतायामग्रेण शालामुखीयमधोनाभिमचषालं द्विरशनं पात्नीवतस्य यूपᳩ संमाय तस्मिᳩस्त्वाष्ट्रᳩ साण्डं लोमशं पिङ्गलं बहुरूपमुपाकरोति पर्यग्निकृतमुत्सृज्याऽऽज्येन शेषᳩ सᳩस्थापयेत् ।

अनूबन्ध्यावपायां हुतायामामिक्षायाः प्रधानयागे कृते वा त्वाष्ट्रस्य पशोस्तन्त्रमारभ्यते । त्वष्टा देवता यस्य स त्वाष्ट्रः । पात्नीवतस्य यूपं छिनत्तीत्यनेन पत्नीवद्विशेषणविशिष्टोऽत्र देवतेति प्रदर्शितम् । पत्नीवानिति देवता यस्य स पात्नीवतः । विशेषणप्रयुक्ताऽप्यस्मिन्यूपे संज्ञाप्रवृत्तिरिति दर्शयितुं द्विविधाऽपीयं संज्ञा श्रुतौ प्रवृत्ता—इष्टं वपया भवत्यनिष्टं वशयाऽथ पात्नीवतेन प्रचरति तीर्थ एव प्रचरत्यथो एतर्ह्येवास्य यामस्त्वाष्ट्रो भवतीति । यत्पर्यग्निकृतं पात्नीवतमुत्सृजतीत्यादि । अग्रेण शालामुखीयमित्यनेन शालामुखीय एव प्रचारोऽस्येति सूचितम् । स्पष्टमिदमुक्तमापस्तम्बेन—शालामुखीये प्रचरन्तीति विज्ञायत इति । एवं चोदयनीयवत्प्राग्वंशिके विहारे सर्वं तन्त्रमित्युक्तं भवति । अत्राग्नेर्विहृतत्वादुत्तरवेद्यादीन्यर्थलुप्तानि निवर्तन्ते । वेदिस्तु दार्शिकी क्रियते । ये चानूबन्ध्यार्थाः प्राकृताः संस्कारास्तेऽपि क्रियन्ते । यथा प्राग्नहितपरिस्तरणोल्मुकराज्यास्तरणादयः । नाभ्यधो यत्प्रमाणं ताव-

त्परिमितं मिनोतीत्यर्थः। यूपत्वाच्चषालप्राप्तावचषालमिति वचनम्। द्विरशनमेतस्य पशोरेकादशिन्यङ्गत्वात्तदङ्गभूतस्य यूपस्य रशनाद्वयमप्राप्तं स्यात्तत्प्राप्त्यर्थमिदं वचनम्। संमाय यत्ते शिल्पः परावधीदित्यादिविधिना संमाय स्थितं कृत्वा छेदनं तूपशयच्छेदनोत्तरमेव तस्मिन्यूपे त्वाष्ट्रं त्वष्टृदेवताकं, पात्नीवतस्य यूपं संमायेत्यनेन पत्नीवद्विशेषणस्यापि पशौ संबन्धप्रदर्शनात्पत्नीवद्गुणविशिष्टोऽत्र त्वष्टा देवतेति सिद्धं भवति। पत्नीवते त्वष्ट्रे त्वा जुष्टमुपाकरोमीत्येव सर्वत्रोहः। साण्डमित्यनेन भूयोबलवत्त्वं लक्ष्यते। लोमशमित्यनेन बहुललोमवत्त्वं पिङ्गलं बहुरूपं पिङ्गलबाहुल्येन पिङ्गलवर्णवन्तं सद्ब(न्तंब)हुरूपं विचित्रवर्णमुपाकरोतीत्यर्थः। तमुपाकृतं पशुं पत्नीवते त्वष्ट्र इदमुत्सृजामीत्युत्सृज्याऽऽज्येन प्रतिनिधिना शेषं तन्त्रं संस्थापयेत्समापयेत्। वाचनिकमिदम्। एवं च कुम्भीशूलादयः संज्ञप्तहोमादयश्चार्थलुप्ता द्रव्यक्रिया निवर्तन्ते। अग्निगोलोपः। आज्यशेषेण समापनस्य प्रकारस्तु स्पष्टमापस्तम्बेनोक्तः—यावन्ति पशोरवदानानि स्युस्तावत्कृत्व आज्यस्य ध्रौवाज्यस्यावद्येदिति। यद्यत्पशोरवदानं वपाहृदयादि तस्य तस्य स्थाने ध्रौवादाज्यादवद्येत्। त्रींस्त्रीनप्यावत्तिनः। हिरण्यशकलास्तु सर्वत्राविशिष्टा एव। अन्यत्र विशेषमाहाऽऽपस्तम्बः—पशुधर्माज्यं भवतीति। तत्राऽऽज्यं पशुधर्मकं भवति। वक्ष्यति च स एव परिभाषायां तद्धर्मा स्यादिति। अतो वपास्थानस्याऽऽज्यस्य पत्नीवते त्वष्ट्रे छागस्य वपाया मेदस इति प्रैषः। तथा पशुपुरोडाशहविषोरपि द्रष्टव्यम्। तथा जातवेदो वपया गच्छ देवानित्येव होमः। एवं प्रयाजानूयाजसमिष्टयजुरादयश्च पाशुका एव भवन्ति न प्राकृताः। अत्र पक्षान्तरमप्युक्तमापस्तम्बेन—अपि वा पर्यग्निकृतमेवोत्सृजेन्न संस्थापयेदिति। अपि वा पर्यग्निकरणान्तं कृत्वा पशुतन्त्रमन्त्यमुत्सृजेत्, न त्वाज्येन शेषं संस्थापयेत्। पशुपुरोडाशाद्यनूबन्ध्यायाः शेषं संस्थापयेत्। एवं पर्यग्निकरणान्ते कृत्स्नतन्त्रे वा संस्थिते पात्नीवतेऽनूबन्ध्यायाः शेषं संस्थापयेत्।

यदि कापेयी[1]कादशिनी स्यादभित
आग्नेयमैन्द्राग्नौ पशू भवतः सारस्वतः सौम्यः
पौष्णो बार्हस्पत्य इत्युत्तरतो वैश्वदेवो
मारुतः सावित्रो वारुण इति दक्षिणतः।

पूर्वं स्वशाखोक्तैकादशिनी व्याख्याता। इदानीं तस्यामेवैकादशिन्यां शाखान्तरोक्तो विशेषः प्रदर्श्यते—कपयो नामर्षयस्तैर्दृष्टा कापेयी सा चेच्चिकीर्षिता स्यात्तदाऽऽग्नेयमग्निष्ठ उपाकृत्य दक्षिणोत्तरयोर्यूपयोरैन्द्राग्नावुपाकृतौ भवतः। तत उत्तरेषु यूपेषु सारस्वतसौम्यपौष्णबार्हस्पत्यानुपाकृत्य दक्षिणयूपेषु वैश्वदेवमारुतसावित्रवारुणानुपाकुर्यात्। व्यत्यासो दक्षिणापवर्गत्वं च पूर्ववत्। नाग्नैन्द्राग्नो विद्यते।

---

[1] क. ख. ज. झ. ञ. पञ्चैका।

**तामेतां कापेया विदुस्तामतिरात्रचरम आलभेत ।**

आलभेतेत्यनन्तरमितिकारोऽध्याहर्तव्यः । कपीनामन्तेवासिनः कापेयाध्यायिनो वा कापेयास्तामेतामेकादशिनीमधिकृत्यैवं विदुः—तामतिरात्रचरम आलभेतेति ।

ननु कोऽयमतिरात्रचरमो नाम क्रतुर्यत्रेयमालभ्या तमेव व्यनक्ति—

**साऽहीनेषु लिङ्गसंयोगात् ।**

सा कापेयी, अहीनेष्वेवाऽऽलभ्या भवति लिङ्गसंयोगाद्धेतोः । अतिरात्रचरमनाम्नाऽहीनस्य स्पष्टवत्प्रदर्शनाच्छब्दशब्दस्य हेतुत्वं नात्र युज्यते । अतः शब्दशब्दं परित्यज्य लिङ्गशब्दप्रयोगः कृतः सूत्रकृता । यत्र फलतश्चरमत्वस्य पर्यवसानं तत्र लिङ्गशब्द इत्याचार्याभिप्रायः । लिङ्ग्यते ज्ञाप्यते चरमत्वरूपोऽभिमतोऽर्थो येन तल्लिङ्गम् । अप्रत्यक्षः शब्दतोऽर्थो यत्रेति यावत् । तस्य संयोगः संबन्धो यत्रेत्यर्थः । अन्तिमातिरात्ररूपं लिङ्गं तस्य संबन्धोऽत्रास्तीति तेष्वेव ह्ययमतिरात्रचरमः शब्दोऽर्थतः संयुज्यते यस्मादतिरात्रा एव चरमास्तेषाम् । यथा वक्ष्यति सप्तदशे प्रश्ने त्रयोदशे खण्डे द्विरात्रप्रभृतय उपरिष्टादतिरात्रा अहीना एकादशरात्रादिति ।

ननु सत्रेष्वप्यविशिष्टमतिरात्रचरमत्वमुभयतोतिरात्रत्वात्तेषाम् । यथा वक्ष्यति अष्टादशे प्रश्ने प्रथमखण्ड उभयतोतिरात्राणि सत्राणीति । तत्तेष्वनयैव भवितव्यं तत्राऽऽह—

**सत्रीयेतरा भवति ।**

सत्राणि याऽर्हति सा सत्रीया, इतरा कापेय्यतिरिक्ता स्वशाखोक्ता सत्रेष्वेव भवति न कापेयी सत्रेषु इत्यर्थः । येषां ह्यतिरात्रचरमत्वमेव विशेषगमकं नातिरात्रप्रथमत्वमपि तेषामेव कापेय्यतिरिक्तैकादशिनीयुक्ततरेति तात्पर्यार्थः ।

अथ षोडशे प्रश्नेऽष्टादशोऽथ पशुक्लृप्तिरित्येतस्मिन्खण्डे गवामयनप्रकरणस्थ एकादशिनीं प्रकृत्य प्रवृत्ते वक्ष्यति तेषु गव्यानतिरिक्तपशून्वैष्णवं वामनमेकविꣳश ऐन्द्राग्नं त्रिणवे वैश्वदेवं त्रयस्त्रिꣳशे द्यावापृथिव्यां धेनुं प्रथमे छन्दोमे तस्या एव वत्सं वायव्यं मध्यम आदित्यामविं वशामुत्तमे मैत्रावरुणीमविवाक्ये प्राजापत्यमृषभं तूपरं महाव्रत आग्नेयमुदयनीय इति लिङ्गायनिकानीति सूत्रे गव्याः पशव उक्तास्तत्र के गव्या इति आकाङ्क्षायामेकादशिनीप्रसङ्गाद्गव्यान्पशूनत्रैवाऽऽह—

**उक्षर्षभो वशा वेहद्धेनुर्वत्सोऽनड्वानिति गोनामभिर्गव्यान्पशून्प्रतीयात् ।**

एतान्यपि गोजातीयानामेतेषां नामानि भवन्त्यतो गव्या एवैते पशवः । यत्र

१ क. °कानिति । २ ङ. ज. झ. ञ. उक्ष ऋषभो ।

गव्याः पशव आलभ्यन्त इति श्रुतावुक्तिर्यत्र च गव्यानतिरिक्तपशूनितिसूत्रोक्तिस्त-त्रैतान्प्रतीयाज्जानीयादित्यर्थः।

स्वैरितरान्।

इतरान्गव्यव्यतिरिक्तान्पशून्स्वैः स्वस्वनामभिरेव तं तमेव प्रतीयान्नतु बहुनामभिर-नेकजातीयाः संगृह्यन्ते किंतु एकजातीयैव व्यक्तिरितिप्रसिद्ध्यर्थमिदं सूत्रम्।

एकदेवतेष्वनन्यदेवतव्यवेतेषु समानः
पशुपुरोडाशो भवति भवति ॥ २४ ॥

इति हिरण्यकेशिसूत्रे नवमप्रश्नेऽष्टमः पटलः।

---

यथा वाजपेये सप्तदश प्राजापत्येषु सप्तदशे प्रश्नेऽष्टादशे खण्ड उक्षाणः पशवो विहितास्तेषु च पुनर्वाजपेये सर्वेषां प्रतिपशु बर्हींषि वपाश्रपण्य इत्यारभ्य वरदानं चेत्यन्तमेतत्समानं सूत्रं पुनः कृतं तत्प्रयोजनमेकदेवतपशुषु एकदेवतेष्वनन्यदेवतव्य-वेतेष्विति परिभाषाया अनित्यत्वज्ञापनार्थम्। तेनैकदेवतपशुष्वपि पक्षे प्रतिपश्वपि पुरोडाशा भवन्तीतिज्ञापनम्। न विद्यतेऽन्यदेवतं व्यवेतं व्यवधायकं येषां तेऽनन्यदे-वताः। एतादृशा य एकदेवताः पशवस्तेषु एक एव पुरोडाशो भवतीत्यर्थः। द्विरुक्तिः प्रश्नसमाप्तिद्योतनार्था।

इत्योकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्नियुक्तवाजपेययाजिसर्वतोमुखया-जिद्विसाहस्राग्निचित्पौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथ-दीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसू-त्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंताप-शामिकायां ज्योत्स्नाख्यायां वृत्तौ नवम-प्रश्नस्याष्टमः पटलः ॥ ८ ॥

---

संपूर्णोऽयं नवमः प्रश्नः।

अथ दशमः प्रश्नः ।

तत्र प्रथमः पटलः ।

---

उक्ता अग्निष्टोमादयः संस्थाः पश्वेकादशिनीयूपैकादशिन्यौ च । अथेदानीमग्निष्टोमादिष्वाकाङ्क्षितं याजमानकर्म वक्तुं शिष्यावधानाय प्रतिजानीते—

**अग्निष्टोमस्य याजमानं व्याख्यास्यामः ।**

अग्निष्टोमस्येति वचनं मुख्यं कर्मणो नामधेयमग्निष्टोम इत्येव तस्यैव यक्ष्य इत्येतया क्रियया साक्षादेवान्वयो न तु ज्योतिष्टोमसोमशब्दयोः, तयोस्तु अग्निष्टोमशब्दात्पूर्वमित्येतादृशार्थज्ञापनार्थम् । यद्यपि यज देवपूजासंगतिकरणदानेष्वितिधात्वनुशासनसूत्रेण यजधातोः पूजाद्यर्थकाल्लटः शतृशानचाविति सूत्रेण लडादेशशानच्प्रत्ययस्तेन निष्पादितेन यजमानशब्देन देवपूजादिकर्मणां कर्ताऽऽत्मनेपदाच्च फलभोक्ता प्रतीयते तथाऽपि योगरूढ्यर्त्विक्साध्यकर्मणि फलभोक्ता यः स एव प्रतीयते । पूर्तेष्वयजत्यर्थेष्वपि यजमानशब्दप्रयोगदर्शनात्, देवपूजाकर्तर्यदर्शनाच्च । तस्मादृत्विक्कर्तृके कर्मणि यः फलभोक्ता स एव यजमानपदवाच्यः । न च कर्ममात्रफलभोक्तरि दृश्यते प्रयोग उपनयनादिषु सामयाचारिकेष्वपि च फलभोक्तरि प्रयोगाभावात् । यजमानस्य कर्म यत्तद्याजमानम् । पत्न्यामपि उपहूतेयं यजमानेति मन्त्रलिङ्गाद्यजमानत्वसत्त्वात्तस्या अपि कर्मात्र संग्राह्यम् । तथा चैवं विग्रहवाक्यं भवति यजमानयोः कर्म यत्तद्याजमानमिति । यद्यपि तत्तद्वेदविहितानि होतृवेदादिसंज्ञाभिर्होत्रादिनियतकर्तृकाण्येवेति व्यवस्थापितं तथाऽपि विशेषप्रमाणैस्तद्बाधने दंपत्योरपि क्वचित्कर्तृत्वं प्राप्तं तन्निरूप्यत इत्यर्थः । अत्राऽऽदौ संकल्पात्पूर्वमेव सामग्र्युपकल्पनमृत्विगुपकल्पनं च कर्तव्यम् । तद्विना क्रत्वसिद्धेः । तथाच सूत्रं द्रव्यप्रकल्पनं यजमानस्य दक्षिणादानं ब्रह्मचर्यं जपाश्चेति । बौधायनेन कल्पसूत्रेऽत्र स्पष्टमिदमुक्तम्—अग्निष्टोमेन यक्ष्यमाणो भवति स उपकल्पयते कृष्णाजिनं च कृष्णविषाणां चेत्यादिना । कर्मान्तेऽपि स पुरस्तादेवोपकल्पयते प्रभूतं तृणं वंशं पश्चाज्यं स्थाल्यमत्रं कुम्भं च कुरीरं चेत्यादि । द्वैधेपि अथातोऽग्निष्टोमं व्याख्यास्यामः स ह स्माऽऽह बौधायनो नादृष्ट्वा राजानं चर्त्विजश्च दीक्षेदितीति । सामग्र्यृत्विक्संपादनोत्तरं कृच्छ्रचान्द्रायणगायत्रीजपतिलहोमप्राणायामकूश्माण्डहोमगणहोमतीर्थयात्रासेतुदर्शनादिभिः सपत्नीकमात्मानं संशोध्य ब्राह्मणैरनुज्ञातो वैराणि च प्रशाम्य संकल्पं कुर्यात् । शुचिना कर्म कर्तव्यमिति श्रुतेः पूतः कर्मण्यो भवतीति श्रुतेश्चाधिकारार्थं प्रायश्चित्तजातं समुच्चितमसमुच्चितं वा पातकानुसारेण कर्तव्यम् । निर्वैरः सर्वभूतेषु यज्ञेष्वधिकृतो भवेदिति स्मृतेर्निर्वैर-

णोऽधिकारः । ननु यद्यभिचरेदित्येवमाद्यभिचरितुः प्रयोगा उपदिश्यन्ते कथं वैरिणोऽनधिकार इति चेदुच्यते—अभिचरितुरपि सर्वजनवैरिणोऽनधिकार एव शास्त्रस्यानन्यगतिकत्वात् । सर्वं चैतच्छोधनमधिकारसिद्ध्यर्थं कार्यं प्रारिप्सितकर्मणो निर्विघ्नपरिसमाप्त्यर्थं ग्रहशान्त्युदकशान्त्यादि कार्यम् । यतः पापानि श्रेयांसि प्रतिबध्नन्ति जन्मार्जितान्यपि विरुद्धानि च विघातमाचरन्ति दृष्टादृष्टोपायैरतः प्राचीनानामज्ञातानां च पापानां द्विजातिकर्मभ्यः पतनहेतूनां तेषां सर्वेषामपनुत्तये निष्कृतिरवश्यं कर्तव्या । अन्ततः केवलं कूश्माण्डहोममात्रमवश्यमशक्तेनापि कार्यमेव । कूश्माण्डैर्जुहुयात्पूतो देवलोकान्समश्नुत इति श्रुतावत्यन्तपवित्रत्वोक्तेः । एतच्च शोधनं बौधायनेन कर्मान्त उक्तम्—अग्निष्टोमेन यक्ष्यमाणः प्रज्यमात्मानं कुर्वीत येनास्य कुशलं स्यात्तेन कुशलं कुर्वीतेति । प्रज्यं प्रगतज्यं धनुः स्वकार्याक्षमं यथा तथा स्वकार्ये शुद्धिसंपादनेन योग्यं कुर्वीतेत्यर्थः । येन शान्तिशान्त्याद्युपायसमूहेन कुशलं विघ्नरहितं कर्म स्यात्तेन कुशलं कर्म कुर्वीतेत्यर्थः । परिसरवर्तिनः सर्वाञ्छिष्टान्सत्कारपूर्वकमाहूय संपूज्य संप्रार्थ्य तेषामभ्यनुज्ञया कर्म कर्तव्यम् । अत्र श्रुतिः—तस्माद्यद्ब्राह्मणोक्तोऽश्रद्दधानो यजते शंयुमेव तस्य बार्हस्पत्यं यज्ञस्याऽऽशीर्गच्छतीति । बौधायनपरिभाषायामपि ये तत्र ब्राह्मणाः सन्तिताननुज्ञाप्य कुर्वन्ति यत्कारी स्यात्समृद्धमेवास्य तद्भवतीति । एतत्सर्वं सोमपूर्वाधान आधानात्पूर्वमेव । यः पूर्वमाहिताग्निः स हविर्यज्ञान्कृत्वा पाकयज्ञानामकरणे तानपि कृत्वाऽग्निष्टोमं कुर्यात् । यदा तु सर्वे हविर्यज्ञा एकवारमनुष्ठितास्तदा तत्करणासंभवे प्रायश्चित्तमात्रं कृत्वाऽपि अग्निष्टोमः कर्तव्यः । तथा च कर्मान्तम्—यान्यृणान्युत्थितकालानि स्युस्तानि व्यवहरेदनुज्ञापयीत वेति । ऋणानि ऋणापाकरणार्थानि नित्यानि कर्माणि उत्थितकालानि अन्तरितकालानि अकृतानीति यावत् । स्युर्भवेयुस्तानि व्यवहरेत्कुर्यात् । अनुज्ञापयीत वा सर्वथोभयं कर्तुमशक्तावनुज्ञया तद्विनाऽपि कुर्वीतेत्यर्थः । अनेनेदं सूचितं भवति क्रमोऽत्राविवक्षित इति । उक्तं चाऽऽश्वलायनेन—दर्शपूर्णमासाभ्यामिष्टीष्टिपशुचातुर्मास्यैरथ सोमेनोर्ध्वं दर्शपूर्णमासाभ्यां यथोपपत्त्येके प्रागपि सोमेनैक इति । यथोपपत्ति यथासंभवं, क्रमोऽत्राविवक्षित इति भावः । इष्टिराग्रयणेष्टिः, पशुर्निरूढः । उपलक्षणमिदं सौत्रामण्याः । हविर्यज्ञानां द्वितीयादिप्रयोगे कालसत्त्वेऽनुष्ठानं तदसत्त्वे प्रायश्चित्तमिति द्रष्टव्यम् । संकल्पात्पूर्वस्मिन्दिनेऽपराह्णे मातृकापूजनपूर्वकं नान्दीश्राद्धं कर्तव्यम् । आभ्युदयिकं स्वपराह्णत इति स्मृतेर्बौधायनोक्तेश्च । तस्यामेव रात्राबुदकशान्तिप्रतिसरबन्धौ कर्तव्यौ बौधायनोक्तेः । तौ च पृथक्पृथक्तन्त्रेण वा । तदुक्तत्वादङ्कुरारोपणमपि । उदकशान्तिप्रतिसरबन्धाङ्कुरारोपणानामकरणे प्रत्यवायाभावः करणे फलाधिक्यमिति द्रष्टव्यम् । संकल्पदिने संकल्पात्पूर्वमेव गणपतिपूजनं पुण्याहवाचनं च कार्यम् । स्नानपवनमन्त्राचमनमन्त्रप्रोक्षणान्यपि संभवे कार्याणि

बौधायनधर्मसूत्रोक्तेः । ततः प्रातरेव मध्याह्न एव वा संकल्पं कुर्यात् । समस्ते क्रतावर्थे श्रूयमाणे यजमानः कामयेत यानि तु कामयतिः श्रावयतीति सूत्रात् । त्रिभिर्नामभिराचार्येण व्यवहारात्संकल्पवाक्ये ज्योतिष्टोमसोमाग्निष्टोमशब्दानां प्रयोगः । अग्निष्टोम इत्येव वक्तव्ये सोमेन यक्ष्यमाणो ज्योतिष्टोमेन स्वर्गकामो यजेतेति नामद्वयेनापि व्यवहारं कृतवतः सूत्रकारस्यानेकनाम्नामुच्चारणे प्रयोजनमदृष्टं विना न ह्यन्यत्संभवति । तच्च संकल्पवाक्ये त्रितयोच्चारणद्वारैव संभवति नान्यथा । तत्राग्निष्टोमशब्देन संस्थानिर्देशः । ज्योतिष्टोमशब्देन स्तोमचतुष्टयनिर्देशः । सोमशब्देन द्रव्यनिर्देशः । प्रथमे प्रयोगे सप्रवर्ग्येणेत्यस्यापि निर्देशो वैकल्पिकपदार्थान्यतरपदार्थपरिग्रहावधारणाय । साम्नः प्राधान्यादमुकसाम्नेत्यस्यापि निर्देशः । दक्षिणाविषये बह्वीनां संख्यानां बहूनां द्रव्याणां च विहितत्वान्नियमार्थं संख्यायाः प्रदेयद्रव्यस्य च निर्देशः ।

पुरस्ताद्दीक्षाभ्यो राजानमाहार्य परिवेवेष्टि ।

दीक्षाया इत्येकवचनं विहाय दीक्षाभ्य इति बहुवचनान्तः प्रयोगो बहुदिनसाध्यदीक्षापक्ष एव मुख्य इति बोधयितुम् । क्लेशबाहुल्यात् । उत्तरसूत्र एतत्सर्वं स्पष्टी करिष्यामः । गिरौ क्रयणमिति पक्षे नाऽऽहारणम् । परिवेषणं तु तत्र गत्वैवेति सोमक्रय एवोक्तम् । आहार्येति णिच्प्रयोगात्परिकर्मिभिर्विप्रैर्वाऽऽहारणीयो न तु स्वयं न च शूद्रैराहरणीयः । न च शूद्रैर्वाऽऽहरणीयो न तु विप्रैः स्मार्तेषु स्पर्शस्यैव निषिद्धत्वेनाऽऽहरणस्य सुतरां निषेधादिति वाच्यम् । एतस्य निषेधस्याकारणस्पर्शनिषेधपरत्वेनैतन्निषेधपरत्वाभावात् ।

समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत् ।
शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन्पतत्यधः ॥

इति शूद्राहरणनिषेधके शातातपवचन आदिपदेन सोमादेरपि संगृहीतत्वेन सोमाद्याहरणस्यापि निषेधसिद्धेश्च । राजपदं राजोपचारैः राजानयनं बोधयितुम् । ते च रथच्छत्रातपत्रसेवकवाद्यघोषाद्याः । परिवेवेष्टि भोजयति सोमात्मिकया देवतया भोजनं कृतमिति भावना कर्तव्या । पयसौदनेनेत्यापस्तम्बः । पयसोपसिक्तेनौदनेनेति तदर्थः । तथा चोभयं मिलितमेव द्रव्यं द्रव्यभेदो न विवक्षितः । अन्यथा चकार उक्तः स्यात् । पायसौदनेनेति पाठे पयसि शृत ओदनो ग्राह्यः । अत्र सूत्रान्तरे विशेषः—राजानमाहार्य प्रत्यहं प्रातःसायमाक्रयान्नमः सोमाय राज्ञ इति राजानं संपूज्य पायसौदनेन परिवेवेष्टीति । अत्राऽऽवाहनादिविसर्गान्तषोडशोपचारात्मिकैव पूजा । आवाहनं विना पूजाया असंभवात् । विसर्जनं विना क्रयाद्यसंभवात् । नहि यावत्पर्यन्तं देवतासत्त्वं तावत्पर्यन्तं क्रयः कण्डनादिकं च संभवति । या तु तत्र तत्र राजशब्दप्रवृत्तिर्दृश्यते सा च भावनामात्रपरा ज्ञेया । अत्र तु पूजनविधानाद्देवतात्वाभावाय विसर्जनमावश्य

कम्। अन्यथा क्रयादिनिर्वाहो न स्यात्। आवाहनं विना पूजनमनुपपन्नमिति कृत्वाऽऽवाहनमप्यावश्यकम्। अत एव विसर्जनमपि। यद्यपि विसर्जनस्यापि षोडशोपचारान्तर्गतत्वेन पूजासंपादकत्वात्संपूज्य परिवेवेष्टीत्यनेन पूजोपचारान्तर्गतविसर्जनोत्तरभावित्वं भोजनस्य प्राप्तं तथाऽपि विसर्जनानन्तरं देवताभावाभावेन परिवेषणासंभवाद्विसर्जनात्पूर्वमेव परिवेषणं कर्तव्यम्। अस्मिन्पक्षे नैवेद्यपदार्थो भिन्न एव। परिवेषणं तु महोपहारस्थानीयमिति। अथवा संपूज्येत्यनेन दीपान्तैव पूजोच्यते। पायसौदनेन परिवेवेष्टीति नैवेद्यार्थमेव। अस्मिन्कल्पे न पृथङ्महोपहारः। अवशिष्टोपचारास्त्वनन्तरं भवन्त्येव।

तद्दीक्षासु निवर्तते।

तत्परिवेषणं दीक्षासु दीक्षासंबद्धदिवसेषु, बहुवचनं त्र्यादिबहुदीक्षाभिप्रायेण। तेनैकस्यामपि दीक्षायां परिवेषणनिवृत्तिरस्त्येव। निवर्तते निवृत्तं भवति। अनेन बहुवचनेनेदमपि ज्ञायते बहुदीक्षापक्ष एव मुख्यः क्लेशबाहुल्यादिति। नहि क्लेशबहुलतपो विना दुःखप्रदं पापं नश्यति यथा लोके पाटनमन्तरेण विषमव्रणानां नोपशान्तिस्तद्वत्। न च ज्योतिष्टोमे त्र्यहं नाश्नाति त्र्यहं नाश्नातीत्यादिनोक्तं तपोऽध्वर्योर्युक्तं तस्य दुःखात्मकत्वेन परिक्रीतपुरुषैः कर्तुमुचितत्वात्, दुःखत्वादेव फलभोक्तृसंस्कारत्वाभावाद्यजमानस्य न युक्तमिति वाच्यम्। भाविनः सुखरूपस्य फलस्य प्रतिबन्धकं दुःखजनकं यत्पापं तस्य नाशकत्वेन दुःखरूपस्यापि तपसः स्वामिसंस्कारत्वसंभवात्। अस्मिन्नर्थे वाक्यशेषगतं लिङ्गं कल्पसूत्रकारैरेवोदाहृतं यदा वै दीक्षितः कृशो भवत्यथ स मेध्यो भवति यदाऽस्मिन्नन्तरं किंचिन्न भवत्यथ स मेध्यो भवति यदाऽस्य कृष्णं चक्षुषोर्नश्यत्यथ स मेध्यो भवति यदाऽस्य त्वचाऽस्थि संधीयतेऽथ स मेध्यो भवति पीवा दीक्षते कृशो यजते यदस्याङ्गानां मीयते जुहोत्येव तदिति विज्ञायत इति। मीयते क्षीयत इत्यर्थः। जैमिनिनाऽपि तपश्च फलसिद्धत्वाल्लोकवत्। वाक्यशेषश्च तद्वदितिसूत्राभ्यामुक्तम्। चकारो या(राद्या)जमानास्तु तत्प्रधानत्वात्कर्मवदिति सूत्राद्याजमानपदं वचनलिङ्गविपरिणामेनानुषज्यते। तथा च तपश्च याजमानमिति वाक्यं भवति फलसिद्धत्वात्फलोत्पत्तिप्रतिबन्धकदुरितनिवर्तनेन फलसाधकत्वात्। लोकवल्लोकसिद्धमेतद्यः फलभोक्ता स एव तपः करोतीति। वाक्यशेषश्च तद्वदित्यस्यार्थस्तु वाक्यशेषोऽपि लौकिकप्रमाणतुल्योऽस्ति न केवलं लौकिकप्रमाणमात्रमिति। अनेन तपसो दुःखात्मकत्वेन परिक्रीतपुरुषैरेव कर्तुमुचितं दुःखत्वादेव फलभोक्तृसंस्कारत्वाभावः। अतो न यजमानस्य युक्तमिति शङ्का परिहियते। एतत्सूत्रद्वयं तृतीयाध्यायेऽष्टमे पादे वर्तते। वाक्यशेषो यदा वै दीक्षितः कृशो भवत्यथ स मेध्यो भवतीत्यादिः। ननु पुरस्ताद्दीक्षाभ्य इत्येतावतैव दिक्षादिवसेषु अर्थान्निवृत्तौ सत्या-

मयं निषेधो व्यर्थ इति चेत्सत्यम् । तस्य दीक्षादिवसव्यतिरिक्तक्रयादिनात्प्राक्प्रायणीयादिवसेऽपि कर्तव्यताज्ञापनार्थत्वेन वैयर्थ्याभावात् । तथा चाऽऽपस्तम्बः--अत्र राजानमाहृत्य पयसौदनेन परिवेविषन्त्याक्रयादिति । अत्रेत्यस्य द्वादशसंभारयजुर्होमानन्तरमित्यर्थः । आक्रयादित्यनेन दीक्षादिवसेष्वपि परिवेषणं प्रापितं तावन्मात्रमनेन निषिध्यते । सूत्रे परिवेवेष्टीत्येकवचनाद्यजमान एव न पत्नी नचर्त्विजः । प्रथमे दीक्षादिवसेऽपि आहारणपरिवेषणे भवत एव । तद्दीक्षासु निवर्तेत इत्यनेन सूत्रान्तरप्राप्तदीक्षादिवससंबन्धिसायंकालिकपूजनपरिवेषणमात्रनिवृत्तिः क्रियते । एतेनैकदीक्षापक्षे निषेधस्य निरवकाशत्वापत्तिः परिहृता भवति । प्रायणीयादिवसेऽपि प्रातरेव पूजनपरिवेषणे भवतो न तु सायम् । आक्रायादित्यनेन क्रयात्प्रागेव तत्कर्तव्यतायां सिद्धायां क्रयोत्तरं तन्निवृत्तेरर्थत एव सिद्धत्वात् । अत्र सक्षेदं पश्येत्यनेन राज्ञ उपस्थानं कर्तव्यम् । यथारूपमितर इत्यनेनाविनियुक्तमन्त्राणां लिङ्गानुरोधेन विनियोगः कर्तव्य इत्यस्यार्थस्य सूत्रकृता प्रदर्शितत्वात् । आपस्तम्बोक्तरीत्या विनियोगस्तु सूत्रकृतैव ज्ञापनेन निराकरिष्यमाणत्वान्न भवति । देवयजनाध्यवसानोत्तरं वोपस्थानम् । सक्षेत्यादयः शब्दा अग्निवायुसूर्यवाचकाः । सखादिशब्दास्तासामेवोपस्थानमिति विद्यारण्याः ।

ब्राह्मणानार्षेयानृत्विजः षोडशैकैकशो वृणीते ।

ब्राह्मणानामेव स्मृतित आर्त्विज्ये सिद्धे पुनर्ब्राह्मणवचनमादरार्थम् । अथवा तस्माद्वाजपेययाज्यार्त्विजीन इति श्रुतेः क्षत्रियस्यापि वाजपेययाजिनः प्राप्तिरत्र शङ्किता तन्निरासार्थम् । अथवा सप्तदशस्य ऋत्विग्भ्योऽन्ये चमसाध्वर्यवस्तेषामनृत्विजामपि ब्राह्मणानामेव चमसाध्वर्यूणां वरणनिश्चयार्थम् । आर्त्विज्यं त्रयाणामपि वर्णानां विद्वत्त्वाविशेषात् । याजनं ब्राह्मणस्येतिस्मृत्युक्तस्तु नियमः पुरुषार्थ इति न तदतिक्रमे क्रतुवैगुण्यमिति प्राप्ते यज्ञं व्याख्यास्याम इत्युपक्रम्य ब्राह्मणानामार्त्विज्यमिति यज्ञे सूत्रकारस्मरणं क्रत्वर्थत्वेनैव नियमबोधकम् । अत एव रामायणे—

क्षत्रियो याजको यस्य चण्डालः स विशेषतः ।
कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः ॥ इति ।

सुरा देवताभूता ऋषय ऋत्विग्भूता इत्यर्थः । देवताया अभोक्तृत्वात्क्रतुवैगुण्य एव तात्पर्यम् ।

तथा— राजयाजकयाज्यस्य विनश्यति यथा हविः ॥

इत्यपि वचनं क्रतुवैगुण्यबोधकमेव । एतेन क्षत्रियादिवृत्त्युपजीविनोऽपि निरस्ताः । ब्राह्मणानामार्त्विज्यमित्यत्र लिङ्गान्यपि ब्राह्मणानामिदं९ हविरित्येवमादीनि द्रष्टव्यानि ।

तस्माद्ब्राह्मणानामेवाऽऽर्त्विज्यमिति सिद्धान्तः । ब्राह्मणवचनमापद्यपि क्षत्रियादिनिवृत्त्यर्थमिति मीमांसकाः ।

द्विजोत्तमानामार्त्विज्यं न तु क्षत्रियवैश्ययोः ।
ब्राह्मणार्त्विज्यनियमः क्रत्वर्थेनापि हि स्मृतः ॥ इति मिश्राः ।

द्वादशाध्याये चतुर्थपादे जैमिनिरपि प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यादिति सूत्रेणाऽऽह । कात्यायनोऽपि ब्राह्मणा ऋत्विजो भक्षप्रतिषेधादितरयोर्दर्शनाच्चेति । तद्वै नाब्राह्मणः पिबेदग्नौ ह्यधिश्रयन्ति तस्मान्नाब्राह्मणः पिबेदिति भक्षप्रतिषेधादित्यर्थः । एवं च क्षत्रियवैश्ययोर्भागस्य होमविधानं न भक्षणमिति भक्षप्रतिषेधात्सिध्यति । द्वयोर्वै देवा अहैव देवा अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवास्तेषां द्वेधा विभक्त एव यज्ञ आहुतय एव देवानां ब्राह्मणानां शुश्रुवुषामनूचानानामाहुतिभिरेव देवाः श्रीणीति ( ! ) दक्षिणाभिर्मनुष्यदेवान्ब्राह्मणानिति । ब्राह्मणानामेवाऽऽर्त्विज्यमित्येतस्मिन्नर्थे दर्शनमेतत् । दक्षिणाशब्दः परिक्रयार्थे वर्तते । तेन ब्राह्मणानामेवाऽऽर्त्विज्यमिति ।

स्मृतिरपि—षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ।
अध्यापनं याजनं च विशुद्धाच्च प्रतिग्रहः ॥ इति ।

षण्णां कर्मणामिति निर्धारणषष्ठ्यौ । अस्य विप्रस्य । पूर्वत्र तस्यैवोपक्रान्तत्वात् । जीवनानिर्वाहेऽध्यापनयाजनप्रतिग्रहाः कर्तव्याः । जीवननिर्वाहे तु न । अकरणे प्रत्यवायो नास्तीति भावः । आर्षेया ये स्वकीयमृषिं जानन्ति । तथा च वाधूलवैखानसौ—आर्षेयान्वृणीते ये स्वानृषीञ्जानन्तीति । एतेनाप्रज्ञातबान्धवानां निवृत्तिः । शुश्रुवांसश्चाऽऽर्षेयाः । एष वै ब्राह्मण ऋषिरार्षेयो यः शुश्रुवानिति श्रुतेः । ऋषयो मन्त्रद्रष्टारः । तथा च नैरुक्ताः—ऋषिर्दर्शनात्स्तोमान्ददर्शेत्यौपमन्यवस्तद्यदेनांस्तपस्यमानान्ब्रह्म स्वयंम्भ्वभ्यानर्षत्त ऋषयोऽभवन्तदृषीणामृषित्वमिति । आदशमात्पुरुषादव्यवच्छिन्नमार्षं येषां त आर्षेया इत्यपि लक्षणं केचिदाचार्याः प्राहुः । शुश्रुवान्सार्थवेदत्रयाध्यायी सार्थस्वशाखामात्राध्यायी वा । ब्राह्मणानार्षेयानित्यन्येषां शास्त्रान्तरोक्तानामृत्विग्लक्षणानामुपलक्षणम् । तान्यत्र प्रदर्श्यन्ते । तत्र धर्मसूत्रम्—नाननूचानमृत्विजं वृणीते न पणमानमिति । साङ्गस्य वेदस्याध्येता प्रवक्ता वाऽनूचानः । न, अनूचानः, अननूचानः । अननूचानमृत्विजं न वृणीते । नाप्येतावद्देयमिति परिभाषमाणमित्यर्थः । द्वौ नञावनूचानवरणस्यात्यन्तावश्यकतां बोधयतः । धर्मसूत्रे वचनमौपासनहोमपार्वणस्थालीपाकवैश्वदेवादिष्वप्येतादृश एवर्त्विगितिज्ञापनार्थम् । एतेनैतेषु ऋत्विक्कर्तृकताऽपि पक्षेऽस्तीति ज्ञायते । शाङ्खायनोऽपि—आर्षेयान्यूनोऽनूचानार्त्विजो वृणीते सोमेन यक्ष्यमाणश्चतुरः सर्वान्वेति । भरद्वाजोऽपि—वसन्ते ज्योतिष्टोमेन

वक्ष्यमाणो ब्राह्मणानार्षेयानृत्विजो वृणीते यूनः स्थविरान्वाऽनूचानानङ्गहीनानूर्ध्ववाच इति । आपस्तम्बोऽपि-ब्राह्मणानार्षेयानृत्विजो वृणीते यूनः स्थविरान्वाऽनूचानानूर्ध्व-वाचोऽनङ्गहीनानिति । यूनस्तरुणान् । तेषामेव प्रकृतोपयोगात् । अत एव न जीर्द्रं-श्याः(नातिवृद्धाः) । न च बालाः । त्रिंशद्वर्षोतरं षष्टिवर्षपर्यन्तं स्थविरत्वम् । एताभ्यां कर्मकरणसामर्थ्यं लक्ष्यते । बालवृद्धयोः क्रियासु पाटवं न स्यादिति युवस्थविरग्रहणम् । नाननूचानमृत्विजं वृणीत इत्यनेनैव सिद्धे पुनर्वचनम्, अनूचानो द्विविधो वेदानूचानः कर्मानूचानश्च, तत्र केवलवेदानूचानोऽशक्तेरर्थान्निषिद्धः, केवलकर्मानूचानस्य शक्त-त्वात्प्राप्तिः स्यात्सा मा भूत्किं तु द्विविधानूचानत्वरहितस्यापि निषेधो यथा स्यादित्ये-तदर्थम् । मार्गादनपगतोऽनूचान इति भरद्वाजः । एतेनोभयविधानूचानस्यापि संग्रहः प्रदर्शितः। ऊर्ध्ववाच उरः कण्ठः शिर इतित्रिस्थानकरणसमर्था वाग्येषां त ऊर्ध्ववाचः। अनङ्गहीना अविकलाङ्गाः । आश्वलायनः—ऋत्विजो वृणीतेऽन्यूनातिरिक्ताङ्गान्ये मातृतः पितृतश्चेति यथोक्तं पुरस्ताद्यून ऋत्विजो वृणीत इत्येक इति । यथोक्तं पुरस्ता-दित्यनेन प्रदर्शितं सूत्रं तु ये मातृतः पितृतश्च दशपुरुषसमनुष्ठितविद्यातपोभ्यां पुण्यैश्च कर्मभिर्येषामुभयतो नाब्राह्मण्यं निनीषेयुः पितृत इत्येक इति । लाट्यायनद्राह्यायणावपि-ऋत्विगार्षेयोऽनूचानः साधुचरणो वाग्म्यन्यूनाङ्गोऽनतिरिक्ताङ्गो द्वयसतोऽनतिकृ-ष्णोऽनतिश्वेत इति । ऋतौ यजन्तीत्यृत्विजः । तथा च निरुक्तम्—ऋत्विङ्नामान्युत्त-राण्यष्टावृत्विक्कस्मादीरण ऋग्यष्टा भवतीति शाकपूणिर्ऋतुयाजी भवतीति वेति । छन्दोगश्रुतौ प्रकारान्तरेणापि निर्वचनमुक्तम्—प्रजापतिरकामयत बहु स्यां प्रजा-येयेति स आत्मन्यृत्व्यमपश्यत त ऋत्विजोऽसृजत यदृत्वियादसृजत । तदृत्विज ऋत्वि-क्त्वमिति । ऋत्विग्दधृगित्यनेन ऋत्विक्शब्दो निष्पाद्यते । आर्षेयानूचानौ व्याख्यातौ । साध्विति प्रशंसायाम् । चरणशब्देन कर्म । तथा च साधुचरण इत्यस्य प्रशस्तकर्मे-त्यर्थो भवति । वाग्मी वक्तुं समर्थः । संस्कृतवाक्च शब्दार्थन्यायावगतो वाचः संस्कारः । यो हि संस्कृतां वाचमुदीरयति स वाग्मी, यो बहुतरं वचनमनर्थकं न भाषते सोऽपि वाग्मी । वाचो ग्मिनिरिति ग्मिनिप्रत्ययः । यो हि बहुतरमनर्थकं भाषमाणः स न वाग्मी । स तु वाचालो वाचाट इत्युच्यते । आलजाटचौ बहुभापि-णीति पाणिनिस्मरणात् । कुत्सित इति वक्तव्यमिति वार्तिकात्कुत्सितार्थ एतौ प्रत्ययौ । यो हि पृष्टः सन्प्रतिवचनं न्यायेन ददाति मतिद्वैध उत्पन्ने संशयच्छेत्तेति निर्गलि-तोऽर्थः । ऊनमेव न्यूनं न्यूनान्यङ्गानि यस्य स न्यूनाङ्गः, न न्यूनाङ्गोऽन्यूनाङ्गः । अति-रिक्तमधिकमङ्गं यस्य सोऽतिरिक्ताङ्गः, नातिरिक्ताङ्गोऽनतिरिक्ताङ्गः । अङ्गानां न्यूनत्व-मतिरिक्तत्वं च सामुद्रिकशास्त्रोक्तपुरुषलक्षणसिद्धम् । प्रमाणे प्रमाणे द्वयं द्वयं समं यस्य स द्वयसस्तस्मादप्यन्यूनातिरिक्ताङ्ग इत्यर्थः । प्रमाणे द्वयसज्दघ्नज्मात्रच इति पाणि-निसूत्रात्प्रमाणेऽर्थे द्वयसच्प्रत्ययः । तस्मात्तसिः । केवलाद्द्वयसच्प्रत्ययात्तसिश्छान्दसः ।

नातिकृष्णोऽनतिकृष्णः। नातिश्वेतोऽनतिश्वेतः। कृष्णश्वेतशब्दौ वर्णवाचिनौ वयोवाचिनौ च नातिबालो नातिवृद्ध इति। याज्यस्यापि लक्षणमाहतुः—याज्यश्च प्रथमैस्त्रिभिर्गुणैर्व्याख्यात इति। याज्यो यष्टा यजमान इति यावत्। सोऽपि एवंलक्षणो भवति यादृग्लक्षणा ऋत्विजः। प्रथमैर्वा त्रिभिर्गुणैर्व्याख्यातो भवति लुप्तविभाषं सूत्रम्। गुणग्रहणं क्षत्रियवैश्ययोर्यथासंभवं गुणा ग्राह्या इत्येतदर्थम्। बौधायनः—अथर्त्विजां वरणं विज्ञायते ब्राह्मणा ऋत्विजो योनिगोत्रश्रुतवृत्तसंपन्ना अविगुणाङ्गा अत्रिकिणिनो न परिखाक्रान्ता नान्तगा नान्त्य(न्त)जा नाननूचाना न हालेय[वालेय]-पुत्रिकापुत्रपरक्षेत्रसहोढकानीनानुजावरद्विप्रवरा आङ्गिरसोऽध्वर्युर्वासिष्ठो ब्रह्मा विश्वामित्रो होताऽयास्य उद्गाता कौषीतकः सदस्यो वसिष्ठा भृग्वङ्गिरसो वा योनिवृत्तविद्याः प्रमाणमित्येके तांश्चेद्वृणीताव्यापन्नाङ्गानेव वृणीताकुनखिनमध्वर्युमकिलासिनं ब्रह्माणमषण्ढं होतारमकरालमुद्गातारमशिपिविष्टं सदस्यमिति। योनिः परिशुद्धयोनिः, गोत्रं सद्वंशः, श्रुतमध्ययनं, वृत्तमाचारः। एतैः संपन्ना युक्ताः। अविगुणाङ्गा अविकलाङ्गाः। अत्रिकिणिनः, त्रयः किणा येषां सन्ति ते त्रिकिणिनस्तद्भिन्नाः। किणा आघातादिना जातानि देहगतचिह्नानि। अत्रत्यत्रिकिणशब्देन मल्लयुद्धसंनाहार्थास्फोटनज्याघातभारादिवहनैरुत्पन्नाः किणा विवक्षिताः। एतादृशकिणमध्य एकेनापि किणेन युक्ता न भवेयुरित्यर्थः। इदमुपलक्षणम्। अविहितकार्येषु भूयोभ्यासजनितचिह्नयुक्ता अपि न भवेयुरिति बोध्यम्। न परिखातिक्रान्ताः, परिखा मर्यादा समुद्रवेला तामतिक्रान्ताः समुद्रयायिनो न भवेयुरित्यर्थः। नान्तगाः, अन्तं प्रत्यन्तं देशं म्लेच्छदेशमिति यावत्। तं गच्छन्तीत्यन्तगाः, ते न भवेयुरित्यर्थः। अन्तमन्तवर्णं गच्छन्ति शूद्रस्त्रियं गच्छन्तीति यावत्। तेऽपि न भवेयुः। अन्तमित्युपलक्षणम्, अगम्यां स्त्रियं ये गच्छन्ति तेऽपि न भवेयुरिति। नान्तजा अन्तजाः पूर्वोक्तदेशजातास्ते न भवेयुरित्यर्थः। ये शूद्रस्त्रियामुत्पन्नास्तेऽपि न भवेयुः। नाननूचाना अननूचाना अश्रोत्रियास्ते न वरणीयाः। हलेन कृषिं कृत्वा ये जीवन्ति ते हालेयाः। वालतूर्णप्रकीर्णकादिकं विक्रीय ये जीवन्ति ते वालेयाः।

कन्यादानसमये—अस्या यो जायते पुत्रः स मे पुत्रो भविष्यति।

इत्यभिसंधानेन दत्तायां पुत्रिकायां जाताः पुत्रिकापुत्राः। परक्षेत्रे जारेणोत्पन्नाः परक्षेत्राः। विवाहसमय एव मात्रा सह गर्भस्थः सन्नेव दत्तः सहोढः। कन्यायामविवाहितायामेव जातः कानीनः। अनुजस्य गुणभूतो ज्येष्ठ आनुजावरः। एकस्मिन्गोत्र उत्पन्नोऽपरस्मिन्गोत्रे दत्तो द्विप्रवरः। एतान्हालेयादीनृत्विक्त्वेन न वृणीतेत्यर्थः। वसिष्ठा भृग्वङ्गिरसो वेत्ययं पक्षस्तत्तद्गोत्रविशिष्टर्त्विगभावे द्रष्टव्यः। यद्यन्मुख्यानां गोत्रं तदेव तत्तद्गणस्थानां पुरुषाणां त्रयाणां त्रयाणाम्। इदं च मुख्यानां गोत्रनियमपक्षे। योनिः परिशुद्धयोनिः। वृत्तमाचारः। विद्या वैदिकविद्या च प्रमाणं वरणयो-

ग्यताप्रयोजकमित्येक आचार्या वदन्तीत्यर्थः। चकारः कर्मकौशल्यसंग्रहार्थः। तान्यो-निवृत्तविद्याकर्मकौशल्यसंपन्नान्यदि वृणीत तदाऽव्यापन्नाङ्गानेव वृणीतेत्यर्थः। योन्या-दिग्रहणं नागोत्रनियम इतिज्ञापनार्थम्। कुनखी कुत्सिता ये नखास्तद्वान्, तद्भिन्नोऽ-कुनखी। किलासः कुष्ठविशेषस्तद्वान्, तद्भिन्नोऽकिलासी। षण्ढो नपुंसकस्तद्भिन्नः। करालो घर्घरस्वरो विकरालमुखश्च तद्भिन्नोऽकरालः। शिपिविष्टो रोगविशेषः। अध्वर्य्वादीनामकुनखित्वादिप्रदर्शनमत्यन्तापत्तावपि एतद्दोषविशिष्टाः सर्वथैव तत्तदृत्वि-ग्विषये परित्याज्या एवेतिदोषाधिक्यज्ञापनार्थम्। कुनखेत्युपलक्षणं क्षतर(स)हित-हस्तत्वस्य।

स्मृत्यन्तरे—रजस्वलायां भार्यायामार्त्विज्यं श्राद्धभोजनम्।

यात्रामम्बुनिधिस्नानं वर्जयेत्तत्पतिः सदा॥ इति।

गर्गोऽपि—क्षुरकर्म तथाऽऽर्त्विज्यं यात्रामभ्यङ्गमेव च।

देवतार्चां परगृहे सागरस्नानमेव च॥

श्राद्धभुक्तिं वर्जयेच्च यदि पत्नी रजस्वला। इति।

शाट्यायनिः—रजस्वलापतिर्यात्रामार्त्विज्यं श्राद्धभोजनम्।

सिन्धुस्नानं तथाऽभ्यङ्गं क्षुरकर्म विवर्जयेत्॥ इति।

स्मृत्यन्तरेऽपि—रजस्वलाऽङ्गना यस्य गर्भिणी वा यदा भवेत्।

न यज्ञे वरणे योग्यो गालवो मुनिरब्रवीत्॥ इति।

यज्ञग्रहणमाधानादिश्रौतकर्मणां गार्ह्यस्मार्तकर्मणां चोपलक्षणम्।

देवलः—महागुरुनिपाते तु काम्यं किंचिन्न वा(चाऽऽ)चरेत्।

आर्त्विज्यं ब्रह्मचर्यं च श्राद्धं देवक्रियां तथा॥ इति।

एतत्सपिण्डनात्प्रागिति केचित्। तदुत्तरमपीत्यन्ये।

संग्रहे—तैलङ्गकर्णाटकलिङ्गवङ्गसंबन्धिनो माथुरियाश्च विप्राः।

श्राद्धे विवाहे खलु यज्ञपा[1]के न पूजनीया अपि शंभुतुल्याः॥ इति।

अत्र मूलं चिन्त्यम्।

यत्तु कौर्मे—नैकगोत्रे हविर्दद्याद्यथा कन्या तथा हविः।

इति तच्छ्राद्धप्रकरणपठितत्वात्तद्विषयमेवेति स्मृतिव्याख्यातारः। बौधायनः—सर्वोऽप्यृत्विगहतं वासः परिधाय शुचिः पूतो मेध्यो विपाप्मा ब्रह्मचारी सहकारिप्र-त्यय आचतुर्थादमिसमीक्षमाण इति।

संग्रहे—युक्ताः सदाचाररता वेदवेदाङ्गपारगाः।

दम्भासूयादिरहिताश्छद्मपाखण्डवर्जिताः॥

---

१ ग. पाकयज्ञे।

शान्ता दान्ता अनूचाना आर्षेया वाग्मिनस्तथा।
अनङ्गहीना धर्मिष्ठाः साधवः सत्यवादिनः॥
ब्रह्मचर्ययुताः स्नाताः कुशलाः सर्वकर्मसु।
ईक्षमाणा आचतुर्थे कर्माण्यहतवाससः॥
शुचयो ब्राह्मणाः पूता ऋत्विजः कर्मसु स्मृताः। इति।

ऋतौ विहितकाले यजन्ति यागानुकूलव्यापारं कुर्वन्तीति ऋत्विक्शब्दार्थः। यागस्य द्रव्यत्यागरूपस्य यजमानकर्तृकत्वादिति ध्येयम्। तत्रर्त्विक्शब्दप्रवृत्तौ वरणमात्रं न निमित्तं चमसाध्वर्युष्वतिप्रसङ्गात्। नचैवं सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदशर्त्विज इति सप्तदशसंख्याविरोधोऽपि नात्रास्ति नच सप्तदशर्त्विज इति वचनं दर्शपूर्णमासयोश्चत्वारश्चातुर्मास्यानां पञ्च पशुबन्धस्य षट्सौम्यस्याध्वरस्यर्त्विजामेकदेशसंख्यैव सप्तदशत्वात्मिकेति स्तोतुमवयुत्यानुवादः। तथा च वरणमात्रं निमित्तमादाय चमसाध्वर्युष्वप्यृत्विक्त्वमस्त्विति वाच्यम्। महासंख्योपादानं यत्र यत्र तत्रैवावयुत्यानुवाद इत्यस्य नियमस्यैकं वृणीते द्वौ वृणीते त्रीन्वृणीत इत्यादिषु सर्वेषु सत्स्वेव (?) प्रकृते महासंख्यानुपादाने स्वेकदेशसंख्यात्वस्यैवाप्रतीतेरवयुत्यानुवादत्व इत्यस्य वक्तुमशक्यत्वात्¹। तथा च सिद्धं वरणमात्रं न निमित्तमिति। तर्हि किमिति चेदिति उच्यते तस्यैवाभावात्तदपि वक्तुमशक्यम्। नच मध्यतःकारिणां चमसाध्वर्यव इति समाख्यया चमसाध्वर्यूणां तत्तदृत्विग्वरणीयतया यजमानकर्तृकवरणाभावाद्ब्रह्मादिष्वनुवृत्तं चमसाध्वर्युभ्यो निवृत्तं यजमानकर्तृकवरणत्वमेवास्त्विति वाच्यम्। तत्तदृत्विक्संबन्धिपदार्थकरणमात्रेण समाख्योपपत्त्या तेषामपि यजमानकर्तृकवरणसत्त्वेन वरणस्य च कुत्राप्यृत्विक्कर्तृकताया अदर्शनेन च चमसाध्वर्युव्यावृत्तत्वाभावात्। तर्हीतोऽन्यत्किमिति साङ्गप्रसिद्धभाषया भीषयसि नाहं बिभेमि ब्रह्मादिगतवरणविशेषलाभात्। स च चमसाध्वर्युवरणकरणकमन्त्रगतलिङ्गबलात्कल्प्यः। तच्च लिङ्गं रश्मिपदमेवेत्यग्रे वक्ष्यते। इदमेवामुख्यमार्त्विक्त्वमित्यप्यग्रे वक्ष्यते। ब्रह्मादिष्वनुवृत्तं चमसाध्वर्युभ्यो निवृत्तं वरणावान्तरसामान्यम्। ऋतुयजनमपि ब्रह्मादिगतमेवर्त्विक्शब्दस्य निमित्तं दृतिहरशब्दस्येव पशुगतं दृतिहर्तृत्वम्। एवं च प्रसिद्धावयवत्वात्संख्याश्रुतेश्चर्तुयजनविशेषनिमित्तक एवर्त्विक्शब्दः। एवं च प्रसिद्धावयवशक्तित्यागः, अदृष्टशक्त्यन्तरकल्पनाप्रसङ्गः, ऋत्विग्दधृगिति कर्तरि क्विन्नन्तनिपातनशास्त्रविरोधः, ऋत्विग्यज्ञकृदुच्यत इतिस्मृतिविरोधश्च न भवति। सप्तदशत्वश्रुतिश्चोपपादिता भवति। वरणविधिश्चैवं प्रसिद्धपदार्थको भवति। यावदुक्तं भवति याजकान्वृणीत इति तावदृत्विजो वृणीत इति। तेन नाप्रसिद्धपदार्थकत्वम्। वरणनिमित्तकत्वे तु यूपादिवद-

---

१ च. °त्ति च।

प्रसिद्धपदार्थकत्वं वचनव्यक्तिविपर्यासश्चैवं स्यात्। नचैतन्न्याय्यम्। अध्वर्य्वादिश-ब्दानां तु प्रसिद्ध्यभावाद्य एवाध्यवसायादेव होतृत्वाध्वर्युत्वादिभिः क्रतुस्वामिपरिक-ल्पितास्त एव होत्रध्वर्य्वादय इति। तस्मात्प्रसिद्धावयवत्वात्संख्याश्रुतेश्चर्त्वियजनविशेष-निमित्तक एवर्त्विक्शब्द इति। एवं च चमसाध्वर्युष्वतिप्रसङ्ग इत्येतद्वारितं भवति। विस्तरस्त्वाकरे द्रष्टव्यः। एतत्सर्वमाह तृतीयाध्याये सप्तमे पादे जैमिनिः—कर्मकार्या-त्सर्वेषामृत्विक्त्वमविशेषादिति न परिसंख्यानादिति च। यद्यप्यध्वर्युसूत्रार्थस्तु अविशे-षात्, न विद्यते विशेषो यत्र तदविशेषं तस्मात्। इदं च कर्मकार्यादित्येतस्य विशे-षणम्। कर्मकार्यात्कर्मकरस्य भावः कर्मकार्यं तस्मात्कर्मकर्तृत्वात्। अविशेषात्तुल्या-त्कर्मकार्यात्सर्वेषां चमसाध्वर्युसहितानामृत्विक्त्वमिति पूर्वसूत्रार्थः। न चमसाध्वर्युष्वृ-त्विक्त्वं ब्रह्मादिगतर्त्विक्त्ववन्नास्ति सप्तदशसंख्यापरिसंख्यानादिति उत्तरसूत्रार्थः। उद्गी-थमुद्गायतीत्युद्गाता, इत्याद्याः कर्मनिमित्ताः संज्ञाः। ब्रह्मादिषु तु कर्मणो बृंहणात्, अवेक्षणेन बन्धनान्नियमादिति यावत्। स ब्रह्मेत्यादिव्युत्पत्त्या ब्रह्मादयोऽपि होताऽ-ध्वरं युनक्तीध्वर्युः, अग्निर्देवानावहति अग्निमग्न आवह सोममावहेत्येवमग्निना देवाना-वाहयतीति, अध्वरं युनक्तीत्यत्र कर्त्रन्तरसद्भावे सति यावद्भिर्यत्र प्रयोगकार्यं निर्व-र्त्यते तत्र तावन्त इति कार्यतः कर्तॄणां परिमाणं स्यात्, न त्वेतावन्त इति नियमो विशेषानवगमादिति सूत्रार्थः। वरणकाले कर्मनिमित्तत्वासंभवेन वरणनिमित्तत्वमेव वक्तव्यम्। नह्येकस्मिन्पुरुषे बहूनि वरणानि समवयन्ति दृष्टार्थत्वात्। नहि वृतस्य वरणं दृष्टार्थम्। तेन वरणानां तन्निमित्तानां च संज्ञानामसंकीर्णविषयत्वाद्यावद्वरणं यावत्संज्ञं च कर्तृभेदः कर्माङ्गम्। एतत्सर्वं तृतीयाध्याये सप्तमे पादे जैमिनिराह तत्रार्थात्कर्तृपरिमाणं स्यादनियमोऽविशेषादिति। अतस्तावत्संख्यैः कर्तृभिर्ज्योतिष्टोम-निर्वृत्तिः। एतेनैकस्यैव पुंसः पाचकलावकवत्कर्म कुर्वतः संज्ञेति निरस्तं प्रवृत्तिसमये तदुत्तरकाले चैतासां संज्ञानां श्रवणाभावात्। वरणं ह्यप्रवृत्ताभ्यर्थनं तच्च सत्रेऽर्थलोपा-न्निवर्तते। वरणाभावेऽपि अध्वर्युर्गृहपतिं दीक्षयित्वेत्यादिव्यवहारस्तु दृश्यते। स च संकल्पनिमित्तत्वस्वीकारं विनाऽनुपपन्न एवेत्यवश्यं संकल्पनिमित्तत्वं स्वीकार्यमेव। प्रकृतावपि हि संकल्पो निमित्तमेव। यो हि व्रियमाणो नेच्छति न स होत्रध्वर्य्वादि-र्भवति। तस्मात्प्रकृतौ वरणविधानात्तन्मिश्रः संकल्प एव निमित्तम्। सत्रेषु तु संक-ल्पमात्रं तत्राध्वर्य्वादिशब्दप्रयोगदर्शनात्। नचैवं वैरूप्यादशोभनमिति मन्तव्यम्। प्रमाणबलादीदृशस्यैव शोभनत्वात्। नहि सत्रे होत्रध्वर्य्वादिशब्दानां गौणत्वे किंचि-त्प्रमाणमस्ति। अथाप्यत्यन्तमेकरूप्येण भाव्यमित्याग्रहस्ततः संकल्प एव निमित्तं य एव क्रतुप्रक्रमे तदौपयिकं होत्रध्वर्य्वादिभावमात्मनः संकल्पयति स एष होत्रध्वर्य्वा-

१ क. °यमनादि°।

दिशब्दैरुच्यते। तथा च वक्ष्यति कर्मकार्यात्सर्वेषामृत्विक्त्वमित्यधिकरणे वार्तिककारः सत्रेषु स्वयंकर्तृकत्वाद्वरणभरणयोरनपेक्षितयोरग्रहणाद्विनैव ताभ्यामवैगुण्यमिति। तत्र योग्यतामात्रेण होतृत्वाध्वर्युत्वादिसिद्धिः। तत्र जैमिनिसूत्राणां मध्ये पूर्वसूत्रमर्थात्कर्तृपरिमाणं स्यादनियमोऽविशेषादिति कृतं मध्ये कानिचिदन्यानि सूत्राणि कृत्वाऽनन्तरं कर्मकार्यात्सर्वेषामृत्विक्त्वमविशेषादिति सूत्रं कृतम्। अत्रार्त्विक्शब्दो मुख्यर्त्विक्पर एव। षोडशानामेवाग्रिमसूत्रे परिगणनात्। पक्षे सप्तदशस्य सदस्यस्यापि परिगणनेन तस्यापि मुख्यर्त्विक्त्वात्तत्परोऽपि। नच चमसाध्वर्यूणामपि समन्त्रकवरणसत्त्वान्मुख्यमेवर्त्विक्त्वमस्त्विति वाच्यम्। चमसाध्वर्यूणां नित्योपयुक्तत्वेन तत्सहितानामेव संख्यया ग्रहणे कर्तव्ये षोडशसंख्योपादानस्य विरुद्धत्वापत्तेः। एवं पाक्षिकसप्तदशसंख्योपादानस्यापि। अत एव प्रसिद्धावयवत्वात्संख्याश्रुतेश्चर्तुयजनविशेषनिमित्तक एवर्त्विक्शब्द इति मीमांसकैः सिद्धान्तितम्। समन्त्रकं वरणं तु पूर्ववरणाभावेऽपि वाचनिकमदृष्टार्थम्। स्वतन्त्रवरणस्य विहितत्वादिदमप्यवगम्यत ऋत्विग्भ्यो भिन्ना एव चमसाध्वर्यव इति। तथा च तृतीयाध्याये सप्तमे पादे जैमिनिः—चमसाध्वर्यवश्च तैर्व्यपदेशादिति। चमसाध्वर्यवश्च भिन्ना मध्यतःकारिणां चमसाध्वर्यवो होत्रकाणां चमसाध्वर्यव इत्यृत्विग्भिः सह भेदव्यपदेशादिति सूत्रार्थः। मन्त्रलिङ्गादध्वर्य्वङ्गत्वमेतेषां यथाऽऽदित्यो मुख्यो रश्मयोऽङ्गीभूतास्तथा चमसाध्वर्यवोऽध्वर्य्वङ्गभूता इति। अध्वर्युणा केवलेनैकदा सर्वचमसहोमस्य कर्तुमशक्यत्वात्तच्छेषत्वेन वरणमेतेषाम्। अत एव चमसाध्वर्यव इति संज्ञा। अत एव च होत्रध्वर्य्वादिगतो विशेषो यः स तत्र नास्तीति कल्पितम्। अत एव च गौणमृत्विक्त्वम्। एतेषां संख्यां तु वक्ष्यति सूत्रकार एव सर्वेषां प्रतिपुरुषं चमसाध्वर्यव इति। तृतीयाध्याये सप्तमे पादे जैमिनिरपि—उत्पत्तौ तु बहुत्वश्रुतेरिति। चमसाध्वर्यून्वृणीत इत्युत्पत्तौ बहुत्वे श्रुते बहव एव चमसाध्वर्यव इत्यर्थः। दशत्वं लिङ्गदर्शनादिति च। स्थिते बहुत्वे कियन्तो बहव इत्यनियमे त्रित्वे वा प्राप्ते चमसदशत्वाद्दशभिस्तावद्भवितव्यम्। आधिक्ये प्रमाणाभावाद्दशैवेति। नचैकेन पुंसा हस्तद्वयेन द्वयोश्चमसयोर्होतुं शक्यत्वात्कथं चमसदशत्वेऽपि चमसाध्वर्यूणां दशत्वमिति वाच्यम्। मा होषीदेक एव द्वाभ्यां हस्ताभ्यां द्वौ चमसाविति शाखान्तरे निषेधेन दक्षिणाचारेण कर्तव्यमिति नियमेन च हस्तद्वयेन होमायोगादिति भावः। दशपेये ज्योतिष्टोमविकृतिभूते दश दशैकैकं चमसमनुप्रसर्पन्तीति विधिशेषे दश चमसाध्वर्यव इति दशत्वानुवादरूपलिङ्गदर्शनात्प्रकृतौ दशत्वं भवतीत्यर्थः। नच गौणमप्यृत्विक्त्वं चमसाध्वर्युषु माऽस्त्विति वाच्यम्। सर्वथर्त्विक्त्वाभावे समन्त्रकवरणानुपपत्तेस्ताद्विना चमसयागकर्तृत्वासंभवात्, व्रतचर्यालाभार्थं तत्त्वस्यावश्यमङ्गीकरणीयत्वाच्च। इदं ज्ञापयितुमेवार्त्विग्ग्रहणं कृतं सूत्रकृता। मुख्यर्त्विक्त्वाभावाज्जपाभिप्रव्रजनादि तानूनप्त्रादिकं च परं तेषां न भवति।

मन्त्रायं नियमो ये समन्त्रकं वृतास्त एव मुख्या ऋत्विज इति । दर्शपूर्णमासादिषु तदभावापत्तेः । इष्टापत्तौ तु मुख्ययागकर्तृत्वानुपपत्तिः । अत इदं सिद्धं भवति चमसाध्वर्युषु मुख्यमृत्विक्त्वं नास्त्येवेति । षोडशवचनं सदस्यव्यावृत्त्यर्थं चतुर्णां वरणपक्षेऽपि अमन्त्रकवरणवत्स्वप्यृत्विक्त्वं तुल्यमेवेतिप्रदर्शनार्थं वा । तेनामन्त्रकवरणवतामपि व्रतचर्या भवत्येव सर्वत्रेति सिद्धं भवति । एकैकश इति वचनं समुदायेन वरणं व्यावर्तयितुम् । इदं वरणं लौकिकं भिन्नमेव । अग्रे पुनर्वृणीत इतिवचनोपादानात् । अत एवैकैकश इति वचनमपि संगतं भवति । अन्यथा समन्त्रकवरणे मन्त्रभेदादेवैतस्यार्थस्य सिद्धावेकैकश इतिवचनस्य वैयर्थ्यापत्तेः । होत्रकवरणे प्रतिप्रस्थात्रादिवरणे च तत्तदार्त्विज्यनाम्नां तत्तन्मन्त्रेष्वनिर्देशात्समन्त्रकवरणेन केवलेनैतस्य मैत्रावरुण इति नाम, एतस्य ब्राह्मणाच्छंसीत्यादेर्मन्त्रेभ्यो ज्ञातुमशक्यत्वेन निर्वाहासंभवादमन्त्रकवरणमावश्यकमेव । इदमप्येतेन ज्ञातं भवति सर्वान्यजमानगृहं प्रति सोमप्रवाक आनीय तत्राऽऽमन्त्रणं कुर्यादिति । इदं च प्रथमं वरणं सर्वेषां समानमेव । द्वितीयं समन्त्रकं वरणं तु चतुर्णां वरणपक्षे चतुर्णामेव । महर्त्विग्व्यतिरिक्तानां तु पूर्वेणैव वरणेन सिद्धिः । होत्रादीनां द्वितीयं लौकिकवरणं तु मन्त्रसंस्कारार्थमपेक्षत एवेति द्रष्टव्यम् ।

होता मैत्रावरुणोऽच्छावाको ग्रावस्तुच्च होतारोऽध्वर्युः प्रतिप्रस्थाता नेष्टोन्नेता चाध्वर्यवो ब्रह्मा ब्राह्मणाच्छंस्याग्नीध्रः पोता च ब्रह्माण उद्गाता प्रस्तोता प्रतिहर्ता सुब्रह्मण्यश्चोद्गातारः ।

होतार इति मैत्रावरुणाच्छावाकग्रावस्तुत्स्वपि होतृसंज्ञासिध्यर्थं, फलं येद्प्रतिरथं द्वितीयो होतेत्यत्र मैत्रावरुणस्य होतृग्रहणेन ग्रहणम् । सर्वेषां समन्त्रकवरणपक्षे ग्रावस्तुद्वरणे होतृवरणमन्त्रप्रवृत्तिश्च । अध्वर्यव इति प्रतिप्रस्थातृनेष्टृन्नेतृष्वपि अध्वर्युसंज्ञासिध्यर्थं, फलं तामध्वर्यव उद्गृह्णन्ति चतुरोऽध्वर्यून्भोजयेदित्यादिषु प्रतिप्रस्थातृनेष्टृन्नेतॄणां ग्रहणम् । प्रतिप्रस्थात्रुन्नेतृवरणेऽध्वर्युवरणमन्त्रप्रवृत्तिश्च । उद्गातार इति प्रस्तोतृप्रतिहर्तृसुब्रह्मण्येष्वपि उद्गातृसंज्ञासिध्यर्थम् । फलं प्राञ्चमुद्गातारो द्रोणकलशं ग्रावस्वध्यूहन्त्यधाक्षमुपकर्षन्तीत्यादिषु प्रस्तोतृप्रतिहर्त्रोर्ग्रहणम् । प्रस्तोतृप्रतिहर्तृसुब्रह्मण्यवरण उद्गातृमन्त्रप्रवृत्तिश्च । सर्वकर्तव्यताऽपि पदार्थानुष्ठाने गणक्रम एव भवति न मुख्याश्चत्वार आदौ ततोऽर्धिनश्चत्वारस्ततस्तृतीयिनश्चत्वारस्ततः पादिनश्चत्वार इत्येवं क्रमो भवति । होतारोऽध्वर्यवो ब्रह्माण उद्गातार इतिसंज्ञाचतुष्टयकरणसाधारणं प्रयोजनं द्रष्टव्यम् । एतेनानुक्रमणेनेयत्ताऽप्यवधृता । चमसाध्वर्यूणामृत्विक्त्वमप्येतेन वारितं भवति । षोडशर्त्विजः क इत्याकाङ्क्षाऽप्येतेन पूर्यते । तृतीयाध्याये सप्तमे पादे जैमिनिरपि नियमस्तु दक्षिणाभिः श्रुतिसंयोगादिति । ऋत्विग्भ्यो दक्षिणां ददात्यग्नीधे

१ च. °नां लौ° । २ च. यदि प्र° ।

ददाति ब्रह्मणे ददातीत्येवं दक्षिणाभिः सहाऽऽग्नानेऽग्नीध ऋत्विजे ददाति ब्रह्मण ऋत्विज इत्यादिपर्यवसानात्सामानाधिकरण्यलक्षणो य ऋत्विक्शब्दस्वरूपश्रुतिसंयोगस्त-स्मादग्नीत्प्रभृतीनामेवार्त्विक्त्वमिति नियमः स्यादिति सूत्रार्थः।

सदस्यः सप्तदशः।

सप्तदशवचनमेतस्यापि होत्रादिवन्मुख्यमेवार्त्विक्त्वं न तु चमसाध्वर्युवन्मुख्यार्त्विक्त्वा-भाव इतिप्रदर्शनार्थम्। समन्त्रकवरणविधायके सूत्र उद्गातृवरणोत्तरं सदस्यवरणस्य विहितत्वात्तत्क्रमेणैव वरणं न तु षोडशर्त्विग्वरणोत्तरम्। सदस्यं महर्त्विजं पञ्चमं कौषीतकिनः समामनन्तीति भरद्वाजः। ब्राह्मणानार्षेयानृत्विजः सप्तदशैकैकशो वृणीत इत्येतावतैव सदस्यसंग्रहे सिद्धे पृथक्सूत्रकरणमनित्यत्वमेतस्य ज्ञापयितुम्। उक्तं चैतदापस्तम्बाश्वलायनाभ्याम्—सदस्यं सप्तदशं कौषीतकिनः समामनन्तीति। सद-स्यप्रयोजनमाहतुस्तावेव स कर्मणामुपद्रष्टा भवतीति। उपद्रष्टृत्वं साध्वसाध्वनुसंधा-तृत्वम्। आश्वलायनः सदस्यं सप्तदशं कौषीतकिनः समामनन्तीत्युक्त्वैतस्मिन्नर्थे प्रमाणीभूतां श्रुतिमुदाजहार तदुक्तमृग्भ्यां यमृत्विजो बहुधा कल्पयन्त इति। सदस्यसत्त्वे स्वशाखायामप्यस्ति लिङ्गं सदस्या ऋतवोऽभवन्निति। अत्र बहुवचनमृतु-बहुत्वानुसारेण। बौधायनोक्तं सदस्यचतुष्टं तु नाभिमतमाचार्यस्य। सदस्यः सप्तदशः प्रसदस्यस्येत्येकस्यैव प्रदर्शनात्, ध्रुवगोपनार्थं राजपुत्रस्य स्वतन्त्रतया विधानाल्लिङ्गाच्च।

अथर्त्विजो वृणीते।

मन्त्रैरिति शेषः। अथशब्दः सर्वर्त्विग्लौकिकवरणानन्तर्यार्थः। तेन होतुर्लौकिकं वरणं कृत्वा तस्यैव समन्त्रकं वरणमनन्तरमेव कर्तव्यम्। एवमध्वर्य्वादीनामित्येवंरूपः पदार्थानुसमयोऽत्र न भवति किंतु काण्डानुसमय एवेति सिद्धं भवति। मुख्यत्वद्योत-नार्थश्च। तेन पितृभूतमनुष्यभूतर्त्विक्ष्वपि प्रतिक्रतु समन्त्रकं वरणं भवत्येव मन्त्रसं-स्कारलाभायेत्यपि सिद्धं भवति। मनुष्यभूतपितृभूतदेवभूतत्वभेदेन त्रैविध्यमृत्विजां शाट्यायनिनोक्तम्—स्वेनैव कर्मणि कर्मणि वृता ये ते मनुष्यभूताः पित्रादिभिर्वृतास्त एव स्वेनैवाङ्गीकृता ये ते पितृभूताः स्वेनैव यावज्जीवकर्मार्थं वृता ये ते देवभूता इति। एवं स्वरूपमपि तेनैवोक्तम्। अत्रर्त्विक्शब्दो गौणमुख्यसाधारण एवेत्यवश्यं स्वीकर्त-व्यम्। अन्यथा तेषां व्रतचर्याभावः समन्त्रकवरणानुपपत्तिश्च स्यात्। मुख्यमृत्विक्त्वं तु षोडशसप्तदशान्यतरसंख्योपादानस्य विरुद्धत्वापत्तेर्नाङ्गीकर्तुं शक्यमित्युक्तमेव प्राक्। पूर्ववरणं लौकिकम्। इदं समन्त्रकं मन्त्रजन्यादृष्टसंस्कारसिध्यर्थम्। लौकिकस-मन्त्रकवरणयोः क्रमस्तु भिन्नो भिन्न एव। होता मैत्रावरुणोऽच्छावाको ग्रावस्तुदि-त्यारभ्य सदस्यः सप्तदश इत्यन्तेन सूत्रेणोक्तो लौकिके वरणे क्रमः। मन्त्रक्रमानुरो-धेन समन्त्रकवरणे क्रम इति द्रष्टव्यम्।

**अग्निर्देवो दैव्यो होता स मे होताऽस्त्वित्युपा२शु दैव्य२ होतारं वृणीतेऽसौ मानुषस्त२ होतारं वृण इत्युच्चैर्मानुषम्।**

दैव्यं देवसंबन्धिनं, मानुषं मनुष्यसंबन्धिनम्। असाविति यः शब्दस्तस्य स्थाने होतुः पित्रादिभिर्व्यवहाराय नाम कृतं तद्गृह्णाति। तच्च शर्मान्तं शर्मान्तं ब्राह्मणस्येति बौधायनोक्तेः शर्मान्तं ब्राह्मणस्य येन व्यवह्रियत इति वासिष्ठसूत्राच्च। येन व्यवह्रियत इति नाक्षत्रादिनाम्नां शर्मान्तताया व्यावृत्त्यर्थम्। वरणं नाम संमाननाभ्यर्थनपूर्वकं स्वकर्तव्यकर्मणि आर्त्विज्यकरणानुकूलप्रवृत्तिसंपादनं, तत्र समन्त्रकत्वं संस्कारविशेषार्थम्। अग्निर्देवो दैव्यो होता स मे होताऽस्त्विति दैव्यहोतृवरणमन्त्रः। असौ मानुषस्त२ होतारं वृण इति मानुषहोतृवरणमन्त्रः। लिङ्गादेव दैव्यहोतृवरणार्थत्वे पूर्वमन्त्रस्य सेत्स्यति सति पुनर्वचनं हेतुप्रदर्शनार्थं यतो दैव्यो होताऽत उपांशु वृणीत इति। एवमुच्चैर्मानुषमित्यत्रापि। यद्यप्युपांशुशब्दस्य दैव्यहोतृवरणेऽन्वयः प्रतीयते तथाऽपि उपांशुशब्दस्य स्वरपरत्वात्तस्य च मन्त्रधर्मत्वाद्वरणरूपक्रियाया- मन्वयासंभवेन वरणरूपक्रियाकरणीभूते मन्त्रेऽन्वयो ज्ञेयः। तथा चैवं वाक्यं भवति अग्निर्देव इति मन्त्रमुपांशूक्त्वा दैव्यं होतारं वृणीत इति। एवमुत्तरत्रापि।

**एवमितरेषूपा२शु दैव्यं वृणीत उच्चैर्मानुषम्।**

एवमितरेष्वित्येतावतैव दैव्यमानुषवरणसिद्धौ दैव्यं वृणीते मानुषमिति पुनर्वचनं दर्शपूर्णमासादिष्वमन्त्रकवरणेऽयमेव दैव्योऽग्निर्होता मानुषश्चेत्यभिध्यानपूर्वकत्वमावश्यकमितिज्ञापनार्थम्। एवमितरेषु दैव्यं वृणीते मानुषं चेत्येतावत्युच्यमान उपांशुत्वोच्चैष्ट्वयोर्निवृत्तिः स्यात्तां वारयितुं तयोर्वचनम्। इतरेषु अध्वर्य्वादिषु ऋत्विक्षु।

**आदित्यो देवो दैव्योऽध्वर्युः स मेऽध्वर्युरस्त्वसौ मानुषस्तमध्वर्युं वृण इत्यध्वर्युं चन्द्रमा देवो दैव्यो ब्रह्मा स मे ब्रह्माऽस्त्वसौ मानुषस्तं ब्रह्माणं वृण इति ब्रह्माणं पर्जन्यो देवो दैव्य उद्गाता स म उद्गाताऽस्त्वसौ मानुषस्तमुद्गातारं वृण इत्युद्गातारमाकाशो देवो दैव्यः सदस्यः स मे सदस्योऽस्त्वसौ मानुषस्त२ सदस्यं वृण इति सदस्यमापो देवीर्दैव्या होत्राश२सिन्यस्ता मे होत्राश२सिन्यः सन्त्वमी मानुषास्तान्होत्राश२सिनीर्वृण इति होत्रकान्रश्मयो देवा दैव्याश्चमसाध्वर्यवस्ते मे चमसाध्वर्यवः सन्त्वमी मानुषास्तान्चमसाध्वर्यून्वृण इति चमसाध्वर्यून् ॥ १ ॥**

मन्त्रेषु तं वृण इति परोक्षनिर्देशाल्लिङ्गाद्वरणं किंचिद्द्वारकं न साक्षादिति गम्यते। स चोपस्थितत्वात्सोमप्रवाक एवेत्यभिप्रायेण भाष्यकारेण तदनुयायिभिः प्रयोगकारैश्च

सोमप्रवाकद्वारा वरणमुक्तं तद्दानवाचनान्वारम्भणवरवरणव्रतप्रमाणेषु यजमानं प्रतीया-दितिकात्यायनसूत्रविरोधादुपेक्ष्यम्। नचैवं मन्त्रगतस्त्वच्छब्देन परोक्षनिर्देशोऽसंगतः स्यादिति वाच्यम्। तच्छब्देन दैव्यं होतारमग्निं परामृश्य युष्मच्छब्दार्थे मनस्यनुसंधाय तच्छब्दार्थयुष्मच्छब्दार्थयोरभेदेन तं दैव्यं होतारमग्निं त्वामेवाहं वृण इत्येतादृशा-र्थसिद्धावसंगतत्वपरिहारसंभवात्। एवं च कात्यायनसूत्रविरोधः परिहृतो भवति। अदःशब्दस्तु तत्तन्नामग्रहणार्थं प्रयुक्तः। विहितं चासाविति नाम गृह्णातीत्यावेदन-प्रकरणस्थेन सूत्रेणादःशब्दस्थाने नामग्रहणम्। होत्रध्वर्युब्रह्मोद्गातृशब्दार्थः प्रागेव दर्शितः। सदसि भवः सदस्यः। अत्र भवनं सत्ता विद्यमानत्वमिति यावत्। योगरूढं पदम्। दिगादित्वाद्यत्प्रत्ययः। अनेन सदस्यशब्देन सदस्येवैतस्योपवेशनमिति बोध्यते। अथ वा सदसि साधुस्तस्यै हितो वा सदस्य इति। सदःशब्देनात्र सदोमण्डपव-त्कृत्स्नं कर्म लक्ष्यते। तद्दृष्टत्वात्साधुत्वं हितत्वं वा द्रष्टव्यम्। होत्रं हवनसाधनं वषट्कारस्तमा उच्चैः शंसन्ति वदन्तीति होत्राशंसिनः। नच होतरि स्वयं निषद्य यजत इत्यस्मिन्पक्षे यजमानाध्वर्व्योश्चातिप्रसङ्गः। होत्रकवरण एव होत्राशंसिवरणम-न्त्रस्योक्तत्वेन मैत्रावरुणो ब्राह्मणाच्छंसी पोता नेष्टाऽच्छावाक आग्नीध्रश्च होत्रका इत्यनेन मैत्रावरुणादिषु षट्स्वेव होत्रकशब्दप्रवृत्तेर्दर्शितत्वेन होतरि यजमानाध्वर्व्यो-श्चातिप्रसङ्गाभावात्। तथा च होतृयजमानाध्वर्यूणां न होत्राशंसिशब्देन ग्रहणम्। एतेन होतृयजमानाध्वर्यूणां स्वस्वमन्त्रेण वृतत्वेऽपि होत्राशंसिलिङ्गकमन्त्रसं-स्कारसिद्ध्यर्थं पुनर्वरणमिति शङ्काऽपि निरस्ता भवति। अमी इतिशब्दोऽदः-शब्दस्य प्रथमाबहुवचनम्। अमी इत्येतस्य शब्दस्य स्थाने समासेन प्रथमाब-हुवचनेन शर्मान्तानि नामानि षण्णां होत्रकक्रमेण गृहीत्वा मानुषास्तान्होत्राशंसि-नीर्वृण इति वृणुयात्। यथा केशवशर्मनारायणशर्ममाधवशर्मगोविन्दशर्मविष्णुशर्म-कृष्णशर्माणो मानुषास्तान्होत्राशंसिनीर्वृण इति। सर्वान्ते वा शर्मशब्दः सकृदेव। मैत्रावरुणो ब्राह्मणाच्छंसी पोता नेष्टाऽच्छावाक आग्नीध्र इत्येवं क्रमोऽत्रानुसंधातव्यः। एवं च (व) इतिबहुवचनान्तो युष्मदर्थश्च। एवं चमसाध्वर्युवरणमन्त्रेऽपि द्रष्टव्यम्। अत्रापि होत्रध्वर्युब्रह्मोद्गातृयजमानसदस्यमैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकाग्नीध्रा इत्येवं चमसाध्वर्युवरणे क्रमो ग्राह्यः। चमससंबन्धिनोऽध्वर्यवश्चमसाध्वर्यवः। धार्यधार-कभावरूपोऽत्र संबन्धः। तच्च धारणं होमाद्यर्थम्। प्रतिप्रस्थात्रादीनां तु तत्तन्मुख्यर्त्वि-ङ्मन्त्रेण। तत्र प्रतिप्रस्थातुरध्वर्युमन्त्रेण, प्रस्तोतुरुद्गातृमन्त्रेण, प्रतिहर्तुरुद्गातृमन्त्रेण, ग्राव-स्तोतुर्होतृमन्त्रेण, उन्नेतुरध्वर्युमन्त्रेण, सुब्रह्मण्यस्योद्गातृमन्त्रेणेति प्रतिप्रस्थात्रादीनामध्व-र्य्वादिशब्दैरेव वरणम्। नच प्रतिप्रस्थात्रादिपरिज्ञानार्थमध्वर्य्वादिशब्दोत्तरं प्रतिप्रस्था-त्रादिशब्दप्रयोगोऽप्यस्त्विति वाच्यम्। प्रतिप्रस्थात्रादिपरिज्ञानस्य लौकिकवरणेनैव जातत्वेन मन्त्रस्वरूपविघटकाधिकशब्दप्रयोगस्याप्रयोजकत्वात्। होत्रकवरणानन्तरं

प्रतिप्रस्थात्रादीनां वरणम् । ततश्चमसाध्वर्यूणां, गौणचमसाध्वर्य्वृत्विगपेक्षया प्रति-
प्रस्थात्रादीनां मुख्यर्त्विक्त्वेन तेषामेव पूर्ववरणस्य युक्तत्वात् । राज्ञः पूजनानन्तर-
मृत्विजां निमन्त्रणार्थे सोमप्रवाकोऽवश्यं वरणीयः । सोममृत्विग्भ्य आर्त्विज्यप्रवृ-
त्त्यनुकूलव्यापारं निश्चेतुं वक्तीति सोमप्रवाकः । एतस्मादेव नाम्नः सोमप्रवाकप्रयोजन-
मवगतं भवति । साद्यस्क्रेष्वश्वरथाः संक्षीरदृतयः । ससोमप्रवाका विधावन्तीति
लिङ्गमपि सोमप्रवाकसत्त्वे । लाट्यायनद्राह्यायणभरद्वाजाश्वलायनैर्नित्यमेवाम्नातश्चारित ।
अतः सोमप्रवाक ऋत्विजामामन्त्रणार्थमवश्यं वरणीयः । स च तूष्णीमेव मन्त्रानुपदे-
शात् । तस्य गन्धादिभिः पूजनं तस्मै यथाशक्ति दक्षिणादानं च । दक्षिणाकाले वा
दक्षिणादानम् । सोमप्रवाकवरणादिप्रयोग इत्थम्—राजपूजनानन्तरमस्मिन्क्रतौ त्वं
सोमप्रवाको भवेति वृत्वा बाढमिति तेनोक्ते तं गन्धवस्त्रादिभिः संपूज्य सोमप्रवाकाऽऽ-
र्त्विजेभ्य ऋत्विग्भ्यः सोमं प्रब्रूहीति यजमानस्तमाह । यजमानप्रहितः सोमप्रवाकस्तं
तं यथोक्तगुणमुपेत्य सर्वान्यजमानगृहं प्रत्यानीय तत्राऽऽमन्त्रणं कुर्यात् । तत्राऽऽम-
न्त्रणवाक्यमित्थम्—अमुकशर्मणः सोमो भविष्यति तत्रभवता हौत्रं कर्तव्यमाध्वर्यवं
कर्तव्यं ब्रह्मत्वं कर्तव्यमौद्गात्रं कर्तव्यं प्रशास्त्रीयं प्रतिप्रस्थात्रं ब्राह्मणाच्छंसीयं प्रास्तो-
त्रमच्छावाकीयं नेष्ट्रीयमाग्नीध्रीयं प्रातिहर्त्रं ग्रावस्तुतीयमौन्नेत्रं पोत्रीयं सौब्रह्मण्यं कर्त-
व्यमिति सदस्यपक्षे सादस्यमिति । होत्राभ्यश्छ इत्यस्मिन्सूत्रे होत्राशब्देन होत्रका
एव गृह्यन्ते । तथा च प्रशास्तृब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकाग्नीध्रेभ्य एव छप्रत्ययो
न प्रतिप्रस्थातृप्रस्तोतृप्रतिहर्त्रुन्नेतृसुब्रह्मण्येभ्यः । ग्रावस्तुच्छब्दात्तु वृद्धाच्छ इत्यनेन
छप्रत्ययः । ब्रह्मशब्दात्तु ब्रह्मणस्त्व इति सूत्रेण त्वप्रत्ययः । होत्रध्वर्यूद्गातृशब्देभ्यस्तु
सामान्यतोऽणेवेति द्रष्टव्यम् । तत्र को यज्ञः क ऋत्विजः का दक्षिणेत्येकः प्रश्नप्रकार
आपस्तम्बाश्वलायनाद्युक्तः । प्रत्युत्तरवाक्येष्वाश्वलायनेन विशेष उक्तः कल्याणैः सह
संप्रयोग इति । कल्याणोऽमुको यज्ञः कल्याणा अमुकशर्मादय ऋत्विजः कल्याण्यो
गावो दक्षिणेति । अन्यः प्रश्नप्रकार आपस्तम्बेनोक्तः—तं पृच्छति क ऋत्विजः के
याजयन्ति कच्चिन्नाहीनः कच्चिन्न व्यस्तमार्त्विज्यं कच्चित्कल्याण्यो दक्षिणा इति च्छन्दो-
गब्राह्मणं भवतीति । अत्र विकल्पं सूचयितुं छन्दोगब्राह्मणग्रहणम् । ऋत्विक्परीक्षा
तावत्पतितयाजित्वादियजमानदोषशङ्कानिरासार्था । वर्तमानर्त्विक्परीक्षाऽपि संभक्षणान-
र्हत्वशङ्कानिरासार्था । अहीनदक्षिणापरीक्षा तु अल्पदक्षिणे क्रतावहीने च याजननिषेधा-
देव । यथोक्तमाश्वलायनेन व्यस्तमार्त्विज्यमकार्यमहीनस्य नीचदक्षिणस्येति । अप्रश्नप-
क्षेऽपि परीक्षाऽऽवश्यक्येव । आर्त्विज्याकरणे प्रत्याख्यानप्रकार उक्तो लाट्यायन-
द्राह्यायणाभ्यां सोमप्रवाकमकरिष्यन्नमः सोमाय राज्ञ इति प्रत्याचक्षीत महन्मेऽवोच

१ च. तथाए° ।

इति करिष्यन्प्रतिमन्त्रयेतेति । भारद्वाजमतात्त्वयाजयिष्यतोऽपि जपो नित्यः । पशुपालः प्रेष्या धाता शमिता ध्रुवगोपो दोग्धा सोमविक्रयी हविष्प्रेषणार्थैका स्त्री, अग्नीषोमीयार्थेध्माबर्हिर्नयनार्थे द्वे, प्रसर्पका उपगातारश्चेत्यत्रैवोपकल्पयितव्याः । आलब्धव्यानां पशूनां दक्षिणार्थगवादिप्राणिद्रव्याणां दोहार्थानां गवां राजवहनार्थानडुहोश्च संरक्षणकर्ता पशुपालः । वैश्योऽयम् । तद्वृत्तित्वात् । प्रेष्याः प्रेषार्थकर्तारः सनीहारादयो व्रतप्रदातारः परिकर्मिणश्च । सनिं याच्ञालब्धं धनं तच्च हरन्ति ते सनीहाराः । एतेन ज्ञायते पूर्वमेव क्रत्वर्थं द्रव्यं याचितं भवति । ब्राह्मणाः क्षत्रिया वैश्या वैते । सनीहारविषये विशेष उक्तो द्वैधे बौधायनेन—अथ सनीहारान्प्रहिणोतीत्यन्यत्रोग्रशूद्रयोरिति बौधायनोऽन्यत्रोग्रैरिति शालीकिः सर्वान्यज्ञसिद्धय इत्यौपमन्यव इति । धाता यज्ञसामग्रीरक्षको ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा । शमिता पशुसंज्ञपनकर्ता । स च ब्राह्मणः शूद्रो वा । बाहुं शमित्रे तं स ब्राह्मणाय ददाति यद्यब्राह्मणो भवतीति सूत्रात् । बाहुं शमित्रे यजमानो ददाति । तं बाहुं स शमिता ब्राह्मणाय ददाति यदि स्वयमब्राह्मणो भवतीति सूत्रार्थः । एतस्मादेव लिङ्गादृत्विग्व्यतिरिक्त एवायम् । पराङावर्ततेऽध्वर्युः पशोः संज्ञप्यमानादिति वचनादध्वर्योरसामर्थ्यादध्वर्युपुरुषाणां मध्य एकस्य द्वयोः सर्वेषां वा कार्यानुसारेण पशुसंज्ञपनकर्तृत्वम् । तत्रैकश्चेत्प्रतिप्रस्थातैव संनिहितत्वाद्द्वौ चेत्प्रतिप्रस्थातृनेष्टारौ त्रयश्चेदुन्नेता चेति द्रष्टव्यमिति जैमिनिमतम् । तथा च तृतीयाध्याये सप्तमे पादे तत्सूत्रे शमिता च शब्दभेदात् । शमयति पशुं हिनस्तीति शमितृशब्दार्थः । अत्र यद्यपि शामित्रस्याऽऽध्वर्यवसमाख्यानादध्वर्योरेव शमितृत्वं युक्तं तथाऽपि संज्ञप्यमानात्पशोरध्वर्योः पराङावृत्तिवचनेन तस्य शमितृत्वानुपपत्तेस्तत्प्रत्यासन्नः प्रतिप्रस्थात्रादिः कश्चिच्छमिता भवतीति । नचैवं क्लोम चार्धं वैकर्तनं च शमितुस्तद्ब्राह्मणाय दद्याद्यद्यब्राह्मणः स्यादितिवचनविरोध इति वाच्यम् । यदि यजमानोऽब्राह्मणः क्षत्रियादिः स्यादित्यर्थकरणेन विरोधाभावात् । नचैवं शामित्रं चैव विप्राणामितिनिषेधकत्रैवर्णिकः शमितेति कुलालः शमितेतिविधायकवचनद्वयविरोध इति वाच्यम् । एतासां स्मृतीनामध्वर्युपुरुषासंभव एव प्रवृत्तिसंभवेन विरोधपरिहारस्य कर्तुं शक्यत्वात् । तत्र ऋत्विजः शमिता ध्रुवगोपो दोग्धा सोमविक्रयीति सूत्रकृतैव प्रदर्शितास्तेषामुपकल्पनं सिद्धमेव । आपस्तम्बभरद्वाजादिभिरुपगातॄणामप्युक्तत्वात्तेषामप्युपकल्पनं सिद्धमेव । इतरेषां तूपकल्पने याज्ञिकमतेऽपि न नियम इति द्रष्टव्यम् । ध्रुवगोपस्तु मीमांसकमतेऽपि राजपुत्रो गोपायतीतिवचनादन्य एव । एवं च तस्योपकल्पनं नियतम् । शमितुस्तु याज्ञिकमत उपकल्पनं न मीमांसकमते । विहितत्वाद्दोग्धुरपि उपकल्पनम् । सोमविक्रयिणः कर्मान्तःपातित्वात्तस्य सर्वमतेऽन्यत्वादुपकल्पनम् । पशुपालादीनामुपकल्पने विकल्पगात् (?) शमितुरध्वर्यादिवदुत्पत्तेरभावादुत्पत्तिकालिकसंज्ञासंबन्धाभावादिति । नहि संज्ञामात्रं भेदकं किंतूत्पत्तौ श्रुता ।

नचेयं संज्ञोत्पत्तौ श्रूयते वरणाभावेन शमितुरध्वर्य्वादिवदुत्पत्तेरभावात्तस्मान्न केवलसंज्ञाऽत्र भेदिकेति भावः । सूत्रार्थस्तु शमिता चार्त्विग्भ्यो भिन्नः शमितेतिशब्दभेदात्प्रकरणाद्वा । वाशब्दः पूर्वपक्षव्यावर्तकः । प्रकरणमाध्वर्यवप्रकरणे शमिता पशुकण्ठे निगृह्णातीति । उत्पत्त्यसंयोग्यं च ब्राह्मणाभावे । कलौ तु शामित्रं चैव विप्राणामिति शामित्रकर्मकरणनिषेधाच्छूद्र एव । ध्रुवग्रहसंरक्षणकर्ता ध्रुवगोपः । स च राजपुत्र इति सूत्रकारेण प्रागेवोक्तम् । अतः क्षत्रियो दोग्धा व्रतप्रवर्ग्याद्यर्थं दोहनकर्ता । स च ब्राह्मणः शूद्रो वा । अग्निहोत्रमेव न दुह्याच्छूद्र इत्यग्निहोत्रसंबन्धिदोहन एव शूद्रनिषेधादन्यत्रानियमः । अयं च शूद्रो गोप एव । स्मृतौ सच्छूद्रौ गोपनापिताविति तस्य सामान्यतः समीचीनत्वोक्तेस्तद्वृत्तित्वाच्च । ब्राह्मणो दोहकर्ता चेत्समीचीनतरमेव । सोमविक्रयी कौत्सः शूद्रो वेति सूत्रकारेण प्रागुक्तमेव । सोमविक्रयणं तथेति कलौ सोमविक्रयस्यापि निषेधाच्छूद्र एवेदानीम् । अयं च ऋत्विग्व्यतिरिक्त एवेत्युक्तमेव प्राक् । हविष्पेषणार्था स्त्री ब्राह्मणी दासी वा । अग्नीषोमीयार्थेध्मवहनार्थाऽग्नीषोमीयार्थबर्हिर्वहनार्था च रूयेव ब्राह्मणी । प्रसर्पन्तीति प्रसर्पका यज्ञेऽर्थसंशये निर्णायकाः । एते ब्राह्मणा एव दक्षिणाप्रतिग्रहीतृत्वात् । तेषामुपवेशनस्थानं तु यावत्पर्यन्तं प्राग्वंशे कर्म तावत्पर्यन्तं प्राग्वंश एव । अग्निप्रणयनप्रभृति तत्तत्समीपप्रदेश एव । यत्र यज्ञे शिष्टा विद्वांस उपविशन्ति सैव यज्ञसभेत्युच्यते । तदुक्तं राजधर्मेषु—

सभास्तु तिस्रो विज्ञेया धर्मस्यैका च कर्मणः ।
तथा राजसभेत्येता विद्वद्भिः परिकीर्तिताः ॥ इति ।

धर्मशब्देन व्यवहारः प्रायश्चित्तं चोच्यते । तदर्थं या कल्पिता शाला सा धर्मस्य सभा । इयमेका सभा । च परं कर्मार्थं यज्ञादिकर्मार्थं या शाला सा कर्मसभेत्युच्यते । इयं द्वितीया । राजा यत्र विप्रैः परिचारकैर्भटादिभिश्च सहित उपविशति सा शाला राजसभेत्युच्यते । इयं तृतीया सभा । एतास्तिस्रः सभा विद्वद्भिर्ऋषिभिः परिकीर्तिताः कथिता इत्यर्थः । सभासत्संख्योक्ता बृहस्पतिना—

लोकवेदज्ञधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा ।
यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा ॥ इति ।
स्मृत्यन्तरेऽपि—यत्र धर्मं विनिर्णेतुं विद्वांसश्चतुरादयः ।
उपविष्टा भवेयुश्चेत्तदा ज्ञेया सभेति सा ॥ इति ।

यज्ञार्थशालोपविष्टा विद्वांसः शिष्टा ब्राह्मणा अत्र प्रसर्पकशब्देनोच्यन्ते । ते च त्रिप्रभृतय इति द्रष्टव्यम् । यज्ञमारभ्याऽऽन्तं शालायां नियमेनैतैरुपवेशनं कर्तव्यं कर्मसाक्ष्या-

१ क. 'रणं श' ।

र्थम् । उपगातार ऋत्विजां मध्ये ये केचन षडवराध्यां इत्युक्तमेव प्राक् । अहोरात्रे पशुपाल्यौ, मुहूर्ताः प्रेष्या अभवन्, मृत्युस्तदभवद्धाता, शमिताग्नो विशां पतिः, ध्रुवगोपः सहोऽभवत्, आकूतिरपिनड्ढविः, इध्मं ह क्षुच्चैभ्य उग्रे तृष्णा चावहतामुभे इति विश्वसृजामयनेऽनुक्रमणाल्लिङ्गादेतेषां कल्पनमत्रैव । न चाऽऽर्तवा उपगातार इति लिङ्गादेतेषामपि भिन्नत्वेनोपकल्पनमस्त्विति वाच्यम् । तेषां सर्वमत ऋत्विग्भेदस्यैव सिद्धत्वेनोपकल्पनासंभवात् । मीमांसकमत आर्तवा उपगातार इत्यस्या अर्थवादत्वेन वज्रहस्तः पुरंदर इत्यादिवत्स्वार्थे प्रामाण्याभावान्नोपगातृणां भिन्नत्वं कल्पयितुं शक्नोति । याज्ञिकमते स्वार्थप्रामाण्यसत्त्वेऽपि वचनादभेद इति द्रष्टव्यम् । यजमानस्यर्त्विजां च यावत्कर्म व्रतं भवति । तदुक्तं बौधायनप्रायश्चित्तसूत्रे—सर्वत्र यजमानस्यर्त्विजां च यावत्कर्म व्रतमुपदिशन्तीति । तथोक्तमाश्वलायनेन—न मांसमश्नीयुर्न स्त्रियमुपेयुरा क्रतोरपवर्गादिति । ऋत्विगपेक्षं बहुवचनम् । अन्योऽपि विशेषनिषेधो बौधायनप्रायश्चित्तसूत्रे—नर्त्विजामार्त्विज्यमन्यत्र विद्यते न महर्त्विजां समासो न सर्वत्र यजमानस्याऽऽर्त्विज्यमन्यत्र सत्रादिति । यो होता सोऽध्वर्युरित्ययं समासः कुण्डपायिनामयने विहितः । स तस्य सत्रत्वात्तत्रैव नान्यत्राहीनैकाहादौ । एवं यजमानस्याऽऽर्त्विज्यमपीति । ऋत्विजां मधुपर्केण पूजा कार्या । तत्र विश्वामित्रः—

> संपूज्य मधुपर्केण ऋत्विजः कर्म कारयेत् ।
> असंपूज्य कारयंश्चेत्किल्बिषेण स युज्यते ॥ इति ।

मधुपर्कार्हा धर्मसूत्रे—गोमधुपर्कार्हो वेदाध्याय्याचार्य ऋत्विक्स्नातकः श्वशुरो राजा वा धर्मयुक्त इति । गौश्च मधुपर्कश्च गोमधुपर्कौ ताभ्यामर्हो योग्य इत्यर्थः । एतादृशे समासे मधुपर्कान्तर्गतगोरपेक्षयाऽधिका गौर्देया भवति । वेदाध्यायीत्याचार्यादिविशेषणम् । यद्याचार्यादयः कृत्स्नवेदाध्यायिनस्तदैव मधुपर्कादधिका गौर्देया नान्यदेति । एतेन ज्ञायते वेदैकदेशाध्यायिनोऽप्याचार्यादयः स्युस्तेऽपि केवलेन मधुपर्केण पूज्या एवेति । अथवा गवा युक्तो मधुपर्को गोमधुपर्क इत्येवं समासः । अधिकगोदानाभावस्तु सुतराम् । अन्यच्च धर्मसूत्रे विशेषः—आचार्यायर्त्विजे स्नातकाय श्वशुराय राज्ञ इति । परिसंवत्सरादुपतिष्ठभ्यो गौर्मधुपर्कश्चेतिपूर्वोक्तविशेषणविशिष्टानामाचार्यादीनां संवत्सरोत्तरं प्राप्तानामेतेषां गोयुक्तमधुपर्केण पूजा कार्येत्यर्थः । अनेन सूत्रेणावधिप्रदर्शनं क्रियते । विद्यास्नातकविद्याव्रतस्नातकाभ्यामेव गौर्देया न केवलव्रतस्नातकाय । एतस्मात्सूत्रादिदं ज्ञायते पूर्वसूत्रे धर्मोपदेष्टृत्वादिधर्मसंपत्तिप्रयुक्तो मधुपर्क इति । तत्र धर्मोपदेष्टुर्मधुपर्क उपनयनोत्तरम्, ऋत्विजो वरणोत्तरं, स्नातकस्य समावर्तनान्ते, श्वशुरस्य देवकोत्थापनान्ते, राज्ञोऽभिषेकान्त इति द्रष्टव्यम् । प्रतिनिमित्तं नैमित्तिकमिति न्यायात्, ऋत्विजो वृत्वा मधुपर्कमाह-

रेदित्याश्वलायनसूत्रात्, पुनः पुनर्यज्ञ इति च्छन्दोगसूत्रात्, अथैतेऽर्घ्या ऋत्विक्श्व-शुरपितृव्यमातुलाचार्या राजा स्नातकः प्रियागतोऽतिथिरिति संवत्सरं पर्यागतेभ्य एतेभ्य एव कुर्याद्विवाहे वरायार्थत्विम्यः कर्मणि कर्मणि ददातीति बौधायनसूत्रात्।

असंपूज्य कारयेच्चेत्किल्बिषेण स युज्यते ।

इति विश्वामित्रेण मधुपर्कपूजाया अकरणे दोषश्रवणाच्च प्रतियज्ञम् । संवत्सरोत्तरं देवभूतपितृभूतानामेवर्त्विजां कर्मव्यतिरिक्तकाल उपस्थितिः संभवति न मनुष्यभूतानां कर्मव्यतिरिक्तकाल एतेषामृत्विक्त्वासंभवात् । बैजवापमते होत्रादिषु चतुर्ष्वार्त्विज्य-समावेशात्तद्वशवर्तिनां पुत्रादीनामाशौचपातेऽन्ये तदीया आगमयितव्या इति । इदं च देवभूतपितृभूतर्त्विक्पक्षे द्रष्टव्यम् । ऋत्विङ्मरणप्रयुक्तमाशौचं याज्ये यत्स्मृता-वुक्तं तद्देवभूतपितृभूतविषयकमेव । एवं याज्यमरणप्रयुक्तमाशौचं देवभूतपितृभूतेष्वेव-र्त्विक्षु इति द्रष्टव्यम् । ऋत्विजामाशौचाभावो मधुपर्कोत्तरमेव ।

गृहीतमधुपर्कस्य यजमानात्तु ऋत्विजः ।
पश्चादाशौचे पतिते न भवेदिति निश्चयः ॥ इति ब्राह्मात् ।

यत्र मधुपर्को नास्ति तत्राऽऽशौचमस्त्येवेति त्वर्थात् । तत्राऽऽधानेष्टिपशुबन्धादौ मधुपर्को नैव किंतु ज्योतिष्टोमादावेव स इति केचित् । समन्त्रकवरणस्य ज्योतिष्टो-मादावेव सत्त्वान्मधुपर्कः, आधानेष्टिपशुबन्धादौ समन्त्रकवरणाभावान्न स इत्येतन्मता-शयः । सर्वत्रापि मधुपर्क इति केषांचिन्मतम् । समन्त्रकवरणस्यैव मधुपर्कनिमित्तत्वे प्रमाणाभाव इत्येतन्मताशयः । तुच्छमेतन्मतं समन्त्रकवरणसंबद्ध एव मधुपर्क इति प्रद-र्शयितुमेवर्त्विजो वृत्वेत्यनुवादकरणात्प्रयोजनान्तरस्य चासंभवात् । महादानादौ मधु-पर्कस्तु वाचनिकः । वैखानसेनाऽऽधानेऽपि मधुपर्क उक्तः सोऽपि वाचनिक एव । किमिव वचनं न कुर्यान्नास्ति वचनस्यातिभार इति ।

प्रारम्भो वरणं यज्ञे संकल्पो व्रतसत्रयोः ।
नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया ॥

इति वचने यद्यपि वरणस्यैवं केवलमाशौचाभावहेतुत्वं प्रतीयते तथाऽपि वरणमधु-पर्कयोः संबद्धत्वाद्वरणशब्देन मधुपर्कोऽपि गृह्यते । नातो गृहीतमधुपर्कस्येति ब्राह्मेण विरोधः । अयं चर्त्विजामाशौचाभावो यावत्कर्म तावदेव ।

ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् ।
सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥
दाने विवाहे यज्ञे च सङ्ग्रामे देशविप्लवे ।
आपद्यपि च कष्टायां सद्यः शौचं विधीयते । इति वचनात् ।

प्रारम्भो वरणं यज्ञ इति वचने गृहीतमधुपर्कस्येतिवचनैकवाक्यत्वाय वरणं समन्त्र-कमेवेति ज्ञेयम् ।

एतेन—व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ।

प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥

इतिविष्णुवचनबोधितानारम्भहेतुकं सूतकं लौकिकवरणवृतानामप्यस्त्येव । सूतक-ग्रहणं मृतकोपलक्षणम् । गृहीतमधुपर्कस्य यजमानात्तु ऋत्विज इत्यत्रर्त्विक्शब्द ऋतुयजनविशेषनिमित्तक एव ग्राह्यः । तेन न चमसाध्वर्युभ्यो मधुपर्कः किंतु गन्धा-दिभिः पूजामात्रम् । यजमानस्यापि यावत्कर्म तावदेवाशौचाभावः । ऋत्विजां दीक्षि-तानां चेत्यनन्तरोदाहृतवाक्यात् ।

न दीक्षिण्याः परं यज्ञे न कृच्छ्रादि तपश्चरन् ॥ इतिवचनाच्च ।

दीक्षिणी दीक्षणीया । दीक्षितानामिति बहुवचनं सत्राभिप्रायेण । इदमपि प्रारम्भो-त्तरमेव ।

प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥ इतिवाक्यात् ।

अत्रापि प्रारम्भशब्दार्थः प्रारम्भो वरणं यज्ञ इतिवचनसिद्धवरणात्मक एव । संकल्पोत्तरं वरणात्प्राक्चेत्तदा विराम एव । नान्दीश्राद्धं तु पूर्वकृतमेवैकविंशतिदिन-पर्यन्तमुपयोगाय भवति ।

एकविंशत्यहर्यज्ञे विवाहे दश वासराः ।

त्रिषट्चौलोपनयने नान्दीश्राद्धं विधीयते ॥ इतिवचनात् ।

दीक्षितस्य त्ववभृथात्प्रागकर्मकालेऽप्याशौचाभाव एव ।

तद्वद्गृहीतदीक्षस्य त्रैविद्यस्य महामखे ।

स्नानं त्ववभृथे यावत्तावत्तस्य न सूतकम् ॥ इतिवचनात् ।

सत्रिव्रतिब्रह्मचार्यादिसद्यःशौचवदिति तद्वदित्यस्यार्थः । गृहीता दीक्षा येन स दीक्षित इति यावत् । दीक्षणीयायागोत्तरं दीक्षितत्वमिति प्रागुक्तमेव । त्र्यवयवा विद्या त्रिविद्या तामधीते वेद वा स त्रैविद्यो वेदत्रयाध्यायी तत्प्रतिपाद्यकर्मत्रयज्ञानवान्वा । एतादृशो यजमानो भवेत्तस्य महामखेऽग्निष्टोमादिरूपेऽवभृथस्नानं यावत्पर्यन्तं न निर्वृत्तं तावत्पर्यन्तं तस्य यागकर्तुर्न सूतकमित्यर्थः । तद्वदित्यनेन सद्यःशौचमति-दिश्यते । तेनाकर्मकालेऽप्याशौचाभावः सिध्यति । गृहीतदीक्षत्वस्यावभृथस्नानकर्तृ-त्वस्य च चातुर्मास्यसौत्रामण्यादावपि सत्त्वादतिव्याप्तिः स्यात्तां वारयितुं महामख इति । गृहीतदीक्षस्येत्यनेन पूर्वावधिः प्रदर्श्यते । तेनैतन्मध्य एवाकर्मकालेऽपि आशौचाभावो नत्वेताभ्यां पूर्वम् । ननु गृहीतदीक्षस्येत्येतावदेवास्तु चातुर्मास्यसौत्रा-

मण्थादिषु दीक्षाया एवाभावेनापि प्रसङ्गवारणसंभवान्महामख इति विशेषणं व्यर्थ-मिति चेन्न । दीक्षधातोरनेकार्थकत्वेनेज्यारूपधात्वर्थस्य तत्रापि सत्त्वेन तद्वारणार्थं महामख इत्येतस्याऽऽवश्यकत्वात् । त्रैविद्यस्येत्यनेन विशेषणेन केवलं श्रद्दधानस्य महामखेऽपि अकर्मकाले दीक्षितस्यापि अवभृथात्प्रागाशौचमस्त्येव । तथा चाशौचनि-मित्तकं स्नानं कर्मारम्भात्प्राक्कृत्वाऽङ्गेष्वेव धृतवस्त्रजातं शुष्कं कृत्वा भस्म धृत्वा कर्माऽऽरभेत । कर्मसमाप्त्युत्तरं पुनराशौची भवेत् । एवं प्रतिकर्मारम्भं स्नानं भवति । धारणाशक्ततायां स्नानोत्तरं वस्त्रमेखलाकृष्णाजिनादीनि प्रक्षाल्य यावत्पर्यन्तं दीक्षार्थं वस्त्रं शुष्कं भवति तावदन्यत्परिधाय शुष्के तस्मिन्दीक्षाऽसि तनूरसि सोमस्य तनूरसीति मन्त्रैः परिधाय सूर्यस्य वासोऽसि नीविरिति नीविमनुपरिकल्प्य नवनीताभ्यञ्जनं कृत्वाऽक्षिणी अङ्क्त्वा प्रक्षालितया तयैव मेखलया परिव्ययणे कृते प्राप्तमग्रिमं कर्म करोति । एवं पत्न्या अपि । एवं यावदाशौचनिवृत्ति । एतच्चान्यथानुपपत्त्या कल्प्यते । एतादृशकल्पनायां त्रैविद्यग्रहणमेव गमकम् । अन्यथैतस्य निरर्थकत्वापत्तेः ।

**अपि वा होतारमध्वर्युं ब्रह्माणमुद्गातारं चैतानेव वृणीते ।**

अपि वा मुख्यानेव चतुरो वृणीत इत्येतावतैव होत्रध्वर्युब्रह्मोद्गातृलाभे चतुर्णां ग्रहणमाश्वलायनोक्तब्रह्मपूर्वकत्वं चतुरः सर्वान्वा चतुरो वृणानो महर्त्विजो वृणीतेऽध्वर्युं ब्रह्माणं होतारमुद्गातारमितीतिभारद्वाजोक्ताध्वर्युपूर्वकत्वं च व्यावर्तयितुम् । तेनाऽऽम-न्त्रणप्रकारादिकं तदुक्तं सर्वमुपसंहार्यमेवेति । एतच्छब्दश्चकारेण मुख्यत्वात्सदस्य-स्यापि संग्रहः शङ्कितः स्यात्तद्व्यावर्तनाय । एवकार इतरेषां समन्त्रकवरणव्यवच्छे-दार्थः । अमन्त्रकं वरणं त्वेतेषामपि भवति । चतुर्णां समन्त्रकवरणपक्षे चतुर्णामेव मधुपर्कपूजा, इतरेषां तु वस्त्रालंकारगन्धादिभिः पूजनमात्रमिति ज्ञेयम् ।

**अथ क्षत्रियं देवयजनं याचते ।**

याजमानं व्याख्यास्याम इत्यधिकाराद्यजमान एव सर्वत्र कर्ता । अथशब्दो नित्य-त्वार्थः । तेन विद्यमानेऽपि देवयजनदेशे याचनं नित्यमिति सिद्धं भवति । आपस्त-म्बेन तद्धतो राज्ञोऽपि याच्ञावचनात् । एवं प्रतिग्रहराहितस्य क्षत्रियस्य वैश्यस्य चापि याच्ञा नित्या । देवयजनयाचने मन्त्रमाहाऽऽपस्तम्बः—देव वरुण देवयजनं मे देहीति यजमानो राजानं याचेदिति ।

**स चेद्ददाति[2] देवयजनवान्भूया इत्येनमाह न चेद्य-दहं देवयजनं वेद तस्मिंस्त्वा वृश्चामी[3]त्येवमाह ।**

चेद्यदीत्यर्थः । एनं *दातारम् । न चेदित्यनन्तरं ददातीत्यनुषङ्गः । यदि न ददातीत्येवापठदापस्तम्बः । चेद्ददातीत्येतावतैव सिद्धेऽपि तच्छब्दमुच्चरति तस्येदं

* अदातारमित्येवोपलभ्यते तत्प्रामादिकम् ।

१ ड. °ध दे° । २ ङ. ज. झ. म. चेदस्मै ददा° । ३ ङ. ज. झ. म. °त्येनमा° ।

प्रयोमनं याचित एव सश्रद्धं ददाति तदैव देवयजनवान्भूया इत्याशीर्यदि निर्बन्धादि-नाऽनुव्यवहारभयाद्वा तदा नाऽऽशीरिति । यदहं देवयजनं वेदेत्यनुव्याहरिष्यतः प्रतिज्ञा ।

अथैनमभिव्याहारयन्ति ।

अथशब्द आनन्तर्यार्थः । तेन यदहं देवयजनं वेद तस्मिंस्त्वा वृश्चामीत्येतदन-न्तरमेव होत्राभिव्याहरणं कर्तव्यं न तु तेन सह तत्पूर्वं वेति । एनमदातारम् । अभि-व्याहारोऽत्र शापः । वाचमुपावधीर्वाक्त्वा हास्यतीत्यादिवक्ष्यमाणमन्त्रलिङ्गात् । वक्ष्यमा-णाभिव्याहरणमन्त्रप्रतिपाद्याभिर्वाग्गादिभिरित्यर्थः । बहुवचनं वक्ष्यमाणहोत्राद्यभिप्रा-येण । सामान्यप्रतिज्ञेयम् । अथवाऽभिव्याहारयन्तीति स्वार्थे णिच् । वक्ष्यमाणा होत्रा-दयः । नचार्त्विजः प्रयोज्याः प्रयोजको यजमानस्तथा च नागतिका(क)गतिका णिचः स्वार्थपरत्वकल्पनेति वाच्यम् । अभिव्याहरणकर्तृत्वस्य होत्रादिनिष्ठत्वमिव यज-मानस्यापि तत्कर्तृत्वस्याग्रे वक्ष्यमाणत्वेन स्वस्मिन्स्वप्रयोज्यत्वासंभवात् । अतः स्वार्थं एव णिच् ।

तत्प्रकारमाह—

> वाचमुपावधीर्वाक्त्वा हास्यतीति होता प्राणमुपावधीः प्राणस्त्वा हास्यतीत्यध्वर्युर्मन उपावधीर्मनस्त्वा हा-स्यतीति ब्रह्मा चक्षुरुपावधीश्चक्षुस्त्वा हास्यती-त्युद्गाता श्रोत्रमुपावधीः श्रोत्रं त्वा हास्यतीति होत्र-का आत्मानमुपावधीरात्मा त्वा हास्यतीति सदस्योऽ-ङ्गान्युपावधीरङ्गानि त्वा हास्यन्तीति चमसाध्वर्यवः प्रजापतिमुपावधीः प्रजापतिस्त्वा हास्यतीति यजमा-नो भूतान्युपावधीर्भूतानि त्वा हास्यन्तीति सर्वे ।

होत्रादीनामुपादानं तत्तन्मन्त्रसंबन्धपरिज्ञानार्थम् । अन्यथा प्रथमः कस्य मन्त्रो द्वितीयः कस्येत्यादिपरिज्ञानं न स्यात् । सर्वे उक्ता होत्रादयोऽनुक्ता यजमानस्य प्रेष्याद्याश्च । क्रमेणैवाभिव्याहरणम् ।

एवं शप्ते ततोऽन्यं याचते—

अथर्त्विजो देवयजनं याचते ।

अथशब्दो यद्यपि स्वकीय एव देवयजनदेशस्तथाऽपि राजानुज्ञां विना नैवर्त्विजः प्रति याचनं भवतीति । ऋत्विज इति द्वितीयाबहुवचनम् । होत्रादीनामनुज्ञापनमेवात्र याचनशब्दार्थः । आपस्तम्बस्तु ऋत्विजः प्रति याचने राजकर्तृकतामाह—राजा देवयजनं याचत्यग्निर्मे होता स मे होता होतर्देवयजनं मे देहीत्यादिना । यत्र ऋत्विग्-

र्देवयजनस्य तत्र गच्छति याचनार्थम् । तत्रापि न लभ्यते चेत्, यो यक्ष्य इत्युक्त्वा न यजते त्रैधातवीयेन यजेतेति विहितां त्रैधातवीयेष्टिं कुर्यात् । वरणकाल एवर्त्विक्संपादनमिति पक्ष ऋत्विगलाभेऽपीति केचित् । वस्तुतः सामग्र्युपकल्पनं यथा संकल्पात्पूर्वं तथर्त्विग्देवयजनकल्पनमपि । तथा च न त्रैधातवीयेष्टिर्नैव क्रत्वनारम्भरूपो विशेषः । बौधायनः स्पष्टमेतद्द्वैधसूत्र उक्तवान्नादृष्ट्वा राजानं चार्त्विजश्च दीक्षेदिति । चकारो देवयजनपात्रादिसामग्रीसंग्रहार्थः ।

अग्निर्मे होता स मे देवयजनं ददात्वित्युपांशु होतर्देवयजनं मे देहीत्युच्चैर्मानुषम् ।

उपांश्वित्यनन्तरं देवयजनं याचत इत्यनुवर्तते सामान्यप्रतिज्ञासूत्रात् । तत्तन्मन्त्रलिङ्गात्तं तं प्रति । मानुषमिति देवयजनविशेषणम् । ऋत्विग्विशेषणत्वे मन्त्रेषु मानुषनामनिर्देशाभावेन तत्त्वानुपपत्तेः । तेनार्थात्पूर्वतो दैव्यदेवयजनयाचनमिति सिध्यति । अदृष्टार्थमेतत् । उपांशुत्वस्य शब्दधर्मत्वाद्देवयजनयाचनमन्त्रेष्वेवान्वयो न तु याचने । तेन मन्त्रमुपांशूक्त्वा दैव्यं देवयजनं याचत इत्येवं वाक्यं भवति । एवं मानुषमित्यत्रापि । एवं सर्वत्र द्रष्टव्यम् ।

एवमितरेषूपांशु देवतानामधेयमभिव्याहरत्युच्चैर्मानुषस्य ।

एवमितरेष्वित्येतावतैव सिद्धावुपांशु देवतानामधेयमभिव्याहरत्युच्चैर्मानुषस्येतिवचनं प्रकारान्तरमिदं पूर्वेण सह विकल्पार्थ इति प्रदर्शयितुम् । किं तत्पूर्वं किं तदुत्तरमिति चेदुच्यते—पूर्वमन्त्रयोरुपांशुत्वोच्चैस्त्वे अत्र तु नामधेययोरेवोपांशुत्वोच्चैस्त्वे इति पूर्वमन्त्रेषु देवतानामधेयानामेवोपांशुत्वेऽवशिष्टमन्त्रभागाणामर्थादुच्चैस्त्वम् । उत्तरमन्त्रेषु मानुषनामधेयानामेवोच्चैस्त्वेऽवशिष्टमन्त्रभागाणामर्थादुपांशुत्वमिति ज्ञेयम् । मानुषमित्येव लाघवाद्वक्तव्ये गुरुभूतः षष्ठ्यन्तत्वेन निर्देशोऽत्र ऋत्विङ्नामापि ग्राह्यमिति गमयति । यथाऽमुकशर्मन्मानुष होतर्देवयजनं मे देहीत्यादि । नामैव नामधेयम् । भागरूपनामभ्यो धेय इति स्वार्थे धेयप्रत्ययः । अभिव्याहरणमुत्कीर्तनमेव देवतानामधेयशब्दसमभिव्याहारात् । होतेत्यादिनामानि तु न मानुषाणि किंतु आर्त्विज्यप्रयुक्तानि । मानुषस्येत्यनन्तरं देवतानामधेयमित्यत्रत्यसमासैकदेशनामधेयशब्दोऽनुवर्तते । देवतानामधेयमभिव्याहरतीत्यत्र देवताया नामधेयं देवतानामधेयमिति षष्ठीतत्पुरुष एव लाघवान्न तु देवताया नामधेयं यत्रेति व्यधिकरणबहुव्रीहिरिति । बहुव्रीहिसमासे तु देवतानामधेयशब्दस्य मन्त्रपरतायां पूर्वेण सहैकार्थत्वेन पुनरुक्तितादवस्थ्यापत्तेः । अतः षष्ठीतत्पुरुष एव युक्तः । अत उपांशु देवतानामधेयमभिव्याहरत्युच्चैर्मानुषस्येत्येतत्सूत्रं पक्षान्तराभिप्रायमेवेत्येवमवश्यं स्वीकार्यमित्यलं बहुना ।

आदित्यो मेऽध्वर्युः स मे देवयजनं ददात्वध्वर्यो देवयजनं मे देहीत्यध्वर्युं चन्द्रमा मे ब्रह्मा स मे देवयजनं ददातु ब्रह्मन्देवयजनं मे देहीति ब्रह्माणं पर्जन्यो म उद्गाता स मे देवयजनं ददातूद्गातर्देवयजनं मे देहीत्युद्गातारमाकाशो मे सदस्यः स मे देवयजनं ददातु सदस्य देवयजनं मे देहीति सदस्यमापो मे होत्राशꣳसिन्यस्ता मे देवयजनं ददतु होत्राशꣳसिन्यो मे देवयजनं मे दत्तेति होत्रकान्रश्मयो मे चमसाध्वर्यवस्ते मे देवयजनं ददतु चमसाध्वर्यवो देवयजनं मे दत्तेति चमसाध्वर्यून् ॥ २ ॥

स्पष्टम् ।

याचित्वेदमगन्म देवयजनं पृथिव्या इति देवयजनमध्यवस्यति ।

देवा इज्यन्ते यस्मिंस्तद्देवयजनं देवानां यजनं यस्मिन्निति वा देवयजनं, तदध्यवस्यति सहाग्निभिरुपकल्पितसोमार्त्विक्संभारैश्चोदकुम्भपुरःसरं वासार्थं गच्छतीत्यर्थः । अनुप्रयाथावस्येदित्यत्रावस्यतेस्तथाऽर्थदर्शनात् । एदमगन्म देवयजनमिति मन्त्रलिङ्गाच्च । मदेमेति मन्त्रान्तः । अगन्मेति बहुवचनं पत्न्यमात्याभिप्रायम् । तेनामात्या अपि सह स्युः । इदं चामात्यसाहित्यं तत्सद्भावाभिप्रायेण । पत्न्यां तु नैवं तां विना क्रतोरेवाभावात् । तस्या देवयजनं प्रति गमनं तु अरण्यन्वारम्भस्य पत्न्या विहितत्वात्तद्द्वारा सिद्धमेव । यजमानस्य मुख्यत्वादेनैतद्ब्राह्मणे देवयजनꣳ ह्येष पृथिव्या आगच्छति यो यजत इत्येकवचनं श्रूयते । याचित्वेत्युक्तानुवाद आपस्तम्बोक्तस्यापि वा न देवयजनं याचेद्देवता एवोपतिष्ठेत सक्षेदं पश्येत्येतस्य पक्षस्य निराकरणार्थः । क्त्वाप्रत्ययाद्देवयजनाध्यवसानाङ्गता । तेन देवयजनाध्यवसानोत्कर्ष एतस्याप्युत्कर्षः समारोपणादिकं देवयजनयाच्ञातपूर्वमेव भवतीति । अत्र देवयजनाध्यवसानमरण्ये दीक्षतेऽरण्ये यजत इत्यस्मिन्पक्षे । अग्रे यद्विभास्यति तद्ग्रामे दीक्षतेऽरण्ये यजत इत्यस्मिन्पक्ष इति द्रष्टव्यम् ।

देवयजनमध्यवस्यतीति पूर्वमुक्तं तत्र किंलक्षणं देवयजनमित्याकाङ्क्षायामाह—

यत्समं प्रतिष्ठितमोषधिमदनूषरमभङ्गुरमनुपहितमनिरिणमविस्रꣳसदारि* ।

यत्समं समभूमिकं यद्देवयजनं भवति तद्देवयजनमध्यवस्यतीति पूर्वेणान्वयः । प्रतिष्ठितं सुशोभितं मृदुभूमित्वादिभिर्यत्र स्थितस्य मनोऽभिरुचितं भवति । तथा च बौधायनः—जुष्टे देवयजने शाला कारिता भवतीति । जुष्टेऽभिरुचित इत्यर्थः । सर्वेषामपि

* टीकानुरोधेनाविसृग्दारीत्यपि पाठो ज्ञेयः ।

देवयजनविशेषणानां पूर्वेणान्वयः। ओषधिवत्, ओषध्यः फलपाकान्ता यत्र तादृशम्। वकारश्छान्दसः। ऊषा क्षारस्मृत्सा यत्र न विद्यते तदनूषरम्। तस्य स्वकृत इरिणे नावस्येदिति निषेधात्। इरिणशब्देन सोषदेशस्यैवोक्तत्वात्। क्वचिदनूखरमित्यपि पाठः। धान्योत्पत्तिरहिता भूमिरूखरा तया रहितमिति अनूखरशब्दार्थः। अभङ्गुरं यत्र नदीप्रवाहादिभिर्भङ्गो न संभाव्यते तदभङ्गुरम्। इदमसुषिरोपलक्षणम्। असुषिरमच्छिद्रम्। अनुपहतं यद्दहनचण्डालवासादिभिरुपहतं न भवति तदनुपहतम्। अनिरिणं यत्र तृणादिकं नोत्पद्यते तदिरिणं ततोऽन्यदनिरिणम्। अविसृग्दारि विसृग्विसर्गः शोषित्वं दारि दारणं च वृक्षाणां यत्र न संभाव्यते तदविसृग्दारि। तदीयदारणनिषेधस्य त्वभङ्गुरमित्यनेनैव गतार्थत्वान्नात्र तन्निषेधापेक्षा। अविस्रग्दारीति पाठेऽपि अर्थस्तु स एव।

प्राचीनप्रवणमुदीचीनप्रवणं प्रागुदक्प्रवणं वा।

पूर्वं सममित्युक्तं तत्रैतत्पक्षत्रयं विकल्पते। प्राचीनं प्रवणं क्रमनिम्नं स्थलं यत्र, उदीचीनं प्रवणं क्रमनिम्नं स्थलं यत्र, प्राक्चोदक्चानयोरन्तरालं प्रागुदक्। ईशानदिगित्यर्थः। प्रागुदक्प्रवणं क्रमनिम्नं स्थलं यस्य। प्रतिष्ठितत्वादिकं तु पक्षचतुष्टयसाधारणम्।

यस्मात्स्थलान्तरमभितो भवति।

यस्माद्देवयजनादन्यत्स्थलं स्थलान्तरमभितः समन्ततो भवति तादृशं देवयजनं स्वीकार्यमित्यर्थः।

न देवयजनमात्रं पुरस्तादतिशिनष्टि।

देवयजनस्य पुरस्तात्पुरोभागे। मात्रशब्दाद्देवयजनप्रमाणतो न्यूनाधिकस्थलातिशेषे न दोष इति गम्यते। देवयजनमात्रातिशेषनिषेधो दृष्टासंभवाददृष्टार्थ एव।

पक्षान्तरमाह—

यावान्वा शम्याप्रासः।

यावति प्रदेशे शम्या प्रास्ता प्रक्षिप्ता भवति तावन्मात्रं वा नातिशिनष्टीत्यर्थः। न देवयजनमात्रं पुरस्तादतिशिनष्टीत्यनेन विकल्पते।

यावत्समं प्रतिष्ठितं तद्गतश्रीर्यजेतेति नित्ये काम्ये।

यावत्सममित्यत्र सर्वत इति शेषः। यत्सर्वतः समं प्रत्येव तिष्ठतीति श्रुतेः। यावत्समं स्थलं तावत्प्रतिष्ठितं देवयजनमित्याख्यायत इत्यर्थः। यावत्समं तावत्प्रतिष्ठितं देवयजनं तत्तत्र प्रतिष्ठिते देवयजने यजेतेति नित्ये विधौ काम्ये विधौ च यत्समं प्रतिष्ठितं तदेव देवयजनं गतश्रियो भवतीत्यर्थः। स्वभावतो यत्समं प्रतिष्ठित-

मित्यादिवाक्या शम्याप्रास इत्येतदन्तलक्षणलक्षितं तन्नित्यमगतश्रीगतश्रीसाधारणं देवयजनमिति निष्कृष्टोऽर्थः । शुश्रुवान्ग्रामणी राजन्यश्च गतश्रियः । शुश्रुवान्वेदत्रयाध्यायी । अहे बुध्निय मन्त्रं मे गोपायेति मन्त्रे वेदत्रयाध्यायिनः श्रीशब्दवाच्यता स्पष्टमाम्नाता । ग्रामं नयतीतिव्युत्पत्त्या ग्रामणीशब्देन ग्रामाधिकार्युच्यते । राजन्योऽभिषिक्तः क्षत्रियः । गता प्राप्ता श्रीर्येस्य स गतश्रीः । ये गत्यर्थास्ते प्राप्त्यर्था इति शास्त्रात् । देवयजने विशेषमाहाऽऽपस्तम्बः—यत्र वा बहवो ब्राह्मणाः संराधयेयुरग्नयो वाव देवयजनं यत्र क्व चाग्नीनाधाय यजते देवयजन एव यजत इति विज्ञायते दक्षिणी वाव देवयजनं दक्षिणाश्चेत्कल्याणीर्ददाति देवयजन एव यजत इत्येक इति । यत्र यद्देवयजनविषये बहवो ब्राह्मणाः सदस्यवत्साक्षिणः साधु ते कृत्यमत्रेति श्लाघयेरंस्तदुक्तलक्षणाभावेऽपि देवयजनं स्यात् । गरीयसोऽस्य गुणस्य लाभादिति भावः । तथा च देवयजनाधिकारे ब्राह्मणम्—विश्वे ह्येतद्देवा जोषयन्ते यद्ब्राह्मणा इति । यत्र क्व चाग्नीनाधायाग्न्याधानं कृत्वा यजते यागं करोति तद्देवयजनं नित्यमुक्तलक्षणाभावेऽपि । अयं कल्पः सोमपूर्वाधाने । अथ वा यत्र क्व चाग्नीनाधाय स्थापयित्वैव यजते तदेव देवयजनं नित्यमुक्तलक्षणाभावेऽपीति । अस्मिन्पक्षे देवयजनैकदेश एव प्राग्वंशाविरुद्धे स्थल एवाग्नीन्निधाय तत्रैव संकल्प्य राजपूजनादि मधुपर्कान्तं कृत्वा शालां प्रति गच्छेदिति प्रयोगः । अग्निमनाथदेशस्य का गुणापेक्षेति भावः । कल्याण्यो लक्षणवत्यो बह्व्यो गावश्चेत्स्युस्तदा दक्षिणाबाहुल्ये महागुणे सति देवयजनगुणाभावः कृतोऽकिंचित्कर इति भावः । यथोक्तलक्षणलक्षितदेवयजनालाभ एवैते पक्षा द्रष्टव्याः । उभयसत्त्वे त्वधिकगुणावहं भवतीत्यर्थतः ।

अतिप्रव्रण्येऽभिचरन्यजेत गुहाक्येऽभिशस्यमानः ।

अति अतिशयेन प्रवृश्च्य प्रवृश्च्य वृक्षांश्छित्त्वा छित्त्वैव देवयजनं कुर्युस्तदतिप्रव्रण्यम् । आपस्तम्बेन निर्व्रण्येऽभिचरन्यजेतेत्यतस्यैव निर्व्रण्यशब्देन व्यवहारः कृतः । एतत्स्वरूपमाह स एव—यस्माद्वृक्षान्वल्मीकानीति निर्हरेयुरथो अभिखनेयुरिति । वृक्षांश्छित्त्वा वल्मीकानि खात्वा देवयजनं कुर्युस्तन्निर्व्रण्यमिति तात्पर्यार्थः । गुहाक्ये गुहावने गुहाबहुले वन इति यावत् । यमकर्तारं पापस्य कर्तारमवदिशन्ति सोऽभिशस्यमानस्तस्य गुहावनं देवयजनं भवतीत्यर्थः । अत्राऽऽपस्तम्बो विशेषमाह—परोक्षं गुहावने याजयेदभिशस्यमानं परोक्षं पृष्ठान्युपेयुः सर्वमुपांशु क्रियेत स्थले यजेतेति । यथा लोका न पश्यन्ति तत्परोक्षमभिशस्यमानं याजयेत् । तस्य पृष्ठान्यपि परोक्षमुपेयुः । न स्वास्वृक्षु गायेयुः, सर्वं साङ्गं प्रधानमुपांशु क्रियेत, स्थल उच्छ्रितभूमौ यजेतेत्यर्थः । अन्यं विशेषमाहाऽऽपस्तम्बः—यत्राप्यो देवयजनं चान्तरेण पन्था अभिविधावेतास्मिन्याजयेद्यं कामयेत नैनमुत्तरो यज्ञ उपानमेदिति । बौधायनोऽपि कर्मा-

न्ते—अथातो देवयजनकल्पः स एतद्देवयजनं जोषयते पुरस्तादुदक्रमनूषरमनुपहतम· विस्रग्दार्यभङ्गुरं बहुलौषधि यत्रान्या अन्या ओषधयो ऽनिषक्ताः स्युः प्रागुदक्प्रवणं यथा चात्वालसारिणीरापः स्युर्नातिप्रवणं यस्मादन्यत्पुरस्तात्समान्तिकं देवयजनं न विन्देदिति। कात्यायनः—देवयजनं जोषयन्त उन्नतमश्समविभ्रंश्यभितो देवयज· नमात्रदेशं पुरस्ताद्वर्जं प्राक्प्रवणमुदग्वा यत्किचानूचानर्त्विज उद्धृतौषधिमूले परेते विमितं कुर्वन्तीति। लाट्यायनद्राह्यायणावाहतुः—प्रागुदक्प्रवणं देवयजनं लोमशम· वृक्षश्समं पुरस्ताच्चास्याऽऽपः स्युस्तदभावे महावृक्ष उदपानो महापथो वा नचास्य स्थलतरमदूरे स्याद्देवयजनमात्रं च पुरस्ताद्विपर्यस्याभिचरणीयेषु स्थलादन्यद्देवयजनमा· त्राच्चेति। लोमशं तृणौषधिबहुलम्। न यस्मिन्वृक्षाः स्युस्तदवृक्षम्। समं यत्राविषमा भूमिस्तादृशम्। अस्य देवयजनस्य पुरस्तादापः स्युर्भवेयुः। तदभावेऽपामभावे। उद· पानं कूपः। देशान्तरगामी पन्था महापथः। यस्यातिशयितं स्थलं स्थलतरमदूरे समीपे समन्ततो न च स्यात्तद्देवयजनम्। चस्त्वर्थे। देवयजनमात्रं तु पुरस्तात्पुरो· भागे देवयजनस्य न स्यात्। पूर्वमुक्तानि लक्षणानि तद्विपर्यस्तानि अभिचरणीयेषु ज्ञेयानि। न चास्य स्थलतरमदूरे स्याद्देवयजनमात्रं च पुरस्तादित्येतत्तु नैव विपर्यस्तं भवतीत्यर्थः।

पुरोहविषि देवयजने याजयेदितिब्राह्मणव्याख्या·
तानि काम्यानि देवयजनानि तेषां याथाकामी।

पुरोहविषि देवयजने याजयेदित्यारभ्य भवत्येवेत्येवमन्तं यद्ब्राह्मणं तेन व्याख्या· तानि उक्तानि काम्यानि कामार्हाणि तेषां मध्ये याथाकामी कामनानुरोधेन पक्षो भवतीत्यर्थः। आपस्तम्बोऽपि पुरोहविषीति काम्यानि देवयजनानीति। बौधायनोऽपि जुष्टे देवयजने शाला कारिता भवति पुरोहविषि देवयजने याजयेदित्येतेषां यज्जोषयत इति। यं कामयेतोपैनमुत्तरो यज्ञो नमेदभि सुवर्गं लोकं जयेदिति तं पुरोहविषि देवयजने याजयेत्। पुरोहविषि देवयजने याजयेदिति विधिः। यं कामयेतोपैनमुत्तरो यज्ञो नमेदभि सुवर्गं लोकं जयेदितीतिकामनावानधिकारी। यस्य होता प्रातरनुवाकमि· त्यारभ्य विपश्यतीत्यन्तेन पुरोहविषो देवयजनस्य लक्षणम्। उपैनमुत्तर इत्यारभ्य सुवर्गं लोकं जयतीत्यन्तेन फलम्। यस्य देवजनस्य मण्डपे प्रातरनुवाकमनुब्रुवन्हो· ताऽग्निं पुरोवर्तिनमौत्तरवेदिकाग्निं ततः प्राग्वर्तिनं नदीतडागादिजलं ततोऽपि प्राग्दि· श्युदितमादित्यं चाऽऽभिमुख्येन युगपत्पश्यति एतादृग्देवयजनं पुरोहविरित्युच्यते। उक्थ्यषोडश्यादिरुत्तरो यज्ञ एनं यजमानं प्रति उपनमेत्सुवर्गं लोकं चाभिजयेदित्य· ध्वर्युः कामयेत तदैतादृशे देवयजने याजयेदित्यर्थः। प्रातरनुवाकशब्देनाऽऽज्यप्रउग· शस्त्रे ग्राह्ये नतु प्रातरनुवाको गृह्यते तस्य पुरोदयात्समाप्तेः। अन्यथाऽऽदित्यमभि

विपश्यतीत्येतद्विरुध्येत । अथ वाऽऽदित्यशब्देन तत्संबन्धिप्रकाशो ग्राह्यः । भ्रातृव्यवन्तमाप्ते देवयजने याजयेत् । आप्ते देवयजने याजयेदिति विधिः । भ्रातृव्यवन्तमित्यनेनाधिकारी प्रदर्श्यते । पन्थां वाऽधिस्पर्शयेदित्यारभ्य न रथायैतद्वा आप्तं देवयजनमित्यन्तेन लक्षणम् । आप्नोत्येवेत्यारभ्याऽऽप्नोतीत्यन्तेन फलम् । प्रौढं राजमार्गं प्रौढं गर्तं वा विलोक्याऽऽधिक्येन तत्संस्पर्शो यथा भवति तथा देवयजनं निर्मातव्यम् । देवयजनगर्तयोर्मध्ये शकटस्य वा रथस्य वा यातवै गन्तुं यावदन्तरं पर्याप्तं तावदेवान्तरं कर्तव्यं सोऽयमधिस्पर्शः । एतदेवाऽऽप्तनामकं देवयजनमाप्नोति जयतीत्यर्थः । पशुकाममेकोन्नते देवयजने याजयेत् । एकोन्नते देवयजने याजयेदिति विधिः । पशुमानधिकारी । एकोन्नताद्वै देवयजनादङ्गिरसः पशूनसृजन्तेत्यर्थवादः । अन्तरा सदोहविर्धाने उन्नतः स्यादेतद्वा एकोन्नतं देवयजनमिति लक्षणम् । पशुमानेव भवतीति फलम् । प्राचीनवंशात्पुरतः प्रत्यासन्नं सदः उत्तरवेदेः पश्चात्प्रत्यासन्नं हविर्धानं तयोर्मध्यमुन्नतं यत्र तदेकोन्नतमित्यर्थः । सुवर्गकामं त्र्युन्नते देवयजने याजयेत् । त्र्युन्नते देवयजने याजयेदिति विधिः । सुवर्गकाम इत्यधिकारी । त्र्युन्नताद्वै देवयजनादङ्गिरसः सुवर्गं लोकमायन्नित्यर्थवादः । अन्तराऽऽहवनीयं चेत्यारभ्यैतद्वै त्र्युन्नतं देवयजनमित्यन्तेन लक्षणम् । सुवर्गमेव लोकमेतीति फलम् । उत्तरवेदिहविर्धानसदःप्राचीनवंशानां चतुर्णामन्तरालप्रदेशेषु त्रिषून्नतं यत्र तत्त्र्युन्नतमित्यर्थः । प्रतिष्ठाकामं प्रतिष्ठिते देवयजने याजयेत् । प्रतिष्ठिते देवयजने याजयेदिति विधिः । प्रतिष्ठाकाम इत्यधिकारी । एतद्वै प्रतिष्ठितमित्यारभ्य सममित्यन्तेन लक्षणम् । प्रत्येव तिष्ठतीति फलम् । एतस्यैव नित्यत्वमपीति सूत्रकृतैव प्रागुक्तम् । गतश्रियोऽप्येतदेव देवयजनमित्यपि प्रागुक्तम् । यत्सर्वतः सर्वप्रदेशे समं न तु कुत्रचिदपि उन्नतं कुत्रचिन्निम्नमित्यर्थः । यत्रान्या अन्या ओषधयो व्यतिषक्ताः स्युस्तद्याजयेदिति विधिः । अनेनैव लक्षणं चोच्यते । पशुकामोऽधिकारी । एतद्वै पशूनामित्यारभ्य पशुमानेव भवतीत्यन्तेन फलम् । यवगोधूमकोद्रवप्रियङ्ग्वादिबीजानि परस्परविलक्षणानि यस्मिन्प्रदेशे सहोत्पद्यन्ते तत्र पशुकामं याजयेदित्यर्थः । एतस्य देवयजनस्य यद्यपि नाम नोक्तं तथाऽपि लक्षणत एव नामोन्नेयमन्यान्यव्यतिषक्तौषधि देवयजनमिति । नाम विना व्यवहारो न घटत इति हि प्रसिद्धम् । यं कामयेत निर्ऋत्याऽस्य यज्ञं ग्राहयेयमिति तं निर्ऋतिगृहीते देवयजने याजयेत् । निर्ऋतिगृहीते देवयजने याजयेदिति विधिः । यं कामयेत निर्ऋत्याऽस्य यज्ञं ग्राहयेयमिति कामनावानधिकारी । एतद्वै निर्ऋतिगृहीतं देवयजनं यत्सदृश्यै सत्या ऋक्षमित्येतेन निर्ऋतिगृहीतदेवयजनलक्षणम् । निर्ऋत्यैवास्य यज्ञं ग्राहयतीति फलम् । निर्ऋतिर्यज्ञविघाती राक्षसविशेषः । निम्नोन्नतत्वराहित्येन सदृश्याः सत्या भूमेः संबन्धि यदृक्षं तृणादिशून्यं स्थानं यत्र तन्निर्ऋतिगृहीतम् । व्यावृत्कामं व्यावृत्ते देवयजने याजयेत् । व्यावृत्ते देवयजने याजये-

दिति विधिः। व्यावृत्कामोऽधिकारी। यं पात्रे वा तल्पे वेत्यारभ्यैतद्वै व्यावृत्तं देवयजनमित्यन्तेन लक्षणम्। विपाप्मना भ्रातृव्येणेत्यारभ्य मीमांसन्त इत्यन्तेन फलम्। पात्रोपलक्षिते सहपङ्क्तिभोजने तल्पोपलक्षिते विवाहे बन्धुमित्रादयो यं पुरुषमुद्दिश्य मीमांसेरन्संदिह्येरन्स पुरुषः संदेहहेतोरपवादादेः पाप्मनो व्यावृत्तिं कामयते स व्यावृत्कामः। तं व्यावृत्तसंज्ञके देवयजने याजयेदित्यर्थः। औत्तरवेदिकादाहवनीयात्प्राचीनं स्थलं प्रवणं क्रमनिम्नं गार्हपत्यात्प्राजहितात्प्रतीचीनं स्थलं प्रवणं क्रमनिम्नं यत्र तद्व्यावृत्तसंज्ञकं देवयजनमित्यर्थः। पापेन वैरिणा च व्यावर्तते वियुज्यते। एनं यजमानं न पात्रोपलक्षिते सहपङ्क्तिभोजने न तल्पोपलक्षिते विवाहे च बन्धुमित्रादयो मीमांसन्ते संदिहन्ते। भूतिकामं कार्ये देवयजने याजयेत्। कार्ये देवयजने याजयेदिति विधिः। भूतिकामोऽधिकारी। कार्य इत्यनेनैव तल्लक्षणमप्युक्तं भवति। कार्यो वै पुरुषो भवत्येवेति फलम्। मृच्छिलादिभिरुन्नतीकरणीयं कार्यम्। उपनयनादिसंस्कारैरुन्नतीकरणीयः पुरुषस्ततस्तस्येदं योग्यं फलमिति दर्शयति भवत्येवेत्यनेन। भवत्येवेति ऐश्वर्यं प्राप्नोत्येवेत्यर्थः। तत्रैकोन्नतव्युन्नतव्यावृत्तेषु देवयजनेषून्नतत्वनिम्नत्वे अकृत्रिमे ज्ञेये। असंभवे कृत्रिमे अपि। एकोन्नते देवयजने स्वीक्रियमाणे प्राग्वंशमारभ्य यूपावटान्तं शौल्बेन मानेन तूष्णीमेव मानं कर्तव्यं सदोहविर्धानयोरन्तरौन्नत्यसंपादनाय। एवं व्युन्नतव्यावृत्तयोरपि यथालक्षणम्। कार्ये तु सर्वं मृच्छिलादिभिरुन्नतं स्थलं यावत्पर्याप्तं संपादनीयम्। निर्ऋतिगृहीतदेवयजनस्य निन्दितत्वादर्थादितरेषां प्रशस्तत्वं नहि निन्दा निन्दितुं प्रवर्ततेऽपि तु स्तुत्यं स्तोतुं प्रवर्तत इति न्यायेन। यजमानपरिक्रीतोऽध्वर्युः कथं यजमानायानिष्टं कामयेत। अथ वा याजयेदिति यावन्ति पदानि तेषु स्वार्थे णिच्। यं कामयेत नमेज्जयेत्, भ्रातृव्यवन्तं पशुकामं सुवर्गकामं प्रतिष्ठाकामं पशुकामं यं कामयेत निर्ऋत्याऽस्य यज्ञं ग्राहयेयं व्यावृत्कामं भूतिकाममित्येतेषु विभक्तिलकारव्यत्ययो ज्ञेयः। अस्मिन्पक्ष इच्छाया यजमानगतत्वं संपन्नं भवति। वैयधिकरण्यं च परिहृतं भवति। निर्ऋतिगृहीतदेवयजनस्याऽऽभिचारिके कर्मणि उपयोगश्च सिद्धो भवति। यजमानानिच्छायामध्वर्योरेवेच्छा कथं कर्माङ्गकाम्यदेवयजनप्रयोजिका भवेदित्यापत्तिरपि निरस्ता भवति। अत्र प्रतिग्रहप्रतिषेधार्थं तीर्थगर्भादि कथ्यते। तत्र ब्रह्मपुराणं—

> प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम्।
> तत्र नारायणः स्वामी नान्यः स्वामी कदाचन॥
> तत्र न प्रतिगृह्णीयात्प्राणैः कण्ठगतैरपि। इति।

अत्र प्रवाहमिति जलावध्युपलक्षणम्। तेन पुष्करादौ तडागवाप्यादिकूपे तीर्थे सर्वत्रैव जलमवधीकृत्य हस्तचतुष्टयाभ्यन्तरे निषेधः।

दानधर्मे—भाद्रशुक्लचतुर्दश्यां यावदाक्रमते जलम् ।
तावद्गर्भं विजानीयात्तदूर्ध्वं तीरमुच्यते ॥ इति ।

अत्र भाद्रशुक्लचतुर्दश्यां कदाचिद्वृष्ट्यभावे जलवृद्ध्यभावेऽपि तावत्पर्यन्तं देश उपलक्षणीयः । यदन्वञ्चौ पुरोडाशावुपांश्वुयाजमन्तरा यजतीत्यत्र पुरोडाशद्वयाभावेऽपि यथा देश उपलक्ष्यते तथा । तीरावधिश्च ब्रह्मपुराणे—

सार्धं हस्तशतं यावद्गर्भतस्तीरमुच्यते । इति ।

स्कान्दे—तीराद्गव्यूतिमात्रं तु परितः क्षेत्रमुच्यते ।
अत्र दानं जपो होमो गङ्गायां नात्र संशयः । इति ।

तटद्वये प्रत्येकं क्रोशद्वयाख्यगव्यूतिमात्रं क्षेत्रम् । अत एवोक्तं भविष्ये—

गङ्गासीमां न लङ्घन्ति सर्वपापाण्यशेषतः ।
दिशो दश पलायन्ते सिंहं दृष्ट्वा यथा मृगाः ।
एकयोजनविस्तीर्णा क्षेत्रसीमा तटद्वयम् ॥ इति ।

गर्भे प्रतिग्रहनिषेधः प्रसिद्धनदीषु । प्रसिद्धतरगण्डक्यादिनदीषु तूभयतः सार्धहस्तशतमिति तीरेऽपि निषेध इति शिष्टाः । क्षेत्रे तु निषेधो गङ्गाविषयः । तत्रैव क्षेत्रकथनात् । यत्तु ब्रह्मपुराणे—

यत्र गङ्गा महादेवः स्वयंभूश्च तपोवनम् ।
सिद्धिक्षेत्रं तु तज्ज्ञेयं समन्तात्तु त्रियोजनम् ॥ इति ।

एकैकस्मिन्पार्श्वे सार्धयोजनमिति समन्तात्त्रियोजनमित्यर्थः । एतन्मरणेऽतिशयार्थं न तु प्रतिग्रहप्रतिषेधार्थम् । यदा तु समन्तादर्धयोजनमिति पाठस्तदा स्कान्देन तुल्यार्थतैव । गर्भतीरक्षेत्रेषु यागकरणे यष्टुर्महाफलमृत्विजां तु दोषोऽस्त्येव ।

न तीर्थे प्रतिगृह्णीयात्प्राणैः कण्ठगतैरपि ।
अपि कामातुरो जन्तुरेकां रक्षति मातरम् ॥
तीर्थे प्रतिग्रहो यस्तु तीर्थविक्रय एव सः ।
विक्रीतायां तु गङ्गायां विक्रीतः स्याज्जनार्दनः ॥
जनार्दने तु विक्रीते विक्रीतं भुवनत्रयम् ।
यस्तु लौल्याद्द्विजः क्षेत्रे प्रतिग्रहरुचिर्भवेत् ।
नैव तस्य परो लोको नायं लोको दुरात्मनः ॥ इति पाद्मे,
प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् ।
तत्र नारायणः स्वामी नान्यः स्वामी कदाचन ॥
तत्र न प्रतिगृह्णीयात्प्राणैः कण्ठगतैरपि ।

इति श्राद्धे च ऋत्विजां दक्षिणाप्रतिग्रहे दोषश्रवणात् । लौल्यं लोलुपता । आपत्स्वत्रापि प्रतिग्रहो न दोषाय । तथा च वह्निपुराणम्—

हस्त्यश्वरथयानानि मृतशय्यासनादि यः ।
कृष्णाजिनं च गृह्णाति अनापत्सु गतो द्विजः ॥
तथोभयमुखीं गां च सशैलां मेदिनीं द्विजः ।
कुरुक्षेत्रे च यद्दानं चण्डालात्पतितात्तथा ॥
मासिके च नवश्राद्धे भुञ्जन्प्रेतत्वमाप्नुयात् । इति ।

पाद्मे—प्रतिगृह्णीयाद्वृत्त्यर्थं ब्राह्मणः साधुतः सदा ।
अश्वं च मणिमातङ्गतिलल्लोहानि वर्जयेत् ॥ इति ।

वृत्तिर्जीवनम् । अथैतत्प्रायश्चित्तं प्रसङ्गादुच्यते । तत्र योगीश्वरः—

गोष्ठे वसन्ब्रह्मचारी मासमेकं पयोव्रतः ।
गायत्रीजाप्यनिरतः शुध्यतेऽसत्प्रतिग्रहात् ॥ इति ।

मनुः—जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः ।
मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात् ॥ इति ।

असत्प्रतिग्रहादिति वचनद्वये पदच्छेदः । मासमित्यत्यन्तसंयोगवाचिन्या द्वितीयया त्रिसहस्रजपस्य प्रतिदिनव्यापित्वं गम्यते । जपः पयोव्रतं च दोषगुरु(गौरव)लाघवानुसारेण प्रत्येकं प्रत्येकं समुच्चितं वा कल्प्यम् । यत्तु षट्त्रिंशन्मते—

पवित्रेष्ट्या विशुध्यन्ति सर्वे घोराः प्रतिग्रहाः ।
ऐन्दवेन मृगारेष्ट्या कदाचिन्मित्रविन्दया ।
देव्या लक्षजपेनैव शुध्यन्ते दुष्प्रतिग्रहात् ॥

इति, तद्देशकालद्रव्यकर्तॄणामन्यतरदुष्टत्वे ज्ञेयम् । अनयैव दिशा त्रिचतुःसंनिपाते प्रायश्चित्तगौरवं कल्प्यम् । पूर्वोक्तगायत्रीलक्षजपो वेति केचित् । तीर्थे प्रतिग्रहस्य सतोऽपि निषिद्धत्वादसत्प्रतिग्रहत्वमेव । तथा चेदमेव प्रायश्चित्तं भवति । तत्र तीर्थे कर्माङ्गदक्षिणाप्रतिग्रहस्य निषेधेऽपि वैधत्वात्प्रायश्चित्तलाघवं कल्प्यमिति ज्ञेयम् । प्रायणीयादिवसे प्रयाणकर्तव्यतायामरणीसमारोपस्यैव नियमेन विधानादत्रानियमः सूचितो भवति । तत्र बौधायनोऽरण्योः समारोपणमाह—आमावास्येन वा हविषेष्ट्वा नक्षत्रे वाऽरण्योरग्नीन्समारोह्य शालामभिप्रैत्युत्तरेण शालां परीत्य पूर्वया द्वारा शालां प्रपाद्य गार्हपत्यस्याऽऽयतने मथित्वाऽग्नीन्विहृत्य मध्यमे वंशे राजानं प्रग्रथ्नन्तीति । कात्यायनः—समारोप्याग्नीञ्शालास्तम्भे पूर्वार्धे गृहीत्वाऽरणीपाणिराहेदमगन्मेति । द्वैधेऽपि—अग्नीनां हरणमित्यजस्रान्हरेदिति बौधायनोऽरण्योः समारोह्येति शाली-

किरिति । वाधूलोऽपि—अरण्योरात्मनि वाऽग्नीन्समारोह्य शकटेन प्रत्यक्षान्वा नयञ्छालामभिप्रैतीति । शकटेन हरणेऽनुच्छ्वासादि न । संनिधौ चेच्छकटं विनाऽपि प्रत्यक्षाणां नयनं, त्रिभिरुच्छ्वासैर्गमनं चेद्भवति तदैव शकटं विनाऽपि प्रत्यक्षाणां नयनम् । चतुर्थोच्छ्वासगमने पुनराधानमेव, कर्मार्थहरणेऽनुच्छ्वासचोदनाऽने (?)न चात्र वास्तोष्पतीयावसितहोमौ, एतस्य प्रयाणस्य कर्मार्थत्वात् । अत्रापि भवत इति केचित् । शालां प्रति गमने विशेषो द्वैधे—शालाया अध्यवसान इति स ह स्माऽऽह बौधायनो मध्यंदिने शालामध्यवस्येदापः पूर्वा गच्छेयुरन्वग्यजमानो राज्ञा चारणीभ्यां चेत्यत्रो ह स्माऽऽह शालीकिः कामं पूर्वाह्णे वाऽपराह्णे वा शालामध्यवस्येत्प्रोक्त्वस्तमयाद्दीक्षणीयां संतिष्ठापयिषेदितीति । देवयजनाध्यवसानानन्तरं गोमयोपलिप्तेषु संस्कृतेष्वायतनेषु अग्नीन्विहरति ।

अपराह्णे दीक्षते ।

द्वादशसंभारयजुर्होमादि अपराह्ण एव केवलदीक्षाङ्गत्वात् । संभारयजुर्होमादेर्दीक्षाङ्गत्वे दीक्षिष्यमाणवचनं साधकमिति दर्शितमेव प्राक् । कूश्माण्डहोमस्तु पूर्वाह्ण एव तस्य तन्मात्राङ्गत्वाभावात् । स्वे दक्ष इत्यस्य सत्यमस्मीत्यन्तस्य पुरस्ताद्दीक्षणीयाया जपः प्रत्यगाशीर्मन्त्रानकर्मकरणाञ्जपतीति सूत्रात् । आपस्तम्बेन पुरस्ताद्दीक्षणीयाया आहवनीयमुपतिष्ठत इत्युपस्थाने विनियुक्तत्वादुपस्थानस्यापि जपरूपत्वस्योपोद्धाते दर्शितत्वादुपस्थाने विनियोगेऽपि न विरोधः । सूत्रस्य स्पष्टोऽर्थः ।

यः कामयेत तपस्वी स्यामिति स पूर्वाह्णे ।

काम्यः पक्षोऽयम् । अथ वा नेयं स्वतन्त्रा कामना किंतु तद्दिवसे दीक्षितनियमेषु कालाधिक्यात्पूर्वाह्णदीक्षाप्रशंसामात्रम् । स यजमानो वाग्यतस्तपस्तप्यमान आस्त इति-शाखान्तरदर्शनात् । पूर्वाह्णापराह्णदीक्षाविधिभ्यामिदं ज्ञायते यस्मिन्विभागे पूर्वाह्णापराह्णशब्दाभ्यामंशौ गृह्येते सोऽत्र विभागो ग्राह्य इति । स च द्वेधा विभागस्त्रेधा विभाग एव वा । पूर्वाह्णो वै देवानामपराह्णः पितृणामिति द्वेधाविभागे पूर्वाह्णापराह्णशब्दाभ्यामंशद्वयग्रहणमस्ति । अतो द्वेधाविभागस्य ग्रहणम् । एवं पूर्वाह्णो वै देवानां मध्याह्नो मनुष्याणामपराह्णः पितृणामिति त्रेधाविभागेऽपि पूर्वाह्णापराह्णशब्दाभ्यामंशद्वयग्रहणमस्ति । अतस्त्रेधाविभागस्य वाऽपि ग्रहणम् । प्रातःसंगवमध्याह्नापराह्णसायाह्नात्मके पञ्चधाविभागे तु अपराह्णशब्देनैकांशस्यैव व्यवहारोऽस्ति न तु पूर्वाह्णशब्देनान्यांशस्यापि व्यवहारोऽस्ति । अतः सोऽत्र न गृह्यते ।

---

१ क. 'रुत्रागस्त' ।

यदस्य यज्ञार्थं तन्निरादिश्य शेषाद्भुञ्जतेऽनि-
रादिश्यं वा तस्य न भुञ्जते प्रागग्नीषोमीयात् ।

अस्य दीक्षितस्य यद्द्रव्यमाज्यपशुपुरोडाशीयादि यज्ञार्थं कल्पितं तन्निरादिश्य निर्दिश्याऽऽज्यं पशवः पुरोडाशीयादि यज्ञार्थमेतद्द्रव्यं तन्मध्य एतावद्यज्ञ उपयोक्ष्यन्त एतावद्यज्ञार्थं शेषाद्ब्राह्मणा भुञ्जीरन्निति निरादिश्य, अन्तर्भावितण्यर्थोऽत्र विवक्षितो निरादेश्येति निरादेशनं कारयित्वेति तदर्थः । अत्र प्रयोज्यो यजमानः प्रयोजका ऋत्विजः । तेनर्त्विग्भिः स्वार्थं निरादेशनं कारणीयमित्यर्थः सिद्धो भवति । अन्यथा निरादिश्य भुञ्जत इत्यनयोः समानकर्तृकत्वानुपपत्तेः । अनिरादिश्येत्यत्रापि अन्तर्भावितो णिच्, अनिरादेश्येति निरादेशनमकारयित्वेति तदर्थः । यदि सर्वैरत्र भोक्तव्यमिति सर्वेषामृत्विगादीनामिच्छा तदा निरादेशनं कारयितव्यं भोक्तव्यं च । यदि नेच्छा तदा तु निरादेशनं न कारयितव्यं न च भोक्तव्यम् । निरादिश्य शेषाद्भुञ्जत इत्येतावाने(वतै)वानिरादिश्य न भुञ्जत इत्यार्थिकव्यतिरेकार्थसिद्धौ तस्योपादानमिच्छाधीनं स्वतन्त्रं तुल्यमेतत्पक्षद्वयमिति ज्ञापयितुम् । अन्यथा वैयर्थ्यं दुष्परिहरं स्यात् । यज्ञार्थमेतावद्द्रव्यमिति निश्चितद्रव्यादवशिष्टोंऽशः शेषशब्देनोच्यते । भोजननिषेधावधिमाह—प्रागग्नीषोमीयादिति । अग्नीषोमीयाद्यागादित्यर्थः । स च पत्नीसंयाजान्तो वपायागान्तो वा । तथा च धर्मसूत्रम्—अग्नीषोमीयसंस्थायामेव दीक्षितस्य भोक्तु[१] हुतायां वपायां क्रीते वा राजनि यज्ञार्थे वा निर्दिष्टे शेषाद्भुञ्जीरन्निति ब्राह्मणमिति । क्रीते वा राजनीति भोक्तुरापत्तावयं पक्षः । अग्नीषोमीयस्य पशोः संस्था समाप्तिस्तस्यां सत्यामेव दीक्षितस्य दीक्षितसंबन्धयन्नं भोक्तव्यमनिरादेशेऽपि न तु निरादेशं विनैतत्पूर्वम् । अथ वाऽग्नीषोमीयस्य पशोर्वपायां हुतायां सत्यां वा । राजनि क्रीते वा । एते पक्षा आपदनापदनुसारेण व्यवस्थापनीयाः । यज्ञार्थे निर्दिष्ट एतेभ्यः पूर्वमपि भोक्तव्यम् । अत्र वचनमृत्विगर्थे तत्रैयान्तरमेव ऋत्विगर्थनिरादेशने यजमानस्य प्रयोज्यत्वम् । इतरार्थनिरादेशने प्रयोज्यत्वं तु आज्यं पशवः पुरोडाशीयादि यज्ञार्थमेतद्द्रव्यं तन्मध्य एतावद्यज्ञ उपयोक्ष्यत एतावदेव यज्ञार्थे शेषादृत्विजो भुञ्जीरन्निति । देशने प्रयोज्यत्वं नरा(?)आज्यं पशवः पुरोडाशीयादि यज्ञार्थमेतद्द्रव्यं तन्मध्य एतावद्यज्ञ उपयोक्ष्यत एतावदेव यज्ञार्थे शेषाद्ब्राह्मणाः सर्वे भुञ्जीरन्निति निरादेशनवाक्यद्वयम् । ऋत्विगर्थनिरादेशनमृत्विक्कर्तृकप्रकरणाधीनमित्येतदनित्यम् । द्वितीयं तु स्वकर्तृकत्वाद्ब्राह्मणार्थमावश्यकत्वाच्च नित्यमेव । एवंरीत्यैवोभयत्र विधानं सप्रयोजनं भवति नान्यथेति द्रष्टव्यम् । अपराह्णे दीक्षत इत्यन-

---

१ क. इ. ॰श्य न । २ च॰ मृ । आ॰ ।

न्तरं विधानादिदं ज्ञायते दीक्षाप्रभृतिकर्मोपयोगिद्रव्यनिरादेशनमावश्यकम्। संभारयजुर्होमादेरपि दीक्षार्थत्वात्तदर्थस्यापीति। तथा च कूश्माण्डहोमावशिष्टाज्यस्य स्थापितस्य दीक्षोत्तरमशने निरादेशनाभावेऽपि न दोष इति। अनिरादेशने भोजनं तु स्वस्वास्वस्यर्त्विजाम्। अनिर्दिष्टदीक्षितान्नभोजनप्रायश्चित्तमुक्तमापस्तम्बस्मृतौ—

यज्ञियान्नं नवश्राद्धं संग्रहे चैव भोजनम्।
स्त्रीणां प्रथमगर्भे च द्विजश्चान्द्रायणं चरेत्॥ इति।

यज्ञियान्नं यज्ञसंबन्ध्यन्नम्। यज्ञसंबन्ध्यन्नस्याभोज्यता सूत्रैकवाक्यत्वायाग्नीषोमीयसमाप्तिपर्यन्तमग्नीषोमीयवपायागपर्यन्तं वा द्रष्टव्या। संग्रहो विवाहः।

**स्वस्त्युत्तराण्यशीयेति सर्वत्र केशेषूप्यमानेषु जपति।**

सर्वत्रेतिवचनं समावर्तनचौलगोदानसंबन्धिकेशवपनेष्वप्येतज्जपप्राप्त्यर्थमनूबन्ध्यावपायाः हुतायां दक्षिणस्यां वेदिश्रोण्यां परिश्रिते यजमानस्य केशश्मश्रूणि वापयत इत्यस्मिन्नमन्त्रकेऽपि वपन आश्वमेधिके केशश्मश्रूणि वापयते नखानि निकृन्तते दतो धावते स्नात्यहतं वासः परिधत्त इत्येतस्मिंश्चामन्त्रकेऽपि वपने च स्वस्त्युत्तराण्यशीयेति जपप्रापणार्थं वा। उप्यमानेष्वितिवर्तमाननिर्देशाद्वपने क्रियमाण एव जपो न तु तत्पूर्वं न चानन्तरम्। अशुचित्वेऽपि वचनान्मन्त्रजपः। एतावानेव मन्त्रः।

**कृते नापितकृत्य औन्दुम्बरेण दतो धावते लोहितमनागमयन्।**

नापितस्य कृत्यं नापितकृत्यं तस्मिन्नापितकृत्ये। नापितकृत्य इत्यनेनाध्वर्युकर्तृकमिदं वपनकृत्यमित्यवगम्यते। नापितकर्तृकत्वे नापितकृत्ये कृत इत्येवं प्रयोगोऽसंगतः स्यात्। नापितकर्तृकत्वं चेदिष्टमभविष्यत्तदा जाते नापितकृत्य इत्येवावक्ष्यत्। नहि तथा सूत्रकृतोक्तम्। अतोऽध्वर्युकर्तृकमेवेदं वपनमिति। औदुम्बरग्रहणमितरवृक्षव्यावृत्त्यर्थं ताम्रव्यावृत्त्यर्थं च। अविशेषात्काष्ठं पर्णं वा ग्राह्यम्। दतो दन्तान्। धावते शोधयति। इदं च दन्तधावनं कर्माङ्गं न तु मुखदौर्गन्ध्यादिनाशार्थम्। तस्य प्रातः कृतेन दन्तधावनेन निषिद्धतिथ्यादिवशेन दन्तधावनकाष्ठस्थानीयद्वादशगण्डूषैर्वा तस्य जातत्वात्। एतस्य दन्तधावनस्य वैधत्वान्न स्मार्तनन्दादिनिषेधस्यात्र प्रवृत्तिः।

यत्तु—दीक्षितो ब्रह्मचारी च यतिश्च विधवाऽङ्गना।
नित्यमद्याद्दन्तकाष्ठममायां तु विवर्जयेत्॥

इति स्मृतिवचनं तन्मन्त्रदीक्षापरं।

गृहीतमन्त्रदीक्षस्तु दन्तानां धावनं चरेत्।
नित्यं वेदाङ्गुलैः काष्ठैरमायां तु विवर्जयेत्।

इतितन्त्रवचनसंवादान्न तु यज्ञसंबन्धिदीक्षापरत्वे(त्व)। दतो धावत इति श्रौतविधिना साकं विरोधापत्तेः। तथा चामायां दीक्षायां दन्तधावनं भवत्येव। दन्तधावने विशेषमाहाङ्गिराः—

तत ऊर्ध्वक्रमेणैव धावयेच्छाखया दतः ॥ इति ।

पूर्वमूर्ध्वदन्तान्संशोध्य पश्चादधोदन्ताञ्शोधयेदित्यर्थः ।

दन्तधावनकाष्ठप्रमाणं कौर्मे—

मध्याङ्गुलिसमं स्थूलं द्वादशाङ्गुलसंमितम् ।
सत्वक्कं दन्तकाष्ठं स्यात्तदग्रेण तु धावयेत् ॥ इति ।

इदं विषमदन्तस्य, इतरस्य तु कनिष्ठिकाग्रसमं स्थूलम् ।

सूक्ष्मं तु हीनदन्तस्य समदन्तस्य मध्यमम् ।
स्थूलं विषमदन्तस्य त्रिविधं दन्तधावनम् ॥ इति विष्णूक्तेः ।

विष्णुः—द्वादशाङ्गुलिकं विप्रे काष्ठमाहुर्मनीषिणः ।
क्षत्रविट्शूद्रजातीनां नवषट्चतुरङ्गुलम् ॥ इति ।

गर्गः—चतुरङ्गुलमानं तु नारीणां नात्र संशयः ॥ इति ।

इदं पत्न्या दन्तधावन उपयुज्यते । दन्तभावनं प्रकृत्य व्यासः—

प्रक्षाल्य पादौ हस्तौ च मुखं च सुसमाहितः ।
दक्षिणं बाहुमुद्धृत्य कुर्याज्जान्वन्तरा तु तत् ॥ इति ।

आश्वलायनः—राक्षस्यामुत्सृजेत्काष्ठं दिशि संमृज्य वा शुचौ ॥ इति ।

संमृज्य प्रक्षाल्य ।

विष्णुः—प्राच्यां सौख्यं दन्तधावे शरीरारोग्यमेव च ।
दक्षिणे तु तथा कष्टं पाश्चिमे तु पराजयः ॥
उत्तरे तु गवां नाशः स्त्रीणां परिजनस्य च ।
पूर्वोत्तरे तु दिग्भागे सर्वान्कामानवाप्नुयात् ॥ इति ।

अङ्गिराः—प्रक्षाल्य भक्षयेत्काष्ठं प्रक्षाल्यैव तु संत्यजेत् ।
आयुरित्यादिमन्त्रोऽयमुक्तः शाखाभिमन्त्रणे ॥ इति ।

स च मन्त्रः पुराणे—आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ।
ब्रह्मप्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥ इति ।

दन्तधावनमन्त्रस्तु—मुखदुर्गन्धिनाशाय दन्तानां च विशुद्धये ।
ष्ठीवनाय च गात्राणां कुर्वेऽहं दन्तधावनम् ॥ इति पुराणोक्तः ।

तूष्णीं वा दन्तधावनम् । मुखदौर्गन्ध्यसंभावनायामयं मन्त्रोऽन्यथा तूष्णीमेवेति ।

शौनको दन्तधावनोत्तरकृत्यमाह—

पश्चाद्द्वादशगण्डूषैर्विदध्याद्दन्तधावनम् ॥ इति ।

लोहितं रक्तम् । अनागमयन्ननिर्गमयन् । ददृश्य इति शेषः । तेषामेव संनिहितत्वात् । पूर्वत्र दीक्षणीयायां कृतायां यदि लोहितं बहिर्निर्गतं चक्षुर्विषयं स्यात्तदा

सर्वेषां दीक्षितधर्माणां प्रवृत्तत्वेन नमो रुद्रियाभ्योऽद्भ्यः स्वाहेति जपो भवति । तस्यामकृतायां दीक्षितधर्माणामप्रवृत्तत्वेन न जपः । यदि दन्तेभ्यो बहिर्निर्गतं जठरे गच्छति तदा प्रायश्चित्तं कृत्वाऽग्रिमं कर्म कार्यं तस्मिन्नकृते तद्विनाऽधिकाराभावात् । तस्माद्यथा लोहितं न निर्गच्छति तथैव दन्तधावनं कर्तव्यम् । तच्च प्रायश्चित्तं षट्त्रिंशन्मत उक्तम् । केशनखरुधिराशने मतिपूर्वे त्रिरात्रमज्ञानादुपवास इति ।

हिरण्यवर्णाः शुचयः पावका इत्येषा हिरण्यवर्णाः शुचयः पावका वृत्रं भित्वा प्रचक्रमुर्हित्वाऽवद्यमापः । शतं पवित्रा वितता ह्यासो ताभिर्नो देवः सविता पुनातु । आपो अस्मान्मातरः शुधन्त्विति च शङ्खिनि ह्रदे हिरण्यमवधाय स्थावरासु स्नाति ।

स्नानमन्त्रास्त्रय एते । मन्त्रत्रयान्ते सकृदेव स्नानम् । इत्येषेतिवचनमन्यत्र प्रसिद्धस्य मन्त्रचतुष्टयग्रहणस्यानुवाकग्रहणस्य वाऽत्र प्राप्तिरितिशङ्कावारणार्थम् । तृतीयस्य रिप्रमित्यन्तः । शङ्खिनि ह्रदे स्नाति केवलं स्थावरासु चेत्स्नाति तदा तासु हिरण्यमन्तर्धायैव स्नातीति । अथवा शङ्खिनि ह्रदे याः स्थावरा आपस्तास्वेव हिरण्यमन्तर्धायैव स्नातीति । स्थावरा अशोष्याः । ह्रदशब्दसांनिध्यात् । स्थावरा निवृत्तगतय इत्यस्मिन्कल्पे तटाके सरसि वाऽपि स्नानम् । अस्मिन्पक्षे पूर्वव्याख्यानार्थ एवात्रानुकूलो भवति । स्मृतौ दीक्षार्थस्नानं देवखाते नद्यां गङ्गायां संगमे वा महाफलमित्युक्तं—

देवखातेऽथवा नद्यां गङ्गायां संगमेऽपि वा ।
स्नानं दीक्षार्थं कुर्वीत महाफलमुदाहृतम् ॥ इति ।

नद्यो महानद्यो गोदावरीभीमाद्या द्वादश । तथा च महानदीः प्रकृत्य ब्रह्मपुराणम्—

गोदावरी भीमरथी तुङ्गभद्रा च वेणिका ।
तापी पयोष्णी विन्ध्यस्य दक्षिणे तु प्रकीर्तिताः ॥
भागीरथी नर्मदा च यमुना च सरस्वती ।
विशोका च वितस्ता च विन्ध्यस्योत्तरतः स्थिताः ॥ इति ।

भागीरथीगोदावरीवेणा इति तिस्रो गङ्गाः । तथा च ब्रह्मपुराणम्—

तिस्रो नद्यो महापुण्या वेणा गोदाऽथ जाह्नवी ।
गां हरीशाङ्कतः प्राप्ता गङ्गा इति हि कीर्तिताः ॥ इति ।

गां हरीशाङ्घ्रिकात्प्राप्ता इति पाठान्तरम् । हरेश्चरण ईशस्य शिरस्तस्माद्गां पृथिवीं प्राप्ता इत्यर्थः । शङ्खशब्दः स्वच्छं जलं लक्षयति । शङ्खशब्दान्मत्वर्थीय इनिः । शङ्खः शङ्ख इव स्वच्छं जलमस्मिन्नस्तीति शङ्खी तस्मिन्नित्यर्थः । अगाधं जलं यत्र स ह्रद इत्युच्यते । ह्रदस्यैव विशेषणं शङ्खिनीति ।

प्रकारान्तरमाह—

**यल्लोमशमवकाशं तीर्थं तस्मिन्स्नाति कुण्डे स्नातीत्येकेषाम् ।**

यज्जलं लोमशं यत्र तृणानि भवन्ति तल्लोमशं लोमानि विद्यन्ते यस्मिंस्तीर्थे तल्लोमशं, लोमशब्दस्तृणपरः । लोमभ्योऽधिस्तम्बयजुर्हरतीतिदर्शनात् । लोमादिपामादीत्यनेन मत्वर्थीयः शः । अवकाशमवकाः शैवालाः । केचिच्छरोऽवका इति अपाः शरोऽवका इति लिङ्गाद्व्याचक्षते । अवकाभिराशो व्याप्तिर्यस्य तदवकाशम् । अथवाऽवकाशोऽस्यास्तीत्यवकाशः । अर्शआदित्वान्मत्वर्थीयोऽच्प्रत्ययः । सुखेनावर्तितुमवकाशो यस्मिन्भवति तादृशमिति यावत् । एतादृशं सत्तीर्थं यत्र लोकः स्नाति तस्मिन्वा स्नायादित्यर्थः । न तु महामहिमास्वप्स्वेव स्नायादिति नियमः । तासां संभवे तु तास्वेव स्नानमधिकम् । कुण्डं तल्लक्षणद्रोणी तस्यां वा स्नातीत्यर्थः । स्नातीत्यस्या मध्ये पुनरावृत्तिः पक्षान्तरं स्वतन्त्रमिदमितिप्रदर्शनार्थम् । कुण्डे स्नातीत्यत्र मण्डूकप्लुत्या हिरण्यमवधायेत्यनुवर्तते । तथा चाऽऽपस्तम्बः—कुण्डे हिरण्यमवधाय तस्मिन्स्नातीति वाजसनेयकमिति कूपे नैवैतत्स्नानं वाजसनेयिमतात् । तीर्थं प्रति गमने विशेष उक्तो द्वैधे—तीर्थगमन इति स ह स्माऽऽह बौधायनः प्रदक्षिणमावृत्येतरत्तीर्थं गच्छेद्यथामुतोऽपसलैरावर्ततेत्यत्रो ह स्माऽऽह शालीकिरपसलैरावृत्येतस्तीर्थं गच्छेद्यथामुतः प्रदक्षिणमावर्ततेतीति । इतो वपनप्रदेशात् । अमुतस्तीर्थप्रदेशात् । यदि तीर्थं दूरे भवति तदोपाय उक्तो बौधायनेन—अथ यदि दूरे तीर्थं भवत्युत्तरेण शालां द्वौ कटपरिवारौ कुर्वन्ति पूर्वं यजमानायापरं द्वितीयं पत्न्यै तयोः प्राचीद्वारौ कुर्वन्ति तदुदकुम्भौ निधापयतीति । तत्तयोः कटपरिवारयोरुदकुम्भौ निधापयति परिकर्मिभिः स्नानार्थमित्यर्थः । अस्मिन्स्नाने यत्राऽऽपः सुखाः सुखावगाहा इत्यारभ्य पवमानः सुवर्जन इति चैतेनानुवाकेन स्नात्वेत्यन्तं सर्वं स्नानतन्त्रं भवति । यत्राऽऽपः सुखाः सुखावगाहास्तदवगाह्येत्यस्मिन्नवगाहशब्दवाच्ये स्नाने हिरण्यवर्णा इत्यादिमन्त्रत्रयं दीक्षार्थत्वेन विधीयते । अवगाह्येत्यस्य स्नात्वेत्यर्थः । एतेनानुवाकेन स्नात्वेत्यत्रत्यस्नानशब्दस्य मार्जयित्वेत्यर्थ इति पदद्वयस्य स्नानप्रतिपादके सूत्रे संस्काररत्नमालायामर्थः कृतोऽस्ति स तत्र द्रष्टव्यः । मध्याह्नस्नानदीक्षार्थस्नानयोः कालैक्ये प्रसङ्गसिद्धिर्मध्याह्नस्नानस्येति ।

**उदाभ्यः शुचिरापूत एमीति स्नात्वोद्राहते ।**

पुनः स्नात्वेतिवचनं स्नानाङ्गतर्पणव्यावृत्त्यर्थम् । एमीतिलिङ्गादुद्राहने मन्त्रः । उद्राहनं तीरं प्रत्यागमनम् । ततो यन्मया दूषितं तोयमिति यक्ष्मोद्देशेन तीरे जलं निक्षिपति । पूर्वत्र दीक्षणीयाकरणपक्षे तु माध्याह्निकस्नानाभाव एव । ततः स्मार्तं द्विराचमनम् ।

उपस्पृश्याऽऽचम्य ॥ ३ ॥

कुत्रचिदप इति नोच्यते कुत्रचिदुच्यते यत्र नोच्यते तत्रापामुत्पवनं कृत्वोपयोक्तव्या यत्रोच्यते तत्र नेतीति सार्वत्रिकम् । प्रकृतेऽप्शब्दाभावात्पात्रे जलं गृहीत्वा तासां पवित्राभ्यामुत्पवनं कृत्वा ता हस्तेनोपस्पृश्येति सिद्धं भवति । आचम्येत्यत्राऽऽ आचम्येति पदच्छेदः।स्मृत्युक्तप्रमाणसिद्धजलमाचमने न विवक्षितं किंतु अधिकमपि भवतीत्याङा बोध्यते। तथा च चुलुकमात्रं जलं पात्रे गृहीतं हस्तेनैव सकृत्प्राश्नातीत्यर्थः सिद्धो भवति । अनेनान्तरतो मेध्यो भवति । तथा च श्रुतिः—अपोऽश्नात्यन्तरत एव मेध्यो भवतीति । वसनस्यान्तेन प्रतिच्छाद्येति बौधायनः । मञ्चान्तःस्थितस्यैव चेदिदमाचमनं तदाऽत्र माध्याह्निकं कर्म, यदि बहिरागत्याऽऽचमनं तदा वक्ष्यमाणनीविपरिकल्पनान्ते माध्याह्निकं कर्मेति ज्ञेयम् । ब्रह्मयज्ञस्तु कत्वारम्भात्प्राक्प्रातरेव कर्तव्यः ।

दीक्षाऽसि तनूरसि तां त्वा शिवाꣳ स्योनां
परिधिषीयेति क्षौमं वासोऽहतं महत्परिधत्ते
सोमस्य तनूरसि तनुवं मे पाहीति च ।

क्षौमाहतशब्दौ व्याख्यातौ । महच्छब्देनात्र वाससः स्थौल्यमुच्यते । दैर्घ्यस्यार्थादेव सिद्धेः । तेन वासोऽत्र स्थूलं भवति दृढमिति यावत् । एतेन सूक्ष्मस्याद्दढत्वाद्व्यावृत्तिः कृता भवति । दीक्षाऽसीति दीक्षाऽसि तपसो योनिरित्याच्छिद्रिकप्रपाठकपठितस्य सन्निवत्यन्तस्य प्रतीकमिदम् । उक्तश्चाऽऽपस्तम्बेनाप्ययं मन्त्रः परिधाने । तनूरसि तां त्वामिति सौत्रो द्वितीयः । सोमस्य तनूरसि तनुवं मे पाहीति संहितास्थस्तृतीय इत्येवं मन्त्रत्रयं परिधाने । प्रादक्षिण्यं परिभाषासिद्धम् । प्रदक्षिणमहतं वासः परिधत्त इत्येवापठद्बौधायनः । चकारः पूर्वाभ्यां सह समुच्चयार्थः । अथवा चकारो दीक्षाऽसि तपसो योनिरित्याच्छिद्रिकमन्त्रसमुच्चयार्थः । अस्मिन्पक्षे प्रथममन्त्रो दीक्षाऽसि तनूरसीत्ययमेक एव । दीक्षाऽसि तपस इत्यन्तं मन्त्रस्तृतीयः । सोमस्य तनूरसि तनुवं मे पाहीति च क्षौमं वासोऽहतं महत्परिधत्त इत्यन्वयः ।

सूर्यस्य वासोऽसि नीविर्नामोर्जमस्मासु
धेहीति तस्य नीविमनुपरिकल्पयते ।

सूर्यस्य वास इव वासोऽसीत्यर्थः । एतेन वाससः सोमदेवत्यत्वात्कथं सूर्यदेत्यत्वमिति शङ्का निरस्ता भवति । तस्य परिहितवाससः । वासोन्ताप्रकाशनार्थोऽभ्यन्तरगोपनाय वेष्टितवसनग्रन्थिर्नीविस्तामनु पश्चात्कल्पयत इत्यर्थः । परिशब्दो दार्ढ्यार्थः । नीविमित्येकवचनं जातौ । तत्र कच्छचतुष्टये द्वौ नीविशब्दवाच्यौ कच्छौ । तत्र पश्चात्कच्छ एव मुख्यत्वात्पूर्वम् ।

---

१ क. ढ. °ति नी° ।

मुक्तकच्छो यदा कुर्यात्कर्म काम्यं कचिन्नरः ।
वृथा भवति तत्सर्वं गुह्यस्थानप्रदर्शनात् ॥ इति गोभिलोक्तेः ।

नचात्राग्रकच्छस्य मुख्यत्वमस्त्विति वाच्यम् । गुह्यस्थानप्रदर्शनादिति हेतुना तस्यैव मुख्यताया अवगमात् । काम्यग्रहणान्नित्यनैमित्तिकयोर्नायं नियम इति द्रष्टव्यम् । एकवचनात्सकृदेव मन्त्रः । स चाऽऽद्यायां नीव्याम् । परिधानीयवस्त्रं परिधानाय दक्षिणतो न प्रसार्य, प्राङ्मुख उदङ्मुखो वा परिदधीत नीविकल्पनं प्राक्संस्थोदक्संस्थभावेनेत्यादि स्मार्तं सर्वमुपसंहार्यम् । आचम्येति ल्यपा वासःपरिधानस्याप्सु दीक्षासंबद्धत्वं बोध्यते । तेन दशपेयेऽपराह्णे दशपेयाय दीक्षतेऽप्सु दीक्षायाः स्थाने षट्पुण्डरीकां द्वादशपुण्डरीकां वा हिरण्यस्रजं यजमानः प्रतिमुञ्चत इत्यत्राबशनान्ताया अप्सु दीक्षायाः पुण्डरीकस्रक्प्रतिमोचनेन वासोनिवृत्तिमिव वासोदीक्षाया अपि निवृत्तिः सिद्धा भवति ।

ऊर्जे त्वेत्यश्नात्यूर्जमस्मासु धेहीति वा यदस्य मनसः
प्रियं सर्पिर्मिश्रं दधि मधु वाऽभ्युपसेकम् ।

यदस्य मनसः प्रियं सर्पीर्मिश्रं दधि मधु वाऽभ्युपसेकं तदूर्जे त्वेत्यश्नातीत्यन्वयः । यत्तदोर्नित्यसंबन्धादार्थिकस्तच्छब्दान्वयः । यदन्नमस्याशनीयपदार्थसमूहस्य मध्ये मनस आत्मनः प्रियं तदश्नातीत्यर्थः । न तु यजमानस्येतीदमोऽर्थः स्वस्मिंस्तस्य प्रयोगाभावात्, मनःशब्दस्य वैयर्थ्यापत्तेश्च । मनस आत्मवाचित्वमात्मानमा*त्मना वेत्सीत्यादौ दृष्टम् । मनसः प्रियं हविष्यमेवेति केचित् । सर्वस्याहविष्यस्यापि अत्राशनमित्येतदर्थप्राप्त्यर्थं यदस्य मनसः प्रियमितिवचनमित्यन्ये । यस्याहविष्यस्यापि मसूरवृन्ताकादेस्तिथिविशेषपरिनिषेधेनेतरकाले रागप्राप्ते भोजनेऽशनाभ्यनुज्ञा यथा तथैतस्य भोजनस्य रागप्राप्तस्य कर्माङ्गत्वस्यापि सत्वात्तिथिविशेषनिषेधेनेतरकालेऽभ्यनुज्ञाया अप्रवृत्तौ तत्प्राप्त्यर्थं यदस्य मनसः प्रियमितिवचनमित्येवमेव व्याख्यातव्यम् । सर्वा हविष्याशनकल्पना तु पलाण्ड्वादिष्वतिप्रसक्तत्वेनाप्रयोजिकैव । इष्टापत्तौ तु पलाण्ड्वाद्यशनस्य पुनरुपनयननिमित्तत्वेन मध्ये तदापातिः । नचैतद्व्यतिरिक्तसर्वाहविष्याशनबोधनार्थमेतद्वचनमिति वाच्यम् । एतदपेक्षया स्वल्पाहविष्याशनपरत्वस्यैव युक्तत्वात् । न च दोषाभाव एवात्र वचनात्कल्पनीय इति वाच्यम् । स्पष्टवचनाभावेन बहुषु दोषाभावकल्पनापेक्षया यदशने प्रायश्चित्तप्रसक्त्यभावस्तावत्स्वेवाहविष्येषु

* अत्राऽऽत्मशब्दस्य मनोवाचित्वेऽपि मनःशब्दस्याऽऽत्मवाचित्वं कथमिति चिन्त्यं नानार्थशब्दस्थले हरिशब्दस्याश्ववाचित्वेऽपि अश्वशब्दस्य हरिवाचित्वाभावात् ।

१ च. °भाग । २ च. अप्राप्तौ ।

पदार्थेषु दोषाभावप्रतिपादनस्य युक्तत्वात् । मसूरवृन्ताकादीनामशने तिथिविशेषपरत्वेन निषेधस्तु अत्रापि अस्त्येव । रागप्राप्ते भोजने काले मन्त्रविशेषश्चानेन विधीयते । सर्पिःशब्दो लौकिकाज्यमाचष्टे । अत एव सूत्रकृता सायंदोहाभिघारणे तूष्णीकेनेति संस्कारार्थसर्पिषि विशेषणं दत्तम् । दधि मधु वाऽभ्युपसिच्य सर्पिर्मिश्रं स्वस्य यदन्नं भवति तदश्नातीत्यर्थः । दधि मधु चेति पाठ उभयोः समुच्चयः । समासाभावान्नानयोः सहभावः । येषु पदार्थेषु यदतीव मनसः प्रियमेतेष्वेकं तस्याशनमावश्यकमिति अनेन सूत्रेण प्रदर्श्यते । मनसः प्रियमितिवचनं मनसः प्रियानशने श्रौतप्रायश्चित्तप्राप्त्यर्थं, तच्च सर्वप्रायश्चित्तमेव विशेषानुक्तेः । अत्र दधि गव्यं माहिषं चापि । अत्र मधु क्षौद्रमेव न तु मद्यं तस्याशने महापातकित्वादिदोषश्रवणात् । दधि मधु वैवाभ्युपसेकमिति नियमः । तेन दधिमधुनोरेवाभ्युपसेकार्थता न तु पयसः । तस्य तु स्वातन्त्र्येणाशनम् । अथ वा दधि मधु वाऽभ्युपसेकमेवेति नियमः । तेन दधिमधुनोरभ्युपसेकार्थतैव । पयसस्तूभयथाऽपीति ज्ञेयम् । पूर्वकल्पे दधिमधुनोरभ्युपसेकेन स्वातन्त्र्येण चेत्युभयथाऽपि । सर्पिषस्तु मिश्रणेनैवेति द्रष्टव्यम् ।

आशितो भवति ।

आशित इति णिच्प्रयोगात्प्रयोजका अमात्येष्टबन्ध्वादयः प्रयोज्यो यजमानः । तथा चायमर्थो भवति अमात्येष्टबन्ध्वादिभिः प्रेरितो यावत्तृप्ति बहु भुञ्जीतेति । न तु आ, अशित इति पदद्वयं तथा पदकारैरपाठात् । यावत्तृप्ति बहु भुञ्जीतेति अयमर्थो यावानेवास्य प्राणस्तेन सह मेधमुपैतीति श्रुत्या लभ्यते । ननु इदं वचनं व्यर्थम् ।

अष्टौ ग्रासा मुनेः प्रोक्ताः षोडशारण्यवासिनः ।
द्वात्रिंशत्तु गृहस्थस्यापरिमितं ब्रह्मचारिणः ॥

इति धर्मसूत्रोक्तगृहस्थविषयकद्वात्रिंशद्ग्राससंख्यानियमबाधनार्थं कृतेन ।

आहिताग्निरनड्वांश्च ब्रह्मचारी च ते त्रयः ।
अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नताम् ॥

इति धर्मसूत्रवचनेनैव तत्सिद्धेरिति चेत्सत्यम् ।

भुजिप्रमाणं निर्दिष्टं सुखं यावद्विजीर्यति ।
भोजनं हीनमात्रं तु न बलोपचयौजसे ।
सर्वेषां वातरोगाणां हेतुतां च प्रपद्यते ।
अतिमात्रं पुनः सर्वानाशु दोषान्प्रकोपयेत् ॥

इतिवैद्यकग्रन्थे वाग्भट्टीये भोजनस्य न्यूनाधिक्ये दोषमुक्त्वा

अन्नेन कुक्षेर्द्वावंशौ पानेनैकं प्रपूरयेत् ।
आश्रयं पवनादीनां चतुर्थमवशेषयेत् ॥

इत्यनेन भोजनप्रमाणमुक्तम् । तथा च जठर एकमंशं पवनाद्यर्थमवशेष्यैव भोजनं कर्तव्यमिति आयुर्वेदसिद्धभोजनतः पवनाद्यर्थतुरीयभागचतुर्थांशपरिमितमधिकमत्र भोजनं कर्तव्यमित्येतादृशार्थज्ञापनार्थत्वेन सार्थक्यात् । इतोऽप्यधिकभोजनं शरीरपीडाप्रसङ्गाद्विरुद्धमेव । अतः पवनाद्यर्थं किंचित्स्थलं संरक्ष्यैव भोक्तव्यम् । भुजिप्रमाणं निर्दिष्टमित्यत्र मात्राप्रमाणं निर्दिष्टमित्यपि पाठः । अस्मिन्पाठेऽपि मात्राशब्देन भोजनमेव गृह्यते । दीक्षणीयायां पूर्वत्र कृतायां दीक्षितधर्माणां प्रवृत्तत्वेन न कांचनाऽऽहुतिं जुहोत्यन्यत्र क्रतुसंयुक्ताभ्य इतिसूत्रोपात्तो वैश्वदेवप्राणाहुतीनां निषेधोऽपि प्रवर्तते । दीक्षितस्य वैश्वदेवे मुख्यकर्तृत्वे तदनुज्ञयाऽन्यैः स्वार्थपाकेन कर्तव्य एव वैश्वदेवः । प्राग्वंशप्रपादनोत्तरं दीक्षणीयायाः कर्तव्यतायां दीक्षितधर्माणामप्रवृत्तत्वेन निषेधस्याप्रवृत्तेर्वैश्वदेवः स्वेनापि कर्तव्यः । एवं प्राणाहुतयोऽपि भवन्ति । ऊर्जे त्वेति मन्त्रोऽशनार्थ एव निषेधप्रवृत्त्यप्रवृत्तिसाधारण्येन न तु प्राणाहुत्यर्थः । प्रथमप्राणाहुतिमन्त्रेणोर्जे त्वेत्ययं मन्त्रः समुच्चीयते तस्य पुरुषार्थत्वात् । अस्य क्रत्वर्थत्वात्प्रयोजनभेदान्नैवोर्जे त्वेत्यस्य प्राणाहुतिमन्त्रप्रत्याम्नायत्वमिति केचित् । अन्ये तु पञ्चानां स्थानेऽयमेव वा न कांचनाऽऽहुतिं जुहोत्यन्यत्र क्रतुसंयुक्ताभ्य इत्यनेन पुरुषार्थाहुतीनां प्रतिषेधात्क्रत्वर्थ एव स्यादिति प्राहुः । तत्र पूर्वं मतं तुच्छम् । प्रथमेन प्राणाहुतिमन्त्रेण समुच्चयेऽन्यतरस्य व्यवहितत्वेन क्रियासंनिपाताभावेनाकर्मकरणत्वप्रसङ्गात्, भिन्नशास्त्रार्थत्वेन द्वाभ्यां त्रिभिरित्यादिवदेककरणत्वोपदेशाभावाच्च । प्राणाहुतीनां पुरुषार्थत्वान्निषेधे प्राणाहुतीनामेवाभावेन प्राणाहुतीनां सर्वासां स्थानेऽयमेव मन्त्र इत्युक्तिरसंगतैवेति द्वितीयमपि मतं तुच्छमेव । अतः केवलमशनार्थमेव मन्त्रो न तु प्राणाहुतिस्थानिक इत्येव समञ्जसम् । बलयो नैव भवन्ति । देवतोद्देशेन त्यज्यमानत्वेनाऽऽहुतिरूपत्वात्त कांचनाऽऽहुतिं जुहोतीत्येतस्य निषेधस्यात्रापि प्रवृत्तेर्निराबाधात् । परिषेकाभिमन्त्रणे तु भवत एव तयोर्देवतोद्देशेन त्यज्यमानत्वाभावात् । यत्रैकस्मिन्द्रव्य इति सूत्रात्सकृन्मन्त्रः ।

कनीयः कनीयोऽत ऊर्ध्वं व्रतयति ।

दीक्षास्विति शेषः । कनीयः कनीयोऽल्पमल्पमत ऊर्ध्वं दीक्षामारभ्य यावद्दीक्षासमाप्ति व्रतमुपैतीत्यर्थः । स्पष्टमेतदुक्तमापस्तम्बेन—तथाऽऽशितः स्याद्यथा ततो दीक्षासु कनीयः कनीयो व्रतमुपेयादिति । शरीरे कार्श्यसंपादनायैतत् । यथा यथा च शरीरे कार्श्याधिक्यं तथा तथा मेध्यता । तथा चाऽऽपस्तम्बः—यदा वै दीक्षितः कृशो भवत्यथ स मेध्यो भवति यदाऽस्मिन्नन्तरं किंचिन्न भवत्यथ स मेध्यो भवति यदाऽस्य कृष्णचक्षुषोर्नश्यत्यथ स मेध्यो भवति यदाऽस्य त्वचाऽस्थि संधीयतेऽथ स मेध्यो भवति पीवा दीक्षेत कृशो यजते यदस्याङ्गानां मीयते जुहोत्येव तदिति विज्ञायत इति । तृतीयाध्यायेऽष्टमे पादे जैमिनिरपि—तपश्च फलसिद्धित्वाल्लोकवदिति·

वाक्यशेषश्च तद्वदिति । तद्दीक्षासु निवर्तेत इत्येतत्सूत्रव्याख्यानावसरे व्याख्या-तमेतत्सूत्रद्वयम् । मेध्यो मेधो यज्ञस्तदर्हः । दीक्षादशायामपि कृशस्य दीक्षाप्रवर्ग्य-दक्षानां मध्येऽङ्गं क्षीयते तदग्नावेव हुतं भवति । अतः कर्शिताङ्गेनैव यष्टव्यम् । एतेनापि ज्ञायते दीक्षाधिक्यपक्षोऽत्यन्त प्रशस्त इति । इदमप्यताऽवगम्यत आशितो भवतीति विधिरनेकदीक्षापर एव न त्वेकदीक्षापरः । तत्र तु किंचित्क्लेशसंपादनाय स्वल्पमेव भोक्तव्यमिति । अत्र व्याख्यातृकृतं व्रतह्रासनिमित्तककृशत्वं गृह्यते । पीवा दीक्षेतेति दर्शनात् । एतद्भोजनार्थः पाकोऽन्येनैव कारयितव्यो न तु स्वेन नच पत्न्या । तथा च बौधायनः—अथाऽऽभ्यां व्रतोपायनीयं पाचयति तस्याऽऽशितौ भवत इति । ईश्वराय निवेद्यैव भोक्तव्यमिति सुप्रसिद्धमेव । एतच्च दंपतिभ्यां केवलाभ्यामेव भोक्तव्यं नतु ब्राह्मणोऽप्यत्र भोजयितव्य इति । एतस्य भोजनस्य दीक्षितसंस्कारार्थत्वेनेतरभोजनस्य प्रसक्तेरेवाभावात् । अत एवैकाकी न भुञ्जीतेति निषेधस्यात्राप्रसरः ।

महीनां पयोऽसीति दर्भपुञ्जीलाभ्यां गव्यं नवनीत॰ समुद्यौति वर्चोदा असि वर्चो मयि धेहीति तेनाभ्यङ्क्ते मुखमग्रेऽनुलोममितराण्यङ्गानि स्वभ्यक्तो भवति ।

गव्यग्रहणं माहिषादिव्यावृत्त्यर्थम् । संशब्दः सम्यगित्यर्थे । तच्च सम्यक्त्वमुत्पवनाक्रि-यायामन्वेति । उद्यौतीत्यत्र शोधनार्थमिति शेषः । शोधनार्थमेवोदशरावे निधानमाह बौधा-यनः—अथास्यैतन्नवनीतं विचितमुदशराव उपशेरत इति युधातोर्मिश्रणार्थकत्वेऽपि तस्य पदार्थद्वयसाध्यत्वेन प्रकृते पदार्थान्तरासंभवेन तदर्थासंभवादालोडनार्थकत्वमेव युधातो-रिति अर्थविशेषं प्रदर्शयितुमेवोच्छब्द उपात्तः । उत्पवने प्रादक्षिण्यं परिभाषासिद्धम् । तेनेति वचनं नियमार्थम् । तेन यथा तेनैव सर्वाङ्गाणामभ्यङ्गो भवति तावत्पर्याप्तमेवाऽऽलोड-नात्प्रागुपादातव्यं न पुनरन्यदुपादातव्यमित्येषोऽर्थः सिद्धो भवति । आलोडनं दैवाद्विस्मृत्य कृतेऽभ्यङ्गे तदनन्तरं स्मरणे पुनरन्यद्गृहीत्वाऽऽलोड्य तेन पुनरभ्यङ्गः कर्तव्य इत्ये-तदर्थं वा तेनेतिवचनम् । अभ्यङ्गः पाणिभ्यामेव सामर्थ्यात्, न दर्भपुञ्जीलाभ्यां सामर्थ्याभावात् । तस्य पाणिभ्यां संप्रम्लाप्य मुखमेव प्रथममभ्यङ्क्त इति बौधायनः स्पष्टमेवाऽऽह । अग्र इति सप्तमी पञ्चम्यर्थे । तेन मुखमग्रादारभ्याभ्यङ्क्त इत्यर्थो भवति । मुखस्याग्रं शिरस्तदारभ्य मुखमभ्यङ्क्त इति । एतेन प्राचीनताऽभ्यङ्गे प्रद-र्शिता भवति । तथा चाऽऽपस्तम्बः—प्राचीनं त्रिरभ्यङ्क्ते मुखमग्र इति ग्रीवाऽपि मुखसंबन्धिन्येव तदाधारभूतत्वात् । उत्तरत्रानुलोमग्रहणादपि शिरःप्रभृतिग्रीवान्तानाम-वयवानां मुख्यवृत्त्या मुखपदवाच्यत्वाभावेऽपि गौण्या वृत्त्या तत्पदवाच्यत्वम् । अन्यथा ग्रीवायां लोमाभावेन कुत्रापि तत्संग्रह एव न स्यात् । अनुलोमं यन्मुखानि

लोमानि तदभिमुखतयेतराङ्गाणामभ्यङ्ग इत्यर्थः । अथवा मुखशब्देन केवलस्य मुख्यस्य मुखस्यैव ग्रहणम् । अग्रशब्दः क्रमार्थः । शिरःप्रभृतिग्रीवान्तानामवयवानामनुलोममितराण्यङ्गानीत्यत्र समावेशः । अनुलोमशब्दस्यानुक्रमेणेत्यर्थः । तेन शिरःप्रभृतिपादान्तक्रमेणाभ्यङ्गः कर्तव्य इति सिद्धं भवति । इतराणि मुखादितराणि, पूर्वकल्पे हस्तादीनि उत्तरकल्पे शिरआदीनि । मुखमग्रेऽनुलोममितराण्यङ्गानीति पार्थक्येन निर्देशान्मुखाभ्यञ्जने पृथङ्मन्त्रः । इतराभ्यञ्जने संभवतां सकृन्मन्त्रः, असंभवतां मन्त्रावृत्तिः । स्वभ्यक्तो भवति, तथाऽभ्यङ्क्ते यथा स्वभ्यक्तो भवति । सुशब्दो यथा सर्वावयवसबन्धो नवनीतस्य भवेत्तथेति सूचयति । अभिपूर्वकोऽञ्जूधातुरभ्यङ्गरूपमर्थमाचष्टे । आङ्पूर्वकोऽञ्जनमाचष्टे । सर्वावयवावच्छेदेन नवनीतसंबन्धोऽभ्यङ्गपदार्थः । नेत्रावच्छेदेन कज्जलसंबन्धोऽञ्जनपदार्थः । एतावर्थावुपसर्गबलाल्लभ्येते प्रहारादिशब्दवत् । स्वकीयकृत्स्नपृष्ठाभ्यङ्गस्य सुष्ठु स्वेन कर्तुमशक्यत्वात्सुशब्देनान्यकर्तृकताऽपि प्रापिता भवति। तत्र कर्तुरनियमप्राप्तौ नियममाह बौधायनः—अन्योन्यस्य पृष्ठमभ्यनक्तीति ।

**वृत्रस्य कनीनिकाऽसीति त्रैककुदेनाऽऽञ्जनेनाऽऽङ्क्ते ।**

त्रिककुदि पर्वते भवं त्रैककुदं तेन त्रैककुदेन। एतादृशेनाऽऽञ्जनेनाऽऽङ्क्ते इत्यर्थः। अक्षिणी इति शेषः । आञ्जनक्रियासांनिध्यात् । पाहीति मन्त्रान्तः ।

**तस्मिन्नविद्यमाने येनैव केनचित् ।**

त्रैककुदेन येन केनाप्यन्येन वाऽऽञ्जनेनाऽऽङ्क्ते इत्येतावत्येव लाघवेन वक्तव्ये तस्मिन्नविद्यमान इति वचनं त्रैककुदाञ्जनव्यतिरिक्तयत्किंचिदन्याञ्जनयोस्तुल्यविकल्पोऽपि कदाचित्स्यात्तद्वारणार्थम् । नन्वेवं तस्मिन्नविद्यमानेऽन्येनेत्येतावदेव वक्तव्यं तथा च व्यर्थं येनैव केनचिदिति सूत्रमिति चेत्सत्यम् । अस्मिन्प्रतिनिधावत्यन्तसजातीयस्यैव प्रथमं ग्रहणमनन्तरमितरस्येत्येतस्य नियमस्यात्राप्रवृत्तिरित्येतादृशार्थज्ञापनार्थत्वेन वैयर्थ्याभावात् । तथा च शैलजमेवाऽऽञ्जनान्तरमादावत्यन्तसजातीयत्वात्प्रतिनिधित्वेन ग्राह्यम् । एतस्याप्यभावे कज्जलमित्येतस्य नियमस्यात्राभावः सिद्धो भवति ।

**सतूलया शरेषीकया दर्भेषीकया वा दर्भपुञ्जीलेन वाऽभ्यन्तरमनिधावयंस्त्रिरेकैकं दक्षिणं पूर्वमाङ्क्ते ।**

तूलमग्रं मूलेभ्यः स्वाहेति मूलसाहचर्यात् । पुष्पमिति केचित् । तन्न, ओषधीभ्यः स्वाहा मूलेभ्यः स्वाहा तूलेभ्यः स्वाहा काण्डेभ्यः स्वाहा वल्शेभ्यः स्वाहा पुष्पेभ्यः स्वाहेत्यश्वमेध ओषधिहोममन्त्रेषु पुष्पस्य पृथङ्निर्देशानुपपत्तेः । तेन साग्रयेत्यर्थो

१ क. ज. झ. म. 'या द'।

भवति। शराख्यतृणशलाका शरेषीका तया, दर्भेषीका दर्शशलाका तया वा। दर्भपुञ्जीलं दर्भकाण्डं तेन वा। दर्भकाण्डाग्रस्याञ्जनक्रियायां सामर्थ्याभावान्मूलेनैवाञ्जनम्। सतूलत्वं शरेषीकादर्भेषीकयोरेव। एतज्ज्ञापयितुमेव वाशब्दोपादानं मध्ये कृतम्। अथ वा तूलः कार्पासस्तत्सहितयेत्यर्थः। मध्ये वाशब्दोपादानं श्रुतौ सतूलयेतिस्त्रीलिङ्गनिर्देशाच्छरेषीकादर्भेषीकयोरेव तुल्यकल्पत्वं, दर्भपुञ्जीलस्य तु गौणकल्पत्वं, फलं शरेषीकाया अभावे दर्भेषीकाया ग्रहणं मुख्यत्वेनैव, दर्भपुञ्जीलसत्त्वेऽपि नतु तस्य ग्रहणं तथात्वाभावादिति द्रष्टव्यम्। अभ्यन्तरं यथाऽक्षितो बाहिर्न भवति। अपाङ्गमारभ्याऽऽन्तमिति यावत्। अनिधावयन्नप्रतिनिवर्तयन्नेकैकं त्रिराङ्क्ते दक्षिणं त्रिरुत्तरं त्रिरित्यर्थः। सकृत्सकृदेव मन्त्र उभयोरक्ष्णोः। तत्र क्रममाह—दक्षिणं पूर्वमिति।

**द्विर्वा सव्यम्।**

सर्वेषु पक्षेषु सकृन्मन्त्र एवोभयत्र। सव्ये त्रिराञ्जनं पूर्वसूत्रात्प्राप्तं तत्र वैकल्पिकं द्वित्वमनेन विधीयते।

**द्विर्दक्षिणꣳ सकृत्सव्यमित्येकेषाम्।**

उभयं त्रिस्त्रिर्दक्षिणं त्रिः सव्यं द्विरिति वेत्येवं पूर्वमुक्तं तत्र स्वतन्त्रं पक्षान्तरमनेनोच्यते।

**न पुनर्निषेचयति।**

एकेन प्रयत्नेन संततमञ्जनं कर्तव्यं तथा कर्तुमशक्यत्वे सांतत्यार्थं पुनरञ्जनं न निषेचयति न नेत्रयोर्योजयतीत्यर्थः। अथवा पुनःशब्दो बहिरित्यर्थे। निषेचयतीत्यस्य निर्गमयतीत्यर्थः। तथा चायमर्थो भवति न बहु निर्गमयतीति। अर्थान्नेत्रतो बहिरिति। आञ्जनक्रियायां विशेषमाह बौधायनः—अथास्यैतदाञ्जनं पिष्टं दृषदुपशेते सतूलया च शरेषीकया तस्य प्राङ्मुखस्य प्रत्यङ्मुख उपविश्य सव्येन पाणिना दक्षिणमक्ष्यनक्तीति।

**तस्य ते पवित्रपते पवित्रेणेति पाव्यमानो जपति चित्पतिर्मा पुनातु वाक्पतिर्मा पुनातु देवो मा सविता पुनात्विति च पवमानः सुवर्जन इति चैतमनुवाकम् ॥ ४ ॥**

**इति हिरण्यकेशिसूत्रे दशमप्रश्ने प्रथमः पटलः।**

---

आद्यश्चकारोऽर्थैकत्वेऽपि मन्त्रत्रित्वद्योतनार्थः। आध्वर्यवे भेददर्शनाद्युक्तमेतत्रित्वम्। एकत्र निर्णीतः शास्त्रार्थोऽसति बाधकेऽन्यत्रापीति जैमिनिनाऽपि स्वीकृतम्। यथाऽऽदित्यः प्रायणीयश्चरुरिति विधौ स्थालीवचनस्यापि चरुशब्दस्याऽऽदिति-

मोदनेनेतिवाक्यशेषवशादोदनार्थकत्वे निर्णीते सौर्यं चरुमित्यादौ वाक्यशेषाभावेऽप्यो- दनार्थकत्वं तथाऽत्रेति । अच्छिद्रेण पवित्रेणेति सर्वत्रानुषजतीत्याध्वर्यवसूत्रे सर्वत्रेति- ग्रहणाज्ज्ञापकात्त्रिष्वच्छिद्रेणेत्यादिरनुषङ्गः । पवमानः सुवर्जन इति चैतमनुवाकमि- त्यत्रत्यश्चकारोऽनुवाकशब्दोत्तरं योज्यः । रहस्यपातकान्यप्ययमनुवाको नाशयतीत्य- त्यन्तं पावित्र्यमेतस्येति प्रसिद्धमिति प्रदर्शयितुमेतच्छब्दः । उक्तश्चायमर्थश्चतुर्वि- शतिमते–

पावमानीस्तथा कौत्सं पौरुषं सूक्तमेव च ।
जप्त्वा प्रत्यहमेतानि सर्वपापैः प्रमुच्यते ॥ इति ।

पावमानीः पवमानानुवाकगता ऋचः । पावित्र्यार्थं प्रत्यहमपि पाठः कार्यः । तथा च स्मृतिः—

रुद्राध्यायं पावमानं पूर्वनारायणं तथा ।
यो जपेत्प्रत्यहं ह्येतान्सर्वैः पापैः प्रमुच्यते ॥ इति ।

चकारः पूर्वमन्त्रैः सह समुच्चयार्थः । अध्वर्युणा पावमानं सावकाशतया कर्तव्यं यथा पवनत्रये तत्तन्मन्त्राणां सर्वेषां पाठो भवेत् । पवमानानुवाकस्य वाक्यश एव पाठः ।

इत्योकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्नियुक्तवाजपेययाजिसर्वतोमुखया-
जिद्विसाहस्राग्नियुक्तपौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथ-
दीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसू-
त्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंताप-
शामिकायां ज्योत्स्नाख्यायां वृत्तौ दशमप्र-
श्नस्य प्रथमः पटलः ॥ १ ॥

---

अथ दशमप्रश्ने द्वितीयः पटलः ।

---

आ वो देवास ईमह इति पूर्वेण द्वारेण प्राग्वंशं प्रविशञ्जपति ।

द्वारग्रहणं वातायनव्यावृत्त्यर्थम् । प्रविशन्निति शत्रा प्रवेशसमकालं जप इति बोध्यते । यज्ञियासो हवामह इति मन्त्रान्तः ।

विद्युदसीत्यप उपस्पृश्यापरेणाऽऽहवनीयं
दक्षिणाऽतिक्रम्य दक्षिणत उपविशति ।

दर्शपूर्णमासादौ दृष्टस्य प्रतीकस्य ग्रहणम् । तेन मयि श्रद्धेति मन्त्रान्तो भवति ।

दक्षिणत उदङ्मुखतयोपवेशनमन्यथा दक्षिणाग्नेः पृष्ठतःकरणापत्तेः । बौधायनोऽपि स्पष्टमेवाऽऽह–दक्षिणत उदङ्मुखमुपवेश्येति । एकद्वारत्वे तु तेनैव प्रवेशः सामर्थ्यात् ।

**तस्यैष एव संचर आ सुत्यायाः ।**

संचरो मार्गः । आ सुत्याया इत्यत्राऽऽङभिव्याप्तौ । नासश्स्थिते सोमेऽध्वर्युः पूर्वेण द्वारेण हविर्धाने प्रविश्यापरेण निष्क्रामेदित्यत्रावभृथान्ता सुत्येत्यस्यार्थस्य निर्णीतत्वादत्रापि स एव निर्णयः । इदं कर्मार्थसंचरे, लौकिके तु अग्रेणाऽऽहवनीयं जघनेन गार्हपत्यं वेत्यादि अव्यवायानुसारेण संचरः । आ सुत्याया इति अवधिविशेषविधिबलात्सुत्यासमाप्त्युत्तरमुदयनीयादिषु अग्रेणाऽऽहवनीयमेव कर्मार्थोऽपि संचरो न तु अतिदेशप्राप्तोऽपरेणाऽऽहवनीयम् । अन्यथा वैशेषिकातिदेशप्राप्तयोः संचरयोर्भेदाभावेनावधिविशेषविधिवैयर्थ्यापत्तेः । याजमानं व्याख्यास्याम इत्यधिकारादेव यजमानलाभे तत्परामर्शकतच्छब्दोपादानमेतस्मात्पूर्वतनानि यजमानकर्माणि पत्न्या अपि भवन्तीतिज्ञापनार्थम् । तत्र वपनं पत्न्या नास्तीति आध्वर्यवसूत्रव्याख्यान उक्तमेव । वपनाभावात्स्वस्त्युत्तराण्यशीयेति जपोऽपि न । उद्वाहने पूतेमीत्यूहः । तूष्णीमिति बौधायनः ।

**इन्द्राग्नी द्यावापृथिवी इत्याहवनीयमभिमन्त्रयते ।**

सन्तं पाहीति मन्त्रान्तः । प्राग्वंशप्रपादनोत्तरं दीक्षणीयापक्षे तां कृत्वाऽनन्तरमेवाऽऽहवनीयाभिमन्त्रणम् । अत्र साधिका युक्तिस्तं प्राग्वंशं प्रपाद्यात्र दीक्षणीयामेके समामनन्तीत्यस्मिन्सूत्रे प्रदर्शिता । एतदनन्तरं दीक्षाहुतयः । दीक्षाहुतिहोमानन्तरं वातं प्राणं मनसाऽन्वारभामह इत्यस्य मन्त्रस्य जपो यजमानस्य । प्रत्यगाशिषो मन्त्रानकर्मकरणाञ्जपतीति सूत्रात् । आपस्तम्बेन पूर्णाहुतिसंज्ञकायाः षष्ठ्या दीक्षाहुतेरनुमन्त्रणे विनियुक्तत्वादनुमन्त्रणमेव वा षष्ठ्या दीक्षाहुतेर्हूयमानाया अनेन कर्तव्यम् । अनुमन्त्रणस्यापि जपत्वमस्तीत्युपोद्घाते प्रदर्शितमेव ।

**अन्तर्वेदि कृष्णाजिनस्याऽऽस्तीर्णस्यवर्त्मसामयोः**
**शिल्पे स्थ इति शुक्लकृष्णे राजी आलभते ।**

अन्तर्वेदिग्रहणं शयनाद्यर्थकृष्णाजिनास्तरणादौ सर्वत्र राज्यालम्भनं स्यात्तन्मा भूदित्येतदर्थम् । कृष्णग्रहणं व्याघ्राजिने राज्यालम्भनव्यावृत्त्यर्थम् । राजी पङ्क्ती । शुक्लकृष्णराज्योः सहैवाऽऽलम्भनम् । शिल्पे स्थ इति लिङ्गात् । आलम्भनं स्पर्शनम् । अत्र बौधायनः–शुक्लेऽङ्गुष्ठो भवति कृष्णेऽङ्गुलिरिति । द्वैधेऽन्योऽपि विशेषः– शुक्लकृष्णयोः संस्पर्श इति शुक्लेऽङ्गुष्ठो भवति कृष्णेऽङ्गुलिरित्येवं शुक्लकृष्णे संमृशेदिति बौधायनः पृथेनैवैतस्संधिस्संमृशेदिति शालीकिरप्येने एकाङ्गुल्यैव संमृशेदित्यौपमन्यव इति । पृथं त्रयोदशाङ्गुलम् । यज्ञस्योदृच इति मन्त्रान्तः ।

**सुशर्माऽसीति दक्षिणतो भसत्त आरोहतीमां धियꣳ शिक्षमाणस्य देवेति च सुत्रामाणं पृथिवीं द्यामनेहसमिति चेमाꣳ सुनावमारुहमिति वा ।**

सुशर्माऽसीत्येतावानेवायं मन्त्रः । पूर्वश्चकार उत्तरमन्त्रेण सह संधानार्थः । उत्तरश्चकारः प्रथमेन मन्त्रेण समुच्चयार्थः । इमाꣳ सुनावमारुहमिति सुत्रामाणमित्यनेन विकल्पते । दक्षिणतो दक्षिणप्रदेशतः पञ्चम्यर्थकस्तसिः । भसत् कटिप्रदेशो गुदप्रदेशो वा तृतीयार्थे तसिः । दक्षिणं जान्वाच्याभिसर्पतीति बौधायनः ।

**आऽहं दीक्षामरुहमृतस्य पत्नीं गायत्रेण छन्दसा ब्रह्मणा चर्तꣳ सत्येऽधायि सत्यमृतेऽधाय्यृतं च मे सत्यं चाभूतां ज्योतिरभूवꣳ सुवरगमꣳ सुवर्गं लोकं नाकस्य पृष्ठं ब्रध्नस्य विष्टपमगममित्यारुह्य जपति ।**

आरुह्येतिवचनमारोहणजपयोः कालाव्यवधानार्थं, तेन पत्न्याः शिरसि जालं प्रतिमुञ्चतीत्येतदादि जपानन्तरं भवतीति सिद्धं भवति ।

**विष्णोः शर्मासीति कृष्णाजिनेन दक्षिणमꣳसं प्रच्छादयति ।**

कृष्णग्रहणप्रयोजनं पूर्ववत् । दक्षिणग्रहणप्रयोजनं प्रागुक्तमेव । प्रशब्दोंऽसस्य सर्वावयवावच्छेदेन च्छादनं यथा भवति तथा कर्तव्यमिति बोधयति । कृष्णाजिनग्रहणमापस्तम्बोक्तवासोव्यावृत्त्यर्थम् । यच्छेति मन्त्रान्तः ।

**नक्षत्राणां माऽतीकाशात्पाहीति वाससा शिरः प्रवेष्टयते ।**

वासोऽत्रोष्णीषरूपं शिरोवेष्टने तस्यैव लोकतः सिद्धेः । प्रादक्षिण्यं परिभाषासिद्धम् । बौधायनापस्तम्बौ स्पष्टमाहतुः—प्रदक्षिणमुष्णीषेण शिरो वेष्टयत इति । उष्णीषरूपवस्त्रालाभ इतरदपि । अत एवाऽऽपस्तम्बेन वाजसनेयकग्रहणं विकल्पार्थं कृतं द्रष्टव्यम् । द्वैधे स्पष्टमेव विकल्प उक्तः—अथास्य प्रदक्षिणमुष्णीषेण शिरो वेष्टयतीति सूत्रं बौधायनस्य वाससैव प्रच्छन्नः स्यादिति शालीकिरिति । आचार्यस्य तूभयमप्यभिमतमिति विशेषानुक्तेर्गम्यते । उष्णीषशब्दो दीर्घशाटके प्रसिद्ध एव । वेष्टनं व्यापनम् । न पुरा सोमस्य क्रयादपोर्णुवीतेति प्राक्क्रयाद्वासोपसारणे श्रुतौ दोषश्रवणात्, गर्भो वा एषयद्दीक्षित उल्बं वासः प्रोर्णुते तस्माद्गर्भाः प्रावृता जायन्त इति गर्भरूपदीक्षितोल्बरूपत्वेन वाससः संस्तवनात्प्रत्यपोर्णुते शिरोऽग्रेऽनुपूर्वमितराण्यङ्गानीतिवक्ष्यमाणसूत्राल्लिङ्गात्, अथ यजमानं वाससा प्रोर्णोतीति यजमानस्य वाससा प्रोर्णवनस्य स्वतन्त्रतया विधानाच्च वाससा सशिरस्कसर्वावयवप्रोर्णवनमादौ कृत्वाऽनन्तरमुष्णीषेण शिरोवेष्टनमिति सिद्धं भवति । शिरोगतवासोवयवसंकोच उक्तो बौधाय-

नेन—प्रतिकृष्य वसनस्यान्तान्प्रदक्षिणमुष्णीषेण शिरो वेष्टयतीति । प्रोर्णवनं प्रावरणम् । वाससा प्रोर्णवनात्प्राग्दक्षिणांसगतं कृष्णाजिनं निष्कासनीयम् । अन्यथा दक्षिणांसस्य प्रावरणासंभवात् । दीक्षितस्य गर्भरूपत्वं बह्वृचब्राह्मणे प्रपञ्चितं—पुनर्वा एतमृत्विजो गर्भं कुर्वन्ति यं दीक्षयन्तीति । पट्टसदृशं गर्भवेष्टनमुल्बं, जरायु तु एतस्यापि वेष्टनं येन क्रियते स पदार्थः । सोऽत्र कृष्णाजिनरूपः । तेन वाससा प्रावरणोत्तरं कृष्णाजिनेनाऽऽच्छादनं शरीरस्य कर्तव्यम् । उक्तं च सूत्रान्तरे–वाससा शिरः प्रवेष्टयते कृष्णाजिनेन शरीरमाच्छाद्य कृष्यै त्वा सुसस्याया इति वेदेः कृष्णविषाणया लोष्टमुद्धन्तीति । एवं च दीक्षिते गर्भत्वं संपन्नं भवति । सोमक्रयात्पुराऽपोर्णवने दोषः श्रुतौ—यत्पुरा सोमस्य क्रयादपोर्ण्वीत गर्भाः प्रजानां परापातुकाः स्युरिति । परापातुकाः परापतनशीलाः । एतस्य सोमक्रयोत्तरं जननं ततो वस्त्रापनयनं युक्तमेव । तथा च श्रुतिः-क्रीते सोमेऽपोर्णुते जायत एव तदिति । अपोर्णवनमुद्घाटनम् । किं चात्यन्तं राजादिकं प्रति जनानां प्रतिदिदृक्षायां पार्श्वस्थैः पार्ष्णिकादिभिः सभाया आवरणपट्टो यथाऽपनीयते तादृगेवैतद्भवति । तथा च श्रुतिः–अथो यथा वसीयांसं प्रत्यपोर्णुते तादृगेव तदिति । अनेन प्रच्छादनेनास्मिन्काले तत उत्थानं बोध्यते ।

प्रत्तया कृष्णविषाणया कृष्यै त्वा सुसस्याया इति वेदेर्लोष्टमुद्धन्ति ।

प्रत्तवचनं कृष्णविषाणान्तरनिवृत्त्यर्थम् । प्रत्तवचनेनेदमपि गम्यते कृष्णविषाणाप्रदानं वाससा शिरोवेष्टनोत्तरमेव कर्तव्यमिति । मन्त्रपाठक्रमान्मेखलापरिव्ययणादिपत्नीसंनहनान्तस्य दक्षिणांसप्रच्छादनपूर्वभावित्वमेव । वेदेर्वेदिसंबन्धि लोष्टं मृद्धोलकं यं कंचनोद्धन्ति विदीर्णं करोति । अत्र वेदिशब्दो लक्षणया वेदिदेशपरः । लोष्टमित्येव युक्तः पाठ इति लोष्टैर्घ्नन्तीत्यस्मिन्सूत्रे प्रदर्शितमेव । अथवा लोष्टमिवोद्धन्तीत्यर्थः, यथा लोष्टस्य प्रहारेण विदारणं तथेति । अर्थान्मृदः । मृदो विदारणं तूत्किरणेनेति लोकप्रसिद्धितः प्राप्तं तत्र प्रहारेण विदारणं विधीयते । नन्वेवं वेदिमुद्धन्तीत्येव वक्तव्यं लाघवादिति चेत्, सत्यं, वेदिमुद्धन्तीत्येवमुच्यमाने वेद्याः सर्वावयवावच्छेदेनोद्धननं वेदेर्मृदमुद्धन्तीत्युक्तौ तु कस्मिंश्चित्प्रदेश उद्धननमिति स्वरूपभेदेऽत्रैकदेशोद्धननस्यैव विवक्षितत्वेन लाघवस्यात्राप्रयोजकत्वात् । एतादृशकुसृष्टिकल्पनया व्याख्यानं लोष्टाभावे लोपापत्त्या । न चेष्टापत्तिः । यथाकथंचिदलोपानुगुणव्याख्यानसंभवे लोपकल्पनाया अनुचितत्वात् । तथा च निदानसूत्रम्–अलोपो लोपान्न्याय्यतर इति । इदं चादृष्टार्थविषये द्रष्टव्यम् । नच वक्ष्यमाणस्य शिरसि कण्डूयत इत्यस्य यथाऽर्थाभाव लोपस्तथाऽत्राप्यास्त्विति वाच्यम् । तत्रार्थे प्राप्ते शिरसि

कण्डूयत इत्यत्र लोपकल्पकापस्तम्बीयस्पष्टवचनमिव प्रकृते *तादृशस्पष्टवचनाभावेन तथाकल्पनाया असंभवात् । बौधायनसूत्रस्वरसतः कण्डूत्यभावेऽपि कर्तव्यताप्रतीतेश्च ।

सुपिप्पलाभ्यस्त्वौषधीभ्य इति शिरसि कण्डूयते ।

एतस्यादृष्टार्थत्वपक्षे शिरसि यस्मिन्कस्मिंश्चिदवयवे घर्षणं कुरुत इत्यर्थः । बोधायनेन दक्षिणं गोदानं कण्डूयत इति कण्डूयने नियतदेशोक्त्याऽर्थप्राप्त्यभावेऽपि कण्डूयनं कर्तव्यमेवेति सूच्यते । अर्थे प्राप्ते कण्डूयत इत्यापस्तम्बोक्तदृष्टार्थत्वपक्षे तु अर्थाभावे लोप एव । सूत्रकारस्योभयमपि संमतम् । नचादृष्टार्थत्वपक्ष इतरेषु कण्डूयनेषु एतन्मन्त्रप्राप्तिः कथं भवेत्प्रापकाभावादिति वाच्यम् । अर्थपृथक्त्वात्कण्डूयनमन्त्रोऽभ्यावर्तेत इतिपरिभाषासूत्रस्यैव प्रापकस्य सत्त्वात् । शिर इति सप्तम्यन्तवचनं शिरसि यत्र कुत्रचित्, यत्र कण्डूतिस्तत्र वा कण्डूयनं न तु शिरसः सर्वस्य कण्डूयनमित्यर्थं बोधयति । अदृष्टार्थत्वपक्ष एतन्मन्त्रकरणकशिरोधिकरणककण्डूयनविधिः । दृष्टार्थत्वपक्षे मन्त्रमात्रांशे विधिः कण्डूयनविधिस्त्वनुवाद एव । यदा शिरसि कण्डूयते तदा सुपिप्पलाभ्य इत्यनेनैव मन्त्रेण कण्डूयते । इतराङ्गेषु यदा कण्डूयते तदा विषाण इत्यनेनैव । उभयपक्षेऽपि शिरस्येव कण्डूयनमादौ तत इतराङ्गेष्विति । अनेकेषु अर्थेषु कालव्यवधानेन जायमानेषु मन्त्रावृत्तिः । तथा च सूत्रम्—अर्थपृथक्त्वात्कण्डूयनमन्त्रोऽभ्यावर्तेत इति । कालव्यवधानकृतमेवात्रार्थपृथक्त्वम् । जैमिनेस्तु मते कालव्यवधानेऽपि नाऽऽवृत्तिः । तथा च तत्सूत्रमेकादशाध्याये चतुर्थपादे कण्डूयने प्रत्यङ्गं कर्म भेदात्, अपि वा चोदनैक्यमैककर्म्यात्स्यादिति । कण्डूयनक्रियायां कण्डूयनकर्मापनेयस्य दुःखस्य दुःखापनयनसंस्कार्याणामङ्गानां च भिन्नत्वात्प्रत्यङ्गमावृत्तिः । अत्र कर्मशब्दः क्रियाजन्यफलशालित्वरूपपारिभाषिककर्मपरो धात्वर्थक्रियापरश्च । तथा च क्रियाजन्यफलशालित्वरूपकर्मपरत्वस्वीकारे कर्मणां क्रियाजन्यफलशालिनां शिरआदिरूपाणां भेदात्कण्डूयने प्रत्यङ्गं मन्त्रावृत्तिरित्यन्वयः । धात्वर्थरूपक्रियापरत्वे तु प्रत्यङ्गं कण्डूयने कर्मभेदान्मन्त्रावृत्तिरित्यन्वयः । अयं पूर्वसूत्रार्थः । उत्तरसूत्रार्थस्तु ऐककर्म्यात्, एकमेव कर्म यत्र तस्य भावस्तस्माद्धेतोश्चोदना कण्डूयेतेति चोदना तस्या ऐक्यमेव न भेद इति । अयं निष्कृष्टोऽर्थः—दुःखानि न भिन्नानि न तु दुःखापनयनं स्वरूपेण चिकीर्षितं, नाप्यङ्गसंस्कारः । येन तद्भेदाद्भेदः स्यात् । किं त्वात्मानं कण्डूतिदुःखाक्षिप्तचित्तमपनीतकण्डूदुःखं कर्तुं कण्डूयनं क्रियते । तेन यावता दुःखेनानपनीतेनाऽऽत्मनि दुःखं भवति तावतः सर्वस्य दुःखस्यापनयनमत्र क्रियाजन्यफलतच्छाश्रयात्मैव । तथा चैक आत्मैव

* तादृशेत्यधिकम् ।

१ क. छ. °नि भि° ।

कर्म यत्र तदेककर्म तस्य भाव ऐककर्म्यं तस्माद्धेतोः। एककर्मेति कण्डूयनविशेषणम्। कण्डूयनान्यङ्गभेदेन भिन्नानि न भवन्ति। यदाऽङ्गसंस्कारः कण्डूयनं भवेत्तदा तद्भेदाद्भेदः स्यादतोऽङ्गसंस्कारोऽपि न भवति, किं तु आत्मगतस्य दुःखस्यापनयेनाऽऽत्मन्येव संस्कार उत्पद्यते। अङ्गगतकण्डूनिवृत्तिस्तु द्वारमात्रं, यावता दुःखेनापनीतेनाऽऽत्मनि दुःखं भवति तावत्सर्वमपनेतुमभिसंधाय कण्डूयनोपक्रमो दृश्यते हि अन्त ऐककर्म्यं कण्डूयने सिद्धं भवति। अस्मादेव हेतोश्चोदनैक्यमेव भवति नत्वङ्गकृतो भेदः कण्डूयने। अतोऽगृह्यमाणविशेषत्वात्तन्त्रं भवतीति।

विषाणे विष्यैतं ग्रन्थिं यदस्य गुल्फितं हृदि
मनो यदस्य गुल्फितमित्यवशिष्टान्यङ्गानि।

अवशिष्टेष्वङ्गेष्वित्यर्थः। तेन हस्ताद्यवयवेषु एकदेश एव कण्डूयनं नतु कृत्स्नानां कण्डूयनमिति पूर्ववदर्थो भवति। शिरःशब्देन केवलशिरस एव ग्रहणं, तेन ललाटादिषु विषाणे विष्या इत्येव मन्त्रो न तु सुपिप्पलाभ्य इति। चक्षुषोरर्थप्राप्तौ कृष्णविषाणया कण्डूयनं न, अयोग्यत्वात्। हस्तेनापि कण्डूयनं न, पामनंभावुकाः प्रजाः स्युरिति दोषश्रवणात्। तर्हि कथं कर्तव्यमिति चेत्। कृष्णविषाणाग्रे पोटलिकां दृढतया बद्ध्वा तया कण्डूयनमित्येवं कण्डूयनं कर्तव्यमित्यवेहि। अङ्गग्रहणं शिरसोऽङ्गत्वेऽपि प्राधान्यं द्योतयितुम्। तेन स्नापनीयेनोत्साद्येत्यनेन विहित उद्वर्तने प्राधान्यात्प्रथमं शिरस उद्वर्तनं तत इतरेषामिति सिद्धं भवति।

सूपस्था देवो वनस्पतिरूर्ध्वो[२] मा
पाह्योदृच इति दण्डं प्रतिगृह्णाति॥ ५॥

प्रतिग्रहणं यावत्पर्यन्तं न कृतं तावत्पर्यन्तं दानशब्दार्थः सिद्धो न भवति। दानं विना प्रतिग्रहशब्दार्थोऽप्येवम्। एवं च दण्डदानप्रतिग्रहयोः समानकालिकताऽऽर्थैक्येव। तत्करणमन्त्रः पूर्वमेव वक्तव्य इत्यप्यर्थात्।

अग्निर्दीक्षितः पृथिवी दीक्षा तयाऽग्निर्दीक्षया दीक्षितो यथाऽग्निर्दीक्षया दीक्षितः सा मा दीक्षा दीक्षयतु तया दीक्षया दीक्षे वायुर्दीक्षितोऽन्तरिक्षं दीक्षा तया वायुर्दीक्षया दीक्षितो यथा वायुर्दीक्षया दीक्षितः सा मा दीक्षा दीक्षयतु तया दीक्षया दीक्ष आदित्यो दीक्षितो द्यौर्दीक्षा तयाऽऽदित्यो दीक्षया दीक्षितो यथाऽऽदित्यो दीक्षया दीक्षितः सा मा दीक्षा दीक्षयतु तया दीक्षया दीक्षे चन्द्रमा दीक्षितो नक्षत्राणि दीक्षा तया

---

१ क. च. छ. यदाऽस्य। २ ङ. च. ज. झ. ञ. °तिरिति।

चन्द्रमा दीक्षया दीक्षितो यथा चन्द्रमा दीक्षया दीक्षितः सा मा दीक्षा दीक्षयतु तया दीक्षया दिक्षे वरुणो राजा दीक्षित आपो दीक्षा तया वरुणो राजा दीक्षया दीक्षितो यथा वरुणो राजा दीक्षया दीक्षितः सा मा दीक्षा दीक्षयतु तया दीक्षया दीक्षे सोमो राजा दीक्षित ओषधयो दीक्षा तया सोमो राजा दीक्षया दीक्षितो यथा सोमो राजा दीक्षया दीक्षितः सा मा दीक्षा दीक्षयतु तया दीक्षया दीक्षे प्राणो दीक्षितो वाग्दीक्षा तया प्राणो दीक्षया दीक्षितो यथा प्राणो दीक्षया दीक्षितः सा मा दीक्षा दीक्षयतु तया दीक्षया दीक्षे प्रजापतिर्दीक्षितो मनो दीक्षा तया प्रजापतिर्दीक्षया दीक्षितो यथा प्रजापतिर्दीक्षया दीक्षितः सा मा दीक्षा दीक्षयतु तया दीक्षया दीक्षे वाचा मे वाग्दीक्षतामग्नये समष्ट्वा उ प्राणेन मे प्राणो दीक्षतां वायवे समष्ट्वा उ चक्षुषा मे चक्षुर्दीक्षता२ सूर्याय समष्ट्वा उ मनसा मे मनो दीक्षतां प्रजापतये समष्ट्वा उ द्यौश्च पृथिवी चाहश्च रात्रिश्च कृषिश्च वृष्टिश्च त्विषिश्चापचितिश्चाऽऽपश्चौषधयश्चोर्क्च सूनृता च ता मा दीक्षमाणमनु दीक्षन्तां भूर्भुवः सुवः सत्यं मे आत्मा श्रद्धा मे क्षितिस्तपो मे प्रतिष्ठा श्रद्धा सत्यं गृहपति-रिति केशिनीं दीक्षां जपित्वा स्वाहा यज्ञं मनसेति द्वे अङ्गुली निर्भुजति स्वाहा द्यावापृथिवीभ्यामिति द्वे स्वाहोरोरन्तरिक्षा-दिति द्वे स्वाहा यज्ञं वातादारभ इति मुष्टी कृत्वेष्ट्रीः[1] स्थेति चत-स्रोऽङ्गुलीरुत्सृजति ताभिर्यथासुखं चरति वाचं च यच्छति ।

संभारयजुर्होमोत्तरमयं जपः । केशिनीये तस्य शब्दस्योपादानं ज्ञानार्थम् । ज्ञाना-भावे यजुर्भ्रेषप्रायश्चित्तं भुवः स्वाहेति दक्षिणाग्नौ होतव्यम् । दीक्षाशब्देन दीक्षापद-वन्तो मन्त्रा लक्षणयोच्यन्ते । दीक्षाग्राहिणोऽग्न्यादयो देवविशेषा एव केशशब्द-वाच्याः । केशिनीति दीक्षाविशेषणम् । विशेष्ये लक्षणया मन्त्रपदवाच्यतायां विशे-षणस्यापि लक्षणया तत्पदवाच्यत्वम् । कः स्वर्गस्तस्येशाः केशा इति व्युत्पत्त्या केश-शब्दस्य देववाचित्वम् । तस्मान्मत्वर्थीय इति विशेष्यस्य दीक्षाशब्दस्य स्त्रीलि-ङ्गत्वाद्विशेषणीभूतात्केशिशब्दाद्विशेष्यालिङ्गानुरोधेन ङीप् । कशब्दस्य स्वर्गवाचित्वं हैमकोशे—

---

१ ग. कृत्वैष्ट्रीः २ क. ज. ञ. म. 'चं य'।

को ब्रह्मात्मानिलार्काग्निचित्रारियमकेतुषु ।
विष्णुवाहनशब्देऽब्धौ सितकर्णे वसौ द्युतौ ।
कलहे कः समाख्यातः प्रश्नेऽर्थेऽपि च को मतः ।
स्वर्गे चक्रे तथा मित्रे शुद्धचर्ये स्मरकालयोः ॥ इति ।

सर्वेषु देवेषु स्वर्गेशत्वं तु त्रिदिवेशपदादिव केशपदादपि सिध्यति । एकवचनं जात्यभिप्रायम् । दीक्षायां नियमव्रतादिरूपायां जपत्वासंभवेन तत्साधनीभूतमन्त्रवाचित्वं लक्षणया स्वीकार्यम् । केशा दीक्षाग्राहिणोऽग्न्यादयो देवा यस्यां सन्ति यत्साधनीभूतमन्त्रेषु प्रतिपाद्यत्वेन सन्तीति यावत्सा केशिनीति निष्कृष्टोऽर्थः । केशिनीदीक्षाजपात्पूर्वमध्वर्युः पृथिवी दीक्षा तयाऽग्निर्दिक्षया दीक्षितो ययाऽग्निर्दीक्षया दीक्षितस्तया त्वा दीक्षया दीक्षयामीत्यारभ्य तास्त्वा दीक्षमाणमनु दीक्षन्तामित्यन्तं यजमानमीक्षमाण आच्छिद्रिकप्रपाठकस्थमन्त्रजातं जपति । युष्मच्छब्दप्रयोगादध्वर्योर्जपोऽयम् । केशिनीं दीक्षां जपित्वेति क्त्वाप्समानकर्तृकत्वार्थो यो मुष्टिकरणकर्ता स एव जपकर्तेति । तेन मुष्टिकरणस्य यजमानेनैव कर्तव्यत्वाज्जपोऽपि तेनेव कर्तव्य इति सिद्धं भवति । तथा च पत्न्याः कर्तृत्वं वारितं भवति । मुष्टिकरणं यजमानकर्तृकमेवेत्यत्र मूलं ताभिर्यथासुखं चरति वाचं च यच्छतीत्यत्रत्यश्चकार इत्यग्रे वक्ष्यते । द्वे अङ्गुली निर्भुजतीति सामान्यतो यद्यप्युक्तं तथाऽप्यङ्गुलिद्वयं द्वयोर्द्वयोर्हस्तयोर्द्रष्टव्यम् । एवमुत्तरास्वपि । आदौ कनिष्ठिकाद्वयं ततोऽनामिकाद्वयं ततो मध्यमाद्वयं ततो द्वयोर्हस्तयोर्मुष्टीकरणमित्येवं क्रमः । न च दक्षिणस्य हस्तस्यैव द्वे अङ्गुली कनिष्ठिकानामिके प्रथमं ततो मध्यमातर्जन्यौ ततः सव्यस्य हस्तस्य कनिष्ठिकानामिके ततो द्वयोर्हस्तयोर्मुष्टीकरणमित्येवमेवास्त्विति वाच्यम् । समं स्यादश्रुतत्वादितिन्यायविरुद्धस्यैतादृशानुष्ठानस्यानुचितत्वात् । निर्भुजति संभुग्ने करोतीति यावत् । संभुग्नता द्वयोर्द्वयोरङ्गुल्योर्युगपद्युगपदेव । संभुग्नाभिः सर्वाभिरङ्गुलिभिः सहाङ्गुष्ठसंयोगो मुष्टिस्तत्करणं तत्संपादनम् । एतेनार्थात्तर्जन्योरपि संभुग्नता प्रदर्शिता भवति । अन्यथा तद्विना मुष्टिकरणविधिरनुपपन्नः स्यात् । मुष्टी इति द्विवचनम् । पदकारैः प्रग्रहत्वबोधकेतिकरणात् । तेन द्वयोर्हस्तयोर्मुष्टिकरणम् । एष्ट्रीः स्थेति सौत्रो मन्त्रः । द्वयोर्हस्तयोर्द्वे द्वे एवं चतस्रो न तु एकस्यैव । अन्यथा मुष्टी वाचं च विसर्जयित्वेत्यग्रे मुष्टिद्वयविसर्जनविधानानुपपत्तेः । आपस्तम्बेन द्वे अन्यतरतो द्वे अन्यतरत इति स्पष्टमभिधानाच्च । उत्सर्गोऽपि युगपदेव । एष्ट्रीः स्थेति बहुवचनात् । ताभिरुत्सृष्टाभिः । यथासुखमिति वचनाद्याभिरुत्सृष्टाभिः सुखेनाऽऽचमनादि कार्यं कर्तुं शक्यते ता उत्स्रष्टव्या इति । तास्तु कनिष्ठिके अनामिके चैव । कनिष्ठानामिकयोरनुत्सर्गे एताभ्यां साकमङ्गुष्ठसंयोगः पीडावह इत्यनुभवसिद्धम् । अतः कनिष्ठे अनामिके इत्येतासामेव चतसृणामुत्सर्गः । अङ्गुलीरुत्सृ-

जतीत्यत्र चतस्र इति स्त्रीलिङ्गात् । एष्टीः स्थेतिमन्त्रगतस्त्रीलिङ्गाच्चैवाङ्गुलिग्रहणे सिद्धेऽङ्गुलिग्रहणं दश हस्त्या अङ्गुलयो दश पाद्या इति श्रुतावङ्गुलित्वेनाङ्गुष्ठग्रहणेऽपि यदि कामयेतोभयं जनयेयमित्यभीव लोमान्यङ्गुष्ठं सहाङ्गुलिभिर्गृह्णीयादित्यत्राङ्गुष्ठस्य पृथग्ग्रहणदर्शनान्नाङ्गुलिष्वङ्गुष्ठग्रहणमिति प्रदर्शयितुम् । एतेनाङ्गुष्ठतर्जन्योरुत्सर्गो वाजसनेय्युक्तो निरस्तो द्रष्टव्यः । वाचं च यच्छतीत्यत्रत्यश्चकारोऽङ्गुलिकरणेन सह संनियोगशिष्टत्वार्थः । तेन मुष्टिकरणकर्तुरेव वाङ्नियम इति तथा च पत्न्या न वाग्यमनम् ।

वाग्यमलोपप्रायश्चित्तमाह—

यदि प्रमत्तो व्याहरेद्वैष्णवीमाग्नावैष्णवीᳪं सारस्वतीं बार्हस्पत्यामित्यनूच्य व्याहृतीश्च पुनर्वाचं यच्छति ।

यदीत्यनेन नैमित्तिकत्वं प्रदर्श्यते । प्रमत्तः प्रमादतो व्याहरेद्वाचमुच्चारयेत् । बुद्ध्या प्रमत्ततावशेन व्याहरणे तु द्विवारं त्रिवारं वैतेषां मन्त्राणां जप इति स्वार्थिकम् । यदा तु प्रमत्त इत्यस्य उन्मत्त इत्येवार्थ इत्युच्यते तदैतेषां मन्त्राणां सकृदेव जपः । प्रमादेन व्याहरणे तु—

यदि वाग्यमलोपः स्याज्जपादिषु कथंचन ।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥

इतिस्मृत्युक्तं ग्राह्यमिति । अयं च वागुच्चारणनिषेधो यज्ञसाधनव्यतिरिक्तविषये । तथा चाऽऽश्वलायनः—आपद्यातो देवा अवन्तु न इति जपेदपि वाऽन्यां वैष्णवीमिति । अन्यद्यज्ञस्य साधनादिति चाऽऽह । आपद्य नियममतिक्रम्य । यज्ञसाधनमिति वचसो विशेषणम् । यज्ञसाधनं वचो यद्यज्ञसंपादनार्थं तद्भ्रेषपरिहारार्थं च तत् । एतद्व्यतिरिक्तवचसो यमनमित्यर्थः । वैष्णवी, इदं विष्णुरिति प्रसिद्धा । अग्नाविष्णू महि तद्वामित्यनुवाकस्याऽऽद्ययोरन्यतराऽऽग्नावैष्णवी । ततः परयोः प्र णो देवी, आ नो दिव इत्यनयोरन्यतरा सारस्वती । ततः परासां बृहस्पते जुषस्व न एवा पित्रे बृहस्पते अतीत्येतासां तिसृणामन्यतरा बार्हस्पत्या । इतिशब्दः प्रकारार्थः । तेनानाज्ञातादिमन्त्रत्रयपाठः सिद्धो भवति । अनुत्र मन्त्रपाठात्पूर्वमेव वाग्यमलोपप्रायश्चित्तार्था एते मन्त्रा इत्यनुसंधानार्थः । नचैतदनुसंधानं मन्त्रपाठकाल एवास्त्विति वाच्यम् । मन्त्रार्थानुसंधानावरुद्धत्वेनैतदनुसंधानासंभवात् । अनुसंधानस्य ज्ञानरूपत्वेनैककाले ज्ञानद्वयानुत्पादात् । अथवाऽनुत्रेतेषां मन्त्राणामनुवचनरूपतां दर्शयितुम् । तेनैकश्रुत्यमेव भवति । जपित्वेत्येवं वचनाभावान्न चातुस्वर्यनियमः । चातुस्वर्यनियमाभावार्थमेव जपित्वेतिवचनं परित्यज्यानूच्येतिवचनम् । व्याहृतीः समस्ता व्यस्ता वा । एकैकशः समस्ताभिश्चेति

समुच्चयबोधकवचनस्यात्राभावात् । इष्टिपशुबन्धब्रह्मत्वसूत्रे यदि प्रमत्तो व्याहरेद्वैष्णवीमृचं जपित्वा व्याहृतीश्च पुनर्वाचं यच्छतीति उक्तत्वाद्ब्रह्मविषयकमेव । अग्निष्टोमब्रह्मत्वसूत्रे यद्वक्ष्यमाणं तद्ब्रह्मपरमेव । अत्र विहितं यजमानविषयकमेव । अध्वर्य्वादीनां तु वैष्णव्यृङ्मन्त्रेणैव विष्णुस्मरणमिति न नियमः किंतु नामोच्चारणेनापीत्येतादृशोपायान्तरमपीति । एतदभिप्रेत्यैवाऽऽध्वर्यवसूत्र एतस्यावचनम् । तच्चोपायान्तरं स्मृतावुक्तम् —

यदि वाग्यमलोपः स्याज्जपादिषु कथंचन ।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥ इति ।

प्रसङ्गादिदमुक्तम् ।

नानृतं वदति ।

सामान्यनिषेधेनाऽऽधानप्रभृति यावज्जीवं नानृतं वदेदितिविशेषनिषेधेन चैवानृतवादनिषेधे सिद्धे पुनर्निषेधः कर्माङ्गत्वार्थः । तेन प्रायश्चित्तत्रयमत्र भवति । एकं सर्वाधिकारकसामान्यनिषेधापरिपालननिमित्तकं प्रायश्चित्तम् । द्वितीयमाहिताग्न्यधिकारकसामान्याकारकविशेषनिषेधापरिपालननिमित्तकम् । तृतीयमेतत्कर्माङ्गभूतनिषेधापरिपालननिमित्तकमिति । आद्ये स्मार्तं प्रायश्चित्तम् । अन्त्ययोः श्रोतं, तच्च द्विगुणम् । एतत्त्रितयमाचरणीयम् । तत्र स्मार्तप्रायश्चित्तमुच्यते । वृद्धपराशरः—

विप्रः क्षुत्कृत्य निष्ठीव्य कृत्वा चानृतभाषणम् ।
वचनं पतितैः कृत्वा दक्षिणं श्रवणं स्पृशेत् ॥
प्रेक्षणं शशिनोऽर्कस्य ब्रह्मविष्णुशिवसंस्मृतिः । इति ।

वृद्धशातातपः—

क्षुत्वा निष्ठीव्य वासस्तु परिधायाऽऽचमेद्बुधः ।
कुर्यादाचमनं स्पर्शं गोपृष्ठस्य च दर्शनम् ।
यथासंभवतो ह्येतत्पूर्वाभावे ततः परम् । इति ।

पूर्वं जलाभावे कर्मणि व्यापृतौ वा द्रष्टव्यम् । शङ्खलिखितौ—आक्रोशनानृतवादे त्रिरात्रमेकरात्रं वोपवास इति । एवं स्मृतिषु प्रायश्चित्तान्तरमप्युक्तं तत्ततो द्रष्टव्यम् । तत्र शक्ताशक्तकामाकामाभ्यासानभ्यासस्वल्पास्वल्पत्वेन व्यवस्था ज्ञेया । श्रौतप्रायश्चित्तं शब्दानृतार्थानृतभेदेन भिन्नम् । तत्र शब्दानृते सारस्वतीष्टिर्भगवता पतञ्जलिनोक्ता । अर्थानृते व्रातपत्येव । स्मार्तं तु अनृतद्वयेऽपि साधारणमेव । यद्यपि श्रौतेनैकेनैव प्रायश्चित्तेन द्वितीयप्रायश्चित्तस्य प्रसङ्गतः सिद्धिस्तथाऽपि पुनरत्र श्रौतनिषेधकरणादावृत्तिरेव सिद्धा भवति । इदमेवैतन्निषेधस्य फलम् ।

न मांसमश्नाति ।

मांसग्रहणं मध्वादीनामुपलक्षणम् । आपस्तम्बेन निषेध्यपदार्थेषु तद्ग्रहणात् । राग-प्राप्तस्य मांसाशनस्य प्रतिषेधः । पश्विडाभक्षणं वैधमिति कृत्वा तस्य न निषेधः । न हिंस्यात्सर्वभूतानीतिशास्त्रेण हिंसा निषिध्यते यागीया तु न निषिध्यते वैधत्वादित्यत्र यथा तथाऽत्रेति द्रष्टव्यम् । अयं वैधव्यतिरिक्तमांसाशनप्रतिषेधो युगान्तर उपयुज्यते । कलौ तु मांसाशनस्य सर्वथैव निषेधेन तदप्राप्तिरेव । कलौ तु यागनिषेधस्यैवाभावेन तत्संबन्धिमांसभक्षणस्याप्यनिषेध एव ।

सत्रस्तैयान्यदीक्षा च नरमेधाश्वमेधकौ ।

सौत्रामण्यां सुराग्रहः ।

भक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु ।

इत्यादिभिः कलिवर्ज्यविषयकवचनैर्विशेषनिषेधेनाग्निष्टोमादीनां गोव्यतिरिक्तच्छा-गादिपशूनां च निषेधाभावस्यार्थादेव प्रदर्शनात् ।

न स्त्रियमुपैति ।

ऋतावपि । यदि दीक्षितोऽवकिरेदिति रेतःसेके प्रायश्चित्तश्रवणात् । भर्तारं प्रति पत्न्या गमनमर्थादेव निवृत्तं भवति । तत्र बुद्धिपूर्वस्कन्दने यदि दीक्षितोऽवकिरेदिति वक्ष्यमाणप्रायश्चित्तम् । अबुद्धिपूर्वे तु यन्मेऽत्र पयसः परितोषात्तदपि । अग्निहोत्रमिव सोमेन तदहं पुनराददे इति रेतः स्कन्नमनुमन्त्रयत इत्यापस्तम्बोक्तं प्रायश्चित्तं द्रष्ट-व्यम् । इदमनुमन्त्रणमाचान्तेन कर्तव्यम् । तथा च सूत्रान्तरम्—आचान्तो रेतःस्कन्न-मनुमन्त्रयत इति । यदि दीक्षितोऽवकिरेदिति स्वस्त्रियामेव नान्यस्त्रियाम् । तत्र तु यो ब्रह्मचारी स्त्रियमुपेयादित्येतत्प्रायश्चित्तं स्मृत्युक्तं च भवति । रागप्राप्तस्य प्रतिषेधः ।

नोपर्यास्ते ।

नोपरि पीठमञ्चादावास्ते शयीत च । प्रदर्शनार्थं चाऽऽसनवचनम् । अथ शयी-तेत्येवाऽऽश्वलायनः ।

न निष्ठीवते ।

ष्ठीवनं लालाविसर्जनम् ।

न दतो धावते ।

दतो दन्तान् । दन्तधावननिषेधे तत्स्थाने द्वादश गण्डूषाः कार्यास्तेनैव मुखशुद्धि-रिति स्मृतितो ज्ञेयम् ।

नाऽऽविष्कुरुते ।

दत इत्यनुवर्तते । आविष्करणं प्रकटीकरणम् ।

नाऽऽनतो स्मयेतापिगृह्य स्मयेत ।

आनतो केनचिद्धास्यकारणेन हास्यप्राप्तावपि नैव स्मयेत नेषद्धास्यमपि कुर्यात् । स्मिङ्, ईषद्धसन इत्यस्माद्धातोर्निष्पन्नः स्मयशब्दः । ईषद्धास्यनिषेधेन कैमुतिकन्यायेन कखरूपस्य हास्यस्यापि सुतरां निषेधः । अकारणहास्यस्य तु धर्मशास्त्रादेव निषेधसिद्धिः । यदीषद्धास्यमपि निरोद्धुं न शक्यते तदा स्मयेतैव परं तु अपिगृह्य वस्त्रेण मुखमाच्छाद्यैव स्मयेत । एतत्फलं श्रुतौ कृष्णविषाणया कण्डूयतेऽपिगृह्य स्मयते प्रजानां गोपीथायेति । गोपीथा रक्षणम् । उणादिसूत्रेषु निपातनात्साधुः । प्रवर्ग्यब्राह्मणे फलान्तरमपि—तस्माद्दीक्षितेनापिगृह्य स्मेतव्यम् । तेजसो धृत्या इति । एते निषेधाः पत्न्या अपि । तस्येति ज्ञापकात् । पत्न्या वाग्यमनलोपे विष्णुस्मरणमेव प्रायश्चित्तम् ।

यदि वाग्यमलोपः स्याज्जपादिषु कथंचन ।

व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् । इति सामान्यवचनात् ।

उपायान्तरसत्त्वे मन्त्रपाठकल्पनायोगात् । अबद्धं मन उन्दतीर्बलं धत्तेति जपौ तु न भवतः । यावदुक्तं पत्न्याः कर्माणि ब्रह्मचर्यं जपाश्चेति सूत्रात् । नचैवं नखनिकृन्तनदन्तधावनस्नानवासःपरिधानाशनाभ्यञ्जनाञ्जनपावनादीनामप्यभावोऽस्त्विति वाच्यम् । तस्यैष एव संचर आसुत्याया इत्यत्रत्यतच्छब्दस्यैतेषां धर्माणां प्रापणार्थमेव कृतत्वात् । अन्यथा तद्वैयर्थ्यस्य दुष्परिहार्यत्वापत्तेः । नच वैयर्थ्यपरिहारार्थमुपायान्तरमेव किंचित्कल्पनीयमिति वाच्यम् । एतत्कल्पनातिरिक्तायाः सूत्रान्तरानुगुणार्थकल्पनाया एवासंभवात् । तूष्णींपक्ष इदम् । ऊहपक्षे तु स्नानमन्त्रे पूतैमीत्यूहः । ऊहपक्ष एतावपि जपौ भवत एव । जपाभावपक्षे प्रायश्चित्तं तु विष्णुस्मरणमिति द्रष्टव्यम् ।

अबद्धं मन इत्यमेध्यं दृष्ट्वा जपति ।

अमेध्यमशुचि मलमूत्रादि पतितचण्डालरजस्वलादि च दृष्ट्वा जपति कालाव्यवाये सत्यसकृद्दृष्ट्वाऽपि सकृदेव जपति । कालव्यवाये तु पृथगेव मन्त्रः । सर्वेषामेकास्मिन्नेव काले युगपद्दर्शने सकृदेव जपति । स्वप्ननदीतरणाभिवर्षणामिमेध्यप्रतिमन्त्रणेषु चैवमिति एकादशाध्यायचतुर्थपादगते सूत्रे स्वप्ननदीतरणाभिवर्षणेषु कालभेदेऽपि नाऽऽवृत्तिः । अमेध्यप्रतिमन्त्रणे तु एकस्मिन्काल एव युगपदनेकामेध्यदर्शने कालभेदाभावाद्विस्पष्ट आवृत्तेरभाव इति विशेषो द्रष्टव्यः । अमेध्यप्रतिमन्त्रणे दर्शनस्यैव निमित्तत्वात्कालभेदेनामेध्यदर्शन आवृत्तिरेव मीमांसकमतेऽपि । एवमित्यनेन कण्डूयनाधिकरणसिद्धान्तार्थोऽतिदिश्यते । सूत्रार्थस्तु स्पष्ट एव । आचमनादित्याविक्षणयोः स्मृतिप्राप्तयोः समुच्चय इति केचित् । मा मा हासीरिति मन्त्रान्तः ।

**उन्दन्तीर्बलं धत्तेत्यभिवृष्यमाणो जपति ।**

अभिशब्दात्संमुखं वृष्यमाणस्य जपः । वृष्यमाण इति शानचा वर्षणसमकालं जपः । कालाव्यवाये सकृदेव जप इति याज्ञिकमते । मीमांसकमते तु काला(ल)व्यवायेऽपि नाऽऽवृत्तिरिति द्रष्टव्यम् । निर्वधिष्टेति मन्त्रान्तः ।

**दक्षिणेन विहारं दीक्षितागारे विहरति ॥ ६ ॥**

विह्रियन्तेऽग्नयो यस्मिन्स विहारः प्राग्वंशादिरूपस्तं दक्षिणेनादूर एव दीक्षितागारे कृते विहरति । एतस्मादेव ज्ञायते विहारस्य दक्षिणतो दीक्षितागारं विहारार्थं कर्तव्यमिति । विहारोऽत्र सत्कथावादपुराणश्रवणवेदार्थविचारादिस्तं कालातिवाहनार्थं करोतीत्यर्थः । दक्षिणेन विहारमित्यनेन स्वायतनोपवेशनं व्यावर्त्यते । एनपा दूरत्वं व्यावर्त्यते । दीक्षितागारवचनं बाह्यशालायां यत्रकुत्रचिद्विहरणं व्यावर्तयितुम् । सूत्रान्तरे दीक्षितधर्मान्प्रकृत्य न लौकिकीः कथाः कुर्यात्काव्यरसान्वर्जयेन्न गायेन्न रोदेन्न नृत्यदर्शी भवेदिति । कवेः कर्म काव्यं तच्च नाटकभाणिमप्रहसनादिभेदादनेकविधमित्यग्निपुराणादौ प्रदर्शितं तद्वर्जयेत् । रसाञ्शृङ्गारादिभेदेन दशविधान्रसान्वर्जयेत् ।

**नान्यत्र कृष्णाजिनादास्ते शेते वा ।**

स्पष्टम् ।

**नैनमन्यत्र दीक्षितविमितात्सूर्योऽभिनिम्रोचेन्नाभ्युदियात् ।**

दीक्षितार्थं विमितं दीक्षितविमितं तच्च प्राग्वंश इति प्रागेव दर्शितं तस्मादन्यत्रान्यस्मिन्देश एनं दीक्षितं सन्तं सूर्योऽभिनिम्रोचेदस्तमियान्नचाभ्युदियात् । सूर्यास्तमयोदययोर्दीक्षितविमिताद्बहिर्न गच्छेत्किंतु तत्रैव स्यादिति तात्पर्यार्थः । एतत्प्रायश्चित्तमापस्तम्ब आह—वारुणीरभिनिम्रुक्तो जपेत्सौरीरभ्युदित इति । यच्चिद्धि ते यत्किंचेदं कितवास इति वारुण्योऽस्तमित उद्वयं तमसस्परि उदु त्यं चित्रमिति तिस्रः सौरीरभ्युदिते । उदुत्तमं वरुणास्तभ्नाद्द्यां यत्किंचेदं कितवास इति वारुण्यः, उदु त्यं चित्रं देवानां मम त्वा हरितस्तरणिर्विश्वदर्शत इति सौर्य इति वा । भारद्वाजमते तरणिर्विश्वदर्शत इति नास्ति । आपस्तम्बः—मधु मांसं स्त्रियमनृतमुपरिशय्यां ष्ठीवनं विकाले निष्क्रमणं दीक्षितविमितात्प्रवासमिति वर्जयेदिति । विकालो निष्क्रमणायोग्यसंध्यादिः । प्रवासोऽन्यत्र रात्रिवासः । दीक्षितविमितादिति काकाक्षिन्यायेनोभयत्र संबध्यते । विकाले दीक्षितविमितान्न निष्क्रामेन्न च ततोऽन्यत्र रात्रिं वसेदित्यर्थः । सर्वत्र व्रतातिक्रमे व्रातपती । यथाविहितानि तु वैशेषिकाणि । छर्दनादिप्रायश्चित्तमापस्तम्बेनोक्तम्—यदत्राविरसस्य मे निरष्टविषमः स्मृतः । अग्निष्टत्सोमः पृथिवी पुनरात्मन्दधातु म इति च्छर्दयित्वा क्षुत्वा वा यदन्नमद्यते नक्तं न तस्मातः क्षुधोऽवति । सर्व

तदस्मान्मा हिꣳसीर्नेहि तद्ददृशे दिवेति स्वप्नेऽन्नं भुक्त्वा रुद्रियाभ्योऽद्भ्यः स्वाहेति लोहितमुत्पतितं दृष्ट्वा बीभत्सा नाम स्थाऽऽपः स्वाहाकृताः पृथिवीमाविशतेति स्नूहानं कृपाणा नाम०त्यश्रु तपस्या ना० स्वेदमिति । जपतीत्येव शेषो न त्वनुमन्त्रयत इत्यस्यानुवृत्तिः । स्वप्नेऽन्नं भुक्त्वेत्यत्र स्वाप्निकस्य पदार्थस्य जाग्रद्दशायामसंभवे तदनुमन्त्रणासंभवात् । एकत्र व्यभिचारेण सर्वत्रापि जपतीत्ययमेव शेषः । स्नूहानमित्यादिष्वपि दृष्ट्वेतिपदस्याप्यन्वयः । अश्रु दुःखजमानन्दजं चेत्युभयमपि गृह्यते । अविशेषात् । अग्नये व्रतभृतेऽष्टाकपालं य आहिताग्निरार्तिजमश्रु कुर्यादित्यस्यानैमित्तिकत्वान्नैमित्तिकस्य नित्यतुल्यत्वान्न कांचनाऽऽहुतिं जुहोत्यन्यत्र क्रतुसंयुक्ताभ्य इत्यनेन क्रतूपयोगिव्यतिरिक्ताहुतेर्निषेधाद्व्रातभृतीष्टेर्निषेध इति केचित् । नैतद्युक्तम् । एतस्याः प्रायश्चित्तप्रकरणे पाठात्पाथिकृतीष्टिवद्दोषनिर्घातार्थत्वेन क्रतुसंयुक्तत्वात् । नहि दोषनिर्हरणं विनाऽग्रिमं कर्म संभवति । अत इयमिष्टिर्भवत्येव पूर्णाहुतिर्वेति । स्नूहानं नासास्रुते जले श्लेष्मादि । अश्रु नेत्रस्रुतं जलं, स्वेदः शरीरजं जलम् । भरद्वाजः—नापरया द्वारा निष्क्रामेद्यदि निष्क्रामेत्तेनैव प्रविश्येदं विष्णुरिति जपेदिति । आपस्तम्बः—न पुरा नक्षत्रेभ्यो वाचं विसृजेद्यदि विसृजेदिदं विष्णुस्त्वमग्ने व्रतपा असीति जपित्वा वाचं यच्छतीति । न पुरा नक्षत्रेभ्यो वाचं विसृजेदित्यनुवादः प्रायश्चित्तविधानार्थः । वाग्यतस्तपस्तप्यमान आस्त आ नक्षत्रस्योदेतोरिति पूर्वमवोक्तत्वात् । श्रुतौ तु न पुरा नक्षत्रेभ्यो वाचं विसृजेद्यत्पुरा नक्षत्रेभ्यो वाचं विसृजेद्यज्ञं विच्छिन्द्यादिति दोषं प्रदर्श्य नक्षत्रोदयोत्तरं वाग्विसर्गं कर्तुं तद्विधिमुक्त्वा यदि विसृजेद्वैष्णवीमृचमनुब्रूयाद्यज्ञो वै विष्णुर्यज्ञेनैव यज्ञꣳ संतनोतीति केवलं वैष्णव्यृग्जपमात्रं प्रायश्चित्तमुक्तम् । प्रातस्तु त्वमग्ने व्रतपा असीत्यनुब्रूयाद्यदीक्षितवादं वदेन्मुष्टी वाचं च विसर्जयित्वेति वक्ष्यमाणं प्रायश्चित्तं द्रष्टव्यम् । आपस्तम्बः—न दीक्षितवसनं परिदधीत नास्य पापं कीर्तयेदिति । अदीक्षितानामपि निषेधाद्दीक्षार्थवाससतेन त्यक्तं न परिदधीत कश्चिदपि, नास्य सन्तमसन्तं वा दोषं कीर्तयेदित्यर्थः ।

नक्तमेव मूत्रपुरीषे कुर्याद्दिवा वा छायायाम् ।

नक्तं रात्रावेव मूत्रपुरीषोत्सर्गं कुर्यात् । न दिवा । यदि निरोद्धुं न शक्नुयात्तदा दिवाऽपि कुर्यात् । परं तु छायायां कुर्यात् । अत्रेदं धर्मसूत्रम्—आराच्चाऽऽवसथान्मूत्रपुरीषे कुर्याद्दक्षिणां दिशं दक्षिणापरां वा ग्रामादावसथाद्वाऽस्तमिते च बहिर्ग्रामान्मूत्रपुरीषयोः कर्म वर्जयेदश्मानं लोष्टमार्द्रानोषधिवनस्पतीनूर्ध्वानाच्छिद्य मूत्रपुरीषयोः शुन्धने वर्जयेद्देवतानामभिधानं चाप्रयत इति ।

पराशरः—ततः प्रातः समुत्थाय कुर्याद्विण्मूत्रमेव च ।

नैर्ऋत्यामिषुविक्षेपमतीत्याभ्यधिकं भुवः ॥

दूरादावसथान्मूत्रं पुरीषं च समाचरेत् । इति ।

दूरादिति दिनपरं न रात्रिपरं भयसंभवात् । तथा चैतदभिप्रेत्यैव देवलः—

रात्रौ दूरं नैव गच्छेद्विण्मूत्रार्थं कदाचन । इति ।

शौनकोऽपि—प्राणबाधाभयाद्रात्रौ गृहेऽप्युत्सर्गमाचरेत् ॥ इति ।

विण्मूत्रे संध्ययोर्नैव कुर्यात् । तथा च देवलः—

विण्मूत्रे आचरेन्नित्यं संध्यासु परिवर्जयेत् । इति ।

धर्मसूत्रे—दिवा च शिरसः प्रावरणं वर्जयेन्मूत्रपुरीषयोः कर्म परिहाप्य शिरस्तु प्रावृत्य मूत्रपुरीषे कुर्यादिति । अन्यच्च—न सोपानन्मूत्रपुरीषे कुर्यात्कृष्टे पथ्यप्सु च तथा ष्ठीवनमैथुनयोः कर्माप्सु वर्जयेदग्निमादित्यमपो ब्राह्मणं गा देवताश्चाभिमुखो मूत्रपुरीषयोः कर्म वर्जयेदिति ।

अन्यच्च-प्राङ्मुखोऽन्नानि भुञ्जीत उच्चारे दक्षिणामुखः ।

उदङ्मुखो मूत्रं कुर्यात्प्रत्यक्पादावनेजनम् ॥ इति ।

उच्चारः पुरीषकर्म । मूत्रपुरीषोत्सर्गप्रयुक्ता धर्माः स्मृतितो ज्ञेयाः । अत्राऽऽवसथाद्दक्षिणां दिशं दक्षिणापरं वेत्ययमेव पक्ष आश्रयणीयः । अन्तर्ग्रामेऽपि गृहस्य द्वारतो न कुर्यात् । यद्यपि च्छायायां मूत्रपुरीषयोः कर्म वर्जयेदिति सामान्यतः सर्वच्छायानिषेधस्तथाऽपि स्मृतिषु नचोपजीव्यच्छायास्विति विशेषतः श्रवणात्तस्या एव निषेधो न तु च्छत्रादिच्छायाप्रतिषेधः । अप्रतिषिद्धा या छाया सैवात्र ग्राह्या । तस्यां छायायामेव मूत्रपुरीषयोः कर्मात्र नियतमिति दिवा वा छायायामित्यनेन प्रदर्श्यते । उपजीव्यच्छाया नाम यस्यां पथिकादयो विश्राम्यन्ति सा । एतस्यास्तु निषेध एवात्रापि मेघच्छायादेरप्रतिषेधस्त्ववर्जनीयत्वादेवेत्यस्त्वप्रस्तुतम् ।

**मूत्रं चिकीर्षन्नियं ते यज्ञिया तनूरिति विषाणया लोष्टं किंचिद्वोपहत्य तदादायापो मुञ्चामि न प्रजामꣳहोमुचः स्वाहाकृताः पृथिवीमाविशतेति प्रस्रावयत्यप उपस्पृश्याऽऽचम्य पृथिव्याꣳ संभवेति तत्प्रतिनिदधाति पृथिव्याः संभवेति वा ।**

मूत्रं चिकीर्षन्कर्तुमिच्छन् । अपो मुञ्चामीति मन्त्रलिङ्गादेव मूत्रोत्सर्गमात्रसंबन्धित्व एतस्य विधेः सिद्धे मूत्रं चिकीर्षन्नितिवचनं नियमार्थं मूत्रमेव केवलं कर्तुमिच्छन्न तु पुरीषमपि तेन पुरीषोत्सर्गकालिकमूत्रप्रस्रावे नायं विधिरिति । विषाणया प्रत्तयाऽन्यया वाऽपि । न तु प्रत्तयैवेति नियमः । लोष्टोद्धननवत्प्रत्तवचनाभावात् । लोष्टं मृत्पिण्डः । किंचिदित्यनेन लोष्टादन्यत्तृणादिकमुच्यते तद्वा । तृणं लोष्टं वाऽपादाये-

त्येवापठदापस्तम्बः। उपहत्योद्धृत्य खनित्वेति यावत्। तेन पतितस्य लोष्टस्य तृणा-दिकस्य वा न ग्रहणम्। तदुपहतम्। उत्तरत्र प्रतिनिधानादेवाऽऽदाने सिद्ध आदा-येतिवचनं तदादायैव मूत्रप्रस्रावः कर्तव्य इति। प्रस्रावयति मूत्रं चिकीर्षन्निति पूर्वत्र तस्यैवोपक्रमात्, योग्यत्वाच्च मूत्रस्यैव प्रस्रावणम्। प्रस्रावणेन्द्रियशुद्धिं कृत्वा हस्त-पादप्रक्षालनाचमनानि कार्याणीति स्मृतिसिद्धम्। अप उपस्पृश्य, अपः स्पृष्ट्वा, आचम्य श्रौतमाचमनं कृत्वेत्यर्थः। अप उपस्पृश्याऽऽचम्येति द्वयोर्भेदं विना पृथग्ग्र-हणानुपपत्तेरुपस्पर्शशब्देन स्पर्शमात्रं न तु उपस्पर्शस्त्वाचमनमितिकोशोक्त आचमन-शब्दार्थो ग्राह्य इति। उदककार्ये प्रोक्षणाचमनादौ कुत्रचिदप्शब्द उपादीयते कुत्र-चिन्नोपादीयते तत्र बीजमिदं यत्रोपादीयते तत्रोत्पवनादिसंस्काराभावो यत्र नोपा-दीयते तत्र संस्कारसत्त्वमिति। पृथिव्याः संभवेति तदपात्तं लोष्टं तृणादिकं च यतोऽ-पात्तं तत्रैव पुनर्निदधाति पृथिव्याः संभवेति वा। अनुनासिकविसर्गकृतो मन्त्रभे-दोऽत्र। लोष्टादानोत्तरमेव कर्णे यज्ञोपवीतधारणादि। आदानात्पूर्वं धारणं तु यज्ञो-पवीती कर्म कुर्वीतेतिशास्त्रविरोधापत्तेर्न युक्तम्। नचैवमादायेतिल्यब्बोधितादानमूत्रप्र-स्रावयोरव्यवहितानन्तर्यबाधापत्तिः। अत्राव्यवहितत्वस्याविवक्षणात्। कर्णे यज्ञो-पवीतधारणस्यापि मूत्रपुरीषोत्सर्गानुगुणत्वेनाव्यवधायकत्वाच्च। आचमनं तु मुष्ट्य-नुरोधेन कथंचिदाचमनविधानात्। आचमनार्थं मुष्टिविसर्गे दोषो नेति केचित्। अस्तीत्यन्ये। शौचविधिस्तु मुष्टिं विसृज्यैव कर्तव्यः। तत्र न प्रायश्चित्तमिति केचित्। तदनन्तरं मुष्टिविसर्गप्रायश्चित्तं कृत्वा पुनर्मन्त्रेण मुष्टिकरणमित्यन्ये। दण्डकृष्णाजिने निधायैव मूत्रपुरीषे कर्तव्ये। तथाचाऽऽपस्तम्बः—न दण्डात्कृष्णा-जिनादिति विप्रच्छिद्येतोभे निधाय मूत्रपुरीषे कुर्यादिति।

नैनꣳ शूद्रोऽनुप्रविशति।

एनं दीक्षितं प्रति शूद्रो नानुप्रविशति न प्रतिपद्यते। अनुरत्रानुलक्षीकरणपूर्वकप्रवे-शनिषेधार्थः। तेन साहजि(।सि)कप्रवेशो निषेधो नेत्यर्थादवगतं भवति।

ब्राह्मणेन राजन्येन वैश्येन वा संभाषेत।

एतैः सम्यगपि भाषेतेत्यर्थः। परिगणनात्स्त्रीशूद्राभ्यां सह संभाषणस्यार्थान्निषेधः सिद्धो भवति। सर्वमेतत्स्पष्टमाहाऽऽपस्तम्बः—न स्त्रिया शूद्रेण संभाषेत नैनमनुप्रप-द्येतेति। स्त्रिया त्वशूद्रयाऽपि न संभाषेत। बहूपकारमोहादपि नैनं शूद्रमनुगच्छेत्। एनं यजमानं शूद्रो नानुप्रपद्येतेत्यर्थो वेत्यापस्तम्बसूत्रार्थः। नैनमनुप्रपद्येतेत्यस्य द्वितीयोऽर्थोऽस्मत्सूत्रानुगुणः। मात्रादिभिर्मान्याभिः सह सम्यग्भाषणेऽपि न दोषः। भारतादिषु दर्शनात्। संशब्दात्सम्यग्भाषणस्यैव निषेधः। तेन कार्यार्थं स्वल्पभाषणे न दोष इति सिद्धं भवति। शूद्र इत्येकवचनं लिङ्गं चाविवक्षितमुद्देश्यगतत्वात्। तेन

बहवः शूद्राः स्त्रियश्चापि न प्रपद्येयुरिति । शूद्रसंभाषणविषये कंचित्प्रतिप्रसवमाहाऽऽपस्तम्बः–कामं शूद्रेण संभाषेत यः पापेन कर्मणाऽनभिलषितः स्यादिति शाट्यायनकमिति । यस्त्वगम्यागमनस्तेयादिदोषाश्रयतया न श्रुतो निश्चित इति यावत्तेन कामं संभाषेतेत्यर्थः । शूद्रग्रहणं स्त्र्युपलक्षणम् । प्रतिलोमानां तु जन्मनैव पापाभिलषितत्वान्नैभिः सह भाषणम् । लघुपापाभिलषितेन न संभाषणं निषिद्धम् । ननु ब्राह्मणादिभिरप्यशुचिभिः संभाषणं स्मृतिनिषिद्धं शूद्रस्य को विशेष इति चेत् । उच्यते—पापानभिलषितैः सद्भिर्ब्राह्मणादिभिः संभाषणं कर्मान्तराले विहितं यथा भारतादिश्रवणम्,

अहःशेषं समासीत शिष्टैरिष्टैश्च संयुतः । इति च, तथा न शूद्रेण शिष्टेन चापि विधीयते ।

न कंचन प्रत्युत्तिष्ठति ।

कमपि शिष्टं पित्रादिं गुरुं वृद्धं ज्ञानिनं चापि समागतं दृष्ट्वा न प्रत्युत्थानं कुर्यात् । स्मृतितः प्राप्तस्य निषेधः क्रियते ।

नाभिवादयते ।

पितरं मातरं चैव पितामहं पितामहीम् ।
प्रपितामहतत्पत्न्यौ मातामहं च तत्स्त्रियम् ॥
पितृव्यं मातुलं चैव भ्रातरं श्वशुरं तथा ।
आचार्यमुपनेतारमन्नदातारमेव च ॥
उपाध्यायं नीतिशास्त्रप्रवक्तारं तथैव च ।
भयत्रातारमाप्तं च ऋत्विजं वृद्धमेव च ॥
विद्याविनयसंपन्नं ज्ञानिनं चाभिवादयेत् ।

इत्यादिस्मृतिप्राप्तानभिवाद्यान्नमस्कार्यान्नाभिवादयेन्न नमस्कुर्यादित्यर्थः । आपस्तम्बः–अभिवदति नाभिवादयतेऽप्याचार्यं श्वशुरं राजानमिति शाट्यायनकमिति । अन्यैरभिवादितस्तेभ्य आशिषं वदति न स्वयम्, आचार्यादीन्समागतानपि नाभिवादयते किं पुनरन्यान् । राजाभिवादननिषेधो राज्ञो ब्राह्मणस्याप्रसक्तेः । आपस्तम्बोक्ताचार्यादिपदसमभिव्याहारान्नमस्कार एवात्राभिवादनशब्दार्थः ।

**सर्व एवैनमभिवादयेरन्सर्वानेवाभिवदेत ।**

एनं दीक्षितं सर्व एतस्याभिवाद्याः पित्राद्या अन्ये चाभिवादयेरन् । अनभिवाद्यत्वेऽपि तस्य सर्वास्तानभिवदेत्सर्वान्प्रति आशिषम् ।

आयुष्मान्भव सौम्येति वाच्यो विप्रोऽभिवादने ।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरे प्लुतः ॥

इतिलक्षणलक्षितां वदेत् । नमस्कारं वा कुर्याद्यथायोग्यम् । नाभिवादयत इत्ययं निषेधो वृद्धत्वेऽपि स्वेन प्रथममभिवादनं न कर्तव्यं तैः कृते पश्चात्कर्तव्यमिति पिण्डितोऽर्थः । एवकारस्याभिवदेदित्यनन्तरमन्वयः । आपस्तम्बः—अग्निर्वै दीक्षितस्तस्मादेनं नोपस्पृशेन्नचास्य नाम गृह्णीयादिति । अन्यस्य विधिरयम् । अस्य दीक्षितस्य न नाम गृह्णीयात्किं तु भो इत्यादिभिः पूजाशब्दैरामन्त्रणमात्रं कर्तव्यमिति । स्पर्शने प्रत्यक्षदोषो न नामग्रहणे । अग्निसंस्तवो न स्पर्शनमात्रे हेतुः किंतु अभिवाद्यैरप्ययमभिवाद्यस्तेभ्योऽभिवाद्येभ्योऽपि स्वेनाऽऽशिषो देया इत्यत्रापि । अत एवाभिवदति नाभिवादयतेऽप्याचार्यं श्वशुरं राजानमिति शाट्यायनकमित्यस्यानन्तरमुपादानम् । अयं निषेध ऋत्विजामपि विधिव्यतिरिक्तस्पर्शविषये ।

यद्येनं शूद्रेण संभाषोपेयादेतेषां वर्णा-
नामेकं ब्रूयादिममित्थं विचक्ष्वेति ।

एनं दीक्षितं प्रति शूद्रेण सह संभाषा संवाद उपेयादुपपद्येत । एतेषां शूद्रव्यतिरिक्तानामनन्तरोपात्तानां ब्राह्मणराजन्यवैश्यानाम् । यद्यपि वर्णशब्दो ब्राह्मणक्षत्रियवैश्यशूद्रेषु वर्तते

ब्रह्मक्षत्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ।

इति याज्ञवल्क्योक्तेः, [तथाऽपि] शूद्रात्मकवर्णस्य निषेधकोटिकत्वेनैतच्छब्देन तस्य ग्रहणासंभवाद्ब्राह्मणक्षत्रियवैश्यानामेव ग्रहणम् । यद्यावश्यकः संवाद उपपद्येत तदा ब्राह्मणराजन्यवैश्यानां मध्य एकमन्यतमं यं कंचन वर्णं पुरस्कृत्य संवादयेत्, इममित्थं विचक्ष्वेतीमं शूद्रं प्रतीत्थमनेन प्रकारेण विचक्ष्व ब्रूहीति ।

लौकिकीं वाचं वदन्नामधेयेषु विच-
क्षणं चनसितं चान्ततो दधाति ।

लौकिकीं भाषारूपां वाचं वदन्वदिष्यन्वक्तुमुद्युक्त इत्यर्थः । वर्तमानसामीप्ये वर्तमानवदपि कदाचिद्भवतीति तदर्थं यानि आह्वानाद्यर्थानि नामधेयानि तेषु विचक्षणचनसितेत्येतद्द्वयमन्ततो नामधेयान्ते दधाति योजयति । चकारादुभयोः प्रतिनामवेयं समुच्चयो यथा देवदत्त विचक्षणचनसितेति । विशेषमाहाऽऽपस्तम्बः—चनसितविचक्षणेति राजन्यवैश्याविति । यथायथं राजन्यवैश्ययोरेतौ भवत इत्यर्थः । ब्राह्मणस्य तूभयोः समुच्चय एव । लौकिकीं वाचं वदन्नित्यनेन लौकिकवाग्भाषणस्य गौणता गम्यते । तेन मुख्यत्वेन संस्कृतवागेव वक्तव्या, तस्या वक्तुमशक्यत्वे लौकिकीति सिद्धं भवति । तथा चाऽऽपस्तम्बः—परिणयेन मानुषीं वाचं वदतीति । परितः सर्वेषु देशेष्वेकरूपो नीयत इति परिणयः साधुशब्दस्तेन लौकिकार्थामपि वाचं वदन्ति ।

साधुशब्दैरेव भाषेत नान्यैरित्यर्थः। श्रुतिरप्यत्रास्ति प्रमाणं— तस्माद्ब्राह्मणेन न म्लेच्छवाचा भाषितव्यं म्लेच्छो ह वा एष यदपशब्द इति। अपशब्दरूपाभिर्देशभाषाभिर्दीक्षितेन न भाषितव्यमिति निष्कृष्टोऽर्थः। लौकिकवाग्वदने प्रायश्चित्तं सामान्यमेव व्रातपत्यात्मकम्। देवतानामधेयेषु न विचक्षणचनसितशब्दौ किंतु मानुषनामधेयेष्वेव। तथा च बौधायनः— यानि देवतानामानि यथाख्यातं तान्याचक्षवाथ यान्यदेवतानामानि यथाख्यातं तान्याचक्षाण उपरिष्टाद्विचक्षणं धेहीति। अदेवतानामानि मनुष्याणां डित्थादीनि न तु कृष्णगणेशशिवभास्करादीनि तेषां देवतानामधेयत्वात्। बौधायनेन लौकिकवाग्भाषणेऽपि चनसितविचक्षणप्रयोग उक्तः— चनसितवतीं विचक्षणवतीं वाचं वदे[दि]ति। मतुब्द्वयाद्यथायथं प्रयोगः प्रथमस्याऽऽदौ द्वितीयस्योत्तरमिति। अथवाऽयमर्थः सूत्रस्य लौकिकीं मानुषीं वाचं वदिष्यन्नामधेयेषु च विचक्षणमन्ततश्चनसितं दधाति यथाक्रमं लौकिकीं वाचं वदिष्यन्विचक्षणशब्दमादौ दधाति नामधेयेषु अन्ततोऽन्ते चनसितं दधातीत्येवमिति। अथवोभयत्रापि उभयस्य समुच्चयः। तत्र वाग्विषय आदावुभयोः समुच्चयो नामधेयविषयेऽन्तः उभयोः समुच्चय इति। विचक्षणं चनसितमिति प्रातिपदिकनिर्देशो न विभक्तिर्विवक्षिता। लौकिकं भाषणं कर्तुमादौ विचक्षणचनसितेत्युक्त्वा लौकिकं भाषणं यथास्वेच्छं कुर्यात्। डित्थविचक्षणचनसितेत्याह्वानार्थं संबोधनवाक्यप्रयोगः। चनसित विचक्षणेत्यामन्त्रयेतेति भारद्वाजः।

**न पचति न ददाति न कांचनाऽऽ-**
**हुतिं जुहोत्यन्यत्र क्रतुसंयुक्ताभ्यः।**

अक्रतुसंयुक्तं पाकं न करोतीत्यर्थः। तच्चाऽऽतिथ्याद्यर्थम्। अन्येन पाचने दोषः। नास्य ब्राह्मणोऽनाश्वान्गृहे वसेदित्यनेन निषेधेन वसत्यर्थं ब्राह्मण आगतस्य सत्यां भोजनेच्छायामन्नं दद्यादेवेति तदर्थं पाकः प्राप्तः। तत्र स्वयं पाकं कृत्वाऽतिथये भोजने दत्त आयासविशेषेण फलेऽतिशयात्स्वस्यापि पाककर्तृत्वं प्राप्तं तदनेन निषिध्यते। न ददाति अक्रतुसंयुक्तं दानं न करोतीत्यर्थः।

ईजे यज्ञैश्चन्द्रसेनो भूयस्त्रैर्भूरिदक्षिणैः।

इति पुराणेऽन्नदानदर्शनात्, अनिरादिश्य न भुञ्जत इत्येतस्मात्सूत्राल्लिङ्गाच्च दानं भवत्येव। न कांचनाऽऽहुतिं जुहोति[1] कामपि आहुतिं न जुहोति। कथंभूक्रतुसंयुक्ताभ्योऽन्यत्र विहिताम्। क्रतुसंयुक्ताभ्य इत्यत्रैकशेषः। क्रतुसंयुक्तश्च क्रसंयुक्तं च क्रतुसंयुक्ता च क्रतुसंयुक्ताः। तल्लक्षणविशेषत्वाभावान्नात्र पुंशेषः। न

१ च 'होत्यन्यत्र क्रतुसंयुक्ताभ्यः का'।

सकमनपुंसकेनेत्येकवद्भावस्य वैकल्पिकत्वादभावः । तेन पाकदानयोरपि संग्रहः । आवश्यकश्चायं संग्रहः । अन्यथा क्रतुसंयुक्तपाकदानयोरपि निषेधापत्तेः । पाकेऽक्रतुसंयुक्तत्वं निषेधे प्रयोजकमेवं दानहोमयोरपि । क्रत्वर्थाभ्य इति क्रतुविहिताभ्य इति वा परित्यज्य क्रतुसंयुक्ताभ्य इतिवचनं प्रायश्चित्तार्थपाकदानहोमानामयं निषेधो न भवति, तेषामपि विनष्टसंधानद्वारा क्रतुसंयुक्तत्वादितिज्ञापनार्थम् । क्रतुविहिताभ्यः क्रत्वर्थाभ्य इति चैवमुच्यमाने क्रत्वर्थानां पाकदानहोमानां निषेधे क्रतोरेवासंभवेन तद्व्यतिरिक्तविषयत्वस्यैवावश्यमर्थादेवाङ्गीकर्तव्ये पर्युदासवैयर्थ्यापत्तेः, प्रायश्चित्तार्थपाकदानहोमेषु क्रत्वर्थत्वक्रतुविहितत्वासंभवेनैतेषां क्रतुसंधानार्थत्वेनाऽऽवश्यकानामसंग्रहापत्तेश्च । अतः प्रायश्चित्तार्थानामेतेषां संग्रहार्थमेवैतादृशं वचनमित्यवश्यं स्वीकर्तव्यमेव । संशब्दः पाकदानहोमात्मकेषु विहितेषु प्रायश्चित्तेषु एतेषु एतत्त्रितयान्यतमं विना येन नैव निर्वाहस्तदेव भवति । यस्य तु निर्वाहोऽस्ति तन्नैव भवतीति । यथा यत्र प्रायश्चित्ते पाकात्मकं दानात्मकं होमात्मकं वा जपाद्यात्मकप्रकारान्तरेण वा विकल्पितं तत्र प्रकारान्तरेणापि दोषनिर्हरणसंभवान्नैतानि भवन्तीति । प्रात्यहिकं देवतार्चनं तु होमसहितं क्रियते चेत्तदा न कांचनाऽऽहुतिं जुहोतीति निषेधाद्धोमरहितमेव भवति न तु होमसहितम् । आहुतिग्रहणं देवतोद्देशेन द्रव्यप्रक्षेपमात्रस्योपलक्षकम् । तेन तर्पणस्य वैश्वदेवस्य चापि निवृत्तिः । आहुतिग्रहणात्समिदाधानस्याप्रायश्चित्तार्थस्यापि न निषेधः । देवेभ्यः स्वाहा पितृभ्यः स्वधाऽस्तु भूतेभ्यो नम इत्येते एव देवयज्ञपितृयज्ञभूतयज्ञा न तु वैश्वदेवान्तर्भूता एवेति पक्षेऽपि एतेषामपि अक्रतुसंयुक्तत्वान्निषेधः । मनुष्येभ्यो हन्तेति मनुष्ययज्ञोऽपि न भवति । अक्रतुसंयुक्ताहुतिरूपत्वात् । एतदाज्ञयाऽन्यस्य तु भवत्येव । बौधायनप्रायश्चित्तसूत्रेऽन्येऽपि निषेधाः—न दद्यान्न जुहुयान्न पचेन्न जपेदित्यादित एव विभजेदित्याहुर्नापोऽवगाहेत न वासो मज्जयेन्न वासः प्रक्षालयेदिति । नापोऽवगाहेतेत्यनेन वारुणस्नानं व्यावर्त्यते न तु आग्नेयादिस्नानानि व्यावर्त्यन्ते । ब्रह्मयज्ञोऽपि न भवति । यदृचोऽधीते पयआहुतिभिरेव तद्देवांस्तर्पयतीत्याद्यर्थवादेनाध्ययनरूपत्वेऽपि आहुतिरूपत्वप्रतिपादनात्, यज्ञशब्दाच्च । धारणाध्ययनमपि न हेमाद्रौ स्मृत्यन्तरे यज्ञे चानूबन्ध्यान्तं दीक्षितस्यर्त्विजां चेति अनध्यायोक्तेः । औपासनहोमस्थालीपाकपार्वणश्राद्धाष्टकाश्रवणाकर्मप्रत्यवरोहणादीनां नित्यानां नैमित्तिकानां मासिकादीनां चौलोपनयनादीनां संस्काराणां च निवृत्तिः । न गर्भिणीं दीक्षेतेतिनिषेधादेव पुंसवनसीमन्तादीनां जातेष्टेश्च निवृत्तिः सिद्धैव । यत्तु बौधायनप्रायश्चित्तसूत्रे—अथ सूतिकायां दशाहे पर्यवेते यथाम्नातᳪ शौचं कृत्वा पत्नीं कर्मसु योजयेत्तत्कर्म पुत्रो ब्रह्मचारी वा कुर्यात्तन्मन्त्रान्यजमानो जपेदिति, तत्कर्मणि सूतिकात्वे द्रष्टव्यम् । एतस्य संवत्सरसाध्यसत्रे संभवो ज्ञेयः । न कांचनाऽऽहुतिं जुहोत्यन्यत्र क्रतुसंयुक्ताभ्य इत्यनेनाग्निहो-

ग्रहोमदर्शपूर्णमासतद्विकारपशुपिण्डपितृयज्ञाग्रयणानामभ्यासपक्षे चातुर्मास्यानां च निषेधः। एवं क्षामवतीहिरण्यनाशेष्ट्यादीनां चापि। यद्यपि दानं निषिद्धं तथाऽपि वस्त्रालंकरणानुलेपनानि देयान्येव। रामायणादौ दर्शनात्। कन्यादानमपि भवतीति स्वग्रे वक्ष्यते। पाकदानहोमादिनिषेधोऽयमवभृथपर्यन्तं, संध्योपास्तिस्तोत्रपाठादि तु भवत्येव। पाकदानहोमरूपत्वाभावात्। संवत्सरसाध्यसत्रे सूतिकायां सत्यां पुंसवनादयः संस्कारा उत्कृष्यैव कर्तव्याः। होमो वैतेषु न कर्तव्यः। सर्वलोपापेक्षयैकदेशलोपस्योचितत्वात्। अत्र यद्युक्तं तद्ग्राह्यं सुधीभिः। गर्भिणीपत्युरग्न्याधानादिनिषेधस्तु षण्मासोत्तरमेव। तथा च दक्षो गर्भिणीपतिधर्मान्प्रकृत्य—

मासषट्के व्यतीते तु न कुर्यान्मौञ्जिबन्धनम्।
अग्न्याधानं गयाश्राद्धं वपनं च विवर्जयेत्॥ इति।

अग्न्याधानग्रहणं नित्यानां सोमादिकर्मणामुपलक्षणम्। तथा च गालवः—

प्रव्यक्तगर्भापतिरब्धियानं मृतस्य वाहं क्षुरकर्म सङ्गम्।
तथैव यत्नेन गयादितीर्थे यागादिकं वास्तुविधिं न कुर्यात्॥

इति स्पष्टमेव यागनिषेधमाह। यागोऽत्र सोमादिरेव। इदमपि व्यक्तमाह स्मृत्यन्तरं गर्भिणीपतिधर्मान्प्रकृत्य—

मासषट्के व्यतीते तु न कुर्याद्दनलाहितिम्।
यागदीक्षां तीर्थयात्रां गयाश्राद्धं च वर्जयेत्॥ इति।

मासषट्के व्यतीते न कुर्यादित्युक्त्या मासषट्कमध्ये करणे न दोष इति। अत्र केचित्—षण्मासोत्तरं योऽग्न्याधानादिनिषेधः स दोषातिशयार्थः। तेन तत्पूर्वमपि सति संभवे निषेधपरिपालनमस्त्येवेत्याहुः।

**यदहर्दीक्षितो रात्रिं जागर्ति।**

यस्मिन्नह्नि दीक्षितस्तस्मिन्नह्नि रात्रिं जागर्तीत्यर्थः।

**न व्रतं भवति।**

पयःपानरूपम्। अन्यत्स्पष्टम्।

**नक्षत्रं दृष्ट्वा तूष्णीमेव वाचं विसृजते।**

नक्षत्रमित्येकवचनं श्रुतौ बहुवचनश्रवणेऽप्येकमपि दृष्टं चेत्तेनैव श्रुत्यर्थः सिद्धो भवतीति बोधयितुम्। व्रतं कृणुतेत्यस्य परप्रेषणार्थत्वं वाग्विसर्गार्थत्वं चेत्युभयार्थत्वेऽपि तत्र परप्रेषणार्थत्वस्यास्मिन्नहन्यभावेऽपि वाग्विसर्गस्य सत्त्वात्तदर्थं व्रतं कृणुतेति प्राप्तेः शङ्कायां तद्वारणार्थं तूष्णीमिति। कालार्थ एव संयोगो नाङ्गाङ्गिभाव इति भावः। तथा च जैमिनिः—तथोत्थानविसर्जने इति। एवकारो बौधायनोक्तव्याहृ·

तिनिरासार्थः। बौधायनोक्तोऽधोदितेषु नक्षत्रेषु यजमानः कृष्णाजिनमासज्य पूर्वया द्वारोपनिष्क्रम्याग्रेण शालां तिष्ठन्भूर्भुवः सुवर्व्रतं कृणुतेति त्रिर्वाचं विसृजत इति विशेषोऽन्योऽत्र नियमेन स्वीकार्य इत्येवकारेण गम्यते। तूष्णीमित्यनेनोपस्थितस्य व्रतं कृणुतेत्यस्यैव निवृत्तिः। प्रथमदिने न व्रतं भवति तूष्णीमेव वाचं विसृजते व्याहृतिभिर्वेति वाधूलादिप्रोक्तपाक्षिकव्याहृतिनिवृत्तिरेवकारेण। कृष्णाजिनेनोर्ध्वग्रीवेण शरीरं प्रावृत्य तदुक्तोऽयमपि विधिः स्वीकार्यः।

यत्रैनं व्रतप्रदः संप्रेष्यति तस्मिन्काले वाचं यच्छति॥ ७॥

यत्र यस्मिन्काले दीक्षित वाचं यच्छेति दीक्षितं संप्रेष्यति तस्मिन्नेव काले पत्न्यपि वाचं यच्छति। अत्र तस्मिन्निस्यस्याव्यवहितसमीपकाल इत्यर्थः। तथा च दीक्षित वाचं यच्छेत्येतत्प्रैषाव्यवहितोत्तरकालिकपत्निशब्दश्रवणमात्रे जाते वाचं यच्छति न तु पत्नि वाचं यच्छेतिश्रवणानन्तरं वाचं यच्छतीतिज्ञापनार्थम्। एतेनेदमपि अवगतं भवति यजमानस्य स्वप्रैषसमकालमेव वाग्यमनमिति। तस्मिन्काल इत्यत्र कालवचनं देशव्यावृत्त्यर्थं, तेन यस्मिन्देशे प्राग्वंशे प्रैषो दत्तस्तस्मिन्देश एव वाग्यमनमिति नियमो व्यावृत्तो भवति। नन्विदं सूत्रमेव व्यर्थं प्रैषसंबन्धिकालस्यापि पुरोदयमधिवृक्षसूर्ये च व्रतप्रदः संप्रेष्यतीत्यनेनैव प्राप्तत्वादिति चेत्सत्यम्। कालान्तरमप्यत्रास्तीतिज्ञापनार्थत्वेन सार्थकत्वात्। तच्च कालान्तरं बौधायनसूत्रे—अथ पुरा नक्षत्राणामन्तर्धानात्संप्रेष्य वाचंयमयोर्व्रते दोहयत इति। अथोपसमिन्धनवेलायामुत्तरेणाऽऽहवनीयं तिष्ठन्संप्रैषमाहाग्नीज्ज्योतिष्मतः कुरुत दीक्षित वाचं यच्छ पत्नि वाचं यच्छेति संप्रेष्य वाचंयमयोर्व्रते दोहयत इति च। उपव्युषमिति सूत्रान्तरे।

याः पशूनामृषभे वाचस्ताः सूर्यो अग्रे शुक्रो अग्रे
ताः प्रहिण्यो यथाभागं वो अत्र शिवा नस्ताः
पुनरायन्तु वाच इत्युद्यन्तमादित्यमुपतिष्ठते।

नेक्षेतोद्यन्तमादित्यमित्यस्य निषेधशास्त्रस्यात्र बाधः। आदित्यग्रहणं रश्म्यरुणव्यावृत्त्यर्थम्।

उदित आदित्ये व्रतं कृणुतेति संप्रेष्यति।

संप्रैषान्ते वाग्विसर्गः।

एवमस्तमिते।

एवमित्यनेन व्रतं कृणुतेति प्रैषोऽतिदिश्यते वाग्विसर्गश्च।

मध्यंदिने मध्यरात्रे च व्रतयति।

त्रेधा विभक्तस्य पञ्चधा विभक्तस्य वा दिवसस्य मध्यमो भागो मध्यंदिनः। रात्रेस्त्रेधा विभक्तायाः पञ्चधा विभक्ताया वा मध्यमो भागो मध्यरात्रम्। सूर्यपरिवर्त-

नकाले यस्य कस्यचिदप्यशनस्य स्मृतौ निषेधात्तद्व्यतिरिक्तकालव्रतम्। तत्र दिवसपूर्वार्धान्त्यघटिकाद्वयात्प्राक्प्रथमभागोत्तरो यः कालः स व्रतकाल इति भागत्रयपक्षे। भागपञ्चकपक्षे रात्रिपूर्वार्धान्त्यघटिकाद्वयात्प्राग्भागद्वयोत्तरो यः कालः स व्रतकाल इति। एवं रात्रावपीति निष्कृष्टोऽर्थः। अत्राऽऽपस्तम्बः पक्षान्तरमाह—अतिनीय वा मानुषं कालं सायं दुग्धमपररात्रे प्रातर्दुग्धमपराह्ण इत्येक इति। यस्मिन्काले दिवा नक्तं च प्रायशो मनुष्या भुञ्जते स मध्यंदिनादिर्मानुषः कालस्तस्मिन्नतीते वा व्रतयति। सायंदुग्धं रात्रिव्रतं प्रातर्दुग्धमहर्व्रतम्।

**नैनमदीक्षिता व्रतयन्तं पश्यन्ति।**

परिश्रित्य व्रतयतीति बौधायनः।

**पयो ब्राह्मणस्य यवागू राजन्यस्याऽऽमिक्षा वैश्यस्य।**

पयः क्षीरं, यवागूः शिथिलौदनः। आमिक्षा प्रसिद्धा। यथावर्णमेतानि व्रतान्यनुसंधातव्यानीत्यर्थः। नचेदं व्रतं पुरुषार्थमेव दृष्टार्थत्वादिति वाच्यम्। प्राशनियमस्य दृष्टासंभवेन क्रत्वपूर्वार्थताया एव युक्तत्वात्। तथा च चतुर्थाध्याये तृतीयपादे जैमिनिः— द्रव्याणां तु क्रियार्थानां संस्कारः क्रतुधर्मः स्यादिति। सूत्रार्थस्तु क्रियाया अर्थः क्रियार्थः। अर्थशब्देनार्थ्यत इत्यर्थमिति व्युत्पत्त्या फलमुच्यते। क्रियार्थ एवार्थो येषां पुरुषाणां ते क्रियार्थास्तेषां क्रियार्थानाम्। तेषां कथंभूतानां द्रव्याणां द्रव्यवताम्। द्रव्याणामित्यत्रार्शआदित्वान्मत्वर्थीयोऽच्प्रत्ययः। तेषां द्रव्यवत्त्वं तु पयो ब्राह्मणस्य व्रतं यवागू राजन्यस्याऽऽमिक्षा वैश्यस्येतिश्रुतिसिद्धम्। तेषां संस्कारः पयआदिव्रतरूपः संस्कार इति क्रतुधर्मः स्यादिति। एतच्छेषभूतं द्वितीयं सूत्रं पृथक्त्वाद्व्यवतिष्ठेरन्निति। पयो ब्राह्मणस्य व्रतं यवागू राजन्यस्याऽऽमिक्षा वैश्यस्येतिविधिबोधितपुरुषपृथक्त्वाद्व्यवतिष्ठेरन्व्यवस्थिततां गच्छेरन्निति। अत्र राजन्यशब्दः सर्वक्षत्रियपरो न त्वभिषिक्तक्षत्रियमात्रपरः। अवेष्ट्यधिकरणे तथादर्शनात्, ब्राह्मणवैश्ययोर्मध्ये पाठाच्च। इममर्थं द्वितीयाध्याये तृतीयपादे—अवेष्टौ यज्ञसंयोगात्क्रतुप्रधानमुच्यत इति सूत्रेण जैमिनिरप्याह। राजसूये राजकर्तृक आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभो दक्षिणा वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा मैत्रावरुणीमामिक्षां वशा दक्षिणा बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणेत्यवेष्टिनामेष्टिर्विहिता। पिशङ्गी पिशङ्गवर्णा। पष्ठौही बालगर्भिणी गौः। चतुर्वर्षेति केचित्। वशा वन्ध्या गौः। शितिपृष्ठः श्यामपृष्ठो गौः। सर्वत्र निर्वपतीत्यनुषङ्गः। यद्यपि(?)दिशामवेष्ट्यो भवन्तीत्यर्थवादादवेष्टिसंज्ञैतस्या इष्टेः। अर्थवादे बहुवचनं प्रत्येकयागाभिप्रायम्। अत्र तु अवेष्टिसंज्ञकहविःसमुदायवत्कर्मपरमित्यविरोधः। जात्यभिप्रायं वैकवचनम्। एतस्यामवेष्टौ यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाऽऽहुतिमाहुतिं हुत्वा

तमभिघारयेद्यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवमिति तत्संबन्धिब्राह्मणादिवाक्ये ब्राह्मणादिश्रवणं क्रतुर्योगान्तरं तत्प्रधानमुच्यते। कुतः—यज्ञसंयोगात्, क्षत्रियस्यैवेति सूत्रार्थः। विस्तरस्त्वाकरतो ज्ञेयः। पयआदीन्येतानि द्रव्याणि द्रव्यान्तरसद्भावेऽपि नित्यान्येव। तथा च षष्ठाध्यायेऽष्टमे पादे जैमिनिः—तथा भक्षप्रैषाच्छादनसंज्ञप्तहोमद्वेषमिति। पयो व्रतं ब्राह्मणस्येति भक्षोदाहरणं, द्रव्यान्तरसद्भावेऽपि पयआदीन्येव व्रतेषु। अग्नीदग्नीन्विहरेत्यादिः प्रैषोऽन्यतोऽवगमेऽपि प्रैषार्थस्य। अहतं वासः परिधत्त इति वासोन्तरसत्त्वेऽपि। यत्पशुर्मायुमकृतेति संज्ञप्तहोमो मायुकरणाभावेऽपि। योऽस्मान्द्वेष्टि यं च वयं द्विष्म इति मन्त्रो द्वेष्यासद्भावेऽपीत्युदाहरणानि द्रष्टव्यानि। निमित्ताश्रवणात्सत्यपि चान्यस्मिन्नियमादृष्टसिद्धेरनन्योपायत्वान्नियतमिति। सूत्रे तथाशब्दो नियतं वाऽर्थवत्त्वात्स्यादितिपूर्वसूत्रगतनियतशब्दानुवृत्त्यर्थः। अन्यत्स्पष्टम्। आमिक्षा लौकिकेन दध्ना कर्तव्या कठिनत्वात्। पाकयज्ञस्य रूपमिति व्रतविषयकामिक्षाविषये पाकयज्ञसंस्तवादेवाऽऽमिक्षाधर्माणामप्राप्तिः।

सर्ववर्णसाधारणं द्रव्यमाह—

एकदुग्धं यवागूं वैकदुग्धे।

एकस्या व्रतदुहो दुग्धमेकदुग्धं तद्व्रतयेत्। एकस्या व्रतदुहो दुग्धे यवागूं श्रपयित्वा तां वा व्रतयेत्। शाखान्तरीयोऽयं विधिः। स्पष्टमेतमाहाऽऽपस्तम्बः—यवागूमेकदुग्धं वा व्रतयेदित्यवर्णसंयोगेनैक उपदिशन्ति तद्धैतदेके पयो व्रतयन्ति तदु यथा न कुर्यात्पयस्येव यवागूं श्रपयित्वा व्रतयेदिति। अत्रैकदुग्धग्रहणात्केवलपयोव्रते बहु दुग्धमपीष्यते यदि बह्वयस्तासामाशिरं कर्तव्यमिति। अत्रान्यमपि विशेषमाहाऽऽपस्तम्बः—यदि व्रतधुगल्पं दुहीतान्यां दुह्याद्यद्यन्या न स्यादद्भिः संसृज्य श्रपयेद्यदि पयो न स्यादप्स्वेव यवागूं श्रपयित्वा व्रतयेदप्यन्ततः पिप्पलानि नत्वेव न व्रतयेदग्निहोत्रस्याविच्छेदायेतीति। पिप्पलानि फलानि व्रीहयो वा। सर्वाभावे फलान्यपि व्रतयेत्, न तु लोपयेत्, व्रतस्याग्निहोत्रसंस्तवादिति भावः। इतिः श्रुतिसूचनार्थः। तथाऽग्निहोत्रस्याविच्छेदायेति विज्ञायत इति भारद्वाजः।

यदि दधीयादेतदस्मै दधि कुर्युः।

दधीयाद्दधीच्छेत्, एतदेवाऽऽतञ्च्यास्मै यजमानाय यजमानार्थं दधि कुर्युः। बहुवचनं परिकर्म्यृत्विजामन्यतमप्राप्त्यर्थम्।

यद्यश्नीयाद्धाना अस्मा अन्वावपेयुः सक्तून्वाऽस्मा अन्वावपेयुर्घृतं वाऽस्मा अन्वावपेयुः।

यदि तीक्ष्णबलोऽन्नमदनीयमिच्छेत्तदा तस्यानुपदासार्थं व्रतकाले व्रत एव धानाद्यन्यतमद्द्रव्यं निवपेयुः प्रक्षिपेयुरित्यर्थः। एते समविकल्पा इतिप्रदर्शनार्थं वाशब्दत्रयो-

पादानम् । अनुयावता प्राणसंरक्षणं भवति तावदेवानुलक्षीकृत्य धानादिकस्यान्वावापो न त्वधिकस्येतिद्योतनाय । धानाः सक्तून्घृतं वाऽस्मा अन्वावपेयुरित्येतावत्येव सूत्रे लाघवात्कर्तव्येऽस्मा अन्वावपेयुरित्यस्य पृथक्पृथग्वचनं यदादौ स्वीकृतं द्रव्यं तदेवाऽऽन्तं ग्राह्यं, तदभावे तत्प्रतिनिधिरेव ग्राह्यो न तु विहितं द्रव्यान्तरं व्रीहियववदितिज्ञापनार्थम् । धाना भृष्टयवाः । सक्तवो भृष्टयवपिष्टानि । अत्यन्ताशक्तावोदनोऽपि । तथा च ब्राह्मणम्—यदि मन्येतोपदस्यामीत्योदनं धानाः सक्तून्घृतमित्यनुव्रतयेदात्मनोऽनुपदासायेति ।

अपि वाऽग्निहोत्रहविषामेकं व्रतयेत् ।

अग्निहोत्रहविषां मध्य एकं द्रव्यं व्रतयेत् । उपदस्यन्नोदनाद्यपि व्रतयेत् । एतन्मध्य ओदनोऽपि संगृहीतो भवतीति । न मांसमश्नातीतिनिषेधान्मांसमेतेषु वर्ज्यम् । स्पष्टमाहाऽऽपस्तम्बः—अप्यग्निहोत्रं हविषामेकं व्रतयेन्मांसवर्जमिति । एकग्रहणं मिश्रणप्रतिषेधार्थम् ।

सार्ववर्णिका एते व्रतकल्पाः ।

सर्ववर्णसाधारणा एते व्रतकल्पा भवन्तीत्यर्थः ।

सर्वेषामुपसत्सु स्तनकल्पाः ।

पयो ब्राह्मणस्य यवागू राजन्यस्याऽऽमिक्षा वैश्यस्येत्यादिविधिः स दीक्षार्थः । उपसत्सु तु सर्ववर्णानामविशेषेण पयोव्रतस्यैव चतुःस्तनादिकल्पा आम्नातत्वात् । ते चोपसत्स्वेव दर्शयिष्यन्ते । यदा पुनर्व्रत्यमानं पयआदि न जीर्यतीत्याशङ्क्यते तदाऽपि किमवश्यं व्रतयितव्यमुत नेति संशये सिद्धान्तमाह षष्ठाध्यायेऽष्टमे पादे जैमिनिः—अनर्थकं त्वनित्यं स्यादिति । तदा हि यजमानस्य रोगोत्पत्त्या क्रतुविरोध एव संभाव्येत तेन प्रधानविरोधान्न व्रतयितव्यमिति । सूत्रार्थस्तु यत्तु प्रधानलोपप्रसङ्गादनर्थकं व्रतं तदनित्यं स्यादिति ।

उरुव्यचा असि जनधाः स्वभक्षो मा
पाहीति कंसं व्रतप्रदानमनुमन्त्रयते ।

कंसग्रहणं सूत्रान्तरोक्तचमसनिवृत्त्यर्थम् । प्रदीयतेऽनेनेति प्रदानं व्रतस्य प्रदानं व्रतप्रदानम् ।

दैवीं धियं मनामह इति हस्ताववनेनिक्ते ।

अवनेजनं प्रक्षालनम् । असद्वश इति मन्त्रान्तः ।

ये देवा मनोजाता मनोयुज इति व्रतयति ।

नमस्तेभ्यः स्वाहेति मन्त्रान्तः । अत्र बौधायनः—परिश्रित्य व्रतयतीति, यावन्मात्रं

व्रतयित्वा तूष्णीं भूयो व्रतयतीति च। एतस्मिन्काले प्रतिप्रस्थाता पत्न्यै पात्रे निषिच्य व्रतं प्रयच्छति तत्सा परिश्रित्य व्रतयति तूष्णीं निर्णिज्य पात्रे प्रयच्छत इति च। ओदनानुव्रतपक्षे व्रतस्य संस्कारत्वेन तदर्थस्यौदनस्य परिषेकानुमन्त्रणे भवत एव संस्कारत्वात्पाकदानहोमरूपत्वाभावाच्च भवत एवम(मा)पोशा(शा)नमपि भवत्येव।

शिवाः पीता भवथ यज्ञियासो यूयमापोऽस्माकं
योनावुदरे सुशेवाः। इरावतीः पुरुरूपा
अनागसः शिवा नो भवथ पीतय इत्युदकं
पिबति यदाऽ*पीतं भवति यदा पिपासति।

यदोदकं पी(वी)तं विशेषेणेतं प्राप्तं केनचिद्भक्त्याऽऽहृत्य दत्तं तदप्रत्याख्येयमिति कृत्वा स्वल्पमपि तावदनेन मन्त्रेण पेयमेव।

क्षीरं जलं च ताम्बूलमप्रत्याख्येयमुच्यते।
प्रत्याख्यानकृदेतेषां पापीयाञ्जायते द्विजः॥

इति स्मृतौ प्रत्याख्याने दोषश्रवणात्। यदाऽपीतं भवतीत्येव पाठ इत्याग्रहस्तदाऽपीतं संमुखमितं प्राप्तं केनचिदानीतं पानार्थं भवतीत्यर्थो ज्ञेयः। दुग्धपानाव्यवहितोत्तरं जलपानस्य वैद्यकशास्त्रे निषिद्धत्वात्पिपासायां सत्यामपि कंचित्कालं विरम्यैव जलं पेयमिति ज्ञेयम्। व्रतकालिकोदकपान एवैष मन्त्र इति न किंतु सर्वेष्वपि पानेषु इति। शिवाः पीता भवथ यूयमापोऽस्माकं योनावुदरे सुशेवाः। इरावतीरनमीवा अनागसः शिवा नो भवथ जीवस इति व्रतयित्वा नाभिदेशमभिमृशत्यपश्च पीत्वा जपतीत्यापस्तम्बः। पत्नी तूष्णीमेव व्रतयति। तथा चाऽऽपस्तम्बः--तूष्णीं पत्नी स्व आयतने व्रतयतीति। तत्सा परिश्रित्य तूष्णीं व्रतयतीति बौधायनोऽपि। हस्तावनेजनमुदकपानमपि तत्संबन्धात्तूष्णीमेव।

दक्षिणेनाऽऽहवनीयं प्राङ् शेते।

प्राक्शिराः शेते।

दक्षिणेन पार्श्वेन।

शेत इत्यनुषज्यते।

नोत्तानः शयीत।

स्पष्टम्। न न्यङ्ङित्यप्यापस्तम्बः।

नाग्नेः पराङ्पर्यावर्तेत।

पराङ् अग्नेः सकाशात्पराङ्मुखतया पर्यावर्तनं न कुर्यात्। परिशब्दोऽत्र सामीप्यार्थे।

---

* अत्र प्रथमव्याख्यानुसारी यदा वीतमिति पाठो ज्ञेयः।

अग्ने त्वꣳ सुजागृहीति स्वप्स्यन्नाहवनीयमुपतिष्ठते ।

स्वप्स्यन्स्वापं करिष्यन् । यत्र जागरणं नोक्तं तत्रायं नियमः । याज्ञिकमते पुनः पुनः प्रतिबुध्य स्वाप आहवनीयोपस्थानस्याऽऽवृत्तिः । मीमांसकमते सर्वां रात्रिं स्वापमनुसंधायोपस्थानमिति कृत्वा नाऽऽवृत्तिः । एतत्करणीभूतमन्त्रविषयकत्वस्य तैरुक्तत्वान्मन्त्रमात्रानिवृत्तिपरमेवैतन्नतु तदङ्गपरमपीति यद्युच्यते तदा तन्मतेऽप्युपस्थानस्याऽऽवृत्तिरस्त्येवेति द्रष्टव्यम् ।

विश्वे देवा अभि मामाऽववृत्रन्नित्युपपर्यावर्तते यद्यपपर्यावर्तेत ।

अपपर्यावर्तनमग्नेः पृष्ठतः करणं, यदीत्यनेन समन्त्रकमुपपर्यावर्तनं कर्तव्यमिदमेव प्रायश्चित्तमिति बोध्यते । उपपर्यावर्तनमग्न्यभिमुखतया भवनम् । राधसेति मन्त्रान्तः ।

पुनर्मनः पुनरायुर्म आगात्पुनश्चक्षुः पुनः श्रोत्रं म आगात्पुनः प्राणः पुनराकूतं म आगात्पुनश्चित्तं पुनराधीतं म आगाद्वैश्वानरो मेऽदब्धस्तनूपा अन्तस्तिष्ठतु दुरितानि विश्वा । वैश्वानरो विश्वभृद्विश्वशंभूरवबाधतां दुरितानि विश्वा स नो दिवा स रिषः पातु नक्तं त्वमग्ने व्रतपा असीति प्रतिबुध्य जपति ।

यद्यु(द्य)पपर्यावर्तेतेत्यस्यात्रान्वयो वा न पूर्वत्र । नक्तमित्येतदनन्तरमिति जपतीति अध्याहार्यम् । अस्मिन्पक्षे विश्वे देवा अभि मामाऽववृत्रन्नित्यन्तं समन्त्रकमुपपर्यावर्तनं नित्यमेव । नच त्वमग्ने व्रतपा असीति प्रबुध्य जपतीत्यस्याप्यत्रैवान्वयोऽस्त्विति वाच्यम् । समुच्चयोपकाराभावात् । पूर्वत्रान्वये तु लोप एव । प्रतिबुध्य जपतीतिवचनं प्रतिबोधाङ्गभूतो जप इति बोधनार्थं, तेन जागरणदिवसे स्वापाभावान्नायं रात्रौ जप इति सिद्धं भवति । प्रतीत्युपसर्गोऽत्यन्तजाग्रद्दशायामेवायं जप इति सूचयितुम् । ईड्य इति मन्त्रान्तः ।

त्वमग्ने व्रतपा असीत्यनुब्रूयाद्यद्यदीक्षितवादं वदेत् ।

पुनस्त्वमग्ने व्रतपा असीतिवचनं पुनर्मन इत्यस्य वैष्णव्या ऋचश्च परिसंख्यानार्थम् । अनुब्रूयादितिवचनाज्जपत्वाभावः । तेन चातुःस्वर्यानियमोऽत्र सिद्धो भवति । म्लेच्छाभिभाषणविचक्षणचनसितादिवर्जनं चादीक्षितवादः ।

मुष्टी वाचं च विसर्जयित्वा ।

त्वमग्ने व्रतपा असीत्यनुब्रूयादिति पूर्वेणान्वयः ।

दीक्षणीयाप्रभृतीयं वृत्तिः ।

यदि प्रमत्तो व्याहरेदित्यारभ्य मुष्टी वाचं च विसर्जयित्वेत्येतदन्ता धर्मा वृत्तिशब्देनोच्यन्ते । इयमेतदन्ता ।

---

१ क. ङ. छ. झ. ञ. ढ. यद्युप° । २ क. छ. ञ. ढ. °राधी° ।

दण्डान्न च्छिद्यते न प्रतिमुच्य कृष्णाजिनं चंक्रम्यते कृष्णविषाणया कण्डूयतेऽपिगृह्य स्मयत[1]
इत्युपयोगप्रभृतीन्येतानि व्रतानि भवन्ति ॥ ८ ॥
इति हिरण्यकेशिसूत्रे दशमप्रश्ने द्वितीयः पटलः ।

---

दण्डदानेन दण्डस्य कृष्णाजिनारोहणेन कृष्णाजिनस्य कृष्णविषाणायाः प्रदानेन वस्त्रप्रावरणेन वासउपयोगः । एतत्प्रभृतीनि एतदुत्तराणि । दण्डान्न च्छिद्यते कृष्णाजिनं प्रतिमुच्य न चंक्रम्यत इत्येतद्द्वयं निषेधरूपम् । उत्तरं द्वयं विधिरूपम् । एतानि व्रतानि तस्य तस्योपयोगमारभ्य तत्तद्विसर्गपर्यन्तं भवन्ति । दण्डान्न च्छिद्यते दण्डान्न वियुज्यते । कृष्णाजिनं विसृज्य पादविक्षेपणमपि न कुर्यात् । कण्डूयनं कृष्णविषाणयैव कुर्यान्न नखादिभिः । दैक्षवाससा मुखमाच्छाद्यैव हास्यं कुर्यादित्यर्थः ।

इत्योकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्नियुक्तवाजपेययाजिसर्वतोमुखयाजिद्विसाहस्राग्नियुक्तपौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथदीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसूत्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंतापशामिकायां ज्योत्स्नाख्यायां वृत्तौ दशमप्रश्नस्य द्वितीयः पटलः ॥ २ ॥

---

अथ दशमप्रश्ने तृतीयः पटलः ।

---

पूषा सन्येति सनीहारान्सꣳशास्ति ।

सनिं याच्ञालब्धं धनं तद्यस्माद्यस्माद्याचितं द्रव्यं ततस्ततो ये हरन्ति ते सनीहारास्तान्संशास्ति प्रेरयति अमुं चामुं च गच्छतेति । अनेन ज्ञायते पूर्वमेव क्रत्वर्थं द्रव्यं याचितं भवतीति । दीर्घश्छान्दसः । सनीहारजातिविषयविशेषप्रदर्शकं द्वैधसूत्रं पशुपालप्रेष्याद्युपकल्पनावसर उक्तमेव ।

द्वादशाहं भिक्षाचर्यं चरत्यपरिमिते दीक्षाकल्पे परिमिते याथाकामी ।

यदि असंभृतद्रव्यस्यायं निश्चयः क्रतुदीक्षामध्ये याच्ञयाऽपि द्रव्यप्राप्तिर्भविष्यत्येवेति तदाऽप्ययमेव प्रकारः । अत्र बौधायनः—अथ सनीहारान्प्रहिणोति स यं

---

१ क. च. छ. ठ. °नि भ° ।

मन्यते न मा प्रत्याख्यास्यति तं प्रति प्रथममभिप्रहिणोतीति । तत्र प्रकारद्वयम्— अपरिमिते दीक्षाकल्पे द्वादशाहं भिक्षाचर्यचरणम्, एकद्व्यादिदीक्षाकल्पे यथेच्छं कालानुरोधेन । एकदीक्षादिकल्पेऽपि भिक्षाचर्यचरणं कर्तव्यमेव । इदं भिक्षाचर्यचरणं दक्षिणाद्यर्थम् । तथा च भरद्वाजः—द्वादशाहं दक्षिणार्थं भिक्षेतेति । द्रव्यसत्त्वेऽपि याच्ञा नित्यैव । तथा च षष्ठाध्यायऽष्टमे पादे जैमिनिः—याच्ञाक्रयणमविद्यमाने लोकवत् । नियतं वाऽर्थवत्वात्स्यादिति सूत्राभ्याम् । अधिकरणार्थस्तु सोमक्रये प्रदर्शित एव ।

याचनीयानि द्रव्याण्याह—

**हिरण्यं वासो गामश्वं छागं मेषं च यावत्परिमिता गाव एकैकमितरेषां जातीनाम् ।**

यावद्यावत्पर्यन्तं परिमिताः पर्याप्ताः संख्यापर्याप्तास्तावत्यो भवन्तीत्यर्थः । इतरेषां हिरण्यवासोश्वच्छागमेषाणाम् । इतरेषामिति जातिविशेषणमन्येऽपि पदार्थाः सन्ति तेषां चापि प्रतिग्रहणमितिज्ञापनार्थम् । ते च हिरण्यं वासोऽविरजा च नियुक्तान्येतानि भवन्त्यनो रथोऽधीवासोऽश्वः पुरुषो हस्ती वाऽनियुक्तानीति वक्ष्यमाणा अव्यजानोरथोधीवासपुरुषहस्त्यात्मका वक्ष्यमाणा अत्र गृह्यन्ते ।

**तानि प्रतिगृह्णाति चन्द्रमसीत्येतैर्यथारूपम् ।**

चन्द्रमसीत्यादिभिः षड्भिः षण्णां प्रतिग्रहणम् । सर्वेषां हिरण्यादीनां षण्णामुपस्थितौ सत्यामेवैतेन मन्त्रेण तदन्तर्गततत्तल्लिङ्गकावयवोच्चारणकाले तत्तद्द्रव्यं प्रतिगृह्णीयात् । एतेषां मध्ये यस्य कस्यचिदनुपस्थितौ तूष्णीमेव, सर्वद्रव्यप्रतिग्रहकरणस्यासंभवादित्याशङ्कां निराकर्तुमेतैरितिवचनं, तेनैते मन्त्रा भिन्ना एव । यस्य द्रव्यस्योपस्थितिस्तत्प्रतिग्रहणकमन्त्रमात्रेण तावन्मात्रस्य प्रतिग्रहः । अवशिष्टानां लोप इति । अथवैतैरिति सनीहारपरामर्शकमाहृतानीति अध्याहृत्य तेनान्वयः । तानि हिरण्यादीनि । एतैर्मन्त्रैः । यथारूपं यथालिङ्गम् । चन्द्रमसीत्येतेन हिरण्यं, हेम चन्द्रं रुक्ममिति वैदिकनिघण्टौ चन्द्रशब्दस्य हिरण्यनामसु पाठात् । चन्द्रꣳ हिरण्यमिति दर्शनाच्चन्द्रशब्दो हिरण्यपरोऽत्र । वय्रमसीति वस्त्रम् । उस्राऽसीत्युस्राम् । उस्रशब्दो गोवाची । स्त्रीलिङ्गनिर्देशात्स्त्रियामेव गवि मन्त्रः । पुंगोस्तु तूष्णीमेव प्रतिग्रहः । प्रकृत ऊहाभावात् । अद्य सुत्यामित्यालखन इति द्वादशाहे प्रकृतावूहदर्शनादुस्रोऽसीत्यूहो वा । एवमश्वच्छागमेषस्त्र्युपस्थितावूहोऽनूहो वेति पक्षद्वयं ज्ञेयम् । मम भोगाय भवेत्यन्ता मन्त्राः ।

**देवः सवितेति सर्वत्रानुषजति ।**

सर्वत्र सर्वेषु मन्त्रेष्वित्यर्थः । आयुषेति अनुषङ्गमन्त्रान्तः । इतरेषां द्रव्याणां मन्त्रानुपदेशात्तूष्णीमेव प्रतिग्रहः । अथ यद्ब्राह्मणेनानादिष्टं भवति प्राजापत्यमसि मम

भोगाय भवेत्येवमेतत्प्रतिगृह्णातीति तु बौधायनः । देवः सवितेत्यस्य प्राजापत्यमसि मम भोगाय भवेत्यस्मिन्मन्त्रेऽनुषङ्गे विकल्पः ।

वायवे त्वेति तासां या नश्येत्तामनुदिशेत् ।

तासां प्रतिग्रहलब्धानां मध्ये या गौर्नश्येत्तामनुदिशेत् । नाशो द्विविधः–अपहारादिकरणकदृष्टचगोचरत्वरूपो मरणकरणकः सर्वथा स्वानुपयोगित्वरूपश्चेति । उभयमप्यत्र गृह्यते । स्पष्टमाह बौधायनः—ताः समुदायीकृत्य रक्षन्ति तासां या नश्यति या वा म्रियते वायवे त्वेति तामनुदिशतीति । मन्त्रसमवेतदेवतार्थतया संकल्पनमनुदेशनम् ।

अप्सु मज्जनेन मृतायां मन्त्रविशेषमाह—

*वरुणाय त्वेत्यप्सु मग्नाम् ।

मग्नां सतीं मृतामित्यर्थः । मज्जनेनोदकप्रयुक्तं मरणं लक्ष्यते । ननु अप्सु मृतामित्येवं वचनं परित्यज्याप्सु मग्नामित्येवंवचनमप्सु प्रवहन्त्याः केनचिदविज्ञातकारणेऽप्ययं मन्त्रः स्यात्स मा भूत्किं तु मृत्यवे त्वेत्ययमेव मन्त्रो भवेदित्येतादृशार्थज्ञापनार्थम् । अनुदिशेदिति शेषः । याऽप्सु वा पाशे वा वरुणाय त्वेति तामिति बौधायनः । अनुदिशतीति सर्वत्रान्वयः ।

निर्ऋत्यै त्वेत्यवसन्नाम् ।

दौर्बल्यात्संचाराक्षमां संशीर्णां वा । या शिथिलसंधिरुत्थातुमपि न पारयते या सं वा शीर्यते गर्ते वा पतति निर्ऋत्यै त्वेति तामिति बौधायनः ।

रुद्राय त्वेति सर्पदष्टां मरुद्भ्यस्त्वेति ह्रादुनिहतामशनिहतां वेन्द्राय त्वेति मेष्कहतां यमाय त्वेति महादेवहतां मृत्यवे त्वेत्यविज्ञातेन मृत्युना ।

ह्रादुनिर्महाशब्दयुतः सधूलिको वातस्तेन हताम् । अशनिर्विद्युत् । वाशब्दश्चार्थेऽप्यर्थे वाऽनास्थायां वा । मेष्को हिंस्रः प्राणी व्याघ्रादिः । महादेवहतां ज्वरहताम् । अविज्ञातेन मृत्युनेत्यत्र लक्षणया मृत्युहेतुभूतः कश्चनाविज्ञातो रोगविशेषो ग्राह्यः । तथा चाऽऽपस्तम्बः—यमाय त्वेत्यविज्ञातेन यक्ष्मणा मृतामिति । अविज्ञातेन यक्ष्मणा मृताया मृत्यवे त्वेत्यनेनानुदेशनमस्मदाचार्यमते, यमाय त्वेत्यापस्तम्बमत इतीयान्भेदः ।

अनुदिष्टामधिगम्य यजमानो गोषु न चारयेत् ।

कृतेऽनुदेशे पुनर्यदि तां लभेत यजमानो गोषु तां न चारयेत्, तां देवतार्थमनुदिष्टां नाऽऽत्मार्थं गृह्णीयादित्यर्थः । यजमानग्रहणमन्येनाऽऽत्मार्थं गृहीतायां न दोषः ।

---

* सर्वपुस्तकेषु इदं सूत्रं न वर्तते ।

---

१ सर्वपुस्तकेषु °धः । वरुणाय त्वेत्यप्सु मग्नाम् । त्रा° ।

एतेनान्यस्मै दानमपि सूचितं भवति। तथा च बौधायनः—अथ येयं नष्टा तां यदि विन्देयुः कथं स्यादित्येषाऽनुदिष्टेव स्यादित्येतदेकं कर्मणोऽन्ते श्रेयांसं प्रतिग्रहीतारं लभेत दक्षिणाभिरेवैनां सह दद्यादित्येतदेकं वायव्ययैवैनया यजेतेत्येतदपरमिति। कर्मणोऽन्ते समाप्तौ श्रेयांसं श्रेष्ठं प्रतिग्रहीतारं लभेत तस्मा एनामनुदिष्टां दक्षिणाभिः सह दद्यादित्यर्थः। दक्षिणाभिरिति बहुवचनात्त्रिप्रभृतिविजातिव्यक्तयो देया इति गम्यते। कलौ गोपशोर्निषेधाद्वायव्यायागो न भवति। सनीहारप्रस्थापनान्ते दिवसपरिसमाप्तिः।

## यदि प्रयायात्पृथगरणीष्वग्नीन्समारोप्य रथेन प्रयाति।

अथ यदि अत्र प्रयायात्प्रयाणं कुर्यात्पृथगरणीष्वग्नीन्समारोप्य रथेन प्रयाति गच्छति। अत्र प्रयाणविधानेनेदं ज्ञायते गृहदीक्षापक्षोऽप्यस्तीति। तत्र समारोपणविधिः प्रागेव दर्शितः। ननु रथविधानार्थं रथेन प्रयातीत्येतावदेव वक्तव्यं पृथगरणीष्वग्नीन्समारोप्येति न वक्तव्यम्। पूर्वोक्तसमारोपणविधिनैव तत्सिद्धेः। तथा च पृथगरणीष्वग्नीन्समारोप्येतिवचनं व्यर्थमिति चेत्सत्यम्। वास्तोष्पतिहोमादिपरिसंख्यार्थत्वेन वैयर्थ्याभावात्। नित्यधार्यौ द्वौ सभ्यावसथ्यपक्षे चतुरो वाऽऽहवनीयस्य नित्यधार्यत्वपक्षे त्रीन्पञ्च वा पृथगरणी द्वये द्वये मन्त्रेण समारोप्य गृह्याग्नौ सति तमपि समारोप्य प्रयाति। गार्हपत्यस्य संस्कृते अरण्यावन्येषां लौकिक्यः। पृथगितिवचनात्प्रत्यग्नि द्वयोर्द्वयोररण्योराधानक्रमेण समारोपणम्। अरणीवचनमात्मसमारोपणव्यावृत्त्यर्थम्। समारोपणमरण्योः प्रतपनेनाग्नेर्निवेशनं, तच्च निवेशनं भावनामात्रेणाऽऽत्मन्यग्निग्रहणमिव। मुख्यस्यासंभवात्। प्रत्यग्नि मन्त्रावृत्तिः। संशब्दो यथाऽरण्यन्तर्गताग्न्यधिकरणीभूतावयवपर्यन्तं तपनं भवति तथाऽऽरोपणं कर्तव्यमिति सूचयति। समारोपविधानादेव प्रत्यक्षनयनं व्यावर्त्यते। रथवचनं शकटव्यावृत्त्यर्थम्। पत्न्याऽन्वारब्धः समारोपणं कुर्यात्। सीमातिक्रमणे नद्यतिक्रमणे चान्वारम्भ उभयोः। अवरोपेऽपि पत्न्यन्वारम्भः। समारोपणमारभ्याऽऽवरोपमन्वारम्भ इति मुख्यः कल्पः। अयं ते योनिरिति समारोपणमन्त्रः।

## रथेऽविद्यमाने रथाङ्गेन सह।

अविद्यमान इति पदच्छेदः। रथाभावे रथाङ्गं किंचिद्गृहीत्वा तेन सह प्रयाति। सर्वभाण्डादिसामग्रीवाहनार्थं शकटानि अन्यानि भवन्त्येव। तत्र शकट एव स्वस्याप्यारोहणं प्राप्तं तद्रथेन बाध्यते। अथ वा रथेन प्रयातीत्यत्र रथेनेति तृतीयाऽध्याहार्यसहशब्दयोगित्वात्, न तु करणार्थिकेति। अस्मिन्कल्पे रथेन सह गमनं पादाभ्यामेवोभयोः। रथेऽरणीनां स्थापनम्।

यद्यपो नाव्यास्तरत्यरणी रथं चाऽऽधाय सह तरति ।

नावा तार्या नाव्या अपो यदि तरति अरणी रथं चाऽऽदाय यस्यां नावि स्वयं तरति तस्यामेवाऽऽधाय तत्सहित एव तरति । आदायेति पाठोऽपपाठ एव । सर्वथा रथेन रथाङ्गेन वा वियोगो नैव कर्तव्य इति । तथा चाऽऽपस्तम्बः—अरणीभ्यामरणीभिरित्येके रथेन रथाङ्गेन वा न विप्रच्छिद्येतेति । अरणीशब्दोऽत्र द्वितीयाबहुवचनान्तः ।

यद्यपोऽनाव्या रथेन तरति हरति चैनाः ।

अनाव्या नावा तार्या यदि न भवन्ति तदा रथेनैव तरति हरति चारणीः स्वयमेव । अत्रापि अरणीरथरथाङ्गानां न विप्रच्छेदः ।

यद्यवगाहेत देवीराप इत्यवगाहेत ।

यदि पथ्यापः पादाभ्यामेव तरणीयाः स्युस्तदा जलावलोडनं प्राप्तं तज्जलप्रवेशसमये देवीरापो अपांनपादित्यादावेव कुर्यात्ततो गच्छेत् । ऋमिषमिति मन्त्रान्तः ।

अच्छिन्नं तन्तुं पृथिव्या अनुगेषमपाꣳ सेतुरसीति लोष्टं विमृद्नन्नापाराद्गन्तोस्तरति ।

लोष्टं मृत्पिण्डस्तं विमृद्नन्विमर्दयन्पारपर्यन्तं गमनार्थं चूर्णीकुर्वंस्तरतीत्यर्थः । लोष्टमिति जातावेकवचनं, तेनान्येषां प्रयोजनसत्त्वेऽन्यान्यपि ग्राह्याणीत्युक्तं भवति । विमर्दनं सांतत्येन क्षेपणार्थम् । विशब्दः संततक्षेपणानुगुण्यार्थः । सेतुमेव कृत्वाऽत्येतीति ब्राह्मणम् ।

पृथिव्याः संभवेति ॥ ९ ॥ सिकता लोष्टान्वा मध्ये तीरयोश्च न्यस्यति पृथिव्या संभवेत्ति वा ।

सिकता मृत्पांसवः । लोष्टा मृत्पिण्डाः । मध्ये मध्यभागे तीरयोश्च न्यस्यति क्षिपति सिकता मृत्पिण्डत्रय वा स्थानत्रये प्रक्षिपतीत्यर्थः । स्थानभेदान्मन्त्रावृत्तिः । पुनरबन्तरप्राप्तौ देवीराप इत्यवगाहादीनामावृत्तिः । तथा च भरद्वाजः—मन्त्रव्यवाये मन्त्राभ्यासो द्रव्यपृथक्त्वेऽर्थपृथक्त्वे देशपृथक्त्वे च यथा कण्डूयनस्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणानीति । जैमिनिमते तु नाऽऽवृत्तिः । तथा चैकादशाध्याये चतुर्थपादे तत्सूत्रम्—स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवमिति । व्याख्यातमेतत्सूत्रमबद्धं मन इत्यमेध्यं दृष्ट्वा जपतीतिसूत्रव्याख्यावसरे । सविसर्गाविसर्गकृतो मन्त्रभेदः । एतेषां प्रयाणधर्माणां दीक्षितधर्माधिकारे वचनाददीक्षितप्रयाणे नेष्यन्ते । बौधायनः—सꣳस(सृ)जन्ति व्रते संबध्नन्ति व्रतदुघयोर्वत्सावादधाति यदाभेयं भवतीति । स एव—

१ ङ. ज. झ. ञ. ट. चाऽऽदाय ।

अथाग्नेनं यान्तं व्रतनवेलोपाधि गच्छत्युत्तरतोऽरणी निधाय दक्षिणतः परिश्रित्य व्रतयति तूष्णीं तृणोदकायावस्यतीति । द्वैधे—अथाग्नेनं प्रयान्तं व्रतनवेलोपाधि गच्छतीति मथित्वाऽग्नीन्विहृत्य व्रतयेदिति बौधायन उत्तरतोऽरणी निधाय दक्षिणतः परिश्रित्य व्रतयेदिति शालीकिरिति । स एव—अथ यत्रावत्स्यन्भवति तदवस्यतीति । स एव—अथ यत्र यक्ष्यमाणो भवति तदवस्यत्येदमगन्म देवयजनं पृथिव्या इत्यान्तादनुवाकस्येति । अस्मिन्प्रयाणेऽन्यं विशेषमाह भरद्वाजः—अब्धः पवतेऽपोऽभिपवत इत्यहरहः प्रस्थितो जपतीति । अहरहरिति दीर्घाध्वाभिप्रायेण वीप्सा । दिशोऽभिसंपवत इत्यन्तः ।

अत्र देवयजनाध्यवसानमेके समामनन्ति ।

य इहाध्यवस्येत्स प्रयायात् । य आदितो न स प्रयाति योऽन्यत्र दीक्षित्वा ततो देवयजनमध्यवस्येत्स एव प्रयायात् । यस्त्वादावेव प्रयात्यध्यवसितदेवयजनस्तत्र दीक्षितो न ततः प्रयाति । देवयजनाध्यवसानार्थत्वात्प्रयाणस्य तस्य च कृतत्वादिति भावः । बौधायनस्तु देवयजनदीक्षायामपि तत्र योगक्षेमाक्लृप्तौ देवयजनान्तराध्यवसानार्थं प्रयाणमनुमन्यते । तथा च तत्सूत्रम्—अथातः प्रयाणस्यैव मीमांसा दीक्षितं वाऽयोगक्षेमे विन्दत्यन्यत्र वा देवयजनाद्दीक्षित इति । पूर्वत्र यद्देवयजनाध्यवसानमुक्तं तत्तत्र न कार्यं किंतु अत्रास्मिन्काले कर्तव्यमित्येक आचार्या वदन्तीत्यर्थः । अर्थात्प्रयाणोत्तरमेव देवयजनाध्यवसानमित्यस्मिन्नर्थे सिद्धे वचनमत्र देवयजनाध्यवसाने कर्तव्य एवैते प्रयाणधर्माः स्युर्न पूर्वत्रेतिज्ञापनार्थम् ।

प्राग्वꣳशस्य मध्यमꣳ स्थूणाराजमालभ्यैनं मन्त्रं जपति ।

अस्मिन्काले देवयजनाध्यवसानेऽयं विशेषोऽनेनोच्यते । स्थूणानां राजेति स्थूणाराजस्तं स्थूणानां मध्ये श्रेष्ठां स्थूणामित्यर्थः । राजशब्दः श्रैष्ठ्यार्थवाची । राजाहः—सखिभ्यष्टजितिसमासान्तष्टच्प्रत्ययः । मेढीभूतस्थूणानां बहुत्वान्मध्यममिति विशेषणम् । एनमिति मन्त्रविशेषणमपवृत्ते दीक्षापरिमाणेऽपेत वीतेति देवयजनमध्यवस्यतीति वक्ष्यमाण आग्निके देवयजनाध्यवसानेऽयं धर्मो न भवतीतिप्रदर्शनार्थम् । जपसाहचर्यादेव मन्त्ररूपविशेष्यलाभे मन्त्रग्रहणमयं मन्त्रो देवयजनाध्यवसानार्थ इत्यनुसंधानं जपात्पूर्वं कर्तव्यमित्येतादृशार्थज्ञापनार्थम् ।

एकरात्रं दीक्षितो राजानं क्रीणाति
द्व्यहे त्र्यहे चतुरहेऽपरिमिते वा ।

द्व्यहेऽतीत इत्यर्थः । एवं त्र्यहादिषु । चतुरहातिरिक्ताः पञ्चाहादयोऽपरिमितशब्देन संग्राह्याः । द्व्यहत्र्यहचतुरहपक्षास्तु मुख्याः । अमुख्या इतर इति प्रदर्शयितुं

---

१ च. ज. झ. ञ. 'रात्रिं दी'।

व्यहत्र्यहचतुरहशब्दैर्ग्रहणं व्यहत्र्यहदीक्षापक्षाणाम्। इतरेषां पञ्चाहादीनामपरिमित-शब्देन। द्वादशाहदीक्षापक्षस्तु एकाद्वित्रिचतुरहदीक्षापक्षतोऽपि मुख्यः। अपरिमित-दीक्षापक्षस्तु द्वादशाहदीक्षापक्षतोऽपि तपस आधिक्यान्मुख्य इति व्यवस्था द्रष्टव्या। यदि त्वेका दीक्षा द्वे तिस्रश्चतस्रोऽपरिमिता वेत्यनेनैव सिद्ध इदं वचनं प्रायणीया-प्रभृति आतिथ्यासंबन्ध्याप्यायननिह्नवनान्तमुपसद्दिवस एव न तु दीक्षादिवस इति-प्रदर्शनार्थम्। अहं तदस्मि आजुह्वान इत्येतौ मन्त्रौ पुरस्तात्प्रायणीयाया जपति। प्रत्यगाशिषो मन्त्रानिति सूत्रात्। आपस्तम्बेन तूपस्थानमुक्तं तथा वाऽपि विनियोगः। एकमिष इत्यस्य सोमक्रयण्याः पदानुनिक्रमणेषु जपः। यथारूपमितर इति सूत्रात्। अच्छिद्रा उपहोमाश्च लिङ्गान्नियम्यन्त इति भरद्वाजसूत्रात्। एकमिषे विष्णुस्त्वाऽन्वेतु० होत्राभ्यो विष्णुस्त्वाऽन्वेत्विति निष्क्रम्यमाणेषु यजमानोऽनुवर्तयित्वा(र्त्य) सखायः सप्तय० मायोष्टा इति सप्तमे पदे जपतीत्यापस्तम्बसूत्राच्च सप्तमे पद इत्यत्र वचनवि-परिणामेन निष्क्रम्यमाणपदं सप्तम्येकवचनान्तमनुवर्तते। प्रत्यगाशिषो मन्त्रानकर्मका-(क)रणाञ्जपतीत्यनेन सूत्रकृता याजमानत्वं प्रदर्शितम्। आद्यानां षण्णां विष्णुस्त्वाऽन्वे-त्विति लिङ्गादनुवर्तने विनियोगः। अन्तिमस्य तु प्रत्यगाशीष्ट्वात्सूत्रकृद्रीत्याऽपि जप एव। अयं च विनियोगः स्पष्टतया सूत्रेऽनुक्तत्वात्कृताकृतः।

**सप्तमं पदं तोते राय इति पत्न्यै प्रयच्छति तव ते राय इति वा।**

इदं सूत्रं तृतीयं पत्न्यै प्रयच्छति तत्सा गृहेषु निधत्त इति सूत्र एव प्रसङ्गा-द्व्याख्यातम्।

**क्रीयमाणस्य राज्ञो दक्षिणत आस्ते।**

अन्यत्र कर्मसु सांनिध्यमात्रं न दक्षिणतउपवेशननियम इति अत्र वचनाज्ज्ञायते। एवं यत्र यत्र वचनं तत्रापि द्रष्टव्यं सर्वत्र।

**क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति।**

क्रीते वा राजन्याहवनीये यूपाहुतिं हुत्वा यूपं छिनत्तीत्यस्मिन्सूत्रे कालनिर्णयः प्रदर्शित एवास्ति। अनेन दण्डदानेन निरूढपशुतोऽतिदेशप्राप्ताऽध्वर्युकर्तृकता मैत्रावरुणप्रैषकालता वाऽनेन बाध्यते। अविक्षुरो विखुरो भूयासमिति मैत्रावरुणः प्रति-गृह्णाति। इदं च दण्डस्य दानं दण्डप्रतिपत्तिर्न भवति किं तु चतुर्थ्या मैत्रावरुण-स्याभिप्रेतत्वेन प्रधानमेव। दण्डमिति तु द्वितीयाऽनीप्सितकर्मणि। अवलम्बनार्थ-त्वेन च स्वार्थत्वमेवं दानस्येति। तथा च चतुर्थाध्याये द्वितीयपादे जैमिनिः—प्रास-नवन्मैत्रावरुणस्य दण्डप्रदानं कृतार्थत्वात्। अर्थकर्म वा कर्तृसंयोगात्स्रग्वत्। कर्म-युक्तं च दर्शनादिति। प्रासनवत्कृष्णविषाणाप्रासनवत्। कृतार्थत्वात्कृतप्रयोजनत्वा-

ज्ञातप्रयोजनत्वादिति यावत्। तच्च प्रयोजनं दण्डेन दीक्षयतीत्येतद्विधिसिद्धं तस्य जातत्वान्मैत्रावरुणस्य दण्डप्रदानं प्रतिपत्तिरेवेति प्रथमसूत्रार्थः। मैत्रावरुणस्य दण्डप्रदानं प्रतिपत्तिर्न भवति किं तु अर्थकर्म प्रयोजककमेव कर्म दृष्टार्थमेव कर्मेति यावत्। अत्र हेतुमाह—कर्तृसंयोगादिति। स्थित्वा प्रैषानुवचनकर्त्रा प्रशास्त्रा संयोगात्। संयोगः संबन्धः। स्थित्वा प्रैषानुवचने कुर्वत आलम्बनं भवन्दृष्टार्थ एव दण्डो भवति। प्राग्वत्संयवनार्थत्ववत्। इदमपि मैत्रावरुणार्थदण्डदानं प्रयोजकं दण्डस्येति द्वितीयसूत्रार्थः। कर्मयुक्तमालम्बनरूपं कर्म तद्युक्तं च दर्शनात्, दण्डी प्रैषानन्वाहेति दर्शनात्। दृश्यते ज्ञायतेऽनेनेति दर्शनं विधिवाक्यं तस्मात्तु कर्मयुक्तं भवतीति तृतीयसूत्रार्थः।

**श्वः सुत्यायां वा क्रियमाणायाम्।**

इदमपि यजमानकर्तृकमेव। अविक्षुर इत्यनेनैव प्रतिग्रहो मैत्रावरुणस्य। अग्नीषोमीयदिवससंबन्ध्यनुष्ठानमारभ्य मैत्रावरुणकार्यसमयात्प्राग्यत्र कुत्रचिद्दण्डदानं कर्तव्यमित्यनेन विधीयते।

**वयः सुपर्णा इति प्रत्यपोर्णुते शिरोऽग्रेऽनुपूर्वमितराण्यङ्गानि।**

प्रत्यपोर्णुत उद्घाटयति। अग्र इति क्रमार्थम्। अनुपूर्वमनुक्रमम्। तेन स्कन्धप्रभृत्यवयवा ये वाससा संछादितास्ते क्रमेणोद्घाटनीया इत्यर्थः। अत्र शिरःशब्देन मुख्यया वृत्त्या शिरस एव ग्रहणं तस्यैव च्छादनयोग्यत्वान्न तु गौण्या वृत्त्या मुखनेत्रनासिकानामपि। छादनासंभवात्, अनुष्ठानविरुद्धत्वाच्च। नहि मुखे नेत्रद्वये च च्छादिते मन्त्रपठनमीक्षणं च कर्तुं शक्यं, नेत्रद्वयान्तर्गतत्वात्केवलनासिकाया अपि च्छादनं कर्तुं न शक्यम्। पादयोरपि च्छादनं गमनविरुद्धत्वान्न कर्तुं शक्यम्। तथा चैतद्व्यतिरिक्तान्येवाङ्गानीतरशब्देन विवक्षितानि। यजमानोऽद्भिरभ्युक्ष्य कौत्साय वा परिकर्मिणे वोष्णीषं प्रयच्छतीति बौधायनः। दण्डप्रदाने मन्त्र उक्त आपस्तम्बेन दीक्षितदण्डं च मैत्रावरुणाय प्रयच्छति मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रयच्छाम्यवक्रो विधुरो भूयासमिति। बद्धानिति मन्त्रान्तः।

**मित्रो न एहि सुमित्रधा इत्यूरावासन्न[१] राजानमुपस्वजे उपैव गृह्णीते।**

अध्वर्युणेन्द्रस्योरुमाविशेत्यूरावासन्न[१] राजनमुपस्वजे वक्षस्येवोपगृह्णीत इत्यर्थः। स्वजधातुरालिङ्गने तच्चाऽऽलिङ्गनं वक्षसीति लोकप्रसिद्धमेव। उपस्वज इति सप्तम्यन्तं पदं वक्षोवाचकम्। उपस्वज इत्यत्रोपेत्युपसर्गोऽतिशयार्थः। अतिशयेन स्वजनं वक्षसैव। एवकार उपस्वज इत्यनन्तरमन्वेति। अत्राप्युपेत्युपसर्गः सम्यक्श्लेषणार्थः।

---

१ च. ज. झ. ञ. ढ. °न्नत उ°।

ग्रहणं श्लेषणमत्र । उपसर्गक्रिययोर्मध्य एवशब्दस्य पाठादियं श्रुतिरेवानूदितेत्यनुमीयते । एतावानेव मन्त्रः । अध्वर्यवाशक्तवा इति अध्वर्युं प्रति प्रश्नः । आशकामेत्यध्वर्युणोत्तरे दत्ते कथमाशकतेति पुनः प्रश्नः । एतौ द्वौ प्रश्नावध्वर्युसूत्रोपात्तौ गिरौ क्रयणमिति पक्षे नान्यदा ।

उदायुषेत्युत्तिष्ठति ।

अमृतां२ अन्विति मन्त्रान्तः ।

उर्वन्तरिक्षमिति गच्छति ।

अन्विहीति मन्त्रान्तः ।

शकटं प्राप्याध्वर्यवे राजानं प्रददाति ।

शकटं प्राप्येतिवचनादिदं ज्ञायतेऽध्वर्युणा कृष्णाजिनास्तरणे कृते तत्रैव स्थितायाध्वर्यवे राज्ञः प्रदानं न तु तस्मात्स्वसमीपमागतायेति । उत्थानदेशात्किंचिद्देशमतिक्रम्य गच्छति आस्तरणोत्तरं ततोऽपि तूष्णीमेव गच्छति यावच्छकटमिति च । साऽसि सुब्रह्मण्य इत्यस्य मन्त्रस्य जपः सुब्रह्मण्याह्वाने । तथा चाऽऽपस्तम्बः—सर्वासु सुब्रह्मण्यासु सुब्रह्मण्यमन्वारभ्य यजमानो जपति साऽसि सुब्रह्मण्ये तस्यास्ते पृथिवी पादः साऽसि सुब्रह्मण्ये तस्यास्तेऽन्तरिक्षं पादः साऽसि सुब्रह्मण्ये तस्यास्ते द्यौः पादः साऽसि सुब्रह्मण्ये तस्यास्ते दिशः पादः परोरजास्ते पञ्चमः पादः सा न इषमूर्जं धुक्ष्व तेज इन्द्रियं ब्रह्मवर्चसमन्नाद्यमिति । सर्वासु कालभेदाद्भिन्नासु सुब्रह्मण्योमित्याह याजमाने साऽसि सुब्रह्मण्य इति यजमानो जपतीत्यर्थः । यथारूपमितर इत्यनेन सूत्रकृताऽपि विनियोग उक्तोऽस्ति । प्रत्यगाशिषो मन्त्रानकर्मकरणाज्जपतीतिदर्शपूर्णमासयाजमानसूत्राद्याजमानत्वमुक्तं भवति । लिङ्गात्सुब्रह्मण्याह्वाने विनियोगः सिध्यति ।

नमो मित्रस्य वरुणस्य चक्षस इति प्राग्वंशमोह्यमानं प्रतीक्षते ।

प्राग्वंशं प्रति ओह्यमानं प्राप्यमाणं राजानमीक्षत आभिमुख्येन । प्रतिशब्दादाभिमुख्यं लभ्यते । सूर्याय शंसतेति मन्त्रान्तः ।

अनु मे दीक्षां दीक्षापतिर्मन्यतामिति तानूनप्त्रं समवमृशति ।

संशब्द ऋत्विग्भिः सहैवाभिमर्शार्थः । अवेत्युपसर्गः स्पर्शनकालेऽवनमनार्थः । मा धा इति मन्त्रान्तः ।

तत्त्रिषु व्रतेषु प्रतिपन्नो भक्षयति यद्यध्वर्युर्नावजिघ्रति ।

त्रिषु औपसदेषु व्रतेषु प्रतिपन्नः प्रतिपत्तिं कुर्वाणो विभज्य विभज्य निक्षिप्य भक्षयति यदि अध्वर्योरवजिघ्रणेच्छाया अभावः । अस्मिन्पक्षे प्रतिव्रतमावृत्तिर्मन्त्रस्य ।

---

१ च. छ. °ज्य नि° ।

उभयोः समुच्चयः। +अवजिघ्रणेच्छायां तु नैतल्लक्षणम्। अत्र कात्यायनो विशेषमाह तानूनप्त्रं प्रकृत्य—अपिधायामृन्मयेनापराह्णे व्रतमिश्रं दीक्षिताय प्रयच्छति बहुषु गृहपतय इति। अमृन्मयेन कांस्याद्यन्यतमेन व्रतमिश्रं यथा भवति तथा कृत्वा दीक्षिताय प्रयच्छतीत्यर्थः। अत्र दीक्षितग्रहणात्पत्न्या व्यावृत्तिः। सत्रे सर्वेषामपि दीक्षितत्वात्सर्वेभ्योऽपि दानप्राप्तावाह—बहुषु गृहपतय इति।

अग्ने व्रतपत इत्यवान्तरदीक्षामुपैति।

सह नौ व्रतपते व्रतिनोर्व्रतानीति मन्त्रान्तः। अप्सु दीक्षाप्रभृतिप्रायणीयादिवसप्रयाणात्प्राग्विहिता वर्तमाना धर्मा दीक्षाशब्दवाच्यास्तेषां विसर्गः। अवभृथे तन्मध्ये संतरां मेखलामित्यारभ्य येऽधिका धर्मास्ते मध्य उत्पन्नत्वादे(द)वान्तरदीक्षाशब्दवाच्यास्तानुपैति स्वी करोतीति सामान्यप्रतिज्ञेयम्।

संतरां मेखलाꣳ समायच्छते संतरां मुष्टी कुरुते तप्तव्रतो भवति मदन्तीभिरुदकार्थान्कुरुते॥ १०॥

संतरां संहततरां मेखलां गाढतरामिति तदर्थः। मदन्तीरुपस्पृश्य गाढतरं मुष्टिमेखलं कुरुत इति कात्यायनसूत्रात्। सम्यक्, आयच्छत आश्लेषयति। संतरा मुष्टी कुरुत इत्यत्र संतरा संतरे इत्यर्थः। सुपां सुलुगिति सूत्रेण द्विवचनविभक्तेराकारः। संतरामिति पाठ एकवचनं छान्दसं द्रष्टव्यम्। संतरामित्यव्ययं वा। तप्तव्रतो भवतीत्यत्र वचनाद्दिक्षेपु व्रतेषु किंचिच्छीतमेव व्रतं ग्राह्यमिति गम्यते। मदन्त्यस्तप्ता आपस्ताभिरेवोदकार्थानुदककार्याणि लौकिकानि शौचाचमनादीनि लौकिकीभिर्गार्हपत्ये तप्ताभिः कर्षान्तर्गतानि कुरुत इत्यर्थः। मदन्तीभिर्मार्जयत इतिश्रुतिगतो मदन्तीभिर्मार्जनस्य विधिरुपलक्षणमिति भावः। आत्मानमेव दीक्षया पाति प्रजामवान्तरदीक्षया संतरां मेखलाꣳ समायच्छते प्रजा ह्यात्मनोऽन्तरतरा तप्तव्रतो भवति मदन्तीभिर्मार्जयत इति ब्राह्मणेऽवान्तरदीक्षायाः प्रजारक्षणं फलं ज्ञेयम्। संतरां मुष्टी कुरुत इति शाखान्तरीयो विधिः।

व्याख्यातं पाणिप्रक्षालनमाप्यायनं निह्नवनं च।

मदन्तीभिः पाणीन्प्रक्षालयन्त इत्येतेन सूत्रेण पाणिप्रक्षालनं व्याख्यातमुक्तम्। अꣳशुरꣳशुरिति तꣳ सर्वे सहिरण्यैः पाणिभिराप्याययन्तीत्यनेनाऽऽप्यायनं व्याख्यातम्। प्रत्युपनद्धेऽप उपस्पृश्येष्टा राय इति प्रस्तरे निह्नवते सव्यान्नीचः पाणीन्कृत्वा दक्षिणानुत्तानानित्यनेन निह्नवनं व्याख्यातम्। उदकोपस्पर्शस्य निह्नवनाङ्गत्वात्सोऽपि भवति।

---

+ अवघ्राणेच्छायामिति वक्तुं युक्तम्।

या ते अग्ने रुद्रिया तनूरिति व्रतयति ।

ये देवा मनोजाता इत्येतस्य स्थानेऽस्मिन्व्रतेऽयं मन्त्रो भवतीत्यर्थः । तस्यास्ते स्वाहेति मन्त्रान्तः ।

दैक्षमेतदहर्व्रतपरिमाणं भवति ।

एतस्याह्नो यद्व्रतं दिवससंबन्धिव्रतं तस्य परिमाणं दैक्षं दीक्षाया इदं दैक्षं वत्सस्यै-कᳺ स्तनमवशेष्येत्यनेन यद्विहितं तदेव भवत्युपसद्दिवससंबन्धित्वेऽपि उपसत्प्रवृत्ति-पूर्वकालभवत्वादिति भावः ।

औपसदोऽत ऊर्ध्वं व्रतकल्पः ।

उपसदोऽयमौपसदः । अतः सायंकालिकव्रतादूर्ध्वमारभ्य व्रतकल्पो व्रतप्रकारो भवति । अत ऊर्ध्वमस्याह्नः सायंव्रतप्रभृत्यौपसदव्रतान्येतेनैव व्रतयति न पूर्वेण मन्त्रेण सहाधिनिविशत इत्येवार्थः । यत्त्वद्यतनमहर्व्रतं तत्त्ववान्तरदीक्षोपायेनोत्तरकालमाव्यपि दैक्षमेतदहर्व्रतपरिमाणं भवतीति दैक्षव्रतत्वस्योक्तेर्दैक्षमेव भवति । मन्त्रस्तु दैक्षमेतदह-र्व्रतपरिमाणं भवतीत्येतस्मात्प्राग्या ते अग्न रुद्रिया तनूरित्युपदेशाद्दैक्षत्वेऽपि या ते अग्न इत्ययमेव मन्त्रो व्रते । बौधायनेन संतरां मेखलां समायच्छस्व संतरां मुष्टी कुरुष्व तप्तव्रत एधि मदन्तीभिर्मार्जयित्वोत्पूर्वव्रतᳺ सृज या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यास्ते स्वाहेत्येतेनातोऽधि व्रतयेति संज्ञापनवाक्ये स्पष्टमेवोक्तम् । पूर्व(र्वं)-व्रतार्थो मन्त्रः पूर्वव्रतनस्तमुत्सृजेत्यर्थः । तर्हि को मन्त्र इत्याकाङ्क्षायामाह—या ते अग्न इत्यादि । एतेनातोऽधि अत आरभ्य व्रतय व्रतं स्वी कुरु इत्यर्थः । निह्नवनोत्तरं पाठादिदं व्रतं निह्नवनोत्तरमेव भवति । यजमानश्चतुःस्तनमेतां रात्रिं व्रतं व्रतयति । पत्नी च व्रतं व्रतयति चतुःस्तनमेव । स्पष्टमयमर्थो मानवसूत्रे—चतुःस्तने प्रथमेऽहनि त्रिस्तने द्विस्तने मध्यम एकस्तन उत्तम इति । चतुःस्तन इति द्विवचनात्प्रथम औप-सदेऽहनि यजमानपत्न्योर्द्वे व्रते भवत इत्यर्थः । चत्वारश्चत्वारः स्तना ययोस्ते चतुः-स्तने । संख्याशब्दानां वृत्तिविषये वीप्सार्थत्वं सप्तपर्णादिवदिति कैयटः । तथा चतुःस्तनपरिमितं यजमानस्य व्रतमेतावदेव पत्न्याश्चेत्यर्थः । यजमानपत्न्योर्व्रतमित्ये-तावन्मात्रविषय इदं सूत्रमुपपद्यते संमतित्वेन ।

यजमानपत्न्योरौपसदव्रतपरिमाणान्याह—

चतुःस्तनमेताᳺ रात्रिं व्रतं व्रतयति त्रिस्तनं
मध्यमेऽहनि द्विस्तनᳺ रात्रावेकस्तनमुत्तमेऽहनि ।

एतां यस्मिन्दिने या ते अग्न रुद्रिया तनूरित्येतेन प्रथमं व्रतं गृहीतं तां रात्रि-मेतस्यां रात्रावित्यर्थः । त्रिःस्तनं मध्यम औपसदेऽहनि, द्विस्तनं रात्रौ तस्यां रात्रौ-एकस्तनमुत्तमेऽन्तिम औपसदेऽहनीत्यर्थः । मध्यमोत्तमत्वमुपसत्कृतं द्रष्टव्यम् ।

**आराग्रामवान्तरदीक्षामुपेयादिति ब्राह्मणव्याख्या-
तानि काम्यानि व्रतपरिमाणानि तेषां याथाकामी ।**

आराग्रामवान्तरदीक्षामुपेयाद्यः कामयेतास्मिन्मे लोकेऽर्धुकꣳ स्यादित्येकं काम्यं व्रतपरिमाणम् । परोवरीयसीमवान्तरदीक्षामुपेयाद्यः कामयेतामुष्मिन्मे लोकेऽर्धुकꣳ स्यादित्येकम् । एकमग्रेऽथ द्वावथ त्रीनथ चतुर एषा वा आराग्रावान्तरदीक्षाऽस्मिन्नेवास्मै लोकेऽर्धुकं भवतीति, चतुरोऽग्रेऽथ त्रीनथ द्वावथैकमेषा वै परोवरीयस्यवान्तरदीक्षाऽमुष्मिन्नेवास्मै लोकेऽर्धुकं भवतीति क्रमेण तयोः स्वरूपं ब्राह्मणे प्रदर्शितम् । तत्राऽऽद्याऽऽराग्राऽवान्तरदीक्षा द्वितीया परोवरीयसी । बलीवर्दप्रतोदनं लौहमारं तद्वदल्पमग्रं मुखं यस्याः साऽऽराग्रा । परोवरीय इत्यत्र परःशब्देनात्र श्रेष्ठत्वादुपक्रमो विवक्षितः । उपक्रमे वरीयोऽधिकं यस्याः सा परोवरीयसी । अर्धुकं समृद्धिशीलम् । इदमेतयोः फलम् । एतद्दीक्षासंबन्ध्यौपसदव्रतपरिमाणद्वयं काम्यम् । वत्सस्यैकः स्तनो भागी हि सोऽथैकꣳ स्तनं व्रतमुपैत्यथ द्वावथ त्रीनथ चतुर इति एकं व्रतम् । एतस्य संज्ञा फलं चोक्तं ब्राह्मण एव—एतद्वै क्षुरपवि नाम व्रतं येन प्रजातान्भ्रातृव्यान्नुदते प्रतिजनिष्यमाणानथो कनीयसैव भूय उपैतीति । चतुरोऽग्रे स्तनान्व्रतमुपैत्यथ त्रीनथ द्वावथैकमित्येतदेकम् । एतस्यापि संज्ञा फलं चोक्तं ब्राह्मण एव—एतद्वै सुजघनं नाम व्रतं तपस्यꣳ सुवर्ग्यमथो प्रैव जायते प्रजया पशुभिरिति । एतद्वयं चापि काम्यम् । एतानि चत्वारि ब्राह्मणेन व्याख्यातानि काम्यानि कामसंपादकानि व्रतस्य परिमाणानि क्रमभेदेन व्रतस्वरूपाणि तेषां यथाकामस्तद्व्रतपरिमाणभङ्गी कुर्यादित्यर्थः ।

**प्र तद्विष्णुः स्तवते वीर्यायेति संमिताद्धविर्धानात्प्राङुप-
निष्क्रम्य तैरेव मन्त्रैर्यथान्युप्तं धिष्णियानुपतिष्ठते ।**

संमिताद्धिमितात् । अनेन रूपेदं ज्ञायते—एतावत्पर्यन्तं हविर्धान एवोपविष्टो भवेत्, औदुम्बर्यमिहोमसंबन्धित्यागस्तत्रैवोपविष्टेन कार्य इति । यैर्मन्त्रैरध्वर्युणा निवपनं कृतं तैरेव मन्त्रैरित्यर्थः । यथान्युप्तं न्युप्तमनतिक्रम्य यथान्युप्तं धिष्णियानायतनानि उपतिष्ठत इत्यर्थः । अनेनैच्छिकत्वं व्यावर्त्यते । यदध्वर्युणा न्युप्तं तत्तदनन्तरमेवोपतिष्ठत इत्येतादृशार्थप्रापणार्थं वा । उपतिष्ठत इत्येतावतैव समन्त्रकत्वं सिद्धमुपस्थानस्य विना मन्त्रैरसंभवात् । ते च मन्त्रा धिष्णियप्रकरणोपस्थितत्वाद्विभूरसीत्याद्या एव । तथा चार्थादेव विभूरसीत्यादीनां मन्त्राणां प्राप्ताविदं वचनमेतानेवोपस्थानान्व्याघारणाꣳश्चैके समामनन्तीत्यापस्तम्बोक्तं पाक्षिकत्वमुपस्थानस्य व्यावर्तयितुम् । एवशब्दस्योपतिष्ठत इत्यनन्तरमन्वयः ।

---

१ च. छ. °क्रमो व° । २ ङ. ज. झ. ञ. ट. °त्प्राङुप° ।

सम्राडसि कृशानुरित्याहवनीयं परिषद्योऽसि पवमान इति यत्र बहिष्पवमानेन स्तुवते प्रतक्काऽसि नभस्वानिति चात्वालमसंमृष्टोऽसि हव्यसूद इति पशुश्रपणमृतधामासि सुवर्ज्योतिरित्यौदुम्बरीं ब्रह्मज्योतिरसि सुवर्धामेति ब्रह्मसदनमजोऽस्येकपादिति प्राजिहितं गार्हपत्यमहिरसि बुध्निय इति शालामुखीयं कव्योऽसि कव्यवाहन इति दक्षिणाग्निꣳ समूह्योऽसि विश्वव्यचा इत्युत्करꣳ समुद्रोऽसि विश्वभरा इति सदः सदस्योऽसि मलिम्लुच इति सदस्यायतनꣳ रौद्रमनीकꣳ सर्वत्रानुषजति ॥ ११ ॥

इति हिरण्यकेशिसूत्रे दशमप्रश्ने तृतीयः पटलः ।

---

आहवनीय औत्तरवेदिकः । शालामुखीयस्याग्रे पृथग्ग्रहणात् । यत्र बहिष्पवमानेन स्तुवत इत्यनन्तरं यत्तदोर्नित्यसंबन्धादुपतिष्ठत इतिसकर्मकधातुयोगाद्द्वितीयान्तो देशविशेषणत्वात्पुंलिङ्गस्तच्छब्दोऽध्याहार्यः । ननु परिषद्योऽसि पवमान इत्यास्तावमित्येव लाघवाद्वक्तव्यं नचैतावताऽऽस्तावशब्दार्थप्रसिद्धिः कथमिति चेत् । यत्र बहिष्पवमानेन' स्तुवत इत्याध्वर्यवसूत्रादेव सिद्धे व्यर्थमेतदिति चेत्सत्यम् । पूर्वोपात्तास्तावशब्दार्थतोऽत्राऽऽस्तावशब्दार्थे किंचिदधिकं वैलक्षण्यमस्तीति ज्ञापनार्थत्वेनैतस्योपादानस्य सार्थक्यात् । तथा हि पूर्वत्राऽऽस्तावशब्देनैक एव पदार्थः सर्वक्रतुषु समानः । अग्निष्टोमाद्येकाहेषु चात्वालसमीपप्रदेशरूप एवाहीनेषु द्वादशाहादिषु प्रथमे सौत्येऽहनि चात्वालसमीपप्रदेशरूपः, द्वितीयादिषु सौत्याहेषु सदोरूप इत्येकैक एव । उपस्थानविषयेणैतेनाऽऽस्तावशब्देन तु द्वादशाहाद्यहीनक्रतुषु चात्वालसदआत्मकं देशद्वयमपि ग्राह्यं न तु चात्वाल एव । अन्यथोपस्थानजन्यसंस्कारश्चात्वालसमीपप्रदेश एव स्यात्सदसि न स्यात् । इष्टश्च संस्कार उभयत्रापीतीष्टं वैलक्षण्यं ज्ञेयम् । देशभेदात्परिषद्योऽसि पवमान इत्यस्याऽऽवृत्तिः । प्रथमे सौत्येऽहनि चात्वाले समीपप्रदेशे बहिष्पवमानस्तवनमितरेष्वहःसु सदस्येवेति । अयमर्थो लाट्यायनद्राह्यायणाभ्यां प्रदर्शितः— अहीनबहिष्पवमानैः सदसि स्तुवीरन्प्रथमादह्नोऽन्यत्रेति । चात्वालः प्रसिद्धः । पशोः श्रपणं यस्मिन्देशे स देशः पशुश्रपणः । प्राजिहितशब्दार्थो वसतीवरीपरिहरणसूत्रे प्रदर्शितः । गार्हपत्यग्रहणं प्राजिहितशब्दः पुराणगार्हपत्यपर एवेति प्रदर्शयितुम् । अन्यथा कस्येयं संज्ञेति शङ्काया निराकरणं न स्यात् । तथा च यत्र यत्र प्राजिहितशब्दस्तत्र तत्र पुराणगार्हपत्य एव ग्राह्य इति सिद्धं भवति । शाला प्राग्वंशाख्या

तस्या मुखेऽग्रभागे भवः शालामुखीयस्तम् । अन्यत्स्पष्टम् । रौद्रमनीकꣳ सर्वत्रानुषजतीति पूर्ववद्व्याख्येयम् ।

इत्येकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्नियुक्तवाजपेययाजिसर्वतोमुखयाजिद्विसाहस्राग्नियुक्तपौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथदीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसूत्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंतापशामिकायां ज्योत्स्नाख्यायां वृत्तौ दशमप्रश्नस्य तृतीयः पटलः ॥ ३ ॥

---

अथ दशमप्रश्ने चतुर्थः पटलः ।

---

यत्र हविर्धाने ब्रह्मा राजानं प्रपादयति तस्मिन्काले पूर्वेण द्वारेण हविर्धाने प्रविश्यैष वो देव सवितः सोम इति शकटे राजानमासन्नमभिमन्त्रयते ।

यत्र यस्मिन्काले तस्मिन्काले तस्मिन्नेव काले प्रपादनं, राजानं प्रत्यादाय सोमो जिगाति गातुविदिति सौम्यर्चाऽपरेण द्वारेण हविर्धाने प्रविश्याध्वर्यवे राजानं प्रदायेतिब्रह्मसूत्रोक्तस्योपलक्षणम् । आसन्नमध्वर्युणा । अनासन्नस्य राज्ञोऽभिमन्त्रणं व्यावर्तयितुमासन्नमिति । शकटग्रहणं मण्डपव्यावृत्त्यर्थम् । शकटस्योत्तरतः प्राङ्मुखः सन्नेवाभिमन्त्रणं कुर्यात् । न चात्रोदङ्मुखताऽपि । प्राङ्मुखतयैव शास्त्राविरोधपूर्वकासन्नाभिमन्त्रणरूपकार्यनिर्वाह उदङ्मुखतायाः शास्त्रविरुद्धाया निर्युक्तिकत्वात् । राज्ञो वामतः करणमेव शास्त्राविरोधोऽत्र । उपगा इति मन्त्रान्तः ।

एतमहं मनुष्यो मनुष्यानिति प्रदक्षिणमावर्तते ।

एतच्च शकटस्योत्तरत एव राज्ञः पृष्ठतः करणस्य परिहर्तुमशक्यत्वान्न दोषः । सह रायस्पोषेणेति मन्त्रान्तः ।

नमो देवेभ्य इति प्राचीनमञ्जलिं करोति स्वधा पितृभ्य इति दक्षिणा ।

प्राचीनं प्रागग्रमञ्जलिम् । अग्रेण जुहूपभृतौ देवेभ्यः प्राचीनमञ्जलिं करोतीति प्रकृतौ जुहूपभृतावग्रेण देवेभ्यः करोतीति दर्शनात् । अत्रापि अग्रेण देवेभ्य इति अध्याहार्यम् । अर्थात्सोममग्रेण स्वधा पितृभ्य इत्यनेन मन्त्रेण, दक्षिणा दक्षिणमित्यर्थः ।

---

१ क. °त्वाद्दोषः ।

दक्षिणादाच्, इत्याजन्तता। दक्षिणं दक्षिणाग्रमित्यर्थः। अञ्जलिं करोतीत्यनुवर्तते। न्यञ्चीति बौधायनः। शकटाद्यञ्चीत्यर्थः।

इदमहं निर्वरुणस्य पाशादित्युपनिष्क्रामति।

हविर्धानाद्बहिरिति शेषोऽर्थात्।

सुवरभिविख्येषमिति सर्वं यज्ञमनुवीक्षते
वैश्वानरं ज्योतिरित्याहवनीयं परेक्षते।

सर्वयज्ञानुवीक्षणाहवनीयपरेक्षणे दर्शपूर्णमासवदित्येतावतैव सिद्धे गुरुभूतमेवं वचनं स्वशाखायामेतयोर्ब्राह्मणाभावेऽपि शाखान्तर एतद्ब्राह्मणं स्पष्टमेवेतिज्ञापनार्थम्। फलं ज्ञानावश्यकता। यज्ञशब्देन विहारोऽत्र ग्राह्यः। तथा चाऽऽपस्तम्बः—सर्वं विहारमनुवीक्षत इति। तत्रैव तिष्ठन्निति परेत्यस्यार्थः। तथा च तिष्ठता कर्तव्यं यदीक्षणं तत्परेक्षणमित्यर्थो भवति।

अग्ने व्रतपत इत्यवान्तरदीक्षां विसृजते।

संतरां मेखलां समायच्छते संतरां मुष्टी कुरुत इत्याद्या अवान्तरधर्माः पूर्वं ये स्वीकृतास्तान्वक्ष्यमाणरीत्या परित्यजेदित्यर्थः। अयमेवावान्तरदीक्षाविसर्गो नाम। यथायथं नौ व्रतपते व्रतिनोर्व्रतानीति मन्त्रान्तः।

तत्प्रकारमाह—

वितरां मेखला समायच्छते वितरां मुष्टी कुरुते।

वितरां शिथिला यथा भवति तथा समायच्छते समाकर्षेन्मेखलामित्यर्थः। वितरां शिथिले मुष्टी कुरुते। संतरामितिवद्वितरामिति व्याख्येयम्।

स्वाहा यज्ञं वाचि वाते विसृज इति मुष्टी वाचं च
विसर्जयित्वा यथासुखमत ऊर्ध्वꣳ हस्ताभ्यां चरति।

स्वाहा यज्ञमित्यनन्तरमितिशब्दाध्याहारेण च्छेदः। वाचि वाते विसृज इति भिन्न एव मन्त्रः। तथा च प्रथमेन तु मुष्टिविसर्गः। द्वितीयेन वाग्विसर्गः। चकारो मुष्टिविसर्गेण समुच्चयार्थः। स्वाहा यज्ञमिति मन्त्रः स्वाहा यज्ञं मनसेत्यारभ्य वातादारभ इत्यन्तः। एतादृशमर्थमापस्तम्ब आह—वितरां मेखला विस्रꣳसते वितरां मुष्टी कर्षतेऽत्र दण्डप्रदानमेके समामनन्ति स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याꣳ स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादारभ इति मुष्टी विसृजते स्वाहा वाचि वाते विसृज इति वाचमिति। अथवैकेतिकरणात्स्वाहा यज्ञं वाचि वाते विसृज इत्येक एव मन्त्रः। अस्मिन्पक्षे मुष्टिद्वयविसर्गे वाग्विसर्गे च मन्त्र आवर्तनीयः। द्रव्यपृथक्त्वात्। या नित्यं संध्ययोर्नियम्यते वाक्तामतः परं विसृजते। यथासुखं स्वेच्छम्। अत ऊर्ध्वमतोऽवान्तरदीक्षाविसर्गादूर्ध्वमारभ्येत्यर्थः। अन्यत्स्पष्टम्। इदं सूत्रमवान्तरदीक्षावि-

सर्गार्थमात्रमेतन्मुष्टिविसर्जनं तदनन्तरं तूष्णीमेव पुनर्मुष्टिकरणं यज्ञधारणार्थं कर्तव्यं तत्सहितैवान्या दीक्षितवृत्तिरिति कदाचित्स्यात्तद्वारयितुम् ।

वर्ततेऽन्या दीक्षितवृत्तिः ।

दीक्षणीयाप्रभृतीयं वृत्तिरिति सूत्रे यदि प्रमत्तो व्याहरेदित्यारभ्य यद्यदीक्षितवादं वदेन्मुष्टी वाचं च विसर्जयित्वेत्येतदन्ता धर्मा वृत्तिपदेनोच्यन्ते । सैव वृत्तिरत्रान्यश-ब्देन गृह्यते । साऽन्या दीक्षितवृत्तिर्वर्तत एव न त्ववान्तरदीक्षाविसर्गकाले दीक्षणीये-ष्टिमारभ्य प्रवृत्ता या वृत्तिस्तस्या अपि विसर्ग इति ।

जागर्त्येतां रात्रिम् ।

एतच्छब्दस्य सर्वनामत्वात्सर्वनाम्नो याऽग्नीषोमीयपशुसंबन्ध्यनूयाजवती रात्रिः सैतच्छब्देन गृह्यते । तेनैतस्यामेव रात्रौ जागरणं न द्वादशाहां[1]द्यहीनेषु द्वितीयादि-रात्रिषु अन्यथा प्रत्यहं जागरणे द्वितीयसौत्यदिवसाद्यनुष्ठानेऽतीव शरीरे वैक्लव्यं स्यात् । नच राजसंरक्षणानुपपत्तिः । तस्यान्यद्वाराऽपि संभवात् । अस्मिन्नर्थे साधकं व्याख्यानं हविर्धाने यजमानो राजानं गोपायतीत्येतत्सूत्र एव प्रदर्शितमेव ।

न व्रतं भवति दैक्षोऽत ऊर्ध्वं व्रतकल्पः ।

एतां रात्रिमिति वचनविपरिणामेनानुवर्तते । तथा चैतस्यां रात्रौ व्रतं न भवती-त्यर्थो भवति । अत ऊर्ध्वं चेद्व्रतं प्रसक्तं तदा दैक्षो दीक्षाया अयं दैक्षो दीक्षासंबन्धी व्रतकल्पो दीक्षासंबन्धिव्रतप्रकारो भवतीत्यर्थः । एतच्च प्रतिबन्धवशेन यद्यवभृथं न जातं तदा द्रष्टव्यम् । एवमहीनेषु द्वितीयप्रभृतिषु सुत्यारात्रिषु च ।

सप्तहोत्रा ग्रावस्वासन्नꣳ राजानमभिमृशति ।

ग्रावस्वासन्नमित्यत्राध्वर्युणेति शेषः । अध्वर्योरेवाऽऽसादनस्य विहितत्वात् । अहो-मार्थत्वादग्रहोऽत्र सप्तहोता । स च महाहविर्होतेति । अयास्य उद्गातेति होतृमन्त्रान्तः ।

यत्र हविर्धानमपः प्रपादयीत ता अनु प्रपद्यते यश एनमुपनामुकं भवति ।

यत्र यस्मिन्काले ताः प्रपादिता अपोऽनु पश्चात्प्रपद्यते हविर्धाने प्रविशतीत्यर्थः । पूर्वेण द्वारेणैव ता अन्वितिवचनात् । यत्रेति पूर्वत्रोक्तेस्तदेत्यस्याध्याहार आर्थिकः । तथा चायमर्थो भवति—यस्मिन्काले हविर्धानमपः प्रपादयति तस्मिन्काले ता अनु प्रविशतीति । एनं यजमानं प्रति यश उपनामुकं भवति । उपशब्दः सामीप्यार्थकः संस्तद्वारा नैरन्तर्यं लक्षयति । नामुकमित्यत्र णम प्रह्वत्वे शब्दे चेतिधातुसूत्रप्रदर्शित-प्रह्वतार्थकाद्धातोरुकञ्प्रत्ययः । ञित्वादादिवृद्धिः । चकारेण ख्यात्यर्थकत्वमपि समु-

---

१ च. छ. °हाही° ।

श्रोतव्यं सर्वदा नामुकं ख्यातं यशसो विशेषणम् । एनं यजमानं प्रति निरन्तरं ख्यातं यशो भवति प्राप्नोतीत्यर्थः । सत्तारूपार्थनिर्देशस्तूपलक्षणं यागात्स्वर्गो भवतीत्यादावुत्पद्यत इत्याद्यर्थदर्शनात् । प्रकृते द्वितीयायोगेन प्रापणार्थकत्वस्यैव कल्पनात् । यद्यप्युणादिसूत्रेषूकञ्प्रत्ययो नोपात्तस्तथाऽपि

संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥

इतिशास्त्रबलादविहितोऽप्युकञ् ऊहितुं शक्यः । इयं शाखान्तरीया श्रुतिरेवानूद्यते । अयमनुप्रपदनस्तावकोऽर्थवादः । अत्रार्थवादप्रदर्शनमर्थवादज्ञानावश्यकत्वं प्रदर्शयितुम् । तदज्ञाने यजुर्भ्रेषप्रायश्चितं भुव इति दक्षिणाग्नौ होतव्यं भवति ।

द्वादश धेनूः पष्ठौहीर्वा गर्भिणीः कृत्त्यधी-
वासं चांशावध्वर्यवे ददात्येवमदाभ्ये ।

धेनवो नवप्रसूताः । पष्ठौह्यः पञ्चवर्षाः । गर्भिणीरिति पष्ठौहीनां विशेषणम् । प्रथमगर्भाः पष्ठौहीर्ददातीत्यापस्तम्बः । कृत्त्यधीवासः शय्यासनार्थश्चर्मपटः । गजचर्ममय एवायमिति केचित् । अंशावंशुग्रहे । सूत्रान्तरे ब्रह्मणोऽपि दानदर्शनाद्ब्रह्मव्यावृत्तयेऽध्वर्युग्रहणम् । अंशावदाभ्ये च ददातीत्येतावतैव सिद्ध एवमित्यतिदेशवचनं द्वादशधेनुदानपष्ठौहीदानयोर्मध्ये यदंशौ दत्तं तथैवादाभ्येऽपि देयं नानयोर्वैरूप्यमितिज्ञापनार्थम् । चकारः परस्परसमुच्चयार्थः सूत्रान्तरोक्तहिरण्यसमुच्चयार्थो वा ।

ध्रुवे गृहीते न मूत्रं करोत्यावनयनात् ।

मूत्रावरोधस्य न कुर्याद्वेगधारणमिति स्मृतौ निषेधात्तस्यावर्जनीयत्वाच्च निषेधपरिपालनमत्यन्तदीर्घकालसाध्यमिति कृत्वा कर्तुमशक्यं तथा चाशक्यस्य किमर्थं निषेध इति चेत्सत्यं, मध्ये मूत्रकरणे प्रायश्चित्तप्रापणार्थत्वात् । तच्च व्रातपतीष्ट्यात्मकं क्रतुसमाप्तौ । एतेनान्यत्र कर्मसु मूत्रकरणे प्रायश्चित्तं नेत्यवेहि ।

वस्व्यै हिं कुरु तस्यै प्रस्तुहि तस्यै मेऽवरुद्ध्या इति
पुरस्ताद्बहिष्पवमानाद्व्याहृतीर्दशहोतारं च जपति ।

व्याहृतीर्व्यस्ताः समस्ता वा । चित्तिः स्रुगिति दशहोता । अहोमार्थत्वाद्ग्रहः । चकारः परस्परसमुच्चयार्थ एवात्र । अन्यस्यासंभवात् ।

श्येनोऽसि गायत्रछन्दा अनु त्वाऽऽरभे स्वस्तिमा
संपारयेति ॥ १२ ॥ स्तूयमानमन्वारभते ।

स्तूयमानं बहिष्पवमानमनुलक्षयन्नुद्गातृनारभत आलभते स्पृशति उद्गात्रालम्भ एव ।

---

१ च. °र्थेज्ञा° ।

बहिष्पवमानालम्भरूपत्वमनुसंदधनुद्गात्रालम्भं करोतीति यावत् । स्तूयमानमितिवर्तमाननिर्देशगतस्तवनकर्तृनुद्गातृप्रस्तोतृप्रतिहर्तृनारभत इति गम्यते । तत्तद्भक्त्युच्चारणकाले तत्तद्भक्तिसमाप्तिपर्यन्तं तं तमन्वारभत इति । निधनात्मकभक्तौ तु सर्वानवश्यमेकदैव येन केनाप्युपायेनान्वारभते । सर्वैर्हस्ता एकत्र संयोज्या यजमानस्यैकदान्वारम्भसिद्धये । उत्तरत्र मध्यमायां वेति वैकल्पिकमध्यमस्तोत्रीयाग्रहणादत्रोपस्थितत्वेन प्रथमाया एव ग्रहणमिति गम्यते । स्तूयमानमिति बहिष्पवमानविशेषणम् । एतस्य मन्त्रस्यान्वारोह इति नाम । तथा चात्र श्रुतिः—यो वै पवमानानामन्वारोहानित्यादि ।

*मध्यमायां स्तोत्रीयायां वा ।

स्तूयमानपदं लिङ्गविपरिणामेनानुवर्तते । एवमन्वारभत इति पदमपि । तथा चायमन्वयो भवति—मध्यमायां स्तोत्रीयायां बहिष्पवमानमनुलक्षयन्नुद्गातॄनालभत इति । अन्वारोहं जपतीत्येवाऽऽपस्तम्बः ।

स्तुतस्य स्तुतमसीति सर्वाणि स्तोत्राणि स्तुत१ स्तुतमनुमन्त्रयते ।

सर्वाणि स्तोत्राण्यनुमन्त्रयते स्तुतं स्तुतमित्यन्वयः । स्तुतं स्तुतमितिवचनं स्तूयमानशब्दाधिकारनिवृत्त्यर्थम् । सर्वाणि स्तोत्राणि स्तुतान्यनुमन्त्रयत इत्येवमुच्यमाने सर्वस्तोत्रसमाप्त्यनन्तरमनुमन्त्रणं सर्वस्तोत्राणां सकृदेवेत्यपि शङ्कितं स्यात्तद्वारणायैवमुक्तम् । स्तुत१ स्तुत१ स्तोत्रमनुमन्त्रयत इत्येतावतैव सेत्स्यति सत्येवंवचनस्यैवं व्याख्यानं तु पूर्वसूत्रव्याख्यावत्र स्तूयमानान्वारम्भाधिकारलाभार्थम् । तेन स्तुतस्य स्तुतमसीत्यनेन सर्वाणि स्तूयमानान्यनुलक्षयन्नुद्गातॄनन्वारभत इति पूर्वोक्तमत्रापि सिद्धं भवति । स चान्वारम्भः प्रथमायां मध्यमायां वा न संभवति । पूर्वेणावरुद्धत्वात् । तत्र पवमानसंबन्धी श्येनोऽसि गायत्रच्छन्दा इत्यन्वारम्भः । प्रथमायामिति पक्षे प्रथमायां न संभवत्ययमन्वारम्भः । मध्यमायामिति पक्षे मध्यमायामपि न तदितरास्वृक्षु यस्यां कस्यांचिद्दत्यन्वारम्भ इति । स्तूयमानमितिवर्तमानशानच्प्रत्ययात्प्रतिस्तोत्रम् । स्तुतं स्तुतमनुमन्त्रयत इत्यत्रापि स्तुतस्य स्तुतमसीत्यस्यानुवृत्तिरर्थत एव सिद्धा । अनुमन्त्रणस्य मन्त्रोच्चारणप्रधानत्वादितरमन्त्रस्यात्रानुपदेशादिति । अथवा स्तोत्रेषु पवमानानां ग्रहणं भवतीतिशङ्कानिराकरणार्थं वा ।

शस्त्रस्य शस्त्रमसीति सर्वाणि शस्त्राणि ।

शस्त्रं शस्त्रमनुमन्त्रयत इति योग्यतया शेषो ज्ञेयः ।

---

* अस्य सूत्रपुस्तकेष्वनुपलम्भादिदं सूत्रं विद्यते वा न वेति विवेचनीयम् ।

इन्द्रियावन्तो वनामह इति सर्वत्रानु*षजति।[1]

सर्वेषु शस्त्रानुमन्त्रणेषु चेत्यर्थः। ननु अत्र स्तोत्रानुमन्त्रणमन्त्रस्यैकत्वात्तत्रानुषङ्गार्थं पूर्वत्रेत्येवं वक्तव्यं सर्वत्रेत्येवं तु न वक्तव्यम्। मन्त्रबाहुल्याभावात्। प्रथमस्तोत्रानुमन्त्रणवद्द्वितीयादिष्वपि अनुषङ्गो भविष्यति एवं शस्त्रानुमन्त्रणेष्वपि द्वितीयादिषु। तथा च किमर्थं सर्वत्रेत्येवं वचनमिति चेत्सत्यं, प्रथमद्वितीयादिष्वप्यनुषङ्ग इत्येतन्नियमाभावज्ञापनार्थत्वेनैतादृशवचनवैयर्थ्याभावात्। कुत्रैतज्ज्ञापनस्य फलमिति चेत्प्रातःसवनसंबन्धिधिष्ण्यविहरणव्याघारणयोरनुषङ्गस्वीकारेऽपि न माध्यंदिनसवनतृतीयसवनसंबन्धिधिष्ण्यविहरणव्याघारणयोरनुषङ्गस्वीकारावश्यकतेति। एवमन्यत्रापि द्रष्टव्यम्। एतेनैवेदमपि ज्ञायते यत्रानुषङ्गवचनं नास्ति तत्रानुषङ्गः कृताकृत इति।

भूरसि श्रेष्ठो रश्मीनामित्यैन्द्रवायवे हूयमान आदित्यमुपतिष्ठते।

हूयमान इति वर्तमानशानच्प्रत्ययाद्धोमे वर्तमान आदित्योपस्थानम्। भूरसीत्यस्यापि ऐन्द्रवायव एव विनियोगः। आचार्येणाऽऽपस्तम्बबौधायनाभ्यां मैत्रावरुणग्रहे विनियोगमि(इ)व विनियोगानुक्तेः। अपानं मे पाहीति मन्त्रान्तो भवति।

यो न इन्द्रवायू इत्यैन्द्रवायवे हुतेऽङ्गुष्ठमवबाधेत
यदि श्रेयसा स्पर्धेताङ्गुष्ठेनाङ्गुलीं यदि पापीयसा।

यो न इन्द्रवायू इत्यत्र तावतोऽशस्य निराकाङ्क्षत्वासंभवादभिदासतीत्यादिरनुषङ्ग आर्थिकः। अत एवावचनम्। एवं यो नो मित्रावरुणावित्यत्रापि। यो नोऽश्विनावित्यत्र पठित एव। पुनरैन्द्रवायवग्रहणं यो न इन्द्रवायू इत्यारभ्य यदि पापीयसेत्यन्तं नैमित्तिकं न तु यो न इन्द्रवायू इत्यैन्द्रवायवे हुत इत्येतदन्तं भिन्नमेव सूत्रं कृत्वाऽऽदित्यमुपतिष्ठत इति पूर्वसूत्रादनुवर्त्य क्रियानिराकाङ्क्षं कर्तव्यं, तथा च होमोत्तरं यो न इन्द्रवायू इत्यनेनाऽऽदित्योपस्थानं नित्यमेवावबाधनमात्रं नैमित्तिकं तच्च तूष्णीमेव मन्त्रानुपदेशादिति शङ्कां व्यावर्तयितुम्। अवबाधनं निपीडनम्। अवशब्दोऽवनमनार्थः। यदीत्यनेन नैमित्तिकत्वं प्रदर्श्यते। श्रेयसा धनादिना श्रेष्ठेन। स्पर्धा संघर्षो द्वेष इति यावत्। पापीयसा दारिद्र्यादिनाऽल्पेन।

यो नो मित्रावरुणाविति मैत्रावरुणे यो नोऽश्विनावित्याश्विने।

हुतेऽङ्गुल्याऽङ्गुष्ठमवबाधेत यदि श्रेयसा स्पर्धेताङ्गुष्ठेनाङ्गुलीं यदि पापीयसेति पूर्वसूत्रादुभयत्रानुवर्तते।

* ढ. संज्ञकसूत्रपुस्तकेऽनुषजतीति न विद्यते।

1 क. छ. 'वेत्र स°।

अच्छिन्नस्य ते रयिपते सुवीर्यस्येन्द्रेण
सयुजो वयमिति शुक्रꣳ हूयमानꣳ*मन्वारभते।

शुक्रं शुक्रग्रहम् ।

यत्रास्मै चमसमाहरति तं भक्षयति ।

यत्रेतियच्छब्दादुत्तरत्र तच्छब्दाध्याहारोऽर्थात् । यत्रास्मै चमसमाहरति तदा तं भक्षयतीति । यत्र यस्मिन्काले । अस्मै, इति पञ्चम्यर्थे चतुर्थी । अस्माद्वषट्कर्तुः सकाशात्स्वसमीपं चमसं स्वचमसं चमसाध्वर्युर्भक्षणार्थमाहरति यदा तदा तं चमसं भक्षयति भक्षेहीत्यादिविधिना हिन्व म इत्यन्तेन । वसुमद्गणस्य सोमदेवते मतिविदः प्रातःसवनस्य गायत्रच्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति प्रातःसवने भक्षमन्त्रः । नराशꣳसपीतस्य सोमदेवते मतिविदः प्रातःसवनस्य गायत्रछन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति प्रातःसवने नाराशंसभक्षणे मन्त्रः । अन्तिमनाराशंसवर्जमाप्यायनं, समाख्यानिमित्तक एव भक्षो नान्यः । यत्र प्रतिभक्षितुरभावस्तत्रोपाह्वानमध्वर्योः । रुद्रवद्गणस्य सोमदेवते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति माध्यंदिने सवने भक्षणमन्त्रः । नराशꣳसपीतस्य सोमदेवते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति माध्यंदिने सवने नाराशंसभक्षणमन्त्रः । आदित्यवद्गणस्य सोमदेवते मतिविदस्तृतीयस्य सवनस्य जगतीछन्दस इन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति तृतीयसवने भक्षणमन्त्रः । नराशꣳसपीतस्य सोमदेवते मतिविदस्तृतीयस्य सवनस्य जगतीछन्दसः पितृपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीति तृतीयसवने नाराशंसभक्षमन्त्रः । इत्येवंप्रकारेण तं तं स्वचमसं भक्षयतीत्यर्थः । चमसे विद्यमानं सोममित्यर्थश्चमसशब्दस्य । तस्यैव तच्छब्देन परामर्शः । भक्षणसमभिव्याहारात् ।

यथेतरे चमसाः ।

इतरे चमसा ब्रह्मादिभिर्भक्षिता भवन्ति यथा येन प्रकारेण तथा तं चमसं भक्षयतीति पूर्वेणान्वयः ।

गृहपते यजेत्युच्यमाने होतरेतद्यजेति
संप्रेष्यति स्वयं वा निषद्य यजति ।

उच्यमान इतिवर्तमानप्रत्ययादेव तद्वचनकाल एव प्रैषोऽयं, स्वयमेव वा निषद्य स्वदेश एव निषद्य प्राङ्मुख उपविश्य यजति । निषदनमुपवेशनं, यजमानस्योपविष्ट-

* ङ. ज. झ. म. पुस्तकेषु अन्वारभेतेति पाठः ।

त्वादेवोपवेशनसिद्धौ निषद्येतिवचनं समन्त्रकं निरसनं कृत्वा समन्त्रमेवोपविशतीत्येता-दृशार्थलाभार्थम् । तौ च दर्शपूर्णमासयाजुषहौत्रसंबन्धिनावेव ग्राह्यौ । तयोरेवर्त्विक्संबन्धित्वात् । अत एव यजतीतिपरस्मैपदनिर्देशः । प्राङ्मुखताऽत्र यागाभिमुख्यस्वायार्थसिद्धा । याज्या चर्तुप्रैषात्मिकैवात्र ।

ज्योतिषे हिं कुरु तस्यै प्रस्तुहि तस्यै मेऽवरुद्ध्या इति पुरस्तादाज्यानामेकैकस्य स्तोत्रस्य व्याहृतीश्चतुर्होतारं पञ्चहोतारं च जपति ।

प्रातःसवनसंबन्ध्यावर्तिस्तोत्राण्याज्यानि यैर्देवा असुराञ्जेतुमाजिमीयुः । तथा च च्छन्दोगश्रुतिः—यदाजिमीयुस्तदाज्यानामाज्यत्वमिति । आजिं सङ्ग्रामं तेषामाज्यानां मध्य एकमेकमित्येकैकं तस्यैकैकस्य । अत्राऽऽज्यशब्दस्य स्तोत्रपरत्वं दर्शयितुं स्तोत्रस्येति । आज्यानां चतुर्णामेकैकस्य स्तोत्रस्य पुरस्तादित्यन्वयः । व्याहृतीर्व्यस्ताः समस्ता वा । अहोमार्थत्वादप्रहावस्वाहाकारौ चतुर्होतृपञ्चहोतारौ । चकारः पूर्वेण समुच्चयार्थः । जपत्वान्नियतमेव चातुःस्वर्यम् ।

इडायै हिं कुरु तस्यै प्रस्तुहि तस्यै मेऽवरुद्ध्या इति पुरस्तान्माध्यंदिनात्पवमानाद्व्याहृतीश्चतुर्होतारं पञ्चहोतारं च जपति ।

पुरस्तान्माध्यंदिनात्पवमानादित्येतावत्युच्यमाने व्याहृत्यादीनां निवृत्तिः स्यात्सा मा भूदित्येतदर्थं व्याहृतीरित्यादिवचनम् ।

सुपर्णोऽसि त्रिष्टुप्छन्दा अनु त्वा रभे स्वस्ति मा संपारयेति स्तूयमानमन्वारभते ॥ १३ ॥

स्तूयमानमित्यनन्तरं वचनविपरिणामेन पवमानमित्यनुषज्यते । अन्यत्पूर्ववद्व्याख्येयम् ।

व्याख्यातꣳ शुक्रस्यान्वारम्भणम् ।

अच्छिन्नस्य ते रयिपते सुवीर्यस्येन्द्रेण सयुजो वयमिति शुक्रꣳ हूयमानमन्वारभत इत्येतेन सूत्रेण व्याख्यातमुक्तमन्वारम्भणमित्यर्थः ।

सत्रेषु नाराशꣳसेषु दक्षिणेन वेदिमवस्थिता दक्षिणा ददाति ।

वेदिं महावेदिम् । दक्षिणेनेत्येनपा समीपेऽवस्थिता गा दक्षिणा ददाति ।

ता दक्षिणा आह—

गवाꣳ सप्तैकविꣳशतिश्चतुर्विꣳशतिः षष्टिः शतꣳ सहस्रं द्वादशशतꣳ[१] सर्ववेदसमपरिमिता वा ।

द्वादशशतं द्वादशाधिकं शतं, वेद इति धननाम सान्तः शब्दः । सर्ववेदसं सर्वस्वमिति यावत् । तत्तु भूमिपुरुषवर्जमिति न्यायविदः । तत्र जैमिनिसूत्रद्वयं षष्ठाध्याये

---

१ ङ. अ. ङ. अ. शतं द्वादशशतꣳ सहस्रꣳ सर्व० ।

सप्तमे पादे—स्वदाने सर्वमविशेषात् , यस्य वा प्रभुः स्यादितरस्याशक्यत्वादिति । न भूमिः स्यात्सर्वान्प्रत्यविशिष्टत्वादिति च । अग्निष्टोमेऽपि सर्वस्वदानं पक्षे विहितं तत्र पितापुत्रादिकं सर्वमपि देयमविशेषात्पितुरात्मीयत्वेन स्वशब्दवाच्यत्वात् । पुत्रादिषु तु सत्तयैव स्वत्वं, धनेऽपि स्वत्वस्य सत्वात्तदपि देयम् । एवं चैतेषु विशेषाभावात्सर्वं देयमिति पूर्वपक्षसूत्रार्थः । यस्य पदार्थस्य स्वत्वरूपपदार्थस्य षष्ठ्यर्थो निरूपितत्वं यन्निरूपितं प्रभुत्वं त्यागसामर्थ्यं स पदार्थोऽत्र स्वशब्देनोच्यते । तच्च धनमेव तस्यैव दानयोग्यत्वाद्धनेतरपदार्थस्याशक्यत्वाद्दातुमशक्यत्वादिति सिद्धान्तसूत्रार्थः । स्वशब्देन भूमेरपि दानयोग्यत्वात्तस्या अपि दानप्रसक्तावाह—न भूमिर्देया सर्वान्स्वीयपुरुषान्प्रत्यविशिष्टत्वात् । न केवलं स्वस्यैवेति सार्वभौमस्य न महापृथ्वीस्वामित्वं किंतु देशपालनं करादानं च शासनं चेति राज्यतया संबन्धः । अतोऽसौ महापृथिवीमाण्डलिकोऽपि मण्डलं न दद्यादित्युत्तरसूत्रार्थः । वक्ष्यति च यदन्यद्भूमेः पुरुषेभ्यश्चेति । अत्राऽऽपस्तम्बो विशेषमाह—ज्येष्ठं वा पुत्रमपभज्य सर्ववेदसं ददातीति । अस्यार्थः—सर्ववेदसं ददज्ज्येष्ठाय पुत्राय भागं दत्त्वा शेषं ददातीति । अन्यश्च विशेषस्तेनोक्तः—अश्वतरं सहस्रे सर्ववेदसे च ददातीति । गर्दभाद्वडवायां जातोऽश्वतरः सर्वत्र देयः । साहस्रसर्ववेदसयोस्तु नित्यम् । तथा च ब्राह्मणम्—तस्माद्धिरण्यनवक्लृप्तः सर्ववेदसे वा सहस्रे वाऽवक्लृप्त इति । अत्र सहस्रशतादिदक्षिणापक्षा एव मुख्याः सप्तादयोऽर्वाचीनसंख्याः पक्षा गौणा अनाढ्यपराः । शक्तस्य गौणपक्षाश्रयणे दोषः । तथा च वाधूलः—दशगुः सप्तगुना सोमेन यजते शतगुः सप्तगुनेष्ट्वा पापीयान्भवतीति । द्वादशशतं दक्षिणा नित्यः कल्पः प्रकृताविति सूत्रान्तरे । आथर्वणे वैतानसूत्रेऽपि—अल्पस्व एकगुना यजेतेति । अल्पस्वोऽल्पधनः । सप्त गा दत्त्वा शतसहस्रद्वादशशतान्यतमसंख्यापूर्त्यर्थं मौल्यं दद्यादिति केचित् । वस्तुतस्तु सप्तापि सर्वेभ्य ऋत्विग्भ्यः कालसंकेतव्यवस्थाकृतोपभोगमात्रमुद्दिश्य देयाः । ते तु हिंसां वर्जयित्वा परस्परकालसंकेतव्यवस्थाकृतोपभोगमात्रेण विभज्य गृह्णीयुः, इष्टिसंबन्धिगोप्रतिग्रहवत् । एवमेकविंशतिचतुर्विंशतिषष्टिपक्षेऽपि द्रष्टव्यम् । शतपक्षसहस्रदक्षिणापक्षसर्ववेदसपक्षापरिमितपक्षेषु विभागोपपत्तिः स्वरूपत एवोपपद्यते । अपरिमितशब्दार्थो यावता साम्यमुपपद्येत तावानेव कल्पनीयः । चन्द्रमसि मम भोगाय भवेति प्रतिग्रहमन्त्राद्धनयाचनमपि कर्तव्यमृत्विग्भ्यो दानार्थम् । अत्र विशेष उक्त आपस्तम्बेन—सत्रेषु नाराशंसेषु दक्षिणा ददाति बह्वपरिमितमिति । बहु प्रभूतं तच्चापरिमितमनवधृतपरिमाणं धनमिति शेषः ।

**मन्थौदनतिलमाषा हिरण्यं वासोऽवि-**
**रजा च नियुक्तान्येतानि भवन्ति ।**

नियुक्तान्येतानि लब्धुं शक्यानि । मन्थौदनतिलमाषा इत्यत्र समासकरणाद्यद्येतेषां दानं तदा चतुर्णामेव दानं नैकस्येति सूच्यते । इदं मन्थौदनतिलमाषाणां दानं स्वरू-

पेण शतधा विभज्य संभवात् । शक्तौ सत्यां हिरण्यवासोऽयजानां तावतामेव दानं विभागानुरोधेन । यदि तावतामलाभस्तदा यावल्लब्धं तावदेव देयम् । अवशिष्ट-संख्यापूरणार्थं मौल्यद्वारा विभजनीयमिति केचित् । पूर्ववदुपभोगमात्रेणेत्येव युक्तम् ।

अनो रथोऽधीवासोऽश्वः पुरुषो हस्ती वाऽनियुक्तानि ।

अनियुक्तानीति पदच्छेदः । अनः शकटं, रथः प्रसिद्धः । अधीवासः शयनास-नार्थो बहुमूल्यश्चर्मपटः । पुरुषो दासः । इदमुपलक्षणं दास्याः । अत्र वाकारश्रवणे-नैतेषां समुच्चयाभावः सूच्यते । अत्र कन्यादानमपि यस्मै कस्मैचिदृत्विज उक्तं धर्म-सूत्रे—दैवे यज्ञतन्त्र ऋत्विजे प्रतिपादयेदिति । अष्टौ विवाहा धर्मसूत्र उक्तास्तत्रायं तृतीयो विवाहप्रकार उक्तः । देवैर्दृष्टे विवाहे यज्ञतन्त्रे वितत ऋत्विजे कर्म कुर्वते यस्मै कस्मैचित्सपिण्डत्वसप्रवरत्वे परिहाप्य कन्यां दद्यात् । एष एव दैवो विवाह इत्यर्थः । दैवे यज्ञ ऋत्विजे प्रतिपादयेदित्येतावतैव सिद्धौ तन्त्रशब्दस्तावन्महतः सौमिककर्मण एवात्र ग्रहणं नैष्टिकपाशुकयोरल्पयोरिति सूचयति । प्रतिपादयेदिति वचनात्, ऋत्विज इत्येकवचनेनैकस्मा एव प्रतिपादनाच्च नेयं तन्त्रसंबन्धिदक्षिणा । एतच्च प्रतिपादनं प्रधानदक्षिणादानानन्तरम् । तथा च बौधायनः—दक्षिणासु नीय-मानास्वन्तर्वेद्यृत्विजे दद्यादिति । दद्यात्प्रतिपादयेदित्यर्थः । अत्र प्रतिग्रहे मन्त्रविशेष उक्तस्तेनैव गृह्ये—अथ यदि दक्षिणाभिः सह दत्ता स्यात्तां प्रतिगृह्णीयात्प्रजापतिः स्त्रियां यश इत्येताभिः षड्भिरनुच्छन्दसमिति । दक्षिणाभिः सह दत्तेतिवचनमपि कन्याप्रतिपादनस्य यागदक्षिणात्वं नेत्यत्र लिङ्गम् । अयं च प्रतिग्रहमन्त्रोऽस्माकमप्य-विरुद्धः । नच तान्त्रीणां दक्षिणानां दर्शयतीतिसूत्रविरोध इति वाच्यम् । एतस्य प्रतिग्रहमन्त्रविशेषस्य दक्षिणाप्रतिग्रहप्रकरणे सूत्रकारेणापठितस्य तान्त्रीणां दक्षिणानां दर्शयतीतिसूत्रविषयकत्वासंभवेन विरोधाभावात् । दीक्षितो न ददातीतिनिषेधो यज्ञत-न्त्रान्तर्गतकन्याप्रतिपादने न प्रवर्तते वचनबलात् । प्रतिपादनं तु कृत्स्नकन्याप्रतिपाद-नोक्तविधिना कार्यम् । कन्याप्रतिपादनाङ्गभूतहिरण्यादिदानस्य तु ददातिविहितस्या-निषेधोऽस्त्येव । पुण्याहवाचनादिकं कन्यावरणं वाग्दानं मधुपर्कश्च निवर्तते । एतस्य विवाहविशेषस्य फलविशेषोऽप्याश्वलायनेनोक्तः—ऋत्विजे वितते कर्मणि दद्यादलं-कृत्य स दैवो दशावरान्दश परान्पुरुषान्पुनात्युभयत इति । इदं प्रसङ्गादागतमुक्तं प्रकृतमनुसरामः । अन्यादिविषये विशेष आपस्तम्बेनोक्तः—अविमजां गामश्वं पुरुषं हस्तिनं वासोऽनो रथमोदनं मन्थं माषांस्तिलान्व्रीहीन्यवान्गर्दभमित्यधिकान्यनियता-नीति । पूर्वाभिर्दक्षिणाभिः सह विकल्पशङ्कानिवृत्त्यर्थमुक्तमधिकानीति । नित्यवत्समु-च्चयशङ्कानिवृत्त्यर्थमुक्तमनियतानीति । एतानि द्रव्याणि यथोक्ताभ्यो दक्षिणाभ्योऽधि-कानि शक्तौ सत्यां ददाति । एतावतां दाने क्रतुर्गुणवत्तरो भवतीति भावः ।

ता रूपेण वो रूपमभ्यैमीति हिरण्यमाज्यं चाऽऽदायाभ्येति ।

ता दक्षिणा अभ्येति अभिमुखो भूत्वा ता दक्षिणा एतीत्यर्थः ।

तुथो वो विश्ववेदा विभजत्विति मध्यमवक्रम्य विभजति ।

तासां मध्यमवक्रम्य मध्ये प्रविश्य विभजति । कृष्णाजिनेन व्युत्रास्येत्यापस्तम्बः । पुच्छेनेति बौधायनः । यथा चतुर्धा विभक्ता भवेयुस्तथा कृष्णाजिनस्य पुच्छेन व्युत्रासयतीत्यर्थः ।

द्वादश द्वादश मध्यतःकारिभ्यः षट् षडर्धिभ्य-
श्चतस्रश्चतस्रस्तृतीयिभ्यस्तिस्रस्तिस्रः पादिभ्यः ।

मध्यतःकारिभ्योऽर्धो भागो येषामस्तीत्यर्धिनः । एवं द्वितीयिपादिशब्दयोरपि द्रष्टव्यम् । अत्राऽऽपस्तम्बः—यावदध्वर्यवे ददाति तस्यार्धं प्रतिप्रस्थात्रे तृतीयं नेष्ट्रे चतुर्थमुन्नेत्र एतेनैवेतरेषां दानमुक्तमिति ।

एवꣳ शेषम् ।

शेषशब्देन मन्थादिकमनआदिकं चोच्यते । इदं चैतेषां सत्त्वे द्रष्टव्यम् । अनआदीनां विभागसंभवे गोवद्विभागः । असंभवे मौल्यद्वारेति केचित् । उपभोगमात्रेणेति युक्तम् ।

होताऽध्वर्युर्ब्रह्मोद्गाता च मध्यतःकारिणः ।

सदस्यव्यावृत्तय एतेषामुत्कीर्तनम् । ननु यथाश्रद्धं सदस्यायेतिवक्ष्यमाणपृथगभिधानादेव सिद्ध एतत्परित्यागार्थकैतत्सूत्रप्रणयनं व्यर्थमिति चेत्सत्यं, यथाश्रद्धं सदस्यायेत्येतत्सूत्रस्य दक्षिणाधिक्यशङ्काव्यावृत्त्यर्थत्वेन सार्थक्यात् ।

मैत्रावरुणः प्रतिप्रस्थाता ब्राह्मणाच्छꣳसी प्रस्तोता चार्धिनोऽच्छावाको नेष्टाऽऽग्नीध्रः प्रतिहर्ता च तृतीयिनः शेषाः पादिनः ।

के तेऽर्धिनस्तृतीयिनः पादिन इत्याकाङ्क्षायामिदं सूत्रम् । शेषशब्देन ग्रावस्तोत्रुन्नेतृपोतृसुब्रह्मण्या उच्यन्ते । पादशब्देन चतुर्थोऽश उच्यते ।

एतत्ते अग्ने राध ऐति सोमच्युतमिति विभक्ता आनयति ।

विभक्ता दक्षिणाः । अन्यत्स्पष्टम् ।

आनयनप्रयोजनमाह—

अग्रेण प्राग्वꣳशमपरेण सदो दक्षिणेनाग्नीध्रीयमन्तरेण चात्वालोत्करावुदीचीरुत्सृजति ।

उत्सर्गोऽत्र प्रयोजनम् । उदीचीः, उदङ्मुखाः ।

ऋतस्य पथा प्रेत चन्द्रदक्षिणा इति गच्छन्तीरनुमन्त्रयते ।

गच्छन्तीर्गाः । अन्यत्स्पष्टम् ।

ब्राह्मणमद्य राध्यासमृषिमार्षेयमिति हिरण्यं
दक्षिणाभागं चाऽऽदायाऽऽग्नीध्रमभ्येति ।

आग्नीध्राभिमुखगमनार्थो मन्त्रः । ऋषिर्वेदस्तस्याध्येता । आर्षेयस्तदर्थवेत्ता । एष वै ब्राह्मण ऋषिरार्षेयो यः शुश्रुवानितिश्रुतेः ।

एतेनैव मन्त्रेण हिरण्यं दक्षिणाभागं चाऽऽग्नीध्रे ददाति ।

एतेनैव मन्त्रेण, आग्नीध्राभिमुखगमनार्थेनैव मन्त्रेण । अन्यत्स्पष्टम् । प्रतिप्रतिग्रहं मन्त्रावृत्तिराग्नीध्रस्य ।

वि सुवः पश्य व्यन्तरिक्षमिति सदः प्रेक्षते ।

सदस्यैरिति मन्त्रान्तः ।

अस्मद्दात्रा देवत्रा गच्छतेति दक्षिणाः ।

प्रेक्षत इति पूर्वसूत्रादनुवर्तते । सᳫंस्कृतमिति मन्त्रान्तः ।

पूर्वेण द्वारेण सदः प्रविश्य ॥ १४ ॥ आत्रेयाय
हिरण्यमुत्तमं ददाति तेनैव मन्त्रेण येनाऽऽग्नीध्रे ।

आत्रेयोऽत्रिगोत्रोत्पन्नः । शुद्धात्रेयालाभे गविष्ठिरवाद्भुतकमुद्गलात्मकतदीयगणचतुष्टयोत्पन्नः । तस्मै हिरण्यमुत्तममुत्कृष्टमितरदत्तहिरण्यापेक्षया जातितो मानतश्चोत्कृष्टम् । तेनैव मन्त्रेण येन मन्त्रेणाऽऽग्नीध्रे दत्तं तेनैवेत्यर्थः ।

तस्मिन्नविद्यमाने य आर्षेयोऽनूचानोऽ-
नूचानपुत्रस्तस्मै तां दक्षिणां दद्यात् ।

तस्मिन्नत्रिगोत्रोत्पन्ने तदीयगणचतुष्टयोत्पन्ने चाविद्यमाने तदलाभे यः कश्चनाऽऽर्षेयोऽनूचानोऽनूचानपुत्रश्च ऋषिर्वेदस्तं चार्थं च यो वेद स आर्षेयः । एष वै ब्राह्मण ऋषिरार्षेयो यः शुश्रुवानिति श्रुतेः । अनूचानः, मार्गादनपगतोऽनूचान इति भारद्वाजः । यः स्वयमनूचानोऽनूचानपुत्रोऽपि यस्य लिङ्गं चात्र भवति पितृमन्तं पैतृमत्यमिति तस्मै तामात्रेयार्थकल्पितां दक्षिणां दद्यादित्यर्थः । अत्राऽऽपस्तम्बो विशेषमाह—तदभावे य आर्षेयः संहितस्तस्मै दद्यादिति । संहितः पित्रादीनामार्षेयेण संतत इत्यर्थः ।

अथर्त्विग्भ्यो दक्षिणाभागान्ब्रह्मन्मनस्ते
ददामि तदनेन निष्क्रीणामीति ब्रह्मणे
ब्रह्मसदन आसीनायेदं ददामीति
यद्दास्यन्भवति तदनुदिशति ब्रह्मणे ।

ब्रह्मन्मनस्ते ददामि तदनेन निष्क्रीणामीति मन्त्रेण ब्रह्मसदन आसीनाय ब्रह्मणे मन एव दत्त्वा दत्तस्य मनसो ब्रह्मणः सकाशान्मोचनायेदं ददामीत्यनेन तस्य निष्क-

यणं यद्दास्यन्भवति गोरूपं द्रव्यं दास्यन्भवति तद्ब्रह्मणे मनोनिष्क्रयणत्वेनानुदिशति संकल्पयतीत्यर्थः । इत्येवं ब्रह्मणे दानम् ।

एवमितरेभ्यः ।

तत्तदङ्गनिष्क्रयणानुदेश इत्यर्थः ।

होतर्वाचं ते ददामि तामनेन निष्क्रीणा-
मीति होत्रे होतृषदन आसीनाय ।

इदं ते ददामीत्येवमेव सर्वत्रानुदेशः । वक्ष्यति चेदं ददामीति सर्वत्रानुषजतीति ।

अध्वर्यो प्राणं ते ददामि तमनेन निष्क्री-
णामीत्यध्वर्यवे हविर्धान आसीनाय ।

स्पष्टम् ।

उद्गातश्चक्षुस्ते ददामि तदनेन निष्क्री-
णामीत्युद्गात्र औदुम्बर्यामासीनाय ।

स्पष्टम् ।

होत्रकाः श्रोत्रं वो ददामि तदनेन निष्क्रीणामीति
होत्रकेभ्योऽन्तःसदसं यथाधिष्ण्यमासीनेभ्यः ।

यथाधिष्ण्यमासीनेभ्य इत्येतावतैव सदस्यन्तरुपवेशने सिद्धेऽन्तःसदसमितिवचनं धिष्ण्यसमीप उपवेशनं सदस्यन्तरुपवेशनमात्रं वेतिपक्षद्वयसूचनार्थम् । इदमाग्नीध्रस्य न भवत्यन्तःसदसमिति । तस्य तत्रोपवेशनस्यैवाभावात् । होत्रका मैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्ट्रच्छावाकाग्नीध्राः । यथाधिष्ण्यमासीनेभ्य इति सूत्रात् । प्रतिप्रस्थात्रादीनां तु तत्तन्मुख्यर्त्विङ्नामसमाख्यानात्स स एव तेषां मन्त्रो यो गणमुख्यस्य क्रमस्त्वेषामधितृतीयिपादिक्रमाद्धोतृवर्गक्रमाच्च द्रष्टव्यः । तद्यथाऽध्वर्यो प्राणं ते ददामि तमनेन निष्क्रीणामीति प्रतिप्रस्थात्रे । उद्गातश्चक्षुस्ते ददामि तदनेन निष्क्रीणामीति प्रस्तोत्रे, होतर्वाचं ते ददामि तामनेन निष्क्रीणामीति ग्रावस्तुते, अध्वर्यो प्राणं ते ददामि तमनेन निष्क्रीणामीत्युन्नेत्रे, उद्गातश्चक्षुस्ते ददामि तदनेन निष्क्रीणामीति सुब्रह्मण्याय, उद्गातश्चक्षुस्ते ददामि तदनेन निष्क्रीणामीत्यन्ततः प्रतिहर्त्रे ।

प्रतिप्रस्थात्रे च हविर्धान आसीनाय ।

चकारादुन्नेत्रेऽपि । सुब्रह्मण्यायोद्गातृसमीपे सदस्यन्तरेवाऽऽसीनाय । ग्रावस्तुतेऽपि होतृसमीपे सदस्यन्तरेवाऽऽसीनाय । प्रस्तोत्रादिभ्यः स्वस्वस्थान आसीनेभ्यः । अमुमर्थं स्पष्टमाहाऽऽपस्तम्बः—अन्तःसदस्यासीनेभ्य ऋत्विग्भ्यो दद्याद्धविर्धा-

नेऽध्वर्युभ्य इति । यद्यपि नेष्टाऽध्वर्युस्तथाऽपि तस्य होत्रकत्वाद्धिष्णियसमीप आसीनायैव दानम् ।

यथाश्रद्धꣳ सदस्याय चमसाध्व-
र्युभ्यः प्रसर्पकेभ्यश्च ददाति ।

यथाश्रद्धमित्यनेन तन्त्रसंबन्धिदक्षिणाबहिर्भूतां दद्यादिति बोध्यते । स्पष्टमनुमर्थमाहाऽऽपस्तम्बः—अन्यत्र दक्षिणाभ्यश्चमसाध्वर्युप्रसर्पकसदस्येभ्य इति । यथाश्रद्धमित्यनेन परिमाणानियमोऽपि बोध्यते ।

सदस्याऽऽत्मानं ते ददामि तमनेन निष्क्रीणा-
मीति सदस्यायान्तःसदसं दक्षिणार्ध आसीनाय ।

स्पष्टम् ।

चमसाध्वर्यवोऽङ्गानि वो ददामि तान्यनेन निष्क्री-
णामीति चमसाध्वर्युभ्यो हविर्धान आसीनेभ्यः ।

स्पष्टम् ।

प्रसर्पका लोमानि वो ददामि तान्यनेन निष्क्रीणा-
मीति प्रसर्पकेभ्योऽन्तःसदसं दक्षिणार्ध आसीनेभ्यः ।

स्पष्टम् । यद्यपि सदस्योऽप्यृत्विगेव सप्तदशस्तथाऽपि वचनात्तन्त्रसंबन्धिदक्षिणासु न भागभाग्भवति ।

इदं ददामीति सर्वत्रानुषजति ।

इदं वचनमनुदेशः संकल्पमात्रं तथा च मानसिकोऽपि संकल्पः सिध्यति न मन्त्र इति स्यात्तन्मा भूत्किंतु मन्त्रमुच्चार्यैव संकल्पो यथा स्यादित्येतादृशार्थलाभार्थम् ।

न भीतो ददाति ।

भयशङ्कयाऽपि नायोग्याय ददाति ।

न याचमानाय ।

याचमानाय प्रसर्पकायाप्रसर्पकाय च न ददाति ।

न कण्वकाश्यपेभ्यः ।

निषिद्धं दानं गोत्रद्वये येषां कण्वकश्यपप्रवरस्तस्मै दानं निषिध्यते । हेतुर्निगमे—कण्वं तु बधिरं विद्याद्विद्यात्काणं तु कश्यपम् । इति । वस्तुतस्स्वयं हेतुश्चिन्त्यः । अङ्गहीनत्वेऽपि तेषामचिन्त्यप्रभावत्वाद्वचनमेव शरणमत्र ।

न वीणागाथिभ्यः ।

वीणागाथाभ्यामेव ये जीवन्ति तेभ्यो न देयम् ।

नानृत्विजे।

योऽनृत्विक्सदःप्रसृतः स्यात्तस्मै न दद्याद्यदि शाखाध्ययनवान्न भवेत्। अमुमर्थं स्पष्टमाहाऽऽपस्तम्बः—नाब्राह्मणाय ब्राह्मणायाप्यविदुषे न देयमप्यब्राह्मणाय विद्याविदे दद्याद्यां स विद्यां वेद तां तयाऽवरुन्ध इति। त्रैवर्णिकेषु य एव कश्चित्सार्थवित्तस्मै दद्यान्नान्यस्मै यद्यसौ शाखां वेद तां तया दक्षिणयाऽऽप्नोति तस्माद्वेदनमेव दानार्हत्वे निदानमिति भावः।

न ज्ञातये।

ज्ञातयः सजातीयाः संबन्धिनश्च। यां स विद्यां वेद तां तयाऽवरुन्ध इत्यापस्तम्बेनात्रापि सार्थवेदनं निदानमुक्तं न तु स्वरूपमात्रवेदनमिति विवेकः।

नाप्रसृप्ताय।

यः सदसि प्रविष्टो न भवति तस्मै च न दद्यात्। कर्मज्ञानोपयोगित्वेन यः सदसि न प्रवेष्टुं योग्यस्तस्मै न दद्यादिति तात्पर्यार्थः। यां स विद्यां वेद तां तयाऽवरुन्ध इत्ययं हेतुरापस्तम्बेन सर्वत्रैवोक्तः।

नाश्रोत्रियाय।

श्रोत्रियोऽधीतवेदः। न केवलं गान्धर्वादिविद्यावान्, यः केवलगन्धर्वादिविद्यावानेव नाधीतवेदस्तस्मै न दद्यादित्यर्थः।

नाब्राह्मणाय।

ब्राह्मणायैव देयं नान्यस्मै वर्णायेत्युत्सर्गः।

वेदविदे दद्यात्।

यदि अन्यस्मै वर्णाय दद्यात्तदाऽधीतसार्थवेदायेत्यर्थः। अमुमर्थं स्पष्टमुक्तवानापस्तम्बः—नाब्राह्मणाय ब्राह्मणायाप्यविदुषे न देयमप्यब्राह्मणाय विद्याविदे दद्याद्यां स विद्यां वेद तां तयाऽवरुन्ध इति। आर्षेयाय विदुषे दानस्य फलविशेष उक्त आपस्तम्बेन—यामार्षेयाय च विदुषे स्वर्गं तया लोकमवाप्नोतीति।

यामन्यो दीयमानां प्रत्याचक्षीत यं द्विष्यात्तस्मै तां दक्षिणां दद्यात्।

यां दक्षिणां दीयमानामन्यो यः कश्चन प्रत्याचक्षीतैव न कामयीत यदि नेच्छेद्ग्रहीतुं तां प्रत्याख्यातां दक्षिणां यः स्वस्य द्वेष्यस्तस्मै द्वेष्याय दद्यादित्यर्थः।

स हान्यया प्रतिगृह्णीयात्।

स प्रतिग्रहीता, हेति निश्चयार्थे, अन्यया दक्षिणया सहैव प्रतिगृह्णीयात्। प्रतिगृह्णीयादित्यत्रान्तर्भावितो णिच्। तेन तं प्रतिग्राहयेदित्यर्थो भवति। अयमर्थ आप-

१ च. छ. 'य वेदवि'।

स्तम्बसूत्रसंवादानुरोधेन। तच्च सूत्रमित्थम्—यामन्यो दीयमानां न कामयेत यं द्विष्यात्तस्मै दद्यात्सहान्येन धनेनेति। यदि सर्वैरपि प्रत्याख्यातां गां यदि गोभिः सह चारयेत्स्वी कुर्याद्वा पृथक्चारयिष्यामीति साऽशिवा भूत्वैव दशेत्, अतस्तां द्वेष्यायैव दद्यात्। अमुमर्थमाहाऽऽपस्तम्बः—यद्यतिनुत्तां दक्षिणां गोषु चारयेत्प्रति वा गृह्णीयात्साल्लावृक्येव प्रतिनीयादिति।

**अन्ततः प्रतिहर्त्रे दद्यादात्रेयाय वा।**

प्रतिहर्त्रे दक्षिणामन्ततो दद्यात्। आत्रेयाय वाऽन्ततः। आत्रेयायान्ततो दानपक्षे तृतीयेषु चतुर्थस्थाने प्रतिहर्त्रे दानम्।

**न मरुत्वतीययोरनूक्ता दद्यात्।**

यदि मरुत्वतीययोर्ग्रहयोः पुरोनुवाक्याऽनूक्ता भवति ततः परं न देयं कस्मै कस्मैचिदागतायाधिकारिणेऽपि यजमानेन न देयमित्यर्थः। प्रतिग्रहीतृभिरपि न प्रतिग्राह्यम्। अत्र दानं प्रतिग्रहोपलक्षणम्। अमुमर्थं स्पष्टमाहाऽऽपस्तम्बः—यदा मरुत्वतेऽनूक्तमथ न देयं न प्रतिगृह्यमिति।

**यदि दद्यादनूबन्ध्यावपाया[१] हुतायां**
**दद्यादुदवसानीयायां वेष्टौ ॥ १५ ॥**

**इति हिरण्यकेशिसूत्रे दशमप्रश्ने चतुर्थः पटलः।**

---

अनूबन्ध्यावपायां हुतायां सत्यां दद्यात्प्रतिगृह्णीयुश्च। अत्रापि दानं प्रतिग्रहोपलक्षणम्। अमुमर्थं स्पष्टमाहाऽऽपस्तम्बः—अनूबन्ध्यावपाया[२] हुतायां दद्यात्प्रतिगृह्णीयुरिति। आमिक्षापक्षश्चेत्तद्यागोत्तरम्। उदवसानीयायामिष्टौ समाप्तायां सत्यां वा दद्यादित्यर्थः। पूर्णाहुतिपक्ष इदम्। सोमप्रवाकायापि यथाश्रद्धं सर्वदक्षिणादानोत्तरं बहिर्भूता दक्षिणा देया प्रसर्पकदक्षिणादानोत्तरम्। छान्दोग्योपनिषदि उषस्तिब्राह्मणदर्शनात्। सदस्याय शक्तौ सत्यां सर्वर्त्विग्दक्षिणासममर्धं चतुर्भागं वा बहिर्भूतं द्रव्यं यथाश्रद्धं देयम्।

नारदः—ऋत्विजो व्यसनेऽप्येवमन्यस्तत्कर्म निस्तरेत्।
लभेत दक्षिणाभागं स तस्मात्संप्रकल्पितम् ॥ इति।

अन्य ऋत्विग्व्यतिरिक्तोऽन्यः।

मनुः—ऋत्विग्यदि वृतो यज्ञे स्वकर्म परिहापयेत्।
तस्य कर्मानुरूपेण देयोंऽशः स हि कर्तृभिः ॥

---

१ क. च. छ. °ति। अनू°। २ क. च. छ. ढ. °न्ध्यायां व°।

दक्षिणासु प्रदत्तासु स्वकर्म परिहापयेत् ।
कृतस्यैव लभेतांशमन्येनैव च कारयेत् ॥ इति ।

अन्यच्च मनुः—ऋत्विजं यस्त्यजेद्याज्यो याज्यं चर्त्विक्त्यजेद्यदि ।
शक्तं कर्मण्यदुष्टं च तयोर्दण्डः शतं शतम् ॥ इति ।

इत्योकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्नियुक्तवाजपेययाजिसर्वतोमुखया-
जिद्विसाहस्राग्नियुक्तपौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथ-
दीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसू-
त्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंताप-
शामिकायां ज्योत्स्नाख्यायां वृत्तौ दशमप्र-
श्नस्य चतुर्थः पटलः ॥ ४ ॥

---

अथ दशमप्रश्ने पञ्चमः पटलः ।

---

नीतासु दक्षिणासु हरिणस्य रघुष्यतोऽधिशी-
र्षणि भेषजꣳ सक्षेत्रियं विषाणया विषूची-
नमनीनशदित्युन्मुच्य कृष्णविषाणामनु त्वा
हरिणो मृगः पद्भिश्चतुर्भिरक्रमीन्माऽहि-
र्भूत्वा पृदाकुरिति चात्वाले प्रास्यति ।

नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यतीत्येतस्य ब्राह्मणस्य स्मरणमा-वश्यकं प्रयोगकाल इतिबोधनार्थं कृष्णविषाणोन्मोचने हरिणस्य रघुष्यत इति मन्त्रः । चात्वाले प्रास्यतीत्यत्र पूर्वसूत्रात्कृष्णविषाणामित्यनुवर्तते ।

रथंतरे वरं ददाति ।

यदि रथंतरं पृष्ठं तदैवायं वरो न बृहदादिषु इत्येतदर्थम् । यदि सा(?)अत्राऽऽप-स्तम्बेन विशेष उक्तः—ऋत्विग्भ्यो नमस्करोति । एवं दत्तासु नीतासु च दक्षिणा-स्वृत्विग्भ्यो नमस्करोतीत्यर्थः । होतुः पृष्ठे वरं ददातीति सामान्यतो वक्तव्यम् । तेनैव सर्वेषु होतुः पृष्ठेषु वरदानसिद्धौ सामान्यतः सर्वेषु होतुः पृष्ठेषु वरदानमिष्टमभ-विष्यत्तदा होतुः पृष्ठे वरं ददातीति सामान्यत एवावक्ष्यत् । नच तथा कृतम् । अत एतदर्थत्वमेव ।

वामदेव्ये वरं ददाति ।

वामदेव्यग्रहणप्रयोजनं रथंतरग्रहणवत् । उद्गातृभ्य उद्गात्रे वेदं वरदानम् ।

निष्केवल्ये वरं ददाति ।

निष्केवल्याख्ये शस्त्रे । होत्र इति सामर्थ्यात् । पुनः पुनर्वरं ददातीतिवचनं रथंतरपृष्ठस्याभावेऽप्येतयोर्वरदानं भवत्येव न तु संनियोगशिष्टशङ्का कार्येतिबोधनार्थम् ।

आदित्यग्रह॰ हूयमानमन्वारभते ।

स्पष्टम् ।

आयुषे हिं कुरु तस्यै प्रस्तुहि तस्यै मेऽवरुद्ध्या इति
पुरस्तादार्भवात्पवमानाद्याहुतीः पञ्चहोतारं च जपति ।

गतार्थम् ।

सधाऽसि जगतीछन्दा अनु त्वाऽऽरभे
स्वस्ति मा संपारयेति स्तूयमानमन्वारभते ।

इदमपि कृतव्याख्यानम् ।

यत्र[1] स्वं चमसं न्यन्ते[2] त्रीन्पुरोडाशशकलान्दक्षिणत उपास्यति[3] ।

अत्र स्व॰ स्वमिति त्री॰त्रीनिति चोभयत्र वीप्सासहितः पाठः प्रामादिक एव । अन्यथैतत्सूत्रप्रणयनमेव व्यर्थं स्यादिति ज्ञेयम् । तेन यजमानकर्तृकमात्रपरतयैवेदं सूत्रमुपपन्नं भवति ।

तत्कृत्वा प्राचीनावीतं कृत्वा षड्ढोतारं व्याख्याय
दानप्रभृतीन्प्रत्यायनान्तान्पिण्डपितृयज्ञमन्त्राञ्जपति* ।

उपास्यन्तीति जपन्तीत्युभयत्र बहुवचनान्तपाठोऽपि प्रामादिक एवानन्तरोक्तहेतोः । नन्वाध्वर्यवसूत्रान्तर्गतवीप्सासहितपाठेन बहुवचनान्तपाठेन चैव सिद्धावत्र वचनमृत्विगसाहित्यार्थम् । तेन पृथगेवर्त्विक्कर्तृकपिण्डदानानन्तरमेवैतस्य भवति ।

यज्ञायज्ञिये वरं ददाति ।

उद्गातृभ्य उद्गात्रे वा ।

पुरस्तादग्निष्टोमस्तोत्राद्याहुतीः सप्तहोतारं च जपति ।

यज्ञायज्ञियस्याग्निष्टोमसंस्थास्तोत्रत्वादग्निष्टोमस्तोत्रादित्युक्तम् ।

सुभूरसि श्रेष्ठो रश्मीनां प्रियो देवाना॰ स॰[4]साधनीयः ।
तं त्वा सुभो[5] देवा अभिसंविशन्त्विषोऽसि त्वेषोऽसि

---

* ज. झ. पुस्तकयोर्जपन्तीति पाठः ।

---

१ ङ. च. ज. झ. ञ. °त्र स्व॰ स्वं । २ ङ. च. ज. झ. ञ. °न्ते त्री॰त्रीन्पु° । ३ ङ. च. ज. झ. ञ. उपास्यन्ति । ४ ङ. ज. झ. ञ. स॰सध° । ५ ङ. सुनो । च. सुभवो । ज. ञ. सुतो । झ. सुवो ।

नृम्णोऽसि यहोऽसि व्रतोऽसि स्वोऽसि चारणोऽसि
शूद्रोऽस्यार्योऽसि तस्य त इषस्य त्वेषस्य नृम्णस्य यहस्य
व्रतस्य स्वस्य चारणस्य शूद्रस्य चाऽऽर्यस्य च भुक्षिषीय
यथा त्वꣳ सूर्योऽसि विश्वदर्शत एवमहं विश्वदर्शतो भूया-
समित्याग्निष्टोमं निष्पाद्याऽऽदित्यमुपतिष्ठते यद्यस्तमितः
स्यादाहवनीयमेवाऽऽदित्योपस्थानेनोपतिष्ठते ॥ १६ ॥

अग्निष्टोमं निष्पाद्येत्यमेन या या क्रतुसंस्था तां तां तत्तत्संस्थाप्रयुक्तसाम्ना निष्पाद्य समाप्त्यानन्तरमेवाऽऽदित्योपस्थानं कर्तव्यम् । यदि आदित्योऽस्तं गतो भवेदाहवनीय-मेवाऽऽदित्यभावनयोपतिष्ठते । यत्र यत्रेदं वचनं तत्रैवेदम्, अन्यत्र त्वादित्योपस्था-नलोप एवेति ज्ञेयम् ।

व्याख्यातो हारियोजनः ।

तꣳ सर्वे समशः प्रतिविभज्येत्यादिना रय्यै त्वा पोषाय त्वेत्यन्तेन सूत्रेण व्याख्यात उक्तः ।

दधिद्रप्सः ।

दधिक्राव्णो अकारिषमित्याग्नीध्रागारे दधिद्रप्सान्भक्षयन्तीत्यनेन सूत्रेण व्याख्यात उक्तः ।

अप्सुषोमः ।

अप्सुषोमो नाम चमसस्तत्प्रयुक्तं कर्माप्सुषोमः । उक्ता चेयं संज्ञा लाट्यायनद्रा-ह्यायणाभ्यामप्सुषोमा नाम चमसाश्चात्वालदेशेऽद्भिः पूर्णास्तेषु हरितानि तृणानि प्रास्तानि भवन्तीत्यादिना । एकधनपरिशेषानित्यारभ्य चात्वालेऽवनयन्तीत्येतदन्तं कर्माप्सुषोमशब्देनोच्यते ।

मिन्द्योपस्थानम् ।

यन्म आत्मनो मिन्दाऽभूदितिमिन्द्याऽऽहवनीयमुपतिष्ठन्त्य(न्त(?)) इत्यन्तेन सूत्रेण व्याख्यातमुक्तमित्यर्थः ।

शकलाभ्याधानम् ।

देवकृतस्यैनसोऽवयजनमसीत्यादिना प्रतिमन्त्रमाहवनीये शकलानभ्यादधतीत्यन्तेन सूत्रेण व्याख्यातमुक्तमित्यर्थः ।

सख्यविसर्जनं च ।

उभा कवीत्यादिना सख्यानि विसृजन्त इत्यन्तेन सूत्रेण व्याख्यातमुक्तमित्यर्थः । चकारः पूर्वैः कर्मभिः सह समुच्चयार्थः ।

---

१ अ. ढ. वारणोऽसि । २ अ. ढ. वारणस्य । ३ ज. झ. ञ. यदाऽस्त° । ४ ङ. ज. ञ. ढ. °प्सुहोमः ।

हुतेषु समिष्टयजुःषु अग्निना देवेन पृतना
जयामीति जागतान्विष्णुक्रमान्क्रामति ।

हुतेषु समिष्टयजुःष्वित्यनेनैतत्पूर्वतनं तावत्पर्यन्तं प्राकृतं पौरोडाशिकं पाशुकं च कर्म सूच्यते । सौमिका एते विष्णुक्रमा जागतसंज्ञका ये विष्णवतिक्रमैर्मन्त्रैः क्रम्यन्ते ।

उपसृजन्धरुणं मात्रे मातरं धरुणो धयन्। रायस्पोषमि-
षमूर्जमस्मासु दीधरदित्युपनिष्क्रामन्नौदुम्बरीमुत्खिदति ।

अवभृथार्थं निष्क्रामन्नौदुम्बरीं स्वस्थानादुत्पाटयतीत्यर्थः । निष्क्रामन्निति शतृप्रत्ययान्निष्क्रमणसमकालमेवौदुम्बर्या उत्खेदनम् ।

अव ते हेडो वरुणेत्युन्मुच्य कृष्णाजिनं चात्वाले प्रास्यति ।

औदुम्बर्युत्खेदनानन्तरं तूष्णीमेव स्वाङ्गाद्विसृज्य मन्त्रेण चात्वाले प्रक्षिपतीत्यर्थः ।

उदु त्यं चित्रमिति द्वाभ्यामादित्यमुपतिष्ठते यद्यस्त-
मितः स्यादाहवनीयमेवाऽऽदित्योपस्थानेनोपतिष्ठते ।

यत्र यत्रेदं वचनं तत्रैवेदम् । अन्यत्र त्वादित्योपस्थानलोप एवेत्युक्तमेव प्राक् । उदु त्यं जातवेदसं चित्रं देवानामुदगादनीकमिति द्वाभ्यामादित्योपस्थानम् । अन्यत्स्पष्टम् ।

व्याख्यातं निधनोपायनम् ।

सह पत्न्या त्रिः सर्वे साम्नो निधनमुपयन्ति मध्यदेशे द्वितीयं साम्नो निधनमुपयन्त्युदकान्ते तृतीयमित्येतैः सूत्रैर्व्याख्यातमुक्तमित्यर्थः ।

सुमित्रिया च मार्जनम् ।

सुमित्रियेतिस्त्रीलिङ्गनिर्देशादयं मन्त्र ऋक्त्वेन ज्ञेय इति गम्यते । सुमित्रा न आप ओषधयः सन्त्वित्ययं मन्त्रः सुमित्रिया(त्रा) । सुमित्रिया मार्जनं चेत्यन्वयः । सुमित्रा न आप इति मार्जयन्त इत्यनेन व्याख्यातमुक्तमित्यर्थः ।

इन्द्रियाय ज्यैष्ठ्याच्छ्रैष्ठ्यान्मा योषमित्युन्मुच्य कृष्णा-
जिनमभ्युक्ष्य निदधाति यदि पुरस्तादप्रास्तं भवति ।

यदि पुरस्तादप्रास्तं भवतीत्यनेन चात्वाले यत्कृष्णाजिनप्रासनं तस्य पाक्षिकत्वं सूच्यते । तेन यदि पुरस्तादप्रास्तं भवति तदैतन्निधानमिति अवगम्यते ।

सुमित्रा न इत्यभिप्रगाह्यानुपमज्जन्तौ सहशिरस्कौ स्नातोऽ-
न्योन्यस्य पृष्ठं प्रक्षालयतः प्रतीपमाप्लवमानौ गाहेते ।

स्नानं द्विविधम्—आप्लवरूपमुपमज्जनरूपं चेति । तत्राऽऽप्लवरूपं स्नानं तु शरीरप्रक्षालनमात्ररूपम् । उपमज्जनरूपं तु अप्स्वन्तर्धानात्मकम् । तत्रोपमज्जनरूपस्नान-

---

१ ङ. ज. झ. ञ. 'रीमात्खिद' । २ ङ. ज. झ. ञ. 'याज्ज्यैष्ठ्या' ।

स्यात्र निषेधः । तेन शरीर उदकोत्क्षेपणमात्रेण स्नानं सिद्धं भवति । गृहस्थधर्मेष्वपि वक्ष्यति—सशिरोवमज्जनमप्सु वर्जयेदिति । लाट्यायनद्राह्यायणावत्रैवाऽऽहतुः—अप उपस्पृश्य त्रिरभ्युक्षेरन्निति । सूत्रस्वरसतोऽपि उपमज्जनरूपं स्नानं प्रतिषिध्याऽऽहाऽऽप्लवमानौ गाहेते इति । यत्त्वत्र केचिदाहुः—अनुपमज्जन्तावशोधयन्तावङ्गानि स्नात इति, तत्तुच्छम् । अन्योन्यस्य पृष्ठं प्रक्षालयत इत्युत्तरसूत्रेण विरोधात् । प्रक्षालनं शोधनं तस्य पृष्ठे स्वयं दुष्करत्वादन्येन कर्तव्ये कर्तृनियमार्थमिदं नतु धावनार्थं तस्येच्छाप्राप्तत्वात्, अनिच्छतोऽपि त्रिः पादौ प्रक्षालयेत्त्रिरात्मानमित्यादिस्मृतिप्राप्तत्वात्, नवनीतदीक्षादिजन्मनोऽङ्गमलस्य शोध्यताया अत्रैव सर्वाणि दीक्षितव्यञ्जनान्यपप्लावयन्त इति सूत्रेण भरद्वाजेन स्पष्टतयोक्तत्वात्, शुक्रादीक्षायै तपसो विमोचनीरितिमन्त्रलिङ्गाच्च । तस्माच्छोधयान्येव सर्वाण्यङ्गानीत्येव युक्तम् । अत्राऽऽपस्तम्बेन यद्दिदीक्ष इति मन्त्रत्रयस्य विनियोग उक्तः—यद्दिदीक्षे मनसा ऋषयो येन प्राणा अप्यो लोका दधिरे तेज इन्द्रियं शुक्रादीक्षायै तपसो विमोचनीः, आपो विमोक्त्रीर्मयि तेज इन्द्रियमिति त्रिरञ्जलिना विषिञ्चेयेति । शिरसीति शेषः । यथारूपमितर इत्यनेनाविनियुक्तमन्त्राणामपि यथालिङ्गं विनियोगकर्तव्यताया उक्तत्वादिष्टोऽयं विनियोगोऽस्माकमपि । उदकोत्क्षेपणमात्रेण सशिरस्कौ स्नात इति अभिप्रगाह्यानुपमज्जन्तौ सहशिरस्कौ स्नात इत्येतस्य सूत्रस्यार्थः । प्रतीपमुदकप्रवाहाभिमुखमाप्लवमानौ जलं विलोडयेते इत्यर्थः । अन्यत्स्पष्टम् ।

**वि ते मुञ्चामि रशना इति मेखलां यजमानो विस्रंसयते ।**

अवभृथे विस्रंसयते विस्रस्य त्यजतीत्यर्थः । देवतास्विति मन्त्रान्तः ।

**इमं विष्यामीति योक्त्रपाशं पत्नी ।**

योक्त्रं पत्नीत्येव वक्तव्ये पाशशब्दाद्विस्रस्तपाशं योक्त्रं विमुञ्चति पत्नीत्यर्थः सिध्यति ।

**मेखलां योक्त्रं जालं दीक्षितवसने च प्रप्लाव्य सोमोप[1]-नहनं यजमानः परिधत्ते सोमपरिश्रयणं पत्नी ।**

प्रप्लावनं(व्य) निमज्ज्य यजमान एवाधिकारात् । येन मितः सोम उपनह्यते तत्सोमोपनहनं, येनान्ततः पर्याणह्यते तत्सोमपरिश्रयणम् । अधिकारादुत्तरत्र पत्नीतिवचनाच्च पूर्वत्र यजमानस्य प्राप्तौ यस्मिन्काले सोमपरिश्रयणवस्त्रपरिधानं पत्न्यास्तस्मिन्नेव काले सोमोपनहनवस्त्रपरिधानं यजमानस्यापीत्येतादृशार्थज्ञापनार्थम् ।

**तावहतवाससावुदितः ।**

तौ यजमानपत्नी(त्न्यौ), एताभ्यामेव वासोभ्यामहतवाससावुदकप्रान्तप्रदेशं प्रत्यागच्छत इत्यर्थः ।

---

१ ब. ज. झ. ञ. ढ. 'पहननं' ।

ते उदयनीयायामध्वर्यवे दत्तः ॥ १७ ॥

ते वाससी । अन्यत्स्पष्टम् ।

व्याख्यातमुन्नयनम् ।

उन्नेतर्वसीयो न उन्नयेत्यादिना होतृप्रथमान्यजमानप्रथमान्वोन्नयतीत्यन्तेन सूत्रेण व्याख्यातमुक्तम् ।

महीया ।

महीयाजप इत्यर्थः । प्रथमान्तः पाठ एव युक्तः । अपाम सोमममृता अभूमेत्यादिना महीयां जपन्त इत्यन्तेन सूत्रेण व्याख्यात उक्त इत्यर्थः । अत्राऽऽपस्तम्बेन यान्यपामित्यान्यप्रतीत्तान्यस्मि अनृणा अस्मिन्ननृणाः परास्मिन्नित्येतयोर्मन्त्रयोरपि महीयाजपोत्तरं जपे विनियोग उक्तः सोऽप्यस्माकमिष्टः ।

समिदभ्याधानम् ।

औदुम्बरीः समिधो धारयन्त इत्यनेन सूत्रेणैधोऽस्येधिषीमहीत्याहवनीये समिधोऽभ्यादधतीत्येतेन सूत्रेण च व्याख्यातमुक्तमित्यर्थः । प्रतियुतो वरुणस्य पाश इत्यादिनोदकान्तं प्रत्यस्येत्येतदन्तं कर्मापि स्वपा संबन्धबोधनाद्गृह्यते । उन्नेतारं पुरस्कृत्वा प्रतीक्षमायन्ति परोगोष्ठे मार्जयन्त इत्येतत्कर्मणोऽप्यत्र ग्रहणं मध्यपातित्वात् ।

उपस्थानं च ।

अपो अन्वचारिषमित्युपतिष्ठन्त इत्यनेन सूत्रेण व्याख्यातमुक्तमित्यर्थः ।

अपरेण शालामुखीयमुपविश्य जुह्वां पञ्चगृहीतं गृहीत्वा कृष्णाजिनमुपस्थ आधाय मयीन्द्र इन्द्रियं ज्यैष्ठ्यं[१] श्रैष्ठ्यं दधात्विति जुहोति ।

चतुर्गृहीतेन सह शालामुखीये जुहोतीत्यर्थः । जुहोतिचोदितत्वादत्र स्वाहाकारः । इन्द्रो देवता लिङ्गात् ।

कृष्णाजिनं प्र वाऽऽपयते ।

प्र वाऽऽपयत इत्यत्राऽऽपयत इति पदच्छेदः । व्यवहिताश्चेति पाणिनिसूत्रेण मध्ये वाकारः । प्रापयते वेत्यन्वयः । शयनासनाद्यर्थं प्रापयते शयनासनाद्यर्थमुपयुञ्ज्यादित्यर्थः ।

स्रुगवधानं वा कुरुते ।

स्रुचामवधानं स्थापनं तस्मिन्कृष्णाजिने कुर्याद्वेत्यर्थः ।

---

१ ज. झ. ञ. महीयाम् । २ च. 'दधाती' ।

हविषो वाऽथ पेषणम् ।

कुरुत इति पूर्वसूत्रादनुवर्तते । तस्मिन्कृष्णाजिने हविष्पेषणं वा कुरुते प्राकृतं कृष्णाजिनं परित्यज्य ।

पुनर्दीक्षाया एवैनन्निधत्ते ।

पुनःशब्दात्स्वार्थैक्यं(वेयं)दीक्षा । अन्यत्स्पष्टम् ।

पुत्राय वैनद्ब्रह्मचारिणे वा दद्यात् ।

पुत्राय दीक्षाद्यर्थम् । ब्रह्मचारिणे शयनासनार्थम् ।

यदि पुरस्तादप्रास्तं भवति ।

यदि पुरस्तादप्रास्तं भवति तदैवैता होमाद्याः प्रतिपत्तयः ।

उदयनीयायां व्रतमुपैति ।

स्पष्टम् ।

अनूबन्ध्यावपायाꣳ हुतायां दक्षिणस्यां वेदि-
श्रोण्यां परिश्रिते यजमानस्य केशश्म-
श्रूणि वापयतेऽत्र ददाति यद्गास्यन्भवति ।

रात्रावपीदं क्षौरं श्रौतत्वात् । अत्र ददातीत्यनेन पशुसंबन्धिदक्षिणात्वेनैव गोदानं न वरत्वेन । यद्गास्यन्भवतीत्यनेन द्रव्यजात्यनियमः सूच्यते हिरण्यं गौर्वासो वेति ।

व्याख्यातः स्वरुर्हृदयशूलो यूपोपस्थानं च ।

स्वरुशब्देन स्वरुसंबन्धि कर्म लक्षणयोच्यते । शृङ्गाणीवेच्छृङ्गिणामित्यादिना हुतꣳ स्वरुमुपतिष्ठत इत्यन्तेन पाशुबन्धिकयाजमानसूत्रेण व्याख्यातमुक्तम् । हृदयशूल-शब्देनापि तत्संबन्धि कर्मोच्यते । हृदयशूलेन चरन्त्यस्पृशन्हत्वा शुगसीत्यादिनाऽपो अन्वचारिषमित्युपतिष्ठन्त इत्यन्तेन पाशुबन्धिकाध्वर्यवसूत्रेण व्याख्यातमुक्तम् । यूपो-पस्थानमाशासानः सुवीर्यमिति संस्थिते यूपमिति पाशुबन्धिकयाजमानसूत्रेण व्याख्या-तमुक्तम् ।

मिथुनौ गावौ मैत्रावरुण्यामामिक्षायां ददाति ।

अत्र मिथुनगोरूपदक्षिणाया उक्तत्वान्मुख्यानूबन्ध्यायां मिथुनगोद्रव्यतो यद्गास्य-न्भवतीत्यनेन मौल्याधिकं[1] द्रव्यं देयमित्यार्थिकमिति लोकप्रसिद्धं च । स्पष्टः सूत्रस्यार्थः ।

सक्तुहोमे हूयमानेऽयं नो नभसा पुर इत्यग्निमुपतिष्ठते ।

हूयमान इति वर्तमाननिर्देशादध्वर्युणा सक्तुहोमे क्रियमाणे तस्मिन्नेव काल इदमु-पस्थानम् । असन्निति मन्त्रान्तः ।

---

१ ग. च. छ. ढ. 'ण्याभि' ।

**स त्वं नो नभसस्पत इति वायुं देवसंस्फानेत्यादित्यम्।**

सक्तुहोमे हूयमान इत्यनुवर्तते। कृधीत्याद्यमन्त्रान्तः। स्वस्तिमित्यन्तिममन्त्रस्यान्तः।

**अनड्वाहमनडुहो वा हिरण्यमुदवसानीयायां ददाति।**

अनड्वाहमनडुहो वेत्यनेन संख्याविकल्पः। हिरण्यस्य समुच्चयः। उदवसानार्थेष्टिरुदवसानीया तस्यामित्यर्थः।

**यथाशक्ति पूर्णाहुतौ।**

अनेन द्रव्यानियम उच्यते।

**अपवृत्ते षोडशिनः स्तोत्रे तमेवाश्वमश्वतरीं वा दक्षिणां ददाति॥१८॥**

**इति हिरण्यकेशिसूत्रे दशमप्रश्ने पञ्चमः पटलः।**

---

तमेवाश्वमित्यनेन यस्य स्तोत्रकाल उद्गातॄणां पुरस्ताद्धारणं विहितं तस्य दानं बोध्यते। गर्दभाद्वडवायां जाता ह्यश्वतरी तां वा दक्षिणां दद्यात्।

**इत्योकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्नियुक्तवाजपेययाजिसर्वतोमुखयाजिद्विसाहस्राग्नियुक्तपौण्डरीकयाजिगणेशदीक्षिततनुजगोपीनाथदीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसूत्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंतापशामिकायां ज्योत्स्नाख्यायां वृत्तौ दशमप्रश्नस्य पञ्चमः पटलः॥५॥**

---

अथ दशमप्रश्ने षष्ठः पटलः।

---

**दक्षिणां प्रतिग्रहीष्यन्प्रतिगृह्य वा सप्तदशकृत्वोऽपानिति।**

प्रतिग्रहीष्यन्निति भविष्यन्निर्देशादादावेव सप्तदशकृत्वोऽपाननम्। प्रतिगृह्येत्यनेनानन्तरम्। अयं शाखान्तरीयः पक्षः। अधो वायोर्नयनमपाननम्।

**बर्हिषा प्रतीयाद्गां वाऽश्वं वा।**

बर्हिस्तृणमुष्टिः। गां दीयमानामश्वं वा दीयमानं ग्रासार्थेन तृणमुष्टिना गामश्वं वा प्रतिगच्छेदित्यर्थः। बर्हिषा प्रतीयाद्गां वाऽश्वं वेतिब्राह्मणस्मरणार्थं वाकारद्वयम्।

**अन्नेन पुरुषम्।**

पुरुषो मनुष्यजातीयो दासो दासी वा। अत्राऽऽपस्तम्बेन हस्तिनं प्रत्यप्यन्नेनैव प्रतिगमनमुक्तं तदप्यस्माकमिष्टम्। पुरुषग्रहणस्य हस्त्युपलक्षणत्वात्।

गन्धेन च प्रियोद्येन च तल्पम् ।

गन्धः सुगन्धिद्रव्यं चन्दनमाल्यादि । प्रियोद्यं प्रियभाषणम् । चकारद्वयं गन्धप्रियोद्ययोरेककालिकत्वं न तु क्रमिकसमुच्चयमात्रमितिज्ञापनार्थम् । तल्पशब्दः शास्त्रेषु स्त्रियां प्रयुक्तो लक्षणया । स्त्रिया दानं वाजपेय एव । तत्र दासीनां दक्षिणात्वेन विहितत्वात्, न तु दैवविवाहविधिना दीयमानायाः कन्यायास्तस्या दक्षिणात्वेनादीयमानत्वात् । दक्षिणात्वेन दीयमानत्वं कन्याया नास्तीत्यत्र लिङ्गमृत्विजे प्रतिपादयेदितिधर्मसूत्रगतः प्रतिपादनशब्दः । अथ यदि दक्षिणाभिः सह दत्ता स्यात्तां प्रतिगृह्णीयात्प्रजापतिः स्त्रियां यश इत्येताभिः षड्भिरनुच्छन्दसमिति बौधायनसूत्रे दक्षिणाभिः सह दत्ता स्यादिति प्रतिग्रहे मन्त्रान्तरविधानं च लिङ्गम् । एतेन वाजपेयसंबन्धिदासीविषयक एवायं विधिर्नतु यज्ञतन्त्रान्तर्गतदैवविवाहप्रतिपाद्यकन्याप्रतिग्रहविषयकः । एतेन कन्याप्रतिग्रहमात्रविषयकत्वमेव कैश्चिदुक्तं तन्निरस्तं द्रष्टव्यम् ।

बर्हिः प्रत्युत्तिष्ठति बर्हिर्वै दक्षिणायाः प्रियं धाम प्रियो दक्षिणाया भवत्येनं दक्षिणाऽऽगच्छति ।

बर्हिः प्रतिबर्हिर्दृष्ट्वा प्रत्युत्तिष्ठति गौर्वाऽश्वो वा । अत्र हेतुभूतत्वेनार्थवादमाह—बर्हिर्वै दक्षिणायाः प्रियं धामेत्यादिनैनं दक्षिणाऽऽगच्छतीत्यन्तेन । वैशब्दो हेतुवाचकस्त्वर्थे । हि यस्मात्कारणाद्बर्हिर्गोरूपाया अश्वरूपाया वा दक्षिणायाः प्रियं धाम प्रियं स्थानमतस्तस्मिन्प्रदत्ते दक्षिणाया गोरूपाया अश्वरूपाया वा प्रियो भवति । स्वस्मिन्प्रियत्वे संपन्न एनं प्रतिग्रहीतारं दक्षिणाऽऽगच्छति गोरूपा वाऽश्वरूपा वा दक्षिणाऽनुकूला भवति न शृङ्गादिना गोरूपा दक्षिणा ताडितुं प्रवृत्ता भवति । अश्वो*ऽलत्ताप्रहारदंशनादिना प्रकर्तुं प्रवृत्तो [न] भवतीत्यर्थवादार्थः । अत्रार्थवादप्रदर्शनं ज्ञानावश्यकत्वार्थम् । एतच्च गोरूपाश्वरूपदक्षिणाविषय एव नान्यत्र ।

देवा वै वरुणमयाजयन्स यस्यै यस्यै देवतायै दक्षिणामनयत्तामव्लीनात्तेऽब्रुवन्व्यावृत्य प्रतिगृह्णाम तथा नो दक्षिणा न व्लेष्यतीति ते व्यावृत्य प्रत्यगृह्णन्ततो वै तान्दक्षिणा नाव्लीनाद्य एवं विद्वान्व्यावृत्य दक्षिणां प्रतिगृह्णाति नैनं दक्षिणा व्लीनातीति ।

एतदर्थस्तु देवा ऋत्विग्भूताः सन्तो वै निश्चयेन वरुणमयाजयन्नाजितवन्त आसन् । स वरुणो यस्मै यस्मा ऋत्विग्भूताय देवतापरपर्यायदेवाय दक्षिणां दत्तवांस्तां देवतां दक्षिणाऽव्लीनाद्धिंसितवती । ततो देवाः परस्परं विचारं कृतवन्तो

* संस्कृतभाषायां लत्ताशब्दस्याभावात्पादप्रहारेति वक्तुं युक्तम् ।

व्यावृत्य प्रतिगृह्णामेति । आत्मनोऽन्यं प्रतिग्रहीतारमपदिश्य प्रतिग्रहो व्यावृत्य प्रतिग्रहः । एतदुक्तं भवति या या दक्षिणाद्रव्यस्य देवता तां तस्य प्रतिग्रहीत्रा वक्ष्यमाणैर्मन्त्रैरपदिश्य प्रतिग्रहः कर्तव्य इति तात्पर्यार्थः । तथा च ब्राह्मणम्—अग्नये हिरण्यमित्याह, आग्नेयं वै हिरण्यं स्वयैवैनद्देवतया प्रतिगृह्णातीति । शेषार्थः सुगमः । एतस्यार्थवादस्य पाठोऽत्र ज्ञानावश्यकत्वार्थः ।

अर्थवादबोधितं व्यावृत्य प्रतिग्रहणं विधत्ते—

व्यावृत्य प्रतिग्रहणम् ।

व्यावृत्य प्रतिग्रहो व्याख्यातः प्रागेव ।

तान्त्रीणां दक्षिणानां दर्शयति ॥ १९ ॥

तान्त्रीणां यज्ञतन्त्रार्थानामेव दक्षिणानां देवा वै वरुणमयाजयन्नित्याद्युदाहृतश्रुतिः प्रतिग्रहप्रकारं व्यावृत्य प्रतिग्रहणं दर्शयतीत्यर्थः । अयाजयन्निति श्रुतावुपक्रमान्निमित्तभूताया दक्षिणाया व्यावृत्य प्रतिग्रहणम् । मन्त्राश्च तदर्था एवेत्यभिप्रायवानाह— तान्त्रीणामिति ।

प्रतिग्रहमन्त्रानाह—

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि राजा त्वा वरुणो नयतु देवि दक्षिणेऽग्नये हिरण्यं तेनामृतत्वमश्यां वयो दात्रे भूयान्मयो मह्यमस्तु प्रतिग्रहीत्रे क इदं कस्मा अदात्कामः कामाय कामो दाता कामः प्रतिग्रहीता कामꣳ समुद्रमाविश कामेन त्वा प्रतिगृह्णामि कामैतत्त एषा ते काम दक्षिणोत्तानस्त्वाऽऽङ्गीरसः प्रतिगृह्णातु सोमाय वासो ग्नास्त्वाऽकृन्तन्नपसोऽतन्वत वरूत्र योऽवयन्नव धियो अपृञ्चन्न रुद्राय गां वरुणायाश्वं प्रजापतये पुरुषं मनवे तल्पं त्वष्ट्रेऽजां पूष्णेऽविं निर्ऋत्या अश्वतरगर्दभौ हिमवतो हस्तिनं गन्धर्वाप्सराभ्यः स्रगलंकरणे विश्वेभ्यो देवेभ्यो धान्यं वाचेऽन्नं ब्रह्मण ओदनꣳ समुद्रायाप उत्तानायाऽऽङ्गीरसायानो वैश्वानराय रथं वैश्वानरः प्रत्नथा नाकमारुहद्दिवः पृष्ठं भन्दमानः सुमन्मभिः स पूर्ववज्जनयज्जन्तवे धनꣳ समानमज्मा परियाति जागृविरिति वैश्वानर्यर्चा रथं प्रतिगृह्णाति ।

वयो दात्र इत्यनन्तरं भूयानितिपदं सौत्रमधिकं, तद्रहितपाठोऽनेन विकल्प्यते । गृह्णात्वित्यन्तो हिरण्यस्य मन्त्रः । ग्नास्त्वाऽकृन्तन्नपसोऽतन्वत वरूत्र योऽवयन्नवधियो

१ ङ. भ. झ भ. °क्षिणां द° ।

अपृच्छतेतिसौत्रमन्त्रान्ते तेनामृतत्वमश्यामित्यनुषज्यते । लिङ्गानुसारेणैतेषां मन्त्राणां प्रतिग्रहे विनियोगः । एतेष्वप्यनुषङ्गः साम्यात् । तत्र तेन तयेति यथार्थमूहः कार्यः । यद्यजो दीयते यस्मिन्कर्मणि तत्र त्वष्ट्रेऽजामित्यूहः कार्यः । गर्दभाश्वतरयोर्व्यत्यस्तयोर्दाने तु निर्ऋत्या अश्वतरं निर्ऋत्यै गर्दभमित्येवं मन्त्रः । स्रगलंकरणयोर्व्यत्यस्तयोर्दाने तु गन्धर्वेभ्यः स्रजमप्सरोभ्योऽलंकरणमिति भवति । धान्यं व्रीहियवादि । अन्नमदनीयं मध्वाज्यादि नत्वोदनः । तस्य पृथगुपादानात् । रथे वैश्वानर्यर्चा समुच्चयः । अप्राणद्रव्यस्योत्तानस्त्वाऽऽङ्गीरसः प्रतिगृह्णात्वित्येव मन्त्रः । तथा च श्रुतिः—तस्य वा उत्तानस्याऽऽङ्गीरसस्याप्राणत्प्रतिजग्रहुष इत्युपक्रम्य य एवं विद्वानप्राणत्प्रतिगृह्णाति अथ योऽविद्वान्प्रतिगृह्णाति अङ्गमस्येन्द्रियस्यापक्रामतीत्युपसंहृत्य यद्वा इदं किंचेत्यारभ्यानयैवैनत्प्रतिगृह्णाति नैनꣳ हिनस्तीत्यन्तया श्रुत्या, उत्तानस्त्वाऽऽङ्गीरसः प्रतिगृह्णात्वित्यप्राणिद्रव्यप्रतिग्रहमन्त्रो विहितः । अत्राऽऽपस्तम्बोऽपि—यत्किंचाप्राणत्तत्सर्वमुत्तानस्त्वाऽऽङ्गीरसः प्रतिगृह्णीयाद्वाऽनाम्नातमन्त्रमिति । अस्यार्थः—यत्किंचान्यदप्राणिद्रव्यं तदनेनैव प्रतिगृह्णीयात्, यदनाम्नातमन्त्रं वा स्यात्, आम्नातमन्त्रं हिरण्यादि तु तत्तन्मन्त्रेणैवेत्यर्थः ।

सर्वेषाꣳ सावित्रमेकैकस्याऽऽदितो दधाति
तेनामृतत्वमश्यामित्यनुषङ्गमन्ततः ॥ २० ॥

इति हिरण्यकेशिसूत्रे दशमप्रश्ने षष्ठः पटलः ।

---

सर्वत्र पुरस्तात्सावित्रः । देवस्य सवितुरित्यादिर्दक्षिण इत्यन्तः सावित्रो मन्त्रः । तं दधाति योजयति । तेनामृतत्वमश्यामित्यादिः(देः) प्रतिगृह्णात्वित्यन्तस्य मन्त्रस्यानुषङ्गमन्ततः । अग्नये हिरण्यं सोमाय वासो ग्नास्त्वाऽकृन्तन्नपसोऽतन्वत वरूत्र्यो वय्यः भविषो अपृच्छत रुद्राय गां वरुणायाश्वं प्रजापतये पुरुषं मनवे तल्पं त्वष्ट्रेऽजां पूष्णेऽविं निर्ऋत्या अश्वतरगर्दभौ हिमवतो हस्तिनं गन्धर्वाप्सराभ्यः स्रगलंकरणे विश्वेभ्यो देवेभ्यो धान्यं वाचेऽन्नं ब्रह्मण ओदनं समुद्रायाप उत्तानायाऽऽङ्गीरसायानो वैश्वानराय रथं वैश्वानरः प्रत्नथा नाकमारुहद्दिवः पृष्ठं भन्दमानः सुमन्मभिः स पूर्ववज्जनयज्जन्तवे धनꣳ समानमज्मा परियाति जागृविरित्येते मुख्याः प्रतिग्रहमन्त्रांशाः । एतेषां सर्वेषां पुरस्तात्सावित्रः । तेनामृतत्वमश्यामित्युत्तरानुषङ्गः । उपरिष्टादनुषङ्गनीयस्य भागस्यान्वाधिरिति संज्ञा कृताऽऽपस्तम्बेन—सर्वत्र पुरस्तात्सावित्र उपरिष्टादन्वाधिरिति । प्रथमवद्द्वितीयादिमन्त्रेष्वपि देवस्य त्वेत्यादिर्दक्षिण इत्यन्तः सावित्रो मन्त्रः पुरस्तादनुषज्यते । तेनामृतत्वमश्यामितिमन्त्रस्यानुषङ्गमन्तत उपरिष्टादित्यर्थः

---

१ ङ. च. ज. झ. ञ. 'तो निद' ।

अनु पश्चान्मुरुपः प्रतिग्रहमन्त्रांश आधीयते योज्यत इत्यन्वाधिरिति । वाससि विशेषमाहाऽऽपस्तम्बः—मास्त्वाऽकृन्तन्नपसस्त्वाऽतन्वत वरूत्र यस्त्वा वयमित्येतद्वासस्यनुषजति पुरस्ताद्दैवतादिति । वाससि परस्तात्सावित्रस्य पुरस्ताच्च सोमशब्दस्यैतदनुषजतीत्यर्थः । तेनामृत्वतेत्यनन्तरमनुषङ्गोऽस्मत्सूत्रेऽपि भवति । इदमुपलक्षणं, तेन जागृविरित्यनन्तरं तेनामृतत्वमित्यनुषज्यते ।

इत्योकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्नियुक्तवाजपेययाजिसर्वतोमुखयाजिद्विसाहास्राग्नियुक्तपौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथदीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसूत्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंतापशामिकायां ज्योत्स्नाख्यायां वृत्तौ दशमप्रश्नस्य षष्ठः पटलः ॥ ६ ॥

---

अथ दशमप्रश्ने सप्तमः पटलः ।

---

अथानन्तरपटलेन चतुर्होतॄणां काम्यनैमित्तिकान्प्रयोगान्वक्ष्यंस्तदध्ययनव्रतमपि प्रसङ्गादाह—

संवत्सरं चतुर्णामेको नाश्नीयादिति
चतुर्होतॄणामुपयोगव्रतं भवति ।

चतुर्णामेकपङ्क्तौ भुञ्जानानामन्यतमः संवत्सरं नाश्नीयादिति यद्व्रतं तच्चतुर्होतॄणामुपयोगोऽध्ययनं तदर्थं भवति । उपयोगोऽध्ययनमेव । तथा चाऽऽपस्तम्बः—संवत्सरं चतुर्णामेको नाश्नीयात्तद्व्रतमिति विज्ञायते चतुर्होतॄणामनुब्रुवाणस्येति । एतद्व्रतं चतुर्होतॄननुब्रुवाणस्याधीयमानस्य विज्ञायते । अत्र विशेषमाहाऽऽपस्तम्बः—एष वा अनाहिताग्नेरिष्टिर्यच्चतुर्होतार इति । अस्यार्थः—इष्टिर्यज्ञः । एतदुक्तं भवति श्रौता अप्येते चतुर्होतृप्रयोगा अनाहिताग्नेरपि भवन्तीति । तत्राऽऽहिताग्नेराहवनीयेऽनाहिताग्नेरौपासने ।

यः कामयेत बहुः स्यां प्रजायेयेति सोऽरण्यं परेत्य
दर्भस्तम्बे दशहोतारमनया पूर्णया वा स्रुचा जुहुयात् ।

बहु सर्वेषां मध्ये बहु धनेन विद्यया वा यथा स्यामिति प्रजायेत बह्व्यः प्रजाश्च जायेत जायेयुरिति च य एवं कामद्वयं कामयेत सोऽरण्यं परेत्य गत्वोनया पूर्णया वा स्रुचा जुहुयात् । आहवनीय आहिताग्नेरनाहिताग्नेरौपासने ।

---

१ घ. छ. °सि पुर° ।

कामान्तरमाह—

यः प्रजया पशुभिर्नैव प्रभवेद्वरासिं परिधाय
तप्तं पिबन्द्वादश रात्रीरधः शयीत द्वादश्यां
प्रातः प्राङुदेत्य प्राण्यापान्यामाणन्दशहोतारं
व्याख्यायेन्द्रं गच्छ स्वाहेत्यपान्यात् ।

यः प्रजया पशुभिर्नैव प्रभवेत्समर्थो नैव भवेत्सः । प्रजापश्वोः काम्ययोः समुच्चयोऽत्र । तस्येदं पुरश्चरणं, वरासिः स्थूला शाटिः । तप्तमित्यत्रोदकमित्येव शेषः । स्पष्टमेवाथठ-द्यापस्तम्बः । अधो भूमावेव न मञ्चादौ । असमाप्ते व्रते द्वादश्या रात्र्याः प्रातः साग्निः प्राङ्मुख उदेत्य होमदेशं गत्वा प्राण्यापान्य, ऊर्ध्वं वायोर्नयनं प्राणनम् । अधो वायो-र्नयनमपाननम् । पुनरप्राणञ्श्वासमत्यजन्दशहोतारं व्याख्याय वाक्यशः पठित्वेन्द्राय स्वाहेत्यनेन मन्त्रेणापान्याच्छ्वासमुत्सृजेदित्यर्थः ।

देवानां पत्नीभिः पुत्रकामो यजेत संवत्सरम् ।

सेनेन्द्रस्येत्यनुवाकगतमन्त्रप्रतिपाद्या देवानां पत्न्यस्ताभिः संवत्सरं पुत्रकामो यजेत । एतैर्मन्त्रैः संवत्सरं प्रतिदिनं जुहुयादित्यर्थः ।

चतुर्भिर्यजुर्भिरन्तरा त्वष्टारं देवानां च पत्नीभिः पुत्रकामेण
होतव्यꣳ संवत्सरं चेन्न जायेत तदनादृत्य चतुर्होत्रा याजयेत् ।

संवत्सरशब्दस्योभयत्रान्वयः । उभयत्र पुत्रकामपदोपादानात् । तेन चतुर्भिरित्या-दिकं भिन्नमेव कर्म दर्शपूर्णमासयोः पत्नीसंयाजेषु । सेनेन्द्रस्येत्यादिभिश्चतुर्भिश्चतुर्भि-रन्तरा त्वष्टारं त्वष्टरीष्टे पर्वणि पर्वणि चत्वारि चत्वारि यजुंषि गणयित्वा जुहुयात् । वाक्यानां समाप्तौ पुनरादित आरम्य प्रयोगः । पुत्रकामेणानेन प्रकारेण होतव्यम् । जुहोतिशब्दं परित्यज्य यजतिशब्दप्रयोगः संकल्पवाक्ये यजिधातोः प्रयोगाय । तेन संकल्पवाक्यं होष्यामीत्येवमेव(?)प्रयोज्यम् । यदि संवत्सरान्न जायेत पुत्रकामना ततः परममुं विधिमनादृत्य चतुर्होत्रैव याजयेत् । तत्प्रयोगपरिसमापनाय चतुर्होत्रा याजनम् ।

राजानमपरुद्धꣳ सङ्ग्रामे संयत्ते खिलेऽच्छदिर्दर्शे
चतुर्गृहीतेनाऽऽज्येन चतुर्होत्रा पूर्वामाहुतिं जुहोति
ग्रहेणोत्तरामपि वा चतुर्होतारं मनसाऽनुद्रुत्य
पूर्वेण ग्रहेणार्धं जुहोत्यर्धमुत्तरेण यत्तत्र विन्देरꣳ-
स्ततो दक्षिणा स्याच्छतमेके समामनन्ति ।

अपरुद्धं शत्रुभिर्वेष्टितं सङ्ग्रामे संयत्ते प्रवृत्ते सति खिल आवृत्तेऽच्छदिर्दर्शे यत्र गृहच्छर्दींषि न दृश्यन्त एतादृशे देशे चतुर्होत्रा पूर्वामाहुतिं जुहोति ग्रहेणोत्तरामि-

---

१ क. च. छ. ज. ज. झ. ञ. ढ. °पान्य प्रा° । २ च. छ. °रि च° ।

स्येतद्विधिविषयेऽपि वेत्यनेन प्रकारान्तरं विधीयते। अत्र विशेष इयान्, चतुर्होतुर्मनसाऽनुद्रवणं पूर्वेण ग्रहेण ग्रहभागेण वाचस्पते वाचो वीर्येण संभृततमेनाऽऽयक्ष्यसे यजमानाय वार्यमित्येतावान्ग्रहस्य पूर्वो भागः। आसुवस्करस्मै वाचस्पतिः सोमं पिबति जजनदिन्द्रमिन्द्रियाय स्वाहेत्युत्तरो ग्रहस्य भागः। पूर्वभागान्तेऽपि जुहोतिचोदितत्वात्स्वाहाकारः प्रयोज्यः। उत्तरत्र पठित एव। अर्धमित्युभयत्राऽऽज्यस्येति शेषः। सङ्ग्रामं जित्वा यत्तत्र धनं लभेरंस्ततोऽपकृष्य दक्षिणा देया। शतमेव देयमित्येक आचार्या वदन्तीत्यर्थः।

चतुर्होत्रा याजयेत्प्रजाकामम्।

याजयेदित्यन्तर्भावितो णिच्। तेन प्रजाकामो यजेदित्यर्थो भवति। यजिधातुप्रयोजनं पूर्ववत्।

तस्य स एव होमकल्पः।

खिलेऽच्छिद्रदर्शे इत्यारभ्यार्धमुत्तरेणेत्यन्तः।

अत्र विशेषमाह—

वरो दक्षिणा।

यत्तत्र विन्देरंस्ततो दक्षिणा स्याच्छतमेके समामनन्तीत्यस्य बाधः।

पञ्चहोत्रा याजयेत्पशुकामम्।

पूर्ववद्व्याख्यानम्।

चतुर्गृहीतेनाऽऽज्येन पञ्चहोत्रा पूर्वामाहुतिं
जुहोति ग्रहेणोत्तरामपि वा पञ्चहोतारमनु-
द्रुत्य पूर्वेण ग्रहेणार्धं जुहोत्यर्धमुत्तरेण।

पूर्ववदेव व्याख्या।

दक्षिणायामत्र विशेषमाह—

तस्यैताश्चतस्रो दक्षिणा अश्वो हिरण्यं वासो गौः।

तस्य पञ्चहोतृहोमस्य।

अन्यमपि प्रकारमाह—

भ्रातृव्यवन्तं चादक्षिणेन होमग्रहाभ्यां सप्तहोत्रा याजयेत्।

होमः सप्तहोतृहोमः। पूर्वेण ग्रहेणार्धं जुहोत्यर्धमुत्तरेणेत्येतौ विधी होमग्रहशब्देनोच्येते। अदक्षिणेनेति सप्तहोतृविशेषणम्।

प्रकारान्तरमाह—

---

१ च. °तारं मनसाऽनु°।

**यो यज्ञस्यानुसꣳस्थां पापीयान्स्याच्चतुर्गृहीतेनाऽऽज्येन सप्तहोत्रा पूर्वामाहुतिं जुहोति ग्रहेणोत्तराम् ॥ २१ ॥**

यो यजमानो यज्ञस्य संस्थां समाप्तिमनु समाप्तौ सत्यामेव पापीयान्द्वेष्यः स्यादिति कामयेत स चतुर्गृहीतेनाऽऽज्येनेत्यादि ।

**व्याख्याताः क्रतुसंयुक्ताः ।**

अग्निमादधानो दशहोत्रारणिमवदध्यात् । तेनैवोद्धृत्याग्निहोत्रं जुहुयात्, हविर्निर्वप्स्यन्दशहोतारं व्याचक्षीत, सामिधेनीरनुवक्ष्यन्दशहोतारं व्याचक्षीत, दशहोतारं पुरस्तात्सामिधेनीनां व्याचक्षीत, बहिष्पवमाने दशहोतारं व्याचक्षीत, माध्यंदिने पवमाने चतुर्होतारम् । आर्भवे पवमाने पञ्चहोतारं पितृयज्ञे षड्ढोतारं यज्ञायज्ञियस्य स्तोत्रे सप्तहोतारमित्येवमादिभिर्विधिभिस्तत्तत्प्रकरण उक्तास्ते तत्तत्प्रकरणे व्याख्याता उक्ता इत्यर्थः ।

**अभिचरन्दशहोतारं जुहुयात्स्वकृत इरिणे प्रदरे वा फडिति वषट्करोति यं ब्राह्मणं विद्यां विद्वाꣳसं यशो नर्च्छेत्सोऽरण्यं परेत्य दर्भस्तम्बमुद्ग्रथ्य ब्राह्मणं दक्षिणतो निषाद्योच्चैश्चतुर्होतॄन्व्याचक्षीत सग्रहान्सस्वाहाकारान्ससंभारयजुष्कान्सपत्नीकान्सप्रतिग्रहणमन्त्रानपि वा चतुर्होतॄनेव यो ब्राह्मणो दक्षिणत आस्ते वरं तस्मै दद्याद्यदेवैनं तत्र यश ऋच्छति तद्वृणोऽवरुन्ध इति विज्ञायते ।**

अभिचारः शत्रुमारणार्थकं कर्मोच्यते । इरिणमुखरो देशस्तत्स्वयं कृतं भवति न पुरुषप्रयत्नकृतम् । प्रदरो भूमिच्छिद्रम् । फडिति वषट्करोति । फडित्येव पाठो न तु वडिति । यद्वाचः क्रूरं तेन वषट्करोतीति श्रुतेः । वाचः क्रूराण्यारण्यकश्रुत्या प्रदर्शितानि-खट्फट्, जहि छिन्धि भिन्धि हन्धि कट्, इति वाचः क्रूराणीति फडिति सर्ववाचः क्रूराणामुपलक्षणम् । एतेषामन्यतमेन वषट्करोति स्वाहाकारस्थाने खडाद्यन्यतमेन शब्देन जुहोतीत्यर्थः । अमुमर्थं स्पष्टमाहाऽऽपस्तम्बः—यद्वाचः क्रूरं तेन वषट्करोति वाच एवैनं क्रूरेण प्रवृश्चति ताजगार्तिमार्छतीति विज्ञायत इति । ब्राह्मणग्रहणात्क्षत्रियवैश्ययोर्नायं विधिः । विद्या वेदः । यशः श्रोत्रियत्वख्यातिः । एते उभे विद्वाꣳसं प्रति न ऋच्छेन्न प्राप्नुत इत्यर्थः । स विद्वानुद्ग्रथ्य बद्ध्वा दक्षिणतो दर्भस्तम्बस्य यं कंचन ब्राह्मणं निषाद्योपवेश्य, उच्चैः, यजुर्वेदेनोपांशुरिति प्राप्तस्योपांशुत्वस्यानेन बाधः । अत्रोच्चैरिति विधानादन्यत्र नेदम् । चतुर्होतॄन्दशहोतृसप्तहोतृषड्ढोतृपञ्चहोतॄंश्चतुर्होतॄन्व्याचक्षीत वाक्यशः पठेत् । यद्देवेषु चतुर्धा होतारस्तेन चतुर्होतारः, तस्मा-

---

१ ङ. ज. झ. ञ. °वडिति । २ च. छ. °होतॄन्व्या° ।

चतुर्होतार उच्यन्ते तच्चतुर्होतृणां चतुर्होतृत्वमित्यादिषु बह्वीषु श्रुतिषु सर्वेषां चतुर्हो-तृपदप्रवृत्तिः प्रदर्शिता । कथंभूतांश्चतुर्होतॄन्, वाचस्पते विधे नामन्, सोमः सोमस्य पुरोगाः, वाचस्पते वाचो वीर्येण, वाचस्पतेऽच्छिद्रया वाचा, वाचस्पते हृद्विधे नामन्, इत्येवमादयो ग्रहास्तत्सहितान् । व्याख्याने स्वाहाकाराप्राप्तौ सस्वाहाकारानिति । अग्निर्यजुर्भिरित्यनुवाकोपात्ता मन्त्राः संभारयजूंषि तत्सहितान् । सेनेन्द्रस्येत्यनुवाको-पात्ताः पत्न्यस्तत्सहितान्देवस्य त्वेत्यनुवाकोपात्ता मन्त्राः प्रतिग्रहणसंज्ञका मन्त्रास्तत्स-हितान् । प्रतिग्रहणमन्त्राः सानुषङ्गा द्रष्टव्याः । अपि वा चतुर्होतॄनेव नैते ग्रहस्वाहा-कारसंभारयजुःपत्नीप्रतिग्रहणमन्त्रा इत्यर्थः । यो ब्राह्मणो दक्षिणत आस्ते वरं तस्मै दद्यात् । चतुर्वर्षा गौर्वरः । यदेवैनं तत्र यश ऋच्छति यदभीप्सितं यश ऋच्छती-च्छति तद्यशो वरुणो ददातीत्यर्थः । विज्ञायते श्रुतिरिति शेषः ।

यद्येनमार्त्विज्याद्वृतꣳ सन्तं निर्हरेरन्नाग्नीध्रे जुहुयाद्द-शहोतारं चतुर्गृहीतेनाऽऽज्येन नवगृहीतेनेत्येकेषां पुर-स्तात्प्रत्यङ्तिष्ठन्प्रतिलोमं विग्राहं प्राणानेवास्योपदा-सयति यद्येनं पुनरुपशिक्षेयुराग्नीध्र एव जुहुयाद्दश-होतारं चतुर्गृहीतेनाऽऽज्येन नवगृहीतेनेत्येकेषां पश्चा-त्प्राङासीनोऽनुलोममविग्राहं प्राणानेवास्मै कल्पयति ।

यद्येनं पुरुषमार्त्विज्ये वृतं सन्तमसति दोषे ततो भ्रंशयेयुर्यजमानकिंकरास्तदाऽसौ तं जिघांसुमाग्नीध्रे दशहोतारमेव जुहुयात् । उत्तमादारभ्य प्रतिपदं यजुषामनुद्रवणं प्रतिलोमता, यजूꣳषि यजुष्यवसायानुद्रवणं विग्राहः । उपदासः क्षपणं, पुनरार्त्विज्ये स्थापनमुपशिक्षणम् । यथाधीतो दशहोताऽनुलोममविग्राहं च भवति ।

प्रायश्चित्ती वाग्घोतेत्यृतुमुख ऋतुमुखे षड्ढोतारं जुहुयात् ।

प्रायश्चित्तशब्देन शुद्धिरत्रोपलक्ष्यते । शुद्धीच्छावान्पुरुषो वाग्घोतेति षड्ढोतारमृतु-मुख ऋत्वादौ । वीप्सया यावत्संवत्सरं सामर्थ्यात् ।

यः कामयेत बहोर्भूयान्स्यामिति स दशहोतारं प्रयुञ्जीत ।

बहोर्भूयान्प्रजापश्वादिबहोर्बहुतरः प्रयुञ्जीत जुहुयात् । प्रयोगोऽत्र होम एव चतु-र्गृहीतेनाऽऽज्येन ।

यः कामयेत वीरो म आजायेतेति स चतुर्होतारम् ।

वीरः सत्पुत्रः ।

यः कामयेत पशुमान्स्यामिति स पञ्चहोतारम् ।

पशवो गवाश्वादयः ।

**यः कामयेतर्तवो मे कल्पेरन्निति स षड्ढोतारम् ।**

ऋतवो मे कल्पेरन्स्वं स्वं गुणं पोषयन्तः शिवा गच्छन्त्वित्यर्थः ।

**यः कामयेत सोमपः सोमयाजी स्यामा मे सोमपः सोमयाजी जायेतेति स सप्तहोतारम् ।**

सोमयाजी जायेतेति धातुसंबन्धे प्रत्यया इति भविष्यदर्थे भूतवत्प्रत्ययः । सोमेज्यावत्सोमपानस्यापि पुरुषार्थत्वात्पृथक्सोमपवचनम् । अत एवोक्तं शास्त्रेषु तावेवास्मै सोमपीथं प्रयच्छत इति । स सोमं पातुमर्हतीत्यादि ।

**यः कामयेत प्रियः स्यामिति यं वा कामयेत प्रियः स्यादिति तस्मा एतं[१] स्थागरमलंकारं कल्पयित्वा दशहोतारं दक्षिणतः पञ्चहोतारं पश्चात्षड्ढोतारमुत्तरतः सप्तहोतारमुपरिष्टात्संभारैश्च पत्निभिश्च मुखेऽलंकृत्यास्यार्धं व्रजेत्प्रियो हैव भवति ।**

स्वयमन्यं प्रति प्रियः स्यामिति मन्येत, अन्यं वा पुरुषं प्रति यः कामयेत स मह्यं प्रियः स्यादिति तस्मै, एतं स्थाजरं स्थागराख्येन द्रव्येण कृतमनुलेपनाद्यर्थमलंकारं स्थापयित्वा तस्य प्रागादिदिक्षु तदभिमुखं स्थितो दशहोत्रादीन्वाक्यशः पठित्वा, एतादृशेन विधिना तेन संस्कृतेन संस्कृतेनाग्निर्यजुर्भिरित्येतैः संभारैः संभारसंज्ञकैर्मन्त्रैः सेनेन्द्रस्येत्येतैः पत्नीसंज्ञकैर्मन्त्रैश्च मुखे पुण्ड्रकादिरूपमलंकारं कृत्वाऽस्य वशीयस्यार्धं स्थानमात्रजेत् । स्वयं परो वा यः पर इष्यते स्थानं गतस्य प्रियो भवति । उहशब्दो निश्चयार्थे ।

**तेषां ये होमार्थे श्रूयन्ते सग्रहाः सस्वाहाकारास्ते प्रयुज्येरन्ये त्वहोमार्थेऽग्रहा अस्वाहाकारास्ते ।**

अथ प्रकृताप्रकृतविषयाणां चतुर्होतॄणां सामान्यव्याख्या क्रियते सूत्रकृतैव । तेषां चतुर्होतॄणां मध्ये ये चतुर्होतारो यत्र चतुर्होतारो होमार्थे होमनिमित्तत्वेन श्रूयन्ते सस्वाहाकारास्ते तत्र प्रयुज्येरन् । अहोमार्थे ये श्रूयन्ते तेऽग्रहा अस्वाहाकारा ग्रहरहिताः स्वाहाकाररहिताश्च ते तत्र प्रयुज्येरन् । अहोमार्थत्वेनास्वाहाकारत्वे सिद्धेऽपि वचनं चातुर्होत्रीयोपधाने विनियोगे मन्त्रान्ते स्वाहाकारपाठेऽपि चातुर्होत्रचयनेऽपि चतुर्होतॄणां मुख्यतयैव विनियोगात्स्वाहाकारपाठोऽपि मा शङ्कीति वचनम् ।

**ये जपा ये याजमानास्तेऽपि[३] ऋतुसंयुक्ताः ।**

जपा जपार्था याजमाना यजमानप्रयोज्या जपानामध्वर्य्वादिप्रयोज्यत्वं यजमानप्रयोज्यत्वं चेति । याजमानानां तु यजमानप्रयोज्यत्वमेवेति धर्मभेदं प्रदर्शयितुं यच्छब्दद्वयम् ।

---

१ च. °पाठेऽपि । २ म. ढ. जप्या । ३ ङ. ज. झ. म. ढ. °स्ते ये क्र° ।

त आहिताग्नेरुभयोरक्रतुसंयुक्ता भवन्ति ॥ २२ ॥

इति हिरण्यकेशिसूत्रे दशमप्रश्ने सप्तमः पटलः।

तेषां चतुर्होतॄणां मध्ये ये विहारसंयुक्तास्त आहिताग्नेर्यथा दर्शपूर्णमासावालभमान-श्चतुर्होतारमित्यादिषु। ये त्वक्रतुसंयुक्ता यः कामयेत प्रजायेयेति यं ब्राह्मणं विद्यां विद्वाꣳसं यशो नर्च्छेदित्यादिषु दशहोत्रादयस्त उभयोराहिताग्नेरनाहिताग्नेश्च भवन्ति। तत्राऽऽहिताग्नेराहवनीय औपासने वा कर्मव्यवस्थया होमः। अनाहिताग्नेरौपासन एव सर्वाणि। आपस्तम्बेनान्योऽपि विशेष उक्तः—सप्तहोत्रा यज्ञविभ्रष्टं याजयेच्च-तुर्गृहीतेनाऽऽज्येनार्धं वा पूर्वेण ग्रहेणार्धमुत्तरेणेति। तत्र यज्ञविभ्रष्टं विध्यपराधप्रश्ने वक्ष्यति—उपक्रम्याशक्नुवन्यज्ञविभ्रष्ट इति। तत्रेष्टिपशुविभ्रष्टस्येष्टिरेव प्रायश्चित्तं यो यज्ञविभ्रष्टः स्यादिति। सोमविभ्रष्टस्य तु सोम एव। वक्ष्यति च सप्तदशप्रश्ने सप्तद-शेनाग्निष्टुता यज्ञविभ्रष्ट इति। अयं तु दर्विहोमत्वसामान्यादग्निहोत्रविभ्रष्टस्य भवति। अर्वाक्चतुरहविर्भ्रेषात्। ततः परं तु तन्तुमत्युक्ता। पिण्डपितृयज्ञभ्रेषपार्वणपाक-यज्ञभ्रेषे चायमेव विधिर्द्रष्टव्यः।

इत्योकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्नियुक्तवाजपेययाजिसर्वतोमुखया-
जिद्विसाहस्राग्नियुक्तपौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथ-
दीक्षितविरचितायां श्रीपद्भगवत्सत्याषाढहिरण्यकेशिसू-
त्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंताप-
शामिकायां ज्योत्स्नाख्यायां वृत्तौ दशमप्र-
श्नस्य सप्तमः पटलः ॥ ७ ॥

अथ दशमप्रश्नेऽष्टमः पटलः।

वासिष्ठो ब्रह्मा ज्योतिष्टोमे।

वासिष्ठो वसिष्ठगोत्रोत्पन्नो ज्योतिष्टोमे ब्रह्मा भवति। एतेनाऽऽधानेष्टिपशु-बन्धेषु वासिष्ठत्वस्यानियमः। देवभूतपितृभूतर्त्विक्स्वीकारेऽपि आधानादाववासिष्ठ-ब्रह्मस्वीकारे ज्योतिष्टोमाद्यर्थमन्यो वासिष्ठः स्वीकार्य इति। य आधानादौ स्वीकृतः स स एव ज्योतिष्टोमादिष्विति नियमो न। श्रुतिरपि सोमप्रकरणे—तस्माद्वासिष्ठो ब्रह्मा कार्य इति। [1]तत्रैकार्षेया वासिष्ठा अन्यत्रोपमन्युपराशरकुण्डिनेभ्य इतिप्रवरसूत्रोपात्तो मुख्यो वसिष्ठस्तदपत्यभूता उपमन्युपराशरकुण्डिनाश्चात्र गृह्यन्ते। तदपत्यत्वात्तत्संज्ञया

---

१ क. छ. [1]तत्सत्तया।

प्रवरैक्याच्च तेऽपि वासिष्ठा एव । ब्रह्मिष्ठो ब्रह्मेति दर्शपूर्णमासयोर्विहितं तत्प्रकृतीनामिष्टिपशुबन्धानां च तथैव । ब्रह्मिष्ठ एव वासिष्ठो भवतीति केचित् । वस्तुतो ज्योतिष्टोम इति वचनाज्ज्योतिष्टोम एव वासिष्ठत्वनियमः, अन्यत्रानियम इति यदुक्तं तदेव समीचीनम् ।

**यो वा कश्चित्स्तोमभागानधीयात् ।**

यः कश्चनान्योऽपि स्तोमभागान्रश्मिरसि क्षयाय त्वा क्षयं जिन्वेत्यादीनि यजूंषि सार्थं सविनियोगं च यो वेद स ब्रह्मा स्यादित्यर्थः । अत एवाऽऽपस्तम्बेन विद्यादित्युक्तम् ।

**अन्योन्यस्मै वा ऋत्विजो यज्ञसंप्रदायं चरन्ति ।**

अन्योन्यस्मा अन्योन्यं परस्परमृत्विजो यस्य यस्य यच्छास्त्रं होतॄणां याजुषहौत्रप्रतिपादकशास्त्रमनुक्तस्थलप्रवृत्ताश्वलायनशास्त्रं चाध्वर्यूणामाध्वर्यवप्रतिपादकं शास्त्रमुद्गातॄणामौद्गात्रप्रतिपादकं शास्त्रमनुसृत्य परस्परं विरोधं न्यायतः परिहृत्य यज्ञस्य यः संप्रदायो यज्ञसंबन्धी यः संप्रदायोऽनुष्ठानमर्यादा तां यथा चरन्ति ऋत्विजस्तथा प्रवर्तको वा ब्रह्मा भवेत्सर्वसूत्रपरिज्ञाता वा ब्रह्मा भवेदित्यर्थः ।

**यावदृचाऽऽर्त्विज्यं क्रियते होतृष्वेव तावद्यज्ञो भवति ।**

यावदित्यनेन होतृविषयकं कार्त्स्न्यमुच्यते । ऋचा, ऋग्वेदेन ऋग्वेदशेषेण च होतृविषयकं कृत्स्नं यावत्कर्म तावता कर्मणा होतृविषयको यज्ञः संपन्नो भवति । अथवा यावत्पर्यन्तमृग्वेदेन जायमानमार्त्विज्यकर्म तावत्पर्यन्तं होतृष्वेव यज्ञो भवति स्थितो भवतीत्यर्थः । तदीयकर्मणि न्यूनतायां यज्ञस्थितिस्तत्र न भवति न्यूनो यज्ञो भवति तदीयदोषो ब्रह्मणि ब्रह्मिष्ठत्वादियथोक्तलक्षणसंपन्नत्वाभाव आगच्छतीति भावः ।

**यावद्यजुषाऽध्वर्युष्वेव तावत् ।**

स्पष्टम् ।

**यावत्साम्नोद्गातृष्वेव तावत् ।**

इदमपि स्पष्टम् । एवं च त्रय्या विद्यया यज्ञः संपन्नो भवतीत्यर्थः । परिभाषायामप्युक्तं स त्रिभिर्वेदैर्विधीयत इति ।

**यत्र क्व च यज्ञस्य विरतं ब्रह्मण्येव तावद्यज्ञो भवति ।**

यत्र क्व चेत्यनेन त्रयी विद्या गृह्यते । त्रयीविद्याविहितयज्ञस्य त्रयीविद्याविहितयज्ञे विरतं मौनमनेन मौनेनैव ब्रह्मणेव तावद्यज्ञः संपन्नो भवति । इदं च मौनमेव ब्रह्मणो मुख्यं कर्मेत्यर्थः । इदं च दृष्टार्थप्रवृत्तकर्मण्येकाग्रचित्तत्वाय । अत एवाऽऽश्वलायनः—अबहुभाषी यज्ञमना इति यज्ञमनस्त्वमाह ।

तस्मादेतस्मिन्नन्तर्धौ ब्रह्मा वाचंयमः स्यात्।

अन्तर्धौ, इत्यनन्तरं चकारोऽध्याहार्यः। तस्माद्धेतोस्त्रयीसाध्यतत्तत्कर्मरूपे यज्ञे। अन्तर्धिशब्देन कर्मविरामकाल उच्यते। तत्रापि वाग्यमनं वा भवतीत्यर्थः। तथा च च्छान्दोग्यम्—ब्रह्मण्येव तावद्यज्ञो यत्रोपरतस्तस्मिन्नन्तर्धौ ब्रह्मा वाचंयमो बुभूषेदिति।

यदि प्रमत्तो व्याहरेद्वैष्णवीमृचं जपि-
त्वा व्याहृतीश्च पुनर्वाचं यच्छति।

प्रमत्तः प्रमादतो व्याहरेत्, वाचमुच्चारयेत्। वैष्णवी, इदं विष्णुरिति। एतामृचं जपित्वा व्याहृतीर्व्यस्ताः समस्ता वा जपित्वा पुनर्वाचं नियमयेदित्यर्थः। चकारो वैष्णव्यृक्समुच्चयार्थः।

राजनि मीयमानेऽग्नौ क्रियमाणे महावेद्यामु-
त्तरवेद्यां च क्रियमाणायाः राजनि ह्रिय-
माणेऽभिषूयमाणे बहिष्पवमाने स्तूयमाने।

अग्नौ शौल्वेन विधिनाऽग्निक्षेत्रे क्रियमाणे। अन्यत्स्पष्टम्।

उखायाः संभ्रियमाणायामुखाकर्मसु च क्रियमाणेषु।

उखासंभरणं नामोखार्थे मृदः संभरणम्। उखाकरणार्थानि संसर्जनादीनि कर्माणि तेषु।

प्रवृज्यमानायां च।

प्रवृज्यमानायामुखायाम्। चकारः पूर्वेण समुच्चयार्थः।

अग्नौ मीयमाने।

अग्नावग्निक्षेत्रेऽदृष्टार्थं दण्डेन मीयमाने।

कृष्यमाणे।

अग्निक्षेत्रे लाङ्गलेन कृष्यमाणे।

ओप्यमाने।

अग्निक्षेत्र ओषधीनां निवपने क्रियमाणे।

चितेरुपधीयमानायाः।

सर्वासु चितिषूपधीयमानासु।

संचितकर्मसु च।

यावन्ति संचितकर्माणि संचितमभिमृशतीत्यादीनि।

एतेषु कर्मसु यथाकालं क्रियमाणेषु दक्षिणत आस्ते।

उक्तान्येव विशिनष्टि यथाकालं क्रियमाणेषु स्वस्वकाले क्रियमाणेषु दक्षिणत आस्त उपविष्टो भवतीत्यर्थः।

**राजन्योह्यमानेऽग्नौ प्रणीयमाने हविर्धानयोः प्रोह्यमाणयोः ।**

राजनि अनसोह्यमानेऽग्नावौत्तरवेदिके प्रणीयमाने । अन्यत्स्पष्टम् ।

**उखायाः संभरिष्यमाणायाम् ।**

उखायाः संभरिष्यमाणायामिति भविष्यप्रत्ययादुखार्थे मृदं प्रति गमनं गृह्यते । स्पष्टमिदमुक्तमापस्तम्बेन—उखामच्छ गच्छतामिति । अच्छ मृत्खनाभिमुख्येन गच्छतामित्यर्थः ।

**ओह्यमानायां च ।**

यजमानेन कण्ठे प्रतियुक्ता सती विष्णुक्रममन्त्रैस्तस्यामुखायामोह्यमानायाम् ।

**नैर्ऋतीरुपधास्यताम् ।**

नैर्ऋतीरिष्टका उपधास्यताम् । अध्वर्युप्रतिप्रस्थातृब्रह्मयजमानाभिप्रायं बहुवचनम् । यद्यप्युपधाने साक्षात्प्रतिप्रस्थातृब्रह्मयजमानानां संबन्धो नास्ति तथाऽपि अग्निचयनसंबन्धमात्रमाश्रित्यैवात्र बहुवचनम् ।

**चित्यग्नीनां प्रणीयमानानाम् ।**

चित्यर्था इष्टकाश्चित्यग्नयः । चित्यग्नीनामित्यत्राग्निशब्दश्चितिसाधनपरः । चित्याग्निभ्यः प्रणीयमानेभ्योऽनुब्रूहीत्यादिना यद्विहितं चित्यग्नीनां प्रणयनं तत्रापि दक्षिणत आस्ते ।

**वसतीवरीः सवनीयाश्च गच्छताम् ।**

सवनीयाशब्देनैकधना गृह्यन्ते । सवने सवने तत्प्रयोजनसत्त्वात् । गच्छतां गच्छतां प्रतिगच्छताम् ।

**आह्रियमाणासु च ।**

वसतीवरीः सवनीयाश्च यथाकालमाह्रियमाणासु । तत्र वसतीवरीणामाहरणकालोऽग्नीषोमीयवपाहोमोत्तरम् । सवनीयाहरणकालः प्रातरनुवाकोत्तरम् ।

**अवभृथं चाभ्यवैष्यताम् ।**

अवभृथं प्रति उरुꣳ हि राजेत्यनेनाभ्यवैष्यतामवभृथदेशाभिमुखं प्रत्यवैष्यतां गमनक्रियायां करिष्यमाणायाम् ।

**उद्यत्सु च ।**

उद्यत्सु आगच्छत्सु ।

**एतेषु कर्मसु यथाकालं क्रियमाणेषु दक्षिणत एति ।**

अध्वर्य्वादीनां गच्छतां दक्षिणतो गच्छति । नित्यः सर्वकर्मणां दक्षिणतो ब्रुवाणो व्रजतां वेत्याश्वलायनः । अग्निसंबन्धिकर्माणि अव्यवधानेन पठितुं युक्तानि कर्मक्रमेण वा पठितुं युक्तानि व्यत्यस्तपाठे हेतुश्चिन्त्यः ।

सदोहविर्धानेषु संमीयमानेष्वन्तरेण चात्वालो-
त्करावन्वेत्यापरेणोत्तरवेदिमतिक्रम्य दक्षिणत उप-
विशति ॥ २३ ॥ आवैसर्जनकालादन्वास्ते ।

अर्वाक्समपित्रताह्वानादत्रैवाऽऽस्ते ।

होष्यमाणेषु वैसर्जनेषु यथेतं प्रत्येत्योत्तरेणाऽऽग्नीध्रीयं
धिष्णियं परीत्य पूर्वेण द्वारेण प्राग्वंशं प्रविश्या-
परेण शालामुखीयमतिक्रम्य दक्षिणत उपविशति ।

स्पष्टम् ।

एवावन्दस्वेत्युपस्थे राजानं कुरुते ।

उपस्थोऽङ्कः ।

आवैसर्जनहोमादन्वास्ते ।

स्पष्टम् ।

हुते वैसर्जनेऽन्वगग्नेर्गच्छति ।

पूर्वो निष्क्रम्येत्यापस्तम्बः । हुते गार्हपत्यहोमे सर्वेभ्यः पूर्वो निष्क्रम्य प्राग्वंशा-
त्परमध्वानमग्नेर्गच्छति सोमप्रथमकल्पे ।

पूर्वो वा ।

यदा ह्यग्निप्रथमास्तदाऽन्वाज्यमेवाग्निं निष्क्रम्य गच्छति । अन्यथाऽग्निप्रथमाः
सोमप्रथमा वा प्राञ्चो गच्छन्तीत्यनेन विरोधात् ।

आग्नीध्रीयं प्राप्य दक्षिणत उपविशत्यावैसर्जनहोमाद-
न्वास्ते हुते वैसर्जनेऽन्यस्मै राजानं प्रदायोत्तरेणाऽऽग्नी-
ध्रीयं धिष्णियं परीत्य राजानं प्रत्यादाय सोमो
जिगाति गातुविदिति सौम्यर्चाऽपरेण द्वारेण
हविर्धाने प्रविश्याध्वर्यवे राजानं प्रदाय यथेतं
प्रत्येत्यापरेणोत्तरवेदिमतिक्रम्य दक्षिणत उपविशति ।

अन्यस्मै प्रतिप्रस्थात्रे । स्पष्टमेवापठदापस्तम्बः—आग्नीध्रीयं प्राप्य प्रतिप्रस्थात्रे
राजानं प्रदायेति । अन्यत्स्पष्टम् ।

अग्नीषोमीयस्याऽऽ वपाया होमादन्वास्ते ।

अत्राऽऽङ्भिविधौ तेन वपाहोमपर्यन्तमित्यर्थः ।

हुतायां वपायां मार्जयते ।

चात्वाले सर्वैः सह । सब्रह्मकाश्चात्वाले मार्जयन्त इत्याश्वलायनः ।

वसतीवरीषु परिगृह्यमाणासु वाचं यच्छत्या सुब्रह्मण्यायाः ।

सुब्रह्मण्याह्वानपर्यन्तमित्यर्थः । अत्राप्याङभिविधौ ।

महारात्रे बुध्यमानेषु बुध्यते ।

प्रथममिति शेषः । बोधनस्यार्थादेव सिद्धेः प्राथम्यविधानेनैव सार्थक्यम् । प्रथम- मित्यध्याहारं विना वैयर्थ्यमेव सूत्रस्य स्यात् ।

उपाकृते प्रातरनुवाके वाचं यच्छत्या परिधानीयायाः ।

अत्राप्याङभिविधौ तेन परिधानीयापर्यन्तमित्यर्थो भवति ।

सवनीयासु प्रपाद्यमानासु पूर्वेण द्वारेण हवि- र्धाने प्रविश्याग्रेण खरं परीत्य दक्षिणत उपविशति ॥ २४ ॥ आग्रहकालादन्वास्ते ।

ग्रहकालो दधिग्रहेण प्रचरतीत्यत आरभ्य ।

ग्रहेषु गृह्यमाणेषु वाचं यच्छत्याऽऽग्रयणस्य ग्रहणात् ।

आ, आग्रयणस्य ग्रहणादिति पदच्छेदः । आग्रयणग्रहणपर्यन्तम् । आङ- भिविधौ ।

बहिष्पवमानꣳ सर्पत्सु समन्वारभ्य सर्पति ।

वैप्रुषहोमप्रसहोतृहोमौ ब्रह्माणं यजमानो यजमानं ब्रह्मेत्येकेषामित्ययं विकल्प- श्चाऽऽध्वर्यवसूत्रोक्तोऽत्रापि द्रष्टव्यः । एतादृशेन विधिना समन्वारभ्य सर्पति ब्रह्माऽपि ।

ब्रह्मन्स्तोष्यामीत्युच्यमाने देवसवितरेतत्ते प्राह तत्प्र च सुव प्र च यज बृहस्पतिर्ब्रह्माऽऽयुष्मत्या ऋचो मा गात तनूपात्साम्नः सत्या व आशिषः सन्तु सत्या आकूतय ऋतं च सत्यं च वदत स्तुत देवस्य सवितुः प्रसव ओꣳ स्तुतेति प्रसौति ।

संहितामन्त्रस्य कृत्स्नः पाठः स्तोमभागमन्त्रेण संधानार्थः । तेन सह, ओꣳ स्तुतेति अभ्यनुज्ञावाक्येन संधानम् । प्रसवोऽभ्यनुज्ञावाक्यम् ।

सर्वस्तोत्राणामेष कल्पः ।

स्पष्टम् ।

रश्मिरसि क्षयाय त्वा क्षयं जिन्वेत्येकत्रिꣳशतः स्तोमभागाः स्तोत्रे स्तोत्र उत्तरमुत्तरमादधाति ।

एकत्रिंशदेव स्तोमभागा भवन्ति । तेनातोर्यामेऽन्यस्याऽऽवृत्तिः । एवं च संख्या- नियमः । एवं च सत्यपि सोमातिरेकनिमित्ते स्तोत्राधिक्ये तस्य तस्य क्रतोस्तत एव

---

१ ङ. च. ज. ञ. प्रपद्य° ।

स्तोमभागाः । अत्र सवनान्त्यस्याऽऽवृत्तिः पूर्वयोः सवनयोः । तृतीयसवने त्वधिका एव निविशन्ते । क्रतोरेवोत्तरक्रतुभावित्वात् । बहिष्पवमानार्थमुद्गातृभिः प्रस्तोत्रा वा ब्रह्मन्स्तोष्यामीत्युच्यमाने देवसवितरेतत्त इति मन्त्रम् । उच्यमान इति वर्तमाननिर्देशादेतदामन्त्रणवाक्यसमकालमिमं मन्त्रं पूर्वमेव वाऽऽमन्त्रणान्मन्त्रमुक्त्वा, ओ३ स्तुतेति तस्मिन्काले प्रसौति । देवस्य सवितुः प्रसव इत्येतदनन्तरमो३ स्तुतेत्येतस्मात्पूर्वं स्तोमभागमन्त्रं संदधातीत्यादधातिशब्दार्थः । वीप्सा क्रमेण प्रतिस्तोत्रमेकैको मन्त्रो योज्य इत्येतदर्थम् ।

संख्यामाह—

द्वादशाग्निष्टोमे त्रयोदशात्यग्निष्टोमे पञ्चदशोक्थ्ये षोडश षोडशिनि सप्तदश वाजपेय एकान्नत्रिंशतमतिरात्रे त्रयस्त्रिंशतमप्तोर्यामे ।

अप्यग्निष्टोमे राजन्यस्य गृह्णीयादिति षोडशिग्रहणमाचार्येणोक्तं तदर्थमेवाऽऽचार्येण स्तोमभाग उक्तः । त्रयोदशात्यग्निष्टोम इति । अयमेवात्यग्निष्टोमनामकः क्रतुरनुमितः । स राजन्यस्य गृह्णीयादित्यनेन राजकर्तृको यज्ञ उक्तः । गौतमेन चत्वारिंशत्संस्कारेषु नित्यत्वेन परिगणनाद्ब्राह्मणस्यापि नित्य इति ज्ञेयम् । अर्थः स्पष्टः ।

स्तुते बहिष्पवमाने यथेतं प्रत्येत्यापरेणोत्तरवेदिमतिक्रम्य दक्षिणत उपविशति सवनीयस्याऽऽ वपाया होमादन्वास्ते ।

यथेतं यथागतम् । अत्राप्याङभिविधौ । तेन वपाहोमपर्यन्तमित्यर्थो भवति ।

हुतायां वपायां मार्जयित्वा पूर्वेण द्वारेण सदः प्रविश्याग्रेण प्रशास्त्रीयं धिष्णियं परीत्य दक्षिणत उपविशत्यासंस्थानादन्वास्ते ।

संस्थानशब्देन सवनसमाप्तिरुच्यते ।

यत्रास्मै चमसमाहरति तं भक्षयति यथेतरे चमसान् ।

यजमानसूत्र एतत्समानार्थके कृतव्याख्यानम् ।

स्तुतशस्त्रयोर्वाचं यच्छति ।

समाप्तिपर्यन्तं, शस्त्रस्य समाप्तिर्याज्यान्ते ।

संस्थिते सवने यथेतं प्रतिनिष्क्रामति ।

येन पथा सदः प्रविष्टस्तेनैव पथेत्यर्थः ।

एवं विहित उत्तरयोः सवनयोः संचरो ब्रह्मत्वं च ।

संचरो मार्गः । इतरद्ब्रह्मत्वं च । गोबलीवर्दन्यायेनोभयोर्ग्रहणम् ।

---

१ ख °रमिमित्तः । ल ।

आध्वर्यव एवातोऽन्यानि कर्माणि ब्राह्मण आम्नातानि भवन्ति ।

अत उक्तकर्मतोऽन्यानि वरणाङ्गजपादीनि तानूनप्त्रादीनि उपस्थानादीनि चाऽऽध्वर्यव एवाऽऽम्नातानि भवन्ति तान्यध्वर्युवत्कुर्यादित्यर्थः ।

एवं विहितꣳ सꣳस्थानां ब्रह्मत्वं ब्रह्मत्वम् ॥ २९ ॥

इति हिरण्यकेशिसूत्रे दशमप्रश्नस्याष्टमः पटलः ।

---

एवंप्रकारेण विहितं सर्वासां संस्थानां ब्रह्मत्वं भवति । द्विरुक्तिः प्रश्नसमाप्तिद्योतनार्था ।

इत्योकोपाह्वश्रीमदग्निष्टोमयाजिसाहस्राग्नियुक्तवाजपेययाजिसर्वतोमुखया-
जिद्विसाहस्राग्नियुक्तपौण्डरीकयाजिगणेशदीक्षिततनूजगोपीनाथ-
दीक्षितविरचितायां श्रीमद्भगवत्सत्याषाढहिरण्यकेशिसू-
त्राम्बुधिगतनिगूढार्थरत्नालाभकृतविद्वज्जनसंताप-
शामिकायां ज्योत्स्नाख्यायां वृत्तौ दशमप्र-
श्नस्याष्टमः पटलः ॥ ८ ॥

---

समाप्तो दशमः प्रश्नः ।

